# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE PATRONAGE OF THE

**Hon. Court of Directors of the East India Company,**

AND THE SUPERINTENDENCE OF THE

**ASIATIC SOCIETY OF BENGAL.**

EDITED BY DR. E. RÖER.

VOL. II. PART I. NOS. 5 TO 9.

## सानन्दगिरिकृतटीकशाङ्करभाष्यसम्वलित-बृहदारण्यकोपनिषत् ।

## THE BRIHAD ARANYAKA UPANISHAD,

WITH THE

COMMENTARY OF SANKARA ÁCHÁRYA, AND THE GLOSS OF ÁNANDA GIRI.

EDITED BY DR. E. RÖER.

CALCUTTA:

PRINTED BY J. THOMAS, AT THE BAPTIST MISSION PRESS,

CIRCULAR ROAD.

1849.

# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE PATRONAGE OF THE

**Hon. Court of Directors of the East India Company,**

AND THE SUPERINTENDENCE OF THE

## ASIATIC SOCIETY OF BENGAL.

EDITED BY DR. E. RÖER.

VOL. II. PART II. NOS. 10 TO 12, 14, 16 & 18.

# सानन्दगिरिकृतटीकशाङ्करभाष्यसम्बलित-बृहदारण्यकोपनिषत् ।

## THE BRIHAD ÁRAṆYAKA UPANISHAD,

WITH THE

COMMENTARY OF SANKARA ÁCHÁRYA, AND THE GLOSS OF ÁNANDA GIRI.

EDITED BY DR. E. RÖER.

CALCUTTA:

PRINTED BY J. THOMAS, AT THE BAPTIST MISSION PRESS, CIRCULAR ROAD.

1849.

ॐ परमात्मने नमः ॥

## बृहदारण्यकभाष्यारम्भः ॥

भा॰ ॐ नमो ब्रह्मणे नमः ॥ ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः ॥

---

आ॰ ॐ ब्रह्मणे नमः ।

## आनन्दगिरिकृतबृहदारण्यकभाष्यटीका ॥

यदविद्याविलासेन भूतभौतिकमीयते ।
यद्विद्यया च तद्भानि तद्वन्दे पुरुषोत्तमं ॥ १ ॥
नमस्त्रय्यन्तसन्दोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ २ ॥
भगवत्पादपादाब्जद्वन्द्वं द्वन्द्वनिवर्हणं ।
सुरेश्वरादिसङ्कृष्टैरर्चितमाभजे ॥ ३ ॥
बृहदारण्यके भाष्ये शिष्योपकृतिसिद्धये ।
सुरेश्वरोक्तिमाश्रित्य क्रियते न्यायनिर्णयः ॥ ४ ॥

काण्वोपनिषद्विवरणव्याजेनाशेषामेवोपनिषदं बोधयितुकामो भगवान् भाष्यकारो विघ्नोपशमादिसमर्थं शिष्टाचारप्रमाणकं परापरगुरुनमस्काररूपं मङ्गलमाचरति। नमो ब्रह्मादिभ्य इति॥ वेदो हिरण्यगर्भो वा ब्रह्म। तन्नमस्कारेण सर्वा देवता नमस्कृता भवन्ति तदर्थत्वात्तदात्मकत्वाच्च। एष उ ह्येव सर्वे देवा इति श्रुतेः। आदिपदेन परमेष्ठिप्रभृतयो गृह्यन्ते। यद्यपि तेषामुक्तो ब्रह्मान्तर्भावस्तथापि तेष्वनादरनिरासार्थं पृथग्ग्रहणं। चतुर्थी नमोयोगे। नमः शब्दश्चिविधः प्रह्वीभावविषयः॥ ननु ब्रह्मविद्यां

भा॰ उषा वा अश्वस्येत्येवमाद्या वाजसनेयिब्राह्मणोपनिषत्। तस्या इयमल्पग्रन्था वृत्तिरारभ्यते संसारविविक्तुभ्यः संसारहेतुनिवृत्तिसाधनब्रह्मात्मैकत्वविद्याप्रतिपत्तये। सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात्।

---

आ॰ वक्तॄणामेव किमित्येते नमस्क्रियन्ते सैव हि वक्त्रीत्यत आह ब्रह्मविद्येति। एतेषां तत्सम्प्रदायकर्तृत्वे वंशब्राह्मणं प्रमाणयति। वंशऋषिभ्य इति। यद्यपि तत्र पौतिमाष्यादयो ब्रह्मान्ताः सम्प्रदायकर्तारः श्रूयन्ते तथापि गुरुशिष्यक्रमेण ब्रह्मणः प्राथम्यमिति तदादित्वमिति भावः॥ सम्प्रतिपरगुरुनमस्कारोति। नमो गुरुभ्य इति। यद्यपि ब्रह्मविद्यासम्प्रदायकर्त्रन्तर्भावादेते प्रागेव नमस्कृतास्तथापि शिष्याणां गुरुविषयादरातिरेककार्य्यार्थं पृथग्गुरुनमस्कारः। यस्य देवे परा भक्तिरित्यादि श्रुतेरिति॥ यदुद्दिश्य मङ्गलमाचरितं तत्प्रतिज्ञातुं प्रतीकमादत्ते। उषा वा इति। एतेन चिकीर्षिताया वृत्तेर्भर्तृप्रपञ्चभाष्येणागतार्थत्वमुक्तं। तद्धि द्वयाहेत्यादिमाध्यन्दिनश्रुतिमधिकृत्य प्रवृत्तं। इयं पुनरुषा वा अश्वस्येत्यादि काण्वश्रुतिमाश्रित्येति॥ अथोद्देश्यं निर्दिशति तस्या इति॥ भर्तृप्रपञ्चभाष्याद्विशेषान्तरमाह। अल्पग्रन्थेति। अस्या ग्रन्थतोऽल्पत्वेऽपि नार्थतस्तथात्वमिति ग्रन्थस्य ग्रहणं। वृत्तिशब्दो भाष्यविषयः। सूत्रानुकारिभिर्वाक्यैः सूत्रार्थस्य स्वपदानां चोपवर्णनस्य भाष्यलक्षणस्यात्र भावादिति॥ ननु कर्म्मकाण्डाधिकारिणो विलक्षणो ऽधिकारी न ज्ञानकाण्डे सम्भवति अर्थित्वादेः समानत्वाद्वैराग्यादेश्च दुर्लभत्वात्। न च निरधिकारं शास्त्रमारम्भमर्हतीत्यत आह संसारेति। कर्म्मकाण्डे हि स्वर्गादिकामः संसारपरवशो नरपशुरधिकारी। इह तु संसाराद्व्यावृत्तिमिच्छवो विरक्ताः। न च वैराग्यन्दुर्लभं शुद्धबुद्धेर्विवेकिनो ब्रह्मलोकान्ते संसारे तत्सम्भवात्॥

उक्तं हि। शोधमानस्तु तच्चित्तमीश्वरार्पितकर्म्मभिः। वैराग्यं ब्रह्मलोकादौ व्रजत्याशु सुनिर्म्मलमिति॥

भा॰ उपनिपूर्व्वस्य सदेस्तदर्थत्वाद्ग्रन्थोऽप्युपनिषदुच्यते। सेयं षडध्यायी अरण्येऽनूच्यमानत्वादारण्यकं। बृहत्त्वात्परिमाणतो बृहदारण्यकं॥

---

आ॰ अतो यथोक्तविशिष्टाधिकारिभ्यो वृत्तेरारम्भः सम्भवतीत्यर्थः॥ तथापि विषयप्रयोजनसम्बन्धानामभावे कथं वृत्तिरारभ्यते तत्राह। संसारहेत्विति। प्रमातृताप्रमुखः कर्तृत्वादिरनर्थः संसारस्तस्य हेतुरात्माऽविद्या तन्निवृत्तेः साधनं ब्रह्मात्मैकत्वविद्या, तस्याः प्रतिपत्तिरप्रतिबद्धायाः प्राप्तिस्तदर्थं वृत्तिरारभ्यत इति योजना॥ एतदुक्तं भवति। सनिदानानर्थनिवृत्तिः शास्त्रस्य प्रयोजनं। ब्रह्मात्मैक्यविद्या तदुपायस्तदैक्यं विषयः। सम्बन्धो ज्ञानफलयोरुपायोपेयत्वं। शास्त्रतद्विषययोर्विषयविषयित्वं, तदारभ्यं शास्त्रमिति। प्रयोजनादिषु प्रत्यक्कृतयोक्तेष्वपि सर्व्वव्यापाराणां प्रयोजनार्थत्वात्प्राधान्यं।

उक्तं हि। सर्व्वस्यैव हि शास्त्रस्य कर्म्मणो वापि कस्यचित्। यावत् प्रयोजनन्नोक्तं तावत्तत् केन गृह्यत इति॥

तत्राच शास्त्रारम्भौपयिकं प्रयोजनमेव नामव्युत्पादनद्वारा व्युत्पादयति। सेयमिति। अध्यात्मशास्त्रेषु प्रसिद्धा सन्निहिता चात्र ब्रह्मात्मैकत्वविद्या। तन्निष्ठानां सर्व्वकर्म्मसन्न्यासिनां सनिदानस्य संसारस्यात्यन्तनाशकत्वाद्भवत्युपनिषच्छब्दवाच्या। उपनिषदं भो ब्रूहीत्याद्या च श्रुतिः। तस्मादुपनिषच्छब्दवाच्यत्वप्रसिद्धेर्विद्याया अतो यथोक्तफलसिद्धिरित्यर्थः॥ कथन्तस्यास्तच्छब्दवाच्यत्वे ऽप्येतावानर्थो लभ्यते तत्राह। उपनिपूर्व्वस्येति। अस्यार्थः। षद्लृ विशरणगत्यवसादनेष्विति स्मर्य्यते। सदेर्धातोरुपनिपूर्व्वस्य क्विबन्तस्य सहेतुसंसारनिवर्त्तकब्रह्मविद्यार्थत्वादुपनिषच्छब्दवाच्या सा भवत्युक्तफलवती। उपशब्दो हि सामीप्यमाह। तच्चासति सङ्कोचके प्रतीचि पर्य्यवस्यति। निशब्दश्च निश्चयार्थस्तस्मादैकात्म्यं* निश्चितं। तद्विद्या सहेतुं संसारं सादयतीत्युपनिषदुच्यते॥ उक्तं हि। अवसादना-

---

* निश्चितमिति पुस्तकान्तरपाठः॥

भा॰ तस्यास्य कर्म्मकाण्डेन सम्बन्धोऽभिधीयते। सर्व्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः सर्व्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरि-

---

आ॰ यंस्य चावसादादिति॥ ब्रह्मविद्यैव चेदुपनिषदिष्यते कथन्तर्हि ग्रन्थे तद्वाचकच्छब्दं प्रयुञ्जते। न खल्वेकस्य शब्दस्यानेकार्थत्वमन्याय्यमित्याशङ्क्याह। तादर्थ्यादिति। ग्रन्थस्य ब्रह्मविद्याजनकत्वादुपचारात्तत्रोपनिषत्पदमित्यर्थः॥ यथोक्तविद्याजनकत्वे ग्रन्थस्य किमिति तदध्येतॄणां सर्व्वेषां विद्या न भवतीत्याशङ्क्य श्रवणादिपराणामेवारण्यानुवचनादिनियमाधीताक्षरेभ्यस्तज्जन्मेति बृहदारण्यकनामनिर्व्वचनपूर्व्वकमाह। सेयमिति॥ अथारण्यानुवचनादिनियमाधीतवेदान्तानामपि केषाञ्चिद्विद्यानुपलम्भात् कुतो यथोक्ताक्षरेभ्यस्तदुत्पत्तिरित्यत आह। बृहत्त्वादिति। उपनिषदन्तरेभ्यो ग्रन्थपरिमाणातिरेकादस्य बृहत्त्वं प्रसिद्धमर्थतोऽपि तस्य तदस्ति। ब्रह्मणोऽखण्डैकरसस्यात्र प्रतिपाद्यत्वात्तज्ज्ञानहेतूनां चान्तरङ्गवहिरङ्गाणां भूयसामिह प्रतिपादनात्। अतो बृहत्त्वादारण्यकत्वाच्च बृहदारण्यकं। न चैतदशुद्धबुद्धेरधीतमपि विद्यामादधाति। कषाये कर्म्मभिः पक्के ततो ज्ञानमिति स्मृतेरित्यर्थः।

ज्ञानकाण्डस्य विशिष्टाधिकार्य्यादिवैशिष्ट्येऽपि कर्म्मकाण्डेन नियतपूर्वापरभावानुपपत्तिलभ्यः सम्बन्धो वक्तव्यः। स च परोक्षत्वविप्रतिपत्तेरशक्यो विशेषतो ज्ञातुमित्याशङ्क्याह तस्यास्येति॥ प्रतिज्ञातं सम्बन्धं प्रकटयितुमसिद्धप्रमाणभावानां वेदान्तानां सम्बन्धाभिधानावसराभावात् तत्प्रामाण्यं प्रतिपाद्य पश्चात्तेषां कर्म्मकाण्डेन सम्बन्धविशेषवचनमुचितमिति मन्वानस्तत्प्रामाण्यं साधयति। सर्व्वोऽपीति। प्रत्यक्षानुमानाभ्यामित्यागमातिरिक्तप्रमाणोपलक्षणार्थं। एषोऽर्थोऽध्ययनविध्युपात्तः। सर्व्वोऽपि काण्डद्वयात्मको वेदो मानान्तरानधिगतं यदिष्टोपायादि तज्ज्ञापनपरस्तथा चाज्ञातज्ञापकत्वाविशेषात्तुल्यं प्रामाण्यं काण्डयोरिति। अथवा वेदनं वेदोऽनुभवः स च शब्देतरमानायोग्यो रूपादिहीनत्वात्। एतदप्रमेयमिति हि श्रुतिः। स चेष्टानिष्टप्राप्तिपरिहारोपायस्तस्यैव

भा॰ हारयोरिष्टत्वात् । दृष्टविषये चेष्टानिष्टप्राप्तिपरिहा-
रोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वादागमान्वे-
षणा । न चासति जन्मान्तरसम्बन्ध्यात्मास्तित्वविज्ञाने
जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात् । स्वभाववा-
दिदर्शनात् । तस्माज्जन्मान्तरसम्बन्ध्यात्मास्तित्वे जन्मा-
न्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्त्तते ॥

---

आ॰ तत्तदात्मनावस्थानात् । सच त्यचाभवदित्यादिश्रुतेः । स च प्रका-
शनः सर्व्वप्रकाशनः सर्वप्रकाशकत्वात् । तमेव भान्तमनुभाति सर्व-
मिति श्रुतेः । स च परोऽविद्यातत्कार्य्यातीतत्वात् । दिव्यः पर
आकाशादित्यादि श्रुतेः । एवं रूपो वेदपदवेदनीयचिदेकरसः
प्रत्यग्धातुरेव सर्व्वोऽपि कार्य्यकारणात्मकः प्रपञ्चः । आत्मैवेदं सर्व-
मिति श्रुतेः । तथाच यथोक्तं वस्तुस्वरूपं प्रकाशयन्तो वेदान्ता
विधिवाक्यवत् प्रमाणमिति । अथवा प्रत्यक्षादिनानवगतो
योऽसाविष्टप्राप्त्याद्युपायो ब्रह्मात्मा तस्य प्रकाशनपरः सर्वोऽप्ययं
वेदः । तस्यैवाज्ञातत्वात्तत्र कर्म्मकाण्डं कर्म्मानुष्ठानप्रयुक्तबुद्धिशुद्धि-
द्वारा ब्रह्माधिगतावारादुपकारकं । विविदिषन्ति यज्ञेनेति श्रुतेः ।
ज्ञानकाण्डन्तु साक्षादेव तत्रोपयुक्तं । परमपुरुषस्यौपनिषदत्व-
श्रवणात् । सर्वे वेदा यत्पदमामनन्तीति च श्रुतेः । तद्युक्तं कर्म्म-
काण्डवज्ज्ञानकाण्डस्यापि प्रामाण्यमिति ॥ अधिकारिसौलभ्यप्रति-
पादनद्वारा ज्ञानकाण्डप्रामाण्यमेव स्फुटयति सर्वपुरुषाणामिति ।
अयमर्थः । सुखं मे स्यात् दुःखं माभूदिति स्वभावतः शास्त्रं विना
सर्वेषां पुरुषाणामनवच्छिन्नसुखादिमात्रेऽभिलाषोपलम्भात् ।
तन्मात्रस्य च मोक्षत्वात् । तत्कामिनो ज्ञानकाण्डाधिकारिणः
सुलभत्वात् । तस्मिन् प्रमां कार्य्यविषयामादधत् कथन्तदप्रमाण-
मिति ॥ ननु वेदस्य कार्य्यपरतया प्रामाण्यात् कर्म्मकाण्डवत्
काण्डान्तरस्यापि कार्य्यपरतया प्रामाण्यमेष्टव्यमिति नेत्याह । दृष्ट-
विषयेति ॥ क्रियाकारकफलेतिकर्त्तव्यतानामन्यतमस्मिन् कार्य्ये
समीहितप्राप्त्याद्युपायभूते व्युत्पत्तिकाले प्रत्यक्षादिसिद्धये तथा-

भा॰ येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके इत्युपक्रम्यास्तीत्येवोपलब्धव्य इत्येवमादिनिर्णयदर्शनात् । यथा च मरणं प्राप्येत्युपक्रम्य योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथा कर्म्म यथा श्रुतमिति च । स्वयं ज्योतिरित्युपक्रम्य तं विद्याकर्म्मणी समन्वारभेते

---

आ॰ विधिकार्य्यधियोऽन्यथासिद्धत्वात् तन्नानागमोऽनुसन्धेयः ॥ न हि लोकवेदयोस्तद्भिद्यते । अलौकिके तस्मिन्नव्युत्पत्तिप्रसङ्गात् । न चाव्युत्पन्नानि पदानि बोधकानि अतिप्रसङ्गात् । न च ब्रह्मण्यपि तुल्या व्युत्पत्त्यनुपपत्तिः । तस्मिन् ब्रह्मत्वेनात्मत्वेन च प्रसिद्धेः । तत्सामान्योपाधौ विज्ञानादिपदानां व्युत्पत्तेः सुकरत्वात् । तानि चालौकिकमखण्डं प्रत्यगर्थं निर्लुठितसामान्यविशेषं लक्षणया बोधयन्ति । तस्मात् ब्रह्मैव वेदप्रामाण्यार्थं न कार्य्यमिति भावः ॥ किञ्च तिष्ठतु वेदान्तप्रामाण्यं कर्म्मकाण्डेऽपि व्यतिरिक्तात्मास्तित्वादौ सिद्धेऽर्थे प्रामाण्यमावश्यकं । तदभावे तत्प्रामाण्यायोगात् । न हि भविष्यद्देहसम्बन्ध्यात्मसद्भावानधिगमे पारलौकिकप्रवृत्ति-विस्रम्भः । तस्मात् कर्म्मकाण्डप्रामाण्यमिच्छता सिद्धेऽर्थे भविष्य-द्देहसम्बन्धिन्यात्मनि स्वर्गादौ च तत्प्रामाण्यस्याभ्युपेयत्वात् । कार्य्ये वेदप्रामाण्यानियमात् वेदान्तानामपि स्वार्थे मानत्वं सिध्यतीत्याह । न चेति ॥ ननु देहान्तरसम्बन्ध्यात्मज्ञानं विनापि विधिवशाद-दृष्टार्थक्रियासु प्रवृत्तिः स्यादिति नेत्याह । स्वभावेति । यदात्मा देहान्तरसम्बन्धी शास्त्रात्मानान्तराच्च न प्रमितस्तदा भोक्तुरन-वगमात् न प्रेक्षापूर्व्वकारी यागाद्यनुतिष्ठेत् । लोकायतस्य व्यति-रिक्तात्मास्तित्वमजानतो जन्मान्तरेष्टानिष्टप्राप्तिहानीच्छया वैदि-कक्रियास्वप्रवृत्तेर्दर्शनात् । अतो नातिरिक्तात्मज्ञानं विना साम्प-रायिके प्रवृत्तिरित्यर्थः ॥ ननु विधयः साधनविशेषं बोधयन्तो नातिरिक्तात्मास्तित्वादौ मानं वाक्यभेदप्रसङ्गादित्यत आह । तस्मादिति । अतिरिक्तात्मधियं विना पारलौकिकप्रवृत्त्यनुप-पत्त्या कर्म्मकाण्डप्रामाण्यायोगादिति यावत् । विधीनां स्तुत्यर्था-भ्यामुभयार्थत्वमविरुद्धमित्यर्थः ॥ न केवलं विधिभिरेवार्थवादाभि-

भा॰ पुण्यो वै पुण्येन कर्म्मणा भवति । ज्ञपयिष्यामीत्युपक्रम्य विज्ञानमय इति च व्यतिरिक्तात्मास्तित्वं ॥ ननु प्रत्यक्षविषयमेवेति चेन्न । वादिविप्रतिपत्तिदर्शनात् ।

न हि देहान्तरसम्बन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युर्नास्त्यात्मेति वदन्तः ।

---

व्या॰ व्यतिरिक्तात्मास्तित्वं किन्तु श्रुत्यादि समुत्थेनोत्थमित्याह । येयमिति । निर्णयदर्शनाद्व्यतिरिक्तात्मास्तित्वमिति सम्बन्धः ॥ तत्रैव प्रकृतोपयोगित्वेनोपक्रमोपसंहारान्तरे दर्शयति । यथा चेति । पूर्ववदेव समच्चोतनार्थे चकारः । उपक्रमोपसंहारैकरूप्यात् कठवल्लीनामतिरिक्तात्मास्तित्वे तात्पर्य्यमुक्त्वा बृहदारण्यकवाक्यस्यापि तत्र तात्पर्य्यमाह स्वयमिति । न हि प्रसिद्धजडत्वस्य देहादेः स्वयं ज्योतिष्ट्वमिति ज्योतिर्ब्राह्मणमतोपक्रमः । तद्विषयो देहादिव्यतिरिक्तात्मानमधिकरोति । तं प्रेतं विद्याकर्म्मणी पूर्व्वोपार्जिते फलदानायानुगच्छतः । स च प्रेत्य ज्ञानकर्म्मानुगुणफलमनुभवतीति शारीरकब्राह्मणमतोपसंहारोऽपि जन्मान्तरसम्बन्धविषयः । न चात्रैव भस्मीभवतो देहादेर्जन्मान्तरसम्बन्धो युक्तः । तेनात्मा देहादिव्यतिरिक्तो जन्मान्तरसम्बन्धी सिद्धो ब्राह्मणद्वयमित्यर्थः ॥ अजातशत्रुब्राह्मणे च येव त्वा ज्ञपयिष्यामीत्युपक्रम्य व्यतिरिक्तास्तित्वविषयः । न हि प्रत्यक्षे देहादौ जिज्ञासास्ति । तत्रैवोपसंहारे य एष विज्ञानमयः पुरुष इति विज्ञानमयविशेषणाद्व्यतिरिक्तात्मास्तित्वं दर्शितं । न हि देहादेर्विज्ञानमयत्वमस्ति । तस्मात्तदप्युपक्रमोपसंहाराभ्यां व्यतिरिक्तात्मास्तित्वं गमयतीत्याह । ज्ञपयिष्यामीत्युपक्रम्येति । न चोदाहृतानां वाक्यानामप्रामाण्यं । तत्प्रामाण्यस्यौत्पत्तिकसूत्रे हेत्वभिधानादभ्युपेयत्वादिति भावः ॥ ननु स्यादेतदन्यत्र स्वतन्त्री मानं तत्र देहाकारास्फुरणात् व्यतिरिक्तात्मास्तित्वस्य तेनैव स्फूर्त्युपपत्तेः । अतो न तत्र श्रुतिप्रामाण्यमिति शङ्कते । ननु चेति । प्रत्यक्षस्य

भा॰ न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते नास्ति घट इति। स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत्। न। निरूपितेरभावात्। न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति। वैनाशिकास्त्वहमितिप्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते। तस्मात् प्रत्यक्षविषयवैलक्षण्यात् प्रत्यक्षान्नात्मास्तित्वसिद्धिः। तथानुमानादपि। श्रुत्यात्मास्तित्वे लिङ्गस्य दर्शितत्वात् लिङ्गस्य च प्रत्यक्षविषयत्वान्नेति चेत्। न। जन्मान्तरसम्बन्धस्याग्रहणात् आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्चाहम्प्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवाणीति कल्पयन्तो वदन्ति प्रत्यक्षश्चानुमेयश्चात्मेति॥

---

आ॰ विषयोऽवकाशो यस्मिन्नित्यतिरिक्तात्मास्तित्वमुच्यते॥ यद्यपि व्यतिरिक्तात्मास्तित्वं तदभिप्रायेणाहं धीगोचरः। तथापि न सा व्यतिरेकमात्मनो गोचरयति। युक्त्यागमविवेकशून्यानामहम्प्रत्ययभाजां व्यतिरेकाप्रत्ययप्राप्तौ विपश्चितां विप्रतिपत्त्यभावप्रसङ्गादिति परिहरति। न वादीति॥ वेदप्रतिकूला वादिनो नास्तिका नैव विवादं मुञ्चन्तीत्याह। नह्नीति। तेषु प्रातिकूल्यसम्भावनार्थं विशेषणं नेत्यादीति वदन्तः सन्तो नोऽस्माकं प्रतिकूला न हि स्युरेवं वदनस्यैवासम्भावादध्यक्षविरोधादिति योजना॥ प्रत्यक्षविषये विप्रतिपत्त्यभावे दृष्टान्तमाह। न हीति॥ तत्र व्यभिचारं शङ्कते स्थाण्वादाविति। प्रत्यक्षे धर्म्मिणि स्थाणुर्वा पुरुषो वेति विप्रतिपत्तेरुपलम्भान्न प्रत्यक्षे विप्रतिपत्त्यभावो व्यभिचारादिति शङ्कार्थः। आदिपदेन पाषाणादौ गजादिविप्रतिपत्तिः सङ्गृह्यते। किम्प्रत्यक्षमात्रे विप्रतिपत्तिः किंवा तेन विविक्ते प्रतिपन्ने। नाद्योऽङ्गीकारात्। नन्वेवमात्मनि प्रत्यक्षे विप्रतिपत्तावपि नास-

भा॰ सर्व्वथाप्यस्त्यात्मा देहान्तरसम्बन्धीत्येवम्प्रतिपत्तुर्देहान्तरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्म्मकाण्डं समारब्धं ।

---

आ॰ मान्वेषणा । तेनैव तन्निरासेन तन्निर्णयादिति मन्वानो द्वितीयं दूषयति । नेत्यादिना ॥ प्रत्यक्षतो विविक्तेऽर्थे विप्रतिपत्त्यभावं प्रपञ्चयति । न हीति ॥ आत्मनः स्थूलदेहव्यतिरिक्तत्वं न प्रत्यक्षमिति प्रतिपाद्य सूक्ष्मदेहव्यतिरिक्तत्वमपि नाहम्प्रत्ययग्राह्यमित्याह । वैनाशिकास्त्विति । ते खल्वहमिति धियमनुभवन्ति । तथापि देहान्तरं स्थूलदेहातिरिक्तं सूक्ष्मं । तत्र प्रधानभूताया बुद्धेरतिरिक्तस्यात्मनो नास्तित्वमेव पश्यन्ति । तस्मादन्विष्या सूक्ष्मदेहातिरिक्तात्मसिद्धिरित्यर्थः ॥ किञ्च प्रत्यक्षस्य विषयो रूपादिस्तद्राहित्यन्तद्वैलक्षण्यन्तदात्मनोऽस्ति । अशब्दमस्पर्शमरूपमित्यादिश्रुतेः । न हि रूपादि तदाधारं विना प्रत्यक्षं क्षमते । अतो न देहाद्यतिरिक्तात्मास्तित्वस्य प्रत्यक्षाप्रसिद्धिरित्याह । तस्मादिति । प्रत्यक्षतो विविक्ते विप्रतिपत्त्ययोगात् पश्यते च तद्दर्शनादिति यावत् ॥ अथेच्छादयः क्वचिदाश्रिता गुणत्वाद्रूपवदित्यनुमानादतिरिक्तात्मसिद्धिरिति नेत्याह । तथेति । नात्मास्तित्वप्रसिद्धिरिति सम्बन्धार्थस्तथाशब्दः । अयम्भावः । इच्छादीनां स्वातन्त्र्ये स्वरूपासिद्धिः पारतन्त्र्ये परस्पराश्रयत्वमाधारस्येदानीमेव साध्यमानत्वात् ।

अपिच्छब्देन चाश्रयमात्रवचने सिद्धसाधनत्वं मनसस्तदाश्रयस्य सिद्धत्वादात्मोक्तौ च दृष्टान्तस्य साध्यविकलतेति ॥ यः प्राणेन प्राणितीत्यादिश्रुत्या प्राणनादिव्यापाराख्यस्य लिङ्गस्यात्मास्तित्वे प्रदर्शितत्वात् । तस्य च व्याप्तिसापेक्षस्य प्रत्यक्षादिसिद्धात्मविषयत्वान्न तस्य शब्दैकगम्यतेति शङ्कते । श्रुत्येति ॥ आत्मनः स्वातन्त्र्येण लिङ्गगम्यत्वाभिप्रायेण श्रुत्या लिङ्गमुपन्यस्तमिति परिहरति । नेति । योऽचेतनव्यापारः स चेतनाधिष्ठानपूर्व्वको यथा रथादिव्यापारः । प्राणनादिव्यापारस्याप्यचेतनव्यापारत्वाच्चेतनाधिष्ठानपूर्व्वकत्वमिति सम्भावनामात्रेण लिङ्गोपन्यासः । न हि निश्चायकत्वेन तदुपन्यस्यते आत्मनो जन्मान्तरसम्बन्धस्य प्रमाणान्त-

भा॰ न त्वात्मन इष्टानिष्टप्राप्तिपरिहारेच्छाकारणमात्मविषयमज्ञानं कर्तृत्वभोक्तृत्वस्वरूपाभिमानलक्षणं तद्विपरीतब्रह्मात्मस्वरूपविज्ञानेनापनीतं । यावद्धि तन्नापनीयते तावदयं कर्म्मफलरागद्वेषादिस्वाभाविकदोषप्रयुक्तः शास्त्रविहितप्रतिषिद्धातिक्रमेणापि प्रवर्त्तमानो मनोवाक्कायैर्दृष्टादृष्टानिष्टसाधनान्यधर्म्मसंज्ञकानि कर्म्माण्युपचिनोति बाहुल्येन । स्वाभाविकदोषबलीयस्त्वात् । ततः स्थावरान्ताधोगतिः ।

---

आ॰ रेवाग्रहणात् तस्याप्रसिद्धलिङ्गयोगादित्याह । जन्मान्तरेति । ननु व्यतिरिक्तात्मास्तित्वमागमैकगम्यं चेत् कथन्तत् प्रत्यक्षमनुमेयञ्चेति वादिनो वदन्तीति तत्राह । आगमेन त्विति । येयं प्रेते विचिकित्सेत्याद्यागमेन । को ह्येवान्यादित्यादिवेदोक्तैश्च प्राणनादिभिर्लौकिकैर्लिङ्गविशेषैरात्मास्तित्वे सिद्धे यथोक्तात्मसिद्धिमनुसरन्तो वादिनो वैदिकमेवाहम्प्रत्ययं प्रतिलभमाना वैदिकान्येव च लिङ्गानि पश्यन्तः स्वोत्प्रेक्षानिर्म्मितानि तानीति कल्पयन्तो द्विधात्मानं वदन्ति । वस्तुतस्तु आत्मा यथोक्तश्रुत्यैकसमधिगम्य इत्यर्थः । तस्यास्येत्यादिना काण्डयोः सम्बन्धं प्रतिज्ञाय तादर्थ्येन सिद्धेऽर्थे वेदान्तप्रामाण्यं सर्व्वोऽपीत्यादिना प्रसाध्याधुना कर्म्मभिः शुद्धबुद्धे वैराग्यादिद्वारा ज्ञानोत्पत्तिरिति तयोः सम्बन्धं कथयति । सर्व्वथापीति । आगमान्मानान्तराद्वा व्यतिरिक्तात्मास्तित्वप्रतिपत्तावपीत्यर्थः । पुरुषार्थोपायविशेषार्थिनो ज्ञापनार्थं कर्म्मकाण्डं समारब्धं चेत्तर्हि तत्रोक्तकर्म्मभिरेव विवक्षितपुमर्थसिद्धेर्वेदान्तारम्भवैयर्थ्यान्न सम्बन्धोक्तिः सावकाशेत्याशङ्क्याह । नत्विति । आत्माज्ञानं सत्यमनर्थकारणमन्वयव्यतिरेकाभ्यामवगम्यं मिथ्याज्ञानकार्य्यविरुद्धञ्च । तच्चाकर्तृभोक्तृब्रह्मात्मज्ञानादपनेयं । न हि तत्कर्म्मकाण्डोक्तैरेव कर्म्मभिः शक्यमपनेतुं विरोधाभावात् । तस्मात्तद्बाधनार्थं ज्ञानसिद्धये वेदान्तार-

भा० कदाचिच्छास्त्रजनितसंस्कारबलीयस्त्वं । ततो * मत्यादिभि-
रिष्टसाधनं बाहुल्येनोपचिनोति धर्म्माख्यं । तद्द्विविधं ।
ज्ञानपूर्व्वकं केवलञ्च । तत्र केवलं पितृलोकादिप्राप्ति-
फलं । ज्ञानपूर्व्वकं देवलोकादिब्रह्मलोकान्तप्राप्तिफलं ।
तथाच शास्त्रं आत्मयाजी श्रेयान् देवयाजी इत्यादि ।
स्मृतिश्च द्विविधं कर्म्म वैदिकमित्याद्या । साम्ये च धर्म्मा-
धर्म्मयोर्मनुष्यत्वप्राप्तिः । एवं ब्रह्माद्या स्थावरान्ता स्वाभा-
विकाविद्यादिदोषवती धर्म्माधर्म्मसाधनकृता संसारगति-
र्नामरूपकर्म्माश्रया ।

---

व्या० असम्भवादुक्तसम्बन्धसिद्धिरित्यर्थः ॥ यदि कर्म्मभिरज्ञानं न
निवर्त्तते । मा निवर्त्तिष्ट । सत्येव तस्मिन् कर्म्मवशान्मोक्षः
स्यादित्याशङ्क्याह । यावद्धीति । सम्यग्ज्ञानमेव साक्षान्मोक्षहेतु-
र्न कर्म्म । तत्तु प्रणाड्या तदुपयोगि । न हि सत्येवाज्ञाने मुक्तिः ।
तस्मिन् सति संसारस्य दुर्वारत्वात् । तस्मात् कर्म्मकाण्डस्य वैराग्य-
द्वारा प्रवेशो मुक्ताविति भावः । चयमित्यत्रो निर्दिश्यते । रागद्वे-
षादित्यादिशब्देनाविद्यास्मिताभिनिवेशादयो गृह्यन्ते । दोषाणां
स्वाभाविकत्वं शास्त्रानपेक्षत्वं । अपिकारः सम्भावनार्थः । दृष्टत्व-
मन्वयव्यतिरेकसिद्धत्वं । अदृष्टत्वं शास्त्रमात्रगम्यत्वं ॥ अधर्म्मोपचय-
प्राचुर्य्ये हेतुमाह । स्वाभाविकेति ॥ अथ वैराग्यार्थं कर्म्मफलम-
पश्यन्नधर्म्मफलमाह । तत इति ॥

उक्तं हि । शारीरजैः कर्म्मदोषैर्यांति स्थावरतां नर इति ॥
तत् किमुत्कर्षोपचयाभावादनवकाशं धर्म्मादिफलमिति नेत्याह ।
कदाचिदिति ॥

शास्त्रीयसंस्कारस्य बलीयस्त्वे फलितमाह । तत इति । आदि-
शब्दो वागदेहविषयः ॥ फलविभागं वक्तुं कर्म्म भिनत्ति । तद्द्विविध-

---

* मन आदिभिरिति पुस्तकान्तरपाठः ।

भा० तदेवेदं व्याकृतं साध्यसाधनरूपं जगत्प्रागुत्पत्तेरव्याकृतमासीत् । स एष बीजाङ्कुरादिवदविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनादिरनन्तो

---

आ० मिति ॥ तस्य मुक्तिफलत्वं निरसितुं फलं विभजते । तत्रेति । केवलमित्यादिकर्म्मेति शेषः ॥ कर्म्मणा पितृलोक इति हि वक्ष्यति । तस्मिन्फले नानात्वमभिप्रेत्यादिशब्दः ॥ विद्यया देवलोक इति श्रुतिमाश्रित्याह । ज्ञानेति । देवलोको यस्यादिर्ब्रह्मलोको यस्यान्तस्तस्यार्थस्य प्राप्तिरेव फलमस्येति विग्रहः । उक्तेऽर्थे ज्ञातपर्यां श्रुतिं प्रमाणयति । तथाचेति । सर्व्वत्र परमात्मभावनापुरःसरं नित्यं कर्म्मानुतिष्ठन्नात्मयाजी । कामनापुरःसरं देवान्यजमानो देवयाजी । तयोर्मध्ये कतरः श्रेयानिति विचारे सत्यात्मयाजी श्रेयानिति निर्णयः कृतः । अतो ज्ञानपूर्व्वकं कर्म्म देवलोकस्य कामनापूर्व्वं पितृलोकस्य प्रापकमित्यर्थः ॥

प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्म्म वैदिकं । इह वामुत्र वा काम्यं प्रवृत्तं कर्म्म कीर्त्यते । निष्कामं ज्ञानपूर्व्वन्तु निवृत्तमभिधीयत इत्यादिमनुस्मृतिश्चात्रैवोदाहरति । स्मृतिश्चेति ॥ धर्म्माधर्म्मयोरेकैकस्य फलमुक्त्वा मिश्रयोः फलमाह । साम्येति ॥ उक्तं हि । उभाभ्यामुण्यपापाभ्यां मानुष्यं लभतेऽवश इति ॥ त्रिविधमपि कर्म्मफलं वैराग्यार्थं सङ्क्षिप्योपसंहरति । एवमिति ॥ सा चाविद्याकृतत्वादनर्थरूपेत्याह । स्वाभाविकेति ॥ विचित्रकर्म्मजन्यतया तस्या वैचित्र्यमाह । धर्म्माधर्म्मेति ॥ तर्हि धर्म्माधर्म्माभ्यामेव तन्निर्म्माणसम्भवात् कृतमविद्ययेत्यत आह । नामेति । तेषां सूक्ष्मावस्थाऽविद्या तदात्मनेति यावत् । धर्म्मादेरविद्यायाश्च निमित्तत्वोपादानत्वाभ्यामुपयोग इति भावः ॥ ननु संसारगतेराविद्यकत्वमयुक्तं । प्रत्यक्षादिप्रतिपन्नत्वात्तन्नामरूपाभ्यामेव व्याक्रियतेति । श्रुतौ च नामरूपात्मनो जगतोऽभिव्यक्तिश्रवणात् । न च प्रामाणिकस्याविद्याकृतत्वमत आह । तदेवेदमिति ॥

जगतः स्वरूपमात्मा तत्राध्यस्तत्वादात्मतत्त्वेऽनभिव्यक्ते प्रत्यक्षादिना श्रुत्या चाभिव्यक्तमिव दृश्यमानमपि अनभिव्यक्तमेवेति

भा॰ ऽनर्थ इत्येतस्मादिरक्तस्याविद्यानिवृत्तये तद्विपरीतब्रह्म-विद्याप्रतिपत्त्यर्थोपनिषदारभ्यते । अस्य त्वश्वमेधकर्मसम्ब-न्धिनो विज्ञानस्य प्रयोजनं येषामश्वमेधेनाधिकार-स्तेषामस्मादेव विज्ञानात्तत्फलप्राप्तिः ॥

विद्यया वा कर्मणा वा तद्धैतल्लोकजिदेवेत्येवमा-दिश्रुतिभ्यः कर्मविषयत्वमेव विज्ञानस्येति चेत् । न । योऽश्वमेधेन यजते य उ चैनमेवं वेदेति विकल्पश्रुतेर्विद्या-

---

आ॰ न तस्याविद्याकृतत्वप्रतीतिरितिभावः । अविद्याकृतां संसारगति-मनुभावयते । स एष इति । अविद्याकृतत्वे कथमनादित्वमित्याशङ्क्य तस्य प्रवाहरूपेणेत्याह । बीजाङ्कुरावि वेति । तर्हि कादाचित्क-तया साधनापेक्षामन्तरेण नाशो भविष्यतीत्याशङ्क्याह । क्रियेति । चैतन्यवदात्मनि तस्याविद्याकृतत्वानुपपत्तिमाशङ्क्य नानारूपत्वेन ततो विलक्षणत्वादेकरूपे युक्तं तस्य कल्पितत्वमित्याह । अनादि-रिति । अनादेरपि संसारस्य प्रागभाववन्निवृत्तिः स्यादिति चेत्त-थापि ब्रह्मविद्यामन्तरेण नाशो नास्तीत्याह । अनन्त इति । प्रयत्नतो हेयत्वं द्योतयितुमनर्थ इति विशेषणं । नैसर्गिक इति पाठे कार-णरूपेण तत्त्वमुन्नेयं । यस्मात् कर्म्म संसारफलं न मोक्षं फलयति तस्मात् सनिदानसंसारनिवर्त्तकात्मज्ञानार्थत्वेन साधनचतुष्टय-सम्पन्नमधिकारिणमधिकृत्य वेदान्तारम्भः सम्भवतीत्युपसंहरति । इत्येतस्मादिति । यथोक्तज्ञानार्थत्वेनोपनिषदारम्भे ब्रह्म वा इदमग्र आसीदित्यारब्धव्यं । तस्मादारभ्य ज्ञानोपदेशात् उषा वा अश्वस्येत्यारम्भस्तु न युक्तः साक्षादत्र तदनुक्तेरित्याशङ्क्यास्मादा-रभ्योपनिषदारम्भेऽभीष्टफलमभिधित्समानः प्रथममश्वमेधफल-माह । अस्य त्विति । राजयज्ञत्वादश्वमेधस्य तदनधिकारिणा-मपि ब्राह्मणादीनां तत्फलार्थिनामस्मादेवोपासनात्तदाप्तिरिति मत्वा तदुपासनोक्तिरित्यर्थः ।

किमत्र नियामकमित्याशङ्क्य विकल्पश्रवणं । केवलस्यापि ज्ञानस्य साधनत्वं सूचयति इत्यर्थतो विकल्पश्रुतिमुदाहरति । विद्ययेति ।

भा॰ प्रकरणे चाम्नानात् कर्म्मान्तरे च सम्पादनदर्शनाद्विद्या-
नान्तत्फलप्राप्तिरस्तीत्यवगम्यते । सर्व्वेषाञ्च कर्म्मणां परं
कर्म्माश्वमेधः । समष्टिव्यष्टिप्राप्तिफलत्वात् ।

तस्य चेह ब्रह्मविद्याप्रारम्भे आम्नानं सर्व्वकर्म्मणां संसा-
रविषयत्वदर्शनार्थं । तथाच दर्शयिष्यति फलमशनायां

---

आ॰ तत्फलप्राप्तिरिति पूर्व्वेण सम्बन्धः ॥ तत्रैव श्रुत्यन्तरमाह ।
तद्धेतदिति ॥ तदेतत् प्राणदर्शनं लोकप्राप्तिसाधनमिति यावत् ।
आदिशब्देन लोकलोपास्त्या ब्रह्मलोकाप्तिवादिन्यः श्रुतयो गृह्यन्ते ॥
अश्वमेधे यदुपासनं तस्याप्यग्न्यादिवत् तच्छेषत्वेन फलवत्त्वात्।
न स्वातन्त्र्येण तद्वत्त्वं अङ्गेषु स्वतन्त्रफलाभावादिति शङ्कते ।
कर्म्मविषयत्वमिति । ज्ञानस्य क्रत्वर्थत्वन्दूषयति । नेति ॥ पूर्व्व-
न्यायेतो दर्शितां विकल्पश्रुतिमत्र हेतुतया स्वरूपतोऽनुक्रामति ।
न योऽश्वमेधेनेति । स सर्व्वं पाप्मानन्तरति तरति ब्रह्महत्यामिति
सम्बन्धः । ज्ञानकर्म्मणोस्तुल्यफलत्वस्य न्याय्यत्वादिति शेषः ॥
उपास्तिफलश्रुतेरर्थवादत्वमाशङ्क्याश्वमेधवदुपास्तेरपि कर्म्मत्वात्
विहितत्वात् कर्म्मप्रकरणाद्युत्थितत्वाच्च नैवमित्याह । विद्येति ॥
फलश्रुतेरर्थवादत्वाभावे हेत्वन्तरमाह । कर्म्मान्तरे चेति ।
अश्वमेधातिरिक्ते कर्म्मण्ययं वा लोकोऽग्निरित्यादौ चित्यग्न्यादा-
वेतल्लोकादिसम्पादनस्य दर्शनात् न फलश्रुतेरर्थवादतेत्यर्थः ॥
अश्वमेधोपासनं न क्रत्वर्थं किन्तु पुरुषार्थं । तत्र चाधिकारोऽश्व-
मेधक्रत्वनधिकारिणामपीत्येतावदेवेष्टं चेदुपासने कर्म्मप्रकरणस्थे
ऽपि तल्लाभात् विद्याप्रकरणे नास्याध्ययनमर्थवदित्याशङ्क्याह ।
सर्व्वेषाञ्चेति ॥ परत्वे हेतुः समष्टीति । अनुवृत्तव्यावृत्तरूपहिर-
ण्यगर्भप्राप्तिहेतुत्वात्तस्य श्रेष्ठतेत्यर्थः ॥ तस्य पुण्यश्रेष्ठत्वे ऽपि
प्रकृते किमायातन्तदाह । तस्य चेति ।

यदा क्रतुप्रधानस्याश्वमेधस्योपास्तिसहितस्यापि संसारफलत्वं
तदाल्पीयसामग्निहोत्रादीनां संसारफलं किं वाच्यमित्यस्मिन्
कर्म्मराशौ बन्धहेतौ विरक्ताः साधनचतुष्टयविशिष्टा ज्ञानम-

भा० मृत्युभावं*। न नित्यानां संसारविषयफलत्वमिति चेत्। न। सर्व्वकर्म्मफलोपसंहारश्रुतेः। सर्व्वं हि पत्नीसम्बद्धं कर्म्म। जाया मे स्यादेतावान् वै काम इति निसर्गत एव सर्व्वकर्म्मणां काम्यत्वन्दर्शयित्वा पुत्रकर्म्मापरविद्यानाञ्चायं लोकः पितृलोको देवलोक इति फलन्दर्शयित्वानात्मकताञ्चान्त उपसंहरति त्रयं वा इदं नाम रूपं कर्म्मेति।

---

आ० पेक्षमाणास्तदुपाये श्रवणादावेव सर्व्वकर्म्मसन्न्यासपूर्व्वके प्रयत्नवर्त्तेरन्नित्याशयवती श्रुतिरुपासनां विद्यारम्भेऽभिदधातीति। तेनेयं वा अग्रेत्याद्युपनिषदारम्भो युक्तोऽस्य विशिष्टाधिकारिसमर्पकत्वादित्यर्थः॥ उपासनफलस्य संसारगोचरत्वमेव कुतः सिद्धमत आह। तथाचेति। अशनया हि मृत्युः स वै नैव रेमे सोऽबिभेदिति भयारत्यादिश्रवणात् उपास्तियुक्तक्रतुफलस्य सूत्रस्य बन्धमध्यपातित्वाद्विशिष्टोऽपि क्रतुर्न मुक्तये पर्य्याप्नोतीत्यर्थः॥ उक्ते सर्व्वकर्म्मणां बन्धफलत्वे नित्यनैमित्तिकानां न तत्फलत्वं। तेषां विध्युद्देशे फलाश्रुतेर्नष्टाश्वदग्धरथन्यायेन मुक्तिफलत्वलाभादिति शङ्कते। न नित्यानामिति॥ एतावान् वै काम इति सर्व्वकर्म्मणामविशेषेण फलसम्बन्धश्रवणात्। यस्मादेष काम्यफलत्वस्य तद्विध्युद्देशवशात् सिद्धत्वात्। कर्म्मणा पितृलोक इतिवाक्यस्य नित्यादिकर्म्मफलविषयत्वाच्च मोक्षफलत्वाशङ्केति परिहरति। नेति॥ उक्तमेव स्फुटयति। सर्व्वं हीति॥ पत्नीसम्बन्धे मानमाह। जायेति॥ तथापि कथं कर्म्मणः सर्व्वस्य कामोपायत्वं तत्राह। एतावान् वै काम इति॥ कथन्तर्हि तेषां फलभेदो लभ्यते तत्राह। पुत्रेति॥ अथैवं फलविभागे कथं समष्टिव्यष्टिप्राप्तिफलत्वमश्वमेधस्योक्तमत आह। अनात्मकताञ्चेति। अस्याध्यायस्यावसाने कर्म्मफलस्य हिरण्यगर्भरूपतां त्रयमित्याद्या श्रुतिरुपसंहरिष्यतीत्यर्थः॥ उपसंहारश्रुतेस्तात्पर्य्यमाह।

---

* भयमिति पुस्तकान्तरपाठः।

भा० सर्व्वकर्म्मणां फलं व्याहृतं संसार एवेति । इदमेव चयस्मा-गुत्पत्तेस्सर्व्वंव्याहृतमासीत् ।

तदेव पुनः सर्व्वप्राणिकर्मवशाद्व्याक्रियते बीजादिव वृक्षः । सोऽयं व्याकृताव्याकृतरूपः संसारोऽविद्याविषयः । क्रियाकारकफलात्मकतयात्मरूपत्वेनाध्यारोपितोऽविद्ययैव मूर्त्तामूर्त्ततद्वासनात्मकः । अतो विलक्षणोऽनामरूप-कर्म्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि क्रियाका-रकफलभेदादिविपर्य्ययेणावभासते । अतोऽस्मात् क्रिया-कारकफलभेदस्वरूपादेतावदिदमितिसाध्यसाधनरूपाद्वि-रक्तस्य कामादिदोषकर्म्मबीजभूताविद्यानिवृत्तयेरज्ज्वा-

---

आ० सर्व्वकर्म्मणामिति ॥ कर्म्मफलं संसारश्चेत् प्राक्तदनुष्ठानात्तदभा-वान्मुक्तानां पुनर्बन्धः स्यादित्याशङ्क्याह । इदमेवेति । तर्हि तस्यामवस्थायामिति यावत् ॥ तस्य पुनर्व्याकरणे कारणमाह । तदेवेति ॥

व्याकृताव्याकृतात्मनः संसारस्य च प्रामाणिकत्वेन सत्यत्वमा-शङ्क्याविद्याकृतत्वेन तन्मिथ्यात्वमुक्तं स्मारयति । सोऽयमिति । स एव हि भ्रान्तिविषयो न प्रामाणिकस्तत् कुतोऽस्य सत्यतेत्यर्थः ॥ कथमस्यात्मन्यद्वये कूटस्थे प्राप्तिरित्याह । क्रियेति ॥ समारोपे मूलकारणमाह । अविद्ययेति ॥ आत्मन्यविद्यारोपितं द्वैतमित्यत्र द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्चेत्यादिवाक्यं प्रमाणयति । मूर्त्तेति ॥ नन्वात्मन्यारोपो नोपपद्यते । तस्य नित्यशुद्धबुद्धमुक्त-स्वभावस्य द्वैतविलक्षणत्वात् । असति सादृश्येऽध्यासासिद्धेरत आह । अत इति ॥ संसाराद्वैलक्षण्यमेव प्रकटयति । अनामेति । आदिपदेनान्येऽपि विपर्य्ययभेदाः सङ्गृह्यन्ते ॥ आरोपे प्रमि-णोमि करोमि भुञ्जे चेत्यनुभवं प्रमाणयति । अवभासत इति ॥ आत्मन्यध्यासः सादृश्याद्यभावेऽपि नभसि मलिनत्वादिवद्यतोऽ-

भा॰ मिव सर्पविज्ञानापनयाय ब्रह्मविद्यारभ्यते। तत्र तावद-श्वमेधविज्ञानाय उषा वा अश्वस्येत्यादि। तत्राश्वविषयमेव दर्शनमुच्यते प्राधान्यादश्वस्य। प्राधान्यञ्च तन्नामाङ्कित-त्वात् क्रतोः प्राजापत्यत्वाच्च॥

---

आ॰ मनुभूयतेऽतः सविलासाविद्यानिवर्तकब्रह्मविद्यार्थत्वेनोपनिषदा-रम्भः सम्भवतीत्युपसंहरति। अत इति। एतावदित्यनर्थोक्तिः॥ तत्त्वज्ञानादनर्थनिवृत्तौ दृष्टान्तमाह। रज्ज्वामिवेति॥ एवमु-पनिषदारम्भे स्थिते प्राथमिकब्राह्मणयोरवान्तरतात्पर्यमाह। तत्र तावदिति॥ आद्यस्य पुनरवान्तरतात्पर्यं दर्शयति। तत्रेति॥ नन्वश्वमेधस्याङ्गबाहुल्ये कस्मादश्वस्याङ्गविषयमेवोपासनमुच्यते। तत्राह। प्राधान्यादिति॥ तदेव कथमिति तदाह। प्राधान्य-ञ्चेति॥ प्रजापतिदेवताकत्वादश्वस्य प्राधान्यमित्याह। प्राजा-पत्यत्वाच्चेति॥ प्रतीकमादाय व्याचष्टे। उषा इत्यादिना॥

---

## वाजसनेयिब्राह्मणोपनिषदारम्भः ।

उ० ॐ उषा वा अश्वस्य मेध्यस्य शिरः ।

---

भा० उषा वा इति ब्राह्मो मुहूर्त्त उषाः । वैशब्दः स्मारणार्थः प्रसिद्धं कालं स्मारयति । शिरः प्राधान्यात् । शिरश्च प्रधानं शरीरावयवानां । अश्वस्य मेध्यस्य मेधार्हस्य यज्ञीयस्य उषाः शिर इति सम्बन्धः । कर्म्माङ्गस्य पशोः संस्कर्त्तव्यत्वात् कालादिदृष्टयः शिर आदिषु क्षिप्यन्ते । प्राजा-

---

आ० स्मरणार्थत्वमेव निपातस्य स्फुटयति । प्रसिद्धमिति । शास्त्रीये लौकिके च व्यवहारे प्रसिद्धो ब्राह्मो मुहूर्त्तस्तं कालमिति यावत् । उषसि शिरः शब्दप्रयोगादिनावयवेषु तस्य प्राधान्यं हेतुमाह । प्राधान्यादिति । तथापि कथन्तत्र तच्छब्दप्रयोगस्तत्राह । शिरश्चेति ॥ आश्वमेधिकाश्वशिरस्युषसो दृष्टिः कर्त्तव्येत्याह । अश्वस्येति । कालादिदृष्टिरश्वाङ्गे किमिति क्षिप्यते ऽश्वाङ्गदृष्टिरेव तेषु किन्न स्यादित्याशङ्क्याह । कर्म्माङ्गस्येति ॥ अङ्गेष्वनङ्गमिति क्षेपे हेत्वन्तरमाह । प्राजापत्यत्वश्चेति । अश्वस्येत्यनुवर्त्तते इति शेषः ॥ तत्र हेतुः । प्रजापतीति ॥ ननु कालादिदृष्टयो ऽश्वावयवेष्वारोप्यन्ते न तस्य प्रजापतित्वं क्रियते तत्राह । कालेति । कालाद्यात्मको हि प्रजापतिः । तथाच यथा प्रतिमायां विष्णुत्वकरणं तद्दृष्टिः तथा कालादिदृष्टिरश्वावयवेषु तस्य प्रजापतित्वकरणं । अश्वमेधाधिकारी हि सत्यश्वे कर्म्मणो वीर्य्यवत्तरत्वार्थं कालादिदृष्टीरश्वावयवेषु कुर्य्यात् । तदनधिकारी तु अश्वाभावे

उ॰ सूर्य्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्मा अश्वस्य मेध्यस्य ।

---

भा॰ पशुत्वञ्च प्रजापतित्वाध्यारोपणात् । काललोकदेवतात्वाध्यारोपश्च प्रजापतित्वकरणं पशोः । एवंरूपो हि प्रजापतिः । विष्णुत्वादिकरणमिव प्रतिमादौ ।

सूर्य्यश्चक्षुः शिरसोऽनन्तरत्वात् सूर्य्याधिदैवतत्वाच्च । वातः प्राणो वायुस्वाभाव्यात् । व्यात्तं विवृतं मुखमग्निर्वैश्वानरः । वैश्वानर इत्यग्नेर्विशेषणं । वैश्वानरो नामाग्निर्विवृतमुखमित्यर्थो मुखस्याग्निदैवतत्वात् । संवत्सर आत्मा संवत्सरो द्वादशमासस्त्रयोदशमासो वा । आत्मा शरीरं । कालावयवानाञ्च संवत्सरः शरीरं शरीरस्यात्मा ।

---

आ॰ स्वात्मानमश्वं कल्पयित्वा स्वशिरःप्रभृतिषु कालादिदृष्टिकरणेन प्रजापतित्वं सम्पाद्य प्रजापतिरस्मीति विज्ञानात्तद्भावं प्रतिपद्येतेति भावः ।

चक्षुषि सूर्य्यदृष्टौ हेतुमाह । स शिरस इति । उषसो ऽनन्तरत्वं सूर्य्ये दृष्टं । चक्षुषि च शिरसोऽनन्तरत्वमुपलभ्यते । तस्मात्तत्र तद्दृष्टिर्युक्तेत्यर्थः । तत्रैव हेत्वन्तरमाह । सूर्य्येति । आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदिति श्रुतेः । चक्षुषि सूर्य्योऽधिष्ठात्री देवता । तेन सामीप्यात्तत्र तद्दृष्टिरित्यर्थः । चलप्राणवायुदृष्टौ चलनस्वाभाव्यं हेतुः । अश्वस्य विदारिते मुखे भवत्वग्निदृष्टिस्तथापि पर्य्यायोपादानं व्यर्थमित्याशङ्क्य व्यात्तादिव्याह-त्यर्थं* विशेषणमित्याह । वैश्वानर इत्यग्नेरिति । अग्निर्वाग्भूत्वा मुखम्प्राविशदिति श्रुतिमाश्रित्य मुखे तद्दृष्टौ हेतुमाह । मुख-

---

* मुखविशेषणमिति पुस्तकान्तरपाठः

उ॰ द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं ।

भा॰ मध्यं ह्येषामङ्गानामात्मेति श्रुतेः । अश्वस्य मेध्यस्येति सर्वत्रानुषङ्गार्थं पुनर्वचनं ॥

द्यौः पृष्ठं ऊर्द्ध्वत्वसामान्यात् । अन्तरिक्षमुदरं सुषिरत्वसामान्यात् । पृथिवी पाजस्यं पादस्यं । पाजस्यमिति वर्णव्यत्ययेन पादासनस्थानमित्यर्थः । दिशश्चतस्रोऽपि पार्श्वे पार्श्वेन दिशां सम्बन्धात् । पार्श्वयोर्दिशाञ्च सङ्ख्यावैषम्यादयुक्तमिति चेत् । न । सर्वमुखत्वोपपत्तेरश्वस्य पार्श्वाभ्यामेव

आ॰ स्येति । अधिकमासमनुकृत्य त्रयोदशमासो वेत्युक्तं ॥ शरीरे संवत्सरदृष्टिरित्यत्रात्मत्वं हेतुमाह । कायेति । आत्मा हस्तादीनामङ्गानामिति शेषः । कायावयवानां संवत्सरस्यात्मत्ववदङ्गानां शरीरस्यात्मत्वे प्रमाणमाह । मध्यं ह्येति ॥ पुनरुक्तेरर्थवत्त्वमाह । अश्वस्येति ॥

पृष्ठे द्युलोकदृष्टौ हेतुमाह । ऊर्द्ध्वत्वेति ॥ उदरेऽन्तरिक्षदृष्टौ निमित्तमाह । सुषिरत्वेति ॥ पादा अस्यन्ते यस्मिन्निति व्युत्पत्तिमाश्रित्य विवक्षितमाह । पादेति । अश्वस्य हि खुरे पादासनत्वसामान्यात्पृथिवीदृष्टिरित्यर्थः ॥ पार्श्वयोर्दिक्चतुष्टयदृष्टौ हेतुमाह । पार्श्वेनेति । द्वे पार्श्वे चतस्रश्च दिशस्तत्र कथं तयोस्तदारोपणं ताभ्यामेव द्वयोः सम्बन्धादिति शङ्कते । पार्श्वयोरिति । यद्यपि द्वे दिशौ ताभ्यामपार्श्वाभ्यां सम्बध्येते तथाप्यश्वस्य प्राङ्मुखत्वे प्रत्यङ्मुखत्वे च दक्षिणोत्तरयोरुन्मुखत्वे च प्राक्प्रतीच्योर्दिशोस्ताभ्यां सम्बन्धसम्भवात् तत्र तद्दृष्टिरविरुद्धेति परिहरति । नेत्यादिना । तदुपपत्तौ चाश्वस्य चरिष्णुत्वं हेतु कर्त्तव्यं ॥ पार्श्वादिष्ववान्तरदिशामारोपे पार्श्वदिक्सम्बन्धो हेतुः ॥ ऋतवः संवत्सरस्याङ्गानि । हस्तादीनि च देहस्यावयवाः । तस्मादृतुदृष्टिरङ्गेषु कर्त्तव्येत्याह । ऋतव इति ॥ अस्ति मासादीनां

उ॰ दिशः पार्श्वे अवान्तरदिशःपर्शव ऋतवोऽङ्गानि मासाश्चार्द्धमासाश्च पर्व्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसानि ।

---

भा॰ सर्व्वदिशां सम्बन्धाद्दोषः । अवान्तरदिश आग्नेय्याद्याः पर्शवः पार्श्वास्थीनि । ऋतवोऽङ्गानि संवत्सरावयवत्वादङ्गसाधर्म्यात् । मासाश्चार्द्धमासाश्च पर्व्वाणि सन्धयः सन्धिसामान्यात् । अहोरात्राणि प्रतिष्ठा बहुवचनात्प्राजापत्यदैवपित्र्यमानुषाणि प्रतिष्ठाः पादाः प्रतितिष्ठन्त्येतैरिति । अहोरात्रैर्हि कालात्मा प्रतितिष्ठति अश्वस्य पादैः । नक्षत्राण्यस्थीनि शुक्लत्वसामान्यात् । नभो नभस्था मेघा अन्तरिक्षस्थोदरस्लोकैर्मांसानि उदकरुधिरसेचनसामान्यात् ।

---

आ॰ संवत्सरसम्बन्धित्वं । अस्ति च शरीरसम्बन्धित्वमङ्गानां । अतस्तेषु मासादिदृष्टिरित्याह । सन्धीति । युगसहस्राभ्यां प्राजापत्यमेकमहोरात्रं । अयनाभ्यान्दैवं । पक्षाभ्याम्पैत्र्यं । षष्टिघटिकाभिर्मानुषमिति भेदः ॥ प्रतिष्ठाशब्दस्य पादविषयकत्वं व्युत्पादयति । प्रतितिष्ठन्तीति ॥ पादेष्वहोरात्रदृष्टिसिद्ध्यर्थमुक्तमुपपादयति । अहोरात्रैरिति ॥ अस्थिषु नक्षत्रदृष्टौ हेतुमाह । शुक्लत्वेति ॥ नभःशब्देनान्तरिक्षं किमिति न गृह्यते मुख्ये सत्युपचारायोगादित्याशङ्क्य पुनरुक्तिम्परिहर्तुमित्याह । अन्तरिक्षस्थेति । उदकं सिञ्चन्ति मेघा मांसानि रुधिरं । अतः सेचकत्वसामान्यान्मांसेषु मेघदृष्टिरित्याह । उदकेति ॥

उ॰ ऊवध्यं सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्व्वता ओषधयश्च वनस्पतयश्च लोमानि उद्यन् पूर्व्वार्द्धो निम्लोचन् जघनार्द्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥ (१)

---

भा॰ ऊवध्यमुदरस्थमर्द्धजीर्णमशनं सिकता विश्लिष्टावयवसामान्यात्। सिन्धवः स्यन्दनसामान्यान्नद्यो गुदा नाड्यो बहुवचनाच्च। यकृच्च क्लोमानश्च हृदयस्याधस्ताद्दक्षिणोत्तरौ मांसखण्डौ । क्लोमान इति नित्यम्बहुवचनमेकस्मिन्नेव पर्व्वताः काठिन्यादुच्छ्रितत्वाच्च। ओषधयश्च क्षुद्राः स्थावरा वनस्पतयो महान्तो लोमानि केशाश्च यथासम्भवं । उद्यन्नुद्गच्छन् भवति सविताऽऽमध्याह्नात्स पूर्व्वार्द्धो नाभेरूर्द्धमित्यर्थः । निम्लोचन्नस्तं यन्नामध्याह्नाज्जघनार्द्धोऽपरार्द्धः पूर्व्वापरत्वसाधर्म्यात् । यद्विजृम्भते गात्राणि

---

आ॰ अश्वजठरविपरिवर्त्तिन्यर्द्धजीर्णे सिकतादृष्टौ हेतुमाह । विश्लिष्टेति ॥ किमिति गुदशब्देन पायुरेव न गृह्यते शिराग्रहणे हि मुख्यार्थातिक्रमः स्यात् तत्राह । बहुवचनाच्चेति । चकारोऽवधारणार्थः । यद्यपि बह्व्यः शिराभ्योऽर्थान्तरमपि गुदशब्दमर्हति तथापि स्यन्दनसादृश्यात् तास्वेव सिन्धुदृष्टिरिति तासामिह ग्रहणमिति भावः ॥ कुतो मांसखण्डद्वये द्वित्वमेकत्र बहुवचनाद्बहुत्वप्रतीतेरित्याशङ्क्य दारा इतिवद्बहूक्तेर्गतिमाह । क्लोमान इति । तयोः पर्व्वतदृष्टौ हेतुद्वयमाह काठिन्यादिना ॥ क्षुद्रत्वसाधर्म्यादोषधिदृष्टिर्लोमसु, महत्त्वसामान्याद्वनस्पतिदृष्टिश्चाश्वकेशेषु कर्त्तव्येत्याह । यथा सम्भवमिति ॥ पूर्व्वत्वसामान्या-

उ॰ अहर्वा अश्वम्पुरस्तान्महिमान्वजायत तस्य पूर्व्वे समुद्रे योनी रात्रिरेनम्पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः सम्बभूवतुः १

---

भा॰ विनामयति विक्षिपति तद्विद्योतते विद्योतनं मुखविदारणसामान्यात्। यद्विधूनुते गात्राणि कम्पयति तत्स्तनयति गर्जनशब्दसामान्यात्। यन्मेहति मूत्रं करोत्यस्य तद्वर्षति वर्षणन्तत् सेचनसामान्यात्। वागेव शब्द एवास्याश्वस्य वागिति नात्र कल्पनेत्यर्थः ॥ १ ।

अहर्वा इति सौवर्णराजतौ महिमाख्यौ ग्रहावश्वस्याग्रतः पृष्ठतश्च स्थाप्येते तद्विषयमिदन्दर्शनं। अहः सौवर्णो ग्रहो दीप्तिसामान्यात्। वै अहरश्वम्पुरस्तान्महिमान्वजायतेति कथं अश्वस्य प्रजापतित्वात्। प्रजापतिर्हि आदि-

---

आ॰ मध्याह्नात्प्रागवस्थादित्यदृष्टिरश्वस्य नाभेरूर्द्धभागे कर्त्तव्येत्याह। उद्यन्नित्यादिना ॥ अपराह्णादस्तमयादश्वस्य नाभेरपरार्द्धभागे मध्याह्नादनन्तरभाव्यादित्यदृष्टिः कार्य्येत्याह । निम्लोचन्नित्यादिना ॥ विजृम्भत इत्यादौ प्रत्ययार्थो न विवक्षितः। विजृम्भणं मुखं विदारयति । विद्योतनं पुनर्मेघविदारणं। अतो विद्योतनदृष्टिर्जृम्भणे कर्त्तव्येत्याह । मुखेति ॥ स्तनयतीति स्तनितमुच्यते तद्दृष्टिर्गात्रकम्पे कर्त्तव्येत्यत्र हेतुमाह। गर्जनेति ॥ मूत्रकरणे वर्षणदृष्टौ कारणमाह। सेचनेति ॥ अश्वस्य हेषितशब्दे नास्त्यारोपणमित्यतो न सादृश्यं वक्तव्यमित्याह। नात्रेति ॥ १ ॥

अश्वावयवेषु कालादिदृष्टीर्विधायाश्वप्रजापतिरूपं विवक्षित्वा कण्डिकान्तरङ्गृहीत्वा तात्पर्य्यमाह। अहर्वेत्यादिना । ग्रहौ

उ॰ हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वासुरानश्वो मनुष्यान् समुद्र एवास्य बन्धुः समुद्रो योनिः ॥ २ ॥ प्रथमं ब्राह्मणं ॥ १ ॥

---

भा॰ त्यादिलक्षणोऽश्वो लक्ष्यते । अश्वं लक्षयित्वाजायत वृक्षमनुविद्योतते विद्युदिति यद्वत् । तस्य ग्रहस्य पूर्व्वे पूर्व्वः समुद्रे समुद्रो योनिर्विभक्तिव्यत्ययेन । योनिरित्यासादनस्थानं । तथा रात्री राजतो ग्रहो वर्णसामान्याज्जघन्यत्वसामान्याद्वा । एवमश्वस्य पश्चात्पृष्ठतो महिमाऽन्वजायत तस्यापरे समुद्रे योनिः । महिमा महत्त्वं । अश्वस्य हि विभूतिरेषा । यत्सौवर्णो राजतश्च ग्रहावुभयतः स्थाप्येते तावेतौ वै महिमानौ महिमाख्यौ ग्रहावश्वमभितः सम्बभूवतुः । उक्तलक्षणावेव सम्भूतावित्यमसावश्वो महत्त्वयुक्त इति पुनर्वचनं स्तुत्यर्थं । तथा च हयो भूत्वेत्यादि स्तुत्यर्थमेव । हयो हिनोतेर्गतिकर्म्मणो विशिष्टगतिरित्यर्थः । जातिविशेषो वा देवानवहत् देवत्वमगमयत् प्रजापति-

---

आ॰ हवनीयद्रव्याधारौ पात्रविशेषौ अग्रतः पृष्ठतश्चेति सन्दर्भपनात् प्रागूर्द्ध्वञ्चेति यावत् ॥ प्रसिद्धा तावदह्नो दीप्तिः सौवर्ण्यं च ग्रहे नास्ति । अतस्तस्मिन्नहर्दृष्टिरिति दर्शनं विभजते । अह-रिति ॥ अश्वसन्दर्भपनात् पूर्व्वं यो महिमाख्यो ग्रहः स्थाप्यते स चेदहर्दृष्ट्योपास्यते कथं सोऽश्वमन्वजायतेति पश्चादश्वस्य तज्जन्मवाचोयुक्तिरिति शङ्कते । अहरश्वमिति ॥ नायमश्वादर्थोऽनुशब्दः किन्तु लक्षणार्थः । तथा चाश्वस्य प्रजापतिरूपत्वात् तं लक्षयित्वा ग्रहस्य यथोक्तस्य प्रवृत्तेरपदेशादश्वमन्वजायतेत्यविरुद्धमिति परिहरति । अश्वस्येति ॥ तदेव स्फुटयति । प्रजा-

भा॰ त्वाद्देवानां वा वोढा भवत् ॥ ननु निन्दैव वाहनत्वं । नैष दोषो वाहनत्वं स्वाभाविकमश्वस्य स्वाभाविकत्वात् उच्छ्रा- यप्राप्तिर्देवादिसम्बन्धोऽश्वस्येति स्तुतिरेवैषा । तथा वाज्या- दयो जातिविशेषाः । वाजी भूत्वा गन्धर्व्वानवहदित्यनु- षङ्गः । तथार्वा भूत्वाऽसुरान् । अश्वो भूत्वा मनुष्यान् । समुद्र एवेति परमात्मा बन्धुर्बन्धनमस्यास्मिन्निति । समु- द्रो योनिः कारणमुत्पत्तिम्प्रति । एवमसौ शुद्धयोनिः

---

आ॰ यतिरिति । कालजोकदेवतात्मा प्रजापतिरश्वात्मना दृश्यमानो ऽश्वदृष्ट्या दृष्टेन यज्ञेन बध्यते । तथाचाश्वमन्वजायतेति श्रुतिरविरुद्धेत्यर्थः ॥ नुशब्दो न पश्चादर्थेत्यत्र दृष्टान्तमाह । वृक्षमिति । यदा वृक्षं लक्षयित्वा तस्याग्रे विद्युद्विद्योतते तदा वृक्षमनु विद्योतते सेति प्रयुज्यते । तथात्राप्यनुशब्दो न पश्चादर्थ इत्यर्थः ॥ यत्र च स्थाने ग्रहः स्थाप्यते तत्पूर्व्वसमुद्रदृष्ट्या ध्ये- यमित्याह । तस्येति । पूर्व्वत्वमत्र सादृश्यं ॥ कथं सप्तमी प्रथ- मार्थे योज्यते । छन्दस्यर्थानुसारेण व्यत्ययसम्भवादित्याह । विभ- क्तीति ॥ यथा सौवर्णे ग्रहेऽहर्दृष्टिरुपदिष्टा तथा राजते ग्रहे रात्रिदृष्टिः कर्त्तव्येत्याह । तथेति ॥ अस्ति हि चन्द्रात- पवत्त्वाद्रात्रेः शौक्ल्यं अस्ति च राजतस्य ग्रहस्य तदुक्तं । तत्र रात्रिदर्शनमित्याह । वर्णेति ॥ रजतं सुवर्णाज्जघन्यं । अक्ष- रात्रिः । अतो वा सादृश्यात्तत्र रात्रिदृष्टिरित्याह । जघन्येति ॥ प्रजापतिरूपमज्ञातमश्वं लक्षयित्वा तत्संज्ञपनात्पश्चादस्य प्रवृ- त्तिन्दर्शयति । एनमिति ॥ तदासादनस्थाने पश्चिमसमुद्रदृष्टि- र्विधेयेत्याह । तस्येति ॥ कथमेतौ ग्रहौ महिमाख्यावुक्तौ महत्त्वोपेतत्वादित्याह । महिमेति ॥ अथाश्वविषयन्दर्शनमा- दिश्य ग्रहविषयन्तदादिश्यतो वाक्यभेदः स्यान्नेत्याह । अश्वस्येति ॥ किमत्र नियामकमित्याशङ्क्य पुनरुक्तिरिति मत्वाह । तावित्या- दिना ॥ वैशब्दार्थं कथयति । एवेति ॥ वाक्यशेषोऽप्यत्रानु- गुणीभवतीत्याह । तथा चेति ॥ हयशब्दनिष्पत्तिपुरःसरन्त-

I 2

उ॰ नैवेह किञ्चनाग्र आसीत् मृत्युनैवेदमावृतमासीत् ।

---

भा॰ अद्भिरिति सूच्यते । अप्सु योनिर्वा अश्व इति श्रुतेः । प्रसिद्ध एव वा इति समुद्रो योनिः ॥ २ ॥ इति तृतीयाध्यायस्य प्रथमं ब्राह्मणं ॥ १ ॥

अथाग्नेरश्वमेधोपयोगिकस्योत्पत्तिरुच्यते । तद्विषयदर्शनविवक्षयैवोत्पत्तिः स्तुत्यर्था ॥ नैवेह किञ्चनाग्र आसीत् । इह संसारमण्डले किञ्चन किञ्चिदपि नामरूपप्रविभक्तविशेषं नैवासीत् न बभूव । प्रागुत्पत्तेर्मनआदेः किं शून्यमेव बभूव शून्यमेव स्यात् । नैवेह किञ्चनेति श्रुतेः ।

---

आ॰ दर्शमाह । वय इति ॥ वाज्यादिशब्दानाञ्जातिविशेषवाचित्वादत्रापि तदेव ग्राह्यमिति पक्षान्तरमाह । वातीति ॥ देवानान्देवत्वप्रापकत्वं कथमस्येत्याशङ्क्याह । प्रजापतित्वादिति । अश्वं स्तोतुमारभ्य कस्यान्तरोक्त्या तन्निन्दावचनमनुचितमिति शङ्कते । नन्विति ॥ उपक्रमविरोधो नास्तीति परिहरति । नेत्यादिना ॥ समुत्पद्यभूतानि द्रवन्त्यस्मिन्निति व्युत्पत्त्या परमगम्भीरस्येश्वरस्य समुद्रशब्दतामाह । परमात्मेति । तत्र योनित्वमुत्पादकत्वं । बन्धुत्वं व्यापकत्वं । समुद्रत्वं विलापकत्वमिति भेदः ॥ अथ परमात्मयोनित्वादिवचनमुपास्याश्वस्य कोपयुज्यते तत्राह । एवमिति ॥ श्रुत्यन्तरानुरोधेन समुद्रो योनिरित्यत्र समुद्रशब्दस्य रूढिमनुजानाति । अप्सु योनिरिति ॥ २ ॥ इति तृतीयस्य प्रथमं ब्राह्मणं ॥

अश्वादिदर्शनोक्त्यनन्तरं अग्निदर्शनं वक्तुं ब्राह्मणान्तरमवतारयति । अथेति ॥ नैवेहेत्यादौ तद्बुद्धिर्वास्तीति चेतव्यं ।

भा॰ न कार्य्यं कारणं वासीदुत्पत्तेश्च । उत्पद्यते हि घटः । अतः प्रागुत्पत्तेर्घटस्य नास्तित्वं । ननु कारणस्य न नास्तित्वं मृत्पिण्डादिदर्शनात् ॥ यद्योपलभ्यते तस्यैव नास्तिता अस्तु कार्य्यस्य नतु कारणस्योपलभ्यमानत्वात् । न । प्रागुत्पत्तेः सर्व्वानुपलब्धात् ॥

---

आ॰ तत्राग्नेर्जन्म वक्तुं भूमिका क्रियत इत्याह । अग्नेरिति ॥ वायोरग्निरित्यादौ प्रसिद्धं तज्जन्मेति चेत्सत्यं । तद्विशेषस्यात्र जन्मोक्तिरित्याह । अश्वमेधेति ॥ दर्शने विधित्सिते किञ्जन्मोक्त्येति चेत्तत्राह । तद्विषयेति । अग्निदर्शनस्य विधातुमिष्टस्य विध्यर्थमुपास्याग्निस्तुतिपरत्वा तदुत्पत्तिरिष्टा शुद्धजन्मत्वात् । उत्कृष्टत्वेनायमुपास्यो राजादिवदित्यर्थः ॥ तात्पर्य्यमुक्ता वाक्यमादायाक्षराणि व्याचष्टे । नैवेत्यादिना ॥ नामरूपाभ्यां विभक्तो विशेषो यस्मिन्निति नञ्ग्रोहिः । अत्र शून्यवादो लब्धावकाशो विमृश्य परेष्टश्रुत्यवष्टम्भेन स्वपक्षमाह । किमित्यादिना ॥ कार्य्यस्य प्रागसत्त्वे हेत्वन्तरमाह । उत्पत्तेश्चेति । विमतम्प्रागसदुत्पद्यमानत्वात् यन्नैवं न तदेवं यथा परेष्टं ब्रह्मेत्यर्थः ॥ हेतुसिद्धिं प्रश्नोत्तरमाह । उत्पद्यते हीति । घटग्रहणं कार्य्यमात्रस्योपलक्षणार्थं ॥ उक्तमनुमानं निगमयति । अत इति ॥ तत्र तार्किको ब्रूते । नन्विति ॥ यदुक्तं न कार्य्यं कारणं वासीदिति तत्र भागे बाधो भागे*ऽनुमतिरित्यर्थः ॥ कार्य्यस्यापि कथम्प्रागसत्त्वोपपत्तिरित्याशङ्क्याह । यन्नेति । एतेनागमानस्य सिद्धसाध्यतोक्ता ॥ कार्य्यवत् कारणस्यापि प्रागसत्त्वं किं न स्यादित्याशङ्क्योक्तहेत्वभावान्नैवमित्याह । नत्विति ॥ शून्यवाद्याह । न प्रागुत्पत्तेरिति । विमतम्प्रागसद्योग्यत्वे सति तदानुपलभ्यत्वात्सम्मतवन्नचासिद्धो हेतुः श्रुतेरनतिप्रसक्तत्वात् । तद्विरोधे सत्युपलब्धेराभासत्वादित्यर्थः ।

---

* अनुमितीतिपाठान्तरः ।

भा॰ अनुपलब्धिश्चेदभावो हेतुः सर्व्वस्य जगतः प्रागुत्पत्ते-र्न कारणं कार्य्यं चोपलभ्यते । तस्मात्सर्वस्यैवाभावोऽस्तु । न । मृत्युनैवेदमावृतमासीदिति श्रुतेः । यदि हि किञ्चि-दपि नासीत् येनाव्रियते यच्चाव्रियते तदा नावक्ष्यन्मृ-त्युनैवेदमावृतमिति । न हि भवति गगनकुसुमच्छन्नो वन्ध्यापुत्र इति ॥ ब्रवीति च मृत्युनैवेदमावृतमासीदिति । तस्माद्येनावृतं कारणेन यच्चावृतं कार्य्यं प्रागुत्पत्तेस्तदु-भयमासीच्छ्रुतेः प्रामाण्यात् । अनुमेयत्वाच्च । अनुमीयते च प्रागुत्पत्तेः कार्य्यकारणयोरस्तित्वं । कार्य्यस्य हि सतो जायमानस्य कारणे सत्युत्पत्तिदर्शनात् । असति चाद-र्शनात् ॥ जगतोऽपि प्रागुत्पत्तेः कारणास्तित्वमनुमीयते

---

आ॰ तदेव प्रपञ्चयति । अनुपलब्धिश्चेदिति ॥ कार्य्यवत् कारणस्यापि प्रागसत्त्वे प्राप्ते सिद्धान्तयति । नेत्यादिना । नैवेत्यादिश्रुति-र*व्याकृतनामरूपादिविषया न प्रागसत्त्वं कार्य्यकारणयोराह । अन्यथा वाक्यशेषविरोधादित्यर्थः । श्रुतिं विवृणोति । यदि हीति ॥ द्वयोरसत्त्वे का वाचो युक्तिरनुपपत्तिस्तत्राह । न हीति ॥ मा तर्हि वाक्यमेवाभूदित्याशङ्क्याह । ब्रवीति चेति ॥ मृत्युनैवे-त्यादिवाक्यमुपसंहरति । तस्मादिति ॥ श्रुतेः प्रामाण्यादिति । तत्-प्रामाण्यस्य प्रमाणलक्षणे स्थितत्वादिति यावत् ॥ परकीयेऽनुमाने श्रुतिविरोधमभिधायानुमानविरोधमाह । अनुमेयत्वाच्चेति । कार्य्यकारणयोः सत्त्वस्यानुमेयतया तदसत्त्वमनुमातुमशक्यं । उप-जीव्यविषयतया सत्त्वानुमानस्य बलीयस्त्वादित्यर्थः । कार्य्यका-रणयोः सत्त्वानुमानं प्रतिज्ञाय प्रथमं कारणसत्त्वमनुमिनोति । अनुमीयते चेत्यादिना । कार्य्यस्य हीति । विमतं सत्पूर्वं कार्य्यत्वात्

---

*अव्याकृतेतिपाठान्तरः ।

भा॰ घटादिकारणादिकारणाखिलवत्। घटादिकारणत्वा-
प्यसत्त्वमेवानुपमृद्य मृत्पिण्डादिकं घटाद्यनु*त्पत्तेरिति
चेन्न। मृदादेः कारणत्वात्। मृत्सुवर्णादि हि तत्र कारणं
घटरुचकादेर्न पिण्डाद्याकारविशेषः। तदभावे तद-
भावात्॥

असत्यपि पिण्डाकारविशेषे मृत्सुवर्णादिकारणद्र-
व्यभावादेव घटरुचकादिकार्य्योत्पत्तिर्दृश्यते। तस्मान्न
पिण्डाकारविशेषो घटरुचकादिकारणं। असति तु
मृत्सुवर्णादिद्रव्ये घटरुचकादिर्न जायत इति मृत्सुवर्णा-
दिद्रव्यमेव कारणं नतु पिण्डाकारविशेषः॥ सर्व्वं हि
कारणं कार्य्यमुत्पादयत् पूर्व्वोत्पन्नस्यात्मकार्य्यस्य तिरो
धानं कुर्व्वत् कार्य्यान्तरमुत्पादयति। एकस्मिन् कारणे

---

आ॰ कुम्भवदित्यर्थः। नानुपमृद्य प्रादुर्भावादिति न्यायेन दृष्टान्तस्य
साध्यवैकल्यं चोदयति। घटादीति॥ न तावदसिद्धो घटः
स्वकारणमुपमृद्गाति। असतोऽकारकत्वात् सिद्धस्य तूपमर्दकत्वे-
नासत्पूर्वकत्वमिति कुतः साध्यविकलतेत्याह। नेति॥ किञ्चा-
न्वयिद्रव्यमेव सर्वत्र कारणं न पिण्डादिविशेषोऽनन्वयादव्यव-
स्थानाच्चेति कुतः साध्यवैकल्यमित्याह। मृदादेरिति॥ तदेव
स्फुटयते। मृत्सुवर्णादीति। तत्रेति दृष्टान्तोक्तिः॥ किञ्चान्व-
यव्यतिरेकाभ्यां कारणमवधेयं। न च पिण्डाभावे घटो न भवतीति
व्यतिरेकोऽस्ति। पिण्डाभावेऽपि शकलादिभ्योऽपि घटाद्युद्भवो-
पलम्भादित्याह। तदभावेति॥ तदेव स्फुटयति। असत्यपीति॥
त्वन्मतेऽपि व्यतिरेकराहित्यं तुल्यमित्याशयेनाह। असतीति।

---

* स्फुटयतीतिपाठान्तरः॥ * अनुपपत्तेरितिपाठान्तरः॥

भा० युगपदनेककार्य्यविरोधात्। न च पूर्व्वकार्य्योपमर्दे कारणस्य स्वात्मोपमर्दो भवति। तस्मात् पिण्डाद्युपमर्दे कार्य्योत्पत्तिदर्शनमहेतुः॥ प्रागुत्पत्तेः कारणसत्त्वे पिण्डादिव्यतिरेकेण मृदादेरसत्त्वादयुक्तमिति चेत्। पिण्डादिपूर्व्वकार्य्योपमर्दे मृदादिकारणं नोपमृद्यते घटादिकार्य्यान्तरेऽप्यनुवर्त्तत इत्येतदयुक्तं॥ पिण्डघटादिव्यतिरेकेण मृदादिकारणस्यानुपलम्भादिति चेन्न। मृदादिकारणानां घटाद्युत्पत्तौ पिण्डादिनिवृत्तावनुवृत्तिदर्शनात्॥ सादृश्यादन्वयदर्शनं न कारणानुवृत्तेरिति चेन्न।

---

व्या० मृदाद्येव घटादिकारणं चेत् किमिति पिण्डादौ सत्येव ततो घटाद्यनुत्पत्तिरित्याशङ्क्याह। सर्व्वमिति। प्रसवित्वविद्यावशादुपपत्तिरिति भावः। अन्वयिद्रव्यं पूर्व्वोत्पन्नस्वकार्य्यविरोधानेन कार्य्यान्तरञ्जनयति चेत् कार्य्यतादात्म्येन स्वयमपि नष्टेस्तदुत्तरकार्य्योत्पत्तिर्न्नस्वभावादित्याशङ्क्याह। न चेति। कार्य्यान्तरेऽप्यनुवृत्तिदर्शनात्। कार्य्यान्तरात्मनाभावाच्चेत्यर्थः। अन्वयिद्रव्यस्यैव कारणत्वे फलितमाह। तस्मादिति॥ अन्वयिनो मृदादेर्मानाभावेनाभावान्न कारणतेति शङ्कते। पिण्डादीति॥ तदेव चोद्यं विवृणोति। पिण्डादीत्यादिना॥ मृद्घटः सुवर्णकुण्डलमित्यादितादात्म्यप्रत्ययस्य पिण्डाद्यतिरिक्तमृदाद्यभावेऽनुपपत्तेरनुगतं मृदाद्युपेयमिति परिहरति। नेति॥ किञ्च या पिण्डात्मना पूर्व्वेद्युर्म्मृदासीत्सैवाद्याभूदिति प्रत्यभिज्ञया मृदोऽन्वयिन्याः सिद्धेस्तत्कारणत्वं दुरपह्नवमित्याह। मृदादीति। यत्सत्तत्क्षणिकं यथा दीपः। सन्तश्चेमे भावा इत्यनुमानात् सर्व्वार्थानां क्षणिकत्वसिद्धेरन्वयदृष्टिः सादृश्याद्भ्रान्तिरिति शङ्कते। सादृश्यादिति॥ प्रत्यभिज्ञासिद्धस्यान्वयार्थविरुद्धं क्षणिकार्थबोधलिङ्गमनुष्णतानुमानवन्न मानमिति दूषयति। नेत्यादिना।

भा० पिण्डादिगतानां मृदाद्यवयवानामेव घटादौ प्रत्यक्षत्वेऽनुमानाभावात्सादृश्यादिकल्पनानुपपत्तेः ॥ न च प्रत्यक्षानुमानयोर्विरुद्धा व्यभिचारिता। प्रत्यक्षपूर्व्वकत्वादनुमानस्य सर्व्वत्रैवानाश्वासप्रसङ्गात्। यदि च क्षणिकं सर्व्वं तदेवेदमिति गम्यमानं तद्बुद्धेरपि अन्यतद्बुद्ध्यपेक्षत्वे तस्या अप्यन्यबुद्ध्यपेक्षत्वमित्यनवस्थायां तत्सदृशमिदमित्यस्या अपि बुद्धेर्ब्बाधत्वात् सर्व्वथानाश्वासतैव। तदिदम्बुद्ध्योरपि कर्त्रभावे सम्बन्धानुपपत्तिः। सादृश्यात्तत्सम्बन्ध इति चेन्न। तदिदम्बुद्ध्योरितरेतरविषयत्वानुपपत्तेः। असति चेतरे-

---

व्या० सादृश्यादीत्यादिग्रन्थेन प्रत्यभिज्ञाभ्रान्तित्वादि दृश्यते॥ *प्रत्यक्षात् कारणैक्यं गम्यते। अनुमानात्तद्भेदः। अतो द्वयोर्विरुद्धत्वस्याव्यभिचारित्वान्नाध्यक्षेणानुमानबाधो वैपरीत्यसम्भवादित्याशङ्क्याह। न चेति। प्रत्यभिज्ञामुपजीव्य क्षणिकत्वानुमानप्रवृत्तावप्युपजीव्यजातीयत्वात्तत्प्राबल्यादुपजीवकजातीयकमुक्तानुमानन्दुर्ब्बलं तद्बाध्यमित्यर्थः॥ प्रत्यभिज्ञा स्वार्थे स्वतो न मानं बुद्ध्यन्तरसम्वादादेव बुद्धीनां मानत्वस्य बौद्धैरिष्टत्वात्। न च बुद्ध्यन्तरस्थायित्वसाधकमस्तीति प्रत्यभिज्ञायमानस्यापि क्षणिकत्वमित्याशङ्क्याह। सर्व्वत्रेति॥ प्रसङ्गमेव प्रकटयति। यदि चेति। क्षणिकत्वादिबुद्धेरपि स्वार्थे स्वतो मानत्वाभावात्तादृग्बुद्ध्यन्तरापेक्षायान्तस्यापि तथात्वेनावस्थानाद्बुद्धेः स्वतः प्रामाण्यमुपेयं। तथाच प्रत्यभिज्ञानं सर्व्वन्तथैवाबाधादित्यर्थः॥ किञ्च प्रत्यभिज्ञाया भ्रान्तित्वं वदता स्वरूपानपह्नवात्तदिदम्बुद्ध्योः सामानाधिकरण्येन सम्बन्धो वाच्यः। स च वक्तुं न शक्यते। क्षणद्वयसम्बन्धिनो द्रष्टुरभावादित्याह। तदिदमिति॥ असति सम्बन्धे बुद्ध्योः सादृश्यात्तद्बुद्धिरिति शङ्कते। सादृश्यादिति॥ तयोः स्वसंवेद्यत्वाद्ग्राहकान्तरस्य चाभावान्न सादृश्यसिद्धिरिति दूषयति।

---

* प्रत्यक्षत्वादिति पाठान्तरः।

भा॰ तरविषयत्वे सादृश्यग्रहणानुपपत्तिः ॥ असत्येव सादृश्ये तद्बुद्धिरिति चेन्न । तदिदमुभयोरपि सादृश्यबुद्धिवदसद्विषयप्रसङ्गात् ॥ असद्विषयत्वमेव सर्व्वबुद्धीनामस्त्विति चेन्न बुद्धबुद्धेरप्यसद्विषयत्वप्रसङ्गात् । तदप्यस्त्विति चेन्न ।

सर्व्वबुद्धीनां मृषात्वेऽसत्यबुद्ध्यनुपपत्तेः । तस्मादसदेतत् सादृश्यात्तद्बुद्धिरित्यतः सिद्धः प्राक्कार्य्योत्पत्तेः कारणसद्भावः । कार्य्यस्य चाभिव्यक्तिलिङ्गत्वात् । कार्य्यस्य च सद्भावः प्रागुत्पत्तेः सिद्धः कथमभिव्यक्तिलिङ्गत्वात् । अभिव्यक्तिर्लिङ्गमस्येत्यभिव्यक्तिः । साचादिज्ञानालम्बनत्वप्राप्तिः । यद्धि लोके प्रावृतं तम आदिना घटादि स्तुव तदालोकादिना प्रावरणतिरस्कारेण विज्ञानविषयत्वं प्राप्त-

---

आ॰ न तदिदमुभयोरिति ॥ तथापि किमिति सादृश्यासिद्धिरित्याशङ्क्याह । असति चेति ॥ सादृश्यासिद्धिमभ्युपेत्य शङ्कते । असत्येवेति । यत्र सत्येवार्थे धीस्तत्रैव साधकापेक्षा नान्यत्रेति भावः ॥ तत्र बाह्यार्थवादिनम्प्रत्याह । न तदिदमुभयोरिति ॥ विज्ञानवाद्याह । असदिति ॥ तथा सत्यनालम्बनं क्षणिकविज्ञानमित्यस्यापि ज्ञानस्यासद्विषयतया विज्ञानवादासिद्धिरित्याह । नेति॥ शून्यवाद्याह । तदपीति ॥ सर्व्वा धीरसद्विषयेत्येषा धीरसद्विषया स्यात्ततश्च सर्व्वबुद्धेरसद्विषयत्वासिद्धिरिति दूषयति । नेत्यादिना॥

परपक्षासम्भवात्तत्प्रत्यभिज्ञायाः *स्थायिहेतुसिद्धौ दृष्टान्तस्य साध्यवैकल्यं परिहृत्यावान्तरप्रकृतमुपसंहरति । तस्मादिति ॥ सम्प्रति कारणसत्त्वानुमानं निगमयति । अत इति ॥ कार्य्यकारणयोर्द्वयोरपि प्रागुत्पत्तेः सत्त्वमनुमेयमिति प्रतिज्ञाय कारणास्तित्वं प्रपञ्चितं । इदानीं कार्य्यास्तित्वानुमानन्दर्शयति ।

---

* स्थायित्वहेतुसिद्धावित्यन्यः पाठः ।।

भा॰ वत् प्राक्सद्भावं न व्यभिचरति। तथेदमपि जगत् प्रागुत्पत्तेरित्यवगच्छामः॥ न हि अविद्यमानो घट उदितेऽप्यादित्य उपलभ्यते। न तेऽविद्यमानत्वाभावादुपलभ्येतैवेति चेत्। नहि तव घटादिकार्य्यं कदाचिदप्यविद्यमानमित्युदितेऽप्यादित्य उपलभ्येतैव॥ मृत्पिण्डेऽसन्निहिते तमआद्यावरणे चासति विद्यमानत्वादिति चेत्।

---

आ॰ कार्य्यस्येति। प्रागुत्पत्तेः सद्भावः प्रसिद्ध इति चकारार्थः॥ प्रतिज्ञाभागं विभजते। कार्य्यस्येति॥ हेतुभागमाक्षिपति। कथमिति। अभिव्यक्तिलिङ्गमस्येति व्युत्पत्त्या कथमभिव्यक्तिलिङ्गत्वादिति कार्य्यसत्त्वे हेतुः। उच्यते। सिद्धे हि सत्त्वेऽभिव्यक्तिलिङ्गमस्येति सिध्यति। तद्बलाच्च सत्त्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः॥ सम्प्रतिपन्नयाभिव्यक्त्या विप्रतिपन्नं सत्त्वं साध्यते। तन्नान्योन्याश्रयत्वमिति परिहरति। अभिव्यक्तिरिति॥ कथं तर्हि दृष्टानुमानयोरन्यत्वमित्याशङ्क्य प्रथमं व्याप्तिमाह। यद्धीति। यस्याभिव्यज्यमानस्य प्रागभिव्यक्तेरस्ति। यथा तमोऽन्तःस्थं घटादीत्यर्थः॥ सम्प्रत्यनुमिनोति। तथेति। विमतं प्रागभिव्यक्तेः सदभिव्यक्तिविषयत्वात्सम्प्रतिपन्नवदित्यर्थः। ननु तमोऽन्तःस्थो घटोऽभिव्यञ्जकसामीप्यादभिव्यज्यते न तत्र प्राक्कालीनं सत्त्वं प्रयोजकमित्याशङ्क्याह। न हीति॥ उक्तेऽनुमाने कार्य्यस्य सदोपलब्धिप्रसङ्गं विपक्षे बाधकमाशङ्कते। नेत्यादिना। उक्तानुमाननिषेधो नञर्थः। अविद्यमानत्वाभावादिति छेदः॥ अनुमाने बाधकोपन्यासं विवृणोति। न हीति। वर्त्तमानवदतीतमागामि घटादि सदेव चेदुपलब्धिसामग्र्यां सत्यां तद्वत्प्रागजनेर्नाशाच्चोर्द्ध्वमुपलभ्येत। न चैवमुपलभ्यते। तस्मादयुक्तं कार्य्यस्य सदासत्त्वमित्यर्थः। मृत्पिण्डग्रहणं विरोधिकार्य्यान्तरोपलक्षणार्थं। असन्निहिते सतीति छेदः। न तावद्विद्यमानत्वमात्रं कार्य्यस्य सदोपलम्भापादकं। सतोऽपि घटादेरभिव्यक्त्यनभिव्यक्त्योरुपलब्धत्वादिति समाधत्ते। नेति॥ अभिव्यक्तिसामग्रीसत्त्वन्त्वभिव्यक्तिसाधकं। न तु सततसामग्रीनियमोऽस्तीत्यभिप्रेत्याह। द्विविधत्वादिति॥

भा॰ त । द्विविधत्वाच्चावरणस्य ॥ घटादिकार्य्यस्य द्विविधं ह्यावरणं मृदादेरभिव्यक्तस्य तमःकुड्यादि प्राङ्मृदोऽभिव्यक्तेर्मृदाद्यवयवानां पिण्डादिकार्य्यान्तररूपेण संस्थानं । तस्मात् प्रागुत्पत्तेर्विद्यमानस्यैव घटादिकार्य्यस्यावृतत्वादनुपलब्धिः ॥ नष्टोत्पन्नभावाभावशब्दप्रत्ययभेदस्त्वभिव्यक्तितिरोभावयोर्द्विविधत्वापेक्षः । पिण्डकपालादेरावरणत्वेऽनवस्थानादयुक्तमिति चेत् । तमःकुड्यादिर्हि घटाद्यावरणं घटादिभिन्नदेशं दृष्टं न तथा घटादिभिन्नदेशे दृष्टे पिण्डकपाले । तस्मात्पिण्डकपालसंस्थानयोर्विद्यमानस्यैव

---

व्या॰ उत्पन्नस्य कुड्याद्यावरणं अनुत्पन्नस्य विभिन्नं कारणमिति द्वैविध्यमेव प्रतिज्ञापूर्व्वकं साधयति। घटादीति। यदोपलभ्यमानका*रणावयवानां कार्य्यान्तराकारेण स्थितिस्तदा नेदं कार्य्यमुपलभ्यते। तथान्यथा चोपलभ्यत इत्यन्वयव्यतिरेकसिद्धकारणस्य कार्य्यान्तररूपेण स्थितस्य कार्य्यावरणत्वमिति द्रष्टव्यं॥ विभिन्नस्य कारणस्यावरणत्वसिद्धौ सिद्धमर्थमाह । तस्मादिति ॥ प्राक् कार्य्यास्तित्वे सिद्धे सदा तदुपलब्धिप्रसङ्गबाधकं निराकृत्य नष्टो घटो नास्तीत्यादिप्रयोगप्रत्ययभेदानुपपत्तिं बाधकान्तरमाशङ्क्याह। नष्टेति। कपालादिना तिरोभावे नष्टव्यवहारः पिण्डाद्यावरणभङ्गेनाभिव्यक्तावुत्पन्नव्यवहारो दीपादिना तमोनिरासेनाभिव्यक्तौ भावव्यवहारः। पिण्डादिना तिरोभावेऽभावव्यवहारः। तदेवं कार्य्यस्य सदा सत्वेऽपि प्रयोगप्रत्ययभेदसिद्धिरित्यर्थः ॥ पिण्डादि न घटाद्यावरणं तेन समानदेशत्वात्। यद्यस्यावरणं न तत्तेन समानदेशं। यथा कुड्यादीति शङ्कते। पिण्डेति ॥ व्यतिरेक्यनुमानं विरोधयति। तम इत्यादिना॥ अनुमानफलं निगमयति।

---

*कार्य्यावयवानामितिपाठान्तरः।

भा० घटस्यावृतत्वादनुपलब्धिरित्ययुक्तमावरणघटयोरैकदेश्यादि-ति चेत्।

न। क्षीरोदकादेः क्षीराद्यावरणेनैकदेशत्वदर्शनात्॥ घटादिकार्ये कपालचूर्णाद्यवयवानामन्तर्भावादनावरणत्व-मिति चेत्। न। विभक्तानां कार्यान्तरत्वादावरणत्वोपपत्ते-रावरणाभाव एव यत्नः कर्त्तव्य इति चेत् पिण्डकपालावस्थ-योर्विद्यमानमेव घटादिकार्यमावृतत्वान्नोपलभ्यत इति चेत्। घटादिकार्यार्थिना तदावरणविनाशे एव यत्नः कर्त्तव्यो न घटाद्युत्पत्तौ। न चैतदस्ति तस्मादयुक्तं विद्यमानस्यैवावृत-त्वादनुपलब्धिरिति चेत्। न। अनियमात्॥ न हि विना-शमात्रप्रयत्नादेव घटाद्यभिव्यक्तिर्नियता तमआद्यावृते

---

आ० तस्मादिति। किमिदं समानदेशत्वं किमेकाश्रयत्वं किं वैककारण-त्वमिति विकल्प्याद्यं विरुद्धत्वेन दूषयति। नेत्यादिना।

क्षीरेण सङ्कीर्णस्योदकादेराव्रियमाणस्येति यावत्। द्वितीयमु-त्थापयति*। घटादीति। यस्येदं कार्यं तस्मिन्मृदात्मनि तेषा-मवस्थानात्तदवयवानामनावरणत्वमित्यर्थः। घटावस्थायामपि कपालादेर्घटेनावरणत्वमिष्टमेवेति सिद्धसाधनता*। अथवा घ-टावस्थसंवृत्तिकपालादेरनावरणत्वसाधने हेत्वसिद्धिः। घटस्य कपालादेश्चावयवावयविभेदादिति दूषयति। न विभक्तानां-मिति। विद्यमानस्यैवावृतत्वादनुपलब्धिश्चेदावरणतिरस्कारे यत्नः स्यात्। न घटादेरुत्पत्तौ। अतोऽनुभवविरोधः सत्कार्यवादिनः स्यादित्याशङ्कते। आवरणेति। तदेव प्रपञ्चयति। पिण्डेति। यत्रा-कृतं वस्तु काङ्क्ष्यते तदावरणभङ्ग एव यत्न इति व्याप्त्यभावान्नानु-भवविरोधोऽस्तीति दूषयति। नानियमादिति। अनियमं

---

* उपपादयतीति पाठान्तरः।    * सिद्धसाधनतेति पाठान्तरः।

भा॰ घटादौ प्रदीपाद्युत्पत्तौ प्रयत्नदर्शनात् ॥ सोऽपि तमोनाशार्थैवेति चेत् दीपाद्युत्पत्तावपि यः प्रयत्नः सोऽपि तमस्तिरस्करणाय । तस्मिन्नष्टे घटः स्वयमेवोपलभ्यते ॥ न हि घटे किञ्चिदाधीयत इति चेत् । न । प्रकाशवतो घटस्योपलभ्यमानत्वात् । यथा प्रकाशविशिष्टो घट उपलभ्यते प्रदीपकरणे । न तथा प्राक् प्रदीपकरणात् । तस्मात् न तमस्तिरस्कारार्थैव प्रदीपकरणं । किन्तर्हि प्रकाशवत्त्वाय । प्रकाशवत्त्वेनैवोपलभ्यमानत्वात् ॥

क्वचिदावरणविनाशेऽपि यत्नः स्यात् यथा कुड्यादिविनाशे । तस्मान्न नियमोऽस्ति । अभिव्यक्त्यर्थिनावरणविनाश एव यत्नः कार्य्य इति । नियमार्थवत्त्वाच्च ॥ कारणे वर्त्तमानं कार्य्यं कार्य्यान्तराणामावरणमित्यवोचाम । तच यदि पूर्व्वाभिव्यक्तस्य कार्य्यस्य पिण्डस्य व्यवहितस्य वा

---

आ॰ साधयति । न हीति । तमसावृते घटादौ दीपोत्पत्तौ यत्नोऽस्तीत्यत्र चोदयति । सोऽपीति ॥ अनुभवविरोधमाशङ्क्योक्तमेव व्यनक्ति । दीपादीति ॥ दीपस्तमस्तिरयति चेत् कथं कुम्भोपलब्धिरत आह । तस्मिन्निति ॥ तत्र हेतुमाह । न हीति ॥ अनुभवमनुसृत्य परिहरति । नेत्यादिना ॥ किमिदानीमावरणभङ्गे प्रयत्नो नेत्येव नियमोऽस्तु नेत्याह । क्वचिदिति ॥

अनियमन्निगमयन्ननुभवविरोधाभावमुपसंहरति । तस्मादिति ॥ क्रियाभिव्यञ्जकव्यापारे सति नियमेन घटो व्यज्यते । तदभावे नेत्यन्वयव्यतिरेकावधारितो घटार्थः कुलालादिव्यापारः । तस्यार्थवत्त्वार्थमभिव्यक्त्यर्थ एव प्रयत्नो वक्तव्यः । आवरणभङ्गस्त्वार्थिक इत्याह । नियमेति ॥ उक्तं कारयन्नेतदेव विवृणोति । कारण इत्यादिना ॥ आवृत्तिभङ्गार्थे यत्ने यतो घटानुपलब्धि-

भा॰ कपालस्य विनाश एव यत्नः क्रियेत। तदा विदलचूर्णा-
द्यपि कार्य्यं जायेत। तेनाप्यावृतो घटो नोपलभ्यत इति
पुनः प्रयत्नान्तरापेक्षैव। तस्मादृष्टाद्यभिव्यक्त्यर्थिनो नियत
एव कारकव्यापारोऽर्थवान्। तस्मात् प्रागुत्पत्तेरपि सदेव
कार्य्यं अतीतानागतप्रत्ययभेदाच्च॥ अतीतो घटोऽनागतो
घट इत्येतयोश्च प्रत्यययोर्वर्त्तमानघटप्रत्ययवन्न निर्विष-
यत्वं युक्तं। अनागतार्थिप्रवृत्तेश्च। न ह्यसत्यर्थितया प्रवृत्ति-
र्लोके दृष्टा। योगिनां चातीतानागतज्ञानस्य स*त्यत्वा-
दसंश्चेद्भविष्यद्घट ऐश्वरञ्च भविष्यद्घटविषयं प्रत्यक्षज्ञानं मिथ्या

---

व्या॰ एतस्यानुपलब्ध्यर्थत्वेन नियतः सन् यत्नः सफलः स्यादिति पचि-
समाह। तस्मादिति। प्रकृतमभिव्यक्तिलिङ्गकमनुमानं निर्दोष-
त्वादादेयं मन्वानस्तत्पक्षमुपसंहरति। तस्मात् प्रागिति। कार्य्यस्य
सत्त्वे युक्त्यन्तरमाह। अतीतेति। विमतं सदर्थं सप्रमाणत्वात्
सम्प्रतिपन्नवदित्यर्थः। तदेवानुमानं विशदयति। अतीत इति।
अत्रैवोपपत्त्यन्तरमाह। अनागतेति। आगामिनि घटे तदर्थि-
त्वेन लोके प्रवृत्तिर्दृष्टा। न चात्यन्तासति सा युक्ता। तेन तस्या-
सद्विलक्षणतेत्यर्थः। किञ्च योगिनामीशस्य चातीतादिविषयं
प्रत्यक्षज्ञानमिष्टं। तच्च विद्यमानोपलम्भनं। अतो घटस्य सदा-
सत्त्वमित्याह। योगिनाञ्चेति। ईश्वरसमुच्चयार्थश्चकारः। भवि-
ष्यद्घटस्यमतीतोपलक्षणार्थमैश्वरं योगिनाञ्चेति द्रष्टव्यं। प्रसङ्ग-
स्येष्टत्वमाशङ्क्याह। न चेति। अधिकबलं हि बाधकं। न चानतिप्र-
यादैशादिज्ञानादधिकबलं ज्ञानन्दृष्टं। अतो बाधकाभावान्नत-
न्मिथ्येत्यर्थः। तस्य सम्यक्त्वेऽपि पूर्व्वोत्तरकालयोरसद्घटवि-
षयत्वं किमस्यादित्याशङ्क्याह। घटेति। पूर्व्वोत्तरयोः कालयो-

---

* सत्यविषयत्वादितिपाठान्तरः।

भा॰ स्यात् । न च प्रत्यक्षमुपपद्यते । घटसद्भावे ह्यनुमानमबो-
धाय । विप्रतिषेधाच्च ॥

यदि घटो भविष्यतीति कुलालादिषु व्याप्रियमाणेषु घटार्थं प्रमाणेन निश्चितं । येन च कालेन घटस्य सम्बन्धो भविष्यतीत्युच्यते तस्मिन्नेव काले घटोऽसन्निति विप्रतिषिद्धमभिधीयते । भविष्यन् घटोऽसन्निति न भविष्यतीत्यर्थः । अयं घटो न वर्त्तत इति यद्वत् । अथ प्रागुत्पत्तेर्घटोऽसन्नित्युच्येत घटार्थं प्रवृत्तेषु कुलालादिषु तच्च यथा व्यापाररूपेण वर्त्तमानास्तावत् कुलालादयस्तथा

---

आ॰ रिति शेषः ॥ घटस्य प्रागसत्त्वाभावे हेत्वन्तरमाह । विप्रति-
षेधादिति ॥

स हि कारकव्यापारदशायामसन्निति योऽर्थः किन्तस्य भविष्यत्त्वादि तदा नास्ति किं वार्थक्रियासामर्थ्यं । आद्ये व्याहतिं साधयति । यदीति । घटार्थं कुलालादिषु व्याप्रियमाणेषु सत्सु घटो भविष्यतीति प्रमाणेन निश्चितश्चेत् कथन्तद्विरुद्धं प्रागसत्त्वमुच्यते । कारकव्यापारावच्छिन्नेन हि कालेन घटस्य भविष्यत्त्वेनातीतत्वेन वा भविष्यत्यभूदिति सम्बन्धो विवक्ष्यते । तथाच तस्मिन्नेव काले घटस्य तथाविधसत्त्वनिषेधे व्याहतिरतिस्फुटेत्यर्थः ॥ तामेवाभिनयति । भविष्यन्निति । यो हि कारकव्यापारदशायां भविष्यत्त्वादिरूपेणास्ति, स यदा नास्तीत्युक्ते तस्य तस्यामवस्थायां तेनाकारेणासत्त्वमर्थो भवति । तथाच घटो यदा येनाकारेणास्ति स तदाकारेण नास्तीति व्याहतिरित्यर्थः ॥ द्वितीयमुत्थापयति । अथेति ॥ प्रागुत्पत्तेर्घटार्थं कुलालादिषु प्रवृत्तेषु असावसन्नित्यसच्छब्दार्थं स्वयमेव विवेचयति । तत्रेत्यादिना ॥ तत्र सिद्धान्ती ब्रूते । न विरुध्यत इति ॥ कथम्पुनः सत्कार्य्यवादिनस्तदसत्त्वमविरुद्धमित्याह । कस्मादिति ॥ प्रागुत्पत्तेस्तु यस्यार्थक्रियारूपं सत्त्वं घटस्य सिसाधयिषितं, तच्चेद्भवानपि तस्य सदा-

भा॰ घटो न वर्त्तत इत्ययमप्यस्यार्थस्तेन विरुध्यते कस्मात् तेन हि भविष्यद्रूपेण घटो वर्त्तते। न हि पिण्डस्य वर्त्तमानता कपालस्य वा घटस्य भवति। न च तयोर्भविष्यत्ता घटस्य। तस्मात् कुलालादिव्यापारवर्त्तमानतायां प्रागुत्पत्तेर्घटो ऽसन्निति न विरुध्यते। यदि घटस्य यत्तद्भविष्यत्ताकार्य्य-रूपं तत् प्रतिषिध्येत। तत्प्रतिषेधे विरोधः स्यात्। न तु तद्भवान् प्रतिषेधति॥

न च सर्व्वेषां क्रियावतामेकैव वर्त्तमानता भविष्यत्त्वं वा। अपि च चतुर्विधानामभावानां घटस्येतरेतराभावो घटादन्यो दृष्टो यथा घटाभावः पटादिरेव न घट-

---

चा॰ तमनर्थक्रियासामर्थ्यं निषेधमनुमन्यते नावयोर्विप्रतिपत्तिरित्यभिप्रेत्याह। तेन हीति। ननु त्वन्मते सर्व्वस्य स्वकारणता-विशेषात् पिण्डादेर्वर्त्तमानता घटस्य स्यात्। तस्य चातीतता भविष्यत्ता च पिण्डकपालयोः स्यादिति चाशङ्क्यमाशङ्क्याह। न हीति। व्यवहारदशायां यथा प्रतिभासमनिर्वाच्य संख्यानभेदाश्रयणादि-त्यर्थः। प्रागवस्थायां घटस्यार्थक्रियासामर्थ्यलक्षणसत्त्वनिषेधे विरोधाभावमुपपादितमुपसंहरति। तस्मादिति। उक्तमेव व्यतिरेकद्वारा विवृणोति। यदीत्यादिना। यदा कारकाणि व्याप्रियन्ते तदा घटोऽसन्निति तस्य भविष्यत्त्वादिरूपं तत्काले निषिध्यते चेदुक्तविधया व्याघातः स्यात्। न च तस्य तस्मिन् काले भविष्यत्त्वादिरूपं सत्त्वं निषिध्यते। अर्थक्रियासामर्थ्यस्यैव निषे-धात् तत्र विरोधावकाशोऽस्तीत्यर्थः।

न हि पिण्डस्येत्यादिना चाशङ्क्यसमाधिवाक्यमिदानीं सर्व्व-तन्त्रसिद्धान्ततया स्फुटयति। न चेति। भविष्यत्त्वमतीतत्वञ्चेति शेषः। कार्य्यस्य प्रागुत्पत्तेर्नाशाच्चोर्द्ध्वमसत्त्वाभावे हेत्वन्तरमाह। अपि चेति। तदेवानुमानतया स्पष्टयितुं दृष्टान्तं साधयति।

भा॰ स्वरूपमेव । न च घटाभावः सन् पटोऽभावात्मकः किन्तर्हि भावरूप एव । एवं घटस्य प्राक्प्रध्वंसात्यन्ताभावानामपि घटादन्यत्वं स्यात् । घटेन व्यपदिश्यमानत्वात् घटस्येतरेतराभाववत् । तथैव भावात्मकता अभावानां । एवञ्च सति घटस्य प्रागभाव इति न घटस्वरूपमेव प्रागुत्पत्तेर्नास्ति । अथ घटस्य प्रागभाव इति घटस्य यत् स्वरूपं तदेवोच्येत । घटस्येति व्यपदेशानुपपत्तिः । अथ कल्पयित्वा व्यपदिश्येत शिलापुत्रकस्य शरीरमिति यद्वत् । तथापि

---

आ॰ चतुर्विधानामिति । षष्ठी निर्धारणे । घटान्योन्याभावः पटादन्यत्वे तत्राप्यन्योन्याभावान्तराङ्गीकारादनवस्थेत्याशङ्क्याह । इष्ट इति । न यौक्तिकमन्यत्वं किन्तु घटो न भवति पट इति प्रातीतिकं । तथाच घटाभावः पटादिरेवेति । पटादेस्ततोऽन्यत्वात् घटान्योन्याभावस्यापि घटादन्यत्वसिद्धिरित्यर्थः ॥ ननु घटाभावः पटादिरित्ययुक्तं । विशेषणत्वेन घटस्यापि पटादावन्तर्भावप्रसङ्गादिति चेन्नैवं इष्टपदेन निराकृतत्वात् । घटाभावस्य पटादित्वाभावेऽपि न स्वातन्त्र्यं । अभावत्वविरोधात् । नापि तदन्योन्याभावः पटादेर्धर्म्मः संसर्गाभावान्तर्भावापातात् । न च स घटस्यैव धर्म्मः स्वरूपं वा घटः । घटो न भवतीति प्रतीत्यभावादित्यभिप्रेत्याह । न घटस्वरूपमेवेति ॥ यदि प्रतीतिमाश्रित्य घटान्योन्याभावः पटादिरिष्यते तदा पटादेर्भावस्याभावत्वविधानाद्व्याघात इत्याशङ्क्याह । न चेति । स्वरूपपररूपाभ्यां सर्व्वं सदसदात्मकमिति हि वृद्धाः । तथाच पटादेः स्वेनात्मनाभावत्वं घटतादात्म्याभावात्तदभावत्वञ्चेत्यव्याहतिरित्यर्थः ॥ सिद्धे प्रतीत्यनुसारिणि दृष्टान्ते विवक्षितमनुमानमाह । एवमिति ॥ किञ्च तेषामभावानां घटाद्भिन्नत्वात्पटवदेव सत्त्वमेष्टव्यमित्यनुमानान्तरमाह । तथेति । अनुमानफलं कथयति । एवञ्चेति । तेषां घटादन्यत्वे तस्यानाद्यनन्तत्वमद्वयत्वं

भा० घटस्य प्रागभाव इति कल्पितस्यैवाभावस्य घटेन व्यपदेशो न घटस्वरूपस्यैव ॥

अथार्थान्तरं घटाद्घटस्याभाव इत्युक्तोत्तरमेतत्। कि-ञ्चान्यत्प्रागुत्पत्तेः शशविषाणवदभावभूतस्य घटस्य स्वका-रणसत्तासम्बन्धानुपपत्तिः। द्विनिष्ठत्वात् सम्बन्धस्यायुत-सिद्धानामदोष इति चेत्। न। भावाभावयोरयुतसिद्ध-त्वानुपपत्तेः। भावभूतयोर्हि युतसिद्धताऽयुतसिद्धता वा

---

व्या० सर्व्वात्मत्वञ्च प्राप्नोति। सत्त्वे च तेषामभावानामभावाच्च भावा-भावयो र्मिथः सङ्करिरित्यर्थः॥ ननु प्रसिद्धोऽभावो भाववदध्य-क्षोऽपह्नोतुमिति चेत् स तर्हि घटस्य स्वरूपमर्थान्तरं वेति विक-ल्पाद्यमनूद्य दूषयति। अथेत्यादिना॥ प्रागभावादेर्घटत्वेऽपि सम्बन्धं कल्पयित्वा घटस्येत्युक्तिरिति प्राप्ते। अथेति॥ सम्बन्धस्य कल्पितत्वे सम्बन्धिनोऽप्यभावस्य तथात्वं स्यादिति दूषयति। तथापीति। यत्र सम्बन्धं कल्पयित्वा व्यपदेशस्तत्र न वास्तवो भेदो यथा राहोश्शिरसस्तथात्रापि विकल्पिते सम्बन्धे भेदस्य तथात्वाद्वास्तवत्वं सम्बन्धिनोरन्यतरस्य स्यात्। न चाभावस्तथा सापेक्षत्वादतो घटस्तथेत्यर्थः। कल्पान्तरमनुवदति। अथेति।

अनुमानपक्षं वदद्भिर्घटस्य कारणात्मना ध्रुवत्ववचनेन समा-हितमेतदित्याह। उक्तोत्तरमिति॥ असत्कार्य्यवादे दोषान्तर-माह। किञ्चेति। स्वहेतुसम्बन्धः सत्तासम्बन्धो वा जन्मेति तार्किकाः। न च प्रागुत्पत्तेरसतः सम्बन्धस्तस्य सतोर्द्वयोरित्यर्थः॥ युतसिद्धयोरज्जुघटयोर्मिथःसंयोगे पृथक्सिद्धिरपेक्ष्यते। अयुत-सिद्धानां परस्परपरिहारेण प्रतीत्यनर्हाणां कार्य्यकारणादीनां मिथोयोगे पृथक्सिद्ध्यभावो न दोषमावहतीति प्राप्ते। अयुतेति॥ परिहरति। नेति॥ उक्तमेव स्फोटयति। भावेति॥ व्यवहारदृष्ट्या कार्य्यकारणयोः साधितान्तु कथावृत्तिमुपसंहरति। तस्मादिति॥

नैवेहेत्यत्र सर्व्वस्य प्रागुत्पत्तेरसत्त्वश्रुतिर्मृत्युनेत्यादिवाक्यव्या-ख्यानेन निरस्ता। सम्प्रति मृत्युशब्दस्यार्थान्तरे रूढत्वान्न तेनावरण

उ॰ अशनाययाशनाया हि मृत्युस्तन्मनोऽकुरुता-
त्मन्वी स्यामिति ।

---

भा॰ स्यान्न तु भावाभावयोरभावयोर्वा तस्मात् सदेव कार्यं प्रागुत्पत्तेरिति सिद्धं । किंलक्षणेन मृत्युनावृतमित्यत आह ।

अशनायया अशितुमिच्छा अशनाया सैव मृत्युः सा हि मृत्योर्लक्षणं । तया लक्षितेन मृत्युनाशनायया । कथमशनाया मृत्युरिति । उच्यते ॥ अशनाया हि मृत्युः । हि शब्देन प्रसिद्धं हेतुमवद्योतयति । यो ह्यशितुमिच्छति सोऽशनायानन्तरमेव हन्ति जन्तून् । तेनासावशनायया लक्ष्यते मृत्युरिति । अशनाया हीत्याह । बुद्ध्यात्मनोऽशनाया धर्म इति स एष बुद्ध्यवस्थो हिरण्यगर्भो मृत्युरित्युच्यते । तेन मृत्युनेदं कार्य्यमावृतमासीत् । यथा

---

आ॰ जगतः सम्भवतीत्याक्षिपति । किंलक्षणेनेति ॥ अनभिव्यक्तनामरूपमध्यक्षाद्ययोग्यमपञ्चीकृतपञ्चमहाभूतावस्थातिरिक्तं मायारूपं साभासं मृत्युरित्युच्यते । न हि सर्व्वं कार्य्यमवान्तरकारणादुत्पत्तुमर्हतीत्यभिप्रेत्याह । अत आहेति ॥

कथं यथोक्तो मृत्युरशनायया लक्ष्यते । न हि मूलकारणस्याशनायादिमत्त्वं । अशनायापिपासे प्राणस्येति स्थितेरिति शङ्कते । कथमिति ॥ मूलकारणस्यैव सूत्रत्वं प्राप्तस्य सर्व्वसंहर्तृत्वान्मृत्युत्वे सति वाक्यशेषोपपत्तिरिति परिहरति । उच्यत इति ॥ प्रसिद्धमेव प्रकटयति । यो हीति ॥ तथापि प्रसिद्धं मृत्युं हित्वा कथं हिरण्यगर्भोपादानमत आह । बुद्ध्यात्मन इति । उक्तं हेतुं कृत्वा फलितमाह । इति स इति ॥ ननु न तेन जगदाव्रियते मूलकारणेनैव तदावरणात् । तत् कथं वाक्योपक्रमोपपत्तिरत

उ॰ सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे-

---

भा॰ पिण्डावस्थया मृदा घटादय आवृताः स्युरिति तद्वत् । तन्मनोऽकुरुत ॥ तदिति मनसो निर्देशः । स प्रकृतो मृत्युर्वक्ष्यमाणकार्यसिसृक्षया तत्कार्यालोचनक्षमं मनः-शब्दवाच्यं सङ्कल्पादिलक्षणमन्तःकरणमकुरुत कृतवान् । केनाभिप्रायेण मनोऽकरोदित्युच्यते आत्मन्वी आत्मवा-निति सिद्धव्यत्ययेन स्यां भवेयं । अहमनेनात्मना मनसा मनस्वी स्यामित्यभिप्रायः ॥

स प्रजापतिरभिव्यक्तेन मनसा समनस्कः सन्नर्चन्-र्चयन् पूजयन्नात्मानमेव कृतार्थोऽस्मीत्यचरच्चरणमक-रोत् । तस्य प्रजापतेरर्चतः पूजयत आपो रसात्मिकाः पूजाङ्गभूता अजायन्त उत्पन्नाः । अत्राकाशप्रभृतीना-

---

आ॰ आह । तेनेति । ननु हिरण्यगर्भे प्रकृते कथं तच्छब्दे नपुंसक-प्रयोगस्तत्राह । तदिति । मनस इति वाक्यार्थमधुना कथ-यति स प्रकृत इति । भूतसृष्टिव्यतिरेकेण भौतिकस्य मनसः सृष्टि-रयुक्तेति मत्वा पृच्छति । केनेति । अपञ्चीकृतानां हिरण्य-गर्भादिभूतानां प्रागेव सत्त्वात्मकत्वात्तेभ्यो मनोव्यक्तिरविरुद्धे-ति मन्वानो ब्रूते । उच्यत इति । आत्मन्वत्त्वस्य स्वाभाविकत्वान्न तदाशंसनीयमित्याशङ्क्य वाक्यार्थमाह । अहमिति । मनसो व्यक्तस्योपयोगमाह । स प्रजापतिरिति ।

ननु तैत्तिरीयशाखायामाकाशादिसृष्टिरुच्यते अत्र कथमिहा-पामादौ सृष्टिवचनं तत्राह । अत्रेति । आत्मना हिरण्यगर्भ-कर्तृकसर्गोक्तिः । त्रयाणामपञ्चीकृतानामिति यावत् । नन्वाका-शाद्या तैत्तिरीये सृष्टिः । इह त्वबाद्येति । उदितानुदित-

उ॰ कमभूदिति तदेवार्क्यस्यार्कत्वं । कं ह वा अस्मै भवति य एवमेतदर्क्यस्यार्कत्वं वेद ।१।

---

भा॰ यथाश्रुत्यन्तरमिति वक्तव्यं श्रुत्यन्तरसामर्थ्यात् विकल्पासम्भवाच्च सृष्टिक्रमस्य॥ अर्चते पूजां कुर्व्वते वै मे मह्यं कमुदकमभूदित्येवममन्यत । यस्मान्मृत्युस्तदेव तस्मादेव हेतोरर्क्यस्यार्कस्याग्नेरश्वमेधक्रतूपयोगिकस्यार्कत्वमर्कत्वे हेतुरित्यर्थः । अग्नेरर्कनामनिर्वचनमेतत् । अर्चनात्सुखहेतुपूजाकरणात्सम्बन्धाच्चाग्नेरेतद्गौणं नामार्क इति । य एवं यथोक्तमर्कस्यार्कत्वं वेद जानाति कमुदकं सुखं वा नामसामान्यात् । ह वा इत्यवधारणार्थौ भवत्येवेति । अस्मै एवंविदे एवंविदर्थं भवति ॥ १ ॥

---

आ॰ होमवदिहविकल्पो भविष्यति नेत्याह । विकल्पेति । पुरुषतन्त्रत्वात् क्रियाया युक्तो विकल्पः । सिद्धेऽर्थे तु पुरुषानधीने नासौ सम्भवति । अतः सृष्टिर्विवक्षिता भेदाभावाद्धैव सा युक्ता । अविद्याप्रधानत्वात्तु नादरः कल्पाविति भावः । अपां च सृष्टिवचनमनुपयुक्तं । न कसुखाभिरेव पूजा सिद्ध्यतीत्याशङ्क्याश्वमेधिकाग्नेरर्कनामसिद्ध्यर्थं तदुपयोगमुपन्यस्यति । अर्चत इति । कोऽसौ हेतुरित्यपेक्षायामर्चतिपदावयवस्यार्कशब्देन सङ्गतिरिति मन्वानः सन्नाह । अर्कत्वमिति । एवं मृत्योरर्कत्वेऽपि कथमग्नेरर्कत्वमित्याशङ्क्य मृत्युसम्बन्धादित्याह । अग्नेरिति । किमर्थमग्नेरर्कनामनिर्वचनमित्याशङ्क्यापूर्व्वक्रियायोगस्य फलान्तराभावादुपासनार्थमित्याह । अग्नेरिति । निर्वचनमेव स्फोरयति । अर्चनादिति । फलवत्त्वाच्च यथोक्तनामवतोऽग्नेरुपास्तिरत्र विवक्षितेत्याह । य एवमिति ॥ १ ॥

I 2.2.

उ॰ आपो वा अर्कस्तद्यदपां शर आसीत्तत्समहन्यत। सा पृथिव्यभवत्तस्यामश्राम्यत् तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्त्तताग्निः॥ २॥

---

भा॰ आपो वा अर्कः। कः पुनरसावर्क इत्युच्यते। आपो वा या अर्चनाङ्गभूतास्ता एवार्कोऽग्नेरर्कस्य हेतुत्वात्। अप्सु चाग्निः प्रतिष्ठित इति। न पुनः साक्षादेवार्कस्ताः। तासामप्रकरणादग्नेश्च प्रकरणं। वक्ष्यति चायमग्निरर्क इति। तत्तत्र यदपां शर इव शरो दध्न इव मण्डभूतमासीत् तत् समहन्यत संघातमापद्यत॥ तेजसा बाह्यान्तःपच्यमानं लिङ्गव्यत्ययेन वा योऽपां शरः स समहन्यतेति सा पृथिव्यभवत् स संघातो येयं पृथिवी साऽभवत्। ताभ्यो ऽद्भ्योऽण्डमभिनिर्वृत्तमित्यर्थः। तस्यां पृथिव्यामुत्पादितायां स मृत्युः प्रजापतिरश्राम्यच्छ्रमयुक्तो बभूव। सर्वो हि

---

आ॰ अपामर्कत्वमयुक्तं नाग्नेरर्कत्वमिति पृच्छति। कः पुनरिति। प्रकरणमाश्रित्य तासामर्कत्वमौपचारिकमित्युत्तरमाह। उच्यत इति। तास्वर्चतेरयमर्कं सम्भूवेति श्रुतिमनुसृत्योपचारहेत्वन्तरमाह। अप्सु चेति। मुख्यमर्कत्वमपां वारयति। न पुनरिति। ननु श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् प्रकरणादापो वा अर्क इति वाक्यं बलवदित्याशङ्क्य वाक्यसहकृतं प्रकरणमेव केवलवाक्याद्बलवदित्यभिप्रायवानाह। वक्ष्यति चेति। भूतान्तरसहितास्वप्सु कारणभूतासु पृथिवीद्वारा पार्थिवोऽग्निः प्रतिष्ठित इत्युक्तमिदानीम्पृथिवीसर्गमद्भ्यो दर्शयति। तदित्यादिना। अप्सु भूतान्तरसहितासूत्पन्नासु सतीष्विति सप्तम्यर्थः। शर इव शर इत्युक्तमेव व्याचष्टे। दध्न इवेति। सङ्घाते सहकारिकारणमाह। तेज-

उ॰ स त्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृती-

भा॰ लोकः कार्यं कृत्वा श्राम्यति। प्रजापतेश्च तन्महत् कार्यं यत् पृथिवीसर्गः किन्तस्य श्रान्तस्येत्युच्यते। तस्य श्रान्तस्य सन्तप्तस्य खिन्नस्य तेजो रसस्तेज एव रसस्तेजोरसः सारो निरवर्त्तत प्रजापतिशरीरान्निष्क्रान्त इत्यर्थः। कोऽसौ निष्क्रान्तोऽग्निः सोऽण्डस्यान्तर्विराट् प्रजापतिः प्रथमजः कार्य्यकरणसङ्घातवान् जातः। स वै शरीरी प्रथम इति स्मरणात् ॥२॥

स च जातः प्रजापतिस्त्रेधा त्रिप्रकारमात्मानं स्वयमेव कार्य्यकरणसङ्घातं व्यकुरुत व्यभजदित्येतत् कथं त्रेधेत्याह। आदित्यं तृतीयमग्निवाय्वपेक्षया त्रयाणाम्पूरणमकुरुतेत्यनुवर्त्तते। अग्न्यादित्यापेक्षया वायुस्तृतीयं। तथा वा-

आ॰ सेति॥ यत्तदिति पदे नपुंसकत्वेन श्रुते कथन्तयोः शरशब्देन कारणस्योक्तत्वनलवाचिना पुंलिङ्गेनान्वयस्तत्राह। लिङ्गव्यत्ययेनेति। उक्तानुपपत्तिद्योतनार्थो वाशब्दो व्यत्ययेनान्वयमेवाभिनयति। योऽपामिति॥ वाक्यतात्पर्य्यमाह। ताश्च इति। सूत्रप्रपञ्चात्मकविराजः सूत्रप्रपञ्चात्मकसूत्रादुत्पत्तिं वक्तुं यातनिकामाह। तस्यामिति। उक्तोऽर्थे लोकप्रसिद्धिमनुकूलयति। सर्व्वो हीति॥ इदानीं विराडुत्पत्तिमुपदिशति। किन्तस्येत्यादिना॥ अग्निशब्दार्थं स्फुटयति। सोऽण्डस्येति॥ तस्य प्रथमशरीरित्वे मानमाह। स वा इति॥२॥

विराजो ध्यानार्थमवच्छेदभेदमाह। स चेति॥ कोऽस्य त्रेधाभावस्य कर्त्तेति विवक्षायामाह। स्वयमेवेति॥ कथमेकस्य त्रिधात्वमन्यथा कथमेकत्वमित्याह। कथमिति॥ मृदो घटशरावाद्यनेकरूपवत्त्ववद्विराजो बहुरूपत्वं साधयति। आहेत्यादिना॥ कथमग्निस्तृतीयमित्यश्रुतं कथ्यते तत्राह। सामर्थ्यस्येति। वाय्वादित्ययोरिवाग्नेरपि सङ्ख्यापूरकत्वशक्तेरविशिष्टत्वादग्निस्तृतीयम-

उ॰ य॥ ५ ॥ स एष प्राणस्त्रेधा विहितः। तस्य प्राची दिक् शिरोऽसौ चासौ चेर्म्मौ ॥

भा॰ आदित्यपेक्षयाग्निस्तृतीयमिति द्रष्टव्यं। सामर्थ्यस्य तुल्यत्वात् त्रयाणां सङ्ख्यापूरणत्वे। स एष प्राणः सर्व्वभूतानामग्निवाय्वादित्यरूपेण विशेषतः स्वेनैव मृत्य्वात्मना त्रेधा विहितो विभक्तो न विराट्स्वरूपोपमर्द्देन। तस्यास्य प्रथमजस्याग्नेरश्वमेधोपयोगिकस्यार्कस्य विराजश्चित्यात्मकस्याश्वस्येव दर्शनमुच्यते। सर्व्वा हि पूर्व्वोक्तोत्पत्तिरस्य स्तुत्यर्थेत्यवोचाम। इत्थमसौ शुद्धजन्मेति। तस्य प्राची दिक् शिरो विशिष्टत्वसामान्यात्। असौ चासौ च ऐशान्याग्नेय्यौ ईर्म्मौ बाहू। ईरयतेर्गतिकर्म्मणः।

आ॰ कुर्व्वतेत्युपसङ्ख्यायते स त्रेधात्मानमिति चोपक्रमादित्यर्थः ॥ ननु किमयं त्रेधा भावो विराट् स्वरूपोपमर्द्देन क्रियते। न हि स तस्मिन् सत्येव युक्तो विरोधादित्याह। स एष इति। यथा तन्त्ववस्थानुपमर्द्देन मूलकारणात् पटो जायते तथा सर्व्वेषां भूतानां प्राणतया साधारणोऽप्ययं स्वेनैव स्वतन्त्रेणानुगतेन मृत्युरूपेण त्रेधा विभागस्य कर्त्ता। न चैकस्य बहुरूपत्वविरोधो मायाविवदुपपत्तेरित्यर्थः ॥ तस्य प्राचीत्यादेस्तात्पर्य्यमाह। तस्येति। उक्तानि विशेषणानि प्रकरणाविच्छेदार्थमनूद्यन्ते ॥ अग्निविषयन्दर्शनमिदानीमुच्यते चेत् नैवेहेत्यादि पूर्व्वोक्तमनर्थकमित्याशङ्क्याह। सर्व्वा हीति ॥ स्तुतिमेवाभिनयति। इत्थमिति ॥ कर्म्मार्थेः संस्कर्त्तव्यत्वाच्चित्याग्निशिरसि प्राचीदृष्टिः कर्त्तव्येत्याह। तस्येति ॥ आरोपे सादृश्यमाह। विशिष्टत्वेति ॥ शिरसोऽनन्तरभावित्वाद्बाह्वोरैशान्यादिदृष्टिमाह। असौ चेति ॥ कथमीर्म्मशब्दो बाहुवाचीत्याशङ्क्य तद्व्युत्पत्तिमाह। ईरयतेरिति। गत्यर्थेर्योगादीर्म्मशब्दो बाहुमधिकरोतीत्यर्थः ॥

उ॰ अथास्य प्रतीची दिक् पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चेति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥

---

भा॰ अथास्याग्नेः प्रतीची दिक् पुच्छं जघन्यो भागः। प्राङ्मुखस्य प्रत्यग्दिक्सम्बन्धात्। असौ चासौ च वायव्यनैर्ऋत्यौ सक्थ्यौ सक्थिनी पृष्ठकोणत्वसामान्यात्। दक्षिणा चोदीची च पार्श्वे उभयदिक्सम्बन्धसामान्यात्। द्यौः पृष्ठमन्तरिक्षमुदरमिति पूर्व्ववत्। इयमुरः अधोभागसामान्यात्। स एषोऽग्निः प्रजापतिरूपो लोकाद्यात्मकोऽग्निरप्सु प्रतिष्ठितः। एवमिमे लोका अप्स्वन्तरिति श्रुतेः। यत्र क्व च यस्मिन् कस्मिंश्चिदेति गच्छति तदेव तत्रैव प्रतितिष्ठति

---

आ॰ तत्पुच्छादिषु प्रतीच्यादिदृष्टिरध्यस्यति। अथेत्यादिना। चित्यस्याग्नेः शिरसि बाह्वोः प्राच्यादिदृष्टिकरणानन्तरमित्यर्थः। सक्थिपदं पृष्ठनिष्ठोन्नतास्थिद्वयविषयं। उभयशब्देन प्राचीप्रतीचीद्वयं गृह्यते। उरसि पृथिवीदृष्टिमाह। इयमिति। उपास्यमुक्तमग्निमनुवदति। स एष इति। तस्योपासनार्थमेवाप्सु प्रतिष्ठितत्वं गुणमुपदिशति। अग्निरिति। भूतान्तरसहितानामपां सर्व्वलोकधारकत्वादग्रेर्लोकात्मकोऽग्निस्तत्र प्रतिष्ठितः सम्भवतीत्यत्र श्रुत्यन्तरं संवादयति। एवमिति। यथैतेषु लोकेषु सर्व्वं कार्य्यं प्रतिष्ठितं तथेति यावत्। लोकशब्देन स्थूलानां भूतानां सन्निवेशविशेषा गृह्यन्ते। अप्सु भूतान्तरसहितासु कारणभूतास्विति यावत्। फलश्रुतिं व्याचष्टे। यत्रेति।

उ॰ सोऽकामयत द्वितीयो म आत्मा जायेतेति

भा॰ स्थितिं लभते। कोऽसावेवं यथोक्तमप्सु प्रतिष्ठितत्वमग्नेर्विद्वान् विजानन् गुणफलमेतत्॥ २॥

सोऽकामयत योऽसौ मृत्युः सोऽवादिक्रमेणात्मनात्मानमण्डस्यान्तः कार्य्यकरणसङ्घातवन्तं विराजमग्निमसृजत स त्रेधा चात्मानमकुरुतेत्युक्तं। स किंव्यापारः सन्नसृजतेत्युच्यते। स मृत्युरकामयत कामितवान्। किं द्वितीयो मे ममात्मा शरीरं येनाहं शरीरी स्यां स जायेतोत्पद्येतेत्येवमेतदकामयत। स एवं कामयित्वा मनसा पूर्व्वोत्पन्नेन वाचं त्रयीलक्षणां मिथुनं द्वन्द्वभावं समभवत् सम्भवनं कृतवान् मनसा त्रयीमालोचितवान् त्रयीविहितं सृष्टिक्रमं मनसा ऽन्वालोचयदित्यर्थः॥ कोऽसावशनायया लक्षितो मृत्युः। अशनायालक्षणो मृत्युरित्युक्तं। तमेव परा-

आ॰ यथोपास्तिफलं अप पुनर्मृत्युञ्जयतीत्यादिना वक्ष्यते॥ किमिदमस्याने फलसङ्कीर्त्तनमत आह। गुणेति॥ २॥

उत्तरग्रन्थमवतार्य्य तस्य पूर्व्वग्रन्थेन सम्बन्धं वक्तुं वृत्तं कीर्त्तयति। सोऽकामयतेत्यादिना॥ अवान्तरव्यापारमन्तरेण कर्त्तृत्वानुपपत्तिरिति मत्वा पृच्छति। स किंव्यापार इति॥ कामनादिरूपमवान्तरव्यापारमुत्तरवाक्यावष्टम्भेन दर्शयति। उच्यत इति॥ कामनानार्थं मनःसंयोगमुपन्यस्यति॥ स एवमिति॥ कोऽयं मनसा सह वाचो द्वन्द्वभावस्तत्राह। मनसेति॥ वाक्यार्थमेव स्फुटयति। त्रयीविहितमिति॥ वेदोक्तसृष्टिक्रमालोचनं प्रजापतेर्नेदम्प्रथमं। संसारस्यानादित्वादिति वक्तुमनुशब्दः॥ सोऽकामयतेत्यादौ सर्व्वनाम्नोऽव्यवहितविराड्विषयत्वमाशङ्क्य परि-

उ॰ स मनसा वाचं मिथुनꣳ समभवत् अशनाया मृत्यु-
स्तद्यद्रेत आसीत्स संवत्सरोऽभवत्। न ह पुरा ततः
संवत्सर आस तमेतावन्तं कालमबिभः ।——

---

भा॰ न्तयत्यन्यत्र प्रसङ्गो मा भूदिति। तद्रेत आसीत्। तत्र तत्र
मिथुने यद्रेत आसीत्प्रथमशरीरिणः प्रजापतेरुत्पत्तौ का-
रणं रेतो बीजं ज्ञानकर्मरूपं त्रय्यालोचनायां यत् दृष्ट-
वानासीत्। जन्मान्तरकृतं तद्भावभावितोऽपः सृष्ट्वा तेन रे-
तसा बीजेनाप्स्वनुप्रविश्याण्डरूपेण गर्भीभूतः स संवत्सरोऽ
भवत् स संवत्सरकालनिर्माता संवत्सरः प्रजापतिरभवत्॥

न ह पुरा पूर्वं ततस्तस्मात्संवत्सरकालनिर्मातुः प्रजा-
पतेः संवत्सरः कालो नास ह न बभूव ह। तं संवत्सरकाल-
निर्मातारमन्तर्गर्भं प्रजापतिं यावानिह प्रसिद्धः काल

---

आ॰ हरति। कोऽसावित्यादिना॥ कथन्तया मृत्युरुच्यते तत्राह।
अशनायेति॥ किमिति तर्हि पुनरुक्तिरित्याशङ्क्याह। तमे-
वेति। अन्वयानन्तरप्रकृतेर्विराडात्मनीति यावत्॥ अवान्तर-
व्यापारान्तरमाह। *तदित्यादिना॥ प्रसिद्धं रेतो व्यावर्त्तयति।
ज्ञानेति॥ ननु प्रजापतेर्न ज्ञानं कर्म्म वा सम्भवति तत्रा-
नधिकारादित्याशङ्क्यासीदित्यस्य पदस्यार्थमाह। जन्मान्तरेति॥
वाक्यस्यापेक्षितं पूरयित्वा वाक्यान्तरमादाय व्याकरोति।
तद्भावेत्यादिना॥

ननु संवत्सरस्य प्रागेव प्रसिद्धत्वान्न प्रजापतेस्तन्निर्म्मातृत्वेन
तदात्मत्वमित्याशङ्क्योत्तरं वाक्यमुपादत्ते। न ह पुरेति॥ तस्या-

* तद्भावेत्यादिना॥

उ० यावान्त्संवत्सरस्तमेतावतः कालस्य परस्ताद-सृजत। तञ्जातमभिव्याददात् स भाणकरोत्सैव वागभवत्॥ ४ ॥

---

भा० एतावन्तमेतावत्संवत्सरपरिमाणं कालमबिभः भृतवान्। यावान् संवत्सर इह प्रसिद्धस्ततः परस्तात् किं कृतवान् तमेतावतः कालस्य संवत्सरमात्रस्य परस्तादूर्ध्वमसृजत सृष्टवान् अण्डमभिनदित्यर्थः। तमेवं कुमारञ्जातमग्निं प्रथमशरीरिणं अशनायावत्त्वान्मृत्युरभिव्याददान्मुखविदारणं कृतवानत्तुं। स च कुमारो भीतः स्वाभाविक्याऽविद्यया युक्तो भाणित्येवं शब्दमकरोत्। सैव वागभवद्वाक् शब्दोऽभवत्॥ ४ ॥

---

आ० षष्ठे। पूर्व्वमिति। प्रजापतेरादित्यात्मकत्वात्तदधीनत्वाच्च संवत्सरव्यवहारस्यादित्यात्पूर्व्वं व्यवहारो नासीदेवेत्यर्थः॥ कियन्तं कालमण्डरूपेण गर्भो बभूवेत्यपेक्षायामाह। तमित्यादिना॥ अवान्तरव्यापारमनेकविधमभिधाय विराडुत्पत्तिमाकाङ्क्षाद्वारोपसंहरति। यावानित्यादिना॥ कोयम्पूर्व्वमेव गर्भतया-विद्यमानस्य विराजः कल्पितमाह। अण्डमिति॥ विराडुत्पत्तिमुक्त्वा शब्दमात्रस्य सृष्टिं विवक्षुर्भूमिकां करोति। तमेवमिति॥ अयोग्येऽपि पुनर्भक्षणे प्रवर्त्तकन्दर्शयति। अशनायावत्त्वमिति॥ विराजो भयकारणमाह। स्वाभाविक्येति॥ इन्द्रियन्देवताञ्च व्यावर्त्तयति। वाक् शब्द इति॥ ४॥

---

उ० स ऐक्षत यदि वा इममभिमꣳस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदꣳ सर्व-

---

भा० स ऐक्षत स एवं भीतं कुमारं दृष्ट्वा मृत्युरैक्षत ईक्षितवान्। अशनायावानपि यदि कदाचिद्वै इमं कुमारमभिमंस्ये। अभिपूर्वो मन्यतिर्हिंसार्थः हिंसिष्य इत्यर्थः। कनीयोऽन्नं करिष्ये कनीयोऽल्पमन्नं करिष्य इत्येवमीक्षित्वा तद्भक्षणादुपरराम। बहु ह्यन्नं कर्त्तव्यं दीर्घकालभक्षणाय न कनीयः। तद्भक्षणे हि कनीयोऽन्नं स्यात् बीजभक्षण इव सस्याभावः॥ स एवं प्रयोजनमन्नबाहुल्यमालोच्य तयैव त्रय्या वाचा पूर्वोक्तया तेनैव चात्मना मनसा मिथुनीभावमालोचनमुपगम्योपगम्येदं सर्वं स्थावरजङ्गममसृजत यदिदं किञ्च यत्किञ्चेदं। किन्तदृचो यजूंषि सामानि छन्दांसि च सप्त गायत्र्यादीनि स्तोत्रशस्त्रादिकर्माङ्गभूतांस्त्रिविधान्मंचान् गायत्र्यादिछन्दोविशिष्टान् यज्ञांश्च

---

आ० इदानीमृगादिसृष्टिमुपदेष्टुं पातनिकां करोति। स इत्यादिना॥ ईक्षणप्रतिबन्धकसद्भावं दर्शयति। अशनायावानपीति। अभिपूर्वो मन्यतिरिति यज्ञोऽस्य पशूनभिमन्येत नास्य रुद्रः पशूनभिमन्यत इत्यादि शास्त्रमत्र प्रमाणयितव्यं॥ अन्नस्य कनीयस्त्वे का हानिरित्याशङ्क्याह। बहु हीति॥ तथापि विराजो भक्षणे का क्षतिरत आह। तद्भक्षणे हीति। तस्यान्नात्मकत्वात्तदुत्पादकत्वाच्चेति शेषः॥ कारणनिवृत्तौ कार्य्यनिवृत्तिरित्यत्र दृष्टान्तमाह। बीजेति॥ यथोक्तेक्षणानन्तरं मिथुनभावद्वारा त्रयीसृष्टिं प्रस्तौति। स एवमिति। ननु विराजः सृष्ट्या स्थावरजङ्गमात्मनो जगतः सृष्टेरुक्तत्वात् किं पुनरनयेत्याशयेन पृष्ट्वा

उ० मसृजत यदिदं किञ्चर्चो यजूꣳषि सामानि छन्दाꣳसि यज्ञान् प्रजाः पशून्।

स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा

---

भा० तत्साध्यान् प्रजास्तत्कर्त्रीः पशूंश्च ग्राम्यानारण्यान् कर्मसाधनभूतान्। ननु त्रय्या मिथुनीभूतयाऽसृजतेत्युक्तं छागादीनीह कथमसृजतेति। नैष दोषः। मनसस्त्रय्यसौऽयं मिथुनीभावस्त्रय्या वाच्यः। छागादीनां विद्यमानानामेव कर्मसु विनियोगभावेन व्यक्तीभावः सर्ग इति॥

स प्रजापतिरेवमन्नवृद्धिं बुद्ध्वा यद्यदेव क्रियां क्रियासाधनं फलं वा किञ्चिदसृजत तत्तदत्तुं भक्षयितुमध्रियत

---

आ० परिहरति। किन्तदिति। गायत्र्यादीनीत्यादिपदेनोष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीछन्दांस्युक्तानि। केवलानां छन्दसां सर्गासम्भवात्तदाश्लिष्टानामृग्यजुःसामात्मनां मन्त्राणां सृष्टिरत्र विवक्षितेत्याह। स्तोत्रेति। उद्गात्रादिना गीयमानमृग्जातं स्तोत्रं तदेव होत्रादिना शंस्यमानं शस्त्रं। स्तुतमनुशंसतीति श्रुतेः। यन्न गीयते न च शंस्यतेऽध्वर्युप्रभृतिभिश्च प्रयुज्यते तदप्यत्र ग्राह्यमित्यभिप्रेत्यादिपदं। अतएव त्रिविधानित्युक्तं।

अजादयो ग्राम्याः पशवो गवयादयस्त्वारण्या इति भेदः। कर्मसाधनभूतानसृजतेति सम्बन्धः। स मनसा वाचं मिथुनं समभवदित्युक्तत्वात् प्रागेव त्रय्याः सिद्धत्वान्न तस्याः सृष्टिः श्लिष्टेति शङ्कते। नन्विति। व्यक्ताव्यक्तविभागेन परिहरति। नेत्यादिना। इति मिथुनीभावसर्गयोरुपपत्तिरिति शेषः॥

अत्तृसर्गस्यान्नसर्गस्येति द्वयमुक्तं। इदानीमुपास्यस्य प्रजापतेर्गुणान्तरं निर्दिशति। स प्रजापतिरित्यादिना। कथं मृत्योरदितिनामत्वं सिद्धवदुच्यते तत्राह। तथा चेति। अदितेः सर्वात्मत्वं वदता मन्त्रेण सर्वकारणस्य मृत्योरदितिनामत्वं

उ॰ अत्तीति तददितेरदितित्वꣳ सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥५॥

सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति ।

---

भा॰ धृतवान् मनः सर्वं ह्यत्तं वै यस्मादत्तीति तत्तस्माददितेरदितिनाम्नो मृत्योरदितित्वं प्रसिद्धं । तथाच मन्त्रोऽदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पितेत्यादिः। सर्वस्यैतस्य जगतोऽन्नभूतस्यात्ता सर्वात्मनैव भवति अन्यथा विरोधात्। न हि कश्चित्सर्वस्यैकोऽत्ता दृश्यते तस्मात् सर्वात्मा भवतीत्यर्थः। सर्वमस्यान्नं भवति। अतएव सर्वात्मनो ह्यत्तुः सर्वमन्नम्भवतीत्युपपद्यते । य एवमेतद्यथोक्तमदितेर्मृत्योः प्रजापतेः सर्वस्याद्नाददितित्वं वेद तस्यैतत् फलं ॥ ५ ॥

सोऽकामयतेत्यश्वाश्वमेधयोर्निर्वचनार्थमिदमाह ।
भूयसा महता यज्ञेन भूयः पुनरपि यजेयेति । जन्मान्त-

---

आ॰ सूचितमिति भावः । मृत्योरदितित्वविज्ञानवतोऽवान्तरफलमाह । सर्वस्येति । सर्वात्मनेति कुतो विशिष्यते तत्राह। अन्यथेति। सर्वरूपेणावस्थानाभावे सर्वान्नभक्षकस्यासम्भवत्वादित्यर्थः । विरोधमेव साधयति । न हीति । फलस्योपासनाधीनत्वात्प्रजापतिमदितिनामानमात्मत्वेन ध्यायन् ध्येयात्मा भूत्वा तत्तद्रूपत्वमापन्नः सर्वस्यान्नस्यात्ता स्यादित्यर्थः । अन्नमन्नमेवास्य सदा न कदाचित्तदस्यात्तृ भवतीति वक्तुमनन्तरवाक्यमादत्ते। सर्वमिति । अतएवेत्युक्तं व्यक्तीकरोति। सर्वात्मनो हीति । ५ ।

उपासिविधौ सफले सति समाप्तिरेव ग्राह्यस्योचिता

उ॰ सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्य्यमुदक्रामत् ।

---

भा॰ एकत्वापेक्षया भूयः शब्दः । स प्रजापतिर्जन्मान्तरेऽश्वमेधेनायजत् । स तद्भावभावित एव कल्पादौ व्यावर्त्तत । सोऽश्वमेधक्रियाकारकफलात्मत्वेन निर्वृत्तः सन्नकामयत भूयसा यज्ञेन भूयो यजेयेत्येवं महत् कार्य्यं कामयित्वा लोकवदश्राम्यत् । स तपोऽतप्यत । तस्य श्रान्तस्य तप्तस्येति पूर्ववद्यशोवीर्य्यमुदक्रामदिति । स्वयमेव पदार्थमाह ।

---

आ॰ किमुत्तरग्रन्थेनेत्याशङ्क्य प्रतीकमादाय तात्पर्य्यमाह । सोऽकामयतेत्यादिना । तदेवाश्वमेधस्याश्वमेधत्वमित्येतदन्तं वाक्यमिदमानिर्दिश्यते । भूयो दक्षिणकत्वादश्वमेधस्य भूयस्त्वमिति शब्दोऽकामयतेत्यनेन सम्बध्यते ॥ कथमुक्तेन यक्ष्यमाणस्य प्रजापतेर्भूयःशब्दोक्तिः । न हि स पूर्वमश्वमेधमन्वतिष्ठत् कर्म्मानधिकारत्वात्तत्राह । जन्मान्तरेति ॥ तदेव स्फुटयति । स प्रजापतिरिति । अथातीते जन्मनि यजमानोऽश्वमेधस्य कर्त्ताभूत् । अधुना हिरण्यगर्भो भूयो यजेयेत्याह ॥ तथाच कर्तृभेदाद्भूयःशब्दासामञ्जस्यमत आह । स तद्भावेति ॥ स प्रजापतिरश्वमेधवासनाविशिष्टो ध्यानकर्म्मफलत्वेन कल्पादौ निर्वृत्तो भूयो यजेयेत्याह । कर्तृभोक्त्रोरैक्येन साधकफलावस्थयोर्यजमानसूत्रयोर्भेदाभावादित्यर्थः ॥ प्रजापतिरीश्वरो न तस्य दुःखात्मकश्रान्त्युत्थानेच्छा युक्तेत्याशङ्क्य प्रकृतिवशात्तदुपपत्तिमभिप्रेत्याह । सोऽश्वमेधेति ॥ कथमेतावता विवक्षिता श्रुतिः सिद्धा इत्याशङ्क्याह । एवमिति ॥ *श्रमकार्य्यमाह । स तप इति ॥

---

* श्रमकार्य्यमाहेतिपुस्तकान्तरपाठः ।

उ॰ प्राणा वै यशो वीर्य्यं तत्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमध्रियत तस्य शरीर एव मन आसीत्॥ ६॥

---

भा॰ प्राणाश्चक्षुरादयः। वै यशो यशोहेतुत्वात्तेषु हि सत्सु ख्यातिर्भवति। तथा वीर्य्यं बलमस्मिन् शरीरे। न ह्युत्क्रान्तप्राणो यशस्वी बलवान् भवति। तस्मात्प्राणा एव यशो वीर्य्यं चास्मिन् शरीरे। तदेवं प्राणलक्षणं यशो वीर्य्यमुदक्रामत् उत्क्रान्तवत्। तदेवं यशोवीर्य्यभूतेषु प्राणेषूत्क्रान्तेषु शरीरान्निष्क्रान्तेषु तच्छरीरम्प्रजापतेः श्वयितुमुच्छूनभावङ्गन्तुमध्रियतामेध्यञ्चाभवत्। तस्य प्रजापतेः शरीरान्निर्गतस्यापि तस्मिन्नेव शरीरे मन आसीत्। यथा कस्यचित् प्रिये विषये दूरङ्गतस्यापि मनो भवति तद्वत्। स तस्मिन्नेव शरीरे गतमनाः सन् किमकरोदिति॥ ६॥

---

आ॰ चक्षुरादीनां यशस्त्वे हेतुमाह। यशोहेतुत्वादिति॥ तदेव साधयति। तेषु हीति। प्राणा एवेति तथाशब्दार्थः। तत्सु हि तेषु शरीरे बलम्भवतीति पूर्व्ववदेव हेतुरन्वेयः॥ उक्तमर्थं व्यतिरेकद्वारा स्फो*रयति। न हीति॥ प्राणानां यशस्त्वं वीर्य्यवत्त्वं चोपसंहृत्य वाक्यार्थं निगमयति। तदेवमिति॥ तत्प्राणेष्वित्यादि व्याचष्टे। तदेवमित्यादिना॥ शरीरान्निर्गतस्य प्रजापतेर्मुक्तत्वमाशङ्क्याह। तस्येति॥ सम्यग्ज्ञानाभावादासक्तेः सत्यपि न पुनस्तस्मिन्प्रवेशो युक्तः परित्यक्तपरिग्रहायोगादिति शङ्कते। स तस्मिन्निति॥ ६॥

---

* स्फोटयतीति पाठान्तरः॥

उ॰ सोऽकामयत मेध्यं म इदँ स्यादात्मन्व्यनेन

---

भा॰ उच्यते सोऽकामयत कथं मेध्यं मेधार्हं यज्ञियं मे ममेदं शरीरं स्यात् । किञ्चात्मन्वी आत्मवांश्चानेन शरीरेण शरीरवान् स्यामिति प्रविवेश । यस्मात्तच्छरीरं मद्वियोगाद्गतयशोवीर्यं सदश्वदश्वयत् ततस्तस्मादश्वः समभवत् । ततोऽश्वनामा प्रजापतिरेव साक्षादिति स्तूयते । यस्माच्च पुनस्तत्प्रवेशाद्गतयशोवीर्यत्वादमेध्यं सन्मेध्यमभूत्तदेव तस्मादेवाश्वमेधस्याश्वमेधनाम्नः क्रतोरश्वमेधत्वमश्वमेधनामलाभः । क्रियाकारकफलात्मको हि क्रतुः । स च प्रजापतिरेवेति स्तूयते ॥ क्रतुनिर्वर्तकस्याश्वस्य प्रजापतित्वमुक्तं

---

आ॰ अज्ञानवशात्परित्यक्तपरिग्रहोऽपि सम्भवतीत्याह । उच्यत इति । वीतदेहस्य कामनाऽयुक्तेति शङ्कते । कथमिति । सामर्थ्यातिशयादशरीरस्यापि प्रजापतेस्तदुपपत्तिरिति मन्वानो ब्रूते । मेध्यमिति । कामनाफलमाह । इति प्रविवेशेति । तथापि कथं प्रकृतिनिवृत्तिसिद्धिरित्याशङ्क्याह । यस्मादिति । यच्छब्दो यस्मादिति व्याख्यातः ॥ देहस्याश्वत्वेऽपि कथं प्रजापतेस्तथात्वमित्याशङ्क्य तत्तादात्म्यादित्याह । तत इति । अश्वस्य प्रजापतित्वेन स्तुतत्वात्तस्योपास्यत्वं फलतीति भावः । तथापि कथमश्वमेधनामनिर्वचनमित्याशङ्क्याह । यस्माच्चेति । क्रतोस्तदात्मकस्य प्रजापतेरिति यावत् ॥ देहो हि प्राणवियोगादश्वयत्पुनस्तत्प्रवेशाच्च मेधार्होऽभूदतः सोऽश्वमेधस्तत्तादात्म्यात्प्रजापतिरपि तथेत्यर्थः । ननु प्रजापतित्वेनाश्वमेधस्य स्तुतिर्नोपयोगिनी । अस्यैवोपास्यत्वेन प्रस्तुतत्वात् क्रतूपासनाभावादत आह । क्रियेति । ननु क्रत्वङ्गस्याश्वस्याश्वमेधक्रत्वात्मनश्चाग्नेरुक्तरीत्या स्तुतत्वात्तदुपास्तेश्च प्रागेवोक्तत्वादेष ह वा अश्वमेधमित्यादिवाक्यं

उ॰ स्यामिति । ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वं ।

एष ह वा अश्वमेधं वेद य एनमेवं वेद ।

---

भा॰ उषा वा अश्वस्य मेध्यस्येत्यादिना । तस्यैवाश्वस्य मेध्यस्य प्रजापतिस्वरूपस्याग्नेश्च यथोक्तस्य क्रतुफलात्मरूपतया समस्तोपासनं विधातव्यमित्यारभ्यते । पूर्व्वंच क्रियापदस्य विधायकस्याश्रुतत्वात् क्रियापदापेक्षत्वाच्च प्रकरणस्यायमर्थोऽवगम्यते ॥

एष ह वै अश्वमेधं क्रतुं वेद यः कश्चिदेनमश्वमग्निरूपमर्कञ्च यथोक्तमेवं वक्ष्यमाणेन समासेन प्रदर्श्यमानेन विशेषणेन विस्पष्टं वेद स एषोऽश्वमेधं वेद नान्यः ।

---

आ॰ नोपयुज्यते तत्राह । क्रतुनिर्वर्त्तकस्येति । उक्तञ्च । चित्यस्याग्नेस्तस्य प्राची दिगित्यादिना प्रजापतित्वमिति शेषः॥ अश्वोपासनमग्न्युपासनञ्चैकमेवेति वक्तुमुत्तरं वाक्यमित्याह । तस्यैवेति॥ य एवमेतददितेरदितित्वं वेदेत्यादौ प्रागेव विहितमुपासनं किम्पुनरारभ्यतेत्याशङ्क्याह । पूर्व्वंनेति॥ यद्यपि विधिरदितित्वं वेदेति श्रुतस्तथापि सगुणोपास्तिविधिर्न प्रधानविधिः । अत्र तु प्रधानविधिरुपास्तिप्रकरणत्वादपेक्ष्यते । अतोऽश्वमेधं वेदेति प्रधानविधिरिति भावः॥

तात्पर्य्यमुक्त्वा वाक्यमादायाक्षराणि व्याकरोति । एष इति । यथोक्तमित्युभयत्र प्रजापतित्वमनुकृष्यते । समभवदित्यादिभिः प्रदर्श्यमानविशेषणं॥ विधिरत्र स्पष्टो न भवतीत्याशङ्क्याह ।

---

* विस्पष्ट मितिपाठान्तरः ॥

उ॰ तमनवरुद्धेवामन्यत । तꣳ संवत्सरस्य परस्ता-
दात्मन आलभत । पशून्देवताभ्यः प्रत्यौहत् ।

---

भा॰ तस्मादेवं वेदितव्य इत्यर्थः ॥ कथन्तत्र पशुविषयमेव ताव-
द्दर्शनमाह । तत्र प्रजापतिर्भूयसा यज्ञेन भूयो यजेयेति
कामयित्वात्मानमेव पशुं मेध्यं कल्पयित्वा तं पशुमनवरु-
द्धैवोत्सृष्टं पशुमवरोधमकृत्वैव मुक्तप्रग्रहमममन्यताचिन्तयत् ।
तं संवत्सरस्य पूर्णस्य परस्तादूर्द्ध्वमात्मने आत्मार्थमाल-
भत प्रजापतिदेवतात्मकत्वेनेत्येतदालभतालम्भं कृतवान् ।
पशूनन्यान् ग्राम्यानारण्यांश्च देवताभ्यो यथादैवतं प्रत्यौ-
हत् प्रतिगमितवान् । यस्माच्चैवं प्रजापतिरमन्यत तस्मा-
देवमन्योऽप्युक्तेन विधिनात्मानं पशुमश्वं मेध्यं कल्पयित्वा
सर्व्वदेवत्योऽहं प्रोक्ष्यमाण आलभ्यमानश्चाहं मद्दैवत्य एव
स्यां । अन्य इतरे पशवो ग्राम्यारण्या यथादैवतमन्याभ्यो
देवताभ्य आलभ्यन्ते मदवयवभूताभ्य एवेति विद्यात् ॥

---

व्या॰ तस्मादिति । अश्वमेधो विधेयत्वेन सम्बध्यते ॥ एवं ग्रन्था-
प्रसिद्धार्थत्वे भाति सति कुतो विधिरित्याह । कथमिति ॥
एष ह वा अश्वमेधं वेदेत्यादौ विवक्षितस्य विधेर्भूमिकां
करोति । तत्रेत्यादिना । उपास्तिविधिप्रस्तावः सामन्यर्थः ॥ कथं
नु पशुविषयन्दर्शनन्दर्शयति । तत्रेति । एवमनन्तरवाक्ये प्रवृत्ते
सतीति यावत् ॥ अथ विवक्षितं विधिमभिदधाति । यस्माच्चेति ॥
प्रजापतिरित्यस्यामवस्थायाममन्यतेत्यत्र क्रियमाणमित्याद्यत्र
सम्प्रति तत्कार्य्यभूतासु प्रजासु तथाविधचेष्टादृष्टिरित्याह ।
अत एवेति ॥

उ० तस्मात्सर्व्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त । एष वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानः तावेतावर्काश्वमेधौ ॥ —

---

भा० अतएवेदानीं सर्व्वदैवत्यं प्रोक्षितप्राजापत्यमालभन्ते याज्ञिकाः । एवं एष वा अश्वमेधो य एष तपति यस्यैवं पशुसाधनकः क्रतुः स एष साक्षात् फलभूतो निर्दिश्यते एष वा अश्वमेधः । कोऽसौ य एष सविता तपति जगदवभासयति तेजसा । तस्यास्य क्रतुफलात्मनः संवत्सरः कालविशेष आत्मा शरीरं तन्निर्वर्त्त्यत्वात्संवत्सरस्य । तस्यैव क्रत्वात्मनोऽग्निसाध्यत्वाच्च फलस्य क्रतुरूपेणैव निर्देशः । अयम्पार्थिवोऽग्निरर्कः साधनभूतः । तस्य चार्कस्य क्रतौ

---

आ० प्रोक्षितं मन्त्रसंस्कृतं पशुमिति यावत् । प्रजावस्यप्रजापतिव-दित्येवं शब्दार्थः ॥ उपासनविधिरुक्तः । सम्प्रति प्रतीकमादाय तात्पर्य्यमाह । एष इति ॥ द्विविधो हि क्रतुः । कल्पितपशुहेतुको वास्तवतद्धेतुकश्च । स च द्विप्रकारोऽपि फलरूपेण स्थितः । सवितैवेति उपास्यफलं वक्तुं एतद्वाक्यमित्यर्थः ॥ विशेषोक्तिं विना नास्ति बुभुत्सोपशान्तिरित्याह । कोऽसाविति ॥ क्रतुफलात्मकः सविता मण्डलं देवता वेति सन्देहे द्वितीयं गृहीत्वा तस्येत्यादि व्याचष्टे । तस्यास्येति । आदित्योदयानुदयाभ्यामहोरात्रद्वारा संवत्सरव्यवस्थानात्तन्निर्म्मातृत्वस्य युक्तं तत्तादात्म्यमित्यर्थः । क्रतोरादित्यत्वमुक्त्वा तदङ्गस्याग्नेस्तत्त्वं वक्तुमयमग्निरर्क इति वाक्यं ॥ तस्यार्थमाह । तस्यैवेति ॥ ननु पूर्व्वोक्तस्यैवाग्नेरादित्यत्वं कुतो नियम्यतेऽन्यश्चित्योऽग्निरन्यश्चाग्निरादित्यः किं न स्यादित्याशङ्क्याह । तस्य चेति ॥ तथापि कथं तस्यैवादि-

उ॰ सा पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युञ्जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा

---

भा॰ चित्यस्त इमे लोकास्त्रयोऽप्यात्मानः शरीरावयवाः। तथा च व्याख्यातं तस्य प्राची दिगित्यादिना॥ तावग्न्यादित्यावेतौ यथा विशेषितावर्काश्वमेधौ क्रतुफले॥

अर्को यः पार्थिवोऽग्निः स साक्षात् क्रतुरूपः क्रियात्मकः क्रतोरग्निसाध्यत्वात्तद्रूपेणैव निर्देशः। क्रतुसाध्यत्वाच्च फलस्य क्रतुरूपेणैव निर्देशः। आदित्योऽश्वमेध इति। तौ साध्यसाधनौ क्रतुफलभूतावग्न्यादित्यौ सा उ पुनर्भूय एकैव देवता भवति। का सा मृत्युरेव। पूर्वमप्येकैवासीत् क्रियासाधनफलभेदाय विभक्ता॥ तथा चोक्तं। स त्रेधात्मानं व्यकुरुतेति। सा पुनरपि क्रियानिर्वृत्त्युत्तरकालमेकैव देवता भवति मृत्युरेव फलरूपः। यः पुनरेव-

---

आ॰ त्वत्वं तच्चाह। तथा चेति। तस्य प्राचीत्यादिना लोकात्मकत्वचित्याभेदवत्तं तदिहाप्युच्यते तस्मात्तस्यैवाग्न्यादित्यत्वमिष्टमित्यर्थः॥ अग्न्यादित्यभेदस्य लोकवेदसिद्धत्वान्न तयोरेकेन क्रतुना तादात्म्यमित्याशङ्क्याह। ताविति। यथा विशेषितत्वमादित्यरूपत्वं॥

कुतस्तस्य चार्कस्य क्रतुरूपत्वं साधनत्वेन भेदादित्याशङ्क्योपचारादित्याह। क्रियात्मक इति॥ तथापि कथमादित्यस्य क्रतुतादात्म्योक्तिरित्याशङ्क्याह। क्रतुसाध्यत्वादिति॥ नन्वादित्यस्य क्रतुफलत्वेन क्रतुत्वे तद्धेतोरग्नेस्तादात्म्यायोगाद्युक्तमग्नेरादित्यत्वमित्याशङ्क्याह। ताविति। क्रतुफलत्वात्तदात्मा सविता तद्धेतुश्चित्योऽग्निस्तावुक्तविभागाद् व्युत्पादितौ। यासनादिव्यापारौ सन्तावेकैव प्राणाख्या देवतेति तयोरैक्योक्तिरित्यर्थः॥

उ॰ भवति एतासान्देवतानामेको भवति ॥ ७ ॥

इति द्वितीयं ब्राह्मणं ॥

द्वया ह प्राजापत्या देवाश्चासुराश्च १

---

भा॰ मेनमश्वमेधं मृत्युमेकान्देवतां वेद अहमेव मृत्युरस्मि अश्वमेध एका देवता सा मद्रूपास्वाग्निसाध्येति । सोऽपजयति पुनर्मृत्युं पुनर्मरणं सकृन्मृत्वा पुनर्मरणाय न जायत इत्यर्थः । अपजितोऽपि मृत्युरेनं पुनराप्नुयादित्याशङ्क्याह । नैनं मृत्युराप्नोति ॥ कस्मान्मृत्युरस्यैवं विद आत्मा भवति। किञ्च मृत्युरेव फलरूपः सन्नेतासान्देवतानामेको भवति तस्यैतत् फलं ॥ ७ ॥ तृतीयस्य द्वितीयं ब्राह्मणं ॥

द्वया हेत्याद्यस्य कः सम्बन्धः । कर्म्मणां ज्ञानसहितानां परा गतिरुक्ता । मृत्य्वात्मभावोऽश्वमेधगत्युक्त्या । अथेदानीं मृत्य्वात्मभावसाधनभूतयोः कर्म्मज्ञानयोर्यत उद्भवस्तत्र-

---

आ॰ एकैवेत्युक्ते प्रकृतयोरग्न्यादित्ययोरन्यतरपरिशेषं प्राप्नुते । सा सेति ॥ कथं द्वयोरेकत्वमेकत्वे वा कथं द्वित्वं तत्राह । पूर्व्वमपीति ॥ उक्तेऽर्थे वाक्योपक्रममनुकूलयति । तथा चेति ॥ सा पुनरित्यत्र पुनरित्यादेरर्थं निगमयति। सा पुनरिति ॥ ननु फलकथनार्थमुपक्रम्य प्राणात्मनाग्न्यादित्ययोरेकत्वं वदता प्रक्रान्तं प्रस्मृतमिवेत्याह । यः पुनरिति । एकत्वमभिन्नत्वं ॥ ७ ॥ तृतीये द्वितीयं ब्राह्मणं ॥ २ ॥

द्वितीयमभिब्राह्मणान्तरमवतार्य्य तस्य पूर्व्वेण सम्बन्धाप्रतीतेर्न सोऽस्तीत्याक्षिपति । द्वया हेत्याद्यस्येति ॥ विवक्षितं सम्बन्धं वक्तुं वृत्तं कीर्त्तयति । कर्म्मणामिति ॥ सा काष्ठा सा परा गतिरिति

भा॰ काशनार्थमुद्गीथब्राह्मणमारभ्यते ॥ ननु मृत्य्वात्मभावः पूर्व्वेण ज्ञानकर्म्मणोः फलमुक्तं । उद्गीथज्ञानकर्म्मणोस्तु मृत्य्वात्मभावातिक्रमणं फलं वक्ष्यति ॥ अतो भिन्नविषयत्वात्फलस्य न पूर्व्वकर्म्मज्ञानोद्भवप्रकाशनार्थत्वमिति चेत् । नायन्दोषः । अग्न्यादित्यात्मभावत्वादुद्गीथफलस्य पूर्व्वेणाप्येतदेव फलमुक्तमेतासान्देवतानामेको भवतीति ॥ ननु मृत्युमतिक्रान्त इत्यादि विरुद्धं । न स्वाभाविकपाप्मासङ्ग-विषयत्वादतिक्रमणस्य कोऽसौ स्वाभाविकः पाप्मासङ्गो मृत्युः । कुतो वा तस्योद्भवः । केन वा तस्यातिक्रमणं । कथं वेत्येतस्यार्थप्रकाशनायाख्यायिकाऽऽरभ्यते । कथं द्वया द्विप्रकाराः । ह इति पूर्व्ववृत्तावद्योतको निपातः ।

---

भा॰ श्रुतेरुक्ता परा गतिर्मुक्तिरित्याशङ्क्याह । मृत्य्वात्मभाव इति । अश्वमेधोपासनस्य साश्वमेधस्य केवलस्य वा फलमुक्तं नोपास्त्यन्तराणां कर्म्मान्तराणाञ्चेत्याशङ्क्याश्वमेधफलोक्त्योपास्त्यन्तराणां केवलानां समुच्चितानाञ्च फलमुपलक्षितमित्याह । अश्वमेधेति ॥ इत्तमनूद्योत्तरब्राह्मणस्य तात्पर्य्यमाह । अथेति । ज्ञानयुक्तानां कर्म्मणां संसारफलत्वप्रदर्शनानन्तरमिति यावत् ॥ ज्ञानकर्म्मणोरुद्भावकस्य प्राणस्य स्वरूपं निरूपयितुं ब्राह्मणमित्युक्त्याप्योत्थापकत्वं सम्बन्धमुक्तमाक्षिपति । नन्विति ॥ मृत्युमतिक्रान्तो दीप्यत इति मृत्योरतिक्रमस्य वक्ष्यमाणज्ञानकर्म्मफलत्वात्पूर्व्वत्र च तदन्तर्भावस्य तत्फलस्योक्तत्वात् उभयस्यापि फलस्य भेदात् पूर्व्वोत्तरयोर्ज्ञानकर्म्मणोर्विषयश्चाब्दितोद्देश्यभेदाच्च पूर्व्वोक्तयोस्तयोरुद्भवकारण-प्रकाशनार्थं ब्राह्मणमित्यर्थः ॥ पूर्व्वोत्तरज्ञानकर्म्मफलभेदाभावादेकविषयत्वात्तदुद्भावकप्रकाशनार्थं ब्राह्मणं युक्तमिति परिहरति ।

नार्यमिति ॥ वाक्यशेषविरोधं शङ्कित्वा दूषयति । नन्वित्यादिना । स्वाभाविकः शास्त्रानाधेयो योऽयं पाप्मा विषयासङ्ग-

भा॰ वर्त्तमानप्रजापतेः पूर्व्वजन्मनि यद्वृत्तन्तदेव द्योतयति ह
शब्देन । प्राजापत्याः प्रजापतेर्वृत्तजन्मावस्थापत्यानि
प्राजापत्याः । के ते देवाश्चासुराश्च । तस्यैव प्रजापतेः
प्राणा वागादयः । कथम्पुनस्तेषान्देवासुरत्वं । उच्यते
शास्त्रजनितज्ञानकर्म्मभाविता द्योतनाद्देवा भवति । त
एव स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्म्मज्ञा-
नभाविता असुराः । स्वेष्वेवासुषु रमणात् सुरेभ्यो वा
देवेभ्योऽन्यत्वात् । यस्माच्च दृष्टप्रयोजनज्ञानकर्म्मभाविता
असुराः ।

---

आ॰ रूपः स मृत्युः । तस्यातिक्रमणं वाक्यशेषे कथ्यते । न हि हिर-
ण्यगर्भाख्यप्रत्ययोरतः पूर्व्वोक्तज्ञानकर्म्मभ्यां तुल्यविषयत्वमेवोत्तर-
ज्ञानकर्म्मणोरित्यर्थः ॥ ज्ञानकर्म्मणोरुद्भावकत्वं वक्तुं शास्त्रमा-
रभ्यतामाख्यायिका तु किमर्थेत्याशङ्क्य तस्यास्तात्पर्य्यमाह । कोऽ-
साविति ॥ कथं यथोक्तौ शास्त्राख्यायिकयोरर्थः शक्यो ज्ञातु-
मित्याकाङ्क्षां निक्षिप्याक्षराणि व्याकरोति । कथमित्यादिना ॥
निपातार्थमेव स्फुटयति । वर्त्तमानेति । प्रजापतिशब्दो भवि-
ष्यद्वृत्त्या यजमानं गोचरयतीत्याह । द्वयेति ॥ इन्द्रादयो
देवा विरोचनादयश्चासुरा इत्याशङ्कां वारयति । तस्यैवेति ॥
याज्यमानेषु प्राणेषु देवत्वमसुरत्वञ्च विरुद्धं न सिद्धतीति शङ्कते ।
कथमिति ॥ तेषु तदुभयमौपाधिकं साधयति । उच्यत इति ।
शास्त्रानपेक्षयोर्ज्ञानकर्म्मणोरुत्पादकमाह । प्रत्यक्षेति । सन्निधा-
नासन्निधानाभ्यां प्रमाणद्वयोक्तिः । स्वेष्वेवासुषु रमणं नामात्म-
म्भरित्वं ॥ तत इत्यादिवाक्यद्वयं व्याचष्टे । यस्माच्चेति ॥

उ॰ ततः कानीयसा एव देवा ज्यायसा असुराः। त एषु लोकेष्वस्पर्द्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥ १ ॥

---

भा॰ ततस्तस्मात् कानीयसाः कनीयांस एव कानीयसाः स्वार्थे वृद्धिः कनीयांसोऽल्पा एव देवाः। ज्यायसा असुरा ज्यायांसोऽसुराः। स्वाभाविकी हि कर्म्मज्ञानप्रवृत्तिर्महत्तरा। प्राणानां शास्त्रजनितायाः कर्म्मज्ञानप्रवृत्तेर्दृष्टप्रयोजनत्वात्। अतएव कनीयस्त्वं देवानां शास्त्रजनितप्रवृत्तेरल्पत्वात्। अत्यन्तयत्नसाध्या हि सा।

ते देवाश्चासुराश्च प्रजापतिशरीरस्था एषु लोकेषु निमित्तभूतेषु स्वाभाविकेतरकर्म्मज्ञानसाध्येष्वस्पर्द्धन्त स्पर्द्धां कृतवन्तः। देवानाञ्चासुराणाञ्च वृत्त्युद्भवाभिभवौ स्पर्द्धा कदाचिच्छास्त्रजनिता कर्म्मज्ञानभावनारूपा वृत्तिः प्राणानामुद्भवति। यदा चोद्भवति तदा दृष्टप्रयोजना प्रत्य-

---

आ॰ देवानामल्पत्वं प्रपञ्चयति। स्वाभाविकी हीति। महत्तरत्वे हेतुर्दृष्टप्रयोजनत्वादिति। असुराणां बहुत्वं प्रपञ्चयति। शास्त्रजनितेति। असुरापेक्षयाऽल्पत्वमिति शेषः। तदेव साधयति। अत्यन्तेति॥

उभयेषान्देवासुराणां मिथः सङ्घर्षन्दर्शयति। ते देवाश्चेति। कथमग्न्यादीनां स्थावरान्तानां भोगस्थानानां स्पर्द्धानिमित्तत्वमित्याशङ्क्य तेषां शास्त्रीयेतरज्ञानकर्म्मसाध्यत्वात्तयोश्च देवासुरतन्त्राधीनत्वात्तस्य च स्पर्द्धापूर्व्वकत्वात्परम्परया लोकानान्तन्निमित्तत्वमित्यभिप्रेत्य विशिनष्टि। स्वाभाविकेति। का पुन-

भा॰ चानुमानजनितकर्मज्ञानभावनारूपा तेषामेव प्राणानां वृत्तिरासुर्य्यभिभूयते । स देवानाञ्जयोऽसुराणाम्पराजयः । कदाचित्तद्विपर्य्ययेण देवानां वृत्तिरभिभूयते आसुर्य्या उद्भवः । सोऽसुराणाञ्जयो देवानाम्पराजयः । एवन्देवानाञ्जये धर्म्मभूयस्त्वादुत्कर्ष आप्रजापतित्वप्राप्तेः । असुरजयेऽधर्मभूयस्त्वादपकर्ष आस्थावरत्वप्राप्तेः । उभयसाम्ये मनुष्यत्वप्राप्तिः । त एवं कनीयस्त्वादभिभूयमाना असुरैर्देवा बाहुल्यादसुराणां किं कृतवन्त इत्युच्यते । ते देवा असुरैरभिभूयमाना ह किल ऊचुरुक्तवन्तः । कथं हन्तेदानीमस्मिन्यज्ञे ज्योतिष्टोम उद्गीथेनोद्गीथकर्म्मपदार्थकर्तृस्वरूपाश्रयणेनात्ययामातिगच्छामः । असुरानभिभूय स्वन्देवभावं शास्त्रप्रकाशितं प्रतिपद्यामह इत्युक्तवन्तो ऽन्योन्यं ॥ उद्गीथकर्म्मपदार्थकर्तृस्वरूपाश्रयणञ्च ज्ञानकर्म्मभ्यां । कर्म्म वक्ष्यमाणमन्त्रजपलक्षणं विधित्स्यमानं तदेतानि जपेदिति । ज्ञानन्त्विदमेव निरूप्यमाणं ॥ १ ॥

---

आ॰ देवा स्पर्द्धा नामेत्याशङ्क्याह । देवाणाश्चेति ॥ तामेव स्पर्द्धां विवृणोति । कदाचिदित्यादिना ॥ अधिकृतैरसुरपराजये देवजये च प्रयतितव्यमित्यनुग्रहबुद्ध्या जयफलमाह । एवमिति ॥ आकाङ्क्षापूर्व्वकमनन्तरवाक्यमादाय व्याकरोति । त एवमित्यादिना ॥ योऽयमुद्गीथो नाम कर्म्माङ्गभूतः पदार्थस्तत्कर्तुः प्राणस्य स्वरूपाश्रयणमेव कथं सिद्ध्यतीत्याशङ्क्याह । उद्गीथेति ॥ किन्तत् कर्म्म किं वा ज्ञानन्तदाह । कर्म्मेति । तान्येतान्यसतो मा सद्गमयेत्यादीनि यजूंषि जपेदिति विधित्स्यमानमिति योजना ॥ १ ॥

भा॰ नन्विदमभ्यारोहजपविधिशेषोऽर्थवादो न प्राणनिरू-
पणपरं। न। य एवं वेदेति वचनात्। उद्गीथप्रस्तावे पुरा-
कल्पश्रवणाद् उद्गीथविधिपरमिति चेत्। न। अप्रकर-
णात्। उद्गीथस्य चान्यत्र विहितत्वात् विद्याप्रकरण-
त्वाच्चास्याभ्यारोहजपस्य चानित्यत्वात्। एवंवित्प्रयोज्यत्वात्
विज्ञानस्य च नित्यवत् श्रवणात्। तद्धैतल्लोकजिदेवेति
च श्रुतेः। प्राणस्य वागादीनाञ्च शुद्ध्यशुद्धिवचनात्। न
ह्यनुपास्यत्वे प्राणस्य शुद्धिवचनं। वागादीनां च सदोषत्व-

---

आ॰ तथा हेत्यादि न प्राणनिरूपणपरं। जपविधिशेषत्वेनार्थ-
वादत्वात् तत् कुतोऽत्र प्राणस्य निरूप्यमाणत्वमित्याशङ्कते।
नन्विति। आभिमुख्येनारोह इति। देवभावमनेनाभ्यारोह
इत्यभ्यारोहस्तज्जपविधिशेषोऽर्थवादो तथा हेत्यादिवाक्यमित्यर्थः। उपा-
सनविधिश्रवणात् तत्परं वाक्यं न जपविधिशेष इति दूषयति।
नेति। माभूज्जपविधिशेषत्वं तथाप्युद्गायेत्युद्गानस्य कर्मणः सन्नि-
धाने पुरातनकल्पनाप्रकारस्य तथा हेत्यादिना श्रवणात् तद्वि-
धिशेषोऽर्थवादोऽयमिति शङ्कते। उद्गीथेति। नेदं वाक्यं प्राण-
स्योद्गीथविधिशेषत्वं प्रकरणत्वाभावेन सन्निध्यभावादिति दूष-
यति। नाप्रकरणादिति। उद्गीथस्तर्हि च विधीयते न चान्य-
विहितमङ्गम्भवति तत्राह। उद्गीथस्य चेति। अन्यत्रेति कर्म-
काण्डोक्तिः। यद्युद्गायेत्युद्गीथविधिरपि इह प्रतीयते तत् कथं
सन्निधिरपोद्यते तत्राह। विद्येति। उद्गीथविधिरिव प्रतीयमानः
प्राणस्योद्गातृदृष्ट्योपासनविधिः। अन्यथाप्रकारविरोधादित्यर्थः।
जपविधिशेषत्वमुद्गीथविधिशेषत्वं वा प्राणस्य नास्तीत्युक्तं।
इदानीं जपविधिशेषत्वाभावे युक्त्यन्तरमाह। अभ्यारोहेति।
अनित्यत्वं साधयति। एवमिति। प्रागेव विज्ञानवतानुष्ठेयो जपो
न तद्विज्ञानात् प्रागस्ति तत्रासौ पश्चाद्भावी। प्रागेव सिद्धं
विज्ञानं प्रयोजकमित्यर्थः। तस्यापि प्राचीनत्वं कथमित्याश-

भा॰ स्वानामशुद्धिवचनं । वागादिनिन्दया मुख्यप्राणस्तुतिश्चा-
भिप्रेतोपपद्यते । मृत्युमतिक्रान्तो दीप्यत इत्यादिफलवच-
नञ्च । प्राणस्वरूपापत्तिर्हि फलं तद्वदागाद्यग्न्यादिभावः ।

भवतु नाम प्राणस्योपासनं न तु विशुद्ध्यादिगुणवत्तेति ।
ननु स्याच्छ्रुतत्वात् न स्यादुपास्यत्वे स्तुत्यर्थोपपत्तेः । न ।
अविपरीतार्थप्रतिपत्तेः श्रेयःप्राप्त्युपपत्तेर्लोकवत् । यो
ह्यविपरीतमर्थं प्रतिपद्यते लोके स इष्टं प्राप्नोति अनिष्टाद्वा
निवर्त्तते न विपरीतार्थप्रतिपत्त्या । तथेहापि श्रौतशब्द-
जनितार्थप्रतिपत्तौ श्रेयःप्राप्तिरुपपन्ना न विपर्य्यये । न

---

आ॰ ह्याह । विद्यागमस्य चेति । य एवं विद्वान् पौर्णमासीं यजत
इति वत् य एवं वेदेति विज्ञानं श्रुतं न हि प्रयाजादिपौर्ण-
मासीप्रयोजकं । तस्या एव तत्प्रयोजकत्वात् । तथा प्राणवि-
त्प्रयोज्यो जपो न विज्ञानप्रयोजकः । तस्य स्वप्रयोजकत्वेन
प्रागेव सिद्धेरावश्यकत्वादित्यर्थः । फलवत्त्वाच्च प्राणविज्ञानं
स्वतन्त्रं विधित्सितमित्याह । तत्रेति । प्राणोपास्तेर्विवक्षितत्वे
हेत्वन्तरमाह । प्राणस्येति । यद्धि श्रूयते तद्विधीयत इति
न्यायमाश्रित्योक्तमेव प्रपञ्चयति । न हीति । अतश्च प्राणो-
पास्तिरत्र विधित्सितेत्याह । स्तुतिमिति । फलवचनं प्राण-
स्यानुपास्यत्वेनोपपद्यत इति सम्बन्धः । उक्तमेव व्यनक्ति ।
प्राणेति । मृत्युमोक्षणानन्तरं वागादीनां वह्न्यादित्वं फलं
तदध्यात्मपरिच्छेदं हित्वोपासितुराधिदैविकप्राणस्वरूपापत्तेरुप-
पद्यते । तस्माद्विधित्सितैवात्र प्राणोपास्तिरित्यर्थः ॥

उक्तन्यायेन प्राणोपास्तिमुपेत्य प्राणदेवतां शुद्ध्यादिगुणवती-
माक्षिपति । भवत्विति । यथा प्राणस्योपास्तिः प्राक्तनहेतुत्वा-
दिष्टा तथास्य गुणसम्बन्धः श्रुतत्वादेष्टव्यः । उपास्तावुपास्ये च
गुणवति प्राणे प्रामाणिकप्राप्तेरविशेषादिति सिद्धान्ती ब्रूते ।
नन्विति । प्राणस्योपास्यत्वे विशुद्ध्यादिगुणवादस्य स्तुत्यर्थत्वेना

भा॰ चोपासनार्थश्रुतमन्त्रोत्थविज्ञानविषयस्यायथार्थत्वे प्रमाण-मस्ति। न च तद्विज्ञानस्यापवादः श्रूयते। ततः श्रेयःप्राप्ति-दर्शनाद्यथार्थतां प्रतिपद्यामहे। विपर्यये चानर्थप्राप्ति-दर्शनात्। यो हि विपर्ययेणार्थं प्रतिपद्यते लोके पुरुषं स्थाणुरिति अमित्रं मित्रमिति वा सोऽनर्थं प्राप्नुवन् दृश्यते। आत्मेश्वरदेवतादीनामप्ययथार्थानामेव चेद्ग्रहणं श्रुतितो ऽनर्थप्राप्त्यर्थं प्राप्तमिति ध्रुवं प्राप्नुयाल्लोकवदेव न चैतदिष्टं।

---

आ॰ अर्थवादत्वसम्भवान्न यथोक्ता देवता स्यादिति पूर्ववाद्याह। न स्यादिति। विद्युदादिगुणवादस्यार्थवादत्वेऽपि नाभूतार्थवाद-त्वमिति परिहरति। नेति। विद्युदादिगुणविशिष्टप्राणदृष्टेरथ फलप्राप्तिः श्रुता न चानस्य मिथ्यार्थत्वे युक्ता सम्यग्ज्ञाना-देव पुमर्थाप्तेः सम्भवादतः श्रुतिरपि यथार्थैवेत्यर्थः। लोक-दृष्टान्तं व्याचष्टे। यो हीति। इहेति वेदाख्यदार्ष्टान्तिकोक्तिः। ननु विद्युदादिगुणवतीं देवतां वदन्ति वाक्यान्युपासनाविध्य-र्थत्वान्न स्वार्थे प्रामाण्यं प्रतिपद्यन्ते तत्राह। न चेति। अन्यप-राणामपि वाक्यानां मानान्तरसंवादविसंवादयोरसतोः स्वार्थे प्रामाण्यमनुभवानुसारिभिरेष्टव्यमित्यर्थः। ननु प्राणस्य विद्यु-दादिवादो न स्वार्थे मानमन्यपरत्वादादित्ययूपादिवाक्यव-दत आह। न चेति। आदित्ययूपादिवाक्यार्थज्ञानस्य प्रत्यक्षादि-नापवादवद्विद्युदादिगुणविज्ञानस्य नापवादः श्रुतस्तस्माद्वि-द्युदादिवादस्य स्वार्थे मानत्वमप्रत्यूहमित्यर्थः। विद्युदादिगु-णकप्राणविज्ञानात्फलश्रवणात्तद्वादस्य यथार्थत्वमेवेत्युपसंहरति। तत इति। लोकवद्वेदेऽपि सम्यग्ज्ञानादिष्टप्राप्तिरनिष्टपरिहा-रश्चेत्यन्वयमुखेनोक्तमर्थं व्यतिरेकमुखेनापि समर्थयते। विपर्यये चेत्यादिना। शास्त्रस्यानर्थार्थत्वमिष्टमिति शङ्कां निराचष्टे। न चेति। अपौरुषेयस्यासम्भावितसर्वदोषस्याशेषपुरुषार्थहेतोः शास्त्रस्यानर्थार्थत्वमेष्टुमशक्यमित्यर्थः। शास्त्रस्य यथार्थभूतार्थत्वं निगमयति।

भा॰ तस्माद्यथाभूतामेवात्मेश्वरदेवतादीन् ग्राहयत्युपासनार्थं शास्त्रं। नामादौ ब्रह्मदृष्टिर्ब्रह्मादयुक्तमिति चेत् स्फुटं नामादेरब्रह्मत्वं। तत्र ब्रह्मदृष्टिं स्थाण्वादाविव पुरुषदृष्टिं विपरीतां ग्राहयच्छास्त्रं दृश्यते। तस्माद्यथार्थमेव शास्त्रतः प्रतिपत्तेः श्रेय इत्ययुक्तमिति चेत्। न। प्रतिमावद्भेद-प्रतिपत्तेः। नामादावब्रह्मणि ब्रह्मदृष्टिं विपरीतां ग्राह-यति। शास्त्रं स्थाण्वादाविव पुरुषदृष्टिमिति नैतत्साध्व-वोधः। कस्माद्भेदेन हि ब्रह्मणो नामादिवस्तुप्रतिपन्नस्य नामादौ विधीयते ब्रह्मदृष्टिः प्रतिमादाविव विष्णुदृष्टिः। आलम्बनत्वे हि नामादिप्रतिपत्तिः प्रतिमावदेव न तु नामाद्येव ब्रह्मेति। यथा स्थाणावनिर्ज्ञाते न स्थाणुरिति पुरुष एवायमिति प्रतिपद्यते विपरीतं। न तु तथा नामादौ

---

व्या॰ तस्मादिति। उपासनार्थं चामार्थंचेति शेषः॥ शास्त्राद्यथार्थ-प्रतिपत्तेः श्रेयःप्राप्तिरित्यत्र व्यभिचारं चोदयति। नामादा-विति॥ तदेव स्फुटयति। स्फुटमिति। अब्रह्मणि ब्रह्मदृष्टि-रेतस्मिंस्तद्बुद्धित्वान्मिथ्या धीः। सा च यावन्नाम्नो गतमित्या-दिश्रुत्या फलवती। ततः शास्त्राद्यथार्थप्रतिपत्तेरेव फलमि-त्ययुक्तमित्यर्थः॥ भेदाग्रहपूर्व्वकोऽन्यस्यान्यात्मतावभासो मिथ्या-ज्ञानं। यत्र तु भेदे भासमानेऽन्यत्रान्यदृष्टिर्विधीयते। यथा। विष्णोर्भेदे प्रतिमायां गृह्यमाणे तत्र विष्णुदृष्टिः क्रियते। तत्रेदं मिथ्याज्ञानमित्याह। नेति॥ नञर्थं स्पष्टयति। नामा-दाविति॥ प्रश्नपूर्व्वकं हेतुं व्याचष्टे। कस्मादिति॥ प्रतिमायां विष्णुदृष्टिं प्रत्यालम्बनत्वमेव न विष्णुतादात्म्यं नामादेस्तु ब्रह्म-तादात्म्यं श्रुतमिति वैषम्यमाशङ्क्याह। आलम्बनत्वेनेति॥ उक्तमर्थं वैधर्म्यदृष्टान्तेन स्पष्टयति। यथेति॥ कर्म्ममीमांसको ब्रह्मविदेषं

भा० ब्रह्मदृष्टिर्विपरीता । ब्रह्मदृष्टिरेव केवला नास्ति ब्रह्मेति चेत्, एतेन प्रतिमाब्राह्मणादिषु विष्ण्वादिदेवपित्रादिदृष्टीनां तुल्यता । न चर्गादिषु पृथिव्यादिदृष्टिदर्शनात् विद्यमानपृथिव्यादिवस्तुदृष्टीनामेवर्गादिविषयेष्वापि पदर्शनात् । तस्मात्तत्सामान्यान्नामादिषु ब्रह्मादिदृष्टीनां विद्यमानब्रह्मादिविषयत्वसिद्धिः । एतेन प्रतिमाब्राह्मणादिषु विष्ण्वादिदेवपित्रादिबुद्धीनाञ्च सत्यवस्तुविषयत्वसिद्धिः । मुख्यापेक्षत्वाच्च गौणत्वस्य । पञ्चाग्न्यादिषु चाग्नित्वादेर्गौणत्वान्मुख्याग्न्यादिसद्भाववन्नामादिषु ब्रह्मत्वस्य गौणत्वान्मुख्यब्रह्मसद्भावोपपत्तिः । क्रियावत्त्वाविशेषादिद्या-

---

आ० प्रकटयन् प्रत्यवतिष्ठते । ब्रह्मेति । केवला तद्दृष्टिरेव नास्ति चोद्यते चोदनाबलाच्च यत्नं सेत्स्यति ब्रह्म तु नास्ति मानाभावादित्यर्थः । अथ यथा देवानां प्रतिमादिषूपास्यमानानामन्यत्र सत्त्वं । यथा च वस्वाद्यानां पितॄणां ब्राह्मणादिदेहे तर्प्यमाणानामन्यत्र सत्त्वं । तथा ब्रह्मणोऽपि नामादावुपास्यत्वादन्यत्र सत्त्वं भविष्यतीत्याशङ्क्याह । एतेनेति । नामादौ ब्रह्मदर्शनेनेति यावत् । दृष्टान्तासिद्धेर्न क्वापि ब्रह्मास्तीति भावः । सत्यज्ञानादिलक्षणं ब्रह्म नास्तीत्ययुक्तं । सदेव सोम्येदमित्यादिश्रुतेरित्याह । नेति । किञ्च ब्रह्मदृष्टिः सत्यर्था शास्त्रीयदृष्टित्वात् इयमेवर्गग्निः सामेतिदृष्टिवदित्याह । ऋगादिष्विति । तदेव स्पष्टयति । विद्यमानेति । ताभिर्दृष्टिभिः सामान्यं दृष्टित्वं तस्मादिति यावत् । यत्तु दृष्टान्तासिद्धिरिति तत्राह । एतेनेति । ब्रह्मदृष्टेः सत्यार्थत्ववचनेनेति यावत् । ब्रह्मास्तित्वे हेत्वन्तरमाह । मुख्यापेक्षत्वादिति । उक्तमेव विवृणोति । पञ्चेति । पञ्चाग्नयो द्युपर्जन्यपृथिवीपुरुषयोषितः । आदिपदं वाग्धेन्वादिग्रहणार्थं । ननु वेदान्तवेद्यं ब्रह्मेष्यते न च तेभ्यस्तद्धीः सिध्यति तेषां विधिवैधुर्येणाप्रामाण्यात् तत् कुतो ब्रह्मसिद्धिरत आह ।

भा॰ र्थानां । यथा च दर्शपौर्णमासादिक्रियेदम्फला विशिष्टेति-कर्त्तव्यताका एवं क्रमप्रयुक्ताङ्गा चेत्येतदलौकिकं वस्तु प्रत्यक्षाद्यविषयं तथाभूतञ्च वेदवाक्यैरेव ज्ञाप्यते। तथा परमात्मेश्वरदेवतादिवस्तुस्थूलादिधर्मकमशनयाद्यतीतं चेत्येवमादिविशिष्टमिति वेदवाक्यैरेव ज्ञाप्यत इत्यलौकिकत्वात्तथाभूतमेव भवितुमर्हतीति॥ न च क्रियार्थैर्वाक्यैर्ज्ञानवाक्यानां बुद्ध्युत्पादकत्वे विशेषोऽस्ति। न चानिश्चिता विपर्यस्ता वा परमात्मादिवस्तुविषया बुद्धिरुत्पद्यते। अनुष्ठेयाभावादयुक्तमिति चेत्।

क्रियार्थैर्वाक्यैस्त्र्यंशाभावनानुष्ठेया ज्ञाप्यतेऽलौकिक्यपि। न तथा परमात्मेश्वरादिविज्ञानेऽनुष्ठेयं किञ्चिदस्ति। अतः क्रियार्थैः साधर्म्यमित्ययुक्तमिति चेत्। न। ज्ञानस्य तथाभूतार्थविषयत्वात्। न ह्यनुष्ठेयस्य त्र्यंशस्य भावनाख्यस्यानु-

---

आ॰ क्रियार्थैश्चेति। विमतं स्वार्थे प्रमाणमज्ञातज्ञापकत्वात् सम्मतवत्। अतो वेदान्तशास्त्रादेव ब्रह्मसिद्धिरित्यर्थः॥ सिद्धसाध्यार्थभेदेन वैषम्यात् अविशिष्टत्वमनिष्टमित्याशङ्क्याह विवृणोति। यथा चेति। विशिष्टत्वं स्वरूपोपकारित्वं फलोपकारित्वञ्च यथमोक्तप्रकारं परात्मवस्तुमेवमित्यादिष्टं अलौकिकत्वं साधयति। प्रत्यक्षादीति॥ किञ्च वेदान्तानामप्रामाण्यं बुद्ध्यनुत्पत्तेर्वा संशयाद्युत्पत्तेर्वा नाद्य इत्याह। न चेति॥ न द्वितीय इत्याह। न चानिश्चितेति। कोटिद्वयास्पर्शित्वादबाधाच्चेत्यर्थः॥ क्रियार्थैर्वाक्यैर्विद्यार्थानां वाक्यानां साधर्म्यमुक्तमाक्षिपति। अनुष्ठेयेति॥ साधर्म्यस्यायुक्तत्वमेव व्यनक्ति। क्रियार्थैरिति॥ वाक्योत्थबुद्धेर्यथार्थत्वादिष्वभावेऽपि वाक्यप्रामाण्यमज्ञातज्ञापकत्वेनाविरुद्धमिति परिहरति। न ज्ञानस्येति॥ अनुष्ठेयनिष्ठत्वमन्तरेण कुतो वस्तुनि प्रयोगप्रत्ययो

भा॰ ष्ठेयत्वात्तथात्वं किन्तर्हि प्रमाणत्वमधिगतत्वात् । न च तद्विषयाया बुद्धेरनुष्ठेयविषयत्वात्तथार्थत्वं किन्तर्हि वेद-वाक्यजनितत्वादेव ॥ वेदवाक्याधिगतस्य वस्तुनस्तथात्वे सत्यनुष्ठेयत्वं विशिष्टं चेदनुतिष्ठति नो चेत् अनुष्ठेयत्वविशिष्टं नानुतिष्ठति अनुष्ठेयत्वे वाक्यप्रमाणत्वानुपपत्तिरिति चेत् । न ह्यनुष्ठेयेऽसति पदानां संहतिरुपपद्यते । अनुष्ठेयत्वे तु सति तादर्थ्येन पदानि संहन्यन्ते । तच्चानुष्ठेयनिष्ठं वाक्यं प्रमाणं भवति । इदमनेनैवङ्कर्त्तव्यमिति । न त्विदमनेनैव-मित्येवंप्रकाराणां पदशतानामपि वाक्यत्वमस्ति । कुर्य्यात् क्रियेत कर्त्तव्यं भवेत् स्यादित्येवमादीनामन्यतमेऽसत्यतः परमात्मेश्वरादीनामवाक्यप्रमाणत्वं ॥

---

आ॰ तथार्थत्वमित्याशङ्क्य तयोर्विषयतथात्वार्थं तदपेक्षाप्रामाण्यार्थत्वं चेति विकल्प्याद्यन्दूषयति । न हीति । तदुभयविषयस्य कर्त्तव्यार्थस्य तथात्वं न कर्त्तव्यत्वापेक्षं । किन्तु मानगम्यत्वादन्यथा विप्रलम्भकविधिवाक्येऽपि तथात्वापत्तेरित्यर्थः ॥ द्वितीयम्प्रत्याह । न चेति । बुद्धिग्रहणं प्रयोगोपलक्षणार्थं । कर्त्तव्यतार्थविषयप्रयोगादेर्नानुष्ठेयविषयत्वान्मानत्वं किन्तु प्रमाकरणत्वात् तज्जन्यत्वाच्चान्यथोक्तातिप्रसक्तितादवस्थ्यादतोऽनुष्ठेयनिष्ठत्वं मानत्वेऽनुपयुक्तमित्यर्थः ॥ कुतस्तर्हि कार्य्याकार्य्यधियावित्याशङ्क्याह । वेदेति ॥ वैदिकस्यार्थस्याबाधेन तथार्थत्वे सिद्धे समीहितं साधनत्वविशिष्टं चेत्तत्तु तदा कर्त्तव्यमिति धियानुतिष्ठति । तच्चेदनिष्टसाधनत्वविशिष्टं तदा न कार्य्यमिति धिया नानुतिष्ठति । अतो मानस्यानुष्ठानाननुष्ठानहेतू कार्य्याकार्य्यधियावित्यर्थः । तथापि ब्रह्मणो वाक्यार्थत्वं पदार्थत्वं वा नाद्यमित्याह । अननुष्ठेयत्वमिति ॥ तस्याकार्य्यत्वेऽपि वाक्यार्थत्वं किं न स्यादित्याशङ्क्याह । न हीति । उभयत्रासतीति छेदः ॥ द्वितीयन्दूषयति ।

भा॰ पदार्थत्वे च प्रमाणान्तरविषयत्वं। अतोऽसदेतदिति चेत्। न। अस्ति मेरुर्वर्णचतुष्टयोपेत इत्येवमाद्यननुष्ठेयेऽपि वाक्यदर्शनात्। न च मेरुर्वर्णचतुष्टयोपेत इत्येवमादिवाक्यश्रवणे मेर्वादावनुष्ठेयत्वबुद्धिरुत्पद्यते। तथास्तिपदसहितानां परमात्मेश्वरादिप्रतिपादकवाक्यपदानां विशेषणविशेष्यभावेन संहतिः केन वार्य्यते। मेर्वादिज्ञानवत्परमात्मज्ञाने प्रयोजनाभावादयुक्तमिति चेत्। न। ब्रह्मविदाप्नोति परं। भिद्यते हृदयग्रन्थिरिति फलश्रवणात्। संसारबीजाविद्यादिदोषनिवृत्तिदर्शनाच्च। अनन्यशेषत्वाच्च तज्ज्ञा-

---

आ॰ पदार्थत्वे चेति। ब्रह्मणः शास्त्रार्थत्वमेतदित्युच्यते॥ कार्य्यास्पृष्टेऽर्थे वाक्यप्रामाण्यं दृष्टान्तेन साधयति। नेत्यादिना। सुवर्णरजतश्वेतमिश्रवर्णचतुष्टयं तद्विशिष्टो मेरुरस्तीत्यादिप्रयोगे मेर्वादावकार्य्येऽपि सम्यग्धीदर्शनात् तत्त्वमसिवाक्यादपि कार्य्यास्पृष्टे ब्रह्मणि सम्यग्ज्ञानसिद्धिरित्यर्थः। दृष्टान्तेऽपि कार्य्यधीरेव वाक्यादुदेतीत्याशङ्क्याह। न चेति॥ ननु तत्र क्रियापदाधीना पदसङ्गतिर्युक्ता। वेदान्तेषु पुनस्तदभावात्तदसंहत्ययोगात् कुतो वाक्यप्रमाणत्वं ब्रह्मणः सम्भवति तत्राह। तथेति॥ विमतमफलं सिद्धार्थज्ञानत्वात् सम्मतवदित्यनुमानात् तत्त्वमादेः सिद्धार्थस्यायुक्तं मानत्वमिति शङ्कते। मेर्वादीति॥ श्रुतिविरोधेनानुमानं धुनीते। नेत्यादिना॥ विद्वदनुभवविरोधाच्च नैवमित्याह। संसारेति॥ फलश्रुतेरर्थवादत्वेनामानत्वादनुमानाबाधकतेत्याशङ्क्याह। अनन्येति। पर्णमयीत्वाधिकरणन्यायेन मुक्तौ फलश्रुतेरर्थवादत्वं युक्तं। ब्रह्मधियोऽन्यशेषत्वप्रापकाभावात्तत्फलश्रुतेरर्थवादत्वासिद्धिरिति। अन्यथा शारीरकानारम्भः स्यादित्यर्थः। श्रुत्यनुभवाभ्यां वाक्योत्थज्ञानस्य फलवत्त्वदृष्टेर्युक्ता कार्य्यास्पृष्टेऽर्थे तत्त्वमस्यादेर्मानतेत्युक्तं॥ सम्प्रति शास्त्रस्य कार्य्यपरत्वान्नियमे हेत्वन्तरमाह। प्रतिषिद्धेति॥

भा॰ नञ्श्च शुक्लामिव फलश्रुतेरर्थवादत्वानुपपत्तिः। प्रतिषिद्धानिष्टफलसम्बन्धश्च वेदादेव विज्ञायते न चानुष्ठेयः सः। न च प्रतिषिद्धविषये प्रवृत्तक्रियस्याकरणादन्यदनुष्ठेयमस्ति।

अकर्त्तव्यताज्ञाननिष्ठतैव हि परमार्थतः प्रतिषेधविधीनां स्यात्। क्षुधार्त्तस्य प्रतिषेधज्ञानसंस्कृतस्याभक्ष्येऽभोज्ये वा प्रत्युपस्थिते कलञ्जाभिशस्तान्नादाविदं भक्ष्यमदो भोज्यमिति वा ज्ञानमुत्पन्नं तद्विषयया प्रतिषेधज्ञानस्मृत्या बाध्यते। मृगतृष्णिकायामिव पेयज्ञानं तद्विषययाथात्म्यविज्ञानेन तस्मिन्बाधिते स्वाभाविकविपरीतज्ञानेऽनर्थकरी तद्भक्षणभोजनप्रवृत्तिर्न भवति। विपरीतज्ञान-

---

आ॰ यद्यपि कलञ्जभक्षणादेरधःपातस्य च सम्बन्धो न कलञ्जं भक्षयेदित्यादिवाक्यात्प्रतीयते। तथापि तस्यानुष्ठेयत्वाभावात्तद्वाक्यस्याननुष्ठेयनिष्ठत्वसिद्धिरित्याशङ्क्याह। न चेति। सम्बन्धस्याभावार्थत्वान्नानुष्ठेयतेत्यर्थः॥ अभक्षणादिकार्यमिति विधिपरत्वमेव निषेधवाक्यस्य किन्न स्यादित्याशङ्क्याह। न चेति। तस्यापि कार्यार्थत्वे विधिनिषेधभेदभङ्गान्नञश्च स्वसम्बन्धभावबोधेन मुख्यस्यार्थान्तरे वृत्तौ लक्षणापातान्निषिद्धविषये रागादिना प्रवृत्तक्रियावतो निषेधवाक्यार्थधीसंस्कृतस्य निषेधश्रुतेरकरणात् प्रसक्तक्रियानिवृत्त्युपलक्षितादौदासीन्यादन्यदनुष्ठेयं न प्रतिभातीत्यर्थः॥ भावविषयं कर्त्तव्यत्वं विधीनामर्थोऽभावविषयन्तु निषेधानामिति विभागमाशङ्क्याह। अकर्त्तव्यतेति। अभावस्य भावार्थत्वाभावात् कर्त्तव्यताविषयत्वासिद्धिरिति हिशब्दार्थः। प्रतिषेधज्ञानवतोऽपि कलञ्जभक्षणादिज्ञानदर्शनात् तन्निवृत्तेर्नियोगाधीनत्वात् तन्निष्ठमेव वाक्यमेष्टव्यमिति चेन्नेत्याह। क्षुधार्त्तस्येति। विषदिग्धबाणहतस्य पशोर्मांसं कलञ्जं। ब्रह्मवधाद्यभिशापयुक्तस्यान्नपानादि। तस्मिन्नभक्ष्येऽभोज्ये च प्राप्ते भ्रमज्ञानं क्षुत्क्षामस्योत्पन्नं तन्निषेध-

भा॰ निमित्तायाः प्रवृत्तेर्निवृत्तिरेव न पुनर्यत्नः कार्य्यसद्-भावे। तस्मात्प्रतिषेधविधीनां वस्तुयाथात्म्यज्ञाननिष्ठतैव न पुरुषव्यापारनिष्ठतागन्धोऽप्यस्ति। तथेहापि परमात्मादि-याथात्म्यज्ञानविधीनां तावन्मात्रपर्य्यवसानतैव स्यात्। तथा तद्विज्ञानसंस्कृतस्य तद्विपरीतार्थज्ञाननिमित्तानांप्रवृत्ती-नामनर्थार्थत्वेन ज्ञायमानत्वात्। परमात्मादियाथात्म्यज्ञा-नस्मृत्या स्वाभाविके तन्निमित्तविज्ञानबाधितेऽभावः स्यात्॥

ननु कलञ्जादिभक्षणादेरनर्थार्थत्वेन वस्तुयाथात्म्य-ज्ञानस्य स्मृत्या स्वाभाविके तद्भक्ष्यत्वादिविपरीतज्ञाने नि-वर्त्तिते तद्भक्षणाद्यनर्थप्रवृत्त्यभाववदप्रतिषेधविषयत्वाच्छा-

---

आ॰ धीसंस्कृतस्य तद्धीस्मृत्या बाध्यमित्यत्र लौकिकदृष्टान्तमाह। मृग-तृष्णिकायामिति॥ तथापि प्रवृत्त्यभावसिद्धये विधिरर्थवानिति चेन्नेत्याह। तस्मिन्निति। तदभावः प्रवृत्त्यभावो न विधिज-न्यप्रयत्नसाध्यो निमित्ताभावेनैव सिद्धेरित्यर्थः॥ दृष्टान्तमुपसंह-रति। तस्मादिति॥ दार्ष्टान्तिकमाह। तथेति॥ न केवलं तत्त्वमस्यादिवाक्यानां सिद्धवस्तुमात्रपर्य्यवसानता किन्तु सर्व्व-कर्म्मनिवर्त्तकत्वमपि सिद्ध्यतीत्याह। तथेति। अकर्तृभोक्तृब्रह्मा-स्मिति ज्ञानसंस्कृतस्य प्रवृत्तीनामभावः स्यादिति सम्बन्धः। तस्माद्ब्रह्मभावाद्विपरीतोऽर्थो यस्य कर्त्तृत्वादिज्ञानस्य तन्निमित्ता-नामनर्थार्थत्वेन ज्ञायमानत्वादिति हेतुः॥ कदा पुनस्तासा-मभावः स्यादत आह। परमात्मादीति। भ्रान्तिप्राप्तभक्षणादि निरासेन निवृत्तिनिष्ठतया निषेधवाक्यमानत्ववत् तत्त्वमादेरपि प्रत्यग्ज्ञानोत्थकर्त्तृत्वादिनिवर्त्तकत्वेन मानत्वोपपत्तिरिति समु-दायार्थः। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाशङ्क्यते।

नन्विति। तस्य निषिद्धत्वादनर्थार्थत्वमेव यद्वस्तुयाथात्म्यं तज्ज्ञानेन निषेधे कृते तत्संस्कारद्वारा सम्पादितस्मृत्या शास्त्री-यज्ञानविपरीतज्ञाने बाधिते तत्कार्य्यप्रवृत्त्यभावो निमित्ताभावे

भा॰ शास्त्रविहितप्रवृत्त्यभावो न युक्त इति चेत्। न। विपरीत-
ज्ञाननिमित्तत्वानर्थार्थत्वाभ्यां तुल्यत्वात्। कलञ्जभक्षणा-
दिप्रवृत्तेर्मिथ्याज्ञाननिमित्तत्वमनर्थार्थत्वञ्च यथा तथा शा-
स्त्रविहितप्रवृत्तीनामपि। तस्मात् परमात्मयाथात्म्यवि-
ज्ञानवतः शास्त्रविहितप्रवृत्तीनामपि मिथ्याज्ञाननिमित्त-
त्वेनानर्थत्वेन च तुल्यत्वात् परमात्मज्ञानेन विपरीतज्ञाने
निवर्त्तिते युक्त एवाभावः॥ ननु तत्र युक्तो नित्यानान्तु
केवलशास्त्रनिमित्तत्वादनर्थार्थत्वाभावाच्चाभावो न युक्त
इति चेत्। न। अविद्यारागद्वेषादिदोषवतो विहितत्वात्।
यथा स्वर्गकामादिदोषवतो दर्शपौर्णमासादीनि काम्यानि
कर्म्माणि विहितानि तथा सर्व्वानर्थबीजाविद्यादिदोषवत-
स्तज्जनितेष्टानिष्टप्राप्तिपरिहाररागद्वेषादिदोषवतश्च तत्प्रे-

---

आ॰ नैमित्तिकाभावन्यायेन युक्तो न तथाग्निहोत्रादिप्रवृत्त्यभावो
युक्तः। ब्रह्मविदाऽग्निहोत्रादि न कर्त्तव्यमिति निषेधानुपलम्भा-
दित्यर्थः॥ तत्त्वमस्यादिवाक्येनार्थान्निषिद्धमग्निहोत्रादीति मन्वानः
साम्यमाह। नेत्यादिना॥ शास्त्रीयप्रवृत्तीनां गर्भवासादिहेतुत्वाद-
नर्थार्थत्वमहङ्कर्त्तृत्वाद्यभिमानवत्त्वेन विपरीतज्ञाननिमित्तत्वं।
एतदेव दृष्टान्तावष्टम्भेन स्पष्टयति। कलञ्जेति॥ काम्यानामज्ञा-
नहेतुत्वानर्थार्थत्वाभ्यां विदुषस्तेषु प्रवृत्त्यभावो युक्तो नित्यानान्तु
शास्त्रमात्रप्रयुक्तानुष्ठानत्वान्नाज्ञानवत्त्वं। प्रत्यवायाख्यानर्थध्वं-
सित्वाच्च नानर्थकरत्वं। अतस्तेषु प्रवृत्त्यभावो युक्तो न भव-
तीति शङ्कते। नन्विति॥ नित्यानां शास्त्रमात्रकृतानुष्ठानत्व-
मसिद्धमिति परिहरति। नेत्यादिना॥ तदेव प्रपञ्चयति।
यथेति। अविद्यादीत्यादिशब्देनास्मितादिक्लेशचतुष्टयोक्तिः। तैर-
विद्यादिभिर्जनितेष्टप्राप्तौ तादृगनिष्टप्राप्तौ च क्रमेण रागद्वेष-
वतः पुरुषस्येष्टप्राप्तिमनिष्टपरिहारञ्च वाञ्छतस्ताभ्यामेव राग-

भा॰ रिताविशेषप्रवृत्तेरिष्टानिष्टप्राप्तिपरिहारार्थिनो नित्यानि कर्माणि विधीयन्ते न केवलं शास्त्रनिमित्तान्येव। न चाग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुबन्धसोमानां कर्मणां स्वतः काम्यनित्यत्वविवेकोऽस्ति।

कर्त्तृगतेन हि स्वर्गादिकाम्यदोषेण कामार्थता। तथा विद्यादिदोषवतः स्वभावप्राप्तेष्टानिष्टप्राप्तिपरिहारार्थिनस्तदर्थान्येव नित्यानीति युक्तं तम्प्रति विहितत्वात्। न परमात्मयाथात्म्यविज्ञानवतः शमोपायव्यतिरेकेण किञ्चित् कर्म विहितमुपलभ्यते। कर्मनिमित्तदेवतादिसर्व्वसाधनविज्ञानोपमर्द्देन ह्यात्मज्ञानं विधीयते। न चोपमर्दितक्रियाकारकादिविज्ञानस्य कर्मप्रवृत्तिरुपपद्यते। विशिष्टक्रियासाधनादिज्ञानपूर्व्वकत्वात् क्रियाप्रवृत्तेः। न हि देश-

---

आ॰ देषाभ्यामिष्टं मे भूयादनिष्टं माभूदित्यविशेषकामनाभिप्रेरिताविशेषप्रवृत्तियुक्तस्य नित्यानि विधीयन्ते। स्वर्गकामः पशुकाम इति विशेषार्थिनः काम्यानि। तुल्यन्तूभयेषां केवलशास्त्रनिमित्तत्वमित्यर्थः॥ किञ्च काम्यानां दुष्टत्वं ब्रुवता नित्यानामपि तदिष्टमुत्पत्तिविनियोगप्रयोगाधिकारविधिरूपे विशेषाभावादित्याह। नचेति॥ कथन्तर्हि काम्यनित्यविभागस्तत्राह।

कर्त्तृगतेनेति। स्वर्गकामः पशुकाम इति विशेषार्थिनः काम्यविधिरिष्टं मे स्यादनिष्टं माभूदित्यविशेषकामप्रेरिताविशेषितप्रवृत्तिमतो नित्यविधिरित्युक्तमित्यर्थः॥ नन्वविद्यादिदोषवतो नित्यानि कर्माणीत्ययुक्तं। परमात्मज्ञानवतोऽपि यावज्जीवश्रुतेस्तेषामनुष्ठेयत्वादित्याशङ्क्य श्रुतेरविरक्तविषयत्वान्नैवमित्याह। न परमात्मेति। योगारूढस्य तस्यैव शमः कारणमुच्यत इति स्मृतेर्ज्ञानपरिपाके कारणं कर्मोपशम एव प्रतीयते न तथा कर्मविधिरित्यर्थः॥ न केवलं विहितं नोपलभ्यते

भा॰ कालाद्यनवच्छिन्नास्थूलाद्वयादिब्रह्मप्रत्ययधारिणः कर्मावसरोऽस्ति ॥ भोजनादिप्रवृत्त्यवसरवत् स्यादिति चेत् । न । अविद्यादिकेवलदोषनिमित्तत्वाद्भोजनादिप्रवृत्तेरावश्यकत्वानुपपत्तेः । न तु तथा नियतं कदाचित् क्रियते कदाचिन्न क्रियते चेति नित्यं कर्मोपपद्यते । केवलदोषनिमित्तत्वात्तु भोजनादिकर्मणोऽनियतत्वं स्यात् । दोषोद्भवाभिभवयोरनियतत्वात् कामानामिव काम्येषु ।

शास्त्रनिमित्तकालाद्यपेक्षकत्वाच्च नित्यानामनियतत्वानुपपत्तिः । दोषनिमित्तत्वे सत्यपि यथा काम्याग्नि-

---

आ॰ न सम्भवति चेत्याह । कर्मनिमित्तेति । यदा नासि त्वं संसारी किन्त्वकर्तृ भोक्तृ ब्रह्मासीति श्रुत्या ज्ञाप्यते तदा देवतायाः सम्प्रदानत्वं कारकत्वं । शौच्यादेरित्येतत् सर्वमुपमर्दितं भवति । तत् कथमकर्त्रादिज्ञानवतः सम्भवति कर्मविधिरित्यर्थः ॥ उपमर्दितमपि वासनावशादुद्भविष्यति ततश्च विदुषोऽपि कर्मविधिः स्यादित्याशङ्क्याह । न चेति ॥ वासनावशादुद्भूतस्याभासत्वादात्मस्मृत्या पुनः पुनर्बाधाच्च विदुषो न कर्मप्रवृत्तिरित्यर्थः ॥ किञ्चानवच्छिन्नं ब्रह्मास्मीति स्मरतस्तदात्मकस्य देशादिसापेक्षं कर्म निरवकाशमित्याह । नहीति ॥ विदुषो भिक्षाटनादिवत् कर्मावसरः स्यादिति शङ्कते । भोजनादीति ॥ अपरोक्षज्ञानवतो वा परोक्षज्ञानवतो वा भोजनादिप्रवृत्तिः । नाद्यः । अनभ्युपगमात् तत्प्रतीतेर्बाधितानुवृत्तिमात्रत्वात् । अग्निहोत्रादेरबाधिताभिमाननिमित्तस्य तथात्वानुपपत्तिरित्यभिप्रेत्याह । नेति ॥ न द्वितीयः । परोक्षज्ञानिनः शास्त्रागमेऽपि क्षुत्पिपासादिदोषवत्त्वात् तत्प्रवृत्तेरिष्टत्वादित्याह । अविद्यादीति ॥ अग्निहोत्राद्यपि तथा स्यादिति चेन्नेत्याह । नत्विति ॥ भोजनादिप्रवृत्तेरावश्यकत्वानुपपत्तिं विवृणोति । केवलेति ॥ न तु तथेत्यादि प्रपञ्चयति । शास्त्रनिमित्तेति ॥ तर्हि शास्त्रविहितकामा-

भा० होत्रस्य शास्त्रविहितत्वात् सायंप्रातःकालाद्यपेक्षत्वं एवं तद्भोजनादिप्रवृत्तौ नियमवत् स्यादिति चेत्। न। नियमस्याक्रियात्वात् क्रियायास्वाप्रयोजकत्वान्नासौ ज्ञानस्यापवादकरः। तस्मात् परमात्मयाथात्म्यज्ञानविधेरपि तद्वि-

---

आ० द्यपेक्षत्वान्नित्यानामदोषप्रभवत्वं भवेदित्याशङ्क्याह। दोषेति॥ एवन्दोषकृतत्वेऽपि नित्यानां शास्त्रसापेक्षत्वात् कालाद्यपेक्षत्वमविरुद्धमित्याह। एवमिति॥ भोजनादेर्दोषकृतत्वेऽपि चातुर्वर्ण्यं चरेद्भैक्षं यतीनान्तु चतुर्गुणमित्यादिनियमवद्विदुषोऽग्निहोत्रादिनियमोऽपि स्यादिति शङ्कते। तद्भोजनादीति॥ विदुषो नास्ति भोजनादिनियमोऽतिक्रान्तविधित्वात्। न चैतावता यथेष्टचेष्टापत्तिरधर्म्माधीनाऽविवेककृता हि सा। न तौ विदुषो विद्येते। अतोऽविद्यावस्थायामप्यसती यथेष्टचेष्टा विद्यादशायां कुतः स्यात्। संस्कारस्याप्यभावात्। बाधितानुवृत्तेश्च। अग्निहोत्रादेस्तनाभासत्वान्न बाधितानुवृत्तिरित्याह। नेति॥ किञ्चाविदुषां विविदुषूणामेव नियमः। तेषां विधिनिषेधगोचरत्वात्। न च तेषामप्येष ज्ञानोदयपरिपन्थी। तस्यान्यनिवृत्तिरूपस्य स्वयंक्रियात्वाभावात्। नापि सत्क्रियामाक्षिपन् ब्रह्मविद्यां प्रतिक्षिपति। अन्यनिवृत्त्यात्मनस्तदाक्षेपत्वासिद्धेरित्याह। नियमस्येति॥ कर्म्मसु रागादिमतोऽधिकारात्। विरक्तस्य ज्ञानाधिकारात्। ज्ञानिनो हेत्वभावादेव कर्म्माभावात्। तस्य भोजनाद्यतुल्यत्वात्। तत्त्वमादेः सर्व्वव्यापारोपरमात्मकज्ञानहेतोर्निवर्त्तकत्वेन प्रामाण्यमतिपादितमुपसंहरति। तस्मादिति। तस्य विधिवत्यादकं वाक्यं। तस्य निषेधवाक्यवत् तत्त्वज्ञानहेतोस्तद्विरोधिमिथ्याज्ञानध्वंसित्वात्। अशेषव्यापारनिवर्त्तकत्वेन कूटस्थवस्तुनिष्ठस्य युक्तं प्रामाण्यं। मिथ्याज्ञानध्वंसे हेत्वभावे फलाभावन्यायेन सर्व्वकर्म्मनिवृत्तेरित्यर्थः॥ तत्पदोपात्तं हेतुमेव स्पष्टयति। कर्म्मप्रवृत्तीति। यथा प्रतिषेध्ये भक्ष्यादौ प्रतिषेधशास्त्रवशात् प्रवृत्त्यभावस्तथा तत्त्वमस्यादिवाक्यसामर्थ्यात्कर्म्मस्वपि प्रवृत्त्यभावस्य तुल्यत्वात्प्रामाण्यमपि तुल्यमित्यर्थः॥ प्रतिषेधशास्त्रसाम्ये तत्त्वमस्यादिशास्त्रस्यो-

उ॰ ते ह वाचमूचुस्त्वन्न उद्गायेति तथेति तेभ्यो वागुदगायत् १

---

भा॰ परीतस्थूलद्वैतादिविज्ञाननिवर्त्तकत्वात् सामर्थ्यात् सर्व्वकर्म्म-प्रतिषेधविध्यर्थत्वं सम्पद्यते। कर्म्मप्रवृत्त्यभावस्य तुल्यत्वाद्यथा प्रतिषेधविषये। तस्मात्प्रतिषेधविधिवच्च वस्तुप्रतिपादनं तत्परत्वञ्च सिद्धं शास्त्रस्य॥१॥

ते देवा ह एवं विनिश्चित्य वाचं वागभिमानिनीं देवतां ऊचुरुक्तवन्तः। त्वं नोऽस्मभ्यमुद्गाय औद्गात्रं कर्म्म कुरुष्व वाग्देवतानिर्वर्त्त्यमौद्गात्रं कर्म्म दृष्टवन्तः। तामेव च देवतां जपमन्त्राभिधेयां असतो मा सद्गमयेति। अत्र चोपासनायाः कर्म्मणश्च कर्तृत्वेन वागादय एव विवक्ष्यन्ते। कस्मात्। यस्मात्परमार्थतस्तत्कर्तृकस्तद्विषय एव च सर्व्वो

---

आ॰ चमाने तथैव निवृत्तिनिष्ठत्वं स्यान्नवस्तुप्रतिपादकत्वमित्याशङ्क्याह। तस्मादिति। प्रतिषेधो हि प्रसक्तक्रियां निवर्त्तयंस्तदुपलक्षितौदासीन्यात्मके वस्तुनि पर्य्यवस्यति। तथा तत्त्वमस्यादिवाक्यस्यापि वस्तुप्रतिपादकत्वमविरुद्धमित्यर्थः। वेदान्तानां सिद्धे प्रामाण्यवदर्थवादादीनामन्यपराणामपि संवादविसंवादयोरभावे स्वार्थे मानत्वसिद्धौ सिद्धा विग्रहादिगुणवती प्राच-देवतेति चकारार्थः॥१॥

ध्यानमिह परीक्ष्यमाणमित्येतत् प्रसङ्गागतं विचारं परिसमाप्य ते ह वाचमित्यादि व्याचष्टे। ते देवा इति। अचेतनाया वाचो नियोज्यत्वं वारयति। वागभिमानिनीमिति। नियोक्तॄणां देवानामभिप्रायमाह। वाग्देवतेति। नन्वौद्गात्रं कर्म्म जपमन्त्रप्रकाश्या देवता निर्वर्त्तयिष्यति न तु वाग्देवतेति तत्राह। तामेवेति। असतो मा सद्गमयेति जपमन्त्राभिधेयां दृष्टवन्त इति पूर्व्वेण सम्बन्धः। वागाद्याश्रयं कर्तृत्वादि दर्शयतोऽर्थवादस्य प्रासङ्गिकत्वात्पर्य्ये-

भा॰ ज्ञानकर्म्मसंव्यवहारः । वक्ष्यति हि ध्यायतीव लेलायतीवेत्यात्मकर्त्तृकत्वाभावं विस्तरतः षष्ठे । इहापि चाध्यायान्त उपसंहरिष्यति अव्याकृतादिक्रियाकारकफलजातं त्रयं वा इदं नामरूपं कर्म्मेत्यविद्याविषयं । अव्याकृतात्तु यत्परं परमात्माख्यं विद्याविषयमनामरूपकर्म्मात्मकं नेति नेतीतरप्रतीत्याख्यानेनोपसंहरिष्यति पृथक् ॥ यस्तु वागादिसमाहारोपाधिकल्पितः संसार्य्यात्मा तस्य वागादिसमाहारपक्षपातित्वमेव दर्शयिष्यति तेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति । तस्माद्युक्ता वागादीनामेव ज्ञानकर्म-

---

आ॰ माह । अत्र चेति ॥ आत्माश्रये कर्त्तृत्वादाववभासमाने तस्य वागाद्याश्रयत्वमयुक्तमित्याह । कस्मादिति ॥ परस्य जीवस्य वा कर्त्तृत्वादि विवक्षितमिति विकल्प्याद्यन्दूषयति । यस्मादिति । विचारदशायां वागादिसङ्घातस्य क्रियादिशक्तिमत्त्वात् कर्त्तृत्वादिस्तदाश्रयो यस्मात्प्रतीतस्तस्मात्परस्यात्मनः स्वतस्तच्छक्तिशून्यस्य न तदाश्रयत्वमित्यर्थः । किञ्चाविद्याश्रयः सर्व्वो व्यवहारो न तद्धीने परस्मिन्नवतरतीत्याह । तद्विषय इति ॥ कर्त्ता शास्त्रार्थवत्त्वादिति न्यायेन कर्त्तृत्वमात्मनोऽङ्गीकर्त्तव्यमित्याशङ्क्य यथा च तक्षोभयथेति न्यायादौपाधिकन्तस्मिन् कर्त्तृत्वमित्यभिप्रेत्याह । वक्ष्यति हीति ॥ यदुक्तमविद्याविषयः सर्व्वो व्यवहार इति तत्र वाक्यशेषमनुकूलयति । इहापीति ॥ इतश्च परस्मिन्नात्मनि कर्त्तृत्वादिव्यवहारो नास्तीत्याह । अव्याकृतात्त्विति । अनामरूपकर्म्मात्मकमित्यस्मादुपरिष्टात् तत्पदमध्याहर्त्तव्यं पृथगविद्याविषयात् क्रियाकारकफलजातादिति शेषः ॥ माभूत् परमात्मा कर्त्तृत्वाद्याश्रयो जीवस्तु स्यादिति द्वितीयमाशङ्क्याह । यस्त्विति । जीवशब्दवाच्यस्य विशिष्टस्य कल्पितत्वात् न तात्त्विकं कर्त्तृत्वादिकं । किन्तु तद्द्वारा स्वरूपे समारोपितमिति भावः ॥ आत्मनि तात्त्विककर्त्तृत्वाद्यभावे फलितमर्थ-

उ॰ यो वाचि भोगस्तं देवेभ्य आगायत् यत् कल्याणं वदति तदात्मने ।

---

भा॰ कर्त्तृत्वफलप्राप्तिविवक्षा ॥ तथेति तथास्त्विति देवैरुक्ता वाक् तेभ्योऽर्थिभ्योऽर्थायोदगायदुद्गानं कृतवती ।

कः पुनरसौ देवेभ्योऽर्थाय उद्गानकर्म्मणा वाचा निर्व्वर्त्तितः कार्य्यविशेष इति । उच्यते । यो वाचि निमित्तभूतायां वागादिसमुदायस्य य उपकारो निष्पद्यते वदनादिव्यापारेण स एव । सर्व्वेषां ह्यसौ वाग्वदनाभिनिर्वृत्तो भोगः फलं । तं भोगं सा त्रिषु पवमानेषु कृत्वावशिष्टेषु नवसु स्तोत्रेषु वाचनिकमार्त्त्विज्यं फलं यत् कल्याणं शोभनं वदति वर्णानभिनिर्वर्त्तयति तदात्मने मह्यमेव । तदसाधारणं वाग्देवतायाः कर्म्म यत् सम्यग्वर्णानामुच्चारणं अतस्तदेव

---

आ॰ वादतात्पर्य्यमुपसंहरति । तस्मादिति ॥ तात्पर्य्यमर्थवादस्योक्त्वा निरुक्तया वाग्देवतया यत् कृतन्तदुपन्यस्यति । तथेत्यादिना ॥

उद्गातृत्वं यजमानप्रकाशकत्वमात्मनोऽङ्गीकृत्य वागुद्गाने प्रवृत्ता चेत्तया कश्चिदुपकारो देवानामुद्गानेन निवर्त्तनीयः । स च नास्तीति शङ्कते । कः पुनरिति ॥ वदनादिव्यापारे सति यः सुखविशेषः सङ्घातस्य निष्पद्यते स एव कार्य्यविशेष इत्याह । उच्यत इति । यो वाचीति प्रतीकमादाय व्याख्यायते चयम्पुनर्वाचो वचनं चक्षुषो दर्शनमित्यादिना निष्पन्नं फलं सर्व्वसाधारणमित्यापाद्यानुभवमनुरुध्याह । सर्व्वेषामिति ॥ किञ्च देवार्थमुद्गायन्त्या वाचः स्वार्थमपि किञ्चिदुद्गानमस्ति । तथा च ज्योतिष्टोमे द्वादशस्तोत्राणि तत्र त्रिषु पवमानाख्येषु स्तोत्रेषु यजमानं फलमुद्गानेन कृत्वा शिष्टेषु नवसु स्तोत्रेषु यत् कल्याणवदनसामर्थ्यन्तदात्मने स्वार्थमेवागायत् इत्याह । तं भोगमिति ॥ ऋत्विजां क्रीतत्वान्न फलसम्बन्धः सम्भवतीत्याशङ्क्याह । वाचनिक-

उ॰ ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥ २ ॥

---

भा॰ विशेष्यते यत् कल्याणं वदतीति ॥ यत्तु वदनकार्य्यं सर्व्वसङ्घातोपकारात्मकं तद्याजमानिकमेव। तत्र कल्याणवदनात्मसम्बन्धासङ्गावसरं देवताया रन्ध्रमेव प्रतिलभ्यते।

विदुरसुराः कथमनेनोद्गात्रा नोऽस्मान् स्वाभाविकं ज्ञानं कर्म्म चाभिभूयातीत्य शास्त्रजनितकर्म्मज्ञानरूपेण ज्योतिषोद्गात्रात्मनाऽत्येष्यन्ति अतिगमिष्यन्तीत्येवं विज्ञाय तमुद्गातारमभिद्रुत्याभिगम्य स्वेनासङ्गलक्षणेन पाप्मनाऽविध्यन्ताडितवन्तः संयोजितवन्त इत्यर्थः। स यः स पाप्मा प्रजापतेः पूर्व्वजन्मावस्थस्य वाचि न क्षिप्तः स एष प्रत्यक्षीक्रियते

---

आ॰ मिति ॥ यथात्मनेऽन्नाद्यमागायदिति श्रुतमित्यर्थः ॥ कल्याणवदनसामर्थ्यस्य स्वार्थत्वं समर्थयते। तद्धीति ॥ कल्याणवदनं वाचोऽसाधारणं चेत् कर्त्तर्हि यो वाचीत्यादेर्विषयस्तत्राह। यत्त्विति॥ वाग्देवतायामसुराणामवकाशं दर्शयति। तत्रेति। स्वार्थे परार्थे चोद्गाने सतीति यावत्। कल्याणवदनस्यात्मना वाचैव सम्बन्धे योऽयमासङ्गोऽभिनिवेशस्स एवावसरो देवतायास्तमवसरं प्राप्येत्यर्थः॥ अवसरमेव व्याकरोति। रन्ध्रमेवेति। अस्मानतीत्येति सम्बन्धः॥

कोऽसावसुरात्ययस्तं व्याचष्टे। स्वाभाविकमिति॥ तत्रोपायमुपन्यस्यति। शास्त्रेति॥ असुरानभिभूय केनात्मना देवाः स्थास्यन्तीति विवक्षायामाह। ज्योतिषेति॥ प्रजापतेर्वाचि पाप्मा क्षिप्तोऽसुरैरिति कुतोऽवगम्यते तत्राह। स यः स पाप्मेति॥ प्रतिषिद्धवदनमेव पाप्मेत्ययुक्तमदृष्टस्य क्रियातिरिक्तत्वाङ्गीकारादित्याशङ्क्याह। येनेति। असभ्यं सभानर्हं स्त्रीवर्णनादिबीभत्सं भयानकम्प्रेतादिवर्णनं अनृतमयथादृष्टवचनं आदिशब्दात् पिशुनत्वं

उ॰ अथ ह प्राणमूचुस्त्वन्न उद्गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तन्देवेभ्य आगायत्

---

भा॰ कोऽसौ यदेवेदमप्रतिरूपमननुरूपं शास्त्रप्रतिषिद्धं वदति येन प्रयुक्तोऽसभ्यबीभत्सानृताद्यनिच्छन्नपि वदति अनेन कार्य्येणाप्रतिरूपवदनेनानुगम्यमानः प्रजापतेः कार्य्यभूतासु प्रजासु वाचि वर्त्तते स एवाप्रतिरूपवदनेनानुमितः स प्रजापतेर्वाचि गतः पाप्मा कारणानुविधायि हि कार्य्यमिति॥ २ ॥

तथैव प्राणादिदेवता उद्गीथनिर्वर्त्तकत्वाज्जपमन्त्रप्रकाश्या उपास्येति क्रमेण परीक्षितवन्तो देवा नासौ तत्र निश्चितमासीत् वागादिदेवताः क्रमेण परीक्ष्यमाणाः कल्याणविषयविशेषात्मसम्बन्धासङ्गहेतोरासुरपाप्मसंसर्गा-

---

आ॰ दुच्यते। किमत्र प्रजापतेर्वाचि पाप्मसत्त्वे मानमुक्तं भवतीत्याशङ्क्य स एव स पाप्मेति व्याकरोति। अनेनेति॥ प्राजापत्यासु प्रजासु प्रतिपन्नेनासत्यवदनादिना लिङ्गेन तद्वाचि पाप्मानुमीयते। विमतं पाप्मपूर्व्वकं प्रतिकूलधीविषयत्वाद्दुःखवद्यः स पाप्मा प्रजावाच्यनुमितः स एव प्रजापतिवाचि पाप्मानं गमयति। विमतं कारणपूर्व्वकं कार्य्यत्वात् घटवत्। न च प्रजागतन्दुरितं प्राजापत्यं तद्विना हेत्वन्तरादेव स्यात् कारणानुविधायित्वात् कार्य्यस्य। न च तत्कारणेऽपि परस्मिन् प्रसक्तोपापविद्धमिति श्रुतेः। न च न ह वै देवान् पापङ्गच्छतीति श्रुतेर्न सूत्रेऽपि पापे वेधस्तस्य फलावस्थस्यापापत्वेऽपि यजमानावस्थस्य तद्भावादित्यर्थः॥ आद्यसकाराभ्यां कारणस्थं पाप्मानमनूद्य तस्यैव कार्य्यस्थत्वमुच्यते। उत्तराभ्यान्तु कार्य्यस्थं पाप्मानमनूद्य तस्यैव कारणस्थत्वमिति विभागः॥ २॥

वाग्देवताया जपमन्त्रप्रकाश्यत्वमुपास्यत्वञ्च नेति निर्धार्य्यावशिष्टपर्य्यायचतुष्टयस्य तात्पर्य्यमाह। तथैवेति॥ परीक्षाफलनिर्णयमाह। देवानाञ्चेति॥ अनुपास्यत्वे हेत्वन्तरमाह।

उ॰ यत् कल्याणञ्जिघ्रति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपञ्जिघ्रति स एव स पाप्मा ॥ ३ ॥

अथ ह चक्षुरूचुस्त्वन्न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायत् । यश्चक्षुषि भोगस्तन्देवेभ्य आगायद्यत्कल्याणम्पश्यति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपम्पश्यति स एव स पाप्मा ॥ ४ ॥ अथ ह श्रोत्रमूचुस्त्वन्न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद् यः श्रोत्रे भोगस्तन्देवेभ्य आगायद्यत्कल्याणꣳ शृणोति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रति-रूपꣳ शृणोति स एव स पाप्मा ॥५॥

---

भा॰ दुद्गीथनिर्वर्त्तनासमर्थाः । अतोऽनभिधेयाः । अयतो मासद्गमयेति अनुपास्यास्याशुद्धत्वादितराव्यापकत्वाच्चेति । एवमु खल्वनुक्ता अपि एतास्त्वगादिदेवताः कल्याणाकल्याणकार्यदर्शनादेवं वागादिवद्देवैनाः पाप्मनाऽविध्यन् पाप्मना

---

आ॰ इतरेति । इतरः कार्यकारणसङ्घातः तस्मिन्नव्यापकत्वं परिच्छिन्नत्वं अतश्चानुपास्यत्वं मयमन्त्राप्रकाश्यत्वञ्चेत्यर्थः । उक्तैरिन्द्रियैरनुक्तेन्द्रियाण्युपलक्षणीयानीति विवक्षित्वोपसंहरति । एवमिति । वागादिवत्त्वगादिषु कल्पकाभावान्न पाप्मवेधोऽस्ती-

उ॰ अथ ह मन ऊचुस्त्वन्न उद्गायेति तथेति तेभ्यो मन उदगायत् यो मनसि भोगस्तन्देवेभ्य आगायद्यत्कल्याणꣳ सङ्कल्पयति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपꣳ सङ्कल्पयति स एव स पाप्मैवमुखल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन् ॥ ६ ॥ अथ हेममासन्यम्प्राणमूचुस्त्वन्न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स

---

भा॰ विद्धवन्त इति यदुक्तन्तत् पाप्मभिरुपासृजन् पाप्मभिः संसर्गं कृतवन्त इत्येतद्वागादिदेवता उपासीना अपि मृत्य्वतिगमनायाशरणाः सन्तो देवाः क्रमेण ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ अथानन्तरं ह इममित्यभिनयप्रदर्शनं आसन्यं आस्ये भवमासन्यं मुखान्तर्बिलस्थं प्राणमूचुस्त्वञ्च उद्गायेति तथेत्येवं शरणमुपगतेभ्यः स एष प्राणो मुख्य उदगायत्

---

आ॰ व्याचष्टाह। कल्याणेति। पाप्मभिरुपासृजन्पाप्मनाऽविध्यन्नित्यनयोरस्ति पौनरुक्त्यमित्याशङ्क्य व्याख्यानव्याख्येयभावान्नैवमित्याह। इति यदुक्तमिति। सम्प्रति मुख्यप्राणस्य मन्त्रप्रकाश्यत्वमुपास्यत्वञ्च वक्तुमुत्तरवाक्यमुपादाय व्याकरोति। वागादीति। क्रमेणोपासीना इति सम्बन्धः। वागादिषु नैराश्यानन्तर्यमथशब्दार्थः। विवक्षितार्थव्यापकोऽसाधारणदेहतदवयवव्यापारोऽभिनयः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ दोषासंसर्गिणं दोषेण संस्पृष्टं कर्तुमिच्छा कुतो जातेत्याशङ्क्याह। स्वेनेति। तदभ्यासानुवृत्त्या तस्य पाप्मसंसर्गकरणस्याभ्यासव-

उ॰ यथाश्मानमृत्वा लोष्टो विध्वंसेतैवं हैवविध्वं

भा॰ इत्यादि पूर्ववत् पाप्मनाऽविध्यन्त वेधनङ्कर्त्तुमिष्टवन्तस्ते च दोषासंसर्गिणं सन्तं मुख्यं प्राणं स्वेनासङ्गदोषेण वागादिषु लब्धप्रसराः तदभ्यासानुवृत्त्या संसज्यमाना विनेशु-र्विनष्टा विध्वस्ताः। कथमिवेति दृष्टान्त उच्यते। स यथा स दृष्टान्तो यथा लोकेऽश्मानमश्मपाषाणमृत्वा गत्वा प्राप्य लोष्टः पांशुपिण्डः पाषाणचूर्णनायाश्मनि निक्षिप्तः स्वयं विध्वंसेत विस्रंसेत विचूर्णीभवेत्। एवं हैव यथायन्दृष्टान्त एवमेव विध्वंसमाना विशेषेण ध्वंसमाना विष्वञ्चो नानागतयो विनेशुर्विनष्टाः यतस्तस्मादसुरविनाशाद्देवत्वप्रति बन्धभूतेभ्यः स्वाभाविकासङ्गजनितपाप्मभ्यो वियोगात्। असंसर्गधर्मिमुख्यप्राणाश्रयबलाद्देवा वागादयः प्रकृता अभवन्। किमभवन् स्वन्देवतारूपमग्न्याद्यात्मकंवक्ष्यमाणं।

आ॰ प्रादिति यावत्॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति। कथमित्यादिना॥ असुरनाशेनासङ्गजनितपाप्मवियोगे हेतुमाह। असंसर्गेति। वक्ष्यमाणं सोऽग्निरभवदित्यादि नेति शेषः॥ वागादीनां स्थितानां नष्टानाञ्च कुतोऽग्न्यादिरूपत्वमित्याशङ्क्याह। पूर्वमपीति॥ न तर्हि तेषाम्परिच्छेदाभिमानः स्यादित्याशङ्क्याह। स्वाभाविकेनेति॥ परिच्छेदाभिमानादग्न्याद्यात्माभिमानस्य बलवत्त्वं सूचयति। प्रास्त्वेति॥ न केवलमत्रो*क्तानामेवासुराणाम् संसर्गधर्मिप्राणाश्रयादिनाशः। किन्तु तुल्यजातीयानामपीत्यभिप्रेत्याह। किञ्चेति॥ वागादीनामग्न्यादिभावापत्तिवचनेन तत्संहितस्य यजमानस्य देवताप्राप्तिरासुरपाप्मध्वंसश्च फलमित्युक्तं। तच

* अप्राप्तानामिति पाठान्तरः।

उ॰ समाना विषङ्क्त्वा विनेमुस्ततो देवा अभवन्पराऽ

भा॰ पूर्वमप्यध्यात्मानं । एवं यक्तः स्वाभाविकेन पाप्मना तिरस्कृतविज्ञानाः पिण्डमात्राभिमाना आसन् । ते तत्पाप्मवियोगादुज्झित्वा पिण्डमात्राभिमानं शास्त्रसमर्पितवागाद्यध्यात्माभिमाना बभूवुरित्यर्थः । किञ्च ते प्रतिपक्षभूता असुराः पराभवन्नित्यनुवर्त्तते । पराभूता विनष्टा इत्यर्थः ॥ यथा पुराकल्पेन वर्णितः पूर्वयजमानोऽतिक्रान्तकालिकः । एतामेवाख्यायिकारूपां श्रुतिं दृष्ट्वा तेनैव क्रमेण वागादिदेवताः परीक्ष्य तासां पाप्मरूपासङ्गदोषवत्त्वेनादोषास्पदं मुख्यं प्राणमात्मत्वेनोपगम्य वागाद्याध्यात्मिकपिण्डमात्रपरिच्छिन्नात्माभिमानं हित्वा वैराजपिण्डाभिमानं वागाद्यग्न्याद्यात्मविषयं वर्त्तमानप्रजापतित्वं शास्त्रप्रकाशितं प्रतिपन्नः तथैवायं यजमानस्तेनैव

आ॰ पूर्वकल्पीययजमानस्यातिशयशालित्वाद्ययोक्तफलवत्त्वेऽपि नेदानीन्तनस्यैवमित्याशङ्क्य परास्य भवतीत्यादिश्रुतिमवतारयति । यथेति । पूर्वकल्पनाप्रकारेण पूर्वजन्मस्थो यजमानः शास्त्रप्रकाशितं वर्तमानप्रजापतित्वम्प्रतिपन्नो यथेति सम्बन्धः । पूर्वयजमान इत्यस्य व्याख्या अतिक्रान्तकालिक इति ॥ पुराकल्पमेव दर्शयति । एतामिति । तेनेति श्रुत्युक्तेनेत्येतत् । तेनैव विधिना श्रुतिप्रकाशितेन क्रमेण मुख्यं प्राणमात्मत्वेनोपगम्येति शेषः ॥ तापत्वे आदित्यादिस्य दिवमिति कुतो विशेषणमर्थसिद्धत्वाद्विशेषणेनाशङ्क्याह । यत इति ॥ तस्य देवत्वनियमे हेतुमाह । पारमार्थिकेति । अपरिच्छिन्नदेवतात्वमत्र पारमार्थिकमात्मस्वरूपं विवक्षितं । तत्तिरस्करणकारणत्वादुक्तपाप्मनो विशेषणमर्थवदिति शेषः ॥ यदामेयोऽवकाशाश इति यत् य एवं वेदेति प्रतिज्ञार्थोपपत्त्यवि-

उ॰ मुरा भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति
य एवं वेद ॥ ७ ॥

---

भा॰ विधिना भवति । प्रजापतिस्वरूपेणात्मना परा चास्य प्रजापतित्वप्रतिपक्षभूतः पाप्मा भ्रातृव्यो भवति ॥ यतो ऽद्वेष्टापि भवति कश्चिद्भ्रातृव्यो भरतादितुल्यो यस्त्विन्द्रिय-विषयासङ्गजनितः पाप्मा भ्रातृव्यो द्वेष्टा च । पारमार्थिकात्मस्वरूपतिरस्करणहेतुत्वात् । स च पराभवति विशीर्यते लोष्टवत्प्राणपरिष्वङ्गात् । कस्यैतत्फलमित्याह । य एवंवेद । यथोक्तं प्राणमात्मत्वेन प्रतिपद्यते पूर्वयजमान-वदित्यर्थः ॥ फलमुपसंहृत्याधुनाऽऽख्यायिकारूपमेवाश्रित्याह ॥ कस्माच्च हेतोर्वागादीन्मुक्त्वा मुख्य एव प्राण आत्मत्वेनाश्रयितव्य इति तदुपपत्तिनिरूपणाय । यस्मादयं वागादीनां पिण्डादीनाञ्च साधारण आत्मेत्येतमर्थमाख्यायिकया दर्शयन्त्याह श्रुतिः ॥ ७ ॥

---

आ॰ धिपरं वाक्यं । यतस्त्वेवं विद्यादिति विवक्षितमित्यभिप्रेत्याह । यथोक्तमिति ॥ फलवत्प्रधानोपास्त्युक्तत्वात्ते होचुरित्याद्युत्तरवाक्यं गुणोपास्तिपरमित्याह । फलमिति । फलवत्प्रधान-विधिमुक्त्वा सम्पत्याख्यायिकामेवाश्रित्य गुणविशिष्टप्राणोपास-नमाहानन्तरश्रुतिरित्यर्थः ॥ प्रश्नोत्तरत्वेन चोत्तरग्रन्थमव-तारयति । कस्माच्चेति । विशुद्धस्योपास्यत्वाद्धेत्वन्तरं जिज्ञास्यमिति द्योतयितुं च शब्दः । करणानां कार्यस्य तदवयवानाञ्च प्राणो यस्मादात्मा व्यापकस्तस्मात्स एवाश्रयितव्य इत्युपपत्तिनिरूप-णार्थं तस्य व्यापकत्वमित्येतदर्थं आख्यायिकया दर्शयन्ती श्रुति-रनन्तरमाहेति योजना । तच्छब्दस्तस्मादर्थे ॥ ७ ॥

उ॰ ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्ते-त्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः ॥८॥

---

भा॰ ते प्रजापतिप्राणा मुख्येन प्राणेन परिप्रापितदेवस्वरूपा ह ऊचुः उक्तवन्तः फलावस्थाः किमित्याह। क्व नु इति वितर्के। क्व नु कस्मिन्नु सोऽभूत्। यो नोऽस्मान् इत्थमेवमसक्तं सञ्जितवान् देवभा*वमात्मत्वेनोपगमितवान्। स्मरन्ति हि लोके केनचिदुपकृता उपकारिणं लोकवदेव स्मरन्तो विचारयमाणाः कार्य्यकरणसङ्घाते आत्मन्येवोपलब्धवन्तः। कथमयमास्येऽन्तरिति आस्ये मुखे य आकाशस्तस्मिन्नन्तरयम्प्रत्यक्षो वर्त्तत इति। सर्वो हि लोको विचार्य्याध्यवस्यति। तथा देवाः। यस्मादयमन्तराकाशे वागाद्यात्मत्वेन विशेषमनाश्रित्य वर्त्तमान उपलब्धो

---

आ॰ प्राणस्यात्मत्वादि व्यक्तीकर्त्तुमाख्यायिकाश्रुतिं विभजते। ते प्रजापत्येति। वागादयश्चेत् प्राणमाश्रित्य फलावस्थास्तर्हि किमिति प्राणं स्मरन्ति प्राणप्राप्यत्वादित्याशङ्क्याह। स्मरन्ति हीति। विचारफलं उपलब्धिं कथयति। लोकवदिति। तामेवोपलब्धिमाकाङ्क्षाद्वारेण विवृणोति। कथमिति। दृष्टान्तं स्पष्टयति। सर्वो हीति। तथा देवा विचार्य्य प्राणमास्यान्तराकाशस्थं निर्धारितवन्त इत्याह। तथेति। किमनया कथया सिद्धमित्याशङ्क्याह। यस्मादिति। उपलब्धिसिद्धेऽर्थे युक्तं समुच्चिनोति। विशेषेति। सर्वानेव वागादीनविशेषेणाग्न्यादिभावेन प्राणः सञ्जितवान्। न चासाधारणः साधारणं कार्य्यं निवर्त्तयति अतो युक्तितोऽप्य-

---

* देवभावायेति पाठान्तरः।

उ॰ सा वा एषा देवता दूर्नाम दूरꣳ ह्यस्या मृत्यु-

भा॰ देवैः । तस्मात्स प्राण अयास्यो विशेषानाश्रयत्वादसङ्क-
ल्पितवान् वागादीन् । अत एवाङ्गिरसः । आत्मा कार्य्य-
करणानां । कथमाङ्गिरसः । प्रसिद्धं ह्येतदङ्गानां कार्य्यक-
रणलक्षणानां रसः सार आत्मेत्यर्थः । कथं पुनरङ्गरसत्वं
तदपाये शोषप्राप्तेरिति वक्ष्यामः । यस्माच्चायमङ्गरसत्वा-
द्विशेषानाश्रयत्वाच्च कार्य्यकरणानां साधारण आत्मा वि-
शुद्धश्च तस्माद्वागादीनपास्य प्राण एव आत्मत्वेनाश्रयितव्य
इति वाक्यार्थः । आत्मा ह्यात्मत्वेनोपगन्तव्योऽविपरीत-
बोधाच्छ्रेयःप्राप्तेर्विपर्य्यये चानिष्टप्राप्तिदर्शनात् ॥ ८ ॥

स्यान्मतं प्राणस्य विशुद्धिरसिद्धेति । ननु परिहृतमेत-
द्वागादीनां कल्याणवदनाद्यासङ्गवत्प्राणस्यासङ्गास्पदत्वा-
भावेन । वाढं । किन्त्वाङ्गिरसत्वेन वागादीनामात्मत्वोक्त्या

आ॰ यमास्यान्तराकाशे वर्त्तमानःसिद्ध इत्यर्थः। आयास्यत्ववदाङ्गिरसत्वं
गुणान्तरं दर्शयति। अत एवेति। सर्वसाधारणत्वादेवेति यावत्॥
तथापि कुतोऽस्याङ्गिरसत्वं साधारणेऽपि नभसि तदनुपलब्धेरि-
त्याशङ्क्य परिहरति। कथमित्यादिना॥ अङ्गेषु च रसधातोः सार-
त्वप्रसिद्धेर्न प्राणस्य तथात्वमिति शङ्कित्वा समाधत्ते कथं पुन-
रित्यादिना॥ कस्माच्च हेतोरित्यादि चोद्यपरिहारमुपसंहरति।
यस्माच्चेति॥ वाक्यार्थं प्रपञ्चयति। आत्मा हीति॥ ८॥

प्राणस्य शुद्धत्वाद्यापकत्वाच्चोपास्यत्वमुक्तं तस्य शुद्धत्वं वागादि-
वदसिद्धमित्याशङ्कते। स्यान्मतमिति॥ शङ्कामाक्षिप्य समाधत्ते।
नन्वित्यादिना। यवेन स्पृष्टिर्यस्यास्ति तेन स्पृष्टायास्याशुद्धता-
वदशुद्धत्वं वागादिसम्बन्धादशुद्धत्वाशङ्का प्राणस्येत्यभिमतीत्यर्थः॥

उ॰ दूरꣳ ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥९॥

भा॰ वागादिद्वारेण प्रवक्ष्यमाणदृष्टेरिवाशुद्धता प्रत्युत इत्याह। शुद्ध एव प्राणः कुतः सा वा एषा देवता दूर्नाम यं प्राणं प्राप्यासनमिव लोष्टवत् विध्वस्ता असुराः तं पराघ्नन्ति। सेति। सैवैषा येयं वर्त्तमानयजमानशरीरस्था देवैर्निर्धारिताऽयमास्येऽन्तरिति देवता च स्यात् उपासनक्रियायाः कर्म्मभावेन गुणभूतत्वात्। यस्मात्सा दूर्नाम दूरित्येवं ख्याता। नामशब्दः ख्यापनपर्यायः। तस्मात्प्रसिद्धास्या विशुद्धि र्दूर्नामत्वात्। कुतः पुनर्दूर्नामत्वमित्याह। दूरं दूरे हि यस्मादस्याः प्राणदेवताया मृत्यु रासङ्गलक्षणः पाप्माऽसंश्लेषधर्म्मित्वात्प्राणस्य समीपस्थस्यापि दूरता मृत्योस्तस्माद्दूरित्येवं ख्यातिरेव प्राणस्य विशुद्धिज्ञापिका। विदुषः फलमुच्यते। दूरं ह वा अस्मान्

आ॰ तात्पर्य्यं दर्शयन्नुत्तरवाक्यमुत्तरत्वेनावतारयति। आहेति। नन्वत्र प्राणो नोच्यते स्त्रीलिङ्गेनार्थान्तरोक्तिप्रतीतेरित्याशङ्क्याह। यं प्राणमिति। तस्यामूर्त्तस्य परोक्षत्वादपरोक्षवाची च कथमेतच्छब्दो युज्यते तत्राह। सैवेति। कथं प्राणो देवताशब्दो न हि तस्य तच्छब्दत्वं प्रसिद्धमित्याशङ्क्याह। देवता चेति। यागे हि देवता कारकत्वेन गुणभूता प्रसिद्धा। तथा प्राणोऽपि ध्यातव्यत्वे सति विहितक्रियागुणत्वाद्देवतेत्यर्थः। प्राणोपास्तेर्द्विविधं फलं पापहानिर्देवताभावश्च। तत्र पापहानेरेव प्रधानफलत्वात्र प्रवादुर्गुणविशिष्टप्राणोपास्तिरिह विवक्षितेति वाक्यार्थमाह। यस्मादिति। न तावत्प्राणदेवताया दूर्नामत्वं निरूढं तत्र तच्छब्दप्रसिद्धेरदर्शनात्रापि यौगिकं प्राणस्य प्रत्यक्षत्वेदूरत्वाभावादित्याक्षिपति। कुतः पुनरिति। परिहरति। आहेति।

उ॰ सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य

---

भा॰ मृत्युर्भवति । अस्मादेवंविदो य एवं वेद । तस्मादेवमिति प्रकृतं विशुद्धिगुणोपेतं प्राणमुपास्त इत्यर्थः । उपासनं नामोपास्यार्थवादे यथा देवतादिस्वरूपं श्रुत्या ज्ञाप्यते तथा मनसोपगम्यासनं चिन्तनं लौकिकप्रत्ययाव्यवधानेन यावत्तद्देवतादिस्वरूपात्माभिमानाभिव्यक्तिरिति ॥ लौकिकात्माभिमानवत् । देवो भूत्वा देवानप्येति किन्देवतोऽस्यां प्राच्यां दिश्यसीत्येवमादिश्रुतिभ्यः ॥ ८ ॥

सा वा एषा देवता दूरं ह वास्मान्मृत्युर्भवतीत्युक्तं । कथं पुनरेवंविदो दूरं मृत्युर्भवतीत्युच्यते एवंवित्त्वविरोधादिन्द्रियविषयसंसर्गासङ्गजो हि पाप्मा प्राणात्माभिमानिनो हि विरुध्यते । वागादिविशेषात्माभिमानहेतुत्वात्स्वा-

---

आ॰ कथं पाप्मसन्निधौ वर्त्तमानस्य ततो दूरत्वमित्याशङ्क्याह । असंश्लेषेति । उपास्ते सदा भावयतीति यावत् । ब्रह्मज्ञानादिव प्राकृतज्ञानात्फलसिद्धिसंभवे किं सदा तद्भावनयेत्याशङ्क्य भावनापर्य्यायोपासनशब्दार्थमाह । उपासनं नामेति । दीर्घकालादरनैरन्तर्य्यरूपविशेषणत्रयं विवक्षित्वाह । लौकिकेति । तस्य मर्य्यादां दर्शयति । यावदिति । मनुष्योऽहमितिवद्देवोऽहमिति यस्य जीवत एवाभिमानाभिव्यक्तिस्तस्यैव देहपातादूर्ध्वं तद्भावः फलतीत्यत्र प्रमाणमाह । देवो भूत्वेति । का देवता रूपं तवेति । किंदेवोऽसि तद्भावो भातीत्यर्थः । ९ ।

कथिद्वाक्यान्तरमवतार्य्य वृत्तं कीर्त्तयति सा वा इति । नित्यानुष्ठानात्पापहानिर्धर्म्मात्पापक्षयश्रुतेः । न चेदमुपासनं नित्यं नैमित्तिकं वा देवतात्मत्वकामिनो विधानात्तत्कथं पापमेवंविदो दूरे भवती-

भा॰ भाविकाज्ञानहेतुत्वाच्च । शास्त्रजनितो हि प्राणात्मा-
भिमानस्तस्मादेवंविदः पाप्मा दूरम्भवतीति युक्तं विरोधा-
त्तदेतत् प्रदर्शयति । सा वा एषा देवतेत्युक्तार्थमेतासां
वागादीनां देवतानां पाप्मानं मृत्युं स्वाभाविकाज्ञानप्र-
युक्तेन्द्रियविषयसंसर्गासङ्गजनितेन हि पाप्मना सर्वो म्रियते
स ह्यतो मृत्युस्तं प्राणात्माभिमानरूपाभ्यो देवताभ्योऽप-
च्छिद्यापहृत्य प्राणात्माभिमानमात्रतयैव प्राणोऽपहन्तेत्यु-
च्यते । विरोधादेव तु पाप्मैवंविदो दूरङ्गतो भवति किं
पुनश्चकार देवतानां पाप्मानं मृत्युमपहत्येत्युच्यते ॥

---

आ॰ त्याक्षिपति । कथं पुनरिति ॥ विरोधिसन्निपाते पूर्वध्वंसमाव-
श्यकं मन्वानः समाधत्ते । उच्यत इति ॥ उक्तमेव व्यनक्ति । इन्द्रि-
येति ॥ इन्द्रियाणां विषयेषु संसर्गे योऽभिनिवेशस्तेन जनितः पाप्मा
परिच्छेदाभिमानो परिच्छिन्नेऽप्राणात्मन्यात्माभिमानस्ततो विरु-
ध्यते परिच्छेदापरिच्छेदयोर्विरोधस्य प्रसिद्धत्वादित्यर्थः ॥ विरोधं
साधयति । वागादीति ॥ पाप्मनो वागादिविशेषवत्त्वात्मनि
विशिष्टेऽभिमानहेतुत्वादाधिदैविकापरिच्छिन्नाभिमाने ध्वंसो
युज्यते । दृश्यते हि । चाण्डालभाण्डसम्बन्धिनो जलस्य गङ्गाद्य-
*विशेषभावापत्तावपेयत्वनिवृत्तिः । अशुच्यपि पयः प्राप्य गङ्गां
याति पवित्रतामिति न्यायादित्यर्थः ॥ यन्नैसर्गिकाज्ञानजन्यं तदा-
गन्तुकप्रमाणज्ञानेन निवर्त्यते । यथा रज्जुसर्पादिज्ञानं । नैसर्गि-
काज्ञानजन्यश्च पाप्मा । तेन प्रामाणिकप्राणविज्ञानेन तद्ध्वस्तिरि-
त्याह । स्वाभाविकेति । नन्वभिमानयोर्विरोधाविशेषाद्बाध्यबाध-
कत्वव्यवस्थायोगाद्द्वयोरपि मिथो बाधः स्यात्तत्राह । शास्त्रजनितो
हीति ॥ उक्तमेव पापध्वंसरूपविद्याफलं प्रपञ्चयितुमुत्तरवाक्य-
मित्याह । तदेतदिति ॥ मृत्युमपहत्य यत्रासान्दिशामन्तस्तद्गमया-
ञ्चकारेति सम्बन्धः । कथं पाप्मा मृत्युरुच्यते तत्राह । स्वाभाविकेति ॥

---

* गङ्गाद्यविशेषभावाय पेयत्वनिवृत्तिरिति पुस्तकान्तरपाठः ॥

उ॰ यत्रासां दिशामन्तस्तद्गमयाञ्चकार तदासां

---

भा॰ यत्र यस्मिन्नासां प्राच्यादीनां दिशामन्तोऽवसानं तत्तत्र गमयाञ्चकार गमनं कृतवानित्येतत्। ननु नास्ति दिशामन्तः कथमन्तं गमितवानित्युच्यते। श्रौतविज्ञानवज्जनावधिनिमित्तकल्पितत्वाद्दिशां तद्विरोधिजनाध्युषित एव देशो दिशामन्तो देशान्तोऽरण्यमिति यददित्यदोषः तत्तत्र गमयित्वासां देवतानां पाप्मन इति द्वितीया बहुवचनं विन्यदधाद्विविधं न्यग्भावेनादधात्स्थापितवती प्राणदेवता प्राणात्माभिमानशून्येष्वन्त्यजनेष्विति सामर्थ्याद्विन्द्रियसंसर्गजो हि स इति प्राणाश्रयतावगम्यते। तस्मात्तमन्त्यं जनं नेयात् न गच्छेत्सम्भाषणदर्शनादिभिर्न संसृजेत्। तत्संसर्गे पाप्मना संसर्गः कृतः स्यात्पाप्माश्रयो

---

आ॰ अपहत्येत्यत्र पूर्ववदन्वयः। प्राणदेवता चेत्पाप्मानं हन्ति सदैव किमिति हन्यादित्याशङ्क्याह। प्राणात्मेति। भवतु प्राणो वागादीनां पाप्मनोऽपहन्ता विदुषस्तु किमायातमित्याशङ्क्याह। विरोधादेवेति। अनन्ताकाशदेशत्वाद्दिशामन्ताभावाद्गमयाञ्चकारेत्याद्ययुक्तमिति शङ्कते। नन्विति। शास्त्रीयज्ञानकर्मसंस्कृतो जनो मध्यदेशः। प्रसिद्धस्यापि तदधिष्ठितत्वेन मध्यदेशत्वात् तत्राप्यन्त्यजाधिष्ठितदेशस्य पापीयस्त्वस्वीकारादतस्तं जनं तदधिष्ठितश्च देशमवधिकृत्वा तेनैव निमित्तेन दिशां कल्पितत्वादानन्त्याभावात्पूर्वोक्तजनातिरिक्तजनस्य तदधिष्ठितदेशस्य चान्तत्वात्तस्मैर्मध्यदेशादन्यो देशो दिशामन्त इत्युक्ते न काचिदनुपपत्तिरिति परिहरति। उच्यत इति। किमित्यन्त्यजनेष्वित्यधिकावापः क्रियते तत्राह। इति सामर्थ्यादिति। देशमात्रे पाप्मावस्थानानुपपत्तिरित्यर्थः। तामेवानुपपत्तिं साधयति। इन्द्रियेति।

उ॰ पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमिया-
न्नेत्पाप्मानं मृत्युमन्ववायानीति ॥ १० ॥

सा वा एषा देवतैतासां देवतानां पाप्मानं
मृत्युमपहत्याथैना मृत्युमत्यवहत् । ११ ॥

---

भा॰ हि सः तज्जननिवासं चान्तं दिगन्तमन्त्यवासं नेयाज्जन-
शून्यमपि जनमपि तद्देशवियुक्तमित्युक्तमित्यभिप्रायः । ने-
दिति परिभयार्थे निपातः । इत्थं जनसंसर्गे पाप्मानं मृत्यु-
मन्ववायानीति । अनु अव अयानीति अनुगच्छेयमि-
त्येवं भीतो जनमन्तं नेयादिति पूर्व्वेण सम्बन्धः ॥ १० ॥

सा वा एषा देवता तदेतत्प्राणात्मज्ञानकर्म्मफलं वागा-
दीनामग्न्याद्यात्मत्वमुच्यते । अथैना मृत्युमत्यवहत् । यस्मा-
दाध्यात्मिकपरिच्छेदकरः पाप्मा मृत्युः प्राणात्मविज्ञाने-
नापहतस्तस्मात्स प्राणोऽपहन्ता पाप्मनो मृत्योः । तस्मात्स

---

आ॰ भवतु यथोक्तो दिगन्तस्तथा च पाप्मसंसर्गोऽस्तु तथापि किमा-
यातमित्याशङ्क्य तस्य शिष्टैस्त्याज्यत्वमित्याह । तस्मादिति ।
निषेधद्वयस्य तात्पर्य्यमाह । जनशून्यमपीति । प्राणोपास्ति-
प्रकरणे निषेधश्रुतेस्तदुपासकेनैवायं निषेधोऽनुष्ठेयो न सर्व्वैरि-
त्याशङ्क्याह । नेदित्यादिना । इत्थं श्रुतं निषेधं न चेदनुकुर्य्यां
ततः पाप्मानमनुगच्छेयमिति निषेधातिक्रमादिति सर्व्वस्य भयं
जायते न प्राणोपासकस्यैव । अतः सर्व्वोऽपि पापाद्भीतो न
भयकृच्छेद् वाक्यं हि प्रकरणाद्बलवदित्यर्थः ॥ १० ॥

द्विविधमुपास्तिफलं पापहानिर्देवताभावश्च । तत्र पाप-
हानिमुपदिशता प्रासङ्गिकसाधारणो निषेधो दर्शितः । सम्प्रति
देवताभावं वक्तुमुत्तरवाक्यमिति प्रतीकोपादानपूर्व्वकमाह ।
सा वा एषेति । अथ शब्दावद्योतितमर्थं कथयति । यस्मादिति ॥

उ॰ स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्य-
मुच्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमति-
क्रान्तो दीप्यते ॥ १२ ॥

---

भा॰ एष प्राण*एना वागादिदेवताः प्रकृतं पाप्मानं मृत्युमतीत्या-
वहत्प्रापयत्स्वं स्वमपरिच्छिन्नमग्न्यादिदेवतात्मरूपं। ११॥

स वै वाचमेव प्रथमामत्यवहत्। स प्राणो वाचमेव
प्रथमां प्रधानामित्येतदुद्गीथकर्म्मणीतरकरणापेक्षया सा-
धकतमत्वं प्राधान्यं तस्यास्तां प्रथमामत्यवहद्वहनं कृत-
वान्। तस्याः पुनर्मृत्युमतीत्योढायाः किंरूपमित्युच्यते।
सा वाक् यदा यस्मिन् काले पाप्मानं मृत्युमत्यमुच्यत
अतीत्यामुच्यत मोचिता स्वयमेव तदा सोऽग्निरभवत्सा
वाक् पूर्व्वमप्यग्निरेव सती मृत्युवियोगेऽप्यग्निरेवाभवत्।
एतावांस्तु विशेषो मृत्युवियोगे। सोऽयमतिक्रान्तोऽग्निः
परेण मृत्युं परस्तान्मृत्योर्दीप्यते। प्राङ्मोक्षान्मृत्युप्रति-
बद्धोऽध्यात्मवागात्मना नेदानीमिव दीप्तिमानासीदि-
दानीं तु मृत्युं परेण दीप्यते मृत्युवियोगात् ॥ १२ ॥

---

आ॰ पाप्मापहन्तृत्वमनूद्यावशिष्टभागं व्याचष्टे। तस्मात्स्व इति॥११॥
सामान्योक्तमर्थं विशेषेण प्रपञ्चयति। स वै वाचमित्यादिना॥
कथं वाचः प्राथम्यं तदाह। उद्गीथेति॥ वाचो मृत्युमतिक्रान्ता-
या रूपं प्रश्नपूर्व्वकं प्रदर्शयति। तस्या इति॥ अग्नेरग्नित्व-
विरोधं धुनीते। सा वागिति॥ पूर्व्वमपि वाचोऽग्नित्वेनोपासना-
लब्धन्तर्ह्यग्नित्वमित्याशङ्क्याह। एतावानिति॥ उक्तं विशेषं
विशदयति। प्राङिति॥ १२॥

---

* एता इति पाठान्तरः।

उ॰ अथ प्राणमत्यवहत्स यदा मृत्युमत्यमुच्यत स वायुरभवत्सोयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥ १३ ॥ अथ चक्षुरत्यवहत् तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत्सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥ १४ ॥ अथ श्रोत्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवंस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥ १५ ॥ अथ मनोऽत्यवहत्तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भा-

---

भा॰ तथा प्राणः प्राणो वायुरभवत्। स तु पवते मृत्युं परेणातिक्रान्तः। सर्व्वमन्यदुक्तार्थं । १३ ॥ तथा चक्षुरादित्योऽभवत्, स तु तपति ।१४॥ तथा श्रोत्रं दिशोऽभवन् । दिशः प्राच्यादिविभागेनावस्थिताः । १५ ॥ मनश्चन्द्रमा भाति। यथा पूर्व्वं यजमानं वागाद्यग्न्यादिभावेन मृत्युमत्यवहत्। एवमेनं वर्त्तमानयजमानमपि ह वै एषा प्राणदेवता अतिवहति । वागाद्यग्न्यादिभावेनैव यो वागादि

---

आ॰ वागादीनामग्न्यादिदेवतात्मप्राप्तावुपासकस्य निमायातं । न हि तदेव तस्य फलमित्याशङ्क्याह । यथेति । देवतात्मप्रतिबन्धध्यानात्मनः सर्वात्मप्राणात्मकत्वेन वागादीनामुपासकोपाधिभूतानामग्न्यादिदेवतात्मैव सोऽपि सदा प्राणमात्मत्वेनध्यायन् भावनावशाद्वैराजं पदं पूर्वयजमानवदाप्नोतीति भावः । कस्येदं फलमित्याकाङ्क्षायां उपासकं विशिनष्टि । यो वागादीति । उक्ता-

उ॰ त्येवꣳ ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥ १६ ॥

अथात्मनेऽन्नाद्यमागायद्यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति ॥ १७ ॥

---

भा॰ पञ्चकविशिष्टं प्राणं वेद तं यथा यथोपासते तदेव भवतीति श्रुतेः ॥ १६ ॥

अथात्मने । यथा वागादिभिरात्मार्थमागानं कृतं तथा मुख्योऽपि प्राणः सर्वप्राणसाधारणं प्राजापत्यं फलमागानं कृत्वा त्रिषु पवमानेष्वथानन्तरं शिष्टेषु नवसु स्तोत्रेष्वात्मने आत्मार्थमन्नाद्यमन्नञ्च तदाद्यञ्चान्नाद्यमागायत् । कर्त्तुः कामसंयोगो वाचनिक इत्युक्तं ॥ कथं पुनस्तदन्नाद्यं प्राणेनात्मार्थमागीतमिति गम्यत इत्यत्र हेतुमाह । यत्किञ्चेति । सामान्यान्नमात्रपरामर्शार्थः । हीति हेतौ यस्माल्लोके प्राणिभिर्यत्किञ्चिदन्नमद्यते भक्ष्यते तदनेनैव प्राणेनैव । अन इति प्राणस्याख्या प्रसिद्धा । अनः शब्दः सान्तः

---

आ॰ पासनस्य प्रागुक्तं फलमनुगुणमित्यत्र मानमाह । तं यथेति । उपास्यस्य प्राणस्य कार्य्यकरणसङ्घातस्य विधारकत्वं नाम गुणान्तरं वक्तुमुत्तरवाक्यं ॥ १३ । १४ । १५ । १६ ॥

तदादाय व्याकरोति ॥ यथेत्यादिना ॥ फलमुद्गातुर्विक्रीतस्य फलसम्बन्धस्तत्राह । कर्तुरिति ॥ अन्नागानमात्मार्थमित्यत्र प्रश्नपूर्व्वकं वाक्यशेषमनुकूलयति । कथमित्यादिना ॥ तमेव हेतुमाह । यस्मादिति । प्राणेनैव तदद्यत इति सम्बन्धः ॥ यस्मादित्यस्य तस्मादित्यादिभाष्येणान्वयः । अनितेर्द्धातोरनशब्दश्चेत्प्राणपर्य्यायस्तर्हि कथं घटते तच्छब्दप्रयोगस्तत्राह । अनः शब्द

उ० ते देवा अब्रुवन्नेतावद्वा इदँ सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते

---

भा० प्रकटवाची यस्मादनः स्वरान्तः स प्राणपर्यायः प्राणेनैव तदद्यत इत्यर्थः। किंच न केवलं प्राणेनाद्यत एवान्नाद्यमस्मिञ्छरीराकारपरिणतेऽन्नाद्ये इह प्रतितिष्ठति प्राणस्तस्मात्प्राणेनात्मनः प्रतिष्ठार्थमाशीतमन्नाद्यं। यदपि प्राणेनान्नादनं तदपि प्राणस्य प्रतिष्ठार्थमेवेति न वागादिष्विव कल्याणासङ्गजपाप्मसम्भवः प्राणेऽस्ति ॥ १७ ॥

ते देवाः। नन्ववधारणमयुक्तं प्राणेनैव तदद्यत इति। वागादीनामप्यन्ननिमित्तोपकारदर्शनात्। नैष दोषः। प्राणद्वारत्वात्तदुपकारस्य। कथं प्राणद्वारकोऽन्नकृतो वागादीनामुपकार इत्येतमर्थं प्रदर्शयन्नाह। ते वागादयो देवाः स्वविषयद्योतनाद्देवा अब्रुवन्नुक्तवन्तो मुख्यं प्राणमिदमेता-

---

आ० इति। इतश्च प्राणस्य स्वार्थमन्नागानं युक्तमित्याह। किंचेति। प्राणेन वागादिवदात्मार्थमन्नमाशीतं चेत्तर्हि तस्यापि पाप्मवेधः स्यादित्याशङ्क्याह। यदपीति। इहान्ने देहाकारपरिणते प्राणस्तिष्ठति तदनुसारिणश्च वागादयः स्थितिभाजः। प्राणजातस्थित्यर्थं प्राणस्यान्नमिति न पाप्मवेधप्रसक्तिरित्यर्थः। १७।

भर्ता स्वेकः पुरोगन्तेत्यादिगुणविधानार्थं वाक्यान्तरमादत्ते। ते देवा इति। तस्य विवक्षितमर्थं वक्तुमादावाक्षिपति। नन्विति। अयुक्तत्वे हेतुमाह। वागादीनामिति। अवधारणानुपपत्तिं दूषयति। नैष दोष इति। यथा प्राणस्योपकारोऽन्नकृतो न वागादिद्वारकस्तथा तेषामपि नासौ प्राणद्वारको विशेषाभावादिति मन्यते। कथमिति। वाक्येन परिहरति। एतमर्थमिति। आह

उ० वै माभिसंविशतेति तथेति तᳫं समन्तं परिण्य विशन्त ॥

भा० वस्त्रातोऽधिकमस्ति। वै इति स्मरणार्थं। *इदन्तावत्सर्वमेतावद्देव किं यदन्नं प्राणस्थितिकरमद्यते लोके तत्सर्वमात्मने आत्मार्थमागासीरागीतवानस्यागानेनात्मनस्त्राततमित्यर्थः। वयञ्चास्यान्नमन्तरेण स्थातुन्नोत्सहामहे ऽतोऽनुपस्थानो ऽस्मानस्मिन्नन्ने आत्मार्थे तवान्ने आभजस्वाभाजयस्व। लिङोऽश्रवणं छान्दसं। अस्मांश्चान्नभागिनः कुरु इतर आह। ते यूयं यद्यन्नार्थिनः वै मा मामभिसंविशत समन्ततो मामाभिमुख्येन निविशतेत्येवमुक्तवति प्राणे तथेत्येवमिति तन्प्राणं परिसमन्तं परिसमन्तात्प्रविशन्त नियमेनाविशन्त तन्प्राणं परिवेष्ट्य निविष्टवन्त इत्यर्थः॥

आ० विशेषमिति शेषः॥ तेषां देवत्वं साधयति। स्वविषयेति॥ तत्र प्रसिद्धिं प्रमाणयितुं वै शब्द इत्याह। वा इति॥ स्मरणार्थं इति तत्प्रसिद्धस्यार्थस्येति शेषः॥ वाक्यार्थमाह। इदन्तावदिति॥ एतावत्त्वमेव व्याचष्टे। तत्सर्वमिति॥ किमिदं प्राणार्थमन्नमागानं नाम तदाह। आगानेनेति॥ का पुनरेतावता भवताक्षतिस्तत्राह। वयञ्चेति॥ अन्नमन्तरेण ममापि स्थातुमशक्तेर्मदर्थन्तदागीतमिति शेषमाह। अत इति॥ आभजस्वेति श्रूयमाणे कथमन्यथा व्याख्यायते तत्राह। लिङ इति॥ तवैवान्नस्वामित्वमस्माकमपि तत्र प्रवेशमात्रं स्थित्यर्थमपेक्षितमिति वाक्यार्थमाह। अस्मांश्चेति। वैशब्दो यद्यर्थे प्रयुक्तः॥

---

* इदन्तावत्सर्वं किं यदन्नं लोके तत्सर्वमेतावद्देवेति विशेषपाठः।

उ॰ तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवꣳ ह वा एनꣳ स्वा अभिसंविशन्ति भर्त्ता स्वानाꣳ श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य उ

---

भा॰ तथा निविष्टानां प्राणानुज्ञया तेषां प्राणेनैवाद्यमानं प्राणस्थितिकरं यदन्नं तृप्तिकरं भवति न स्वातन्त्र्येण सम्बन्धो वागादीनां। तस्माद्युक्तमेवावधारणमनेनैव तद-द्यत इति। तदेव चाह। तस्माद्यस्मात्प्राणाश्रयतयैव प्राणानुज्ञयाभिसंनिविष्टा वागादीन्देवतास्तस्माद्यदन्नम-नेन प्राणेनात्ति लोकस्तेनान्नेनैता वागाद्यास्तृप्यन्ति। वा-गाद्याश्रयत्वं प्राणं यो वेद वागादयश्च प्राणाश्रया इति तमप्येवमेव ह वै स्वा ज्ञातय अभिसंविशन्ति वागादय इव प्राणं। ज्ञातीनामाश्रयणीयो भवतीत्यभिप्रायः। अभि-संनिविष्टानां च स्वानां प्राणवदेव वागा*दीनां स्वान्नेन भर्त्ता भवति। तथा श्रेष्ठः पुरोऽयत एता गन्ता भवति। वागादीनामिव प्राणः तथान्नादोऽनामयावीत्यर्थः। अधि-

---

आ॰ प्राणं परिवेष्ट्य तदनुज्ञया वागादीनामन्नार्थिनामवस्थान-श्चैतेषामपि प्राणवदन्नसम्बन्धः स्यादित्याशङ्क्याह। तथेति। स्वतन्त्रप्राणस्यान्नसम्बन्धो वागादिष्विव नानुपपत्तेरित्यर्थः॥ वागादीना-मन्नसम्बन्धोपकारस्य प्राणद्वारत्वे सिद्धे फलितमाह। तस्मादिति॥ तेषामन्नकृतोपकारस्य प्राणद्वारकत्वे वाक्यशेषं संवादयति। तदेवेति॥ विद्याफलं दर्शयन् गुणजातमुपदिशति। वागादीति॥

---

* वागादीनिति पाठान्तरः।

उ॰ हैवंविदꣳ स्वेषु प्रतिपत्तिर्बुभूषति* न हैवालं भार्य्येभ्यो भवत्यथ य एवैतमनुभवति यो वैतमनुभार्य्यान् बुभूर्षति स हैवालं भार्य्येभ्यो भवति ॥ १८ ॥

*॰ प्रतिर्बुभूषति

---

भा॰ पतिरधिष्ठाता च पालयिता स्वतन्त्रः पतिः प्राणवदेव वागादीनां य एवं प्राणं वेद तस्यैतद्यथोक्तं फलम्भवति । किञ्च य उ ह एवं विदं प्राणविदम्प्रति स्वेषु ज्ञातीनाम्मध्ये प्रति-पत्तिः प्रतिकूलो बुभूषति प्रतिस्पर्द्धी भवितुमिच्छति सोऽसुरा इव प्राणप्रतिस्पर्द्धिनो न हैवालं न पर्य्याप्तो भार्य्येभ्यो भरणीयेभ्यो भवितुमित्यर्थः । अथ पुनर्य एव ज्ञातीनाम्मध्ये एतमेवंविदं वागादय इव प्राणमन्वनुगतो भवति यश्चैवैतमेवंविदमन्वेवानुवर्त्तयन्नेवात्मीयान् भार्य्यान्बुभूर्षति भर्त्तुमिच्छति यथैव वागादयः प्राणानुवृत्त्या आत्मबुभूर्षव आसन् । स हैवालं पर्य्याप्तो भार्य्येभ्यो भरणीयेभ्यो भवति भर्त्तुं नेतरः स्वतन्त्रः ॥ १८ ॥

---

आ॰ वेदनमेव व्याचष्टे । वागादयश्चेति । स च प्राणोऽहमस्मीति वेदेति चकारार्थः । अनामयावी व्याधिरहितो दीप्ताग्निरिति यावत् । सम्प्रति प्राणविद्यां स्तोतुं तद्विद्याविद्वेषिणो दोषमाह । किञ्चेति । इदानीं प्राणविदम्प्रति अनुरागे लाभं दर्शयति । अथेत्यादिना ॥ १८ ॥

उ॰ सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः । प्राणो वा अङ्गानाꣳ रसः प्राणो हि वा अङ्गानाꣳ रस-

---

भा॰ सर्व्वमेतत्प्राणगुणविज्ञानफलमुक्तं । कार्य्यकरणानामात्मत्व-प्रतिपादनाय प्राणस्याङ्गिरसत्वमुपन्यस्तं । सो ऽयास्य आङ्गि-रस इति यस्माद्धेतोरयमाङ्गिरस इत्याङ्गिरसत्वे हेतुर्नोक्त-स्तद्धेतुसिद्ध्यर्थमारभ्यते । तद्धेतुसिद्ध्यायत्तं हि कार्य्य-करणात्मत्वं प्राणस्यानन्तरस्य वागादीनां प्राणाधीनतोक्ता । सा च कथमुपपादनीयेत्याह । सो ऽयास्य आङ्गिरस इत्यादि यथोपन्यस्तमेवोपादीयते । उत्तरार्थं प्राणो वा अङ्गानां रस इत्येवमन्तं वाक्यं यथा व्याख्यातार्थमेव पुनः स्मारयति । कथम्प्राणो वा अङ्गानां रस इति । प्राणो हि । हिशब्दः प्रसिद्धौ अङ्गानां रसः । प्रसिद्धमेतत्प्रा-णस्याङ्गरसत्वं न वागादीनां । तस्मादुक्तं प्राणो वा इति

---

आ॰ ते देवा अब्रुवन्नित्यादौ गुणविधिर्विवक्षितो न सिद्धवि-धिर्मुख्यप्राणस्यैवात्र अवधादित्याह । सर्व्वमेतदिति । उपरितनग्रन्थस्य व्यवहितेन सम्बन्धं वक्तुं व्यवहितमनुवदति । कार्य्यकरणानामिति । अनन्तरग्रन्थमवतारयति । यस्मादिति । किमित्याङ्गिरसत्वसाध-को हेतुः साधनीयस्तत्राह । तद्धेत्विति । तस्याव्यवहितं सम्बन्धं दर्शयति । अनन्तरस्येति । प्रकारान्तरं बुभुत्समानमिति सूचयितुं च शब्दः । तर्हि यदुपपादनीयं तदुच्यतां किमित्युक्तस्य पुनरुक्तिरित्याशङ्क्याह । उत्तरार्थमिति । प्रतिज्ञानुवादो वक्ष्यमाणहेतोरुपयोगीत्यर्थः । यथोपन्यस्तमेवेत्यादि प्रपञ्चयति । प्राणो वा इति । उक्तार्थनिर्णयहेतुं पृच्छति । कथमिति । तत्र प्रसिद्धिं हेतुं कुर्वन् परिहरति । प्राणो हीति । प्रसि-

उ॰ स्तस्मा(म)द्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गानाᳬ रसः ॥ १९ ॥

---

भा॰ स्मरणं। कथं पुनः प्रसिद्धत्वमित्यत आह। तस्माच्छब्द उपसंहारार्थ उपरितनेन सम्बध्यते। यस्माद्यतोऽवयवात्कस्मादनुक्तविशेषाद्यस्मात्कस्माद्यतः कुतश्चिच्चाङ्गाच्छरीरावयवादविशेषितात्प्राण उत्क्रामत्यपसर्पति तदेव तत्रैव तदङ्गं शुष्यति नीरसम्भवति शोषमुपैति। तस्मादेष हि वा अङ्गानां रस इत्युपसंहारः। अतः कार्य्यकरणानामात्मा प्राण इत्येतत्सिद्धमात्मापाये हि शोषो मरणं स्यात्तस्मात्तेन जीवन्ति प्राणिनः सर्वे। तस्माद्पास्य वागादीन्प्राण एवोपास्य इति समुदायार्थः॥ १८॥

---

आ॰ प्रसिद्धिमेव प्रकटयति। प्रसिद्धमिति। स्मारयं प्रसिद्धस्याङ्गिरसत्वस्येति शेषः॥ प्रसिद्धिरसिद्धेति शङ्कते। कथमिति॥ तामन्वयव्यतिरेकाभ्यां साधयति। अत आहेति॥ पदार्थमुक्त्वा वाक्यार्थमाह। यस्मात्कस्मादिति। उक्तेन व्यतिरेकेणानुक्तमन्वयं समुच्चेतुं च शब्दः। तस्माच्छब्दस्योपरिभावेन सम्बन्धमुक्तं स्फुटयति। तस्मादिति॥ अन्वयव्यतिरेकाभ्यामङ्गरसत्वे प्राणस्य सिद्धे फलितमाह। अत इति॥ उक्तन्यायादङ्गरसत्वे सिद्धेऽपि कथमात्मत्वं सिध्येदित्याशङ्क्याह। आत्मेति॥ अस्तु प्राणः सङ्घातस्यात्मा तथापि किं स्यात्तदाह। तस्मादिति॥ भवतु प्राणाधीनं सङ्घातस्य जीवनं तथापि कथं तस्यैवोपास्यत्वमित्याशङ्क्याह। तस्माद्वागादीति॥ १८॥

उ॰ एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥ २० ॥

---

भा॰ एष उ । न केवलं कार्य्यकरणयोरेवात्मा प्राणो रूपकर्म्मभूतयोः किन्तर्हि ऋग्यजुःसाम्नां नामभूतानामात्मेति । सर्व्वात्मकतया प्राणं स्तुवन् महीकरोति उपास्यत्वाय । एष उ एव प्रकृत आङ्गिरसो बृहस्पतिः । कथं बृहस्पतिरिति । उच्यते । वाग्वै बृहती बृहती छन्दः षट्त्रिंशदक्षरा । अनुष्टुप् च वाक् कथं । वाग्वा अनुष्टुबिति श्रुतेः । सा च वागनुष्टुब्बृहत्यां छन्दस्यन्तर्भवति । अतो युक्तं वाग्वै बृहतीति प्रसिद्धवदवक्तुं । बृहत्याञ्च सर्व्वा

---

आ॰ बृहस्पत्यादिधर्म्मकं प्राणोपासनं वक्तुं वाक्यान्तरमवतारयति । एष इति । तस्य विधान्तरेण तात्पर्य्यमाह । न केवलमिति । कार्य्यं स्थूलशरीरं प्रत्यक्षतो दृश्यमानं रूपात्मकं करणञ्च ज्ञानक्रियाशक्तिमत्कर्म्मभूतं तयोरात्मा प्राण इत्युक्ता नामरूपयोरपि तथेति वक्तुं कण्डिकाचतुष्टयमित्यर्थः । किमिति प्राणस्य आत्मत्वेन सर्व्वात्मत्वोक्त्या स्तुतिरित्याशङ्क्याह । उपास्यत्वायेति । उशब्दोऽप्यर्थो बृहस्पतिशब्दादुपरि सम्बध्यते । बृहस्पतिर्देवानां पुरोहित आसीदिति श्रुतेर्देवपुरोहितो बृहस्पतिरुच्यते । तत्कथं प्राणस्य बृहस्पतित्वमिति शङ्कते । कथमिति ॥ देवपुरोहितं व्यावर्त्तयितुमुत्तरवाक्येनोत्तरमाह । उच्यत इति ॥ प्रसिद्धवचनं कथमित्याशङ्क्याह । बृहतीति । छन्द इति । सप्त हि गायत्र्यादीनि प्रधानानि छन्दांसि तेषां मध्यमं छन्दो बृहतीत्युच्यते । सा च बृहती षट्त्रिंशदक्षरा प्रसिद्धेत्यर्थः । भवतु यथोक्ता बृहती तथापि कथं वाग्वै बृहतीत्युक्तं तत्राह । अनुष्टुप् चेति । द्वात्रिंशदक्षरा तावदनुष्टुबिष्टा सा चाष्टाक्षरैश्चतुर्भिः पादैः

भा॰ ऋचोऽन्तर्भवन्ति प्राणसंस्तुतत्वात् । प्राणो बृहती प्राण-ऋच इत्येव विद्यादिति श्रुत्यन्तरात् । वागात्मत्वाच्चर्चां प्राणेऽन्तर्भावः । तत्कथमित्याह । तस्या वाचो बृहत्या ऋच एष प्राणः पतिः । तस्या निर्वर्त्तकत्वात् कौष्ठ्याग्नि-प्रेरितमारुतनिर्वर्त्त्या हि ऋक् पालनाद्वा पतिः प्राणे-न हि पाल्यते वाक् । अप्राणस्य शब्दोच्चारणसामर्थ्याभावात् । तस्माद् बृहस्पतिः ऋचां प्राण आत्मेत्यर्थः ॥ २० ॥

---

आ॰ षट्त्रिंशदक्षरायां बृहत्यामन्तर्भवत्यवान्तरसंख्याया महासंख्याया-मन्तर्भावादित्याह । सा चेति ॥ वागनुष्टुभोरनुष्टुब्बृहत्योश्चो-क्तमैक्यमुपजीव्य फलितमाह । अत इति । भवतु वागात्मिका बृहती तथापि तत्पतित्वेन प्राणस्य कथमृक्पतित्वमित्याशङ्क्याह । बृहत्याश्चेति । सर्वात्मकप्राणरूपेण बृहत्याः स्तुतत्वात्तत्र सर्वा-सामृचामन्तर्भावः सम्भवति तस्मात्प्राणस्य बृहस्पतित्वे सिद्ध-मृक्पतित्वमित्यर्थः ॥ प्राणरूपेण स्तुता बृहतीत्यत्र प्रमाणमाह । प्राणो बृहतीति ॥ तथापि प्राणस्य विवक्षितमृगात्मत्वं कथं सिध्यतीत्याशङ्क्याह । प्राण इति । तस्य तदात्मत्वे हेत्वन्तरमाह । वागात्मत्वादिति ॥ तासां तदात्मत्वेऽपि कथं प्राणेऽन्तर्भावो न हि घटो मृदात्मा पटेऽन्तर्भवतीति दृश्यते । तत्कथमिति ॥ प्राणस्य वाङ्निष्पादकत्वात्तद्भूतानामृचां प्राणे कारणे युक्तोऽन्तर्भाव इत्याह । आहेत्यादिना । प्राणस्य तन्निर्वर्त्तकत्वेऽपि न तस्मिन् वाचोऽन्तर्भावो न हि घटस्य कुलालेऽन्तर्भाव इत्याशङ्क्याह । कौष्ठ्येति । कोष्ठनिष्ठेनाग्निना प्रेरितस्तद्भूतो वायुरूर्ध्वं गच्छन् कण्ठादिभिरभिहन्यमानो वर्णतया व्यज्यते तदात्मिका च वागुद्गीता देवताधिकरणे ऋक् च वागात्मिकोक्ता तद्युक्तं तस्याः प्राणेऽन्तर्भूतत्वमित्यर्थः । ऋगात्मत्वं प्राणस्य प्रकारान्तरेण साध-यति । पालनाद्वेति । सत्ताप्रदत्वे सति व्यापकत्वं तादात्म्यव्याप्त-मित्यभिप्रेत्योपसंहरति । तस्मादिति ॥ २० ॥

उ॰ एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥ २१ ॥

---

भा॰ तथा यजुषां । कथमेष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म यजुस्तच्च वाग्विशेष एव । तस्या वाचो यजुषो ब्रह्मण एष पतिस्तस्मादु ब्रह्मणस्पतिः पूर्ववत् । कथं पुनरेतदवगम्यते । बृहती ब्रह्मणी ऋग्यजुष्ट्वं न पुनरन्यार्थत्वमित्युच्यते । वाचोऽन्ते साम्नः सामानाधिकरण्यनिर्देशाद्वाग्वै सामेति । तथा च वाग्वै बृहती वाग्वै ब्रह्मेति च वाक्समानाधिकरणयोर्ऋग्यजुष्ट्वं युक्तं परिशेषात् साम्न्यभिहिते ऋग्यजुषी एव परिशिष्टे । वाग्विशेषत्वाच्च वाग्विशेषे हि ऋग्यजुषी । तस्मात्तयोर्वाचा समानाधिकरणता युक्ता । अविशेषप्रसङ्गाच्च । सामोद्गीथ इति च स्पष्टं विशेषाभिधानत्वं । तथा

---

आ॰ यजुषामात्मेति पूर्वेण सम्बन्धः । नियतपादाक्षरावसानवत्त्वाभावात्कुतस्तद्विपरीतानां यजुषां तत्त्वमिति शङ्कित्वा परिहरति । कथमिति । तथापि कथमसौ यजुषामात्मेत्याशङ्क्याह । वाग्वै ब्रह्मेति । निर्वर्तकत्वं पालयितृत्वं चात्रापि तुल्यमित्याह । पूर्ववदिति । रूढिमाश्रित्य शङ्कते । कथं पुनरिति । वाक्यशेषविरोधान्नात्र रूढिः सम्भवतीति परिहरति । उच्यत इति । वाचोऽन्ते सामेत्यन्ते वाचः सामसामानाधिकरण्येन निर्देशाद्वेदाधिकारोऽयमिति योजना । तथापि कथमृक्त्वं यजुष्ट्वं वा बृहती ब्रह्मणोरिति तत्राह । तथा चेति । परिशेषमेव दर्शयति । साम्नीति । इतश्च वाक्समानाधिकृतयोर्बृहती ब्रह्मणोर्ऋग्यजुष्ट्वमेष्टव्यमित्याह । वाग्विशेषत्वाच्चेति । तत्रैव हेत्वन्तरमाह । विशेषेति । प्रसङ्गमेव व्यतिरेकमुखेन विवृणोति । सामेति । द्वितीयश्चकारोऽवधारणार्थः । किञ्च वाग्वै बृहती

उ॰ एष उ एव साम वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वं ॥

---

भा॰ बृहतीब्रह्मशब्दयोरपि विशेषाभिधानत्वं युक्तं । अन्यथाऽनिर्धारितविशेषयोरानर्थक्यापत्तेश्च । विशेषाभिधानस्य वाङ्मात्रत्वे चोभयत्र पौनरुक्त्यात् ऋग्यजुःसामोद्गीथशब्दानाञ्च श्रुतिष्वेवं क्रमदर्शनात् ॥ २१ ॥

एष उ एव साम । कथमित्याह वाग्वै सा यत्किञ्चित्स्त्रीशब्दाभिधेयं सा वाक्सर्व्वस्त्रीशब्दाभिधेयवस्तुविषयो हि सर्व्वनामसाशब्दः । तथाऽमः एष प्राणः सर्व्वपुंशब्दाभिधेयवस्तुविषयोऽमः शब्दः । केन मे पौंस्यानि नामान्याप्नोषीति प्राणेनेति ब्रूयात्केन मे स्त्रीनामानीति वाचेति श्रुत्यन्तरात् । वाक् प्राणाभिधानभूतौ सामशब्दौ । तथा प्राणं निर्व-

---

आ॰ वाग्वै ब्रह्मेति वाक्याभ्यां बृहतीब्रह्मणोर्वागात्मत्वं सिद्धं न च तयोर्वाङ्मात्रत्वं वाक्यद्वयेऽपि वाग्वै वागिति पौनरुक्त्यप्रसङ्गात्तस्माद्बृहतीब्रह्मणोरैक्यमृग्यजुष्ट्वमित्याह । वाङ्मात्रत्वे चेति ॥ तत्रैव स्थानमाश्रित्य हेत्वन्तरमाह । ऋगिति ॥ २१ ॥

ऋग्यजुष्ट्वं प्राणस्य प्रतिपाद्य तस्यैव सामत्वं साधयति । एष इत्यादिना ॥ तदेव स्पष्टयति । सर्व्वेति ॥ सा शब्दो हि सर्व्वनाम । तथा च यस्त्रीलिङ्गः सर्व्वः शब्दस्तेनाभिधेयं वस्तु वागित्यर्थः ॥ अमः प्राण इत्युक्तमुपपादयति । सर्व्वपुंशब्देति । पुंलिङ्गेन सर्व्वेण शब्देनाभिधेयं वस्तु प्राण इत्यर्थः ॥ तत्र श्रुत्यन्तरं प्रमाणयति । केनेति ॥ आचार्य्यस्य शिष्यं प्रत्येतद्वाक्यं पौंस्यानि-पुंसो वाचकानि । तथापि कस्य सामशब्दवाच्यत्वमित्याशङ्क्य फलितमाह । वागिति । वागुपसर्जनः प्राणः सामशब्दाभिधेय एकवचननिर्देशादित्यर्थः ॥ ननु गीतिषु सामाख्येति न्यायाद्विशि-

उ॰ यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्व्वेण तस्माद्वेव-

भा॰ त्वं स्वरादिसमुदायमात्रं गीतिः सामशब्देनाभिधीयतेऽतो न प्राणवाग्व्यतिरेकेण सामनामास्ति किञ्चित्स्वरवर्णादेश्च प्राणनिर्वर्त्त्यत्वात्प्राणतन्त्रत्वाच्च। एष उ एव प्राणः साम यस्मात्साम सामेति वाक् प्राणात्मकं सा चामश्चेति तत्तस्मात्साम्नो गीतिरूपस्य स्वरादिसमुदायस्य सामत्वं। तत्र*गीतं भुवि यत उ एव समस्तुल्यः सर्व्वेण वक्ष्यमाणेन प्रकारेण तस्माद्वा सामेत्यनेन सम्बन्धः॥

वाशब्दः समशब्दलाभनिमित्तप्रकारान्तरनिर्देशसा-मर्थ्यलभ्यः। केन पुनः प्रकारेण प्राणस्य तुल्यत्वमित्युच्यते।

आ॰ या काचिद्गीतिः सामेत्युच्यते। तत्कुतो वागुपसर्जनस्य प्राणस्य सामत्वमत आह। तर्थेति। प्राणस्य सामत्वे सतीति यावत्। प्रगीते मंत्रवाक्ये सामशब्दस्य रूढेरिष्टत्वादस्तिप्राणादिव्यति-रेकेण सामेत्याशङ्क्याह। त्वंेति। आदिपदेन पदवाक्यादिग्रहः। वागुपसर्जने प्राणे मुख्यः सामशब्दस्तत्सम्बन्धादितरत्र गौणो मञ्चादिशब्दवदित्यर्थः। उक्तेऽर्थे तत्साम्नः सामत्वमिति वाक्यं योजयति। यस्मादिति॥ इदं सामेदं सामेति यद्व्यवह्रियते तद्वाक्प्राणात्मकमेवोच्यते सा चामश्चेति व्युत्पत्तेर्यस्मादेवं तस्मात्प्र-सिद्धस्य साम्नो यत्सामत्वं तन्मुख्यसामनिर्वर्त्यत्वाद्गौणमेव सद-ध्येतृव्यवहारे प्रसिद्धमिति योजना॥ प्रकारान्तरेण प्राणस्य सामत्वमुपासनार्थमन्वयस्यति। यदित्यादिना॥

प्रकारान्तरावद्योती वाशब्दोऽत्र न श्रूयत इत्याशङ्क्याह। वाशब्द इति॥ निमित्तान्तरमेव प्रश्नपूर्वकं प्रकटयति। केने-

* तत्प्राप्तमिति पाठान्तरः॥

Text ?

उ॰ सामाश्नुते साम्नः सायुज्यꣳ(स-लोकतां जयति) य एवमेतत्साम वेद ॥ २२ ॥

---

भा॰ समः प्लुषिणा पुत्तिकाशरीरेण समो मशकेन मशकशरीरेण समो नागेन हस्तिशरीरेण समः। एभिस्त्रिभिर्लोकैस्त्रैलोक्यशरीरेण प्राजापत्येन समोऽनेन जगद्रूपेण हैरण्यगर्भेण पुत्तिकादिशरीरेषु गोत्वादिवत्कार्त्स्न्येन परिसमाप्त इति समत्वं प्राणस्य। न पुनः शरीरमात्रपरिमाणेनैवामूर्त्तत्वात्सर्व्वगतत्वाच्च न च घटप्रासादादिप्रदीपवत्सङ्कोचविकाशितया शरीरेषु तावन्मात्रं समत्वं। त एते सर्व्व एव समाः। सर्व्वेऽनन्ता इति श्रुतेः। सर्व्वगतस्य तु शरीरेषु शरीरपरिमाणवृत्तिलाभो न विरुध्यते। एवं समत्वात्सामाख्यं प्राणं वेद यः श्रुतिप्रकाशितमहत्त्वं तस्यैतत्फलमश्नुते व्याप्नोति साम्नः प्राणस्य सायुज्यं सयुग्भावं समा-

---

आ॰ नत्वादिना॥ ननु प्राणस्य तत्तच्छरीरपरिमाणत्वे परिच्छिन्नत्वादानन्त्यानुपपत्तिस्तत्कथमस्य विरुद्धेषु शरीरेषु समत्वमित्याशङ्क्याह। पुत्तिकादीति॥ समशब्दस्य यथा श्रुतार्थत्वं विप्रस्यादित्याशङ्क्याह। न पुनरिति। आधिदैविकेन रूपेणामूर्त्तत्वं सर्व्वगतत्वञ्च द्रष्टव्यं॥ ननु प्रदीपो घटे सङ्कुचति प्रासादे च विकसति तथा प्राणोऽपि मशकादिशरीरेषु सङ्कोचमिभादिदेहेषु विकासञ्चापद्यतामिति समत्वासिद्धिरित्याशङ्क्याह। न चेति॥ प्राणस्य सर्व्वगतत्वे समत्वश्रुतिविरोधमाशङ्क्याह। सर्व्वगतस्येति। खण्डादिषु गोत्ववच्छरीरेषु सर्व्वत्र स्थितस्य प्राणस्य तत्तच्छरीरपरिमाणाया वृत्तेर्लाभः सम्भवति। सर्व्वगतस्यैव नभसस्तत्र तत्र कूपकुम्भाद्यवच्छेदोपलम्भादित्यर्थः॥ फलश्रुतिमवतार्य्य व्याकरोति। एवमिति॥ फलविकल्पे हेतुमाह। भावनेति॥

उ॰ एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदꣳ सर्वमुत्तब्धं वागेव गीथोच्चगीथा चेति स उद्गीथः ॥ २३ ॥

---

भा॰ न देहेन्द्रियाभिमानत्वं सालोक्यं समानलोकतां वा भावनाविशेषतो य एवमेतद्यथोक्तं साम प्राणं वेद आप्राणात्माभिमानाभिव्यक्तेरुपास्त इत्यर्थः ॥ २२ ॥

एष उ वा उद्गीथः। उद्गीथो नाम सामावयवो भक्तिविशेषो नोद्गानं। सामाधिकारात्। कथमुद्गीथः प्राणः। प्राणो वा उत्प्राणेन हि यस्मादिदं सर्वं जगदुत्तब्धमूर्ध्वं स्तब्धं उत्तम्भितं विधृतमित्यर्थः। उत्तब्धार्थावद्योतकोऽयमुच्छब्दः प्राणगुणाभिधायकः। तस्मादुत्प्राणो वागेव गीथा शब्दविशेषत्वादुद्गीथभक्तेः। गायतेः शब्दार्थत्वात्सा वागेव।

---

आ॰ वेदनं व्याकरोति। आप्राणेति। इदञ्च फलं मध्यप्रदीपन्यायेनोभयतः सम्बद्धमवधेयं ॥ २२ ॥

प्रस्तावादिशब्दवदुद्गीथशब्दस्यापि भक्तिविशेषे रूढत्वादुद्गीथेनात्ययामेत्यत्र चौद्गात्रे कर्म्मणि प्रयुक्तत्वात्कथमुद्गीथः प्राण इत्याशङ्क्याह। उद्गीथो नामेति। नञ्पदस्योभयतः संबन्धः सामशब्दितस्य प्राणस्य प्रकृतत्वादिति हेतुमाह। सामाधिकारादिति। न तावदुद्गीथशब्दस्य प्राणे रूढिरस्य तस्मिन्नप्रयोगादर्शनान्नापि योगोऽवयववृत्तेरदृष्टेरिति शङ्कते। कथमिति। योगवृत्तिमुपेत्य परिहरति। प्राण इति। उच्छब्दो नास्यार्थस्य वाचको निपातत्वादित्याशङ्क्याह। उत्तब्धेति। तथापि कथं प्राणो वा उदित्युक्तं तत्राह। प्राणेति। वायुर्वै गौतमः

उ॰ तत्रापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्द्धानं विपातयताद्यदितो-

---

भा॰ न ह्युद्गीथभक्तेः शब्दव्यतिरेकेण किञ्चिद्रूपमुत्प्रेक्ष्यते तस्मा-द्युक्तमवधारणं। वागेव गीथेत्युच्चप्राणो गीथा च प्राणतस्मा-वागित्युभयमेकेन शब्देनाभिधीयते स उद्गीथः ॥ २२ ॥

उक्तार्थदार्ढ्यायाख्यायिकारभ्यते। तद्धापि तत्रैतस्मि-न्नुक्तेऽर्थे ह अपि आख्यायिकापि श्रूयते ह स्म। ब्रह्मदत्तो ब्रह्मदत्तो नामतः। चिकितानस्यापत्यं चैकितानः तद-पत्यं युवा चैकितानेयो राजानं यज्ञे सोमं भक्षयन्नुवाच किमयं चमसस्थो मया भक्ष्यमाणो राजा त्यस्य तस्य ममा-नृतवादिनो मूर्द्धानं शिरो विपातयताद्विस्पष्टं पातयतु। तोरयन्तातङादेश आशिषि लोट्। विपातयतादिति। यद्य-हमनृतवादी स्यामित्यर्थः। कथम्पुनरनृतवादित्वप्राप्तिरि-त्युच्यते। यद्यदीतोऽस्मात्प्रकृतात्प्राणाद्वाक्संयुक्तादयास्यो

---

आ॰ तत्सूनमित्यादिश्रुतेरित्यर्थः ॥ उद्गीथभक्तेः शब्दविशेषत्वेऽपि गीथावागिति कथमुच्यते तत्राह। गायतेरिति॥ यथावधारणं साधयति। नह्यीति॥ तथापि कथं प्राणस्योद्गीथत्वमित्याशङ्क्य वागुपसर्जनस्य तस्य तथात्वं कथयति। उचेति ॥ २२ ॥

तद्धापीत्यादिवाक्यस्य प्रकृतानुपयोगमाशङ्क्याह। उक्तार्थेति। उद्गीथदेवताप्राणो न वागादिरित्युक्तोऽर्थः ॥ जीवति तु वंश्ये युवा (पां ४।१।१६३) इति स्मरणात्पित्रादौ वंश्ये जीवति पौत्रप्र-भृतेर्यदपत्यन्तद्युवसञ्ज्ञकमिति द्रष्टव्यं। क्रियापदनिष्पत्तिप्रकारं सूचयति। तोरिति। तुप्रत्ययस्यायमाशिषि विषये तातङादेशः। तु ह्योस्तातङाशिष्यन्यतरस्यां (पां ७।१।३५) इति स्मरणाद-

उ॰ऽयास्य आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन चोदगायदिति ॥ २४ ॥

---

भा॰ मुख्यप्राणाभिधायकेनायास्याङ्गिरसशब्देनाभिधीयते। वि-सृजां पूर्व्वर्षीणां सत्रे उद्गाता सोऽन्येन देवतान्तरेण वाक्प्राणव्यतिरिक्तेनोदगायदुद्गानं कृतवान्। ततोऽहमनृत-वादी स्यां। तस्य मम देवताविपरीतप्रतिपत्तुर्मूर्द्धानं विपा-तयत्वित्येवं शपथञ्चकारेति विज्ञाने प्रत्ययदार्ढ्यकर्त्तव्यतां दर्शयति । तमिमं आख्यायिकानिर्द्धारितमर्थं स्वेन वचसोपसंहरति श्रुतिः। वाचा च प्राणप्रधानया प्राणेन च स्वस्यात्मभूतेन सोऽयास्य आङ्गिरस उद्गाता उदगा-यदित्येषोऽर्थो निर्धारितः शपथेन ॥ २४ ॥

---

आ॰ त्वर्थः। मूर्द्धपातप्रापकं दर्शयति । यदीति। अनृतवादित्वस्य प्रापकाभावादप्राप्तिरिति शङ्कते । कथम्पुनरिति । उद्गानस्य मुख्यादिसन्निधानात्तद्देवता प्राजापत्यादिश्रुत्या किन्तस्मिन्देवता किंवा वषट्कारादिसन्निधानात्तद्देवतैव तत्र देवतेति विप्र-तिपत्तेरनृतवादित्वे शङ्किते सम्प्रदत्तः शपथेन निर्णयञ्चकारेत्याह। उच्यत इति। प्राणाद्वाक्संयुक्तादन्येनायास्यो यद्युदगायदिति स-म्बन्धः। नन्वयास्याङ्गिरसशब्दवाच्यो मुख्यः प्राणो देवता तस्योद्गाता भवितुमुत्सहते तत्राह । मुख्येति । उक्तार्थदर्शायेनुक्तमुपसं-हरति । इति विज्ञान इति । उक्तरीत्या शपथक्रियया प्राण एवोद्गीथदेवतेत्यस्मिन्विज्ञाने प्रत्ययो विश्वासस्तस्य यद्दार्ढ्यन्तस्य कर्त्तव्यतामाख्यायिकया दर्शयति श्रुतिरिति यावत्॥ आख्या-यिकार्थस्यैव वाचेत्यादिनोक्तेः पौनरुक्त्यमित्याशङ्क्याह। तमिति॥ शपथस्य स्वातन्त्र्येणाप्रामाण्येऽपि श्रुतिमूलतया प्रामाण्यं सिध्यती-ति भावः॥ २४॥

उ॰ तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचि स्वरमिच्छेत तया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्य्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव॥

भा॰ तस्य हैतस्य । तस्येति प्रकृतम्प्राणमभिसम्बध्नाति । ह एतस्येति मुख्यं व्यपदिशत्यभिनयेन । साम्नः सामशब्दवाच्यस्य प्राणस्य यः स्वम्धनं वेद तस्य ह किं स्यात् । भवति हास्य स्वं । फलेन प्रलोभ्याभिमुखीकृत्य शुश्रूषवे आह । तस्य वै साम्नः स्वर एव स्वं । स्वर इति कण्ठगतं माधुर्य्यन्तदेवास्य स्वं विभूषणं । तेन हि भूषितमृद्धिमल्लभ्यते उद्गानं । यस्मादेवं तस्मादार्त्विज्यं ऋत्विक्कर्म्मोद्गानं करिष्यन्वाचि विषये वाचि वागाश्रितं स्वरमिच्छेत । साम्नो धनवत्तां स्वरेण चिकीर्षुरुद्गाता । इदन्तु प्रासङ्गिकं विधीयते साम्नः सौस्वर्य्येण स्वरवत्त्वप्रत्यये कर्त्तव्ये इच्छामात्रेण सौस्वर्य्यं न भवतीति

आ॰ उद्गीथदेवता प्राण एवेति निर्धार्य्य स्वरसुवर्णप्रतिष्ठागुणविधानार्थमुत्तरकण्डिकात्रयमवतारयति । तस्येत्यादिना । किमित्यादौ फलमभिलष्यते तत्राह । फलेनेति । सौस्वर्य्यं साम्नो भूषणमित्यत्रानुभवमनुकूलयति । तेन हीति । कथन्तर्हि कण्ठगतं माधुर्य्यं सम्पादनीयमित्याशङ्क्याह । यस्मादिति । प्राणोऽहं ममैव प्रीतिभावमापन्नस्य सौस्वर्य्यं धनमिति प्रकृते प्राणविज्ञाने गुणविधिर्विवक्षितश्चेत्किमित्युद्गातुरन्यत्कर्त्तव्यमुपदिश्यत इत्याशङ्क्य इष्टपातयेत्याह । इदन्त्विति । यथेच्छायां कर्त्तव्यत्वेन विहितायां तावन्मात्रे सिद्धेऽपि कथं सौस्वर्य्यं सिध्येन्नहि स्वर्गकाममात्रेण स्वर्गः सिध्यत्यत आह । साम्न इति । तस्य सुस्वरत्वेन

उ॰ अथो यस्य स्वम्भवति/भवति हास्य स्वं य एव-
मेतत्साम्नः स्वं वेद ॥ २५ ॥

तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य

---

भा॰ दन्तधावनतैलपानादि सामर्थ्यात्कर्त्तव्यमित्यर्थः । तथैवं संस्कृतया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्य्यात्। तस्माद्य-स्मात्साम्नः स्वभूतः स्वरस्तेन स्वेन भूषितं साम। अतो यज्ञे स्वरवन्तमुद्गातारं दिदृक्षन्त एव द्रष्टुमिच्छन्त एव धनि-नमिव लौकिकाः । प्रसिद्धं हि लोकेऽथोऽपि यस्य स्वं धनम्भवति तं धनिनं दिदृक्षन्त इति । सिद्धस्य गुणवि-ज्ञानफलसम्बन्धस्योपसंहारः क्रियते । भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेदेति ॥ २५ ॥

अथान्यो गुणः सुवर्णवत्तालक्षणो विधीयते। असावपि सौस्वर्य्यमेव। एतावान्विशेषः। पूर्व्वं कण्ठगतमाधुर्य्यमिदन्तु लाक्षणिकं सुवर्णशब्दवाच्यं तस्य हैतस्य साम्नो यः सुवर्णं

---

आ॰ तच्छब्दितस्य प्राणस्योपासकात्मकस्य स्वरवत्त्वप्रत्यये कार्य्ये सति विहितेच्छामात्रेण साम्नः सौस्वर्य्यं न भवतीत्यस्मात्सामर्थ्याद्द-न्तधावनादिकर्त्तव्यमित्येवदत्र विवक्षितमिति योजना ॥ सौस्व-र्य्यस्य सामभूषणत्वे समयमाह । तस्मादिति ॥ दृष्टान्तम-नन्तरवाक्यावष्टम्भेन स्पष्टयति । प्रसिद्धं हीति ॥ भवति हास्यस्वमिति प्रागेवोक्तत्वादनर्थिका पुनरुक्तिरित्याशङ्क्याह । सिद्धस्येति ॥ २५ ॥

साम्नो गुणान्तरमवतारयति । अथेति ॥ तर्हि पुनरुक्तिः स्यादित्याह । एतावानिति ॥ लाक्षणिकं कण्ठ्योऽयं वर्णो दन्त्यो-ऽयमिति व्यक्तव्यानपूर्व्वकं स्फुटं वर्णोच्चारणं समैव साम-

उ॰ सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य-
सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥ २६ ॥
तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह
तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि

---

भा॰ वेद भवति हास्य सुवर्णं। सुवर्णशब्दसामान्यात्स्वरसुवर्णयो-
र्लौकिकमेव सुवर्णं गुणविज्ञानफलं भवतीत्यर्थः। तस्य वै
स्वर एव सुवर्णं। भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं
वेदेति पूर्व्ववत्सर्वं ॥ २६ ॥
तथा प्रतिष्ठागुणं विधत्सन्नाह। तस्य हैतस्य साम्नो
यः प्रतिष्ठां वेद। प्रतितिष्ठत्यस्यामिति प्रतिष्ठा वाक् तां
प्रतिष्ठां साम्नो गुणं यो वेद स प्रतिष्ठति ह। तं यथा यथो-
पासत इति श्रुतेः। तद्गुणवत्त्वं युक्तं। पूर्व्ववत्फलेन प्रतिलो-
भिताय का प्रतिष्ठेति शुश्रूषवे आह। तस्य वै साम्नो
वागेव। वागिति जिह्वामूलीयादीनां स्थानानामाख्या।

---

आ॰ प्रव्हितप्रायभूतस्य धनमिति यावत् ॥ वाक्यविवक्षितसर्व्वगुण-
वत्प्रायविज्ञानवतो यथोक्तफललाभे हेतुमाह। सुवर्णशब्देति ॥
वाक्यार्थमाह। लौकिकमेवेति ॥ फलेन प्रलोभ्याभिमुखीकृत्य
किन्तत्सुवर्णमिति शुश्रूषवे ब्रूते। तस्येति ॥ गुणविज्ञानफल-
मुपसंहरति। भवतीति ॥ सामशब्दवाच्यस्य प्राणस्य स्वरू-
पभूतस्येति यावत् ॥ २६ ॥
उपास्यस्य प्रतिष्ठागुणत्वेऽपि कथमुपासकस्य तद्गुणत्वमित्याह।
तं यथेति। आदिपदादुरःशिरःकण्ठदन्तौष्ठनासिकाताल्वूनि
गृह्यन्ते॥ अष्टौ स्थानानि वर्णानामुरः कण्ठं शिरस्तथा। जिह्वा-

उ० खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ॥२७॥

अथातः पवमानानामेवाभ्यारोहः स वै खलु

---

भा० सैव प्रतिष्ठा । तदाह वाचि हि जिह्वामूलीयादिषु हि यस्मात्प्रतिष्ठितः सन्नेष प्राण एतद्गानं गीयते गीतिभावमापद्यते । तस्मात्साधुः प्रतिष्ठा वागन्ने प्रतिष्ठितो गीयत इत्यु ह एकेऽन्ये आहुः इह प्रतितिष्ठतीत्युक्तं अनिन्दितत्वादेकीयपक्षस्य विकल्पेन प्रतिष्ठागुणविज्ञानं कुर्य्यात् वाग्वा प्रतिष्ठान्नं वेति ॥ २७ ॥

एवं प्राणविज्ञानवतो जपकर्म्म विधित्स्यते । यद्विज्ञानवतो जपकर्म्मण्यधिकारस्तद्विज्ञानमुक्तं । अथानन्तरं यस्माच्चैव विदुषा प्रयुज्यमानं देवभावायाभ्यारोहफलं जपकर्म्म अतस्तस्मात्तद्विधीयते । इह तस्य चोद्गीथसम्बन्धा-

---

आ० मूलञ्च दन्ताश्च नासिकौष्ठौ च तालु च ॥ जिह्वामूलीयमित्यष्टौ स्थानानि वागित्युच्यन्ते तदाह । वाचि हीति ॥ पक्षान्तरमाह । अन्न इति । अन्नशब्देन तत्परिणामो देहो गृह्यते । एकीयपक्षे युक्तिमाह । इहेति ॥ कथन्तर्हि प्रतिष्ठागुणस्य प्राणस्य विज्ञानं कर्त्तव्यमत आह । अनिन्द्यत्वादिति ॥ २७ ॥

अथातः पवमानानामित्यादिवाक्यमवतारयति । एवमिति ॥ तत्राथशब्दं व्याचष्टे । यद्विज्ञानवत इति । अतःशब्दार्थमाह । यस्माच्चेति ॥ इहेति प्राणविदुक्तिः । कदा तर्हि जपकर्म्म कर्त्तव्यं तत्राह । तस्येति ॥ उद्गीथेनात्ययाम त्वं न उद्गायेति च प्रकरणादुद्गीथेन सम्बन्धाज्जपस्य सर्व्वत्रोद्गानकाले प्राप्तौ पवमानानामेवेति वचनात्कालनियमसिद्धिरित्यर्थः ॥ स वै खल्वि-

उ॰ प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेत्

---

भा॰ सर्वत्र प्राप्तौ पवमानानामिति वचनात्। पवमानेषु त्रिष्वपि कर्त्तव्यतायां प्राप्तायां पुनः कालसङ्कोचं करोति। स वै खलु प्रस्तोता साम प्रस्तौति। स प्रस्तोता यत्र यस्मिन् काले साम प्रस्तुयात्प्रारभेत तस्मिन् काल एतानि जपेत्। अस्य च जपकर्म्मण आख्याऽभ्यारोहः आभिमुख्येनारोहत्यनेन जपकर्म्मणा एवं विद्देवभावमात्मानमित्यभ्यारोहः। एतानीति बहुवचनात्त्रीणि यजूंषि। द्वितीयानिर्देशाद्ब्राह्मणोत्पन्नत्वाच्च यथा पठित एव स्वरः प्रयोक्तव्यो न साम्नः। याजमानं जपकर्म्म॥

---

भा॰ त्यादिवाक्यतात्पर्य्यमाह। पवमानेष्विति॥ ननु कर्त्तव्यत्वेनाभ्यारोहः श्रूयते। जपकर्म्म विधित्सितमिति नोच्यते। किं केन सङ्गतमित्याशङ्क्याह। अस्य चेति॥ अभ्यारोहशब्दस्य न तत्र रूढिर्वृद्धप्रयोगाभावादित्याशङ्क्याह। आभिमुख्येनेति॥ यजुर्मन्त्राक्षराणामनियतपादाक्षरत्वादसतो मासङ्ख्यमयेत्यारभ्यैको वा द्वौ वा मन्त्रावित्याशङ्क्याह। एतानीति। यद्यमी याजुषा मन्त्रास्तर्हि साम्नेव स्वरेण वैभाषिकग्रन्थोक्तेन भाव्यमित्याशङ्क्याह। द्वितीयेति॥ यत्र स्वरो विवक्षितस्तत्र तृतीयानिर्देशो दृश्यते। उच्चैरृचा क्रियते उच्चैः साम्नोपांशुयजुषेति। प्रकृते तु द्वितीयानिर्देशाज्जपकर्म्ममात्रं प्रतीयते साम्नस्तु स्वरो न प्रतिभातीत्यर्थः। केन तर्हि स्वरेण प्रयोगो मन्त्राणामिति चेत्तत्राह। ब्राह्मणेति। भवतु शातपथेन स्वरेण मन्त्राणां प्रयोगस्तथापि किमार्त्विज्यं किंवा याजमानजपकर्म्मेति विवक्षायामाह। याजमानमिति॥

उ॰ असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्मामृतं गमयामृतं मा कुर्वित्येवैतदाह तमसो मा ज्योतिर्ग-

---

भा॰ एतानि तानि यजूंषि। असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतं गमयेति मन्त्राणामर्थस्तिरोहितो भवतीति स्वयमेव व्याचष्टे ब्राह्मणं मन्त्रार्थं। स मन्त्रो यदाह यदुक्तवान्कोऽसावर्थ इत्युच्यते। असतो मा सद्गमयेति। मृत्युर्वा असत्स्वाभाविककर्म्मविज्ञाने मृत्युरित्युच्यते॥ असदत्यन्ताधोभावहेतुत्वात्। सदमृतं शास्त्रीयकर्म्मविज्ञानेऽमरणहेतुत्वादमृतं। तस्मादसतोऽसत्कर्म्मणोऽज्ञानाच्च मा मां सच्छास्त्रीयकर्म्मविज्ञाने गमय देवभावसाधनात्मभावमापादयेत्यर्थः। तत्र वाक्यार्थमाहामृतं मा कुर्वित्येवैतदाहेति। तथा तमसो मा ज्योतिर्गमयेति। मृत्युर्वै तमः सर्व्वं ह्यज्ञानमावरणात्मकत्वात्तमस्तदेव च मरणहेतुत्वान्मृत्युः। ज्योतिरमृतं पूर्व्वोक्तविपरीतं दैवं स्वरूपं। प्रकाशात्मकत्वाज्ज्ञानं ज्योतिस्तदेवामृतमविनाशात्मकत्वा-

---

आ॰ व्याचिख्यासितयजुषां स्वरूपं दर्शयति। एतानीति। मन्त्रार्थशब्देन पदार्थौ वाक्यार्थस्तत्प्रकाशश्चेति त्रयमुच्यते। लौकिकन्तमो व्यावर्त्तयति। सर्व्वं हीति। पूर्व्वोक्तपदेन व्याख्यातन्तमो गृह्यते। वैपरीत्ये हेतुमाह। प्रकाशात्मकत्वादिति। ध्यानन्तेन साध्यमिति यावत्। पदार्थोक्तिसमाप्ताविति शब्दः। उत्तरवाक्याभ्यां

उ॰ मयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह मृत्योर्मामृतं गमयेति नात्र तिरोहितमिवास्ति । अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत तꣳ स एष

---

भा॰ स्मात्तमसो मा ज्योतिर्गमयेति । पूर्ववन्मृत्योर्माऽमृतं गमयेत्यादि । अमृतं मा कुर्वित्येवैतदाह । दैवं प्राजापत्यं फलभावमापादयेत्यर्थः । पूर्वो मन्त्रोऽसाधनस्वभावात्साधनभावमापादयेति । द्वितीयस्तु साधनभावादप्यज्ञानरूपात्साध्यभावमापादयेति । मृत्योर्मामृतङ्गमयेति पूर्वयोरेव मन्त्रयोः समुच्चितोऽर्थस्तृतीयेन मन्त्रेणोच्यत इति प्रसिद्धार्थतैव । नात्र तृतीये मन्त्रे तिरोहितमन्तर्हितमिवार्थरूपं पूर्वयोरिव मन्त्रयोरस्ति यथा श्रुत एवार्थः ॥

याजमानमुद्गानं कृत्वा पवमानेषु त्रिष्वथानन्तरं यानीतराणि शिष्टानि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत् । प्राणविदुद्गाता प्राणभूतः प्राणवदेव यस्मात्स एष उद्गाता

---

आ॰ वाक्यार्थस्तत्फलञ्चेति द्वयं क्रमेणोच्यत इत्याह । पूर्ववदिति । फलवाक्यमादाय पूर्वस्माद्विशेषं दर्शयति । अमृतमिति । प्रथमद्वितीयमन्त्रयोरर्थभेदाप्रतीतेः पुनरुक्तिमाशङ्क्यावान्तरभेदमाह । पूर्वमन्त्र इति । तथापि तृतीये मन्त्रे पुनरुक्तिस्तदवस्थेत्याशङ्क्याह । पूर्वयोरिति ।

वृत्तमनूद्योत्तरवाक्यमवतार्य्य व्याचष्टे । याजमानमिति । यथा प्रागुक्तेषु पवमानेषु साधारणमागानङ्कृत्वा शिष्टेषु स्तोत्रेषु

उ० एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न

---

भा० एवं प्राणं यथोक्तं वेत्त्यतः प्राणवदेव तं कामं साधयितुं समर्थस्तस्माद्यजमानस्तेषु स्तोत्रेषु प्रयुज्यमानेषु वरं वृणीत यं कामं कामयेत तं कामं वरं वृणीत प्रार्थयेत। यस्मात्स एष एवंविदुद्गातेति तस्माच्छब्दात्प्रागेव सम्बध्यते। आत्मने वा यजमानाय वा यं कामं कामयते इच्छत्युद्गाता तमागानेन साधयत्येवं तावज्ज्ञानकर्मभ्यां प्राणात्मापत्तिरित्युक्तं। तत्र नास्त्याशङ्कासम्भवः। अतः कर्मापाये प्राणापत्तिर्भवति वा न वेत्याशङ्क्यते। तदाशङ्कानिवृत्त्यर्थमाह। तद्धैतल्लोकजिदेवेति। तत् ह तदेतत्प्राणदर्शनं कर्मवियुक्तं केवलमपि लोकजिदेवेति लोकसाधनमेव। न ह एवालोक्यतायै अलोकार्हताया आशा शंसनं प्रार्थनं नैवास्ति ह।

---

व्या० स्वार्थमागानमपरोपयेत्याह। प्राणविदिति। तद्विदो यद्यदागाने योग्यतामाह। प्राणभूत इति। हेतुवाक्यमादौ योजयति। यस्मादिति। प्रतिज्ञावाक्यं व्याचष्टे। तस्मादिति। किमिति व्यासेन वाक्यद्वयव्याख्यानमित्याशङ्क्यार्थाच्चेति न्यायेन पाठक्रममनादृत्य परिहरति। यस्मादित्यादिना। स एष एवंविदुद्गाताऽऽत्मने यजमानाय वा यं कामं कामयते तमागानेन साधयति। यस्मादिति हेतुपदस्य तस्मादिति प्रतिज्ञायस्थात्प्रागेव संबध्यत इति योजना। फलं कीर्त्तयति। एवं तावदिति। तत्र कर्मसमुच्चिते ज्ञाने देवतात्मप्राप्त्याशङ्कासम्भवो नास्ति। मिथः सहकृतयोर्ज्ञानकर्मणोस्तदाप्तिहेतुत्वादित्याह। तत्रेति। समनन्तरं वाक्यमवतारयति। अत इति। समुच्चयात्पृथग्भेदत्वादिति

उ॰ हैवालोक्यताया आशास्ति य एवमेतत्साम वेद ॥ २८ ॥ इति तृतीयं ब्राह्मणं ॥

---

भा॰ न हि प्राणात्मन्युत्पन्नात्माभिमानस्य तदप्राप्त्याशंसनं सम्भवति। न हि ग्रामस्थः कदा ग्रामं प्राप्नुयामित्यरण्यस्थ इवाशास्ते। असन्निकृष्टविषये ह्यनात्मन्याशंसनं न तत्स्वात्मनि सम्भवति। तस्मान्नाशास्ति कदाचित्प्राणात्मभावं न प्रतिपद्येयमिति। कस्यैतद्य एवमेतत्साम प्राणं यथोक्तं निर्धारितमहिमानं वेदाहमस्मि प्राण इन्द्रियविषयासङ्गैरासुरैः पाप्मभिरधर्षणीयो विशुद्धो वागादिपञ्चकञ्च मदाश्रयत्वादग्न्याद्यात्मस्वरूपं स्वाभाविकविज्ञानोत्थेन्द्रियविषयासङ्गजनितासुरपाप्मदोषवियुक्तं सर्व्वभूतेषु च मदाश्रयान्ना-

---

आ॰ यावत्। न हीत्यादिना पदानि छित्त्वा वाक्यमादाय व्याकरोति। अलोकार्हत्वायेति॥ तदेव स्फुटयति। न हीति। तत्र दृष्टान्तमाह। न हीति। दृश्यमानमाशंसनं तर्हि कस्मिन्विषये स्यादित्याशङ्क्याह। असन्निकृष्टेति॥ प्राणात्मना व्यवस्थितस्य विदुषस्तदात्मभावं कदाचिदहं न प्रतिपद्येयमित्याशंसनं नास्तीति निगमयति। तस्मादिति। कर्म्मसमुच्चितादुपासनात्केवलाच्च प्राणात्मत्वं फलमुक्तं तत्र समुच्चितादुद्गातुर्यजमानस्य वा फलं केवलाच्चोपासनात्तयोरन्यतरस्यान्यस्य वा कस्यचिदिति जिज्ञासमानः पृच्छते। कस्येति। ज्ञानकर्म्मणोरुभयत्र समभावादुभयोरपि वचनात्फलसिद्धिः। आश्रमान्तरविषयन्तु केवलज्ञानस्य लोकजयहेतुत्वमित्यभिप्रेत्याह। य एवमिति। एवं शब्दस्य प्रकृतपरामर्शित्वात्पूर्व्वोक्तं सर्व्वं वेद्यस्वरूपं सङ्क्षिपति। अहमस्मीत्यादिना। तस्य वागादिभ्यो विशेषं दर्शयति। इन्द्रियेति॥ किमिदानीं प्राणस्यैवोपास्यतया वागादिपञ्चकमुपेक्षितमिति

उ॰ आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्

भा॰ स्वोपयोगवन्धनमात्मा चाहं सर्व्वभूतानामाङ्गिरसत्वाद्दृग्ध-ज्ञुःसामोद्गीथभूतायाश्च वाच आत्मा तद्व्याप्तेस्तन्निवर्त्तकत्वाच्च मम स्वाबो गीतिभावमापद्यमानस्य बाह्यन्धनं भूषणं सौस्वर्यं ततोऽप्यन्तरतरं सौवर्ण्यं लाक्षणिकं सौस्वर्यं गीतिभावमापद्यमानस्य मम कण्ठादिस्थानानि प्रतिष्ठा। एवंगुणोऽहं पुत्तिकादिशरीरेषु कार्त्स्न्येन परिसमाप्तोऽमूर्त्तत्वात्सर्व्वगतत्वाच्चेति। आ एवमभिमानाभिव्यक्तेर्वेदोपास्य इत्यर्थः॥ इति बृहदारण्यकभाष्ये तृतीयं ब्राह्मणं॥ ३॥

आत्मैवेदमग्र आसीद् ज्ञानकर्म्मभ्यां समुच्चिताभ्यां प्रजापतित्वप्राप्तिर्व्याख्याता। केवलप्राणदर्शनेन च तद्धीतलोक-

आ॰ नेत्याह। वागादीति॥ तस्य प्राणाश्रयत्वेऽपि कुतो देवतात्वमासङ्गपाप्मविद्धत्वादित्याशङ्क्याह। स्वाभाविकेति॥ अग्न्युक्तोपकारं प्राणद्वारा वागादौ स्मारयति। सर्व्वेति॥ रूपात्मके जगति प्राणस्य स्वरूपमनुसंधत्ते। आत्मा चेति॥ नामात्मके जगति प्राणस्यात्मत्वमुक्तं स्मारयति। स्वमिति॥ सति सामत्वे गीतिभावावस्थायां प्राणस्योक्तं बाह्यमाभ्यन्तरञ्च सौस्वर्यं सौवर्ण्यमिति गुणद्वयमनुवदति। ममेति॥ तस्यैव वैकल्पिकीं प्रतिष्ठामुक्तामनुस्मारयति। गीतीति॥ तद्व्येत्यादिनोक्तं परामृशति। एवं गुणोऽहमिति॥ इत्येवमभिमानाभिव्यक्तिपर्य्यन्तं यो ध्यायति तस्येदं फलमित्युपसंहरति। इतीति॥ इति तृतीयं ब्राह्मणं॥ ०॥ ३॥

ब्राह्मणान्तरमवतार्य्य पूर्व्वेण सम्बन्धं वक्तुं वृत्तं कीर्त्तयति। आत्मैवेत्यादिना। केवलप्राणदर्शनेन च प्रजापतित्वप्राप्तिर्व्याख्यातेति सम्बन्धः॥ इदानीमात्मेत्यादेस्तदेदमित्यतः प्राक्तन-

भा० जिद्वेत्यादिना प्रजापतेः फलभूतस्य सृष्टिस्थितिसंहारेषु जगतः स्वातन्त्र्यादिविभूत्युपवर्णनेन ज्ञानकर्म्मणोर्वैदिकयोः फलोत्कर्षो वर्णयितव्य इत्येवमर्थमारभ्यते। तेन च कर्म्मकाण्डविहितज्ञानकर्म्मस्तुतिः कृता भवेत् सामर्थ्याद्विवक्षितन्त्वेतत्। सर्व्वमप्येतज्ज्ञानकर्म्मफलं संसार एव भयारत्यादियुक्तत्वश्रवणात् कार्य्यकरणलक्षणत्वाच्च स्थूलव्यक्तानित्यविषयत्वाच्चेति॥ ब्रह्मविद्यायाः केवलाया वक्ष्यमाणाया मोक्षहेतुत्वमित्युत्तरार्थञ्चेति। न हि संसारविषयात्साध्यसाधनादिभेदलक्षणादविरक्तस्यात्मैकत्वज्ञानविषयेऽधिकारोऽस्ति पिबत इव पाने। तस्माज्ज्ञानकर्म्मफलोत्कर्षोपवर्णनमुत्त-

---

आ० ग्रन्थस्यापाततस्तात्पर्य्यमाह। प्रजापतेरिति। आदिपदेन सर्व्वात्मत्वादि गृह्यते॥ फलोत्कर्षोपवर्णनं कुत्रोपयुज्यते तत्राह। तेन चेति। कर्म्मकाण्डपदेन पूर्व्वग्रन्थोऽपि सङ्गृहीतः। फलातिशयो हेत्वतिशयापेक्षोऽन्यथाऽऽकस्मिकत्वापातादतो ज्ञानकर्म्मफलभूतसूत्रविभूतिविशेषमाना ज्ञानकर्म्मणोर्महत्त्वन्दर्शयतीत्याह। सामर्थ्यादिति॥ आपातिकन्तात्पर्य्यमुक्त्वा परमतात्पर्य्यमाह। विवक्षितन्त्विति॥ किञ्च। विमतं संसारान्तर्भूतं कार्य्यकरणात्मत्वादस्मदादिकार्य्यकरणवदित्याह। कार्य्येति॥ प्राजापत्यपदस्य संसारान्तर्भूतत्वे हेत्वन्तरमाह। स्थूलेति॥ स्थूलत्वं साधयति। व्यक्तेति॥ अनित्यत्वादृश्यत्वाच्च प्रजापतित्वं संसारान्तर्गतमित्याह। अनित्येति। इतिशब्दो विवक्षितार्थसमाप्त्यर्थः॥ किमित्येतद्विवक्षितमुपवर्ण्यते तत्राह। ब्रह्मविद्याया इति। तच्चेदं विवक्षितार्थवचनमेकाकिन्या विद्याया वक्ष्यमाणाया मुक्तिहेतुत्वमित्युत्तरार्थमिति द्रष्टव्यं॥ यदा हि कर्म्मज्ञानफलं प्रजापतित्वं संसार इत्युच्यते तदा तात्पर्य्यन्तावत् सर्व्वस्मात्तस्मादविरक्तस्य वक्ष्यमाणविद्यायामधिकारः सेत्स्यतीत्यर्थः॥ अथ यस्य कस्यचिदर्थितामात्रेण तत्राधिकारसम्भवाद्वैराग्यं

भा॰ रार्थं। तथाच वक्ष्यति। तदेतत्पदनीयमस्य तदेतत्प्रेयः पुत्रादित्यादि आत्मैवात्मेति प्रजापतिः प्रथमोऽण्डजः शरीर्य्यभिधीयते। वैदिकज्ञानकर्म्मफलभूतः स एव किमिदं शरीरभेदजातं तेन प्रजापतिशरीरेणाविभक्तमात्मैवासीत् अग्रे प्राक् शरीरान्तरोत्पत्तेः। स च पुरुषविधः पुरुषप्रकारः शिरःपाण्यादिलक्षणो विराट् स एव प्रथमः सम्भूतः। अनुवीक्ष्यान्वालोचनं कृत्वा कोऽहं किंलक्षणो वास्मीति नान्यद्वस्त्वन्तरमात्मनः प्राणपिण्डात्मकात् कार्य्यकरणरूपात्नापश्यत् ददर्श। केवलन्त्वात्मानमेव सर्व्वात्मानमपश्यत्॥

---

आ॰ न ब्रह्मेत्याशङ्क्याह। न हीति। उभयत्रापि विषयशब्दः पूर्व्वेण समानाधिकरणः॥ विवक्षितमर्थमुपसंहरति। तस्मादिति॥ वैराग्यमन्तरेण ज्ञानानधिकाराज्ज्ञानादिफलस्य प्रजापतित्वस्योत्कर्षवतः संसारत्ववचनं ततो विरक्तस्य वक्ष्यमाणविद्यायामधिकारार्थं॥ विरक्तस्य विद्याधिकारे मोक्षादपि वैराग्यं स्यादित्याशङ्क्याह। तथा चेति॥ ननु मोक्षार्थं विद्यायामवर्त्तितव्यं मोक्षस्यापुरुषार्थत्वान्न प्रेक्षावता प्रार्थ्यते तत्राह। तदेतदिति॥ आपातिकमर्थमापातिकञ्च तात्पर्य्यमुक्त्वा प्रतीकमादायाक्षराणि व्याकरोति। आत्मैवेति॥ तस्याश्वमेधाधिकारे प्रकृतत्वं सूचयति। अण्डज इति॥ पूर्व्वस्मिन्नपि ब्राह्मणे तस्य प्रस्तुतत्वमस्तीत्याह। वैदिकेति। स एवासीदिति सम्बन्धः॥ स्थित्यवस्थायामपि प्रजापतिरेव समष्टिदेहस्तत्तद्व्यष्ट्यात्मना तिष्ठतीति विशेषणसिद्धिरित्याशङ्क्याह। तेनेति॥ आत्मशब्देन परस्यापि ग्रहणसम्भवे किमिति विराडेवोपादीयत इत्याशङ्क्य वाक्यशेषादित्याह। स चेति॥ वक्ष्यमाणमन्वालोचनादि विराडात्मकर्तृकमेवेत्याह। स एवेति॥ सहृपधर्म्मविषयौ द्वौ विमर्शौ नान्यदिति वाक्यमादायाक्षराणि व्याचष्टे। वस्त्वन्तरमिति॥ दर्शनशक्त्यभावादेव वस्त्वन्तरं प्रजापतिर्न दृष्टवानित्याशङ्क्याह। केवलन्त्विति।

उ॰ सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहन्नामाभवत्
तस्माद्प्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वा-

---

भा॰ तथा पूर्व्वजन्मश्रौतविज्ञानसंस्कृतः सोऽहं प्रजापतिः सर्व्वात्माहमस्मीत्यग्रे व्याहरद्व्याहृतवान्। ततस्तस्मात्ततः पूर्व्वज्ञानसंस्काराद्आत्मानमेवाहमित्यभ्यधादग्रे तस्मादहन्नामाऽभवत् तस्योपनिषदोऽहमिति श्रुतिप्रदर्शितमेव नाम वक्ष्यति।

तस्माद्यस्मात् कारणे प्रजापतावेवं वृत्तं तस्मात् कार्य्यभूतेषु प्राणिष्वेतर्ह्येतस्मिन्नपि काल आमन्त्रितः कस्त्वमित्युक्तः सन्नहमयमित्येवाग्र उक्त्वा कारणात्माभिधानेनात्मानमभिधायाग्रे पुनर्विशेषनामजिज्ञासवेऽथान्यत्तं विशेषपिण्डाभिधानं देवदत्तो यज्ञदत्तो वेति प्रब्रूते

---

आ॰ सोऽहमित्यादि व्याचष्टे। तथेति॥ यथा सर्व्वात्मा प्रजापतिरहमिति पूर्व्वस्मिन् जन्मनि श्रौतेन विज्ञानेन संस्कृतो विराडात्मा तथेदानीमपि फलावस्थः सोऽहं प्रजापतिरस्मीति प्रथमं व्याहृतवानिति योजना॥ व्याहरणफलमाह। तत इति॥ किमिति प्रजापतेरहमिति नामोच्यते। साधारणं हीदं सर्व्वेषामित्याशङ्क्योपासनार्थमित्याह। तस्येति। आध्यात्मिकस्य चाक्षुषस्य पुरुषस्याहमिति रहस्यं नामेति यतो वक्ष्यत्यतः श्रुतिसिद्धमेवैतन्नामास्य ध्यानार्थमिहोक्तमित्यर्थः॥

प्रजापतेरहन्नामत्वे लोकप्रसिद्धिं प्रमाणयितुमुत्तरं वाक्यमित्याह। तस्मादिति॥ उपासनार्थंप्रजापतेरहन्नामोक्त्वा पुरुषनामनिर्व्वचनङ्करोति। स चेत्यादिना॥ पूर्व्वस्मिन् जन्मनि साधकावस्थायां कर्म्माद्यनुष्ठानैरहमहमिकया प्रजापतित्वप्रेप्सूनां मध्ये पूर्व्वो यः सम्यक् कर्म्माद्यनुष्ठानैः सर्व्वं प्रतिबन्धकं यस्माददह-

उ॰ थान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मन औषत्तस्मात्पुरुष ओ औषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद॥१॥

---

भा॰ कथयति यन्नामास्य विशेषपिण्डस्य मातापितृकृतं भवति तत् कथयति। स च प्रजापतिः अतिक्रान्तजन्मनि सम्यक् कर्मज्ञानभावनानुष्ठानैः साधकावस्थायां यद्यस्मात् कर्मज्ञानभावनानुष्ठानैः प्रजापतित्वं प्रतिपित्सूनां पूर्वः प्रथमः सन्नस्मात् प्रजापतित्वप्रतिपित्सुसमुदायात्सर्वस्मादादावौषददहत् किमासङ्गाज्ञानलक्षणान् सर्वान् पाप्मनः प्रजापतित्वप्रतिबन्धकारणभूतान्।

यस्मादेवं तस्मात् पुरुषः पूर्वमौषदिति पुरुषो यथायं प्रजापतिरोषित्वा प्रतिबन्धकान् पाप्मनः सर्वान् स पुरुषः प्रजापतिरभवत्। एवमन्योऽपि ज्ञानकर्मभावना-

---

आ॰ तस्मात् स प्रजापतिः पुरुष इति योजना। उक्तमेव स्फुटयति। प्रथमः सन्निति। सर्वस्मादस्मात् प्रजापतित्वप्रतिपित्सुसमुदायात् प्रथमः सन्नौषदिति सम्बन्धः॥ आकाङ्क्षापूर्वकं दाहं दर्शयति। किमित्यादिना॥

पूर्वं प्रजापतित्वप्रतिबन्धकप्रध्वंसित्वे सिद्धमर्थमाह। यस्मादिति। पुरुषगुणोपासकस्य फलमाह। यथेति। अयं प्रजापतिरिति भविष्यद्वृत्त्या साधकोक्तिः पुरुषः प्रजापतिरिति फलावस्थः स कथ्यते। कोऽसावौषतीत्यपेक्षायामाह। तन्द-

---

* पूर्वजन्मनीति पाठान्तरः।

उ॰ सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत

---

भा॰ नुष्ठानवह्निना केवलं ज्ञानबलाद्दोषति भस्मीकरोति ह वै स तं योऽस्माद्विदुषः पूर्व्वं प्रथमः प्रजापतित्वम्बुभूषति भवितुमिच्छति तमित्यर्थः। तन्दर्शयति य एवं वेदेति सामर्थ्याज्ज्ञानभावनाप्रकर्षवान्। नन्वनर्थाय प्राजापत्यप्रतिपित्सैवंविदा चेद्दह्यते। नैष दोषः। ज्ञानभावनोत्कर्षाभावात् प्रथमम्प्रजापतित्वप्रतिपत्त्यभावमात्रत्वाद्दाहस्य। उत्कृष्टसाधनः प्रथमम्प्रजापतित्वम्प्राप्नुवन् न्यूनसाधनो न प्राप्नोतीति स तन्दहतीत्युच्यते न पुनः प्रत्यक्षमुत्कृष्टसाधनेनेतरो दह्यते। यथा लोके आजिसृतां यः प्रथममाजिमुपसर्पति तेनेतरे दग्धा इवापहृतसामर्थ्या भवन्ति तद्वत्॥१॥

यदिदं तुष्टूषितं कर्म्मकाण्डविहितज्ञानकर्म्मफलं प्राजापत्यलक्षणं नैव तत्संसारविषयमत्यक्रामदितीममर्थम्प्रद-

---

आ॰ र्शयतीति। पुरुषगुणः प्रजापतिरहमस्मीति यो विद्वान्सोऽन्यानोषतीत्यर्थः। विद्यासाम्ये कथमेषा व्यवस्थेत्याशङ्क्याह। सामर्थ्यादिति। हेतुसाम्ये दाहकत्वानुपपत्तेस्तत्प्रकर्षवानितरान्दहतीत्यर्थः। प्रसिद्धन्दाहमादाय चोदयति। नन्विति। तथा च तत्प्रेप्सायामात्तदुपायस्यासिद्धिरित्यर्थः। विवक्षितन्दाहन्दर्शयन्नुत्तरमाह। नैष इति। तदेव स्फुटयति। उत्कृष्टेति। प्राप्नुवन् भवतीति शेषः। औपचारिकन्दाहन्दृष्टान्तेन साधयति। यथेति। आजिर्म्मर्य्यादा तां सरन्ति धावन्तीत्याजिसृतस्तेषामिति यावत्॥१॥

ज्ञानकर्म्मफलं सौत्रम्पदमुत्कृष्टत्वान्मुक्तिस्तदन्यमुक्त्यभावात्तद्धेतु सम्यग्धीसिद्धये प्रवृत्तिरनर्थिकेत्याशङ्क्य सोऽबिभेदित्यस्य तात्पर्य्य-

उ॰ एवास्य भयं वीयाय कस्माद्ध्यभेष्यत् द्वितीयाद्वै भयम्भवति ॥ २ ॥

---

भा॰ [illegible] सोऽबिभेत्। स प्रजापतिर्योऽयं प्रथमः शरीरी पुरुषविधो व्याख्यातः सोऽबिभेद्भीतवान् अस्मदादिवदेवेत्याह यस्मादयम्पुरुषविधः शरीरकरणवान् आत्मनाशविपरीतदर्शनवत्त्वादबिभेत्तस्मात्तत्सामान्यादद्यत्वेऽप्येकाकी बिभेति। किञ्चास्मदादिवदेव भयहेतुविपरीतदर्शनापनोदकारणं यथाभूतात्मदर्शनं सोऽयं प्रजापतिरीक्षामीक्षाञ्चक्रे कृतवान् स ह। कथमित्याह। यद्यस्मान्मत्तोऽन्यदात्मव्यतिरेकेण वस्त्वन्तरम्प्रतिद्वन्द्वीभूतं नास्ति तस्मिन्नात्मविनाशहेत्वभावे कस्मान्नु बिभेमीति। तत एव यथाभूतात्मदर्शनादस्य प्रजापतेर्भयं वीयाय

---

आ॰ माह। यदिदमिति। बुभूषितं भोक्तुमभिप्रेतमिति यावत्। आह विवक्षितार्थसिद्ध्यर्थं हेतुम्भयभाक्त्वमिति शेषः। ज्ञानकर्म्मफलं त्रैलोक्यात्मत्वमुत्कृष्टमपि संसारान्तर्भूतमेव न कैवल्यमिति वक्तुमुत्तरवाक्यमित्यर्थः। अहमेकाकी कोऽपि मां हनिष्यतीत्यात्मनाशविषयविपरीतज्ञानवत्त्वात् प्रजापतिर्भीतवान् इत्यत्र किम्प्रमाणमित्याशङ्क्य कार्य्यगतेन लिङ्गेन कारणे प्रजापतौ तदनुमेयमित्याह। तस्मादिति। तत्सामान्यादेकाकित्वाविशेषादिति यावत्। प्रजापतेः संसारान्तर्भूतत्वे हेत्वन्तरमाह। किञ्चेति। यथास्मदादिभीरज्ज्वाद्यावादौ सर्व्वपुरुषादिभ्रमजनितभयनिवृत्तये विचारेण तत्त्वज्ञानं सम्पाद्यते तथा प्रजापतिरपि भयस्य तद्धेतोश्च विपरीतधियो व्यस्तिहेतु तत्त्वज्ञानं विचार्य्य सम्पादितवानित्यर्थः। परमार्थदर्शनमेव प्रश्नपूर्व्वकं विशदयति। कथमित्यादिना। तस्मिन्नित्यत्र तस्मादित्यादौ पठितव्यं

भा॰ विस्पष्टमपगतवत् तस्य प्रजापतेर्यद्भयन्तत् केवलाविद्या-
निमित्तमेव परमार्थदर्शनेऽनुपपन्नमित्याह कस्माद्ध्यभे-
ष्यत् किमित्यसौ भीतवान् परमार्थनिरूपणायां भयम-
नुपपन्नमेवेत्यभिप्रायः। यस्माद्द्वितीयाद्वस्त्वन्तराद्वै भय-
म्भवति द्वितीयञ्च वस्त्वन्तरमविद्याप्रत्युपस्थापितमेव।
न ह्यदृश्यमानन्द्वितीयम्भयजन्मनो हेतुः। तत्र को मोहः
कः शोक एकत्वमनुपश्यत इति मन्त्रवर्णात्। यच्चैकत्व-
दर्शनेन भयमपनुनोद अपनोदितवांस्तद्युक्तं। कस्माद् द्विती-
याद्वस्त्वन्तराद्वै भयम्भवति तदेकत्वदर्शनेन द्वितीयदर्शन-
मपनीतमिति नास्ति यतः। अत्र चोदयन्ति। कुतः प्रजा-

---

आ॰ मन्त्रद्वयोपलक्षितं प्रत्यक्चैतन्यमद्वितीयब्रह्मरूपेण ज्ञात्वा सहेतु-
भीतिम्प्रजापतिराक्षिपतीत्युक्तं इदानीन्तत्त्वज्ञानफलमाह। तत
इति॥ कस्माद्धीत्यादेरुत्तरस्य पूर्व्वेण पौनरुक्त्यमित्याशङ्क्य वि-
दुषो हेत्वभावान्न भयमित्युक्तसमर्थनार्थत्वादुत्तरस्य नैवमित्याह।
तस्येत्यादिना॥ अनुपपत्तौ हेतुमाह। यस्मादिति॥ परमार्थ-
दर्शनेऽपि वस्त्वन्तरात् किमिति भयं न भवति इत्याशङ्क्याह।
द्वितीयञ्चेति॥ अन्वयव्यतिरेकाभ्यां द्वैतस्याविद्याप्रत्युपस्थापि-
तत्वेऽपि कुतस्तदुत्थद्वैतदर्शनम्भयकारणं न भवतीत्याशङ्क्याह।
न हीति॥ तत्त्वज्ञाने सत्यज्ञानायोगात्तदुत्थं द्वैतं तद्दर्शनञ्चायुक्त-
मित्यतो हेत्वभावाद्भयानुपपत्तिरित्यर्थः॥ अद्वैतज्ञाने भयनिवृ-
त्तिरित्यत्र मन्त्रं संवादयति॥ तत्रेति॥ विराडैक्यदर्शनेनैव प्रजा-
पतेर्भयमपनीतं नाद्वैतदर्शनेनेत्यस्मिन्नर्थेऽपि यन्मदन्यन्नास्तीत्यादि-
ग्रन्थं व्याख्यातुमित्याशङ्क्याङ्गीकुर्व्वन्नाह। यच्चेति॥ तदेव प्रश्न-
द्वारा प्रकटयति। कस्मादित्यादिना॥ प्रथमव्याख्यानानु-
सारेण चोद्यमुत्थापयति। अत्रेति॥ प्रजापतेर्ब्रह्मात्मैक्य-
ज्ञानाद्भीतिध्वस्तिरयुक्ता न च तस्य तज्ज्ञानं युक्तं हेत्वभावा-
दित्याह। कुत इति॥ यस्मादस्माकमैक्यधीस्तस्मादेव तस्यापि

भा॰ पतेरेकत्वदर्शनज्ञातं को वा ऽस्मा उपदिदेश। अथानुप-
दिष्टमेव प्रादुरभूत्। अस्मदादेरपि तथा प्रसङ्गः। अथ
जन्मान्तरकृतसंस्कारहेतुकं। एकत्वदर्शनानर्थक्यप्रसङ्गः।
यथाप्रजापतेरतिक्रान्तजन्मावस्थस्यैकत्वदर्शनं विद्यमानमप्य-
विद्याबन्धकारणं नापनिन्ये। यतोऽविद्यासंयुक्त एवायं जातो
ऽभिभेदेवं सर्व्वेषामेकत्वदर्शनानर्थक्यं प्राप्नोति। अन्त्यमेव
निवर्त्तकमिति चेत्। न। पूर्व्ववत्पुनःप्रसङ्गेनानैकान्त्यात्॥
तस्मादनर्थकमेवैकत्वदर्शनमिति नैष दोषः। उत्कृष्ट-
हेतूद्भवत्वाल्लोकवद्यथापुण्यकर्म्मोद्भवैर्विविक्तैः कार्य्यकरणैः
संयुक्ते जन्मनि सति प्रज्ञामेधास्मृतिवैशारद्यन्दृष्टं। तथा

---

व्या॰ स्यादित्याशङ्क्याह। को वेति। न हि तस्य प्राक्तनजन्मा-
चार्य्याभावान्नापि सन्न्यासस्तस्य नैवर्णिकविषयत्वान्नापि यमाद्यै-
श्वर्य्यासक्तत्वादतोऽस्मात्प्रसिद्धश्रवणादिविद्याहेत्वभावान्न प्रजाप-
तेरैक्यधीर्युक्तेत्यर्थः। उपदेशानपेक्षमेव प्रजापतेरैक्यज्ञानं
प्रादुर्भूतमिति शङ्कते। अथेति। अतिप्रसक्त्या प्रत्याह। अस्म-
दादेरिति। प्रजापतेर्यज्जमानावस्थायामाचार्य्यस्य सत्त्वाच्छ्रव-
णाद्यावृत्तेरैक्यज्ञानोदयात् तत्संस्कारोत्थं तथाविधमेव तज्ज्ञानं
फलावस्थायामपि स्यादिति चोदयति। अथेति। दूषयति।
एकत्वेति। अज्ञानध्वंसित्वे नार्थवत्त्वमित्याशङ्क्याह। यथेति।
तत्र गमकमाह। यत इति। दार्ष्टान्तिकमाह। एवमिति॥
जन्मन्यस्मिन्नेव जन्मनि प्रजापतेरैक्यधीरनपेक्षा जायते। ज्ञानमप्रतिघं
यस्येति स्मृतेः। न च तदुत्पत्त्यनन्तरमेव सहेतुबन्धं निवर्त्ति
भयारत्यादिफलेन प्रारब्धकर्म्मणा प्रतिबन्धादतो मरणकालीनं
तदज्ञानध्वंसीति शङ्कते। अन्त्यमेवेति। प्रवृत्तफलस्य कर्म्मणः
क्षोपयादवाज्ञानबेशादिज्ञानशक्तिप्रतिबन्धकत्वेऽपि जन्मान्तरा-
दिसर्व्वसंस्कारहेत्वज्ञानध्वंसिज्ञानसामर्थ्यप्रतिबन्धकत्वे मानाभा-
वान्मध्ये जातं ज्ञानमनिवर्त्तकमित्याशंक्य वस्तुमन्त्यस्य च ज्ञानस्य

भा॰ प्रजापतेर्धर्म्मज्ञानवैराग्यैश्वर्य्यविपरीतहेतुसर्व्वपापप्रदाहकाति-
शुद्धैः कार्य्यकरणैः संयुक्तमुत्पन्नत्वम् तद्रूपस्यानुप-
दिष्टमेव युक्तमेकत्वदर्शनम्प्रजापतेः । तथाच स्मृतिः ।
ज्ञानमप्रतिघं यस्य वैराग्यञ्च प्रजापतेः । ऐश्वर्य्यञ्चैव
धर्म्मश्च सहसिद्धं चतुष्टयमिति । सहसिद्धत्वे भयानुपप-
त्तिरिति चेत् । न ह्यादित्येन सह तम उदेति । नान्यानुप-
दिष्टार्थत्वात् सहसिद्धवाक्यस्य । श्रद्धातात्पर्य्यप्रणिपाता-
दीनामहेतुत्वमिति चेत् । स्यान्मतं । श्रद्धावांल्लभते
ज्ञानं तत्परः संयतेन्द्रियः । तद्विद्धि प्रणिपातेनेत्येव-
मादीनां श्रुतिस्मृतिविहितानां ज्ञानहेतूनामहेतुत्वं ।

---

निर्वर्त्तकत्वेनान्यत्वं हेतुः । यजमानान्तरस्यान्ये ज्ञाने कर्त्तृत्वा-
सा॰ दृष्टेरन्यत्वस्याज्ञानध्वंसित्वेनानियमात् । न च यजमानान्तरे
प्रजापतौ चान्यं ज्ञानं ज्ञानत्वादज्ञानध्वंसिसर्व्वज्ञानेषु यस्य हे-
त्वज्ञानध्वंसित्वादृष्टेर्ज्ञानहेतोरनैकान्त्यात् । न चानयमैक्यज्ञा-
नत्वादज्ञानध्वंसीति युक्तं । उपान्त्यतादृगज्ञानवदन्त्येऽपि तदयो-
गात् । उपान्त्ये हेतोरनैकान्त्यादित्यभिप्रेत्य दूषयति । नेत्यादिना ॥

कृतकारणाभावात्तदन्तरेण चोत्पत्तावतिप्रसङ्गात् संस्कारा-
धीनत्वेऽपि विशेषाभावादन्यस्य च ज्ञानस्य चाज्ञानध्वंसित्वा-
सिद्धेरयुक्तम्प्रजापतेरेकत्वदर्शनमित्युपसंहरति । तस्मादिति ।
प्रजापतेः सुप्तप्रतिबुद्धवत्पूर्व्वकादृष्टाधीनकार्य्यकरणवत्त्वात् पूर्व्व-
कल्पीयपदपदार्थवाक्यस्मरणवतः स्मृतिविपरिवर्त्तिनो वाक्या-
दिचार्य्यमाणादृष्टसहकृतात्तत्त्वज्ञानं स्यात् । लोके विशिष्टा-
दृष्टोत्थकार्य्यकरणानां प्रबाधितभयदर्शनात्तेन च ज्ञानेन जन्मा-
न्तरहेत्वविद्याक्षयेऽप्यारब्धं कर्म्म तज्जन्यभयाद्यविद्यालेशतो
भविष्यतीति परिहरति । नैष दोष इति ॥ सङ्गृहीतमर्थं
समर्थयते । यथेत्यादिना । धर्म्मादिचतुष्टयाविपरीतमधर्म्मा-

आ॰ प्रजापतेरिव जन्मान्तरकृतधर्म्महेतुकं ज्ञानमस्तीति चेत् । न । निमित्तसमुच्चयविकल्पगुणवद्गुणत्वभेदोपपत्तेः । लोके हि नैमित्तिकानां कार्य्याणां निमित्तभेदोऽनेकधा विकल्प्यते । तथा निमित्तसमुच्चयः । तेषाञ्च विकल्पितानां समुच्चितानाञ्च पुनर्गुणवद्गुणवत्त्वकृतो भेदो भवति । तद्यथा रूपज्ञान एव तावन्नैमित्तिके कार्य्ये तमसि विनालोकेन चक्षूरूपसन्निकर्षो नक्तञ्चराणां रूपज्ञाने निमित्तं भवति । मन एव केवलं रूपज्ञाननिमित्तं योगिनाम-

---

आ॰ दिचतुष्टयं तस्य चेतोः सर्व्वस्य चात्मनो ज्ञानाद्यतिशयेन नाश्या-दिति यावत् ॥ उत्कृष्टत्वमुत्कृष्टज्ञानादिशालित्वं । उत्कृष्टजन्मप-समाह । तदुक्तञ्चेति ॥ तस्य ज्ञानादिवैशारद्ये पौराणिकीं स्मृतिमुदाहरति । तथा चेति । अप्रतिघमप्रतिबद्धं निरङ्कुश-मित्येतत् प्रत्येकं सम्बध्यते । तस्यैवचतुष्टयं सहसिद्धं सह निरवर्त्ततेति सम्बन्धः । सहसिद्धत्वश्रुतेः सोऽबिभेदिति श्रुतिविरुद्धत्वादप्रामाण्यमिति विरोधाधिकरणन्यायेन शङ्कते । सहसिद्धत्व इति ॥ सत्येव सहजे ज्ञाने व्यतीताभयमपि स्यादिति चेत् नेत्याह । नहीति । अन्येनाचार्य्येणानुपदिष्टमेव प्रजापतेर्ज्ञानमुदेति इत्येवमर्थपरत्वात्सहसिद्धवाक्यस्य तज्ज्ञा-नात् प्राक् तस्य भयमविरुद्धं ॥ ऊर्द्ध्वञ्चाज्ञानजन्मादतो न विरोधः श्रुतिस्मृत्योरिति समाधत्ते । नेत्यादिना ॥ ज्ञानोत्पत्ते-र्धर्म्माद्यनपेक्षत्वे श्रद्धादिविधानानर्थक्यादनेकश्रुतिस्मृतिवि-रोधः स्यादिति शङ्कते । श्रद्धेति । आदिपदेन यमादिग्रहः ॥ श्रद्धादिषु तेषां हेतुत्वमिति चेन्नेत्याह । प्रजापतेरिवेति ॥ चोदितं विरोधं निराकरोति । नेत्यादिना । निमित्तानां विकल्पः समुच्चयो गुणवत्त्वमगुणवत्त्वमित्यनेन प्रकारेण कार्य्योत्पत्तौ वि-शेषसम्भवाच्च श्रद्धादिविधानार्थक्यमित्यर्थः ॥ तदुदाहरणं विवृ-णोति । लोके हीति ॥ तद्धि सर्व्वं विकल्पादि यथा ज्ञातुं

भा० चाक्षुषन्तु सन्निकर्षालोकाभ्यां सह तथादित्यचन्द्राद्यालोकभेदैः समुच्चिता निमित्तभेदा भवन्ति । तथाऽऽलोकविशेषगुणवदगुणवत्त्वेन भेदाः स्युः । एवमेवात्मैकत्वज्ञानेऽपि कश्चिज्जन्मान्तरकृतं कर्म्म निमित्तम्भवति । यथा प्रजापतेः । कश्चित्तपो निमित्तं । तपसा ब्रह्म विजिज्ञासस्वेति श्रुतेः । कश्चिदाचार्य्यवान् पुरुषो वेद । श्रद्धावाँल्लभते ज्ञानं । तद्विद्धि प्रणिपातेन । आचार्य्याद्धैव ज्ञातव्यो द्रष्टव्यः श्रोतव्यः इतिश्रुतिस्मृतिभ्यः । एकान्तज्ञानलाभनिमित्तत्वं

---

आ० ज्ञानं तथैकस्मिन्नेव नैमित्तिके रूपज्ञानाख्ये कार्य्ये दर्शयामीत्याह । तद्यथेति । तत्र विकल्पमुदाहरति । तमसीत्यादिना । समुच्चयन्दर्शयति । चाक्षुषन्त्विति । विकल्पितानां समुच्चितानाञ्च निमित्तानां गुणवदगुणत्वप्रयुक्तम्भेदन्दर्शयति । तथेति । आलोकविशेषस्य गुणवत्त्वं बहुलत्वमगुणवत्त्वं मन्दप्रभत्वं चक्षुरादेर्गुणवत्त्वं निर्मलत्वादि तिमिरोपहतत्वादि चागुणवत्त्वमिति भेदः । दृष्टान्तम्प्रतिपाद्य दार्ष्टान्तिकमाह । एवमिति । तथान्यस्यापि प्रजापतितुल्यस्य वामदेवादेर्जन्मान्तरीयसाधनवशादीश्वरानुग्रहादस्मिन् जन्मनि श्रुतवाक्यादेर्ज्ञानमुदेतीति शेषः । भृगुतुल्यो वाधिकारी कश्चिदित्युच्यते । तपोऽन्वयव्यतिरेकाभ्यामालोचनं श्वेतकेतुप्रभृतिषु ज्ञाननिमित्तानां समुच्चयन्दर्शयति । कश्चिदित्यादिना । एकान्तं नियतमावश्यकं ज्ञानोदयलाभे निमित्तत्वमिति यावत् । अथ प्रणिपातादिव्यतिरेकेण न प्रजापतेरपि ज्ञानं सम्भवति सामग्र्यभावादत आह । अधर्म्मादीति । प्रणिपातादेर्ज्ञानोदयप्रतिबन्धकनिवर्त्तकत्वात् प्रजापतेश्च तन्निवृत्तेर्जन्मान्तरीयसाधनावत्त्वादाधुनिकप्रणिपातादिना विना श्रुतवाक्यादेर्वैद्या धीः सम्भवतीत्यर्थः । तर्हि श्रवणादिव्यतिरेकेणापि प्रजापतेर्ज्ञानं स्यादित्याशङ्क्याह । वेदान्तेति । न तैर्विना ज्ञानं कस्यचिदपि स्यात्

उ॰ स हैतावानास यथा स्त्री-पुमाꣳसौ सम्परिष्वक्तौ

भा॰ देकाकी न रमते रतिं नानुभवति। रतिर्नामेष्टार्थसंयोगजा क्रीडा। तत्प्रसक्तिन इष्टवियोगात्मनस्याकुलीभावोऽरतिरित्युच्यते। स तस्या अरतेरपनोदाय द्वितीयमरत्यपघातसमर्थं स्त्रीवस्त्वैच्छद् गृद्धिमकरोत्। तस्य चैवं स्त्रीविषयं गृध्यतः स्त्रिया परिष्वक्तस्येवात्मनो भावो बभूव॥

तेन सत्येप्सुत्वात् ह एतावानेतत्परिमाण आस बभूव ह। किम्परिमाण इत्याह। यथा लोके स्त्रीपुमांसावरत्यपनोदाय सम्परिष्वक्तौ यत्परिमाणौ स्यातां तदा तत्परिमाणो बभूवेत्यर्थः। स तथा तत्परिमाणमेवेममात्मानं द्वेधा द्विःप्रकारमपातयत्पातितवानिममेवेत्यवधारणं मूलकारणाद्विराजो विशेषणार्थं। न क्षीरस्य सर्व्वोपमर्द्देन दधिभावापत्तिवद्विराड्वोपमर्द्देनैतावानास। किन्तर्हि

---

आ॰ भयाविष्टत्वादिग्रहः। अरतिमरतियोगिनिवर्त्तिद्वारा निर्वक्ति। रतिर्नामेति। कथन्तर्हि यथोक्ताऽरतिनिरसनमित्याशङ्क्य स द्वितीयमैच्छदित्येतद्व्याचष्टे। स तस्या इति॥ स हेत्यस्य वाक्यस्य पातनिकां करोति। तस्येति। तेन भावेनेति यावत्॥

कथमभिमानमात्रेण यथोक्तपरिमाणत्वं। तत्राह। सत्येति। निपातोऽवधारणे। तस्यैव पुनरनुवादोऽन्वयार्थः॥ परिमाणमेव प्रश्नपूर्व्वकं विवृणोति। किमित्यादिना॥ सम्प्रति स्त्रीपुंसयोरुत्पत्तिमाह। स तथेति॥ ननु द्वेधाभावो विराजो वा संसक्तस्त्रीपुम्भावस्य पिण्डस्य वा। नाद्यः। आत्मशब्देन विराड्व्यायोगात् तस्य कर्म्मत्वाद् द्वितीये त्वात्मशब्दानुपपत्तिरित्याह। इममिति। तथा च आत्मशब्देन कर्त्तृतया विराड्वचनमविरुद्धमि-

उ॰ स इममेवात्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्द्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः* —

---

भा॰ आत्मना व्यवस्थितस्यैव विराजः सत्यसङ्कल्पत्वादात्मव्यतिरिक्तं स्त्रीपुंसपरिष्वक्तपरिमाणं शरीरान्तरं बभूव। स एव च विराट् तथा भूतः स हैतावानासेति सामानाधिकरण्यात्ततस्तस्मात्पातनात्पतिश्च पत्नी चाभवतामिति दम्पत्योर्निर्वचनं लौकिकयोरत एव तस्माद्यस्मादात्मन एवार्द्धः पृथग्भूता येयं स्त्री तस्मादिदं शरीरमात्मनोऽर्द्धं बृगलमर्द्धं च तद्बृगलञ्च तदर्द्धबृगलं विदलमर्द्धविदलमिवेत्यर्थः। प्राक्स्त्र्युद्वहनात्कस्यार्द्धबृगलमित्युच्यते। स्व आत्मन इति॥

एवमाह स्म उक्तवान्किल याज्ञवल्क्यः यज्ञस्य वल्को वक्ता यज्ञवल्कः तस्यापत्यं याज्ञवल्क्यो देवरातिरित्यर्थः।

---

आ॰ त्वर्थः। तदेव स्फुटयति। नेत्यादिना। कस्य तर्हि द्विधाकरणमित्याशङ्क्याह। किन्तर्हीति। तत्र द्विधाकरणकर्म्मेति शेषः। कथन्तर्हि तत्रात्मशब्दः सम्भवतीत्याशङ्क्याह। स एव चेति। तथा भूतः संसक्तजायापुंपरिमाणोऽभूदिति यावत्। न केवलं मनुः शतरूपेत्यनयोरेव दम्पत्योरिदं निर्वचनं। किन्तु लोकप्रसिद्धयोः सर्व्वयोरेव तयोरेतद्द्रष्टव्यं। सर्व्वनाम्नः सम्भवादित्याह। लौकिकयोरिति। उक्ते निर्वचने लोकानुभवमनुकूलयति। तस्मादिति। प्रागिति सहधर्म्मचारिणीसम्बन्धात्पूर्व्वमित्यर्थः। आकाशद्वारा पत्नीमादायानुभवमवलम्ब्य व्याचष्टे। कस्येत्यादिना। बृगलशब्दो विदलार्थः।

अनुभवसिद्धेऽर्थे प्रामाणिकसम्मतिमाह। एवमिति। द्वेधापातने सत्येको भागः पुरुषोऽपरस्तु स्त्रीत्वेनैव देहान्तर-

उ॰ स्त्रिया पूर्य्यत एव । तां समभवत्ततो मनुष्या अजायन्त ॥ ३ ॥

सो हेयमीक्षाञ्चक्रे कथं नु मात्मन एव जनयित्वा सम्भवति हन्त तिरोऽसानीति सा गौरभवदृषभ

---

भा॰ ब्राह्मणो वाऽपत्यं यस्मादयं पुरुषार्द्ध आकाशः स्त्र्यर्द्धशून्यः पुनरुद्वहनात्तस्मात्पूर्य्यते स्त्र्यर्द्धेन पुनः सम्पुटीकरणेनेव विदलार्द्धः । तां स प्रजापतिर्मन्वाख्यः शतरूपाख्यामात्मनो दुहितरं पत्नीत्वेन कल्पितां समभवन्मैथुनमुपगतवान् ततस्तस्मात्तदुपगमनान्मनुष्या अजायन्तोत्पन्नाः ॥ ३ ॥

सा शतरूपा उ ह इयं सेयं दुहितृगमने स्मार्त्तं प्रतिषेधमनुस्मरन्तीक्षाञ्चक्रे । कथन्विदमकृत्यं यन्मा मामात्मन एव जनयित्वोत्पाद्य सम्भवत्युपगच्छति । यद्यप्ययं निर्घृणोऽहं हन्तेदानीं तिरोऽसानि जात्यन्तरेण तिरस्कृता भवा-

---

आ॰ माह । यस्मादिति । उद्वहनात्प्रागवस्थायामाकाशः पुरुषार्द्धः स्त्र्यर्द्धशून्यो यस्मादसम्पूर्णो वर्त्तते तस्मादुद्वहनेन प्राप्तस्त्र्यर्द्धेन पुनरितरो भागः पूर्य्यते । यथा विदलार्द्धोऽसम्पूर्णः संपुटीकरणेन पुनः सम्पूर्णः क्रियते तद्वदिति योजना । पूर्व्वमपि स्वाभाविकयोग्यतावशेन संसर्गोऽभूदनादित्वात्संसारस्येति सूचयितुं पुनरित्युक्तं पुरुषार्द्धस्येतरार्द्धस्य च मिथःसम्बन्धान्मनुष्यादिसृष्टिरित्याह । तामित्यादिना । स्मार्त्तं प्रतिषेधमिति न सगोत्रां समानप्रवरां भार्य्यां विन्देतेत्यादिकमिति यावत् ॥ ३ ॥

अकृत्यं चेदं यद्दुहितृगमनं मातृतस्त्वापञ्चमात्पुरुषात्पितृतस्त्वासप्तमादिति स्मृतेरिति मत्वाह । कथमिति । तयोर्जात्यन्तरगमनं कथमित्याशङ्क्याह । यद्यपीति । शतरूपायां गो भा

उ० इतरस्ताꣳ समेवाभवत्ततो गावोऽजायन्त वडवे-तराभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतर-स्ताꣳ समेवाभवत्तत एकशफमजायताजेतरा-भवद्वस्त इतरोऽविरितरा मेष इतरस्ताꣳ समेवा-भवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किञ्च मि-थुनमापिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ४ ॥

---

भा० सा चैवमीक्षित्वाऽसौ गौरभवदुत्पाद्यप्राणिकर्मभिश्चोद्य-मानायाः पुनः पुनः सैव मतिः शतरूपायाः मनोश्चाभ-वत्ततश्च ऋषभ इतरस्तां समेवाभवदित्यादि पूर्ववत्। ततो गावोऽजायन्त। तथा वडवेतराभवदश्ववृष इतरस्तथा गर्दभीतरा गर्दभ इतरस्तत्र वडवाश्ववृषादीनां सङ्गमात्तत एकशफं एकखुरमश्वाश्वतरगर्दभाख्यं त्रयमजायत। तथा ऽजेतराभवद्वस्तश्छाग इतरस्तथाविरितरा मेष इतरः स तां समेवाभवत्तां तामिति वीप्सा। तामजां तामविं चेति सम-भवदेवेत्यर्थः। तत अजाश्चावयश्चाजावयोऽजायन्त। एव-मेव यदिदं किञ्च यत्किञ्चेदं मिथुनं स्त्रीपुंसलक्षणं द्वन्द्वमा-

---

आ० समापन्नायाश्च गवादिभावो मनोर्भवतु तावता यथोक्तदोषपरि-हारस्तयोर्वडवादिभावे तु न साम्यमस्तीत्याशङ्क्याह। उत्पा-द्येति। ततस्तस्या गोभावादनन्तरमिति यावत्। गवां जन्मार्थं मिथःसम्भवनं ततःशब्दार्थः। तत्र तेषामुत्पत्तौ सत्यामिति यावत्। वाक्यद्वये वीप्सा विवक्षितेत्याह। तामिति। तामेवाभि-नयति। तामजामिति। तां वडवां तां गर्दभीं चेत्यपि द्रष्टव्यं। ततो मिथःसम्भवनाख्याद्धेतोरिति यावत्। पिपीलिकानामानन्त्या-

वाव

उ॰ सोऽवेदहं वाव सृष्टिरस्म्यहꣳ हीदꣳ सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्याꣳ हास्यैतस्याम्भवति य एवं वेद ॥ ५ ॥

---

भा॰ पिपीलिकाभ्यः पिपीलिकाभिः सहानेनैव न्यायेन तत्सर्व्वमसृजत जगत्सृष्टवान् ॥ ४ ॥

स प्रजापतिः सर्व्वमिदं जगत्सृष्ट्वा ऽवेत्कथमहं वाऽव अहमेव सृष्टिः सृज्यत इति सृष्टं जगदुच्यते सृष्टिरिति । यन्मया सृष्टं जगन्मदभेदत्वादहमेवास्मि न मत्तो व्यतिरिच्यते । कुत एतदहं हि यस्मादिदं सर्व्वं जगदसृक्षि सृष्टवानस्मि तस्मादित्यर्थः । यस्मात्सृष्टिशब्देनात्मानमेवाभ्यधात्प्रजापतिस्ततस्तस्मात्सृष्टिरभवत्सृष्टिनामाभवत्सृष्ट्यां जगति ह अस्य प्रजापतेरेतस्यामेतस्मिन् जगति स प्रजापतिवत्स्रष्टा भवति स्वात्मनोऽनन्यभूतस्य जगतः । को य एवं

---

आ॰ प्रत्येकमुपदेशासम्भवं मन्वानः सङ्क्षिप्योपसंहरति । एवमेवेति ॥ तद्विभजते । इदं मिथुनमिति ॥ ४ ॥

प्रस्तुतकर्म्म प्रयोगो न्यायः । यद्यपि मन्वादिसृष्टिरेवोक्ता तथापि सर्व्वा सृष्टिरुक्तैवेति सिद्धवत्कृत्याह । स प्रजापतिरिति ॥ अवगतिं प्रश्नपूर्व्वकं विशदयति । कथमित्यादिना ॥ कथं सृष्टिरस्मीत्यवधार्य्यते कर्तृक्रिययोरेकत्वायोगादित्याशङ्क्याह । सृज्यत इतीति ॥ पदार्थमुक्त्वा वाक्यार्थमाह । यन्मयेति । जगच्छब्दादुपरि तच्छब्दमध्याहृत्याहमेव तदस्मीति सम्बन्धः ॥ तत्र हेतुमाह । मदभेदत्वादिति ॥ एवकारार्थमाह । नेति ॥ मदभेदत्वादित्युक्तमाक्षिप्य समाधत्ते । कुत इत्यादिना । न हि सृष्टं स्रष्टुरर्थान्तरं तस्यैव तेन मायाविवदस्यागादित्यर्थः । ततः

उ॰ अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्याञ्चाग्निम-

भा॰ प्रजापतिवद्यथोक्तं स्वात्मनो ऽनन्यभूतं जगत्साध्यात्माधि-
भूताधिदैवं जगदहमस्मीति वेद ॥ ५ ॥

एवं स प्रजापतिर्जगदिदं मिथुनात्मकं सृष्ट्वा ब्राह्म-
णादिवर्णनियन्त्रीर्देवताः सिसृक्षुरादावथेति शब्दद्वयम-
भिनयप्रदर्शनार्थं। अनेन प्रकारेण मुखे हस्तौ प्रक्षिप्याभ्य-
मन्थदाभिमुख्येन मन्थनमकरोत्स मुखं हस्ताभ्यां मथित्वा
मुखाच्च योनेर्हस्ताभ्याञ्च योनिभ्यामग्निं ब्राह्मणजातेरनु-
ग्रहकर्त्तारमसृजत सृष्टवान्। यस्माद्दाहकस्याग्नेर्योनिरे-
तदुभयं हस्तौ मुखञ्च। तस्मादुभयमप्येतदलोमकं लोम-
विवर्जितं। किं सर्व्वमेव न अन्तरत अभ्यन्तरतोऽस्ति हि
योन्या सामान्यमुभयस्यास्य। किमलोमका हि योनिरन्त-

आ॰ इतिरित्यादि व्याचष्टे। यस्मादिति। किमर्थं सृष्टेरेषा विभू-
तिरुपदिष्टेत्याशङ्क्याह। इत्थमिति। जगति भवतीति सम्बन्धः।
वाक्यार्थमाह। प्रजापतिवदिति ॥ ५ ॥

ननु सर्व्वा सृष्टिरुक्ता उक्तञ्च प्रजापतेर्विभूतिसङ्कीर्त्तनफलं
किमवशिष्यते यदर्थमुत्तरं वाक्यमित्याशङ्क्याह। एवमिति।
आदावभ्यमन्थदिति सम्बन्धः। अभिनयप्रदर्शनमेव विशदयति।
अनेनेति। मुखादेरग्निम्प्रतियोनित्वे गमकमाह। यस्मादिति।
प्रत्यक्षविरोधं शङ्कित्वा दूषयति। किमित्यादिना। हस्तयो-
र्मुखे च योनिशब्दप्रयोगे निमित्तमाह। अस्ति हीति। प्रजा-
पतेर्मुखादिभ्योऽग्निः सृष्टोऽपि कथं ब्राह्मणमनुगृह्णाति तत्राह।
तथेति। उक्तेऽर्थे श्रुतिस्मृतिसंवादं दर्शयति। तस्मादिति।
आग्नेयो वै ब्राह्मण इत्याद्या श्रुतिस्तदनुसारिणी च स्मृतिश्च-

उ० सृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः

---

भा० रेतः स्त्रीणां। तथा ब्राह्मणोऽपि मुखादेव अग्नेः प्रजापतेरस्मादेकयोनित्वाज्ज्येष्ठेनेवानुजोऽनुगृह्यतेऽग्निना ब्राह्मणः। तस्माद्ब्राह्मणोऽग्निदैवत्यो मुखवीर्य्यश्चेति श्रुतिस्मृतिप्रसिद्धं। तथा बलाश्रयाभ्यां बाहुभ्यां बलभिदादिकं क्षत्रियजातिनियन्तारं क्षत्रियञ्च तस्मादैन्द्रं क्षत्रं बाहुवीर्य्यञ्चेति श्रुतौ स्मृतौ चावगतं। तथोरुत ईहा चेष्टा तदाश्रयाद्वस्वादिलक्षणं विशो नियन्तारं विशञ्च। तस्मात्कृष्यादिपरो वस्वादिदैवत्यश्च वैश्यः। तथा पूषणं पृथ्वीदैवतं शूद्रञ्च पद्भ्यां परिचरणक्षममसृजतेति श्रुतिस्मृतिप्रसिद्धेः। अत्र क्षत्रादिदेवतासर्गमिहानुक्तं वक्ष्यमाणमप्युक्तवदुपसंहरति सृष्टि-

---

आ० ष्ट्या। अग्निमसृजतेत्येतदुपलक्षणार्थमित्यभिप्रेत्य सृष्ट्यन्तरमाह। तथेति। बलभिदिन्द्रः। आदिशब्देन वरुणादिर्गृह्यते। क्षत्रियञ्चासृजतेत्यनुवर्त्तते। उक्तमर्थं प्रमाणेन द्रढयति। तस्मादिति। ऐन्द्रो राजन्य इत्याद्या श्रुतिस्तदनुसारिणी च स्मृतिरवधेया। विशञ्चासृजतेति पूर्ववत्। ईहाश्रयादूरुतो जातत्वं वस्वादेर्वैश्यस्य च तच्छब्दार्थः। पद्भ्यां शूद्रो अजायतेत्याद्या श्रुतिस्तथाविधा च स्मृतिरनुसर्त्तव्या। अग्निसर्गस्य वक्ष्यमाणेन्द्रसर्गोपलक्षणत्वे सति सृष्टिसाकल्यादेष उ एव सर्वे देवा इत्युपसंहारसिद्धिरिति फलितमाह। अत्रेति। उक्तेन वक्ष्यमाणोपलक्षणाय सर्वशब्दः सूचयतीति भावः। किञ्च सृष्टिरत्र न विवक्षिता। किन्तु येन प्रकारेण सृष्टिश्रुतिः स्थिता तेन प्रकारेण देवतादि सर्वं प्रजापतिरेवेति विवक्षितमित्याह। यथेति। तत्र हेतुमाह। स्रष्टुरिति। तथापि

उ॰ तद्यदिदमाहुरमुं यजामुं यजेत्येकैकन्देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः १

भा॰ साकल्यानुकीर्त्यै। यथेयं श्रुतिर्व्यवस्थिता तथा प्रजापतिरेव सर्व्वे देवा इति निश्चितोऽर्थः। स्तुतिरनन्यत्वात्स्रष्टानां। प्रजापतिनैव स्रष्टत्वाद्देवानां। अथैवं प्रकरणार्थे व्यवस्थिते तत्स्तुत्यभिप्रायेणाविद्वन्मतान्तरनिन्दोपन्यासे *नान्यनिन्दा ऽनिन्दार्थैव॥

किन्त्वन्यस्तुतये तत्तत्र कर्म्मप्रकरणे केवलयाज्ञिका यागकाले यदिदं वच आहुरमुमग्निं यजामुमिन्द्रं यजेत्यादि नामशस्त्रस्तोत्रकर्म्मादिभिन्नत्वाद्भिन्नमेवाग्न्यादिदेवमेकैकं मन्यमाना आहुरित्यभिप्रायः। तन्न। तथा विद्यास्माद्देतस्यैव प्रजापतेः सा विसृष्टिर्देवभेदः सर्व्वः। एष उ हि एव प्रजापतिरेव प्राणः सर्व्वे देवाः। अत्र विप्रतिप-

आ॰ कथं देवतादि सर्व्वं प्रजापतिमात्रमित्याशङ्क्याह। प्रजापतिनेति॥ तद्यदिदमित्यादिवाक्यस्य तात्पर्य्यमाह। यथेति॥ स्रष्टा प्रजापतिरेव स्रष्टं सर्व्वं कार्य्यमिति प्रकरणार्थे पूर्व्वोक्तप्रकारेण व्यवस्थिते सत्यनन्तरं तस्यैव स्तुतिविवक्षया तद्यदिदमित्याद्यविद्वन्मतान्तरस्य निन्दार्थं वचनमित्यर्थः॥

मतान्तरे निन्दितेऽपि कथं प्रकरणार्थः स्तुतो भवतीत्याशङ्क्याह। अन्येति॥ एकैकं देवमित्यस्य तात्पर्य्यमाह। नामेति॥ पाठकं काशापकमितिवन्नामभेदाहृतुषु तत्तद्देवतास्तुतिभेदाद्वटशकटादिवदर्थक्रियाभेदाच प्रत्येकं देवानां भिन्नत्वात्कर्म्मिणामेतद्वचनमित्यर्थः॥ आदिशब्देन रूपादिभेदात्तद्भेदत्वं सङ्गृ-

* नान्यनिन्दान्यस्तुतय इतिपाठान्तरः।

भा० चन्ते। पर एव हिरण्यगर्भ इत्येके। संसारीत्यपरे। पर एव तु मन्त्रवर्णात्। इन्द्रं मित्रं वरुणमग्निमाहुरिति श्रुतेः। एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्व्वे देवा इति श्रुतेः। स्मृतेश्च एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिमिति। योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातन सर्व्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभाविति च।

---

आ० आदीति ॥ नन्वत्र कर्म्मिणां निन्दा न प्रतिभाति तन्मतेऽपन्यासस्यैव प्रतीतेरित्याशङ्क्याह । तमेति ॥ एकस्यैव ब्रह्मणोऽनेकविधो देवताप्रभेदः शाकल्यब्राह्मणे वक्ष्यत इति विवक्षित्वा विशिनष्टि । प्राय इति ॥ अग्न्यादयो देवाः सर्व्वे प्रजापतिरेवेत्युक्तं । सम्प्रति तत्स्वरूपनिर्द्धारयिषया तत्र विप्रतिपत्तिं दर्शयति । अन्येति । हिरण्यगर्भस्य परत्वमाद्ये द्वितीये वाक्ये संसारित्वं विधेयमिति विभागः ॥ तत्र पूर्व्वपक्षं प्रत्याति । पर एव त्विति ॥ नन्वेकस्यानेकात्मकत्वं मन्त्रवर्णादवगम्यते न तु परमात्मत्वं प्रजापतेरित्याशङ्क्य ब्राह्मणवाक्यमुदाहरति । एष इति । ब्रह्मप्रजापती सूत्रविराजौ । एषशब्दः परमात्मविषयः । स्मृतेश्च पर एव हिरण्यगर्भ इति सम्बन्धः ॥ तत्रैव वाक्यान्तरं पठति । योऽसाविति । कर्म्मेन्द्रियाविषयत्वमतीन्द्रियत्वं । अग्राह्यत्वं ज्ञानेन्द्रियाविषयत्वं । तत्र हेतुमाह । सूक्ष्मोऽव्यक्त इति ॥ न च तस्यासत्त्वं प्रमाणादिभावाभावसाक्षित्वेन सदा सत्त्वादित्याह । सनातन इति ॥ इतश्च तस्य नासत्त्वं सर्व्वेषामात्मत्वादित्याह । सर्व्वेति ॥ अन्तःकरणाविषयत्वमाह । अचिन्त्य इति ॥ योऽसौ परमात्मा यथोक्तविशेषणः स एव स्वयं विराडात्मना भूतवानित्याह । स एवेति ॥ मन्त्रब्राह्मणस्मृतिषु परस्य सर्व्वदेवतात्मत्वदृष्टेरत्र च सूत्रस्य तत्प्रतीतेस्तस्य परत्वमित्युक्तं ।

भा॰ संसार्य्येव वा स्यात्सर्व्वान्पाप्मन औषदिति श्रुतेः । न ह्य-संसारिणः पाप्मदाहप्रसङ्गोऽस्ति । भयारतिसंयोगश्रवणाच्च । अथ यन्मर्त्यः सन्नमृतानसृजतेति च । हिरण्यगर्भं पश्यत जाय-मानमिति च मन्त्रवर्णात् । स्मृतेश्च कर्म्मविपाकप्रक्रियायां ब्रह्मा विश्वसृजो धर्म्मो महानव्यक्तमेव च । उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिण इति । अथैवं विरुद्धार्थानुपपत्तेः प्रामाण्यव्याघात इति चेन्न । कल्पनान्तरोपपत्तेरविरोधा-दुपाधिविशेषसम्बन्धाद्विशेषकल्पनान्तरमुपपद्यते । आसी-नो दूरं व्रजति शयानो याति सर्व्वतः । कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हतीत्येवमादिश्रुतिभ्यः । उपाधिवशात्संसारित्वं

---

आ॰ इदानीं पूर्व्वपक्षान्तमाह । संसार्य्येवेति । सर्व्वपाप्मदाहश्रवण-मात्रेण कथं प्रजापतेः संसारित्वमत आह । न हीति । भगवद्ध-र्म्मोपदेशादिश्च परस्यापि सर्व्वपाप्मोदयाभावादतश्चेदं संसारित्वे लिङ्गमित्याशङ्क्याह । भयेति । असृजतेति च श्रवणादिति सम्बन्धः । न केवलं सर्व्वत्वश्रुतेरेव संसारित्वं किन्तु मन्त्रश्रु-तेश्चेत्याह । हिरण्यगर्भमिति । यथोक्तहेतुना संसार्य्येव स्यादिति प्रतिज्ञयान्वयः । कर्म्मफलदर्शनाधिकारे मनोर्व्याख्यायाः स्मृतेश्च तत्पदभूतस्य प्रजापतेः संसारित्वमेवेत्याह । स्मृते-श्चेति । विपाकप्रक्रियोच्यते । विश्वसृजो मन्वादयः धर्म्म-स्तदभिमानिनी देवता यमः । महान् प्रकृतेराद्यो विकारः । सूक्ष्मं अव्यक्तं प्रकृतिरिति भेदः । अस्तु तर्हि द्विविधवाक्य-वशात्प्रजापतेः संसारित्वमसंसारित्वञ्चेत्याशङ्क्याह । अथेति । तद्द्विविधवाक्यश्रवणानन्तर्य्यमथशब्दार्थः । एवंशब्दः संसारि-त्वासंसारित्वप्रकारपरामर्शार्थः । विरोधकृतमप्रामाण्यं निरा-करोति । नेत्यादिना । अतोऽसंसारित्वं कल्पनया च संसा-रित्वमिति कल्पनान्तरसम्भवात् । द्विविधश्रुतीनामविरोधात्प्रा-

भा॰ परमार्थतः स्वतोऽसंसार्य्येव। एवमेकत्वं नानात्वञ्च हिरण्य-गर्भस्य। तथा सर्व्वजीवानां। तत्त्वमसीति श्रुतेर्हिरण्यगर्भ-स्तूपाधिशुद्ध्यतिशयापेक्षया प्रायशः पर एवेति श्रुतिस्मृति-वादाः प्रवृत्ताः। संसारित्वन्तु क्वचिदेव दर्शयन्ति॥

जीवानां तूपाधिगताशुद्धिबाहुल्यात्संसारित्वमेव प्राय-शोऽभिलप्यते। व्यावृत्तकृत्स्नोपाधिभेदापेक्षया तु सर्व्वः पर-त्वेनाभिधीयते श्रुतिस्मृतिवादैः। तार्किकैस्तु परित्यक्ता-

---

आ॰ मात्मसिद्धिरित्यर्थः॥ कल्पनया संसारित्वमित्येतद्विशदयति। उपाधीति॥ औपाधिकी परस्य विशेषकल्पनेत्यत्र प्रमाण-माह। आसीन इति। स्वारस्येन कूटस्थोऽप्यात्मा मनसः शीघ्रं दूरगमनदर्शनात्तदुपाधिको दूरं व्रजति। तथा स्वप्ने शया-नोऽपि मनसो गतिभ्रान्त्या सर्व्वत्र यातीव भाति यथा जाग-रेऽपीत्यर्थः॥ कल्पितेन हर्षादिविकारेण स्वाभाविकेन तदभा-वेन च युक्तमात्मानं न कश्चिदपि निश्चेतुं शक्नोतीत्याह। कस्त-मिति। आदिपदेन ध्यायतीवेत्यादिश्रुतयो गृह्यन्ते॥ उदाहृत-श्रुतीनां तात्पर्य्यमाह। उपाधीति॥ किन्तर्हि पारमार्थिकन्त-दाह। स्वत इति। पूर्व्वेण संबन्धः॥ हिरण्यगर्भस्य वास्तवम-वास्तवञ्च रूपं निरूपितमुपसंहरति। एवमिति॥ तस्याप्यस्म-दादिवच्छ् स्वतो ब्रह्मत्वं किन्तु संसारित्वमेव स्वाभाविकमित्या-शङ्क्य दृष्टान्तस्य साध्यविकलतामाह। तथेति॥ सर्व्वजीवाना-मेकत्वं नानात्वञ्चेति पूर्व्वेण संबन्धस्तेषां स्वतो ब्रह्मत्वे प्रमाण-माह। तत्त्वमिति॥ कस्तर्हि हिरण्यगर्भे विशेषो येनासाव-स्मदादिभिरुपास्यते तत्राह। हिरण्यगर्भस्त्विति॥ ननु श्रुति-स्मृतिवादेषु क्वचित्तस्य संसारित्वमपि प्रदर्श्यते। सत्यं। तत्तु कल्पितमित्यभिप्रेत्याह। संसारित्वन्त्विति॥ अस्मदादिषु तुल्य-मेतदित्याशङ्क्याह। जीवानां त्विति॥ कथन्तर्हि तत्त्वमसि। क्षेत्र-ज्ञञ्चापि मां विद्धीत्यादिश्रुतिस्मृतिवादाः सङ्गच्छन्ते। तत्राह। व्यावृत्तेति॥ स्वमते तत्त्वनिश्चयमुक्त्वा परमते तदभावमाह।

उ॰ अथ यत्किञ्चेदमार्द्रं तद्रेतसोऽसृजत तदु सोमः

---

भा॰ गमवद्भिरस्तिनास्तिककर्त्ताकर्त्तेत्यादिविरुद्धं बहु तर्कयद्भि-राकुलीकृतः शास्त्रार्थः । तेनार्थनिश्चयो दुर्लभः । ये तु केवलशास्त्रानुसारिणः शान्तदर्पास्तेषां प्रत्यक्षविषय इव निश्चितः शास्त्रार्थो देवतादिविषयः । तत्र प्रजापतेरेकस्य देवस्यान्नादिलक्षणो भेदो विवक्षित इति । तत्राग्निरत्तो ऽन्नाद्यः सोम इदानीमुच्यते ॥

अथ यत्किञ्चेदं लोके आर्द्रं द्रवात्मकं तद्रेतस आत्मनो बीजादसृजत रेतस आप इति श्रुते*र्द्रवात्मकश्च सोमस्तस्माद्यदार्द्रं प्रजापतिना रेतसः सृष्टं तदु सोम एव । एतावद्वै एतावदेव नातोऽधिकमिदं सर्व्वं । किन्तदन्नञ्चैव

---

आ॰ तार्किकैरिति । नन्वेकजीववादेऽपि सर्व्वव्यवस्थानुपपत्तेस्तत्त्व-निश्चयदौर्लभ्यं तुल्यमिति चेन्नेत्याह । ये त्विति । स्वप्नवत्प्रबोधा-त्प्रागपि व्यवस्थासम्भवादूर्ध्वञ्च तदभावस्येष्टत्वादेकमेव शास्त्रानाद्य-विद्यावशादेव व्यवहारास्पदमिति पक्षे न काचन दोषकलेति भावः । सर्व्वदेवतात्मकस्य प्रजापतेः सतोऽसंसारित्वकल्पनया वैपरीत्यमिति स्थिते तत्रेत्याद्युत्तरग्रन्थस्य तात्पर्य्यमाह । तत्रेति । विवक्षित इत्युत्तरग्रन्थप्रवृत्तिरिति शेषः । तस्य विषयं परिच्छि-नत्ति । तत्राग्निरिति । अन्नाद्ययोर्निर्धारणार्था सप्तमी ॥

सम्प्रति प्रतीकमादायाक्षराणि व्याकरोति । अथेति । अस्तुः सर्गानन्तर्य्यमथशब्दार्थः । रेतसः सकाशादपां सर्गेऽपि सो-मशब्दे किमायातमित्याशङ्क्याह । द्रवात्मकश्चेति । अप्याख्या-कृतेः सोमोत्पत्तिश्रवणात्तत्र शैत्योपलम्भश्चेति भावः । सोमस्य द्रवात्मकत्वे फलितमाह । तस्मादिति । अग्नीषोमयोरन्नाद्ययोः

---

* द्रवात्मकश्चेति पाठान्तरः।

उ॰ एतावद्वा इदꣳसर्व्वमन्नञ्चैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽतिमृष्टिः ।

---

भा॰ सोमो द्रवात्मकत्वादाप्यायकमन्नमदश्चाग्निरौष्ण्याद्रूक्ष*त्वाच्च । तत्रैवमवध्रियते सोम एवान्नं । यदद्यते तदेव सोम इत्यर्थो य एवात्ता स एवाग्निरर्थबलाद्ध्यवधारणं । अयमग्निरपि क्वचिद्धूयमानः सोमपक्षस्यैव । सोमोऽपीज्यमानोऽग्निरेवात्तृत्वात् । एवमग्नीषोमात्मकं जगदात्मत्वेन पश्यन्न केनचिद्दोषेण लिप्यते । प्रजापतिश्च भवति । सैषा ब्रह्मणः प्रजापतेरतिसृष्टिरात्मनोऽप्यतिशया ॥

---

आ॰ एतावपि जगति वस्त्वन्तरमवशिष्टमस्तीत्याशङ्क्याह । एतावदिति ॥ आप्यायकः सोमो द्रवात्मकत्वादन्नमाप्यायकं प्रसिद्धं तस्मादुपपन्नं सोमस्यान्नत्वमित्याह । द्रवात्मकत्वादिति ॥ सोम एवान्नमग्निरन्नाद इत्यवधारणस्य विवक्षितमर्थमाह । तत्रेति । यथोक्तं वाक्यं सप्तम्यर्थः ॥ यथाश्रुतमवधारणमवधार्य्य कुतो विधान्तरेण तद्व्याख्यानमित्याशङ्क्याह । अर्थबलाद्धीति । अन्नादस्य संहर्तृत्वादग्नित्वमन्नस्य च संहरणीयतया सोमत्वमवधारयितुं युक्तमित्यर्थः ॥ नन्वन्नस्य सोमत्वेन न नियमोऽग्नेरपि जलादिना संहाराच्च चात्तुरग्नित्वेन नियमः। सोमस्यापि कदाचिदिज्यमानत्वेनात्तृत्वात्तत्कुतोऽर्थबलमित्याशङ्क्याह । अग्निरपीति । सोऽपि संहार्य्यश्चेत्सोम एव । स च संहर्त्ता चेदग्निरेवेत्यवधारणसिद्धिरित्यर्थः ॥ प्राजापतेः सर्व्वात्मत्वमुपक्रम्य जगतो द्वेधा विभक्तत्वाभिधानं कुत्रोपयुक्तमित्याशङ्क्य तस्य सूत्रे पर्य्यवसानात्तस्मिन्नात्मबुद्ध्योपासकस्य सर्व्वदोषराहित्यं फलमत्र विवक्षितमित्याह । एवमिति । अनुग्राहकदेवसृष्टिं श्रित्वा तदुपासकस्य फलोक्त्यर्थमादौ देवसृष्टिं स्तौति । सैषेति ॥

---

*अत्तृत्वाचेति पाठान्तरः ।

उ॰ यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्याᳬ हास्यैतस्यां भवति य एवं वेद ॥ ६ ॥

---

भा॰ का सेत्याह । यच्छ्रेयसः प्रशस्यतरादात्मनः सकाशाद्यस्मादसृजत देवान् सैषा तस्माद्देवसृष्टिरतिसृष्टिः । कथं पुनरात्मनोऽतिशया सृष्टिरित्यत आह । अथ यद्यस्मान्मर्त्यः सन्मरणधर्म्मा सन्नमृतानमरणधर्म्मिणो देवान् कर्म्मज्ञानवह्निना सर्व्वानात्मन पाप्मन ओषित्वाऽसृजत । तस्मादियमतिसृष्टिरुत्कृष्टज्ञानस्य फलमित्यर्थः । तस्मादेतामतिसृष्टिं प्रजापतेरात्मभूतां यो वेद स एतस्यामतिसृष्ट्यां प्रजापतिरिव भवति प्रजापतिवदेव स्रष्टा भवति ॥ ६ ॥

तद्धेदं तर्ह्यव्याकृतमासीत् । सर्व्वं वैदिकं साधनं ज्ञानकर्म्मलक्षणं कर्त्राद्यनेककारकापेक्षं प्रजापतित्वफलावसानं साध्यमेतावदेव यदेतद्व्याकृतं जगत्संसारोऽप्येतस्यैव साध्यसा-

---

आ॰ अग्निर्मूर्द्धेत्यादिश्रुतेरग्न्यादयोऽस्यावयवास्तत्कथं तत्सृष्टिस्ततोऽतिशयवतीत्याशङ्क्यते । कथमिति । प्रजापतेर्यजमानावस्थापेक्षया देवसृष्टेरुत्कृष्टं वचनमविरुद्धमिति परिहरति । अत आहेति । देवसृष्टेरतिसृष्टित्वाभावशङ्कानुवादार्थोऽथशब्दः । ज्ञानस्येत्युपलक्षणं कर्म्मणोऽपीति द्रष्टव्यं । अतिसृष्ट्यामित्यादि व्याचष्टे । तस्मादिति । देवतादिस्रष्टा तदात्मा प्रजापतिरहमेवेत्युपासितुस्तद्भावापत्त्या तत्स्रष्टृत्वं फलतीत्यर्थः ॥ ६ ॥

पूर्व्वोत्तरग्रन्थयोः सम्बन्धं वक्तुं प्रतीकमादाय वृत्तं कीर्त्तयति । तद्धेत्यादिना । तस्यादेयत्वार्थं वैदिकमित्युक्तं । साधनमित्युक्ते मुक्तिसाधनं पुरः स्फुरति तन्निरस्यति । ज्ञानेति । एकरूपस्य

उ॰ तद्धेदं तर्ह्यव्याकृतमासीत्

---

भा॰ धनलक्षणस्य व्याकृतस्य जगतो व्याकरणात्प्राग् वीजावस्था या तां निर्दिदिक्षत्यङ्कुरादिकार्य्यानुमितामिव वृक्षस्य कर्म्मवीजोऽविद्याक्षेत्रो ह्यसौ संसारवृक्षः समूल उद्धर्त्तव्य इति । तदुद्धरणे हि पुरुषार्थपरिसमाप्तिः । तथाचोक्तं । ऊर्द्ध्वमूलोऽवाक्शाख इति काठके । गीतासु च ऊर्द्ध्वमूलमधःशाखमिति । पुराणे च ब्रह्मवृक्षः सनातन इति । तद्धेतदिति वीजावस्थं जगत्प्रागुत्पत्तेः । तर्हि तस्मिन्काले परोक्षत्वात्सर्व्वनाम्नोऽप्रत्यक्षाभिधानेनाभिधीयते । भूतकालसंबन्धित्वादव्याकृतभाविनो जगतः सुखग्रहणार्थमैतिह्यप्रयोगो हशब्दः । एवं ह

---

आ॰ मोक्षस्यानेकरूपं न साधनं भवतीति भावः ॥ मुक्तिसाधनं मानवस्तुतन्त्रं तत्त्वज्ञानमिदन्तु कारकसाध्यमतोऽपि न तद्धेतुरित्याह । कर्त्रादीति । किञ्चेदं प्रजापतित्वफलावसानं मृत्युरस्यात्माभवतीति श्रुतेः ॥ न च तदेव कैवल्यं भयारत्यादिश्रवणादतोऽपि नेदं मुक्त्यर्थमित्याह । प्रजापतित्वेति ॥ किञ्च नित्यसिद्धा मुक्तिरिदन्तु साध्यफलमतोऽपि न मुक्तिहेतुरित्याह । साध्यमिति ॥ किञ्च मुक्तिर्व्याकृतादर्थान्तरमन्यदेव तद्विदितादित्यादिश्रुतेः । इदन्तु नामरूपं व्याकृतमतोऽपि न तद्धेतुरित्याह । एतावदेवेति ॥ सम्प्रत्यव्याकृतकण्डिकामवतारयन्प्रवेशवाक्यात्प्राक्तनस्य तद्धेदमित्यादेर्वाक्यस्य तात्पर्य्यमाह । अथेति ॥ ज्ञानकर्म्मफलोक्त्यानन्तर्य्यमथशब्दार्थः । वीजावस्था साभासप्रत्यगविद्या तस्या निर्देष्टुमिष्टत्वमेव न साक्षान्निर्देश्यत्वमनिर्वाच्यत्वादिति वक्तुं निर्दिदिक्षतीत्युक्तं । वृक्षस्य वीजावस्थां लोको निर्दिशतीति सम्बन्धः । यज्ज्ञाने पुमर्थासिद्धस्तदेव वाच्यं किमिति प्रत्यगविद्योच्यते तत्राह । तदुद्धरणकर्म्मेति ॥ उद्धर्त्तव्य इति तन्मूलनिरूपणमर्थवदिति शेषः । अथ पुरुषार्थमर्थयमानस्य तदुद्धारोऽपि

भा॰ तदासीदित्युच्यमाने सुखं तां परोक्षामपि जगतोऽवस्थां प्रतिपद्यते युधिष्ठिरो ह किल राजासीदित्युक्ते यद्वदिदं व्याकृतनामरूपात्मकं साध्यसाधनलक्षणं यथावर्णितमभिधीयते तदिदंशब्दयोः परोक्षप्रत्यक्षावस्थजगद्वाचकयोः सामानाधिकरण्यादेकत्वमेव परोक्षप्रत्यक्षावस्थस्य जगतोऽवगम्यते। तदेवेदमिदमेव च तदव्याकृतमासीदिति। अथैवं सति नासत उत्पत्तिर्न सतो विनाशः कार्य्यस्येत्यवधृतं भवति॥

---

आ॰ क्वोपयुज्यते तत्राह। तदुक्तरवे हीति॥ ननु संसारस्य मूलमेव नास्ति स्वभाववादात्प्रधानादेव वा तन्मूलं नाम्नातं ब्रह्मेत्याशङ्क्य श्रुतिस्मृतिभ्यां परिहरति। तथा चेति। ऊर्द्ध्वमुत्कृष्टं कारणं कार्य्यापेक्षया परमव्याकृतं मूलमस्येत्यूर्द्ध्वमूलो हिरण्यगर्भादयो मूलापेक्षयाऽवाक्शाखा इत्यवाक्शाखः। एवमूर्द्ध्वमूलमधःशाख-मित्यादिगीता अपि नेतव्याः। अस्ति हि संसारस्य मूलं नेदममूल-म्भविष्यतीति श्रुतेस्तच्चाम्नातं ब्रह्मैवेति श्रुतिस्मृतिप्रसिद्धमिति भावः॥ सम्प्रति प्रतीकमादाय पदानि व्याचष्टे। तत्रेत्यादिना॥ अप्रत्यक्षाभिधानेन तदिति सर्व्वनाम्ना वीजावस्थं जगदभिधी-यते परोक्षत्वादिति सम्बन्धः। कथं जगतो वीजावस्थत्वमित्याशङ्क्य तर्हीत्यस्यार्थमाह। प्रागिति॥ कथन्तस्य परोक्षत्वं तत्राह। भूतेति॥ निपातार्थमाह। सुखेति॥ इदंशब्दार्थमभिनयति। किलेति। यथा वर्णितमित्यनर्थत्वेन संसारेऽसारत्वोक्तिः॥ पदद्वयसामा-नाधिकरण्यलब्धमर्थमाह। तदिदमिति॥ एकत्वमभिनयेनोदा-हरति। तदेवेति॥ एकत्वावगतिफलं कथयति। अथेति॥ सामानाधिकरण्यवशादेकत्वे निश्चिते सत्यनन्तरं नासतो विद्यते भावो नाभावो विद्यते सत इति स्मृतिरनुगुणता भवतीति भावः॥

उ॰ तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदंरूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव

---

भा॰ तदेवम्भूतं जगदव्याकृतं सन्नामरूपाभ्यामेव नाम्ना रूपेणैव च व्याक्रियत। व्याक्रियतेति कर्म्मकर्त्तृप्रयोगात्तत्स्वयमेवात्मैव व्याक्रियत। वि आ अक्रियत विस्पष्टं नामरूपविशेषावधारणमर्य्यादं व्यक्तीभावमापद्यत। सामर्थ्यादाक्षिप्तनियन्तृकर्त्तृसाधनक्रियानिमित्तं असौ नामेति सर्व्वनाम्नाऽविशेषाभिधानेन नाममात्रं व्यपदिशति। देवदत्तो यज्ञदत्त इति

---

टी॰ अज्ञातं ब्रह्म जगतो मूलमित्युक्त्वा तद्विवर्त्तो जगदिति निरूपयति। तदेवम्भूतमिति॥ तृतीयामित्थम्भावार्थत्वेन व्याचष्टे। नाम्नेति॥ क्रियापदप्रयोगाभिप्रायन्तदनुवादपूर्व्वकमाह। व्याक्रियतेति॥ तत्र पदच्छेदपूर्व्वकन्तद्वाच्यमर्थमाह। व्याक्रियतेत्यादिना॥ स्वयमेवेति कुतो विशेष्यते कारणमन्तरेण कार्य्योत्पत्तिरयुक्तेत्याशङ्क्याह। सामर्थ्यादिति। निर्हेतुकार्य्यसिद्ध्यनुपपत्त्याक्षिप्तो नियन्ता जनयिता कर्त्ता चोत्पत्तौ साधनक्रियाकरणव्यापारस्तन्निमित्तन्तदपेक्षं व्यक्तीभावमापद्यत इति योजना॥ नामसामान्यं देवदत्तादिना विशेषनाम्ना संयोज्य सामान्यविशेषवानर्थो नाम व्याकरणवाक्ये विवक्षित इत्याह। असावित्यादिना॥ असौशब्दः श्रोतोऽव्ययत्वेन नेयो, रूपसामान्यं शुक्लकृष्णादिना विशेषेण संयोज्योच्यते रूपव्याकरणवाक्ये नेत्याह। तथेत्यादिना॥ अव्याकृतमेव व्याकृतात्मना व्यक्तमित्येतत्सुप्तप्रबुद्धदृष्टान्तेन स्पष्टयति। तदिदमिति। तद्धेत्यत्र मूलकारणमुक्त्वा तन्नामरूपाभ्यामित्यादिना तत्कार्य्यमुक्तमिदानीं प्रवेशवाक्यस्थसशब्दापेक्षितमर्थमाह। यदर्थ इति॥ काण्डद्वयात्मनो वेदस्यारम्भो यस्य परस्य प्रतिपत्त्यर्थो विज्ञायते। कर्म्मकाण्डं हि स्वार्थानुष्ठानाहितचित्तशुद्धिद्वारा तत्त्वज्ञानोपयोगीष्यते। ज्ञानकाण्डन्तु साक्षादेव तत्रोपयुज्यते। सर्व्वे वेदा यत्पदमामनन्तीति च श्रूयते। स एषोऽत्र प्रविष्टो देहादाविति

उ॰ व्याक्रियतेऽसौ नामायमिदंरूप इति स एष इह प्रविष्टः x—

---

भा॰ वा नामास्येत्यसौ नामायं। तथेदमिति शुक्लकृष्णादीनाम-विशेषः। इदं शुक्लमिदं कृष्णं वा रूपमस्येतीदंरूपः। तदिद-मव्याकृतं वस्त्वेतर्ह्येतस्मिन्नपि काले नामरूपाभ्यामेव व्या-क्रियतेऽसौ नामायमिदंरूप इति। यदर्थः सर्व्वशास्त्रारम्भो यस्मिन्नविद्यया स्वाभाविक्या कर्त्तृक्रियाफलाध्यारोपणा कृता यः कारणं सर्व्वस्य जगतो यदात्मके नामरूपे सलिला-दिव स्वच्छान्मलमिव फेनमव्याकृते व्याक्रियेते। यश्च ताभ्यां

---

आ॰ योजना। सर्व्वस्याम्नायस्य ब्रह्मात्मनि समन्वयमुक्त्वा तत्र विरोध-समाधानार्थमाह। यस्मिन्निति। अध्यासस्य चतुर्विधस्यातीना-मन्यतमत्वं वारयति। अविद्ययेति। तस्या मिथ्याज्ञानत्वेन सा-दित्वादनाद्यध्यासहेतुत्वासिद्धिरित्याशङ्क्याह। स्वाभाविक्येति। विद्याप्रागभावत्वमविद्याया व्यावर्त्तयति। कर्त्रिति। न हि तदु-पादानत्वमभावत्वे सम्भवति नचोपादानान्तरमस्तीति भावः॥ अन्वयस्तु सर्व्वत्र यच्छब्दस्य पूर्व्ववद्द्रष्टव्यः। आत्मनि कर्तृत्वाध्या-सस्याविद्याकृतत्वोक्त्या समन्वये विरोधः समाहितः सम्प्रत्यध्या-सकारणस्योक्तत्वेऽपि निमित्तोपादानभेदं साङ्ख्यवादमाशङ्क्यात्म-मेव कारणं तद्भेदनिराकरणार्थं कथयति। यः कारणमिति। श्रुतिस्मृतिवादेषु परस्य तत्कारणत्वं प्रसिद्धमिति भावः॥ नाम-रूपात्मकस्य द्वैतस्याविद्याविद्यमानदेहत्वाद्विद्यापनोद्यत्वं सिध्य-तीत्याह। यदात्मकेति। व्याकर्त्तुरात्मनः स्वभावतः शुद्धत्वे दृष्टान्त-माह। सलिलादिति। व्याक्रियमाणयोर्नामरूपयोः स्वतोऽशुद्धत्वा-दृष्टान्तमाह। मलमिवेति। यथा फेनादि जलोत्थं तन्मात्रमेव तथा आत्मजोत्थं जगद् ब्रह्ममात्रं तज्ज्ञानबाध्यञ्चेति भावः॥ नित्यशुद्धत्वादिलक्षणमपि वस्तु न स्वतोऽज्ञाननिवर्त्तकं बोधस्य तत्साधकत्वात्। वाक्योत्थबुद्धिस्थस्यात्वन्तु तथेति मन्वानो ब्रूते।

भा॰ नामरूपाभ्यां विलक्षणः स्वतो नित्यशुद्धबुद्धमुक्तस्वभावः स एषोऽव्याकृते आत्मभूते नामरूपे व्याकुर्व्वन् ब्रह्मादिस्तम्बपर्य्यन्तेषु देहेष्विह कर्म्मफलाश्रयेष्वशनायादिमत्सु प्रविष्टः॥

नन्वव्याकृतं स्वयमेव व्याक्रियतेत्युक्तं कथमिदानीमुच्यते पर एव त्वात्माऽव्याकृतं व्याकुर्व्वन्निह प्रविष्ट इति । नैष दोषः । परस्यात्मनो*ऽव्याकृतजगदात्मत्वेन विवक्षितत्वादाक्षिप्तनियन्तृकर्त्तृक्रियानिमित्तं हि जगदव्याकृतं

---

आ॰ यश्चेति। आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मेति श्रुतिमाश्रित्याह। ताभ्यामिति॥ नामरूपात्मकद्वैतासंस्पर्शित्वादेव नित्यशुद्धत्वं अशुद्धेर्द्वैतसंबन्धाधीनत्वात्तथाविद्या प्रयोजिकेत्यभिप्रेत्य तत्सम्बन्धं निषेधति। बुद्धेति॥ तस्मादेव दुःखाद्यनर्थासंस्पर्शित्वमाह। मुक्तेति॥ विद्यादशायां मुक्त्यादिसद्भावेऽपि बन्धावस्थायां नैवमिति चेन्नेत्याह। स्वभाव इति॥ अव्याकृतवाक्योक्तमज्ञातं परमात्मानं परामृशति। स इति॥ तमेव कार्यस्थं प्रत्यक्षं निर्दिशति। एष इति॥ आत्मा हि स्वतो नित्यशुद्धत्वादिरूपोऽपि स्वाविद्यावष्टम्भान्नामरूपे व्याकरोतीति तत्सर्जनस्याविद्यामयत्वं विवक्षित्वाह। अव्याकृत इति॥ तयोरात्मना व्याकृतत्वे तदतिरेकेणाभावः पश्यतीति मत्वा विशिनष्टि। आत्मेति॥ जनिमन्मार्गमिह शब्दार्थं कथयति। ब्रह्मादीति॥ तत्रैव दुःखादिसंबन्धो नात्मनीति मन्वानो विशिनष्टि। कर्म्मेति॥ ब्रह्मात्मैक्ये पदद्वयसामानाधिकरण्याधिगते हेतुमाह। प्रविष्ट इति॥

परमात्मा स्रष्टा सृष्टे प्रविष्टो जगतीत्यादिष्टमाक्षिपति। नन्विति॥ पूर्व्वापरविरोधं समाधत्ते। नेत्यादिना। व्याक्रियतेति कर्म्मकर्तृप्रयोगाज्जगत्कर्त्तुरविवक्षितत्वमुक्तमित्याशङ्क्याह। आक्षिप्तेति। उच्यते वत्सः स्वयमेवेतिवत्कर्म्मकर्त्तरि लकारो व्याकरणसौकर्य्यापेक्षया सत्येव कर्त्तरि निर्वहतीति भावः। अव्या-

---

* परस्याप्यात्मन इति पाठान्तरः॥

भा॰ व्याक्रियतेत्यवोचाम। इदंशब्दसामानाधिकरण्याच्च व्याकृतशब्दस्य यथेदं जगन्नियन्त्राद्यनेककारकनिमित्तादिविशेषवद्व्याकृतं। तथाऽपरित्यक्तान्यतमविशेषवदेव तदव्याकृतं। व्याकृताव्याकृतमात्रस्तु विशेषो दृष्टश्च लोके विवक्षातः शब्दप्रयोगो ग्राम आगतो ग्रामः शून्य इति कदाचिद्ग्रामशब्देन निवासमात्रविवक्षायां ग्रामः शून्य इति शब्दप्रयोगो भवति कदाचिन्निवासिजनविवक्षायां ग्राम आगत इति कदाचिदुभयविवक्षायामपि ग्रामशब्दप्रयोगो भवति ग्रामञ्च न प्रविशेदिति यथा। तद्वदिहापि जगदिदमव्याकृतं व्याकृतञ्चेत्यभेदविवक्षायामात्मानात्मनोर्भवति व्यपदेशः। तथेदं जगदुत्पत्तिविनाशात्मकमिति केवलजगद्व्यपदेशस्तथा महानज आत्माऽस्थूलोऽनणुः स एष नेति नेत्यादि केवल आत्मव्यपदेशः॥

---

आ॰ व्याकृतशब्दस्य नियन्त्रादियुक्तजगद्वाचित्वे हेत्वन्तरमाह। इदंशब्देति। कथमुक्तसामानाधिकरण्यमात्रादव्याकृतस्य जगतो नियन्त्रादियुक्तत्वं तत्राह। यथेति॥ नियन्त्रादीत्यादिशब्देन कर्तृकरणादिग्रहणं। निमित्तादीत्यादिपदेनोपादानमुच्यते। विमतं नियन्त्रादिसापेक्षं कार्य्यत्वात्सम्प्रतिपन्नवदित्यर्थः॥ कथन्तर्हि प्रागवस्थे सम्प्रतिपन्ने च जगति विशेषस्तत्राह। व्याकृतेति॥ कथम्पुनरव्याकृतेन जगद्वाचिना परो गृह्यते। एकस्य शब्दस्यानेकार्थत्वायोगादत आह। दृष्टश्चेति॥ उक्तमेव स्फुटयति। कदाचिदिति॥ उभयविवक्षया ग्रामशब्दप्रयोगस्य दार्ष्टान्तिकमाह। तद्वदिति॥ इहेत्यव्याकृतवाक्योक्तिः॥ निवासमात्रविवक्षया ग्रामशब्दप्रयोगस्यापि दार्ष्टान्तिकमाह। तथेति॥ निवासिजनमात्रविवक्षया तत्प्रयोगस्यापि दार्ष्टान्तिकं कथयति। तथा महानिति॥

भा॰ ननु परेण व्याकर्त्ता व्याकृतं सर्व्वतो व्याप्तं सर्व्वदा जगत्स कथमिह प्रविष्टः परिकल्प्यते। अप्रविष्टो हि देशः परिच्छिन्नेन प्रवेष्टुं शक्यते। यथा पुरुषेण ग्रामादिर्नाकाशेन किञ्चिन्नित्यप्रविष्टत्वात्पाषाणे सर्पादिवद्धर्म्मान्तरेणेति चेद्यथापि स्वात्मपर आत्मा स्वेनैव रूपेण प्रविवेश किन्तर्हि तत्स्थ एव धर्म्मान्तरेणोपजायते तेन प्रविष्ट इत्युपचर्य्यते यथा पाषाणे सहजोऽन्तस्थः सर्पो नारिकेले वा तोयं न तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः। यः स्रष्टा स भावान्तरमनापन्न एव कार्य्यं सृष्ट्वा पश्चात्प्राविशदिति हि श्रूयते। यथा

---

आ॰ अव्याकृतवाक्ये परस्य प्रकृतत्वात्तस्य प्रवेशवाक्ये सशब्देन परामृष्टस्य सृष्टे कार्य्ये प्रवेश उक्तस्तत्र प्रकारान्तरेणाक्षिपति। नन्विति। कथमिति सूचितामनुपपत्तिमेव स्पष्टयति। अप्रविष्टो हीति। दृष्टान्तावष्टम्भेन प्रवेशवादी शङ्कते। पाषाणेति। तदेव स्फुटयति। यथापीत्यादिना। परस्य परिपूर्णस्य क्वचित्प्रवेशाभावेऽपीति यावत्। तच्छब्दः सृष्टकार्य्यविषयः। धर्म्मान्तरं जीवाख्यं। दृष्टान्तं व्याचष्टे। यथेति। पाषाणाद्यन्तस्थः सर्पादिस्तत्र प्रविष्ट इति शङ्कायोग्यार्थं सहजं विशेषणं। सर्पादेरण्डादिरूपेण स्थितभूतपञ्चकपरिणामत्वात्तत्र सहजत्वं पाषाणादौ यानि भूतानि स्थितानि तेषां परिणामः सर्पादिरूपेण तत्र भूतानामनुप्रवेशवदपरिच्छिन्नस्यापि परस्य जीवाकारेण बुद्ध्यादौ प्रवेशसिद्धिरित्यर्थः। आचार्य्यो ब्रूते। नेति। तदेव स्पष्टयति। यः स्रष्टेति। ननु तक्षनिर्म्मिते वेश्मनि ततोऽन्यस्यापि प्रवेशो दृश्यते। तथा परेण सृष्टे जगत्यन्यस्य प्रवेशो भविष्यति नेत्याह। यथेति। पाषाणसर्पन्यायेन कार्य्यस्यैव परस्य जीवाख्ये परिणामे तत्सृष्ट्वेत्यादिश्रवणमनुपपन्नमिति व्यतिरेकं दर्शयति। नन्विति। अस्तु तर्हि परस्य मार्जारादिवत्पूर्व्वावस्थात्यागेनावस्थान्तरसंयोगात्मा प्रवेशो नेत्याह।

भा॰ भुक्त्वा गच्छतीति भुजिगमिक्रिययोः पूर्वापरकालयोरित-
रेतरविच्छेदोऽविशिष्टश्च कर्त्ता तद्वदिहापि स्यात्तु तत्त्व-
स्यैव भावान्तरोपजननं एतत्सम्भवति । न च स्थानान्तरेण
वियुज्य स्थानान्तरसंयोगलक्षणः प्रवेशो निरवयवस्यापरि-
च्छिन्नस्य दृष्टः । सावयव एव प्रवेशश्रवणादिति चेन्न । दिव्यो
ह्यमूर्त्तः पुरुषो निष्कलं निष्क्रियमित्यादिश्रुतिभ्यः । सर्व्व-
व्यपदेश्यधर्म्मविशेषप्रतिषेधश्रुतिभ्यश्च । प्रतिबिम्बप्रवेशवदिति
चेन्न । वस्त्वन्तरेण विप्रकर्षानुपपत्तेः । द्रव्ये गुणप्रवेशवदिति
चेत् । न । अनाश्रितत्वान्नित्यपरतन्त्रस्यैवाश्रितस्य गुणस्य द्रव्ये
प्रवेश उपचर्य्यते । न तु ब्रह्मणः स्वातन्त्र्यश्रवणात्तथा प्रवेश
उपपद्यते । फले बीजवदिति चेन्न । सावयवत्ववृद्धिक्षयो-

---

व्या॰ न चेति । निरवयवोऽपरिच्छिन्नश्चात्मा तस्य स्थानान्तरेण वियोगं
प्राप्य स्थानान्तरेण सह संयोगलक्षणो यः प्रवेशः स सावयवे
परिच्छिन्ने च मार्जारादौ दृष्टप्रवेशसदृशो न भवतीति योजना ।
वियुज्येति पाठे तु स्फुटैव योजना । प्रवेशश्रुत्या निरवयव-
त्वासिद्धिं शङ्कते । सावयव इति । प्रवेशश्रुतेरन्यथोपपत्ते-
र्वंश्यमाणत्वान्नैवमिति परिहरति । नेत्यादिना । अमूर्त्तत्वं निर-
वयवत्वं । पुरुषत्वं पूर्णत्वं । प्रकारान्तरेण प्रवेशोपपत्तिं शङ्कते ।
प्रतिबिम्बेति । आदित्यादौ जलादिना सन्निकर्षादिसम्भवात्प्र-
तिबिम्बाख्यप्रवेशोपपत्तिः । आत्मनि तु परिच्छिन्नवस्त्वनवच्छिन्ने
केन चिदपि तदभावान्न यथोक्तप्रवेशसिद्धिरित्याह । न वस्त्व-
न्तरेणेति । प्रकारान्तरेण प्रवेशं चोदयति । द्रव्य इति । पर-
स्यापि कार्य्ये प्रवेश इति शेषः ।

गुणापेक्षया परस्य वैषम्यमन्दर्शयन्परिहरति । नेत्यादिना ।
स्वातन्त्र्यश्रवणमेष सर्व्वेश्वर इत्यादिपनसादिफले बीजस्य प्रवेश-
वत्कार्य्ये परस्य प्रवेशः स्यादिति शङ्कित्वा दूषयति । फल

भा॰ त्पत्तिविनाशादिधर्म्मवत्त्वप्रसङ्गात्। न चैवं धर्म्मवत्त्वं ब्रह्मणोऽजोऽजर इत्यादिश्रुतिन्यायविरोधात्। अन्य एव संसारी परिच्छिन्न इह प्रविष्ट इति चेन्न। सेयं देवतैक्षतेत्यारभ्य नामरूपे व्याकरवाणीति तस्या एव प्रवेशव्याकरणकर्तृत्वश्रुतेः। तथा तत्सृष्ट्वा तदेवानुप्राविशत्स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत। सर्व्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि पुरश्चक्रे रूपमिति च मन्त्रवर्णान्न परादन्यस्य प्रवेशः। प्रविष्टानामितरेतरभेदात्परानेकत्वमिति चेत्। न। एको देवो बहुधा सन्निविष्टः एकः सन्बहुधा विचार त्वमेकोऽसि बहूननुप्रविष्ट एको देवः सर्व्वभूतेषु

---

आ॰ इत्यादिना ॥ विनाशादीत्यादिशब्देनागात्मत्वानीश्वरत्वादि गृह्यते ॥ प्रसक्तस्येष्टत्वमाशङ्क्य निराचष्टे। न चेति। जन्मादीनां धर्म्माणां धर्म्मिणो भिन्नत्वाभिन्नत्वासम्भवादिन्यायः ॥ वीजफलयोरवयवावयवित्वं। पाथाकसर्पयोराधाराधेयतेत्यपुनरुक्तिः। परस्य सर्व्वप्रकारप्रवेशासम्भवे श्रुतेरालम्बनं वाच्यमित्याशङ्क्य पूर्व्वपक्षमुपसंहरति। अन्य एवेति ॥ जगतो हि परः स्रष्टेति वेदान्तमर्य्यादा स्रष्टैव च प्रवेष्टा प्रविश्य व्याकरवाणीति प्रवेशव्याकरणयोरेककर्तृत्वश्रुतेस्तस्मात्परस्मादन्यस्य प्रवेशो न युक्तिमानिति सिद्धान्तयति। नेत्यादिना ॥ तत्रैव तैत्तिरीयश्रुतिं संवादयति। तथेति ॥ ऐतरेयश्रुतिरपि यथोक्तमर्थमुपोद्बलयतीत्याह। स एतमेवेति ॥ श्रीनारायणाख्यमन्त्रमपि अत्रानुकूलयति। सर्व्वाणीति। वाक्यान्तरमुदाहरति। त्वं कुमार इति ॥ अत्रैव वाक्यशेषस्यानुगुण्यं दर्शयति। पुर इति ॥ उदाहृतश्रुतीनां तात्पर्य्यमाह। न परादिति ॥ परस्य प्रवेशे प्रविष्टानां मिथो भेदात्तदभिन्नस्य तस्यापि नानात्वप्रसक्तिरिति

भा॰ मूढः सर्व्वव्यापी सर्व्वभूतान्तरात्मेत्यादिश्रुतिभ्यः प्रवेश उपपद्यते नोपपद्यत इति तिष्ठतु तावत्प्रविष्टानां संसारित्वात्तदनन्यत्वाच्च परस्य संसारित्वमिति चेत् न। अपहतपाप्मत्वादिश्रुतेः। सुखित्वदुःखित्वादिदर्शनान्नेति चेत्। न। न लिप्यते लोकदुःखेन बाह्य इति श्रुतेः। प्रत्यक्षादिविरोधादयुक्तमिति चेत्। न। उपाध्याश्रयजनितविशेषविषयत्वात्प्रत्यक्षादेर्न दृष्टेर्द्रष्टारं पश्येर्विज्ञातारमरे केन विजानीयादविज्ञातं विज्ञाचित्यादिश्रुतिभ्योऽनात्मविषयं विज्ञानं। किन्तर्हि बुद्ध्याद्युपाध्यात्मप्रतिच्छायाविषयमेव सुखितो दुःखितोऽहमित्येवमादिप्रत्यक्षविज्ञानमयमह-

---

आ॰ प्रश्नते। प्रविष्टानामिति। न परस्यानेकत्वमेकत्वश्रुतिविरोधादिति परिहरति। नेत्यादिना। विचार विषयारेति यावत्। परस्य प्रवेशे नानात्वप्रसङ्गं प्रत्याख्याय दोषान्तरं चोदयति। प्रवेश इति। तेषां संसारित्वेऽपि परस्य किमायातन्तदाह। तदनन्यत्वादिति। श्रुत्यवष्टम्भेन दूषयति। नेति। अनुभवमनुसृत्य प्रश्नते। सुखीति। नासंसारित्वमिति शेषः।

गूढाभिसन्धिरुत्तरमाह। नेति। आगमो हि परस्यासंसारित्वे मानं त्वयोच्यते। स चाध्यक्षविरुद्धोऽस्वार्थे न मानं न च वैपरीत्यं। ज्येष्ठत्वेन बलवत्त्वादिति प्रश्नते। प्रत्यक्षादीति। शङ्किते पूर्व्ववादिनि स्वाशयमाविष्कृतवति सिद्धान्ती स्वाभिसन्धिमाह। नोपाधीति। उपाधिरन्तःकरणं तदाश्रयत्वेन जनितो विशेषश्चिदाभासस्तद्गतदुःखादिविषयत्वात्प्रत्यक्षादेरात्मविषयत्वाभावान्नात्मन्यसंसारित्वागमस्य न विरोधोऽस्तीत्यर्थः। किञ्च प्रत्यक्षादीनामनात्मविषयत्वादात्मविषयत्वाच्चागमस्य भिन्नविषयतया नानयोर्मिथो विरोधोऽस्तीत्यभिप्रेत्यात्मनोऽप्रत्यक्षाविषयत्वे श्रुतीरुदाहरति। न दृष्टेरिति। सुख्यहमित्यादि प्रतिभासस्य तर्हि

भा॰ मिति विषयेण विषयिणः सामानाधिकरण्योपचारान्ना-
न्यदतोऽस्ति द्रष्ट्रित्यन्यात्मप्रतिषेधाच्च । देहावयवविशेष्य-
त्वाच्च सुखदुःखयोर्विषयधर्म्मत्वं आत्मनस्तु कामायेत्यात्मा-
र्थत्वश्रुतेरयुक्तमिति चेन्न । यत्र वा अन्यदिव स्यादित्यविद्या-
विषयात्मार्थत्वाभ्युपगमात्तत्केन कं पश्येदिह नानास्ति कि-
ञ्चन तत्र को मोहः कः शोक इत्यादि विद्याविषये तत्प्र-
तिषेधाच्च नात्मधर्म्मत्वं । तार्किकसमयविरोधादयुक्तमिति

---

आ॰ का गतिरित्याशङ्क्य पूर्व्वोक्तमेव स्मारयति । किन्त्विति ॥
बुद्ध्यादिरुपाधिस्तत्रात्मप्रतिच्छाया तत्प्रतिबिम्बस्तद्विषयमेव सुख-
दुःखमित्यादि विज्ञानमिति योजना ॥ आत्मनो दुःखित्वाभावे
हेत्वन्तरमाह । अयमिति ॥ अयं देहोऽहमिति दृश्येन
सह तादात्म्याध्यासदर्शनाद्दृश्यविशिष्टस्यैव प्रत्यक्षविषयत्वान्न के-
वलस्यात्मनो दुःखादिसंसारोऽस्तीत्यर्थः ॥ पिपासाद्यशनायादिविशे-
षणमक्षरं प्रक्रम्य तस्यैव प्रत्यगात्मत्वं दर्शयन्ती श्रुतिरात्मनः
संसारित्वं वारयतीत्याह । नान्यदिति ॥ किञ्च पादयोर्दुःखं
शिरसि दुःखमिति देहावयवावच्छिन्नत्वेन तत्प्रतीतेस्तद्धर्म्मत्वनिश्चया-
दात्मनि संसारित्वं प्रामाणिकमित्याह । देहेति ॥ श्रुतिवशा-
दात्मनः संसारित्वं शङ्कते । आत्मनस्त्विति ॥ सुखं तावदात्मा-
श्रयमात्मनस्तु कामायेति सुखसाधनस्यात्मार्थत्वश्रुतेरतस्तदवि-
नाभूतं दुःखमपि तन्निष्ठमात्मन्यसंसारित्वमयुक्तमित्यर्थः ॥ आ-
विद्यसंसारित्वानुवादेनात्मनोऽनतिशयानन्दत्वप्रतिपादकमात्मनस्तु
कामायेत्यादिवाक्यमिति मत्वाह । नेति ॥ तदाविद्यसंसा-
रानुवादित्वं गमकमाह । यत्रेति ॥ अनेन हि वाक्येनाविद्या-
वस्थायामेवात्मार्थत्वं सुखादेरभ्युपगम्यते ॥ अतो न तस्यात्मधर्म्मत्व-
मित्यर्थः ॥ आत्मनि संसारित्वस्याप्रतिपाद्यत्वेऽपि गमकमाह ।
तत्केनेति ॥ आत्मनोऽसंसारित्वे विद्वदनुभवमनुकूलयितुं च शब्दः ।
तर्कशास्त्रप्रामाण्यादात्मनः संसारित्वमिति शङ्कते । तार्किकेति ॥
बुद्ध्यादिचतुर्दशगुणवानात्मेति तार्किकसमयस्तेन विरोधात्तस्या-

भा॰ चेन्न । सुखाद्यात्मनो दुःखित्वानुपपत्तेः । न हि दुःखेन प्रत्यक्षविषयेणात्मनो विशेष्यत्वं प्रत्यक्षाविषयत्वादाकाशस्य शब्दगुणवत्त्ववदात्मनो दुःखित्वमिति चेन्न । एकप्रत्ययविषयत्वानुपपत्तेः । न हि सुखग्राहकेण प्रत्यक्षविषयेण प्रत्ययेन नित्यानुमेयस्यात्मनो विषयीकरणमुपपद्यते । तस्य च विषयीकरणे आत्मन एकत्वादिवस्वभावप्रसङ्गः ॥

---

व्या॰ संसारित्वमयुक्तं । तर्काविरुद्धो हि सिद्धान्तो भवतीत्यर्थः । सर्व्वतर्काविरोधी वा कतिपयतर्काविरोधी वा सिद्धान्तः । नाद्यः । तार्किकादिसिद्धान्तस्यापि मिथो वैदिकतर्कैश्च विरोधादसिद्धिप्रसङ्गात् । द्वितीये तु गौततर्काविरोधादात्मासंसारित्वसिद्धान्तोऽपि सिद्ध्येदित्यभिसन्धायाह । न सुखादीति । किञ्च दुःखादिरात्मधर्म्मो न भवति वेद्यत्वाद्रूपादिवदित्याह । न हीति । प्रत्यक्षाविषयत्वोक्त्या प्रतीचस्तद्विषयदुःखाविशेष्यत्वमयुक्तं । प्रत्यक्षाप्रत्यक्षयोः शब्दाकाशयोरिव दुःखात्मनोरपि गुणगुणित्वसम्भवादिति शङ्कते । आकाशस्येति । यत्र धर्म्मधर्म्मिभावस्तत्रैकज्ञानगम्यत्वं दृष्टं यथा शुक्लो घट इति तद्व्यापकं व्यावर्त्तमानं दुःखात्मनो धर्म्मधर्म्मित्वं व्यावर्त्तयति । शब्दाकाशयोरपि गुणगुणिभावो नाकाशं सम्मतः । शब्दवन्मात्रमाकाशमिति श्रुतेरित्याशयेनाह । नैवेति । कथन्तदनुपपत्तिस्तत्राह । न हीति । नित्यानुमेयस्येति परतार्किकमतानुसारेण साङ्ख्यसमयानुसारेण वोक्तं । आधुनिकं तार्किकमत्वाह । तस्य चेति । सुखादिवदात्मनोऽपि प्रत्यक्षेण विषयीकारे सत्येकस्मिन्देहे तदेकसम्मतेरात्मान्तरस्य तत्रायोगादेकत्र भोक्तृद्वयानिष्टेः पुनरान्तरस्याप्यन्यप्रत्यक्षत्वाद्दृष्टभावादात्मद्वयस्यासिद्धिरित्यर्थः ॥

भा० एकस्यैव विषयविषयित्वं दीपवदिति चेन्न। युगपदसं-
भवादात्मन्यंशानुपपत्तेश्च। एतेन विज्ञानस्य ग्राह्यग्राह-
कत्वं प्रत्युक्तं। प्रत्यक्षानुमानविषययोश्च दुःखात्मनोर्गुण-
गुणित्वेनानुमानं। दुःखस्य नित्यमेव प्रत्यक्षविषयत्वाद्रूपा-
दिसामानाधिकरण्याच्च मनःसंयोगजत्वेऽप्यात्मनि दुःखस्य
सावयवत्वविक्रियावत्त्वानित्यत्वप्रसङ्गात्। न ह्यविकृत्य

---

आ० दीपस्य स्वपरव्यवहारहेतुत्वेन विषयविषयित्ववदेकस्यैवात्मनो
द्रष्टृदृश्यत्वसिद्धेर्भेदाभावो नास्तीति शङ्कते। एकस्यैवेति।
आत्मनो विषयविषयित्वं कार्त्स्न्येनांशाभ्यां वा। आद्येऽपि युगप-
त्क्रमेण वा। नाद्य इत्याह। न युगपदिति। क्रियायां गुणत्वं
कर्तृत्वं तत्र प्राधान्यं कर्मत्वमतो युगपदेकक्रियां प्रत्येकस्य
साकल्येन गुणप्रधानत्वायोगान्नैवमित्यर्थः। न द्वितीयः। एक-
भावेऽन्याभावादिति मत्वा कल्पान्तरमत्याह। आत्मनीति।
एतेन प्रदीपदृष्टान्तोऽपि प्रतिनीतस्तस्यां शाभ्यां तद्भावे प्रकृता-
ननुकूलत्वात्। ननु विज्ञानवादिनो युगपदेकस्य विज्ञानस्य साक-
ल्येन ग्राह्यग्राहकत्वमुपयान्ति तथा त्वदात्मनोऽपि स्यात्तत्राह।
एतेनेति। एकस्योभयत्वनिरासेनेत्यर्थः। मा भूत्प्रत्यक्षमागमिकं
पारिभाषिकं वात्मनः संसारित्वं। आनुमानिकं तु भविष्यति
दुःखादि क्वचिदाश्रितं गुणत्वाद्रूपादिवदित्याश्रये सिद्धे परिशे-
षादात्मनस्तदाश्रयत्वादित्याशङ्क्याह। प्रत्यक्षेति। न हि मिथो-
विरुद्धयोर्गुणगुणित्वमनुमेयं दुःखादेश्च साभासबुद्धिस्थत्वात्पा-
रिशेष्यासिद्धिरित्यर्थः। साभासान्तःकरणनिष्ठं दुःखादीत्यत्र
प्रमाणाभावात्कथं सिद्धसाधनमित्याशङ्क्य दुःख्यहमित्यादिप्रत्य-
क्षस्य तत्र प्रमाणत्वाद्गुणानुमानस्य सिद्धसाध्यतया परिशेषा-
सिद्धिरित्याह। दुःखस्येति। यत्र रूपादिमति देहे दाहच्छे-
दादि दृष्टं तत्रैव तत्कृतदुःखाद्युपलम्भान्नात्मनस्तद्वत्त्वमिति हेत्व-
न्तरमाह। रूपादीति। यत्त्वात्ममनः संयोगादात्मनि बुद्ध्या-
दयो नव वैशेषिका गुणा भवन्तीति तद्दूषयति। संयोगेति।

भा॰ संयोगि द्रव्यं गुणः कश्चिदुपयन्नपयन्वा दृष्टः क्वचित्। न च निरवयवं विक्रियमाणं दृष्टं क्वचिदनित्यगुणाश्रयं वा नित्यं। न चाकाश आगमवादिभिर्नित्यतयावगम्यते। न चान्यो दृष्टान्तोऽस्ति विक्रियमाणमपि तत्प्रत्ययानिवृत्तेर्नित्यमेवेति चेन्न। द्रव्यस्यावयवान्यथात्वव्यतिरेकेण विक्रियानु-

---

आ॰ दुःखस्यात्मनि मनःसंयोगजत्वे ऽभ्युपगतेऽपि मनोवदात्मनः संयोगित्वात्सावयवत्वादिप्रसङ्गादात्मत्वमेव न स्यादित्यर्थः॥ तच्च संयोगित्वेन सक्रियत्वं साधयति। न हीति॥ सम्प्रति सक्रियत्वेन सावयवत्वं प्रतिपादयति। न चेति॥ यद्वा दुःखाद्यात्मनो विक्रियेति कैश्चिदिष्टत्वात्तस्य सक्रियत्वमविरुद्धमित्याशङ्क्याह। न चेति॥ आत्मा न परिणामी निरवयवत्वान्नभोवदिति भावः॥ किञ्चात्मा न गुणी नित्यत्वात्सामान्यवदित्याह। अनित्येति। नित्यं पश्याम इति शेषः। वा शब्दो नञनुकर्षार्थः। आकाशे व्यभिचारमाशङ्क्याह। न चेति। आकाशस्य नित्यत्वं चेदात्मन आकाशः सम्भूत इत्यादिश्रुतिविरोधः स्यादिति सूचयितुमागमवादिभिरित्युक्तं। परमाण्वादौ व्यभिचारमाशङ्क्याह। न चान्य इति। न तावदणवः सन्ति च्यणुकेतरसत्त्वे मानाभावाद्दिक्कालाकाशोऽन्तर्भवन्ति कालाश्च सर्वे निमेषा जज्ञिरे इत्यादिश्रुतेरुत्पत्तिमात्मनोऽप्ययनमयं श्रुतिप्रसिद्धमतो न क्वचिद्व्यभिचार इति भावः। यस्मिन्विक्रियमाणे तदेवेदमिति बुद्धिर्न विहन्यते तदपि नित्यमिति न्यायेन परिणामवादी शङ्कते। विक्रियमाणमिति॥ तत्प्रत्ययस्तदेवेदमिति प्रत्ययः। विक्रियां वदता द्रव्यस्यावयवान्यथात्वं वाच्यं। तदेव तस्यानित्यत्वं अत्यन्ताभावस्य प्रामाणिकत्वे दुर्वचत्वादिति परिहरति। न द्रव्यस्येति॥ आत्मनः सक्रियत्वं सावयवत्वं वाऽस्तु तथापि नानित्यत्वमिति स्याद्वादी शङ्कते। सावयवत्वेऽपीति॥ यत्सावयवं तदवयवसंयोगजातं यथा पटादि। तथा सति संयोगस्य विभागावसानत्वादवयवविभागे द्रव्यनाशोऽवश्यम्भावीति

भा॰ पपत्तेः । सावयवत्वेऽपि नित्यत्वमिति चेन्न । सावयवस्या-
वयवसंयोगपूर्व्वकत्वे सति विभागोपपत्तेः ॥

वस्त्रादिष्वदर्शनान्नेति चेन्नानुमेयत्वात्संयोगपूर्व्वत्वस्य ।
तस्मान्नात्मनो दुःखाद्यनित्यगुणाश्रयत्वोपपत्तिः । परस्या-
दुःखित्वेऽन्यस्य च दुःखिनोऽभावे दुःखोपशमनाय शास्त्रा-
रम्भानर्थक्यमिति चेन्नाविद्याऽध्यारोपितदुःखित्वभ्रमापो-
हार्थत्वात् । आत्मनि प्रकृतसंख्यापूरणभ्रमापोहवत्कल्पित-
दुःखात्माभ्युपगमाच्च । जलसूर्य्यादिप्रतिबिम्बवदात्मप्रवे-
शश्च प्रतिबिम्बवद्व्याकृते कार्य्ये उपलभ्यत्वं । प्रागुत्पत्ते-
रनुपलब्ध आत्मा पश्चात्कार्य्ये च सृष्टे व्याकृते बुद्धेर-
न्तरुपलभ्यमानः सूर्य्यादिप्रतिबिम्बवज्जलादौ कार्य्यं सृष्ट्वा
प्रविष्ट इव लक्ष्यमाणो निर्दिश्यते । स एष इह प्रविष्टः ।

---

आ॰ इत्यर्थः । न सावयवस्येति । यत्सावयवं तदवयवसंयोगपूर्व्वं-
कमिति न व्याप्तिः ॥

सावयवेष्वेव वस्त्रादिष्ववयवसंयोगपूर्व्वकत्वे प्रमाणाभावा-
दिति शङ्कते । वस्त्रादिष्विति । विमतमवयवसंयोगपूर्व्वकं
सावयवत्वात्पटवदित्यनुमानेन परिहरति । नानुमेयत्वादिति ॥
आत्मनो मनःसंयोगजन्यदुःखादिगुणत्वे सावयवत्वसक्रियत्वानित्य-
त्वादिप्रसङ्गमभिप्राय प्रकृतमुपसंहरति । तस्मादिति । आत्मनो
ऽनर्थध्वंसार्थं शास्त्रारम्भान्यथानुपपत्त्या संसारित्वमर्थापत्त्या
शङ्कते । परस्येति । अविद्याविद्यमानमात्मन्यनर्थध्वंसं निराकर्त्तुं
तदारम्भः सम्भवतीत्यन्यथोपपत्त्या समाधत्ते । नाविद्येति ॥
परस्यैवाविद्याकृतसंसारित्वभ्रान्तिध्वंसार्थं शास्त्रमित्येतद्दृष्टान्तेन
स्पष्टयति । आत्मनीति ॥ यत्तु परस्यादुःखित्वमन्यस्य दुःखिनो
ऽसत्त्वञ्चाह । कल्पितेति ॥ न तावत्परस्मादन्यो दुःखी नान्यो
ऽतोऽस्ति द्रष्टेत्यादिश्रुतेः स पुनरनाद्यनिर्वाच्या ज्ञानसम्बन्धा-

भा॰ तत्सृष्ट्वा तदेवानुप्राविशत् एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत । सेयं देवतैक्षत । हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्येत्येवमादिभिः । न तु सर्व्वगतस्य निरवयवस्य दिग्देशकालान्तरापक्रमणप्राप्तिलक्षणः प्रवेशः कदाचिदप्युपपद्यते । न च परादात्मनोऽन्योऽस्ति नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ इत्यादिश्रुतेरित्यवोचाम । उपलब्ध्यर्थत्वाच्च सृष्टिप्रवेशस्थित्यप्ययवाक्यानामुपलब्धेः । पुरुषार्थश्रवणादात्मानमेवावेत्तस्मात्तत्सर्व्वमभवद्ब्रह्मविदाप्नोति परं । स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवत्याचार्य्यवान्पुरुषो वेद तस्य तावदेव चिरमित्यादिश्रुतिभ्यः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरं ।

---

आ॰ स्वजन्यैर्बुद्ध्यादिभिरैक्याध्यासमापन्नः संसरति । तथा च कल्पिताकारद्वारा दुःखिनः परस्यात्मनो ऽङ्गीकारान्नार्थापत्तेरवागमित्यर्थः । परस्य प्रवेशे प्रमाणादोषपरम्परां परास्य तत्प्रवेशस्वरूपं निरूपयति । जलेति । यथा जले सूर्यादेः प्रतिबिम्बलक्षणः प्रवेशो दृश्यते । तथात्मनोऽपि सृष्टे कार्य्ये काल्पनिकः प्रवेश इत्यर्थः । अनवच्छिन्नाद्वयचिद्वस्तुनो वस्त्वन्तरेण सन्निकर्षासम्भवान्न प्रतिबिम्बाख्यप्रवेशः सम्भवतीत्याशङ्क्य वस्त्वन्तरकल्पनया कल्पितसन्निकर्षाद्युपादाय प्रतिबिम्बपक्षं साधयति । आत्मेति । तदेव प्रपञ्चयति । प्रागुत्पत्तेरित्यादिना ॥ स्वाभिप्रेतं प्रवेशं प्रतिपाद्य परोक्तं प्रत्याचष्टे । न त्विति । कुतश्चिद्दिशो देशात्कालाच्चापक्रमणेन दिगन्तरे देशान्तरे कालान्तरे च प्राप्तिलक्षण इति यावत् । वस्तु परस्मादन्यस्य प्रवेष्टृत्वमिति तत्राह । न चेति । यद्येदं प्रवेशादि वस्तुतो विद्यमानमस्तु किमित्याविद्यं कथ्यते तत्राह । उपलब्धीति । आत्मज्ञानार्थत्वेन प्रवेशादीनां कल्पितत्वात्तद्वाक्यानां न स्वार्थे पर्य्यवसानमित्यर्थः ॥ फलव-

उ॰ आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः

भा॰ तच्छ्रेष्ठं सर्व्वविद्यानां प्राप्यते ह्यमृतं तत इत्यादिस्मृतिभ्यश्च । भेददर्शनापवादाच्च सृष्ट्यादिवाक्यानामात्मैकत्वदर्शनार्थ-परत्वोपपत्तिः । तस्मात्कार्य्यस्थस्योपलभ्यत्वमेव प्रवेश इत्यु-पचर्य्यते ॥

आनखाग्रेभ्यो नखाग्रमर्य्यादमात्मनश्चैतन्यमुपलभ्यते । तत्र कथमिव प्रविष्ट इत्याह । यथा लोके क्षुरधाने क्षुरो धीयतेऽस्मिन्निति क्षुरधानं तस्मिन्नापितोपस्करा-धाने क्षुरोऽन्तःस्थो यथोपलभ्यतेऽवहितः प्रवेशितः स्याद्यथा वा विश्वम्भरोऽग्निर्विश्वस्य भरणाद्विश्वम्भरः कुलाये नीडे ऽग्निः काष्ठादाववहितः स्यादित्यनुवर्त्तते तत्र हि स म-थ्यमान उपलभ्यते । यथा च क्षुरः क्षुरधानैकदेशेऽवस्थितो

आ॰ सन्निधावफलं तदङ्गमिति न्यायमाश्रित्योक्तमेव प्रपञ्चयति । उप-लब्धेरित्यादिना ॥ ततः शब्दो भक्तियोगपरामर्शी तदित्यात्म-ज्ञानमुच्यते । तस्याग्र्यत्वं साधयति । प्राप्यते चेति ॥ सृष्ट्या-दिवाक्यानामैक्यज्ञानार्थत्वे हेत्वन्तरमाह । भेदेति ॥ कल्पितं प्रवेशं प्रतिपादितमुपसंहरति । तस्मादिति ॥

का पुनरस्य प्रवेशस्य मर्य्यादेत्याशङ्क्याह । आनखाग्रेभ्य इति ॥ सम्भवति मर्य्यादान्तरे किमिति प्रवेशस्येयमेव मर्य्यादे-त्याशङ्क्याह । नखाग्रेति ॥ दृष्टान्तद्वयमाकाङ्क्षापूर्व्वकमुत्थापयति । तत्रेति ॥ प्रवेशाधारो देहादिः सप्तम्यर्थः ॥ प्रथमोदाहरणप्रती-कोपादानं । यथेति ॥ तद्व्याचष्टे लोक इति ॥ तत्र प्रवेशितत्वं क्षुरस्य कथं सिद्धमत आह । अन्तःस्थ उपलभ्यत इति ॥ विश्व-म्भरस्याग्निविषयत्वं व्युत्पादयति । विश्वस्येति । तस्य तद्भर्तृत्वं महाभूतत्वाज्जाठरत्वाद्वा द्रष्टव्यं काष्ठादावग्नेरवहितत्वे युक्ति-

उ॰ स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तन्न पश्यन्ति ।
अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति ।

भा॰ यथा चाग्निः काष्ठादौ सर्व्वतो व्याप्यावस्थित एवं सामान्यतो विशेषतश्च देहं संव्याप्यावस्थित आत्मा । तत्र हि स प्राणनादिक्रियावान्दर्शनादिक्रियावांश्चोपलभ्यते । तस्मात्तत्रैवं प्रविष्टं तमात्मानं प्राणनादिक्रियाविशिष्टं न पश्यन्ति नोपलभन्ते ।

नन्वप्राप्तप्रतिषेधोऽयं तन्न पश्यन्तीति दर्शनस्याप्रकृतत्वा-न्नैष दोषः । सृष्ट्यादिवाक्यानामात्मैकत्वप्रतिपत्त्यर्थपरत्वा-त्प्रकृतमेव तस्य दर्शनं । रूपं रूपं प्रतिरूपो बभूव तदस्य

आ॰ माह । तत्रेति । दृष्टान्तद्वये विवक्षितमंशमनूद्य दार्ष्टान्तिक-माह । यथेत्यादिना । आत्मनो जागरस्वप्नयोर्देहे द्वयी वृत्तिः स्वापे तु सामान्यवृत्तिरेवेत्यवान्तरविभागमाह । तत्र हीति । अवस्थाद्वयं सप्तम्यर्थः । न केवलं विशेषवृत्तिरेव तदोपलभ्या किन्तु सामान्यवृत्तिश्चेति चकारार्थः । अवस्थान्तरे सैवेत्यपि तस्यैवार्थः । वाक्यान्तरमवतारयितुं भूमिकामाह । तस्मादिति । यस्मादुभयी वृत्तिरात्मनः शरीरे दृश्यते तस्मात्तत्रैव जलसूर्य्य-वदविद्यया प्रविष्टोऽयमिति योजना । व्याकृताज्जगतः सकाशा-दात्मानं पृथक्कर्तुं तन्न पश्यन्तीति वाक्यं तद्व्याचष्टे । तमात्मान-मिति । विशिष्टं पश्यन्तोऽपि केवलमात्मानं न पश्यन्तीति यावत् । चाक्षुषत्वनिषेधस्येष्टत्वमाशङ्क्य व्याचष्टे । नोपलम्भ इति ।

उक्तनिषेधमाक्षिपति । नन्विति । प्रतिषेध्यस्य प्राप्तिं दर्शय-न्परिहरति । नेत्यादिना । तन्नामरूपाभ्यां स एव इत्यादि-वाक्यानां ज्ञानार्थत्वे मानमाह । रूपमिति । विशिष्टस्य दर्शनेऽपि पूर्व्वस्यादर्शने हेतूक्तिरनन्तरवाक्यमित्याह । यत्रेति ।

उ॰ वदन् वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्म्मनामान्येव ॥

भा॰ रूपं प्रति चक्षणायेति मन्त्रवर्णात्। तत्र प्राणनादिक्रियाविशिष्टस्यादर्शने हेतुमाह। अकृत्स्नोऽसमस्तो हि यस्मात्स प्राणनादिक्रियाविशिष्टः। कुतः पुनरकृत्स्नत्वमित्युच्यते। प्राणन्नेव प्राणनक्रियामेव कुर्व्वन्प्राणो नाम प्राणसमाख्यः प्राणाभिधानो भवति। प्राणनक्रियाकर्त्तृत्वाद्धि प्राणः प्राणितीत्युच्यते नान्यां क्रियां कुर्व्वन्। यथा लावकः पाचक इति। तस्मात्क्रियान्तरविशिष्टस्यानुपसंहारादकृत्स्नो हि सः॥

तथा वदनक्रियां कुर्व्वन्वक्तीति वाक्पश्यंश्चक्षुश्चष्टे द्रष्टा चक्षुरिति शृण्वञ्छृणोतीति श्रोत्रं प्राणन्नेव प्राणो वदन्वागित्याभ्यां क्रियाशक्त्युद्भवः प्रदर्शितो भवति पश्यंश्चक्षुः शृण्वन् श्रोत्रमित्याभ्यां विज्ञानशक्त्युद्भवः प्रदर्श्यते। नाम-

आ॰ प्रतिज्ञावाक्यार्थे स्थिते सतीति यावत्। तस्मात्तद्दर्शनेऽपि पूर्णस्यादर्शनमिति शेषः। विशिष्टस्यापि पूर्णत्वमात्मत्वात्॥ अन्यथा प्राणनादिकर्तृत्वायोगादिति शङ्कते। कुत इति॥ प्राणनादिक्रियाकर्त्ता प्राणादिभिः संहतत्वात्पूर्णो न भवतीत्युत्तरवाक्येनोत्तरमाह। उच्यत इति॥ आत्मनि प्राणशब्दप्रवृत्तिमुपपादयति। प्राणनक्रियाकर्त्तृत्वादिति। तत्कर्त्तृत्वादात्मा प्राण उच्यते प्राणितीति व्युत्पत्तेरिति योजना॥ सदृष्टान्तमेवकारार्थमाह। नान्यामिति॥ एवकारार्थमनूद्य हेत्वर्थमुपसंहरति। तस्मादिति॥

स्वापावस्थायां समस्तकरणोपसंहारेऽपि प्राणस्य व्यापारदर्शनात्प्राधान्यावगमात्प्राणन्नित्यादिवाक्यमादौ व्याख्याय क्रियाशक्तित्वेन प्राणसादृश्याद्वाचो वदन्नित्येतत्पूर्व्वमुत्तरवाक्यानि व्याचष्टे। तथेत्यादिना॥ प्राणनवदनाभ्यामनुक्तकर्म्मेन्द्रियव्यापारमुपलक्ष्य

भा॰ रूपविषयत्वादिज्ञानशक्तेः। न हि नामरूपव्यतिरिक्तं विज्ञेय-
मस्ति। तयोश्चोपलम्भकरणं चक्षुःश्रोत्रे क्रिया च नामरूप-
साध्या प्राणसमवायिनी। तस्याः प्राणाश्रयाया अभि-
व्यक्तौ वाक्करणं। तथा पाणिपादपायूपस्थाख्यानि सर्व्वेषामु-
पलक्षणार्था वाक्। एतदेव हि सर्व्वं व्याकृतं त्रयं वा इदं नाम-
रूपं कर्म्मेति हि वक्ष्यति। मन्वानो मनो मनुत इति ज्ञान-
शक्तिविकासानां साधारणं करणं मनः मनुतेऽनेनेति पुरुषस्तु
कर्त्ता सन्मन्वानो मन इत्युच्यते। तान्येतानि प्राणादी-
न्यस्यात्मनः कर्म्मनामानि कर्म्मजानि नामानि कर्म्मनामा-

---

आ॰ वाक्यद्वयतात्पर्य्यमाह। प्राणन्नेवेति। प्राणवागाद्युपाधिद्वारे-
णात्मनीति शेषः। दृष्टिश्रुतिभ्यामनुक्तज्ञानेन्द्रियव्यापारोपल-
क्षणं कृत्वानन्तरवाक्ययोस्तात्पर्य्यमाह। पश्यन्निति। चक्षुराद्यु-
पाधिद्वारात्मनीति पूर्व्ववत्। उक्तबुद्धीन्द्रियव्यापाराभ्यामनुक्तं
तद्व्यापारमुपलक्ष्यात्मनः प्रष्टृत्वादिपरिच्छेदो न सिध्यति। सम्बन्धं
विनोपलक्षणादित्याशङ्क्याह। नामरूपेत्यादिना। प्रकाश्यप्रका-
शकातिरिक्तज्ञेयाभावात्तदुपलम्भे च चक्षुःश्रोत्रयोरिव त्वगादे-
रपि करणत्वादेकार्थत्वरूपसम्बन्धादुपलक्षणसम्भवादात्मनः प्रष्टृ-
त्वादिसिद्धिरित्यर्थः। तथाप्युक्तकर्म्मेन्द्रियव्यापारेणानुक्तव्यापारो-
पलक्षणादात्मनो न गन्तृत्वादिपरिच्छेदः सङ्गच्छते। विना सम्बन्ध-
मुपलक्षणासिद्धेरित्याशङ्क्याह। क्रिया चेत्यादिना। सर्व्वा क्रिया
नामरूपसाध्या प्राणाश्रया च। तत्र प्राणाश्रयनामविषयोच्चारण-
क्रियाव्यञ्जकत्वं वाचो हस्तादीनान्तदाश्रयादानादिव्यञ्जकता। त-
स्मादेकाश्रयक्रियाव्यञ्जकत्वयोगादुपलक्षणसम्भवादात्मनो गन्तृत्वा-
दिसिद्धिरित्यर्थः। शक्तिद्वयोद्भवोक्त्या समस्तसंसारस्य प्रतीत्यध्या-
सोऽत्र विवक्षित इत्याह। एतदेवेति। उद्भूतं शक्तिद्वयमेतच्छ-
ब्दार्थः। उक्तेऽर्थे वाक्यशेषमनुकूलयति। त्रयमिति। आत्मा मन्वा-
नः सन्मन इत्युच्यते। मनुत इति व्युत्पत्तेरिति वाक्यान्तरं व्याचष्टे।

उ॰ स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत

भा॰ न्येव न तु वस्तुमात्रविषयाणि। अतो न कृत्स्नात्मवस्त्ववद्योतकानि। एवं ह्यसावात्मा प्राणनादिक्रियया तत्तत्क्रियाजनितप्राणादिनामरूपाभ्यां व्याक्रियमाणोऽवद्योत्यमानोऽपि॥

स योऽतोऽस्मात्प्राणनादिक्रियासमुदायादेकैकं प्राणं चक्षुरिति वा विशिष्टमनुपसंहृतेतरविशिष्टक्रियात्मकं मनसाऽयमात्मेत्युपास्ते चिन्तयति न स वेद न स जानाति ब्रह्म। कस्मादकृत्स्नोऽसमस्तो हि यस्मादेष आत्मा अस्मात्प्राणनादिसमुदायादतः प्रविभक्त एकैकेन विशेषणेन विशिष्ट इतरधर्मान्तरानुपसंहाराद्भवति। यावदयमेवं वेद पश्यामि शृणोमि स्पृशामीति वा स्वभावप्रवृत्तिविशिष्टं वेद तावदसौ कृत्स्नमात्मानं न वेद। कथम्पुनः पश्यन् वेदे-

आ॰ मन्वान इति॥ करणे प्रसिद्धस्य मनःशब्दस्य कथमात्मनि वृत्तिरित्याशङ्क्य व्युत्पत्तिभेदमाह। जानन्नसीत्यादिना॥ आत्मादिशब्देभ्यो विशेषमाह। तानीति॥ कृत्स्नात्मवस्त्ववद्योतकानि न भवन्तीत्येतदेव स्फुटयति। एवं हीति। प्राणादीनां कर्म्मनामत्वे सतीति यावत्। अवद्योत्यमानोऽपि न कृत्स्नो दृष्टः स्यादिति शेषः॥

अकृत्स्नदर्शिनो ऽप्यात्मदर्शित्वमाशङ्क्याह। स य इति॥ आत्मोपासितुरात्मदर्शनासत्त्वमयुक्तमिति शङ्कित्वा परिहरति। कस्मादित्यादिना। तस्माद्विशिष्टात्मदर्शी न ब्रह्मात्मत्वदर्शीति शेषः॥ उपास्तिशब्दमनुपास्त इति जानाति न स्वभावादुपासनमित्युक्तत्वात्। तथा च जानन्न जानातीति व्याहतिरित्याशङ्क्याह। यावदिति॥ य एवं वेदेत्येतदेव विशिष्यते। पश्यामीत्यादिना॥ आकाङ्क्षापूर्व्वकं विद्यासूत्रमवतारयति। कथमिति॥ तत्र व्याख्येयं पदमादत्ते। आत्मेतीति॥ तद्व्याचष्टे। प्राणादीति॥

उ॰ एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति ।

---

भा॰ त्याह । आत्मेत्येव आत्मा इति ॥ प्राणादीनि विशेषणानि यान्युक्तानि तानि यस्य स आप्नुवंस्तान्यात्मेत्युच्यते । स तथा कृत्स्नविशेषोपसंहारी सन्कृत्स्नो भवति । वस्तुमात्ररूपेण हि प्राणाद्युपाधिविशेषक्रियाजनितानि विशेषणानि व्याप्नोति । तथा च वक्ष्यति ध्यायतीव लेलायतीवेति । तस्मादात्मेत्येवोपासीत । एवं कृत्स्नो ह्यसौ स्वेन वस्तुरूपेण गृह्यमाणो भवति । कस्मात्कृत्स्न इत्याशङ्क्याह । अत्रास्मिन्नात्मनि हि यस्मान्निरुपाधिके जलसूर्य्यप्रतिबिम्बभेदा इवादित्ये प्राणाद्युपाधिकृता विशेषाः प्राणादिकर्म्मजनामाभिधेया यथोक्ता ह्येते एकमभिन्नतां भवन्ति प्रतिपद्यन्ते अत आत्मेत्येवोपासीतेति ॥

---

आ॰ व्याख्येयपदमादत्ते । आत्मेतीति । तद्व्याचष्टे । प्राणादीति । तस्मिन् दृष्टे पूर्व्वोक्तदोषराहित्यं दर्शयति । स तथेति । तद्विशेषव्याप्तिद्वारेणेति यावत् । कथन्तत्तद्विशेषोपसंहारी तेन तेनात्मना तिष्ठन् कृत्स्नः स्यात्तत्राह । वस्तुमात्रेति । सतोऽस्य प्राणनादिसम्बन्धे सम्भवति किमित्युपाधिसम्बन्धेनेत्याशङ्क्याह । तथा चेति । आत्मनि सर्व्वोपसंहारवति दृष्टे पूर्व्वोक्तदोषाभावात्तं पश्यन्नेवात्मदर्शीत्युपसंहरति । तस्मादिति । यथोक्तात्मोपासने पूर्व्वोक्तदोषाभावे प्रागुक्तमेव हेतुं स्मारयति । एवमिति । तस्यार्थं स्फोरयति । स्वेनेति । वाङ्मनसातीतेनाकार्य्यकारणेन प्रत्यग्भूतेनेति यावत् । आकाङ्क्षापूर्व्वकमुत्तरवाक्यमवतार्य्य व्याकरोति । कस्मादित्यादिना । तस्माद्यथोक्तमात्मानमेवोपासीतेति शेषः । अस्यैव द्योतको द्वितीयो हि शब्दः ।

भा॰ आत्मेत्येवोपासीतेति नापूर्व्वविधिः। पक्षे प्राप्तत्वात्। आत्मा ह्युपास्यत्वाद्यपरोक्षाद्ब्रह्म। कतम आत्मेति योऽयं विज्ञानमय इत्येवमाद्यात्मप्रतिपादनपराभिः श्रुतिभिरात्मविषयं विज्ञानमुत्पादितं। तत्रात्मस्वरूपविज्ञानेनैव तद्विषयानात्माभिमानबुद्धिः कारकादिक्रियाफलाध्यारोपणात्मिका विद्या निवर्त्तिता। तस्यां निवर्त्तितायां कामादिदोषानुपपत्तेरनात्मचिन्तानुपपत्तिः। पारिशेष्यादात्मचिन्तैव। तस्मात्तदुपासनमस्मिन्पक्षे न विधातव्यं। प्राप्तत्वात्। तिष्ठतु तावत्पाक्षिक्यात्मोपासनप्राप्तिर्नित्या वेत्यपूर्व्व-

---

आ॰ विद्यासूत्रं विधिस्पर्शं विना विवक्षितेऽर्थे व्याख्यायां पूर्व्वविधिरयमिति पक्षमत्याह। आत्मेत्येवेति॥ अत्यन्ताप्राप्तार्थो ह्यपूर्व्वविधिर्यथा स्वर्गकामोऽग्निहोत्रं जुहुयादिति। नायं तथा पक्षे प्राप्तत्वादात्मोपासनस्य तस्य तत्प्राप्तिश्च पुरुषविशेषापेक्षया विचारावसाने स्पष्टीभविष्यतीत्यर्थः। इदानीमात्मज्ञानस्याविधेयत्वख्यापनार्थं वस्तुस्वभावालोचनया नित्यप्राप्तिमाह। यत्साक्षादिति॥ उत्पाद्यतामुक्तश्रुतिभिरात्मविज्ञानं किन्तावतेत्याह। तत्रेति। कारकादीत्यादिपदं तदवान्तरभेदविषयं॥ नन्वविद्यायामपनीतायामपि रागद्वेषादिसद्भावाद्वैधी प्रवृत्तिः स्यान्न हि विद्वदविदुषोर्व्यवहारे कश्चिद्विशेषः पश्वादिभिश्चाविशेषादिति न्यायादत आह। तस्यामिति॥ बाधितानुवृत्तिमात्रान्न वैधी-प्रवृत्तिरबाधिताभिमानमन्तरेण तदयोगादिति भावः॥ विदुषः सुषुप्तत्वं व्यावर्त्तयति। पारिशेष्यादिति॥ श्रौतज्ञानात्पूर्व्वमपि सर्व्वासां चित्तवृत्तीनां जन्मनैवात्मचैतन्यव्यञ्जकत्वात्प्राप्तमात्मज्ञानं श्रौते तु ज्ञाने नास्त्यनात्मेति स्फुरणं। आत्मज्ञानमेवेति नित्यप्राप्तिमभिप्रेत्याह। तस्मादिति। अस्मिन् पक्ष इति नित्यप्राप्तत्वपक्षोक्तिः। अपूर्व्वविधिवादी प्रत्यवतिष्ठते। तिष्ठतु तावदिति। सर्व्वेषां स्वभावतो विषयप्रवणानीन्द्रियाणि नात्मज्ञानवार्त्ता-

भा॰ विधिः स्यात् ज्ञानोपासनयोरेकत्वे सत्यप्राप्तत्वाच्च स वेदेति विज्ञानं प्रस्तुत्यात्मेत्येवोपासीतेत्यभिधानाद्वेदोपासनशब्दयोरेकार्थतावगम्यते। अनेन ह्येतत्सर्व्वं वेदात्मानमेवावेदित्यादिश्रुतिभ्यश्च विज्ञानमुपासनं तस्य चाप्राप्तत्वाद्विध्यर्हत्वं। न च स्वरूपान्वाख्याने पुरुषप्रवृत्तिरुपपद्यते। तस्मादपूर्व्वविधिरेवायं कर्म्मविधिसामान्याच्च। यथा यजेत जुहुयादित्यादयः कर्म्मविधयो ननैरस्यात्मेत्येवोपासीतात्मा वा अरे द्रष्टव्य इत्याद्यात्मोपासनविधेर्विशेषोऽवगम्यते। मानसक्रियात्वाच्च विज्ञानस्य।

---

आ॰ मपि मन्यन्ते तदत्यन्ताप्राप्तत्वादात्मज्ञाने भवत्यपूर्व्वविधिरिति भावः ॥ विशिष्टस्याधिकारिणः शाब्दज्ञानं शब्दादेव सिद्धमिति कथमप्राप्तिरित्याशङ्क्याह । ज्ञानेति ॥ न खल्वत्र शाब्दज्ञानं विवक्षितं किन्तूपासनं नाम मानसं कर्म्म तदेव ज्ञानावृत्तिरूपत्वाज्ज्ञानमित्येकत्वे सत्यप्राप्तत्वाद्विधेयमित्यर्थः ॥ तयोरेकत्वं विरुद्धोति । नेत्यादिना ॥ अनेन हीत्यदौ वेदशब्दस्यार्थान्तरविषयत्वन्न स वेदेत्यत्रापि किन्न स्यादित्याशङ्क्याह । अनेनेति ॥ उक्तश्रुतिभ्यो यद्विज्ञानं श्रुतं तदुपासनमेवेति योजना ॥ स योऽत एकैकमुपास्त इत्युपक्रमादात्मेत्येवोपासीतेत्युपसंहाराच्च न स वेदेत्यत्र तावद्वेदशब्दस्योपासनार्थत्वमेष्टव्यमन्यथोपक्रमोपसंहारविरोधात् । तथा चार्थवैशसासम्भवादुपासनमेव सर्व्वत्र वेदनं तच्च सर्व्वथैवाप्राप्तमिति तस्मिन्नपूर्व्वविधिः स्यादिति भावः । इतश्च तस्मिन्नेष्टव्यो विधिरित्याह । न चेति ॥ अतः प्रवर्त्तको-विधिरुपेय इति शेषः । स चात्यन्ताप्राप्तविषयत्वान्नियमादिरूपो न भवतीत्याह । तस्मादिति ॥ आत्मोपास्तिर्विधेयेत्यत्र हेत्वन्तरमाह । कर्म्मविधीति । कर्म्मात्मज्ञानविध्योः शब्दानुसारेणाविशेषमभिदधाति । यथेत्यादिना ॥ सम्प्रत्यर्थतोऽप्यविशेषमाह । मानसेति ॥

भा॰ यथा यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्याये-द्वषट्करिष्यन्नित्याद्या मानसी क्रिया विधीयते। तथात्मे-त्येवोपासीत मन्तव्यो निदिध्यासितव्य इत्याद्या क्रियैव विधीयते ज्ञानात्मिका। तथाऽवोचाम वेदोपासनशब्दयो-रेकार्थत्वमिति। भावनांशत्रयोपपत्तेश्च। तथा हि यजेते-त्यस्यां भावनायां किं केन कथमिति *भाव्याद्याकाङ्क्षापन-यकारणमंशत्रयमवगम्यते। तथोपासीतेत्यस्यामपि भाव-नायां विधीयमानायां किमुपासीत केनोपासीत कथमुपा-सीतेत्यस्यामाकाङ्क्षायामात्मानमुपासीत मनसा त्यागब्र-ह्मचर्य्यशमदमोपरमतितिक्षादीतिकर्त्तव्यतासंयुक्त इत्या-दिशास्त्रेणैव समर्थ्यतेऽंशत्रयं॥ यथा च कृत्स्नस्य दर्शपूर्ण-मासादिविध्युद्देशत्वेनोपयोगः। एवमौपनिषदात्मोपासन-

---

व्या॰ तदेव दृष्टान्तेन स्पष्टयति। यथेति॥ यदि क्रिया विधीयते कथं ज्ञानात्मिकेति विशेष्यते तत्राह। तथेति॥ इतश्चात्मोपा-सनविधिरस्तीत्याह। भावनेति॥ वेदान्तेषु भावनापेक्षितां-शत्रयोपपत्तिं विशदयितुं दृष्टान्तमाह। यथेति॥ भावनायां विधीयमानत्वे सतीति शेषः। प्रेरणाधर्म्मकशब्दव्यापारः स्वर्गा-दिफलाकाङ्क्षासहकारी प्रयाजादिज्ञानेतिकर्त्तव्यताकः पुरुषप्रयत्नभाव्यनिष्ठः शब्दभावनोच्यते। स्वर्गं यागेन प्रयाजादिभिरुपकृत्य साधये-दिति पुरुषप्रवृत्तिरर्थभावनेति विभागः। दृष्टान्तस्थमर्थं दार्ष्टान्तिके योजयति। तथेत्यादिना॥ त्यागो निषिद्धकाम्यव-र्जनं। उपरमो नित्यनैमित्तिकत्यागः। तितिक्षादीत्यादिपदं समा-धानादिसङ्ग्रहार्थमित्यंशत्रयमिति सम्बन्धः। शान्तं शान्तो दान्त इत्यादि। उक्तप्रकारमंशत्रयं अन्यदपि सुलभमिति वक्तुमादि-

---

* भावनाकाङ्क्षायामिति पाठान्तरः।

भा॰ प्रकरणस्यात्मोपासनविध्युद्देशत्वेनैवोपयोगो नेति नेत्यस्थू-लमेकमेवाद्वितीयमप्राणोऽयमात्मेत्येवमादिवाक्यानां -मुपास्यात्मस्वरूपविशेषसमर्पणेनोपयोगः। फलञ्च मोक्षो-ऽविद्यानिवृत्तिर्वा॥

अपरे वर्णयन्त्युपासनेनात्मविषयं विशिष्टं विज्ञानान्तरं भावयेत्तेनात्मा ज्ञायतेऽविद्यानिवर्त्तकञ्च तदेव नात्म-विषयं वेदवाक्यजनितं विज्ञानमित्येतस्मिन्नर्थे वचनान्यपि विज्ञाय प्रज्ञां कुर्वीत। द्रष्टव्यः श्रोतव्यो मन्तव्यो निदि-ध्यासितव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्यादीनि। नार्था-न्तराभावात्। न चात्मेत्येवोपासीतेत्यपूर्व्वविधिः कस्मादा-त्मस्वरूपकथनानात्मप्रतिषेधवाक्यजनितविज्ञानव्यति-

---

आ॰ परं। विधिशून्यानां वेदान्तानां कार्य्यपरत्वेऽपि तच्छेषाणां तेषां वस्तुपरतेत्याशङ्क्याह। यथा नेति। विध्युद्देशत्वेन तच्छेषत्वेनेति यावत्। अस्थूलादिवाक्यानामारोपितद्वैतनिषेधेनाद्वयं वस्तु समर्पयतां कथमुपास्तिविधिशेषत्वमित्याशङ्क्याह। नेत्यादिना॥ ब्रह्म वेद ब्रह्मैव भवति। तरति शोकमात्मविदित्यादीनां फला-र्थवत्त्वेनोपास्तिविध्युपयोगमभिप्रेत्याह। फलञ्चेति॥ मोक्षो ब्रह्मप्राप्तिः॥

आत्मोपासनं विधेयमिति पक्षमुक्त्वा पक्षान्तरमाह। अपर इति॥ तस्यानुपयोगमाशङ्क्याह। तेनेति॥ शब्दस्य ज्ञानस्यासंस्-ष्टापरोक्षात्मविषयत्वाभावमिति शब्देन हेतूकरोति। ज्ञानान्तरं वेदान्तेषु विधेयमित्यत्र मानमाह। एतस्मिन्निति॥ पक्षद्वये प्राप्ते प्रथमपक्षं प्रत्याह। नार्थान्तराभावादिति॥ तत्र नञर्थमेव स्वयं व्याचष्टे। न चेति॥ शाब्दज्ञानवतो विषयाभावान्न विधिः स्वाभाव्यविद्यातत्कार्य्यनिवृत्तौ स्वयं फलावस्थत्वाच्चेत्यर्थः॥ हेतुभागं प्रश्नपूर्व्वकं विवृणोति। कस्मादित्यादिना। आत्मोपदेशेनानात्म-

भा॰ रेकेणार्थान्तरस्य कर्त्तव्यस्य मानसस्य वाह्यस्याभावात् । तत्र हि विधेः साफल्यं । यत्र विधिवाक्यश्रवणमात्रजनितविज्ञानव्यतिरेकेण पुरुषप्रवृत्तिर्गम्यते । यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येवमादौ । न हि दर्शपूर्णमासविधिवाक्यजनितविज्ञानमेव दर्शपूर्णमासानुष्ठानं । तच्चाधिकाराद्यपेक्षानुभावि । न तु नेति नेत्यात्मप्रतिपादकवाक्यजनितविज्ञानव्यतिरेकेण दर्शपूर्णमासादिवत्पुरुषव्यापारः सम्भवति । सर्व्वव्यापारोपशमहेतुत्वात्तद्वाक्यजनितविज्ञानस्य । न ह्युदासीनविज्ञानं प्रवृत्तिजनकमब्रह्मात्मविज्ञाननिवर्त्तकत्वाच्चैकमेवाद्वितीयं तत्त्वमसीत्येवमादिवाक्यानां । न च तन्निवृत्तौ प्रवृत्तिरुपपद्यते । विरोधात् । वाक्यजनितविज्ञानमात्रान्नाब्रह्मात्मविज्ञाननिवृत्तिरिति चेन्न ॥

---

आ॰ निषेधद्वारा वाक्योत्थज्ञानातिरेकेणेति यावत् ॥ कर्त्तव्यान्तराभावेऽपि वाक्यजन्यविज्ञानमेव विधेयं स्यादित्याशङ्क्याह ॥ तत्र हीति । दृष्टान्तेऽपि वाक्योत्थज्ञानातिरेकेण पुरुषप्रवृत्तिरसिद्धेत्याशङ्क्याह । न हीति ॥ तत्तर्हि वाक्यार्थज्ञानाधीनमिति यथा विधिस्तत्राह । तच्चेति ॥ अधिकारो विधिपुरुषसम्बन्धस्तत्कृतज्ञानापेक्षमनुष्ठानमित्यर्थवान् विधिरित्यर्थः ॥ तर्हि प्रकृतेऽपि वाक्योत्थज्ञानव्यतिरेकेण पुरुषव्यापारसम्भवाद्विधिसाफल्यमित्याशङ्क्याह । नत्विति ॥ अथ विमतं प्रवर्त्तकं वैदिकज्ञानत्वाद्विधिवाक्योत्थज्ञानवदित्याशङ्क्य प्रवर्त्तकविषयत्वमुपाधिरित्याह । न हीति ॥ मिथ्याज्ञाननिवर्त्तकत्वमुपाध्यन्तरमाह । अब्रह्मेति ॥ वाक्योत्थज्ञानस्य तन्निवर्त्तकत्वेऽपि प्रवर्त्तकत्वं किन्न स्यादित्याशङ्क्याह । न चेति ॥ द्वितीयोपाधेः साधनव्याप्तिं शङ्कते । वाक्येति ॥ ब्रह्मात्मैक्यधीपरवाक्योत्थविज्ञानस्याज्ञानतत्कार्य्यध्वंसित्वस्याश्रयान्न साधनव्याप्तिरित्याह । नेत्यादिना ॥

भा॰ तत्त्वमसि सेति सेत्यात्मैवेदमेकमेवाद्वितीयं ब्रह्मैवेदममृतं नान्यदतोऽस्ति द्रष्टृ तदेव ब्रह्म त्वं विद्धीत्यादिवाक्यानां तद्वादित्वात्। द्रष्टव्यविधेर्विषयसमर्पकाण्येतानीति चेन्नार्थान्तराभावादित्युक्तोत्तरत्वात्। आत्मवस्तुस्वरूपसमर्पकैरेव वाक्यैस्तत्त्वमसीत्यादिभिः श्रवणकाल एव तद्दर्शनस्य कृतत्वात् द्रष्टव्यविधेर्नानुष्ठानान्तरं कर्त्तव्यमित्युक्तोत्तरमेतत्। आत्मस्वरूपान्वाख्यानमात्रेणात्मविज्ञाने विधिमन्तरेण न प्रवर्त्तत इति चेन्नात्मवादिवाक्यश्रवणेनात्मविज्ञानस्य जनितत्वात्किं भोः कृतस्य करणं। तच्छ्रवणेऽपि न प्रवर्त्तत इति चेन्नानवस्थाप्रसङ्गात्। यथात्मवादिवाक्यार्थश्रवणे विधिमन्तरेण न प्रवर्त्तते तथा विधिवाक्यार्थश्रवणेऽपि विधिमन्तरेण न प्रवर्त्तिष्यत इति विध्यन्तरापेक्षा। तथा तदर्थश्रवणे

---

आ॰ तद्वादित्वादित्यस्य वस्तुपरत्वादिति यावत्। उक्तानां वाक्यानां विध्यपेक्षितार्थकत्वेन तच्छेषत्वं शङ्कितमनुभाषते। द्रष्टव्येति। सिद्धान्तोपक्रमेण समाहितमेतदित्याह। नेति। तदेव स्फुटयति। आत्मेति। परोक्तमुद्भावयति। आत्मस्वरूपेति। कुत्र तर्हि विधिरात्मज्ञाने वा वाक्यश्रवणे वा तदर्थज्ञानसंततिसन्ताने वा चित्तवृत्तिनिरोधे वा। नाद्य इत्याह। नात्मवादीति। द्वितीयं प्रत्याह। तच्छ्रवणेऽपीति। आत्मवादिवाक्यस्याध्ययनादिवाक्यस्य विधिं विना श्रवणवत्तत्त्वमादेरपि तस्मादृते श्रवणमविरुद्धमित्यभिसन्धाय दोषान्तरमाह। नेत्यादिना। तत्त्वमादिश्रवणप्रयोजको विधिरात्मनोऽपि प्रयुङ्क्ते श्रवणमिति चेन्नैवं। स खल्वध्ययनविधिरन्यो वा। आद्ये तदपेक्षया श्रुतस्य तत्त्वमस्यादेः स्वार्थबोधित्वं कर्म्मवाक्यवदिति स्वार्थनिष्ठत्वाविशेषः। द्वितीये तस्याप्रमाणत्वात्तदीयस्वपरनिर्वाहकत्वं दूरोत्सारितमित्यभिप्रेत्यानवस्थां विवृणोति। यथेत्यादिना। तृतीयमाशङ्कते।

भा॰ ऽपीत्यनवस्था प्रसज्येत। वाक्यजनितात्मज्ञानस्मृतिसन्ततेः श्रवणविज्ञानमात्रादर्थान्तरत्वमिति चेन्नार्थप्राप्तत्वात्। यदैवात्मप्रतिपादकवाक्यश्रवणादात्मविषयं विज्ञानमुत्पद्यते। तदैव तदुत्पद्यमानं तद्विषयं मिथ्याज्ञानं निवर्त्तयदेवोत्पद्यते। आत्मविषयमिथ्याज्ञाननिवृत्तौ च तत्प्रभवाः स्मृतयो न भवन्ति स्वाभाविक्यो नात्मवस्तुभेदविषयाः। अनर्थत्वावगतेश्च। आत्मावगतौ हि सत्यामन्यद्वस्त्वनर्थत्वेनावगम्यते अनित्यदुःखाशुद्ध्यादिबहुदोषवत्त्वादात्मवस्तुनश्च तद्विलक्षणत्वात्॥

तस्मादनात्मविज्ञानस्मृतीनामात्मावगतेरभावप्राप्तिः। पारिशेष्यादात्मैकविज्ञानस्मृतिसन्ततेरर्थत एव भावाच्च विधेयत्वं। शोकमोहभयायासादिदुःखदोषनिवर्त्तकत्वाच्च तत्स्मृतेर्विपरीतज्ञानप्रभवो हि शोकमोहादिदोषः। तथा च

---

आ॰ वाक्यजनितेति। ततः सा विधेयेति शेषः। तस्या विधेयत्वं दूषयति। नेति॥ अर्थप्राप्तिं विवृणोति। यदैवेति। अनात्मस्मृतिहेत्वज्ञाननिवृत्तौ तत्कार्य्यस्मृत्यनुपपत्तेः स्वभाववशप्राप्तैवात्मस्मृतिरित्युक्तं॥ इदानीमनात्मस्मृतेरनर्थत्वस्यान्वयव्यतिरेकसिद्धत्वाच्चात्मस्मृतिः स्वभावप्राप्तेत्याह। अनर्थत्वेति॥ अनात्मनोऽनर्थत्वनिश्चयाच्च तदीयस्मृत्यनुपपत्तावितरस्मृतिरर्थप्राप्तेत्याह। आत्मावगताविति॥ आत्मनश्च परमेष्टत्वावगमादर्थप्राप्ता तदीयस्मृतिरित्याह। आत्मवस्तुनश्चेति॥

अर्थप्राप्त्या वैधेयत्वाभावमुपसंहरति। तस्मादिति॥ अनात्मस्मृतिहेत्वज्ञानाभावादित्यत्र शब्दार्थः। अर्थतश्चेदेवार्थस्यात्मस्वभावत्वादिति यावत्। दृष्टफलत्वाच्चात्मस्मृतिर्न विधेयेत्याह। शोकेति॥ मिथ्याज्ञानमेव सा निवर्त्तयति न शोकादीत्याश-

भा॰ तत्र को मोहो विद्वान्न बिभेति कुतश्चनाभयं वै जनक प्राप्तोऽसि भिद्यते हृदयग्रन्थिरित्यादिश्रुतयः । निरोधस्तर्ह्यर्थान्तरमिति चेद्यद्यपि स्याच्चित्तवृत्तिर्निरोधस्य वेदवाक्यजनितात्मविज्ञानादर्थान्तरत्वात् । तन्त्रान्तरेषु च कर्त्तव्यतयावगतत्वाद्विधेयत्वमिति चेन्न । मोक्षसाधनत्वेनानवगमात् । न हि वेदान्तेषु ब्रह्मात्मविज्ञानादन्यत्परमपुरुषार्थसाधनत्वेनावगम्यते । आत्मानमेवावेत्तस्मात्तत्सर्व्वमभवत् । ब्रह्मविदाप्नोति परं । स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति । आचार्य्यवान्पुरुषो वेद तस्य तावदेव चिरमभयं हि वै ब्रह्म भवति य एवं वेदेत्येवमादिश्रुतिशतेभ्यः । अनन्यसाधनत्वाच्च निरोधस्य । न ह्यात्मविज्ञान-

---

आ॰ स्याच्च । विपरीतेति । आत्मस्मृतेः शोकादिनिवर्त्तकत्वे मानमाह । तथा चेति । चतुर्थमुत्थापयति । निरोधस्तर्हीति । यदि वाक्योत्थज्ञानादेरविधेयत्वं तर्हि चित्तवृत्तिनिरोधो मुक्तिसाधनत्वेन विधीयतां तस्योक्तज्ञानादेरर्थान्तरत्वादित्यर्थः । चोद्यमेव विवृणोति । यद्यपीति । अर्थान्तरत्वात्तस्य विधेयतेति शेषः । तस्य मुक्तिहेतुत्वेन विधेयत्वे योगशास्त्रं संवादयति । तन्त्रान्तरेष्विति । अथ योगानुशासनमिति । निःश्रेयसहेतुः समाधिः सूचितस्तस्य च लक्षणमुक्तं योगश्चित्तवृत्तिनिरोध इति । तन्निरोधावस्थायाञ्चात्मनः स्वरूपप्रतिष्ठत्वं कैवल्यमाख्यातं । तदा द्रष्टुः स्वरूपेऽवस्थानमित्येवं योगशास्त्रे मुक्तिहेतुत्वेनेष्टो निरोधविधिरित्यर्थः । योगशास्त्रादपि बलवतीं श्रुतिमाश्रित्योत्तरमाह । नेत्यादिना । चित्तवृत्तिनिरोधस्य मुक्तिहेतुत्वेऽपि न विधेयत्वं विधिं विना तत्सिद्धेरित्याह । अनन्येति । न तावद्यथा कथञ्चिन्निरोधो विधेयः सर्व्वस्यापि तत्सम्भवाद्विधिवैयर्थ्यान्नापि सर्व्वात्मना तन्निरोधो विधेयो ज्ञानादेव तत्सि-

भा॰ तत्स्मृतिसम्मानव्यतिरेकेण चित्तवृत्तिनिरोधस्य साधनमस्त्यभ्युपगम्येदमुक्तं। न तु ब्रह्मविज्ञानव्यतिरेकेणान्यन्मोक्षसाधनमवगम्यते। आकाङ्क्षाभावाच्च भावनाभावः। यदुक्तं यजेतेत्येवमादौ किं केन कथमिति भावनाकाङ्क्षायां फलसाधनेतिकर्त्तव्यताभिराकाङ्क्षापनयनं यथा तद्वदिहाप्यात्मविज्ञानविधावप्युपपद्यत इति। तदसत्॥

एकमेवाद्वितीयं। तत्त्वमसि। नेति नेत्यनन्तरमबाह्यमयमात्मा ब्रह्मेत्यादिवाक्यार्थविज्ञानसमकालमेव सर्व्वाकाङ्क्षाविनिवृत्तेः। न च वाक्यार्थविज्ञाने विधिप्रयुक्तिः प्रवर्त्तते। विध्यन्तरप्रयुक्तौ चानवस्थादोषमवोचाम। न चैकमेवाद्वितीयं ब्रह्मेत्यादिवाक्येषु विधिरवगम्यते। आत्मस्वरूपान्वाख्यानेनैवावसितत्वात्। वस्तुस्वरूपान्वाख्यानमात्रत्वा-

---

आ॰ द्धेर्विध्यनर्थक्यादित्यर्थः॥ नान्यः पन्था विद्यते ज्ञानादेव तु कैवल्यमित्यादिशास्त्रमनुसरन्नुपेत्य वादं त्यजति। अभ्युपगम्येति॥ निरोधस्य मुक्तिहेतुत्वमिदमा परामृष्टं॥ योगशास्त्रमपि श्रुतिस्मृतिविरोधे न प्रमाणं। एतेन योगः प्रत्युक्त इति न्यायादिति भावः। वेदान्तेषु विधेयाभावात्तया विधिर्निरस्तः सम्प्रत्यंशत्रयवती भावना तेष्वस्तीत्युक्तं दूषयति। आकाङ्क्षेति॥ तदेव स्फुटयितुमुक्तमनुवदति। यदुक्तमिति॥ आगमावष्टम्भेन निराचष्टे। तदसदिति॥

विधिमन्तरेण वाक्यार्थज्ञाने प्रवृत्त्ययोगादवैधमेव ज्ञानं सर्व्वाकाङ्क्षानिवर्त्तकमित्याशङ्क्याह। न चेति॥ यथा कर्म्मकाण्डे स्वाध्यायविधेरर्थावबोधपर्य्यन्तत्वेन ज्योतिष्टोमादिविध्यर्थज्ञाने विध्यन्तरं नापेक्षते तथा ज्ञानकाण्डेऽपि स्यादित्यर्थः। तथापि वेदः कृत्स्नोऽधिगन्तव्य इति विध्यन्तरप्रयुक्तमेव वाक्यार्थज्ञानमित्याशङ्क्याह। विध्यन्तरेति॥ श्रुतहान्यश्रुतकल्पनाप्रसङ्गाच्च

भा॰ दप्रामाण्यमिति चेद्यथापि स्याद्यथा सोऽरोदीद्यदरोदी-
त्तद्रुद्रस्य रुद्रत्वमित्येवमादेर्वस्तुस्वरूपान्वाख्यानमात्रत्वा-
दप्रामाण्यं। एवमात्मार्थवाक्यानामपीति चेन्न। विशेषात्। न
वाक्यस्य वस्त्वन्वाख्यानं क्रियान्वाख्यानं वा प्रामाण्याप्रामाण्ये
कारणं। किन्तर्हि निश्चितफलवद्विज्ञानोत्पादकत्वं। तद्य-
त्रास्ति तत्प्रमाणं वाक्यं यत्र नास्ति तदप्रमाणं। किञ्च भोः
पृच्छामस्त्वामात्मस्वरूपान्वाख्यानपरेषु वाक्येषु फलवन्नि-
श्चितं च विज्ञानमुत्पद्यते न वोत्पद्यते चेत्कथमप्रामाण्य-
मिति किंवा न पश्यस्यविद्याशोकमोहभयादिसंसारबीज-
दोषनिवृत्तिं विज्ञानफलं न शृणोषि वा किं तत्र मोहः
कः शोक एकत्वमनुपश्यतो मन्त्रविदेवास्मि नात्मविच्छोऽहं
भगवः शोचामि तं मा भगवाञ्छोकस्य पारन्तारयतु

---

आ॰ न विधिशेषत्वं वेदान्तानामित्याह। न चेति॥ वेदान्ताः
स्वार्थे न मानं सिद्धार्थवाक्यत्वात्सोऽरोदीत्यादिवदित्यनुमानात्तेषां
विधिशेषत्वं प्रामाण्यार्थमेष्टव्यमिति शङ्कते। वस्तुस्वरूपेति॥ तदे-
वानुमानं प्रपञ्चयति। यथापीति। विधेरश्रुतत्वेऽपीति यावत्।
फलवन्निश्चितज्ञानाजनकत्वमुपाधिरिति मन्वानः समाधत्ते। न
विशेषादिति॥ नञर्थं स्पष्टयति। न वाक्यस्येति॥ विशिष्टं
व्याचष्टे। किन्तर्हीति॥ तस्य प्रामाण्यप्रयोजकत्वमन्वयव्यतिरे-
काभ्यां दर्शयति। तद्यत्रेति॥ सामान्यन्यायं प्रकृते योजयन्पृच्छति।
किञ्चेति। किन्तेषु तादृग्ज्ञानमुत्पद्यते न वेति प्रश्नार्थः॥ द्वितीये
ऽनुभवविरोधः स्यादिति मत्वा पक्षान्तरमनूद्य प्रत्याह। उत्प-
द्यते चेदिति॥ प्रामाण्ये हेतुसद्भावान्नाप्रामाण्यमित्यर्थः॥ निश्चित-
ज्ञानजनकत्वेऽपि फलवत्त्वविशेषणमसिद्धमित्याशङ्क्याह। किञ्चेति॥
विद्वदनुभवफलश्रुतिसिद्धं विशेषणमिति भावः॥ दृष्टान्तं

भा॰ इत्येवमाद्युपनिषद्वाक्यगतान्येवं विद्यन्ते। किं सोऽरोदीदि-
त्यादिषु निश्चितं फलवच्च विज्ञानं । न चेदिह्यतेऽस्त्व-
प्रामाण्यं । तदप्रामाण्ये फलवन्निश्चितविज्ञानोत्पादकस्य
किमित्यप्रामाण्यं स्यात् । तदप्रामाण्ये वा दर्शपूर्णमासा-
दिवाक्येषु को विस्रम्भः ॥

ननु दर्शपूर्णमासादिवाक्यानां पुरुषप्रवृत्तिविज्ञानो-
त्पादकत्वात्प्रामाण्यं। आत्मविज्ञानवाक्येषु तन्नास्तीति सत्य-
मेव । नैष दोषः । प्रामाण्यकारणोपपत्तेः। प्रामाण्यकार-
णञ्च यथोक्तमेव नान्यदलङ्कारस्थायं यत्सर्व्वप्रवृत्तिवीज-
निरोधफलवद्विज्ञानोत्पादकत्वमात्मप्रतिपादकवाक्यानां
नाप्रामाण्यकारणं । यत्तूक्तं विज्ञाय प्रज्ञां कुर्व्वीतेत्यादि-
वचनानां वाक्यार्थविज्ञानव्यतिरेकेणोपासनार्थत्वमिति ।

---

आ॰ विघटयितुं प्रश्नान्तरं प्रस्तौति । एवमिति ॥ वेदान्तेर्ष्वविवेति
यावत् । किंवा नेति शेषः । आद्ये साध्यवैकल्यं मत्वा द्वितीयं
दूषयति। न चेदिति ॥ तर्हि तद्दृष्टान्तेन तत्त्वमस्यादेरपि स्याद-
प्रामाण्यमित्याशङ्क्याह । तदप्रामाण्य इति । विमतं स्वार्थे
मानं यथोक्तज्ञानजनकत्वाद्दर्शादिवाक्यवदिति भावः। विपक्षे
दोषमाह । तदप्रामाण्ये वेति ॥

प्रवर्त्तकज्ञानजनकत्वमुपाधिरिति शङ्कते । नन्विति ॥ साध-
नव्याप्तिं धुनोते । आत्मेति ॥ प्रवर्त्तकधीजनकत्वधर्म्मिणि
नास्तीत्यङ्गीकरोति । सत्यमिति ॥ तर्हि यथोक्तोपाधिसद्भावा-
दनुमानानुत्थानमित्याशङ्क्याह । नैष दोष इति ॥ न हि प्रवर्त्तक-
धीजनकत्वं प्रामाण्ये कारणं निषेधवाक्येष्वप्रामाण्यप्रसङ्गात् । न च
निवर्त्तकधीजनकत्वमपि। तथाविधावप्रामाण्यप्रसङ्गात् । न चोभयं
प्रत्येकमुभयकारणत्वाभावेनाप्रामाण्यादिति भावः ॥ वेदान्तेषु
प्रवर्त्तकधीजनकत्वाभावो न केवलमदोषः किन्तु गुण इत्याह ।

भा॰ सत्यमेतत्किन्तु नापूर्व्वविध्यर्थता पक्षे प्राप्तस्य नियमार्थतैव। कथम्पुनरुपासनस्य पक्षप्राप्तिर्यावता पारिशेष्यादात्मविज्ञानस्मृतिसन्ततिर्नित्यैवेत्यभिहितं। बाढं। यद्यप्येवं शरीरारम्भकस्य कर्म्मणो नियतफलत्वात्सम्यग्ज्ञानप्राप्तावप्यवश्यम्भाविनी प्रवृत्तिर्वाङ्मनःकायानां लब्धवृत्तेः कर्म्मणो बलीयस्त्वान्मुक्तेष्वादिप्रवृत्तिवत्तेन पक्षे प्राप्तं ज्ञानप्रवृत्तिदौर्बल्यं। तस्मात्त्यागवैराग्यादिसाधनबलावलम्बेनात्मविज्ञानस्मृति-

---

आ॰ अवष्टारञ्चेति। आत्मानं चेदित्यादिश्रुतेरेतद्बुद्ध्वेत्यादिस्मृतेश्चात्मज्ञानं कृतकृत्यतानिदानं। न च ज्ञानस्य प्रवर्त्तकत्वं तदुक्तं प्रवृत्तीनां क्लेशाक्षेपकत्वादतो यथोक्तज्ञानजनकत्वं वाक्यानां युक्तमेवेत्यर्थः। शब्दोत्थं ज्ञानं विधेयमिति प्रतिक्षिप्य पूर्व्वोक्तपक्षान्तरमनुवदति। यत्तूक्तमिति। उपासनायत्तमित्यात्मोपासनेन तत्साक्षात्कारं भावयेदित्येवमर्थत्वमित्यर्थः। अभ्युपगमवादेन परिहरति। सत्यमिति। यथोक्तेषु वाक्येषु आत्मोपासनं तत्साक्षात्कारमुद्दिश्य विधीयते चेत्प्रकृतेऽपि वाक्ये तत्सम्भवान्नापूर्व्वविधिरिति प्रक्रमो भज्येतेत्याशङ्क्याह। किन्त्विति। कथन्तर्हि विध्यङ्गीकारवाचो युक्तिरित्याशङ्क्याह। पक्षेति। यथा पक्षे प्राप्तस्यावघातस्य व्रीहीनवहन्तीति नियमरूपो विधिरङ्गीकृतस्तथात्मोपासनस्यापि पक्षे प्राप्तस्य तदेव कर्त्तव्यं नानात्मोपासनमिति यो नियमस्तदर्थता प्रकृतवाक्यस्येति न प्रक्रमविरोधोऽस्तीत्यर्थः। पाक्षिकीं प्राप्तिमुक्तामाक्षिपति। कथमिति। का पुनरत्रानुपपत्तिरित्याशङ्क्याह। यावतेति। आत्मनि वाक्योत्थे विज्ञाने सत्यनात्मस्मृतिहेतूनां मिथ्याज्ञानादीनामपनीतत्वाद्धेत्वभावे फलाभावन्यायेन तासामसम्भवादात्मस्मृतिसन्ततिरेव पुनः सदा स्यादवकाशान्तरायोगादिति सिद्धान्तिनोक्तत्वान्नात्मोपासनस्य पक्षे प्राप्तिरित्यर्थः। तस्य नित्यप्राप्तिमुक्तामङ्गीकरोति। बाढमिति। तर्हि नियमविधिवाचो युक्तिरयुक्तेत्याशङ्क्याह। यद्यपीति। आत्मनि नित्यापरोक्षसंविदेकताने स्वरसं विस्मरणं

भा॰ सन्ततिर्नियन्तव्या भवति न त्वपूर्वा कर्त्तव्याप्राप्तत्वादित्य-
वोचाम। तस्मात्प्राप्तविज्ञानस्मृतिसन्तानानियमविध्यर्थानि
विज्ञाय प्रज्ञां कुर्वीतेत्यादिवाक्यान्यन्यार्थासम्भवात् ॥

अनात्मोपासनमिदमिति शब्दप्रयोगाद्यथा प्रियमित्ये-
तदुपासीतेत्यादौ न प्रियादिगुण एवोपास्यः किन्तर्हि
प्रियादिगुणवत्प्राणाद्येवोपास्यं । तथेहापीति परात्मशब्द-
प्रयोगादात्मगुणवदनात्मवस्तूपास्यमिति गम्यते । आत्मो-

---

आ॰ वा यद्यपि नोपपद्यते तथापि तयोरस्मिन्ननुभवसिद्धत्वान्नियम-
विधेः सावकाशत्वमित्याशयेनाह । शरीरेति ॥ अथारब्धफल-
स्यापि कर्म्मणः सम्यग्ज्ञानाग्निदग्धत्वेन विदुषो वागादीनामप्रवृत्तिरत
आह । कर्म्मेति ॥ यथा मुक्तस्येषुपाशयादेरप्रतिबन्धाद्यावद्वेगं
प्रवृत्तिरवश्यम्भाविनी । तथा प्रवृत्तफलस्य कर्म्मणो ज्ञानेनाप-
नोद्यतया ततो बलवत्त्वात्तद्वशाद्विदुषोऽपि यावद्भोगं वागादि-
प्रवृत्तिर्भाव्येत्यर्थः ॥ आरब्धकर्म्मप्राबल्ये फलितमाह । तेनेति ॥
आरब्धस्य कर्म्मणो यथोक्तेन न्यायेन प्राबल्ये तद्वशात्क्षुधादि-
दोषो यदोद्भवति तदात्मनि विस्मरणादिसम्भवात्तज्ज्ञानप्राप्तेः
पाक्षिकत्वादवश्यम्भाविकर्म्मापेक्षया तद्दौर्बल्यं स्यादित्यर्थः ॥
तथापि नियमविध्यङ्गीकारस्य किमायातन्तदाह । तस्मादिति ॥
ज्ञानस्य पक्षे प्राप्तत्वं तच्छब्दार्थः । आदिपदं ब्रह्मचर्य्यशमद-
मादिसङ्ग्रहार्थं । विज्ञायेत्यादिवाक्यानां नियमविध्यर्थत्वमुपसंह-
रति । तस्मादिति ॥ आदिपदेन प्रकृतमपि वाक्यं सङ्गृह्यते ।
तच्छब्दार्थमेव स्फोरयति । अन्यार्थेति । शाब्दज्ञानादेव पुमर्थ-
सिद्धेस्तस्य तदावृत्तेर्ध्यानस्य वा विधेयत्वाभावाद्वेदान्ताः
शुद्धे सिद्धेऽर्थे मानमित्युक्तं ।

इदानीमितिशब्दप्रयुक्तं चोद्यमुत्थापयति । अनात्मेति ॥
आत्मशब्दादूर्द्ध्वमितिशब्दप्रयोगादात्मशब्दार्थस्योपास्यत्वेनाविव-
क्षितत्वादात्मगुणकस्यानात्मनोऽव्याकृतशब्दितस्य प्रधानस्योपास-
नमस्मिन्वाक्ये विवक्षितमित्यर्थः । उक्तमेवार्थं दृष्टान्तेन स्पष्ट-

भा॰ पास्यत्ववाक्यवैलक्षण्याच । परेण च वक्ष्यत्यात्मानमेव लोक-मुपासीतेति । तत्र च वाक्ये आत्मैवोपास्यत्वेनाभिप्रेतो द्वितीयाश्रवणादात्मानमेवेति । इह तु न द्वितीया श्रूयत इति । परत्वात्मशब्द आत्मेत्येवोपासीतेति । अतो नात्मोपास्य आत्मगुणस्त्वन्य इति त्ववगम्यते । न वाक्यशेष आत्मन उपास्यत्वेनावगमात्तस्यैव वाक्यस्य शेष आत्मैवोपास्यत्वेनावगम्यते । तदेतत्पदनीयमस्य सर्वस्य यदयमात्मान्तरतरं यदयमात्मात्मानमेवावेदिति प्रविष्टस्य दर्शनप्रतिषेधाद्-नुपास्यत्वमिति चेत् । यस्यैवात्मनः प्रवेश उक्तस्तस्यैव दर्शनं वार्यते । तन्न । पश्यन्तीति प्रकृतोपादानात् । तस्मादात्मनोऽनुपास्यत्वमिति चेन्न । अकृत्स्नत्वदोषाद् दर्शनप्रतिषेधोऽकृत्स्नत्वदोषाभिप्रायेण नात्मोपास्यत्वप्रतिषेधाय प्राणना-

---

आ॰ वति । यथेत्यादिना । अनात्मोपासनमेवात्र विवक्षितमित्यत्र हेत्वन्तरमाह । आत्मेति । तदेव प्रपञ्चयति । परेणेति । ततो वैलक्षण्यं दर्शयति । इह त्विति । वैलक्षण्यान्तरमाह । इति परत्वेति । वैलक्षण्यफलमाह । अत इति । नात्रानात्मोपासनं विवक्षितमिति परिहरति । नेत्यादिना । हेत्वर्थं स्फुटयति । तस्यैवेति । आत्मनश्चेदुपास्यत्वं तदा प्रक्रमविरोधः स्यादिति शङ्कते । प्रविष्टस्येति । आत्मनो दर्शनप्रतिषेधं प्रकटयति । यस्येति । तस्यैवेति नियमे हेतुमाह । प्रकृतेति । तच्छब्दस्य प्रकृतपरामर्शित्वात्प्रविष्टस्य च प्रकृतत्वात्तस्य तेनोपादानादिति हेत्वर्थः । पूर्वपक्षं निगमयति । तस्मादिति । प्राणनादिविशिष्टस्य परिच्छिन्नत्वात्तस्य दृष्टत्वेऽपि पूर्णस्य न दृष्टतेति निषेधपर्य्यवसानान्नोपक्रमविरोधोऽस्तीति परिहरति । नेत्यादिना । तदेव विशदयति । दर्शनेति । कथमयमभिप्रायभेदः श्रुतेरवगम्यते तत्राह । प्राणनादीति । प्राणन्नेवेत्यादिना क्रियाविशेषविशिष्टत्वेनात्मनो

भा॰ द्विक्रियाविशिष्टत्वेन विशेषणात्। आत्मनश्चेदुपास्यत्वमनभिप्रेतं प्राणनाद्येकैकक्रियाविशिष्टस्यात्मनोऽकृत्स्नत्ववचनमनर्थकं स्यादकृत्स्नो ह्येषोऽत एकैकेन भवतीत्यनेकैकविशिष्टस्यात्मा कृत्स्नत्वादुपास्य एवेति सिद्धं। यस्त्वात्मशब्दस्येति परः प्रयोगः। आत्मशब्दप्रत्यययोरात्मतत्त्वस्य परमार्थतोऽविषयत्वज्ञापनार्थमन्यथात्मानमुपासीतेत्येवमवक्ष्यत्। तथा चार्थादात्मनि शब्दप्रत्ययावनुज्ञातौ स्यातां। तच्चानिष्टं नेति नेति विज्ञातारमरे केन विजानीयादविज्ञातं विज्ञातृ यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेत्यादिश्रुतिभ्यः। यच्चात्मानमेव लोकमुपासीतेति तदनात्मोपासनप्रसक्तिनिवृत्तिपरत्वान्न वाक्यान्तरं॥

---

आ॰ विशेषणात्तस्य कृत्स्नत्वेऽपि नासौ परिपूर्णो कृत्स्नः स्यादिति श्रुतेराशयो लक्ष्यते। केवलस्य तु तस्योपास्यत्वमभिसंहितमकृत्स्नत्वदोषाभावादित्यर्थः॥ उक्तमर्थं व्यतिरेकमुखेन साधयति। आत्मनश्चेदिति॥ तस्यानुपास्यत्वार्थं तद्वचनमर्थवदित्याशङ्क्य तदुपास्यत्वनिषेधस्यात्मोपास्यत्वे पर्य्यवसानमभिप्रेत्याह। नैकैकेति॥ उपक्रमोपसंहाराभ्यां उपास्यत्वमात्मनो दर्शितमिदानीमितिशब्दप्रयोगादनात्मोपासनमिदमित्युक्तं प्रत्याह। यस्त्विति॥ प्रयोगशब्दादुपरिष्टात्मशब्दो मन्तव्यः। इति शब्दस्य यथोक्तार्थत्वाभावे दोषमाह। अन्यथेति॥ न ह्यात्मनः स्वातन्त्र्येणानुपास्यत्वार्थमितिशब्दोऽर्थवान्पूर्वापरवाक्यविरोधादिति मन्तव्यं। इति शब्दमन्तरेण वाक्यप्रयोगे दोषमाह। तथेति॥ तस्य शब्दप्रत्ययविषयत्वमिष्टमेवेति चेत्तत्राह। तच्चेति॥ आत्मोपास्त्यवाक्यवैलक्षण्यादनात्मोपासनमेतदित्युक्तं दूषयति। यस्त्विति॥ आत्मैव ज्ञातव्यो नानात्मेति प्रतिज्ञायाश्च श्रोत्रादिहेतुवचः॥ सत्यमिति तदेतत्पदनीयमित्यादिवाक्यापेक्षं चोद्यमुत्थापयति। अनिर्ज्ञातत्वेति॥

उ॰ तदेतत्पदनीयमस्य सर्व्वस्य यदयमात्मानेन ह्येतत्सर्व्वं वेद ।

---

भा॰ अनिर्ज्ञातत्वसामान्यादात्मा ज्ञातव्योऽनात्मा च । तत्र कस्मादात्मोपासन एव यत्न आस्थीयते । आत्मेत्येवोपासीतेति नेतरविज्ञान इत्यत्रोच्यते । तदेतदेव प्रकृतं पदनीयं गमनीयं नान्यदस्य सर्व्वस्येति निर्द्धारणार्था षष्ठी । अस्मिन्सर्व्वस्मिन्नित्यर्थः । यदयमात्मा यदेतदात्मतत्त्वं किं न विज्ञातव्यमेवान्यत् किं तर्हि ज्ञातव्यत्वेऽपि न पृथग्ज्ञानान्तरमपेक्षते । आत्मज्ञानात् । कस्मादनेनात्मज्ञानेन हि यस्मादेतत्सर्व्वमनात्मजातमन्यद्यत्तत्सर्व्वं समस्तं वेद जानाति । नन्वन्यज्ञानेनान्यन्न ज्ञायत इत्यस्य परिहारं दुन्दुभ्यादिग्रन्थेन वक्ष्यामः । कथं पुनरेतत्पदनीयमिति ।

---

आ॰ उत्तरमाह । तदेतदिति । निर्द्धारणमेव स्फोरयति । अस्मिन्निति । नान्यदित्युक्तत्वादनात्मनो विज्ञातव्यत्वाभावश्चेदनेन हीत्यादिवाक्यविरोधः स्यादिति शङ्कते । किं नेति । तस्याज्ञेयत्वं निषेधति । नेति । तस्यापि ज्ञातव्यत्वेनान्यदिति वचनमनवकाशमित्याह । किं तर्हीति । तस्य सावकाशत्वं दर्शयति । ज्ञातव्यत्वेऽपीति । आत्मनः सकाशादनात्मनोऽर्थान्तरत्वात्तस्यात्मज्ञानाज्ज्ञातव्यत्वायोगाज्ज्ञातव्यत्वे ज्ञानान्तरमपेक्षितव्यमेवेति शङ्कते । कस्मादिति । उत्तरवाक्येनोत्तरमाह । अनेनेति । आत्मन्यनात्मजातस्य कल्पितत्वात्तस्य तदतिरिक्तस्वरूपाभावात्तज्ज्ञानेनैव ज्ञातत्वसिद्धेर्नास्ति ज्ञानान्तरापेक्षेत्यर्थः । लोकदृष्टिमाश्रित्यानेनेत्यादिवाक्यार्थमाक्षिपति । नन्विति । आत्मकार्य्यत्वादनात्मनस्तस्मिन्नन्तर्भावात्तज्ज्ञानेन ज्ञानमुचितमिति परिहरति । अस्येति । सत्योपायाभावादात्मवत्तस्य पदनीयत्वासिद्धिरिति शङ्कते । कथमिति ।

उ॰ यथा ह वै पदेनानुविन्देदेवं कीर्त्तिं श्लोकं विन्दते य एवं वेद ॥ ७ ॥

---

भा॰ उच्यते। यथा ह वै लोके पदेन गवादिखुराङ्कितो देशः पदमित्युच्यते तेन पदेन नष्टं विविदिषितं पशुं पदेनान्विष्यमाणोऽनुविन्देत लभेत। एवमात्मनि लब्धे सर्व्वमुपलभत इति। नन्वात्मनि विज्ञाते सर्व्वमन्यज्ज्ञायत इति ज्ञाने प्रकृते कथं लाभोऽप्रकृत उच्यत इति। न। ज्ञानलाभयोरेकार्थत्वस्य विवक्षितत्वात्। आत्मनो ह्यलाभोऽज्ञानमेव। तस्माज्ज्ञानमेवात्मनो लाभो नानात्मलाभवदप्राप्तप्राप्तिलक्षणः। आत्मलाभो लब्धृलब्धव्ययोर्भेदाभावात्। यत्र ह्यात्मनोऽनात्मा लब्धव्यो भवति तत्रात्मा लब्धा लब्धव्योऽनात्मा। स चाप्राप्त उत्पाद्यादिक्रियाव्यवहितः कारकविशेषोपादानेन क्रियाविशेषमुत्पाद्य लब्धव्यः। स त्वप्राप्त-

---

आ॰ असत्त्वस्यापि श्रुत्वा चार्थादेरर्थक्रियाकारित्वसम्भवादात्मतत्त्वस्य पदनीयत्वोपपत्तिरित्याह। उच्यत इति। विविदिषितं लब्धुमिष्टं। अन्वेषणोपायत्वं दर्शयितुं पदेनेनेति पुनरुक्तिः। अनेनेत्यत्र वेदेति ज्ञानेनोपक्रम्यानुविन्देदिति लाभमुक्त्वा कीर्त्तिमित्यादिश्रुतौ पुनर्लाभार्थेन विदिनोपसंहारादनुविन्देदिति श्रुतेरुपक्रमोपसंहारविरोधः स्यादिति शङ्कते। नन्विति॥ शङ्कितं विरोधं निराकरोति। नेति॥ कथं तयोरैकार्थ्यं ग्रामादौ तदेकत्वाप्रसिद्धेरित्याशङ्क्याह। आत्मन इति॥ ग्रामादावप्राप्ते प्राप्तिरेव लाभो न ज्ञानमात्रं तथात्रापि किं न स्यादित्याशङ्क्याह। नेत्यादिना॥ ज्ञानलाभशब्दयोरर्थभेदस्तर्हि कुत्रेत्याशङ्क्याह। यत्र हीति। अनात्मनि लब्धृलब्धव्ययोर्ज्ञानज्ञेययोश्च भेदे क्रिया-

भा॰ प्राप्तिलक्षणोऽनित्यो मिथ्याज्ञानजनितकामक्रियाप्रभव-
त्वात्स्वप्ने पुत्रादिलाभवत्। अयन्तु तद्विपरीत आत्मा
आत्मत्वादेव नोत्पाद्यादिक्रियाव्यवहितः। अतोऽनित्यलब्ध-
स्वरूपत्वेऽपि सत्यविद्यामात्रं व्यवधानं। यथा गृह्यमाणाया
अपि शुक्तिकाया विपर्ययेण रजताभासाया अग्रहणं
विपरीतज्ञानव्यवधानमात्रं तथाग्रहणं। ज्ञानमात्रमेव वि-
परीतज्ञानव्यवधानापोहार्थत्वाज्ज्ञानस्य। एवमिहाप्यात्म-
नोऽलाभोऽविद्यामात्रव्यवधानं। तस्माद्विद्यया तदपोहन-
मात्रमेव लाभो नान्यः कदाचिदुपपद्यते। तस्मादात्मलाभे
ज्ञानादर्थान्तरसाधनस्यानर्थक्यं वक्ष्यामः। तस्मान्निरा-
शङ्कमेव ज्ञानलाभयोरेकार्थत्वं विवक्षन्नाह। ज्ञानं प्रश्न-
स्यानुविन्देदिति। विन्दतेर्लाभार्थत्वाल्लक्षणविज्ञानफलमिद-
मुच्यते। यथाऽयमात्मा नामरूपानुप्रवेशेन ख्यातिं गतः

---

आ॰ भेदात्क्वचभेदसिद्धिरित्यर्थः। नन्वात्मलाभोऽपि ज्ञानाद्भिद्यते
लाभत्वादनात्मलाभवदित्याशङ्क्य ज्ञानहेतुमात्राधीनत्वमुपाधि-
रित्याह। स चेति। अप्रामत्वं व्यक्तीकरोति। उत्पाद्येति। तद्य-
वधानमेव साधयति। कारकेति। किं चानात्मलाभोऽविद्या-
कल्पितः कादाचित्कत्वात्स्वप्नवदित्याह। स त्विति। विद्याला-
नविद्यावकल्पितोऽप्रामाणिकत्वात्स्वप्नतिपन्नवदित्याह। मिथ्येति।
प्रकृते विशेषं दर्शयति। अयन्त्विति। वैपरीत्यमेव स्फोरयति।
आत्मत्वादिति। आत्मनस्तर्हि नित्यलब्धत्वान्न तत्रालब्धत्वबुद्धिः
स्यादित्याशङ्क्याह। नित्येति। आत्मन्यलाभोऽज्ञानं लाभस्तु ज्ञान-
मित्येतद्दृष्टान्तेन स्पष्टयति। यथेत्यादिना। शुक्तिकायाः स्वरू-
पेण गृह्यमाणाया अपीति योजना। आत्मलाभोऽविद्यानि-
वृत्तिरेवेत्युक्तं। वक्ष्यमाणं च गमकं दर्शयति। तस्मादिति।

उ॰ तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा ॥

---

भा॰ आत्मेत्यादिनामरूपाभ्यां प्राणादिसंहतिं च श्लोकं प्राप्तवानित्येवं यो वेद स कीर्त्तिं ख्यातिं श्लोकं च सङ्घातमिष्टैः सह विन्दते लभते। यद्वा यथोक्तं वस्तु यो वेद मुमुक्षूणामपेक्षितं कीर्त्तिशब्दितमैक्यज्ञानं तत्फलं श्लोकशब्दितमुक्तिमाप्नोतीति मुख्यमेव फलं ॥ ७ ॥

कुतश्चात्मतत्त्वमेव ज्ञेयमनादृत्यान्यानीत्याह तदेतदात्मतत्त्वं प्रेयः प्रियतरं पुत्रात्पुत्रो हि लोके प्रियः प्रसिद्धस्तस्मादपि प्रियतरमिति निरतिशयप्रियत्वं दर्शयति। तथा वित्ताद्धिरण्यरत्नादेस्तथान्यस्माद्यद्यल्लोके प्रियत्वेन प्रसिद्धं तस्मात्सर्वस्मादित्यर्थः। तत्कस्मादात्मतत्त्वमेव प्रिय-

---

आ॰ अविरोधमुपसंहरति । तस्मादित्यादिना ॥ तयोरेकार्थत्वेऽपि कथमनुविन्देदिति मध्ये प्रयुज्यते तत्राह । विन्दतेरिति ॥ आदिमध्यावसानानामविरोधमुक्त्वा कीर्त्तिमित्यादिवाक्यमवतार्य्य व्याकरोति । गुणेत्यादिना । इतिशब्दादुपरिष्टाद्यथेत्यस्य सम्बन्धो ज्ञानस्तुतिश्चात्र विवक्षिता ज्ञानिगामीहक् फलस्यानभिप्रेतत्वादिति द्रष्टव्यं ॥ ७ ॥

आत्मनः पदनीयत्वे तस्यैवात्मतत्त्वसम्भवो हेतुरुक्तोऽधुना तत्रैव हेत्वन्तरत्वेनोत्तरवाक्यमवतारयति । कुतश्चेति । इतश्चेति यावत् ॥ विरक्तस्य पुत्रे प्रीत्यभावात्कथमात्मनस्तस्मात् प्रियतरत्वमित्याशङ्क्याह । पुत्रो हीति । प्रियतरमात्मतत्त्वमिति शेषः । लोकदृष्टिमेवावष्टभ्याह । तथेति । वित्तपदेन मानुषवित्तवद्दैवं वित्तमपि गृह्यते ॥ विशेषाणामानन्त्यात्प्रत्येकं प्रदर्शनमशक्यमित्याशयेनाह ।

भा॰ तरं न प्राणादीत्युच्यते बाह्यात्पुत्रवित्तादेः प्राणपिण्डसमुदायो ह्यन्तरोऽभ्यन्तरः सन्निकृष्ट आत्मनः । तस्मादप्यन्तरतरादन्तरतरं यदयमात्मा यदेतदात्मतत्त्वं । यो हि लोके निरतिशयप्रियः स सर्व्वप्रयत्नेन लभ्यो भवति । तथायमात्मा सर्व्वलौकिकप्रियेभ्यः प्रियतमः । तस्मात्तल्लाभे महान् यत्न आस्थेय इत्यर्थः । कर्त्तव्यताप्राप्तमप्यन्यप्रियलाभे यत्नमुज्झित्वा कस्मात्पुनरात्मानात्मप्रिययोरन्यतरप्रियहानेनेतरप्रियोपादानप्राप्तौ आत्मप्रियोपादानेनैवेतरहानः क्रियते न विपर्य्यय इत्युच्यते ॥

---

आ॰ तथान्यस्मादिति । पुत्रादौ प्रीतिव्यभिचारेऽपि प्राणादौ तदव्यभिचारादात्मनो न प्रियतमत्वमिति शङ्कते । तस्मादिति । यदान्तरमादाय व्याकुर्व्वन् परिहरति । उच्यत इत्यादिना । अन्तरतरत्वे प्रियतमत्वसाधने हेतुरात्मत्वमित्यभिप्रेत्य विशेष्यं व्यपदिशति । यदयमिति । आत्मनो निरतिशयप्रेमास्पदत्वेऽपि कुतस्तस्यैव यत्नीयत्वमित्याशङ्क्य वाक्यार्थमाह । यो हीत्यादिना । पुत्रादिलाभे रागादीनां कर्त्तव्यत्वेन प्राप्तप्रयत्नविरोधादात्मलाभे प्रयत्नः सुकरो न भवतीत्याशङ्क्याह । कर्त्तव्येति । आत्मनो निरतिशयप्रेमास्पदत्वे युक्तिं पृच्छति । कस्मादिति । आत्मप्रियस्योपादानमनुसन्धानमितरस्यानात्मप्रियस्य हानमननुसन्धानं । विपर्य्ययोऽनात्मनि पुत्रादावभिनिवेशेनात्मप्रियस्याननुसन्धानमिति विभागः । युक्तिलेशं दर्शयितुमनन्तरवाक्यमवतारयति । उच्यत इति । कश्चिदात्मप्रियवादी स तस्मादन्यं प्रियं ब्रूयादिति सम्बन्धः ॥

उ॰ स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियꣳ रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रिय-

भा॰ स यः कश्चिदन्यमनात्मविशेषं पुत्रादिकं प्रियतरमात्मनः सकाशाद्ब्रुवाणं ब्रूयादात्मप्रियवादी। किं प्रिय तवाभिमतं पुत्रादिलक्षणं रोत्स्यत्यावरणं प्राणसंरोधं प्राप्स्यति विनङ्क्ष्यतीति। स कस्मादेवं ब्रवीति यस्मादीश्वरः समर्थः पर्य्याप्तोऽसावेवं वक्तुं ह यस्मात्तस्मात्तथैव स्याद्यत्तेनोक्तं प्राणसंरोधं प्राप्स्यति। यथाभूतवादी हि सः तस्मात्सर्व्व ईश्वरो वक्तुमीश्वरशब्दः क्षिप्रवाचीति केचित्। भवेद्यदि प्रसिद्धिः स्यात्तस्मादुज्झित्वान्यत्प्रियमात्मानमेव प्रियमुपासीत। स य आत्मानमेव प्रियमुपास्ते आत्मैव

आ॰ वक्तव्यं प्रश्नपूर्व्वकं प्रकटयति। किमित्यादिना॥ आत्मप्रियवादिन्येवं वदत्यपि पुत्रादिनाशकृदाकार्यो नियतो न सिध्यतीत्याशङ्क्य परिहरति। स कस्मादित्यादिना॥ हशब्दोऽवधारणार्थः समर्थपदादुपरि सम्बध्यते। तस्मादेवं वक्तीति शेषः॥ उक्तं सामर्थ्यमनूद्य फलितमाह। यस्मादिति॥ अथात्मप्रियवादिनो यथोक्तं सामर्थ्यमेव कथं लब्धमित्याशङ्क्याह। यथेति। अतोऽन्यदार्त्तमित्यमात्मनां विनाशित्वादिनाभिमतस्य दुःखात्मकत्वात्तत्प्रियत्वस्य भ्रान्तिमात्रत्वादात्मनस्तद्वैपरीत्यान्मुख्या प्रीतिस्तत्रैवेति भावः॥ पक्षान्तरमनूद्य रूढप्रयोगाभावेन दूषयति। ईश्वरशब्द इति॥ आत्मन्यमुख्या प्रीतिरिरिति स्थितेः फलितमाह। तस्मादिति। उपास्तिमनूद्य तत्फलं कथयति। स य इति॥ अनुवादद्योतको हशब्दः। प्रियमात्मसुखं तस्यापि लौकिकसुखवन्नाशः सुखत्वादित्याशङ्किते तन्निरासार्थमनुवादमात्रं विवक्षितमित्याह। नित्येति॥ फलश्रुतेर्गत्यन्तरमाह। आत्मप्रियेति॥ मन्त्रद्रीदमात्म-

उ॰ मुपासीत स आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥ ८ ॥

तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते ।

---

भा॰ प्रियो नान्योऽस्तीति प्रतिपद्यते । अन्यल्लौकिकं प्रियमप्यप्रियमेवेति निश्चित्योपास्ते चिन्तयति न हास्यैवंविदः प्रियं प्रमायुकं प्रमरणशीलं भवति । नित्यानुवादमात्रमेतदात्मविदोऽन्यस्य प्रियस्याप्रियस्य चाभावादात्मप्रियग्रहणस्तुत्यर्थं वा प्रियगुणफलविधानार्थं वा मन्दात्मदर्शिनस्ताच्छील्यप्रत्ययोपादानात् ॥ ८ ॥

सूचिता ब्रह्मविद्या आत्मेत्येवोपासीतेति यदर्थोपनिषत्कृत्स्नापि तस्यैतस्य सूत्रस्य व्याचिख्यासुः प्रयोजनाभिधित्सयोपोद्घातं करोति । तदिति वक्ष्यमाणमनन्तरवाक्ये-

---

भा॰ प्रियग्रहणं यत्तन्निष्ठस्य प्रियं न प्रणश्यति तस्मात्तदनुसन्धानं कर्तव्यमिति स्तुत्यर्थं फलकीर्तनमित्यर्थः। पक्षान्तरमाह । प्रियगुणेति ॥ यो मन्दः सगुणात्मदर्शी तस्य प्रियगुणविशिष्टात्मोपासने प्रियं प्राणादि न नश्यतीति फलं विधातुं फलवचनमित्यर्थः ॥ नन्वात्मानं प्रियमुपासीनस्य प्रियं प्राणादिविध्यसामर्थ्यान्न नश्यति। तथा च मन्दविशेषणं मन्दमित्याशङ्क्याह। ताच्छील्येति॥ ताच्छील्येऽर्थे विहितस्याकप्रत्ययस्य श्रुत्योपादानात्स्वभावतो नाशयोगाच्च प्रमरणशीलत्वाभावे प्राणादेरात्यन्तिकमप्रमरणमविवक्षितमित्यर्थः ॥ ८ ॥

तदाहुरित्यादेर्गतेन ग्रन्थेन सम्बन्धं वक्तुं वृत्तं कीर्तयति । सूचितेति ॥ तस्याप्यामाण्यमाह। यदर्थेति ॥ तर्हि सूत्रव्याख्यानेनैव सर्वोपनिषदर्थसिद्धेस्तदाहुरित्यादि व्यर्थमित्याशङ्क्याह।

भा॰ ऽवद्योत्यं वस्तु। आहुर्ब्राह्मणा ब्रह्म विविदिषवो जन्मजरामरणप्रबन्धचक्रभ्रमणकृतायासदुःखोदकापारमहोदधिप्लवभूतं गुरुमासाद्य तत्तीरमुत्तितीर्षवो धर्माधर्मसाधनतत्फललक्षणात्साध्यसाधनरूपान्निर्विण्णास्तद्विलक्षणनित्यनिरतिशयश्रेयः प्रतिपित्सवः किमाहुरित्याह। यद्ब्रह्मविद्यया ब्रह्म परमात्मा तद्यया वेद्यते सा ब्रह्मविद्या तया ब्रह्मविद्यया सर्वं निरवशेषं भविष्यन्तो भविष्याम इत्येवं मनुष्या यन्मन्यन्ते। मनुष्यग्रहणं विशेषतोऽधिकारज्ञापनार्थं। मनुष्या एव हि विशेषतोऽभ्युदयनिःश्रेयस

---

आ॰ तस्येति। विद्यासूत्रं व्याख्यातुमिच्छन्ती श्रुतिः सूचितं विद्याविवक्षितप्रयोजनाभिधानार्थमुपोद्घातं चिकीर्षति। प्रतिपाद्य*मर्थं बुद्धौ संगृह्य तादर्थ्येनार्थान्तरोपवर्णनस्य तथात्वाच्चिन्तां प्रकृतसिद्धार्थामुपोद्घातं प्रचक्षत इति न्यायादित्यर्थः। यद्ब्रह्मविद्ययेत्यादि वाक्यप्रकाश्यं चोद्यं तच्छब्देनोच्यते। प्रकृतसम्बन्धात्सम्भवादित्याह। तदिति। ब्राह्मणमात्रस्य चोद्यकर्तृत्वं व्यावर्त्तत इति। ब्रह्मेति। उत्प्रेक्षया ब्रह्मवेदनेच्छावत्त्वं व्यावर्त्तयितुं तदेव विशेषणं विभजते। जन्मेति। जन्म च जरा च मरणञ्च तेषां प्रबन्धे प्रवाहे चक्रवदनवरतं भ्रमणेन कृतं यदायासात्मकं दुःखं तदेवोदकं यस्मिन्नपारे संसाराख्ये महोदधौ तत्र प्लवभूतं तरणसाधनमिति यावत्। तत्तीरं तस्य संसारसमुद्रस्य तीरं परं ब्रह्मेत्यर्थः। तेषां विविदिषायाः साधनत्वार्थं तत्रत्यत्वेन संसारे वैराग्यं दर्शयति। धर्मेति। निर्वेदस्य निरङ्कुशत्वं वारयति। तद्विलक्षणेति। उत्तरवाक्यमवतार्य व्याचष्टे। किमित्यादिना। अथ परा। यया तदक्षरमधिगम्यत इति श्रुत्यन्तरमाश्रित्याह। तद्ययेति। मनुष्या यन्मन्यन्ते तत्र विरुद्धं वस्तु भातीति सम्बन्धः।

---

* सर्वमिति पाठान्तरः।

उ॰ किमु तद्ब्रह्मावेद्यस्मात्तत्सर्व्वमभवदिति । ९ ।

---

भा॰ साधनेऽधिकृता इत्यभिप्रायो यथा कर्म्मविषये फलप्राप्तिं ध्रुवां कर्म्मभ्यो मन्यन्ते । तथा ब्रह्मविद्यायाः सर्व्वात्मभावफलप्राप्तिं ध्रुवामेव मन्यन्ते । वेदप्रामाण्यस्योभयत्राविशेषात् ॥

तत्र विप्रतिषिद्धं वस्तु लक्ष्यतेऽतः पृच्छामः । किमु तद्ब्रह्म यस्य विज्ञानात् सर्व्वं भविष्यन्तो मनुष्या मन्यन्ते तत्किमवेद्यस्माद्विज्ञानात्तत्सर्व्वमभवद्ब्रह्म च सर्व्वमिति श्रूयते । तद्यद्यविज्ञाय किंचित्सर्व्वमभवत्तथान्येषामप्यस्तु ।

---

आ॰ मनुष्यग्रहणस्य कृत्यमाह । मनुष्येति ॥ ननु देवादीनामपि विद्याधिकारो देवताधिकरणन्यायेन वक्ष्यते तत्कुतो मनुष्याणामेवाधिकारज्ञापनमित्यत आह । मनुष्या इति । विशेषतः सर्व्वाविसंवादेनेति यावत् ॥ तथापि किमिति ते ज्ञानान्मुक्तिं सिद्धवद्ब्रुवन्तीत्याशङ्क्याह । यथेति ॥ उभयत्र कर्म्मब्रह्मणोरिति यावत् । उत्तरवाक्यमुपादत्ते । तत्रेति ॥ मनुष्याणां मतं तच्छब्दार्थः । वस्तुशब्देन ज्ञानान्मुक्तिरुच्यते । आक्षेपसर्व्वस्व चोद्यस्य प्रवृत्तौ विरोधप्रतिभासो हेतुरित्यतःशब्दार्थः । तद्ब्रह्मपरिच्छिन्नमपरिच्छिन्नं वेति कुतो ब्रह्मवि चोद्यते तत्राह । यस्येति । प्रश्नान्तरं करोति । तत्किमिति ॥ ब्रह्म ह्यात्मा नाम आसीदतिरिक्तं वेति प्रश्नस्य प्रसङ्गं दर्शयति । यस्मादिति ॥ सर्व्वस्य व्यतिरिक्तविषये ज्ञानं प्रसिद्धं तर्हि विचारयेत्याशङ्क्याह । ब्रह्म चेति ॥ सर्व्वं खल्विदं ब्रह्मेत्यादौ ब्रह्मणः सर्व्वात्मत्वश्रवणादतिरिक्तविषयाभावादात्मानमवेदिति पक्षस्य सावकाशतेत्यर्थः ॥ किंशब्दस्य प्रश्नार्थत्वमुक्त्वाऽऽक्षेपार्थमाह । तद्यदीति । ब्रह्म हि किंचिदज्ञात्वा सर्व्वमभवज्ज्ञात्वा वा । नाद्यः । ब्रह्मविद्यानर्थक्यादित्युक्त्वा द्वितीयमनुवदति । तथेति ॥ स्वरूपमन्यदा ज्ञात्वा ब्रह्मणः सर्व्वापत्तिरिति

भा॰ किं ब्रह्मविद्यया विज्ञाय सर्व्वमभवद्विज्ञानसाध्यत्वात्कर्म्म-
फलेन तुल्यमेवेत्यनित्यत्वप्रसङ्गः। सर्व्वभावस्य ब्रह्मविद्याफल-
स्यानवस्थादोषश्च। तदप्यन्यद्विज्ञाय सर्व्वमभवत्ततः पूर्व्व-
मप्यन्यद्विज्ञायेति। न तावदविज्ञाय सर्व्वमभवत् शास्त्रार्थवै-
रूप्यदोषात्फलानित्यत्वदोषः। तर्हि नैकोऽपि दोषोऽर्थ-
विशेषोपपत्तेः। यदि किमपि विज्ञायैव तद्ब्रह्म सर्व्वमभवत्
पृच्छामः किमु तद्ब्रह्मावेद्यस्मात्तत्सर्व्वमभवदिति ॥ ९ ॥

एवञ्चोदिते सर्व्वदोषानागन्धितं प्रतिवचनमाह ब्रह्मा-
परं सर्व्वभावस्य साध्यत्वोपपत्तेः। न हि परस्य ब्रह्मणः

---

आ॰ विकल्पयोरुभयत्र साधारणदूषणमाह। विज्ञानेति ॥ द्वितीयदो-
षान्तरमाह। अनवस्थेति ॥ बहिरेवाक्षेपं परिहरति। न
तावदिति ॥ अज्ञात्वैव ब्रह्मणः सर्व्वभावोऽस्मदादेस्तु ज्ञानादिति
शास्त्रार्थे वैरूप्यं। न चास्मदादेरपि तदन्तरेण तद्भावः। शास्त्रा-
नर्थक्यात्तज्ज्ञानाद्ब्रह्मणः सर्व्वभावपक्षे स्वोक्तं दोषमाक्षेप्ता स्मार-
यति। फलेति ॥ सतोऽपरिच्छिन्नं ब्रह्माविद्यातत्कार्य्यसम्बन्धा-
त्परिच्छिन्नवद्भाति तन्निवृत्त्यौपाधिकं सर्व्वभावस्य साध्यत्वं। न
चानवस्था। ज्ञेयान्तरानङ्गीकाराज्ज्ञानापि क्रियाविरोधो विषयत्वम-
न्तरेण वाक्यायबुद्धौ स्फुरणादि परिहरति। नैकोऽपीति॥ एतेन
विद्यावैयर्थ्यमपि परिहृतमित्याह। अर्थेति। यद्यपि ब्रह्म
परिच्छिन्नं नित्यसिद्धं तथापि तत्र विद्या तत्कार्य्यध्वंसरूपस्या-
र्थविशेषस्य स्थानादुपपत्तेर्न तद्वैयर्थ्यमित्यर्थः ॥ इदानीं प्रश्नमनूद्य
तदुत्तरत्वेन ब्रह्मेत्यादिश्रुतिमवतारयति। यदीत्यादिना ॥ तत्र
वृत्तिकृतां मतानुसारेण ब्रह्मशब्दार्थमाह। ब्रह्मेति ॥ ९ ॥

तस्य परिच्छिन्नत्वात्तज्ज्ञानेन सर्व्वभावस्य साध्यत्वसम्भवादिति
हेतुमाह। सर्व्वभावस्येति ॥ सिद्धान्ते यथोक्तहेत्वनुपपत्तिदोष-

भा॰ सर्व्वभावापत्तिर्विज्ञानसाध्या। विज्ञानसाध्यामु सर्व्वभावा-
पत्तिमाह। तस्मात्तत्सर्व्वमभवदिति। तस्माद्ब्रह्म वा इद-
मग्र आसीदित्यपरं ब्रह्म भवितुमर्हति। मनुष्याधिकाराद्वा
तद्भावी ब्राह्मणः स्यात्। सर्व्वं भविष्यन्तो मनुष्या मन्यन्त इति
हि मनुष्याः प्रकृतास्तेषां चाभ्युदयनिःश्रेयससाधने विशे-
षतोऽधिकार इत्युक्तं। न परस्य ब्रह्मणो नाप्यपरस्य प्रजापतेः।
अतो द्वैतैकत्वापरब्रह्मविद्यया कर्म्मसहितयाऽपरब्रह्मभाव-
मुपसम्पन्नो * भोज्यादपावृत्तः सर्व्वप्राप्त्योच्छिन्नकामकर्म्म-
बन्धनः परब्रह्मभावी ब्रह्मविद्याहेतोर्ब्रह्मेत्यभिधीयते।
दृष्टस्य लोकेऽपि भाविनीं वृत्तिमाश्रित्य शब्दप्रयोगो
यथौदनं पचतीति शास्त्रे च परिव्राजकः सर्व्वभूताभय-
दक्षिणामित्यादिवचनेनेति केचिद्ब्रह्मभावी पुरुषो ब्राह्मण

आ॰ माह। न हीति॥ सा तर्हि विज्ञानसाध्या माभूदित्यत आह।
विज्ञानेनेति॥ हिरण्यगर्भस्य गोपदेशजन्यज्ञानं ब्रह्मभावः सह
सिद्धचतुष्टयमिति स्मृतेः। स्वाभाविकज्ञानवत्त्वात्तस्मात्तत्सर्व्वमभव-
दिति चोपदेशाधीनधीसाध्योऽसौ अतो न चासीदित्यतीतकाला-
वच्छेदस्तत्काले तस्मिन् युज्यते। समवर्त्ततेति च जन्ममात्रं
श्रूयते। वाचात्मको तत्सम्बन्धस्य स्वाश्रयपराङ्गत्वात्मनुष्याणां
प्रकृतत्वाच्च नापरं ब्रह्मेह ब्रह्मशब्दमित्यपरितोषाद्वृत्तिकारमतं
हित्वा ब्रह्मेति ब्रह्मभावी पुरुषो निर्दिश्यत इति भर्तृप्रप-
ञ्चोक्तिमाश्रित्य तन्मतमाह। मनुष्येति॥ तदेव प्रपञ्चयति। सर्व्व-
मित्यादिना॥ द्वैतैकत्वं सर्व्वजगदात्मकमपरं हिरण्यगर्भाख्यं ब्रह्म।
तस्मिन् विद्या हिरण्यगर्भोऽहमित्यहङ्ग्रहोपास्तिः। तया समु-
च्चितया तद्भावमित्युपेतो हिरण्यगर्भपदे यद्भोज्यं ततोऽपि

* उपसन्नो इति पाठान्तरः।

भा॰ इति व्याचक्षते। तन्न। सर्व्वभावोपपत्तेरनित्यत्वदोषात्। न हि
कश्चिदस्मिन् लोके परमार्थतो निमित्तवशाद्भावान्तरमा-
पद्यते नित्यश्चेति। तथा ब्रह्मविज्ञाननिमित्तकृता चेत्सर्व्व-
भावापत्तिर्नित्या चेति विरुद्धं। अनित्यत्वे च कर्म्मफलतुल्य-
तेत्युक्तो दोषः। अविद्याकृताऽसर्व्वत्वनिवृत्तिश्चेत्सर्व्वभावा-
पत्तिं ब्रह्मविद्याफलं मन्यसे ब्रह्मभाविपुरुषकल्पना व्यर्था
स्यात्। प्रागब्रह्मविज्ञानादपि सर्व्वो जन्तुर्ब्रह्मत्वान्नित्यमेव
सर्व्वभावापन्नः। परमार्थतोऽविद्यया त्वब्रह्मत्वमसर्व्वत्वञ्चा-
ध्यारोपितं। यथा शुक्तिकायां रजतं। व्योम्नि वाऽतलं
मलवत्त्वादि तथेह ब्रह्मणि अध्यारोपितमविद्ययाऽब्रह्म-
त्वमसर्व्वत्वञ्च ब्रह्मविद्यया निवर्त्त्यत इति मन्यसे यदि॥

---

आ॰ दोषदर्शनाद्विरक्तः॥ सर्व्वकर्म्मफलप्राप्त्या निवृत्तकामादिनिगडः
साध्यान्तराभावाद्विद्यामेवार्थसमानत्वाद्ब्रह्मभावी जीवोऽ-
स्मिन्वाक्ये ब्रह्मशब्दार्थ इति फलितमाह। अत इति॥ कथं
ब्रह्मभाविनि जीवे ब्रह्मशब्दस्य प्रवृत्तिरित्याशङ्क्याह। दृष्टश्चेति॥
आदिशब्देन गृहस्थः सदृशीं भार्यां विन्देतेत्यादि गृह्यते
इति प्रकृतवाक्यकथनं। भर्तृप्रपञ्चव्याख्यानं दूषयति। तन्नेति।
ब्रह्मशब्देन परस्मादर्थान्तरस्य ग्रहे तस्य सर्व्वभावापत्तेः साध्य-
त्वादनित्यत्वापत्तेर्न्न तन्मतमुपपन्नमित्यर्थः॥ साध्यस्यापि मोक्षस्य
नित्यत्वमाशङ्क्य यत्कृतकं तदनित्यमिति न्यायमाश्रित्याह। न
हीति॥ सामान्यन्यायं प्रकृते योजयति। तथेति॥ भवतु सर्व्व-
भावापत्तेरनित्यत्वं का हानिरित्याशङ्क्याह। अनित्यत्वे चेति॥ किञ्च
जीवस्याब्रह्मत्वं तवाविद्याकृतं पारमार्थिकं वेति विकल्प्याद्य-
मनूद्य दूषयति। अविद्याकृतेति॥ तत्रानुवादभागं विभजते।
प्रागित्यादिना॥

भा॰ तदायुक्तं यत्परमार्थत आसीत् परमेव ब्रह्म ब्रह्मशब्दस्य मुख्यार्थभूतं ब्रह्म वा इदमग्र आसीदित्यस्मिन् वाक्य उच्यत इति वक्तुं। यथा भूतार्थवादित्वाद्वेदस्य। न त्वियं कल्पना युक्ता। ब्रह्मशब्दार्थविपरीतो ब्रह्मभावी पुरुषो ब्रह्मेत्युच्यत इति। श्रुतहान्यश्रुतकल्पनाया अन्याय्यत्वात्। महत्तरे प्रयोजनान्तरेऽसत्यविद्याकृतव्यतिरेकेणाब्रह्मत्वम-सर्व्वत्वञ्च विद्यत एवेति चेन्न। तस्य ब्रह्मविद्यापोहानुपपत्तेः। न हि कदाचित्साक्षाद्वस्तुधर्मस्यापोढ्री दृष्टा कर्त्री वा विद्या। अविद्यायास्तु सर्व्वत्रैव निवर्त्तिका दृश्यते। तथेहाप्य-ब्रह्मत्वमविद्याकृतमेव निवर्त्त्यतामसर्व्वत्वञ्च ब्रह्मविद्यया। न तु पारमार्थिकं वस्तु कर्त्तुं निवर्त्तयितुं वार्हति ब्रह्मविद्या।

---

आ॰ ब्रह्मभाविपुरुषकल्पना व्यर्थेत्युक्तं व्यक्तीकरोति। तदेति॥ तस्मिन् पक्षे ब्रह्मज्ञानात् पूर्व्वमपि परमार्थतः परं ब्रह्मासीत्तदेव प्रकृते वाक्ये ब्रह्मशब्देनोच्यत इति युक्तं। तद्धि ब्रह्मशब्दस्य मुख्य-मालम्बनमिति योजना। गौर्वाहीक इति वदमुख्यार्थोऽपि ब्रह्म-शब्दो निर्व्वहतीत्याशङ्क्याह। यथेति॥ निरतिशयमहत्त्वसम्पन्नं वस्तु ब्रह्मशब्देन श्रुतं। अश्रुतस्तु ब्रह्मभावी पुरुषः। श्रुतहान्यश्रुत-कल्पना न न्यायवती। तस्मात्तत्कल्पना न युक्तेति व्यावर्त्त्यमाह। न त्विति॥ अग्निरधीतेऽनुवाकमित्यादौ श्रुतहान्यश्रुतोपादानं दृष्ट-मित्याशङ्क्याह। महत्तर इति। तत्राग्निशब्दस्य मुख्यार्थत्वे सत्यन्विताभिधानानुपपत्त्या वाक्यार्थासिद्धेस्तज्ज्ञाने प्रयोजने श्रुतमपि हित्वाऽश्रुतं गृह्यते। प्रकृते त्वसति प्रयोजनविशेषे श्रुत-हान्यादिर्न युक्तिमानित्यर्थः॥ मनुष्याधिकारं निर्वोढुं ब्रह्म-भाविपुरुषकल्पनेत्याशङ्क्य महत्तरविशेषणं। यद्ब्रह्मविद्ययेति। परस्यापि तुल्यमधिकृतत्वं तस्य चाविद्याद्वाराऽधिकारित्वमवि-रुद्धमित्यग्रे स्फुटीभविष्यतीति भावः॥ द्वितीयं कल्पमुत्थापयति।

भा॰ तस्माच्छ्रुत्यर्थैव श्रुतहान्यश्रुतकल्पना ब्रह्मण्यविद्यानुपपत्ति-
रिति चेन्न। ब्रह्मणि विद्याविधानात्। न हि शुक्तिकायां
रजताध्यारोपणेऽसति शुक्तिकात्वं ज्ञाप्यते। चक्षुर्गोचरा-
पन्नायामियं शुक्तिका न रजतमिति। तथा सदेवेदं सर्वं
ब्रह्मैवेदं सर्वमात्मैवेदं सर्वं नेदं द्वैतमस्ति। अब्रह्मेति ब्रह्म-
ण्येकत्वविज्ञानं न विधातव्यं ब्रह्मण्यविद्याध्यारोपणायाम-
सत्यां। न ब्रूमः शुक्तिकायामिव ब्रह्मण्यतद्धर्माध्यारोपणा
नास्तीति किं तर्हि न ब्रह्म स्वात्मन्यतद्धर्माध्यारोप*निमि-
त्तमविद्याकर्तृ चेति। भवत्वेवं नाविद्याकर्तृ भ्रान्तं ब्रह्म।
किन्तु नैवाब्रह्माविद्याकर्त्ता चेतनो भ्रान्तोऽन्य इष्यते।
नान्योऽतोऽस्ति विज्ञाता नान्यदतोऽस्ति विज्ञातृ तत्त्वमस्या-
त्मानमेवावेदहं ब्रह्मास्म्यन्योऽसावन्योऽहमस्मीति न स

---

आ॰ अविद्येति॥ ब्रह्मविद्यावैयर्थ्यप्रसङ्गान्नैवमिति दूषयति। न
तस्येति॥ अनुपपत्तिमेव साधयति। नहीति। साध्यादा-
रोपमन्तरेणेति यावत्॥ वस्तुधर्मस्य परमार्थभूतस्य पदार्थ-
स्येत्यर्थः। विद्यायास्तर्हि कथमर्थवत्त्वं तत्राह। अविद्यायामिति।
सर्वत्र मुक्त्यादाविति यावत्। विमतमविद्यात्मकं विद्यानिव-
र्त्यत्वाद्रजतादिवदित्यभिप्रेत्य दार्ष्टान्तिकमाह। तथेति॥ विमतं
न कारकं विद्यात्वाच्छुक्तिकाविद्यावदित्याशयेनाह। नत्विति॥
अब्रह्मत्वादेर्वास्तवत्वायोगादयुक्ता ब्रह्मभावि पुरुषकल्पनेत्युपसंह-
रति। तस्मादिति॥ ब्रह्मण्यविद्यानिवृत्तिर्विद्याफलमित्यत्र चोद-
यति। ब्रह्मणीति। न हि सर्वत्र प्रकाशैकरसे ब्रह्मण्यज्ञानमादित्ये
तमोवदुपपन्नमिति भावः॥ तस्याज्ञातत्वमन्यत्वं वाऽऽक्षिप्यते नाद्य
इत्याह। न ब्रह्मणीति। न हि तत्त्वमसीति विद्याविधानं विज्ञाते

---

* अध्यारोपितविद्येतिपाठान्तरः।

भा० वेदेत्यादिश्रुतिभ्यः। स्मृतिभ्यश्च समं सर्व्वेषु भूतेषु अहमात्मा गुडाकेश शुनि चैव श्वपाके च। यस्तु सर्व्वाणि भूतानि यस्मिन् सर्व्वाणि भूतानीति मन्त्रवर्णात्॥

नन्वेवं शास्त्रोपदेशानर्थक्यमिति। बाढं। एवमवगतेऽस्त्वेवानर्थक्यमवगमानर्थक्यमपीति चेन्न। अनवगमनिवृत्तेर्दृष्टत्वात्तन्निवृत्तेरप्यनुपपत्तिरेकत्वमिति चेन्न। दृष्टविरोधात्। दृश्यते ह्येकत्वविज्ञानादेवानवगमनिवृत्तिर्दृश्यमानमप्यनुपपन्नमिति ब्रुवतो दृष्टविरोधः स्यात्। न च दृष्टविरोधः केनचिदभ्युपगम्यते। न च दृष्टेऽनुपपन्नं नाम दृष्टत्वा-

---

आ० ब्रह्मण्ययुक्तं पिष्टपिष्टिप्रसङ्गात्। अतस्तदज्ञातमेष्टव्यमित्यर्थः। ब्रह्मात्मैक्यमज्ञातं शास्त्रेण ज्ञाप्यते तद्विषयस्य श्रवणादि विधीयते। तेन तस्मिन्नज्ञातत्वमेष्टव्यमित्युक्तमर्थं दृष्टान्तेन साधयति। नहीति॥ मिथ्याज्ञानस्याज्ञानाव्यतिरेकाद्ब्रह्मण्यविद्याध्यारोपश्चायां शुक्तौ रौप्यारोपवद् दृष्टान्तितमितिमिति द्रष्टव्यं। पक्षान्तरमालम्बते। न ब्रूम इति॥ ब्रह्माविद्यावत्त्वं न भवतीत्यस्य यथाश्रुतो वार्थस्तदन्यस्तदाश्रयोऽस्तीति वा तत्राद्यमङ्गीकरोति। भवत्विति। अनादित्वादविद्यायाः कर्म्मापेक्षाभावाद्विना च द्वारं ब्रह्मणि भ्रान्त्यभ्युपगमादित्यर्थः॥ द्वितीयं प्रत्याह। किन्त्विति॥ ब्रह्मणोऽन्यश्चेतनो नास्तीत्यत्र श्रुतिस्मृती उदाहरति। नान्योऽस्तीत्यादिना॥ ब्रह्मणोऽन्यश्चेतनोऽपि नास्तीत्यत्र मन्त्रद्वयं पठति। यस्त्विति॥

ब्रह्मणोऽन्यस्याश्रयस्याभावे दोषमाशङ्कते। नन्विति॥ किमिदमानर्थक्यमवगतेऽनवगते वा चोद्यते तत्राद्यमङ्गीकरोति। बाढमिति। द्वितीयेनोपदेशानर्थक्यमवगमादिति द्रष्टव्यं॥ उपदेशवदवगमस्यापि स्वप्रकाशे वस्तुनि नोपयोगोऽस्तीति शङ्कते। अवगतेति॥ अनुभवमनुसृत्य परिहरति। नानवगतेति॥ सा वस्तुनो भिन्ना चेद्द्वैतहानिरभिन्ना चेज्ज्ञानाधीनत्वासिद्धिरिति शङ्कते। तन्निवृत्तेरिति॥ अनवगमतन्निवृत्त्योर्दृश्यमानतया स्वरू-

भा॰ देव दर्शनानुपपत्तिरिति चेत्तत्राप्येषैव युक्तिः। पुण्यो वै पुण्येन कर्म्मणा भवति। तं विद्याकर्म्मणी समन्वारभेते। मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुष इत्येवमादिश्रुतिस्मृतिन्यायेभ्यः परस्माद्विलक्षणोऽन्यः संसारी अवगम्यते। तद्विलक्षणश्च परः स एष नेति नेत्यशनायाद्यत्येति य आत्माऽपहतपाप्मा विजरोविमृत्युरेतस्य वा अक्षरस्य प्रशासन इत्यादिश्रुतिभ्यः काणादाक्षपादादितर्कशास्त्रेषु च संसारिविलक्षण ईश्वर उपपत्तितः साध्यते। संसारदुःखापनयार्थित्वप्रवृत्तिदर्शनात्स्फुटमन्यत्वमीश्वरात्संसारिणोऽवगम्यतेऽवाक्यानादरः। न मे पार्थास्तीति श्रुतिस्मृतिभ्यः।

---

आ॰ पापक्षपायोगात्प्रकारान्तरासम्भवाच्च पञ्चम प्रकारमेष्टव्यमिति मत्वाह। न दृष्ट इति॥ दृष्टमपीत्युक्ते विरोधे त्याज्यमित्याशङ्क्याह। दृश्यमानमिति॥ दृष्टविरुद्धमपि कुतो नेष्यते तत्राह। नचेति॥ अनुपपन्नत्वमङ्गीकृत्योक्तं तदेव नास्तीत्याह। न चेति॥ युक्तिविरोधे दृष्टिराभासो भवतीति शङ्कते। दर्शनेति॥ दृष्टिविरोधे युक्तेरेवाभासत्वं स्यादिति परिहरति। तत्रापीति। अनुपपन्नत्वं हि सर्व्वस्य दृष्टिबलादिष्टं दृष्टस्य त्वनुपपन्नत्वेन किञ्चिन्निमित्तमस्तीत्यर्थः॥ प्रत्यभाविपुरुषकल्पनां निराकृत्य स्वपक्षे शास्त्रस्यार्थवत्त्वमुक्तं। सम्प्रति प्रकारान्तरेण पूर्व्वपक्षयति। पुण्य इति। आदिशब्देन योऽयं विज्ञानमयः प्राणेष्वित्याद्या श्रुतिर्गृह्यते। कुरु कर्म्मैव तस्मात्त्वमित्याद्या स्मृतिन्यायो मिथो विरुद्धयोरेकत्वायोगः। विलक्षणत्वमन्यत्वे हेतुः। जीवस्य परस्मादन्यत्वेऽपि न तस्य ततोऽन्यत्वेऽपि मतस्य ततोऽन्यत्वमित्याशङ्क्याह। तद्विलक्षणश्चेति॥ परस्य तद्विलक्षणत्वं श्रुतितो दर्शयित्वा तत्रैवोपपत्तिमाह। काणादेति॥ क्षित्यादिकमुपलब्धिमत्कर्तृकं कार्य्यत्वाद्घटवदित्याद्योपपत्तिस्तयोर्मिथोभेदे हेत्वन्तरमाह। संसारेति॥ जीवस्य स्वगतदुःखध्वंसे दुःखं मे माभूदित्यर्थित्वेन प्रवृत्तिरीशस्य नेशस्य

उ॰ अहं ब्रह्मास्मीति ॥

भा॰ सोऽन्वेष्टव्यः स विजिज्ञासितव्यस्तं विदित्वा न लिप्यते ब्रह्म-
विदाप्नोति परं एकधैवानुद्रष्टव्यमेतद्यो वा एतदक्षरं
गार्गि विदित्वा तमेव धीरो विज्ञाय प्रणवो धनुः शरो
ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यत इत्यादिकर्म्मकर्तृनिर्द्देशाच्च ॥
मुमुक्षोश्च गतिमार्गविशेषोपदेशात्। असति भेदे कस्य
कुतो गतिः स्यात्तदभावे च दक्षिणोत्तरमार्गविशेषानुपप-
त्तिर्गन्तव्यदेशानुपपत्तिश्चेति। भिन्नस्य तु परस्मादात्मनः
सर्व्वमेतदुपपन्नं। कर्म्मज्ञानसाधनोपदेशाच्च। भिन्नश्चेद्ब्रह्मणः
संसारी स्यात्तं युक्तस्तं प्रत्यभ्युदयनिःश्रेयससाधनयोः कर्म्मज्ञान-
योरुपदेशो नेश्वरस्याप्तकामत्वात्। तस्माद्युक्तं ब्रह्मेति ब्रह्म-
भावी पुरुष उच्यत इति चेन्न। ब्रह्मोपदेशानर्थक्यप्रसङ्गात्।
संसारी चेद्ब्रह्मभाव्यब्रह्म सन्विदित्यात्मानमेवाहं ब्रह्मा-
स्मीति सर्व्वमभवत्तस्य संसार्य्यात्मविज्ञानादेव सर्व्वात्मभा-

---

आ॰ स्वाक्षि दुःखाभावादतो भेदस्तयोरित्यर्थः। इतश्चेश्वरस्य न प्रवृत्ति-
हेतुफलयोरभावादित्याह। अवाकीति॥ मिथोभेदे श्रौतं लिङ्गा-
न्तरमाह। सोऽन्वेष्टव्य इति॥
तत्रैव लिङ्गान्तरमाह। मुमुक्षोश्चेति॥ गतिर्देवयानाख्या तस्या
मार्गविशेषोऽर्चिरादिर्देशो गन्तव्यं ब्रह्म तेषामुपदेशास्तेऽर्चिष-
मभिसंभवन्तीत्यादयस्तथापि कथं भेदसिद्धिस्तत्राह। असतीति॥
माभूद्गतिरित्याशङ्क्याह। तदभावे चेति॥ कथं तर्हि गत्यादिक-
मुपपद्यते तत्राह। भिन्नस्येति॥ जीवेश्वरयोर्मिथोभेदे हेत्व-
न्तरमाह। कर्म्मेति। भेदे सत्युपपन्नाः सम्भवन्तीति शेषः॥ तदेव
स्फुटयति। भिन्नश्चेदिति। तद्भेदैः प्रामाणिकेऽपि कथं ब्रह्मभा-

भा॰ तस्य फलस्य सिद्धत्वात्परब्रह्मोपदेशस्य ध्रुवमानर्थक्यं प्राप्तं । तद्विज्ञानस्य कस्यचित्पुरुषार्थसाधनेऽविनियोगात्संसारिण एवाहं ब्रह्मास्मीति ब्रह्मत्वसम्पादनार्थ उपदेश इति चेद्-निर्ज्ञाते हि ब्रह्मस्वरूपे किं सम्पादयेदहं ब्रह्मास्मीति । निर्ज्ञातलक्षणे हि ब्रह्मणि शक्या सम्पत्कर्त्तुं । नायमात्मा ब्रह्म यत्साक्षादपरोक्षाद्ब्रह्म । स आत्मा तत्त्वं स आत्मा ब्रह्मविदाप्नोति परमिति प्रकृत्य तस्माद्वा एतस्मादात्मन इति सहस्रशो ब्रह्मात्मशब्दयोः सामानाधिकरण्यादेकार्थत्वमेवेत्यवगम्यते । अन्यस्य ह्यन्यत्वे सम्पत्क्रियते नैकत्वे । इदं सर्व्वं यदयमात्मेति च प्रकृतस्यैव द्रष्टव्यस्यात्मन एकत्वं दर्शयति। तस्मान्नात्मनो ब्रह्मत्वसम्पदुपपत्तिर्न चाप्यन्यत्प्रयोजनं ब्रह्मोपदेशस्य गम्यते। ब्रह्म वेद ब्रह्मैव भवति। अभयं

---

आ॰ विपुलफलकल्पनेत्याशङ्क्योपसंहरति । तस्मादिति । ब्रह्मभाविनो जीवस्य ब्रह्मशब्दवाच्यत्वे ब्रह्मोपदेशस्यानर्थक्यप्रसङ्गान्नैवमिति दूषयति । नेत्यादिना । प्रसङ्गमेव प्रकटयति । संसारी चेदिति । विधिशेषत्वेन ब्रह्मोपदेशोऽर्थवानिति चेत्तत्र किं कर्म्मविधिशेषत्वेनोपास्तिविधिशेषत्वेन वा तदर्थवत्त्वमिति विकल्प्याद्यं दूषयति । तद्विज्ञानस्येति । अविनियोगाद्विनियोजकश्रुत्याद्यभावादिति शेषः । कल्पान्तरमादत्ते । संसारिण इति । उपदेशस्य ज्ञानार्थत्वात्तदनपेक्षत्वाच्च सम्पत्तेस्तस्य कथं तादर्थ्यमित्याशङ्क्याह । अनिर्ज्ञाते हीति । व्यतिरेकमुक्त्वान्वयमन्वाचष्टे । निर्ज्ञातेति । पदयोः सामानाधिकरण्येन जीवब्रह्मणोरभेदावगमान्न सम्पत्पक्षः सम्भवतीति समाधत्ते । नेत्यादिना । कथमेकत्वे गम्यमानेऽपि सम्पदोऽनुपपत्तिरित्याशङ्क्याह । अन्यस्य हीति । एकत्वे हेत्वन्तरमाह । इदमिति । एकत्वे फलितमाह । तस्मादिति । किञ्च सम्पत्तिपक्षे तदापत्तिः फलम-

भा॰ वे ब्रह्म भवतीति च । तदापत्तिश्रवणात्सम्पत्तिश्चेत्तदाप-
त्तिर्न स्यात् । न ह्यन्यस्यान्यभाव उपपद्यते ॥

वचनात्सम्पत्तेरपि तद्भावापत्तिर्ज्ञापकं स्यादिति चेन्न । सम्पत्तेः प्रत्ययमात्रत्वाद्विज्ञानस्य च मिथ्याज्ञाननिवर्त्त-कत्वव्यतिरेकेणाकारकत्वमित्यवोचाम । न च वचनं वस्तुनः सामर्थ्यजनकं ज्ञापकं हि शास्त्रं न कारकमिति स्थितिः । स एष इह प्रविष्ट इत्यादिवाक्येषु च परस्यैव प्रवेश इति स्थितं । तस्माद्ब्रह्मेति न ब्रह्मभाविपुरुषकल्पना साध्वी । दृष्टार्थबाधनाच्च । सैन्धवघनवदनन्तरमबाह्यमेकरसं ब्रह्मेति विज्ञानं सर्व्वासामुपनिषदां प्रतिपिपादयिषितोऽर्थः काण्ड-द्वयेऽप्यन्तेऽवधारणादवगम्यते । इत्यनुशासनमेतावदेव खल्वमृतत्वमिति । तथा सर्व्वशाखोपनिषत्सु च ब्रह्मैक-

---

आ॰ स्यादेति विकल्प्य द्वितीयं प्रत्याह । न चेति । आद्यं दूषयति । सम्पत्तिश्चेति ॥

तं यथायथेत्यादिवाक्यमाश्रित्य शङ्कते । वचनादिति ॥ सम्पत्ते-रमानत्वान्न तद्वदन्यस्यामानत्वमित्याह । नेति ॥ तस्यामानत्वेऽप्येवं मानस्य कारकत्वात् । न च सूत्राद्युपासनादप्यन्यस्यामानत्वं । स्थितस्य नष्टस्य वाऽनुपपत्तेः । श्रुतिश्च न पूर्व्वसिद्धत्वस्यादिभावाभिधा-यिनी । तस्माद्व्यवस्थाप्या तद्भावोपचारादतो ब्रह्मभावः स्वतः सिद्धो न साध्यादिकमित्याह । विज्ञानस्येति ॥ अथान्यस्यान्यभावे यथोक्तं वचनमेव शक्त्याऽधायकमित्याशङ्क्याह । न चेति ॥ ब्रह्मोपदेशानर्थ-क्यप्रसङ्गाच्च ब्रह्मभाविपुरुषकल्पनेत्युक्त्वा तत्रैव हेत्वन्तरमाह । स एष इति ॥ ब्रह्मोपदेशस्य सम्यक्त्वे दोषान्तरमाह । दृष्टा-र्थेति ॥ तदेव विवृण्वन्निष्टमर्थमाचष्टे । सैन्धवेति ॥ यथोक्तं वस्तुतात्पर्य्यगम्यमस्यामुपनिषदीत्यत्र हेतुमाह । काण्डद्वयेऽपीति । मधुकाण्डावसानमवधारणां दर्शयति । इत्यनुशासनमिति ॥ मुनि-

भा॰ त्वविज्ञानं निश्चितोऽर्थः। तत्र यदि संसारी ब्रह्मणोऽन्य आत्मानमेवावेदिति कल्प्येत। इष्टस्यार्थस्य बाधनं स्यात्। तथा च शास्त्रमुपक्रमोपसंहारयोर्विरोधादसमञ्जसं कल्पितं स्याद्व्यपदेशानुपपत्तेश्च। यदि चात्मानमेवावेदिति संसारी कल्प्येत। ब्रह्मविद्येतिव्यपदेशो न स्यात्। आत्मानमेवावेदिति संसारिण एव वेद्यत्वोपपत्तेः। आत्मेति वेत्तुरन्यदुच्यत इति चेन्न। अहं ब्रह्मास्मीति विशेषणात्। अन्यश्चेद्वेद्यः स्याद्यम-साविति विशेष्येत। नत्वहमस्मीति अहमस्मीति विशेषणा-दात्मानमेवावेदिति चावधारणान्निश्चितमात्मैव ब्रह्मेत्यव-गम्यते। तथा च सत्युपपन्नो ब्रह्मविद्याव्यपदेशो नान्यथा विद्या ह्यन्यथा स्यात्। न च ब्रह्मत्वाब्रह्मत्वे ह्येकस्योपपन्ने

---

आ॰ काण्डान्ते व्यवस्थितमुदाहरति। एतावदिति॥ न केवलमुपदेशस्य सम्यक्त्वे बृहदारण्यकविरोधः। किन्तु सर्व्वोपनिषद्विरोधो ऽस्तीत्याह। तथेति॥ इष्टमर्थमित्यमुक्त्वा तद्बाधनं निगमयति। तत्रेति॥ ननु बृहदारण्यके ब्रह्म कण्डिकायां जीवपरयोर्भेदोऽभि-प्रेत उपसंहारे त्वभेद इति व्यवस्थायां तद्विरोधः शक्यः समाधातु-मित्यत आह। तथा चेति॥ ब्रह्मभाविपुरुषकल्पनायामुपदे-शानर्थक्यमित्यर्थबाधस्तेतुक्तं। इदानीं ब्रह्मेत्यादिवाक्ये ब्रह्म-शब्देन परस्याग्रहणे तद्विद्यायां ब्रह्मविद्येति शब्दानुपपत्ति-दोषान्तरमाह। व्यपदेशानुपपत्तेश्चेति॥ यतो ब्रह्मशब्दार्थो-ऽहंतुर्जीवादन्यस्तदात्मानमित्यत्रात्मशब्देन परो गृह्यते। तद्विद्या च ब्रह्मविद्येति शब्दसिद्धिरिति शङ्कते। आत्मेति॥ वाक्यशेष-विरोधान्नैवमित्याह। नाहमिति॥ तदेव प्रपञ्चयति। अन्यश्चे-दिति॥ यथोक्तावगमे फलितमाह। तथा च सतीति॥ अत्यन्त-भेदे व्यपदेशानुपपत्तिं विशदयति। संसारीति॥ जीवब्रह्मणा-र्भेदाभेदोपगमादभेदेन ब्रह्मविद्येति व्यपदेशः सेत्स्यतीत्याश-

उ० तस्मात्तत्सर्वमभवत्

भा० परमार्थतस्तमःप्रकाशाविव भानोर्विरुद्धत्वात्। न चोभयनिमित्तत्वे ब्रह्मविद्येति निश्चितो व्यपदेशो युक्तस्तदा ब्रह्मविद्या संसारिविद्या च स्यात्॥

न च वस्तुनोऽर्द्धजरतीयत्वं कल्पयितुं युक्तं। तत्त्वज्ञानविवक्षायां श्रोतुः संशयो हि तथा स्यात्। निश्चितञ्च ज्ञानं पुरुषार्थसाधनमिष्यते। यस्य स्यादद्धा न विचिकित्सास्ति। संशयात्मा विनश्यतीति श्रुतिस्मृतिभ्यामतो न संशयितो वाक्यार्थो वाच्यः परहितार्थिना। ब्रह्मणि साधकत्वकल्पनास्मदादिष्विवापेशला। तदात्मानमेवावेत्तस्मात्तत्सर्वमभवदितीति चेन्न। शास्त्रोपलम्भात्। न ह्यस्मत्कल्पनेयं शास्त्रकृता तु तस्माच्छास्त्रस्यायमुपालम्भः। न च ब्रह्मण इष्टं चिकीर्षुणा

---

आ० न चेति। स्यातां वा ब्रह्मात्मनोर्भेदाभेदौ तथापि भिन्नाभिन्नविद्यायां ब्रह्मविद्येति नियतो व्यपदेशो न स्यादित्याह। न चेति। निमित्तं विषयं भिन्नाभिन्नविषया विद्या ब्रह्मविषयापि भवत्येवेति व्यपदेशसिद्धिमाशङ्क्याह। तदेति॥

उभयात्मकत्वाद्वस्तुनस्तद्विद्यापि तथेति विवक्ष्योपपत्तिमाशङ्क्याह। न चेति। अस्तु तर्हि वस्तु ब्रह्म वाब्रह्म वा वैकल्पिकमित्याशङ्क्याह। श्रोतुरिति। संशयितमपि ज्ञानं वाक्यादुत्पद्यते चेत्तावतैव पुरुषार्थः श्रोतुः सिध्यतीत्याशङ्क्याह। निश्चितञ्चेति। श्रोतुर्निश्चितज्ञानस्य फलत्वेऽपि वक्तुः संशयितमर्थं वदतो न काचन हानिरित्याशङ्क्याह। अतइति। निश्चितस्यैव ज्ञानार्थस्य पुमर्थसाधनत्वं न संशयितस्येत्यतः शब्दार्थः। जीवपरयोरत्यन्तभेदस्य भेदाभेदयोश्चायोगात्परमेव ब्रह्मशब्दवाच्यं न जीवस्तद्वा-

भा॰ शास्त्रार्थविपरीतकल्पनया स्वार्थपरित्यागः कार्य्यः । न चैतावत्येवाक्षमा युक्ता भवतः सर्व्वं हि नानात्वं ब्रह्मणि कल्पितमेवैकधैवानुद्रष्टव्यं । नेह नानास्ति किञ्चन यत्र हि द्वैतमिव भवति एकमेवाद्वितीयमित्यादिवाक्यशतेभ्यः सर्व्वो हि लोकव्यवहारो ब्रह्मण्येव कल्पितो न परमार्थः सन्नित्यत्यल्पमिदमुच्यते । इयमेव कल्पनापेशलेति । तस्माद्यत्प्रविष्टं स्रष्टृ ब्रह्म तद्ब्रह्म । वै शब्दोऽवधारणार्थः ।

---

आ॰ वीत्युक्तं । सम्प्रत्यत्यन्ताभेदपक्षे दोषमाशङ्कते । ब्रह्मणीति ॥ तदात्मानमेवावेदिति शास्त्रत्वं ब्रह्मण्युच्यते तदयुक्तं । तस्य ज्ञानमूर्त्तित्वादत एव न तत्कर्म्मत्वमपि । न च स्वकर्त्तृकर्म्मकज्ञानान्मुक्तिः क्रियाकारकफलविलक्षणत्वादतो न परं ब्रह्म ब्रह्मशब्दितमित्यर्थः ॥ शास्त्रं ब्रह्मणि साधकत्वादि दर्शयति तच्चापौरुषेयमदोषाशङ्कोपलम्भार्हं । तथाच तस्मिन्नाविद्यसाधकत्वाद्यविरुद्धमिति ॥ समाधत्ते । न शास्त्रेति । न चायुक्तत्वस्यापौरुषेयत्वेनासम्भावितदोषत्वादिति शेषः ॥ ननु ब्रह्मणो नित्यमुक्तत्वपरीक्षार्थं शास्त्रमप्युपालभ्यते नेत्याह । न चेति ॥ शास्त्राद्धि ब्रह्मणो नित्यमुक्तत्वं गम्यते साधकत्वादि च तस्य तेनैवोच्यते । न चार्द्धजरतीयमुचितं । तथाच वास्तवं नित्यमुक्तत्वं कल्पितमितरदित्यास्थेयं । यदि तस्य नित्यमुक्तत्वार्थं सर्व्वथैव साधकत्वादि नेष्यते तदा स्वार्थपरित्यागः स्यात्साधनत्वादिना विनाभ्युदयनिःश्रेयसयोरसम्भवात् । न च ब्रह्मणोऽन्यश्चेतनोऽचेतनो वास्ति । नान्योऽतोऽस्ति द्रष्टा ब्रह्मैवेदं सर्व्वमित्यादिश्रुतेस्तस्माद्यथोक्ता व्यवस्थाऽऽस्थेयेत्यर्थः । किञ्च सर्व्वस्यापि संसारस्य ब्रह्मण्येवाविद्ययाध्यासतदन्तर्भूतं साधकत्वाद्यपि तत्राध्यस्तमित्युपगमे कानुपपत्तिरित्याह । न चेति ॥ तस्यास्मिन्कल्पितत्वं कुतोऽवगतमित्याशङ्क्याह । एकधेति ॥ उक्तश्रुतितात्पर्य्यं सङ्कलयति । सर्व्वो हीति ॥ सर्व्वस्य द्वैतव्यवहारस्य ब्रह्मणि कल्पितत्वे प्रकृतचोद्यस्याभासत्वं फलतीत्याह । इत्यल्पमिति ॥ परपक्षं निराकृत्य स्वपक्षं दर्शयति । तस्मादिति ॥ तद्व्यतिरेकेण

भा० इदं शरीरस्थं यद्गृह्यतेऽग्रे प्राक् प्रतिबोधादपि ब्रह्मैवासीत्सर्व्वञ्चेदं ॥

किन्त्वप्रतिबोधादब्रह्मास्म्यसर्व्वं चेत्यात्मन्यध्यारोपात्कर्त्ताहं क्रियावान्फलानाञ्च भोक्ता सुखी दुःखी संसारीति चाध्यारोपयति । परमार्थतस्तु ब्रह्मैव तद्विलक्षणं सर्व्वञ्च तत्कथञ्चिदाचार्य्येण दयालुना प्रतिबोधितं नास्मि संसारीत्यात्मानमेवावेत्स्वाभाविकमविद्याध्यारोपितविशेषवर्जितमित्येव शब्दस्यार्थः । ब्रूहि कोऽसावात्मा स्वाभाविको यमात्मानं विदितवद्ब्रह्म । ननु न स्मरस्यात्मानं दर्शितो ह्यसौ य इह प्रविश्य प्राणित्यपानिति व्यानिति उदानिति समानितीति । नन्वसौ गौरसावश्व इत्येवमसौ व्यपदिश्यते

---

आ० अग्रशब्दोक्तिं सूचयति । वैशब्द इति । तत्पदार्थमुक्त्वा त्वंपदार्थं कथयति । इदमिति । तयोर्वस्तुतो भेदं शङ्कित्वा पदान्तरं व्याचष्टे । प्रागिति । तस्यापरिच्छिन्नत्वमाह । सर्व्वञ्चेति ॥

कथं तर्हि विपरीतधीरित्याशङ्क्याह । किन्त्विति । यथा प्रतिभासं कर्तृत्वादेर्वास्तवत्वमाशङ्क्य शास्त्रविरोधान्मैवमित्याह । परमार्थतस्त्विति । तद्विलक्षणमध्यस्तसंसाररहितमिति यावत् ॥ किमुत ब्रह्मेति चोद्यं परिहृत्य किन्तदवेदिति चोद्यान्तरं प्रत्याह । तत्कथञ्चिदिति । पूर्व्ववाक्योक्तमविद्याविशिष्टमधिकारित्वेन व्यवस्थितं ब्रह्म नास्मि संसारीत्याचार्य्येण दयावता कथञ्चिद्बोधितमात्मानमेवावेदिति सम्बन्धः । आत्मैव प्रमेयस्तज्ज्ञानमेव प्रमाणमित्येवमर्थत्वमेवकारस्य विवक्षन्नाह । अविद्येति । प्रकृतमात्मशब्दार्थं विविच्य वक्तुं पृच्छति । ब्रूहीति । स एष इह प्रविष्ट इत्यात्मनो दर्शितत्वात्प्राणनादिलिङ्गस्य तस्य तथैवानुसन्धातुं शक्यत्वाच्छक्तिं वक्तव्यमित्याह । नन्विति । आत्मानं प्रत्याययितुं पृच्छतस्तत्परोक्षवचनमनुत्तरमिति शङ्कते । नन्वसाविति ॥

भा॰ भवता । नात्मानं प्रत्यक्षं दर्शयसि । एवं तर्हि द्रष्टा श्रोता मन्ता विज्ञाता स आत्मेति । नन्वत्रापि दर्शनादिक्रियाकर्त्तुः स्वरूपं न प्रत्यक्षं दर्शयसि । न हि गमिरेव गन्तुः स्वरूपं छिदिर्वा छेत्तुरेवं तर्हि दृष्टेर्द्रष्टा श्रुतेः श्रोता मतेर्मन्ता विज्ञातेर्विज्ञाता स आत्मेति । नन्वत्र को विशेषो द्रष्टरि । यदि दृष्टेर्द्रष्टा यदि वा घटस्य द्रष्टा सर्व्वथापि द्रष्टैवं द्रष्टव्य एव तु भवान्विशेषमाह दृष्टेर्द्रष्टेति । द्रष्टा तु यदि दृष्टेर्यदि वा घटस्य द्रष्टा द्रष्टैव न विशेषोपपत्तेः । अस्त्यत्र विशेषो यो दृष्टेर्द्रष्टा स दृष्टिस्सेद्भवति नित्यमेव पश्यति दृष्टिं न कदाचिदपि दृष्टिर्न दृश्यते द्रष्टा तत्र

---

आ॰ आत्मानं चेत्प्रत्यक्षयितुमिच्छसि तर्हि प्रत्यक्षमेव तं दर्शयामीत्याह । एवं तर्हीति ॥ नेदं प्रतिज्ञानरूपमतिवचनमिति चोदयति । नन्वत्रेति ॥ प्रत्यक्षत्वाद्दर्शनादिक्रियायास्तत्कर्त्तुः स्वरूपमपि तथेत्याशङ्क्याह । न हीति ॥ यदि दर्शनादिक्रियाकर्तृस्वरूपेणात्ममात्रेण जिज्ञासा नोपशाम्यति तर्हि दृष्ट्यादिसाक्षित्वेनात्मोक्त्या तुष्यतु भवानित्याह । एवं तर्हि दृष्टेरिति ॥ पूर्व्वस्मात्प्रतिवचनादस्मिन्प्रतिवचने द्रष्टृविषयो विशेषो नास्तीति शङ्कते । नन्विति ॥ विशेषाभावं विशदयति । यदीत्यादिना ॥ घटस्य द्रष्टा दृष्टेर्द्रष्टेति विशेषे प्रतीयमाने तदभावोक्तिर्व्याहतेत्याशङ्क्याह । द्रष्टव्य एवेति ॥ तथा द्रष्टर्य्यपि विशेषो भविष्यतीत्याशङ्क्याह । द्रष्टा त्विति । वृत्तिमदन्तःकरणावच्छिन्नः सविकारो घटद्रष्टा कूटस्थचिन्मात्रस्वभावः ॥ सन्निधिसत्तामात्रेण बुद्धितद्वृत्तीनां द्रष्टेति विशेषमङ्गीकृत्य परिहरति । नेत्यादिना ॥ एतदेव स्फुटयति । अस्तीति ॥ सप्तमी द्रष्टारमधिकरोति । दृष्टेर्द्रष्टुस्तावदन्वयव्यतिरेकाभ्यां विशेषं विशदयति । यो दृष्टेरिति ॥ भवतु दृष्टिसद्भावे द्रष्टुः सदा द्रष्टृत्वं । तथापि कथं कूटस्थदृष्टित्व-

भा० द्रष्टुर्दृष्ट्या नित्यया भवितव्यं। अनित्या चेद्द्रष्टुर्दृष्टिस्तस्य दृश्या या दृष्टिः सा कदाचिन्न दृश्येत। अपि यथा ऽनित्यया दृष्ट्या घटादि वस्तु। न च तद्दृष्टेर्द्रष्टा कदाचिदपि न पश्यति दृष्टिं।

किं द्वे दृष्टी द्रष्टुर्नित्या अदृश्यान्याऽनित्या दृश्येति। वाढं। प्रसिद्धा तावदनित्या दृष्टिरन्धानन्धत्वदर्शनात्। नित्यैव चेत्सर्व्वोऽनन्ध एव स्याद्द्रष्टुस्तु नित्या दृष्टिर्न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति श्रुतेरनुमानाच्चान्धस्यापि घटाद्याभासविषया स्वप्ने दृष्टिरुपलभ्यते। सा तर्हि इतरदृष्टिनाशेन नश्यति द्रष्टुर्दृष्टिस्तयाऽविपरिलुप्तया नित्यया दृष्ट्या स्वरूपभूतया स्वयं ज्योतिःसमाख्ययेतरामनित्यां दृष्टिं स्वप्नबुद्धां तयोर्वासनाप्रत्ययरूपां

---

व्या० मित्याशङ्क्याह। तत्रेति। नित्यत्वमुपपादयति। अनित्या चेदिति। उक्तपक्षे परामर्शार्था सप्तमी। कादाचित्के द्रष्टृदृश्यत्वे दृष्टान्तमाह। यथेति। घटादिव दृष्टिः कादाचिदेव दृष्टा दृश्यते न सर्व्वदेत्यनिष्टापत्त्यभावमाशङ्क्याह। न चेति। विकारिणश्चित्तस्याद्रष्टृत्वं क्रमद्रष्टृत्वमन्यथाद्रष्टृत्वञ्च दृष्टं तस्मात्ततो व्यावर्त्तमानं तस्य निर्विकारत्वं गमयतीति भावः।

दृष्टिद्वयं प्रमाणाभावादसिद्धमिति पृच्छते। किमिति। तदुभयमङ्गीकरोति। वाढमिति। तत्रानित्यां दृष्टिमनुभवेन साधयति। प्रसिद्धेति। उक्तमर्थं युक्त्या व्यक्तीकरोति। नित्यैवेति। सम्प्रति नित्यां दृष्टिं श्रुत्या समर्थयते। द्रष्टुरिति। तत्रैवोपपत्तिमाह। अनुमानाच्चेति। तदेव विवृणोति। अन्धस्यापीति। जागरिते चक्षुरादिहीनस्यापि स्वप्ने पुंसो वासनामयघटादिविषया दृष्टिरुपलब्धा या च सा तस्मिन्काले चक्षुरादिजनितदृष्ट्यभावेऽपि स्वयमविनश्यन्त्यनुभूयते। सा द्रष्टुः स्वभावभूतार्थ-

भा॰ नित्यमेव पश्यन् दृष्टेर्द्रष्टा भवति । एवञ्च सति दृष्टिरेव स्वरूपमस्यान्योष्ण्यवन्न काणादानामिव दृष्टिव्यतिरिक्तोऽन्योऽचेतनो द्रष्टा तद्वच्चात्मानमेव नित्यदृग्रूपमध्यारोपितानित्यदृश्यादिवर्जितमेवावेदिदितवत् । ननु विप्रतिषिद्धं न विज्ञातेर्विज्ञातारं विजानीया इति श्रुतेर्विज्ञातुर्विज्ञानं । नैवं विज्ञानान्न विप्रतिषेधः । एवं दृष्टेर्द्रष्टा इति विज्ञायत एव । अन्यज्ञानानपेक्षत्वाच्च । न च द्रष्टुर्नित्यैव दृष्टिरित्येवं विज्ञाते द्रष्टृविषयां दृष्टिमन्यामाकाङ्क्षते । निवर्त्तते हि द्रष्टृविषयदृश्याकाङ्क्षा तदसम्भवादेव । नह्यविद्यमाने विषये आकाङ्क्षा कस्यचिदुपजायते । न च दृश्या दृष्टिर्द्रष्टारं विषयीकर्त्तुमुत्सहते । यतस्तामाकाङ्क्षेत । न च स्वरूपविषयाकाङ्क्षा स्वस्यैव ।

---

आ॰ दृष्टिर्नित्यैष्टव्या । विमतं नित्यमव्यभिचारित्वात्परेष्टात्मवदिति प्रयोगोपपत्तेरित्यर्थः ॥ नन्वात्मादृष्टिः स्वभावश्चेत्कथं द्रष्टेत्युक्तमत आह । तयेति ॥ नित्यत्वे हेतुः । अविपरिलुप्तयेति । नित्यदृयं परिहर्त्तुं स्वरूपभूतयेत्युक्तं ॥ तस्या दृष्ट्यन्तरापेक्षां वारयति । स्वयमिति ॥ उक्तमविपरिलुप्तत्वं व्यनक्ति । इतरामिति ॥ आत्मा दृष्टेर्द्रष्टेति स्थिते फलितमाह । एवञ्चेति । अन्यश्चेतनोऽचेतनो वेति शेषः ॥ नित्यदृष्टिस्वभावमात्मपदार्थं परिशोध्य श्रुत्यक्षराणि योजयति । तद्वच्चेति । वाक्यशेषविरोधं चोदयति । नन्विति ॥ किं कर्म्मत्वेनात्मनो ज्ञानं विरुध्यते किं वा साक्षित्वेनेति वाच्यं । नाद्योऽनभ्युपगमादित्याह । नेति॥ न द्वितीय इत्याह । एवमिति ॥ तदेव स्पष्टयति । एवं दृष्टेरिति ॥ तर्हि तद्विषयं ज्ञानान्तरमपेक्षितव्यमिति कुतो विरोधो न प्रसरतीत्याशङ्क्याह । अन्यज्ञानेति । न विप्रतिषेध इति पूर्व्वेण सम्बन्धः ॥ सङ्गृहीतमर्थं विवृणोति । न चेति । नित्यैव स्वरूपभूतेति शेषः ॥ विज्ञातस्य वाक्यायु-

उ॰ तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथा

---

भा॰ तस्मादज्ञानाध्यारोपणनिवृत्तिरेवात्मानमेवावेदित्युक्तं नात्मनो विषयीकरणं। तत्कथमवेदित्याह। अहं दृष्टेर्द्रष्टात्मा ब्रह्मास्मि भवामीति। ब्रह्मेति यत्साक्षादपरोक्षात्सर्व्वान्तर आत्माऽशनायाद्यतीतो नेत्यस्थूलमनण्वित्येवमादिलक्षणं॥

तदेवाहमस्मि नान्यः संसारी यथा भवानाहेति। तस्मादेवं विज्ञानात्तद्ब्रह्म सर्व्वमभवत्। अब्रह्माध्यारोपणापगमात्तत्कार्य्यस्यासर्व्वत्वस्य निवृत्त्या सर्व्वमभवत्। तस्माद्युक्तमेव मनुष्या मन्यन्ते यद्ब्रह्मविद्यया सर्व्वं भविष्याम इति

---

आ॰ ब्रह्मवृत्तिव्याप्यत्वं। अन्यां दृष्टिं स्फुरणलक्षणं॥ आत्मविषयस्फुरणाकाङ्क्षाभावं प्रतिपादयति। निवर्त्तते हीति॥ आत्मनि स्फुरणरूपे स्फुरणस्यान्यस्यासम्भवेऽपि कुतस्तदाकाङ्क्षाप्रसक्तिरित्याशङ्क्याह। न हीति॥ किं च कर्त्तरि दृश्याऽदृश्या वा दृष्टिरपेक्ष्यते। नाद्य इत्याह। न चेति। आदित्यप्रकाशस्य रूपादेस्तत्प्रकाशकत्वाभावादिति भावः॥ न द्वितीय इत्याह। न चेति॥ आत्मनो वृत्तिव्याप्यत्वेऽपि स्फुरणव्याप्यत्वानङ्गीकरणान्न वाक्यशेषविरोधोऽस्तीत्युपसंहरति। तस्मादिति॥ वाक्यान्तरमाकाङ्क्षापूर्व्वकमादत्ते। तत्कथमिति॥ तदक्षराणि व्याचष्टे। दृष्टेरिति॥ इति पदमवेदित्यनेन सम्बध्यते। ब्रह्मशब्दं व्याचष्टे। ब्रह्मेतीति॥

ब्रह्माहंपदार्थयोर्मिथो विशेषणविशेष्यभावमभिप्रेत्य वाक्यार्थमाह। तदेवेति॥ आचार्य्योपदिष्टेऽर्थे स्वस्य निश्चयं दर्शयति। यथेति॥ इतिशब्दो वाक्यार्थज्ञानसमाप्त्यर्थः॥ इदानीं फलवाक्यं व्याचष्टे। तस्मादिति॥ सर्व्वभावमेव व्याकरोति। ब्रह्मेति॥ ब्रह्मैवाविद्यया संसरति विद्यया च मुच्यत इति पक्षस्य निर्द्दोषत्वमुच्यत इति पक्षस्य निर्द्दोषत्वमुपसंहरति।

उ० ऋषीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवꣳ सूर्य्यश्चेति ॥

---

भा० यत्पृष्टं। किमु तद्ब्रह्मावेद्यस्मात्तत्सर्व्वमभवदिति। तन्निर्णीतं ब्रह्मवा इदमग्र आसीत्तदात्मानमेवावेत्तस्मात्तत्सर्व्वमभवदिति। तत्र यो यो देवानां मध्ये प्रत्यबुध्यत प्रतिबुद्धवानात्मानं यथोक्तेन विधिना। स एव प्रतिबुद्ध आत्मा तद्ब्रह्माभवत्तथा ऋषीणां तथा मनुष्याणां च मध्ये देवादीनामित्यादिलोकदृष्ट्यपेक्षया न ब्रह्मत्वबुद्ध्योच्यते। पुरः पुरुष आविशदिति सर्व्वत्र ब्रह्मैवान्तः प्रविष्टमित्यवोचाम। अतः शरीराद्युपाधिजनितलोकदृष्ट्यपेक्षया देवानामित्युच्यते। परमार्थतस्तु तत्र तत्र ब्रह्मैवाग्र आसीत्प्राक्प्रतिबोधाद्देवादिशरीरेष्वन्यथैव विभाव्यमानं। तदात्मान-

---

आ० तस्माद्युक्तमिति॥ प्रश्नं कीर्त्तयति। यत्पृष्टमिति॥ यथाग्निहोत्रादि मनुष्यत्वादिजातिमत्त्वमर्थित्वादिविशेषवन्तञ्चाधिकारिणमपेक्षते न तथा ज्ञानमिति वक्तुं। तद्यो यो देवानामित्यादिवाक्यं तदक्षराणि व्याचष्टे। तत्र तत्रेति॥ यथोक्तेन विधिना अन्वयादिकृतपदार्थपरिशोधनादिनेत्यर्थः। ज्ञानादेव मुक्तिर्न साधनान्तरादित्येवकारार्थः। विवक्षितमधिकार्य्यनियमं प्रकटयति। तथेत्यादिना। यो यः प्रत्यबुध्यत स एव तदभवदिति पूर्व्वेण सम्बन्धः॥ ब्रह्मैवाविद्यया संसरति मुच्यते च विद्ययेत्युक्तत्वाद्देवादीनां विद्याविद्याभ्यां बन्धमोक्षोक्तिरयुक्तेत्याशङ्क्याह। देवानामित्यादीति॥ तत्त्वदृष्ट्यैव भेदवचने का हानिरित्याशङ्क्याह। पुर इति॥ अविद्यकं भेदमनूद्य तत्तदात्मना स्थितब्रह्मचैतन्यस्यैव विद्याविद्याभ्यां बन्धमोक्षोक्तेर्न पूर्व्वापरविरोधोऽस्तीति फलितमाह।

उ॰ तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति

---

भा॰ मेवावेत्तथैव च सर्व्वमभवदस्या ब्रह्मविद्यायाः सर्व्वभावापत्तिः फलमित्येतस्यार्थस्य द्रढिम्ने मन्त्रानुदाहरति श्रुतिः। कथं तद्ब्रह्मैतदात्मानमेवाहमस्मीति पश्यन्नेतस्मादेव ब्रह्मणो दर्शनादृषिर्वामदेवाख्यः प्रतिपेदे ह प्रतिपन्नवान् किल। स एतस्मिन् ब्रह्मात्मदर्शनेऽवस्थित एतान्मन्त्रान्ददर्श अहं मनुरभवं सूर्य्यश्चेत्यादीन्॥

तदेतद्ब्रह्म पश्यन्निति ब्रह्मविद्या परामृश्यते अहं मनुरभवं सूर्य्यश्चेत्यादिना सर्व्वभावापत्तिं ब्रह्मविद्याफलं परामृशति। पश्यन्सर्व्वात्मभावं फलं प्रतिपेद इत्यस्मात्प्रयोगाद्ब्रह्मविद्याऽसहायसाधनसाध्यं मोक्षं दर्शयति।

---

आ॰ सत इति॥ अविद्यादृष्टिमनूद्य तत्त्वदृष्टिमन्वाचष्टे। परमार्थतस्त्विति॥ प्रबोधात् प्रागपि तत्र देवादिशरीरेषु परमार्थतो ब्रह्मैवासीच्चेदौपदेशिकं ज्ञानमनर्थकमित्याशङ्क्याह। अन्यथैवेति॥ नानाजीववादस्य तु नावकाशः प्रक्रमविरोधादित्याशयेनाह। तदिति॥ तथैवेत्युत्पन्नज्ञानानुसारित्वपरामर्शः॥ तद्धैतदित्यादिवाक्यमवतार्य्य व्याकरोति। अस्या इति॥ मन्त्रोदाहरणश्रुतिमेव प्रश्नद्वारा व्याचष्टे। कथमित्यादिना॥ ज्ञानान्मुक्तिरित्यस्यार्थवादोऽयमिति द्योतयितुं किलेत्युक्तं। आदिपदं समस्तवामदेवसूक्तग्रहणार्थं॥

तत्रावान्तरविभागमाह। तदेतदिति॥ शतृप्रत्ययप्रयोगप्राप्तमर्थं कथयति। पश्यन्निति। लक्षणहेत्वोः क्रियायाः (पां ३।२।१२६।) इति हेतौ शतृप्रत्ययविधानादैकार्थ्ये च सति हेतुत्वसम्भवात्प्रकृते च प्रत्ययवशाद्ब्रह्मविद्यामोक्षयोरैकार्थ्यप्रतीतेस्तया साधनान्तरानपेक्षया लभ्यमोक्षं दर्शयति श्रुतिरित्यर्थः। मन्त्रोदाहरण-

उ॰ स इदꣳ सर्वं भवति तस्य ह न देवाश्च-नाभूत्या ईशत ॥ —

भा॰ भुञ्जानस्तृप्यतीति यद्वत्। सेयं ब्रह्मविद्यया सर्व्वभावापत्तिरासीन्महतां देवानां वीर्य्यातिशयान्नेदानीमैदंयुगीनानां। विशेषतो मनुष्याणामल्पवीर्य्यत्वादिति। स्यात्कस्यचिद्बुद्धिस्तद्व्युत्थापनायाह तदिदं प्रकृतं ब्रह्म यत्सर्व्वभूतानुप्रविष्टं दृष्टिक्रियादिलिङ्गमेतर्ह्येतस्मिन्नपि च वर्त्तमानकाले यः कश्चिद्व्यावृत्तबाह्यौत्सुक्य आत्मानमेवैवं वेदाहं ब्रह्मास्मीति। अपोह्योपाधिजनितभ्रान्तिविज्ञानाध्यारोपितान्विशेषान् संसारधर्म्मानागन्धितमनन्तरमबाह्यं ब्रह्मैवाहमस्मि केवलमिति। सोऽविद्याकृतासर्व्वत्वनिवृत्तेर्ब्रह्मविज्ञानादिदं सर्व्वं भवति। न महावीर्य्येषु वाम-

आ॰ माह। भुञ्जान इति। भुजिक्रियामात्रसाध्या हि तृप्तिस्तत्र प्रतीयते तथा पश्यन्नित्यादावपि ब्रह्मविद्यामात्रसाध्या मुक्तिर्भातीत्यर्थः॥ तद्धैतदित्यादि व्याख्याय तदिदमित्याद्यवतारयितुं शङ्कयति। सेयमिति। ऐदंयुगीनानां कलिकालवर्त्तिनामिति यावत्॥ उत्तरं वाक्यमुत्तरत्वेनावतार्य्य व्याकरोति। तद्व्युत्थापनायेति॥ तस्य ताटस्थ्यं वारयति। यत्सर्व्वभूतेति॥ प्रविष्टे प्रमाणमुक्तं स्मारयति। दृष्टीति॥ व्यावृत्तं बाह्येषु विषयेषूत्सुकं साभिलाषं मनो यस्य स तथोक्तः॥ एवं शब्दार्थमेवाह। अहमिति॥ मनुष्योऽहमित्यादिज्ञाने परिपन्थिनि कथं ब्रह्माहमिति ज्ञानमित्याशङ्क्याह। अपोह्येति॥ अहमित्यात्मज्ञानं सदा सिद्धमिति न तदर्थं प्रयतितव्यमित्याशङ्क्याह। संसारेति॥ केवलमित्यद्वितीयत्वमुच्यते॥ ज्ञानमुक्त्वा तत्फलमाह। सोऽविद्येति॥ यत्तु देवादीनां महावीर्य्यत्वाद्ब्रह्मविद्यया मुक्तिः सिद्ध्यति नास्मदादीनामल्पवीर्य्यत्वादिति

भा॰ देवादिषु हीनवीर्य्येषु वा वार्त्तमानिकेषु मनुष्येषु ब्रह्मणो विशेषतदिज्ञानस्य वास्ति वार्त्तमानिकेषु पुरुषेषु तु ब्रह्मविद्याफलेऽनैकान्तिकता शङ्क्यत इत्यत आह। तस्य ह ब्रह्मविज्ञातुर्यथोक्तेन विधिना देवा महावीर्य्याश्च न अपि अभूत्यै अभवनाय ब्रह्म सर्व्वभावस्य नेशते न पर्याप्ताः। किमुतान्ये ब्रह्मविद्याफलप्राप्तौ विघ्नकरणे देवादय ईशत इति का शङ्केत्युच्यते देवादीन् पितृणवत्त्वान्मर्त्यानां॥

ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति हि जायमानमेवर्णवन्तं पुरुषं दर्शयति श्रुतिः। पशुनिदर्शनाच्चाथोऽयं वेत्यादिलोकश्रुतेश्चात्मनो वृत्तिपरिपिपालयिषयाऽधमर्णानिव देवाः परतन्त्रान्मनू-

---

आ॰ तत्राह। नहीति॥ श्रेयांसि बहुविघ्नानीति प्रसिद्धिमाश्रित्य शङ्कते। वार्त्तमानिकेष्विति॥ शङ्कोत्तरत्वेनोत्तरवाक्यमादाय व्याकरोति। अत आहेत्यादिना। यथोक्तेनान्वयादिना प्रकारेण ब्रह्मविद्यातुरिति सम्बन्धः॥ अपिशब्दार्थं कथयति। किमुतेति॥ अल्पवीर्य्यास्तत्र विघ्नकरणे पर्य्याप्ता नेति किमुत वाच्यमिति योजना॥ अप्राप्तप्रतिषेधायोगमभिप्रेत्य चोदयति। ब्रह्मविद्येति॥ शङ्कानिमित्तं दर्शयन्नुत्तरमाह। उच्यत इति। अधमर्णानिवोत्तमर्णा देवादयो मर्त्यान् प्रति विघ्नं कुर्व्वन्तीति शेषः।

कथं देवादीन् प्रति मर्त्यानामृणित्वं तत्राह। ब्रह्मचर्य्येणेति॥ यथा पशुरेवं स देवानामिति मनुष्याणां पशुसादृश्यश्रवणाच्च तेषां पारतन्त्र्याद्देवादयस्तान् प्रति विघ्नं कुर्व्वन्तीत्याह। पश्विति॥ अथोऽयं वा आत्मा सर्व्वेषां भूतानां लोक इति च। तेषां सर्व्वप्राणिभोग्यत्वश्रुतेश्च सर्व्वे तद्विघ्नकरा भवन्तीत्याह। अथो इति॥ लोकश्रुत्यभिप्रेतमर्थं प्रकटयति। आत्मन इति। यथाऽधमर्णान् प्रत्युत्तमर्णा विघ्नमाचरन्ति तथा देवादयः। वृत्तिस्थितिपरि-

भा॰ मृतत्वप्राप्तिविघ्नं कुर्य्युरिति न्याय्यैवैषा शङ्का। स्वपशून् स्वशरीराणीव च रक्षन्ति देवाः। महत्तरां हि वृत्तिं कर्म्माधीनां दर्शयिष्यति देवादीनां। बहुपशुसमतयैकैकस्य पुरुषस्य। तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युरिति हि वक्ष्यति। यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवं हैवं-विदे सर्व्वाणि भूतान्यरिष्टिमिच्छन्तीति च ब्रह्मवित्त्वे पारार्थ्यनिवृत्तेर्न स्वलोकत्वं पशुत्वञ्चेत्यभिप्रायोऽप्रिया-रिष्टिवचनाभ्यामवगम्यते। तस्माद्ब्रह्मविदो ब्रह्मविद्याफल-प्राप्तिं प्रति कुर्य्युरेव विघ्नं देवाः प्रभाववन्तश्च हि ते। नन्वेवं सत्यन्यास्वपि कर्म्मफलप्राप्तिषु देवानां विघ्नकरणं पेय-

---

आ॰ रक्षणार्थं परतन्त्रान् कर्म्मिणः प्रत्यमृतत्वप्राप्तिमुद्दिश्य विघ्नं कुर्व्वन्तीति तेषां तान् प्रति विघ्नकर्तृत्वशङ्का सावकाशैवेत्यर्थः॥ पशुनिदर्शनेन विवक्षितमर्थं विवृणोति। स्वपशूनिति॥ पशु-स्थानीयानां मनुष्याणां देवादिभीरक्ष्यत्वे हेतुमाह। महत्तरा-मिति॥ इतश्च देवादीनां मनुष्यान् प्रति विघ्नकर्तृत्वममृतत्वप्राप्तौ सम्भावितमित्याह। तस्मादिति॥ इतश्च तेषां तान् प्रति विघ्न-कर्तृत्वं भातीत्याह। यथेति॥ स्वलोको देह एवंवित्त्वं सर्व्वभूतभो-ज्योऽहमिति कल्पनावत्त्वं। क्रियापदानुषङ्गार्थश्चकारः। ब्रह्मवित्त्वे ऽपि मनुष्याणां देवादिपारतन्त्र्याऽविद्या। तत्किमिति ते विघ्नमाचर-न्तीत्याशङ्क्याह। ब्रह्मवित्त्व इति॥ देवादीनां मनुष्यान् प्रति विघ्न-कर्तृत्वशङ्कामुपपादितामुपसंहरति। तस्मादिति॥ न केवल-मुक्तहेतुबलादेव। किन्तु सामर्थ्याच्चेत्याह। प्रभाववन्तश्चेति॥ साम-र्थ्याच्चेद्विद्याफलप्राप्तौ तेषां विघ्नकरत्वं तर्हि कर्म्मफलप्राप्तावपि स्यादित्यतिप्रसङ्गं शङ्कते। नन्विति॥ भवतु तेषां सर्व्वत्र विघ्ना-चरणमित्यत आह। हन्तेति॥ अविश्वासाभावः सामर्थ्याद्विघ्न-कर्तृत्वेऽतिप्रसक्त्यन्तरमाह। तथेति॥ अतिप्रसङ्गान्तरमाह। तथा कालेति॥ विघ्नकरणे प्रभुत्वमिति पूर्व्वेण सम्बन्धः॥ ईश्वरा-

भा० पामयम् । यत्र तत्त्वविदभ्रोऽभ्युदयनिःश्रेयससाधनानु-ष्ठानेषु । तथेश्वरस्याचिन्त्यशक्तित्वादिह्मकरणे प्रभुत्वं । तथा कालकर्म्ममन्त्रौषधितपसामेषां हि फलसम्पत्तिविपत्ति-हेतुत्वं शास्त्रे लोके च प्रसिद्धं । अतोऽप्यनाश्वासः शास्त्रा-नुष्ठाने ॥

न सर्व्वपदार्थानां नियतनिमित्तोपादानाज्जगद्वै-चित्र्यदर्शनाच । स्वभावपक्षे च तदुभयानुपपत्तेः । सुखदुः-खादिफलनिमित्तं कर्म्मेत्येतस्मिन् पक्षे स्थिते वेदस्मृतिन्या-यलोकपरिगृहीते देवेश्वरकालास्तावन्न कर्म्मफलविपर्य्या-सकर्त्तारः । कर्म्मणां काङ्क्षितकारकत्वात् । कर्म्म हि शुभा-शुभं पुरुषाणां देवकालेश्वरादिकारकमनपेक्ष्य नात्मानं प्रति लभते लब्धात्मकमपि फलदानेऽसमर्थं । क्रियाया हि

---

आ० दीनां यथोक्तकार्य्यकरत्वे प्रमाणमाह । एषां हीति ॥ एष ह्येव साधु कर्म्म कारयति । कर्म्म हैव तद्दूचतुरित्यादिवाक्यं शास्त्रं शब्दार्थः । देवादीनां विघ्नकर्त्तृत्ववदीश्वरादीनामपि तत्सम्भ-वाद्वेदार्थानुष्ठाने विश्वासाभावात्तदप्रामाण्यं प्राप्तमिति फलित-माह । अतोऽपीति ॥

किमिदमवैदिकस्य चोद्यं किंवा वैदिकस्येति विकल्प्याद्यं दूष-यति । नेत्यादिना ॥ दध्याद्युत्पित्सया दुग्धाद्यादानदर्शं-नात्प्राणिनां सुखदुःखादितारतम्यदृष्टेः स्वभाववादे च नियत-निमित्तादानवैचित्र्यदर्शनयोरनुपपत्तेस्तदयोगात्कर्म्मफलं जगदे-त्क्यमित्यर्थः ॥ द्वितीयं प्रत्याह । सुखेति ॥ कर्म्म हैवेत्याद्या श्रुतिः । कर्म्मणा बाध्यते जन्तुरित्यादिस्मृतिर्जगद्वैचित्र्यानुपपत्तिश्च न्यायः ॥ कथमेतावता देवादीनां कर्म्मफले विघ्नकर्त्तृत्वाभावस्तत्राह । कर्म्मणामिति ॥ कथं हेतुसिद्धिरित्याशङ्क्य कर्म्मणः स्वोत्पत्तौ देवाद्यपेक्षां व्यतिरेकमुखेन दर्शयति । कर्म्म हीति ॥ लब्धेऽपि

भा॰ कारकाद्यनेकनिमित्तोपादानस्वाभाव्यात्। तस्मात् क्रियानुगुणा हि दैवेश्वरादय इति कर्म्मसु तावन्न फलप्राप्तिं प्रत्यविस्रम्भः। कर्म्मणामप्येषां वशानुगत्वं क्वचित्स्वसामर्थ्यस्याप्रणोद्यत्वात्कर्म्मकालदैवद्रव्यादिस्वभावानां गुणप्रधानभावस्त्वनियतो दुर्विज्ञेयश्चेति तत्कृतो मोहो लोकस्य कर्म्मैव कारकं नान्यत्फलप्राप्ताविति केचित्। दैवमेवेत्यपरे। काल इत्येके। द्रव्यादिस्वभाव इति केचित्। सर्व्व एते संहता एवेत्यपरे। तत्र कर्म्मणः प्राधान्यमङ्गीकृत्य वेदस्मृतिवादाः।

---

आ॰ तस्य तत् सापेक्षत्वमस्तीत्याह। कर्म्मेति॥ निष्पन्नमपि कर्म्म पूर्व्वोक्तं कारकमनपेक्ष्य स्वफलदाने शक्तं न भवतीत्यर्थः॥ कर्म्मणः स्वोत्पत्तौ स्वफले च कारकसापेक्षत्वे हेतुमाह। क्रियाया हीति। कारकादीनामनेकेषां निमित्तानामुपादानेन स्वभावो निष्पद्यते यस्याः सा तथोक्ता तस्या भावः कारकाद्यनेकनिमित्तोपादानस्वाभाव्यं। तस्मादुभयत्र परतन्त्रं कर्म्मेत्यर्थः॥ दैवादीनां कर्म्मापेक्षितकारकत्वे फलितमाह। तस्मादिति॥ इतोऽपि कर्म्मफलेनाविस्रम्भोऽस्तीत्याह। कर्म्मणामिति एषां दैवानां क्वचिद्विघ्नलक्षणे कार्य्ये कर्म्मणां वशवर्त्तित्वमेष्टव्यं। प्राणिकर्म्मापेक्षामन्तरेण विघ्नकरणेऽतिप्रसङ्गादतोऽन्यत्रापि सर्व्वत्र तेषां तदपेक्षा वाच्या इत्यर्थः॥ तत्र तेषां कर्म्मवशवर्त्तित्वे हेत्वन्तरमाह। स्वसामर्थ्यस्येति॥ विघ्नलक्षणं हि कार्य्यं दुःखमुत्पादयति। न च दुःखमृतेऽपायाद्युपपद्यते। दुःखविषयेऽपायसामर्थ्यस्य शास्त्राधिगतस्याप्रत्याख्येयत्वात्तस्मात्प्राणिनामदृष्टवशादेव दैवादयो विघ्नकारणमित्यर्थः॥ दैवादीनां कर्म्मपारतन्त्र्ये कर्म्म तत्परतन्त्रं न स्यात्प्रधानगुणभाववैपरीत्यायोगादित्याशङ्क्याह। कर्म्मेति॥ इतश्च नामीषां नियतो गुणप्रधानभावोऽस्तीत्याह। दुर्विज्ञेयश्चेति। इतिशब्दो हेत्वर्थः। यतो गुणप्रधानकृतो मतिविभ्रमो लोकस्योपलभ्यते। तस्मादसौ दुर्विज्ञेयो न नियतोऽस्तीति योजना॥

उ० आत्मा ह्येषाᳪं स भवति

भा॰ पुण्यो वै पुण्येन कर्म्मणा भवति पापः पापेनेत्यादयः। यद्य-प्येषां स्वविषये कस्यचित्प्राधान्योद्भव इतरेषां तत्कालीन-प्राधान्यशक्तिस्तम्भस्तथापि न कर्म्मणः फलप्राप्तिं प्रत्यने-कान्तिकत्वं। शास्त्रन्यायनिर्द्धारितत्वात्कर्म्मप्राधान्यस्य॥

नाविद्यापगममात्रत्वाद्ब्रह्मप्राप्तिफलस्य। यदुक्तं ब्रह्म-प्राप्तिफलं प्रति देवा विघ्नं कुर्य्युरिति तत्र न देवानां विघ्न-करणे सामर्थ्यं। कस्मात्। विद्याकालानन्तरितत्वाद्ब्रह्मप्रा-प्तिफलस्य। कथं। यथा लोके द्रष्टुश्चक्षुष आलोकेन न सं-योगो यत्कालस्तत्काल एव रूपाभिव्यक्तिः। एवमात्मवि-षयं ज्ञानं यत्कालं तत्काल एव तद्विषयाज्ञानतिरोभावः

आ॰ मतिविभ्रमे वादिविप्रतिपत्तिर्हेतुमाह। कर्म्मैवेत्यादिना॥ कथं तर्हि निश्चयस्तत्राह। तत्रेति॥ वेदवादानुदाहरति। पुण्यो वा इति॥ आदिपदेन धर्म्मेण्या प्रजेदूर्द्ध्वमित्यादिस्मृतिवादा गृह्यन्ते॥ सूर्य्योदयदाहसेचनादौ कालज्वलनसलिलादेः प्राधान्य-प्रसिद्धेर्न कर्म्मैव प्रधानमित्याशङ्क्याह। यद्यपीति॥ अनैकान्ति-कत्वमप्रधानत्वं॥ तत्र हेतुमाह। शास्त्रेति। श्रुतिस्मृतिलक्षणं शास्त्रमुदाहृतं। अगदेचिन्त्यानुपपत्तिर्न्यायः॥

कर्म्मफले देवादीनां विघ्नकर्तृत्वं प्रसङ्गागतं निराकृत्य विद्या-फले तेषां तदाशङ्कितं निराकरोति। नाविद्येति॥ तत्र नञर्थमुक्तानुवादपूर्व्वकं विशदयति। युक्तमिति॥ तत्र प्रश्नपूर्व्वकं पूर्व्वोक्तं हेतुं स्फुटयति। कस्मादिति। आत्मनो ब्रह्मत्वप्राप्ति-रूपाया मुक्तेरज्ञानाध्वस्तिमात्रत्वात्तस्याश्च ज्ञानेन तुल्यकालत्वा-त्तस्मिन् सति तस्य फलस्यावश्यकत्वाद्देवादीनां विघ्नाचरणे नाव-काशोऽस्तीत्यर्थः॥ उक्तमेवार्थमाकाङ्क्षापूर्व्वकं दृष्टान्तेन समर्थ-

भा॰ स्यात्। अतो ब्रह्मविद्यायां सत्यामविकार्य्यानुपपत्तेः प्रदीप इव तमःकार्य्यस्य। तत्केन कस्य विघ्नं कुर्य्युर्देवाः। यत्रात्मत्वमेव देवानां ब्रह्मविदस्तदेतदाह्यात्मस्वरूपं ध्येयं। यत्तत्सर्व्वशास्त्रैर्विज्ञेयं ब्रह्म। हि यस्मादेषां देवानां स ब्रह्मविद्भवति। ब्रह्मविद्यासमकालमेवाविद्यामात्रव्यवधानापगमाच्छुक्तिकाया इव रजताभासायाः शुक्तिकात्वमित्यवोचाम। अतो नात्मनः प्रतिकूलत्वे देवानां प्रयत्नः सम्भवति। यस्य ह्यनात्मभूतं फलं देशकालनिमित्तान्तरितं तत्रानात्मविषये सफलः प्रयत्नो विघ्नाचरणाय देवादीनां। न त्विह विद्यासमकाल आत्मभूते देशकालनिमित्तानन्तरिते।

आ॰ यति। कथमित्यादिना॥ ब्रह्मविद्यातत्फलयोःसमानकालत्वे फलितमाह। अत इति॥ देवादीनां ब्रह्मविद्याफले विघ्नकर्तृत्वाभावे हेत्वन्तरमाह। यत्रेति। यस्यां विद्यायां सत्यां ब्रह्मविदो देवादीनामात्मत्वमेव तस्यां सत्यां कथं ते तस्य विघ्नमाचरेयुः स्वविषये तेषां प्रातिकूल्याचरणानुपपत्तेरित्यर्थः॥ उक्तेऽर्थे समनन्तरवाक्यमुत्थाप्य व्याचष्टे। तदेतदाहेति॥ कथं ब्रह्मविद्यासमकालमेव ब्रह्मविद्देवादीनामात्मा भवति तत्राह। अविद्यामात्रेति॥ यथेदं रजतमिति रजताकारायाः शुक्तिकात्वमविद्यामात्रव्यवहितं तथा ब्रह्मविदोऽपि सर्व्वात्मत्वे तन्मात्रव्यवधानात्तस्याश्च विद्योदयेनान्तरीयकत्वेन निवर्त्तयुक्तं विद्यातत्फलयोः समानकालत्वं।उक्तञ्चैतत्प्रतिवचनदशायामित्यर्थः॥ उक्तस्य हेतोरपेक्षितं वदन् ब्रह्मविदो देवाद्यात्मत्वे फलितमाह। अत इति॥ कैवल्ये तेषां विघ्नाकर्तृत्वे कुत्र तत्कर्तृतेत्याशङ्क्याह। यस्य हीति॥ तेषां निरङ्कुशं प्रसरत्वं वारयति। न त्विति। सफलप्रयत्न इति पूर्व्वेण सम्बन्धः॥ तत्र निरवकाशत्वादिति हेतुमाह। अवसरेति॥ ज्ञानस्यानन्तरफलत्वात्तत्फले देवादीनां न विघ्नकर्तृत्वमुक्तमुपेत्य स्वयुक्तः प्रश्नते। एवं तर्हीति॥ ज्ञान-

भा॰ ऽवसरानुपपत्तेः। एवं तर्हि विद्याप्रत्ययसन्तत्यभावाद्विपरी-
तप्रत्ययतत्कार्य्ययोश्च दर्शनादन्त्य एवात्मप्रत्ययो विद्या-
निवर्त्तको न तु पूर्व्व इति। न प्रथमो नानैकान्तिकत्वात्।
यदि हि प्रथम आत्मविषयः प्रत्ययो विद्यां न निवर्त्त-
यति तथान्योऽपि तुल्यविषयत्वात्।

एवं तर्हि सन्ततोऽविद्यानिवर्त्तको न विच्छिन्न इति। न।
जीवनादौ सति सन्तत्यनुपपत्तेः। न हि जीवनादिहे-
तुके प्रत्यये सति विद्याप्रत्ययसन्ततिरुपपद्यते विरोधात्।
अथ जीवनादिप्रत्ययतिरस्करणेनैवामरणान्ताद्विद्यासन्त-
तिरिति चेन्न। प्रत्ययेयत्तासन्तानानवधारणाच्छास्त्रार्था-
नवधारणदोषादियत्तां प्रत्ययानां सन्ततिरविद्याया

---

आ॰ ध्यानान्तरव्यवधानेन तदज्ञानं निवर्त्तयेद्ध्यानानामिव तत्त्वज्ञाना-
मपि प्रध्वंसीति ज्ञानसन्तत्यभावात्। न चाद्यमेव ज्ञानमज्ञान-
ध्वंसि प्रागिव ऊर्द्ध्वमपि रागादेः कार्य्यस्य च दृष्टत्वात्। अतो
देहपातकालीनं ज्ञानं विज्ञानं निवर्त्तयतीति कुतो जीवन्मुक्ति-
रित्यर्थः। अन्त्यज्ञानस्याज्ञाननिवर्त्तकत्वं तत्सन्ततेर्वा प्रथममेतस्या-
न्त्यत्वादात्मविषयत्वाद्वा तद्ध्वंसितेति विकल्प्योभयत्र दृष्टान्ताभावं
मत्वा द्वितीये दोषान्तरमाह। न प्रथमेनेति। यदेवानुमानेन
स्फोरयति। यदि हीति।

पक्षान्तरं प्रश्नयति। एवं तर्हीति। अविच्छिन्नाज्ञानसन्तति-
र्ज्ञानं निवर्त्तयतीत्येतद्दूषयति। नेत्यादिना। जीवनादिहेतुकः
प्रत्ययो बुभुक्षितोऽहं भोक्ष्येऽहमित्यादिप्रत्ययः। तस्य बुभुक्षाद्युप-
प्लुतस्य प्रध्वंसीत्यविच्छिन्नप्रत्ययसन्तत्या विरुद्धतया यौगपद्या-
योगं हेतुमाह। विरोधादिति। प्रत्ययसन्ततिमुपपादयन्ना-
शङ्कते। अथेति। उक्तरीत्या प्रत्ययसन्ततिमुपेत्य दूषयति। नेत्या-
दिना। तमेव दोषं विशदयति। इयत्तामिति। शास्त्रार्थो

भा॰ निवर्त्तकेत्यनवधारणाच्छास्त्रार्थो नावध्रियेत। तथानिष्टं। सन्ततिमात्रत्वेऽवधारित एवेति चेन्नाद्यन्तयोरविशेषा-त्प्रथमा विद्या प्रत्ययसन्ततिर्मरणकालान्ता वेति विशेषा-भावादाद्यन्तयोः प्रत्यययोः पूर्व्वोक्तौ दोषौ प्रसज्येयातां। एवं तर्ह्यनिवर्त्तक एवेति चेन्न। तस्मात्तत्सर्व्वमभवदिति श्रुतेः। भिद्यते हृदयग्रन्थिस्तत्र को मोह इत्यादि श्रुतिभ्यश्चार्थवाद इति चेन्न। सर्व्वशाखोपनिषदामर्थवादत्वप्रसङ्गात्। एता-वन्मात्रार्थत्वोपक्षीणा हि सर्व्वशाखोपनिषदः प्रत्यक्प्रमि-तात्मविषयत्वादन्त्यैवेति चेन्न। उक्तपरिहारत्वादविद्या-

---

आ॰ ज्ञानसन्ततिरज्ञानं निवर्त्तयतीत्येवमात्मकः। आत्मेत्येवोपासी-तेति श्रुतेरात्मज्ञानसन्ततिमात्रसद्भावे ततो विद्याद्वाराऽविद्याध्व-स्तिरिति शास्त्रार्थनिश्चयसिद्धिरित्याह। सन्ततीति॥ आत्मधीस-न्ततेः सत्त्वेऽपि न आत्मविषयत्वाद्विद्याद्वाराऽविद्यां निवर्त्तयति। आद्यादिप्रत्ययस्यात्मसन्ततौ व्यभिचारादिति परिहरति। नाद्य-न्तयोरिति॥ पूर्व्वस्मिन् प्रत्यये नाविद्यानिवर्त्तकत्वमन्त्ये तु तथेत्युक्ते तस्यान्त्यत्वात्तथात्वं चेद्दृष्टान्ताभावः। आत्मविषयत्वात्तथात्वे प्रथ-मप्रत्यये व्यभिचारः स्यादित्युक्तौ दोषौ। आद्या सन्ततिर्न विद्या-ध्वंसिनी। अन्त्या तु तथेत्यङ्गीकारेऽपि विशेषाभावादन्त्यत्वात्तस्या निवर्त्तकत्वे दृष्टान्ताभावः॥ आत्मविषयत्वात्तद्भावत्वमेकान्तिकत्व-मित्येतावेव दोषौ स्यातामित्युक्तं विवृणोति। प्रथमेति॥ अन्त्य-प्रत्ययस्य सन्ततेश्चाविद्यानिवर्त्तकत्वासम्भवे प्रथमस्यापि तामा-नुवृत्या तदयोगाज्ज्ञानमज्ञानानिवर्त्तकमेवेति चोदयति। एवं तर्हीति॥ श्रुतिविरोधेन परिहरति॥ न तस्मादिति॥ तासामर्थवादत्वेनाविवक्षितत्वं शङ्कते। अर्थवाद इति चेदिति॥ अतिप्रसङ्गेन दूषयति। न सर्व्वेति॥ यथोक्तश्रुतीनामर्थवादत्वेऽपि कथं सर्व्वशाखोपनिषदां तत्प्रसक्तिरित्याशङ्क्याह। एता-वदिति॥ एतावन्मात्रार्थत्वमात्मज्ञानात्तदज्ञाननिवृत्तिरित्येता-

भा॰ शोकमोहभयादिदोषनिवृत्तेः। प्रत्यक्षत्वादिति चोक्त एव परिहारस्तस्मादाद्योऽन्त्यः सन्ततोऽसन्ततश्चेत्यचोद्यं। एतदविद्यादिदोषनिवृत्तिफलावसानत्वाद्विद्यायाः। स एवाविद्यादिदोषनिवृत्तिफलकृत्प्रत्यय आद्योऽन्त्यः सन्ततो ऽसन्ततो वा स एव विद्येत्यभ्युपगमान्न चोद्यस्यावतारगन्धो ऽप्यस्ति। यत्तूक्तं विपरीतप्रत्ययतत्कार्ययोश्च दर्शनादिति। न। तच्छेषस्थितिहेतुत्वात्। येन कर्मणा शरीरमारब्धं तद्विपरीतप्रत्ययदोषनिमित्तत्वात्तस्य तथाभूतस्यैव विपरीतप्रत्ययदोषसंयुक्तस्य फलदाने सामर्थ्यमिति। यावच्छरीरपातस्तावत्फलोपभोगाङ्गतया विपरीतप्रत्ययं रागा-

---

आ॰ बाध्यमानस्यार्थस्य सद्भावः। यद्यन्योन्यं प्रतीतौ तासां प्रवृत्तेः संवादविसंवादाभ्यां मानत्वायोगाद्दृष्टेवार्थवादतेति प्रसङ्गस्येष्टत्वं शङ्कते। प्रत्यक्षेति। प्रमातुरन्योन्यमप्यता नात्मनस्तस्याक्रियकस्य वेदान्ताः प्रमात्वं बोधयन्तीति न संवादादिप्रसङ्ग इत्याह। नोक्तेति। विद्वदनुभवमाश्रित्यापि फलश्रुतेरर्थवादत्वं समाहितमित्याह। अविद्येति। आत्मज्ञानस्य तदज्ञाननिवर्तकत्वे स्थिते परमतस्य निरवकाशत्वं फलतीत्याह। तस्मादिति। बोधस्यानवकाशमेव विशदयति। अविद्यादीति। ज्ञानसन्ततेरन्त्यज्ञानस्य वा ज्ञानध्वंसित्वाविशेषादाद्यमेव ज्ञानं तथेत्युक्तं। सम्प्रति परोक्तमनुवदति। यत्तूक्तमिति। दर्शनादाद्यं ज्ञानमज्ञानध्वंसीति शेषः॥

प्रारब्धकर्मशेषस्य विदुषः स्थितिहेतुत्वाद्विदुषोऽपि यावदारब्धक्षयं रागाद्याभासाविरोधात्तत्क्षये च देहाभासभ्रमदाभासयोरभावादाद्यज्ञानस्याज्ञाननिवर्तकमुपपत्तिरित्युत्तरमाह। न तच्छेषेति। तदेव प्रपञ्चयति। येनेत्यादिना। तच्छब्दस्याक्षिप्यतीत्यनेन सम्बन्धः। आक्षेपकत्वनियमं साधयति। विपरी-

भा० दिदोषस्य तावन्मात्रमाक्षिपत्येव। मुक्तेषुवत्प्रवृत्तफलत्वा-
त्तद्धेतुकस्य कर्मणस्तेन न तस्य निवर्त्तिका विद्याऽविरो-
धात्। किं तर्हि स्वाश्रयादेव स्वात्मविरोध्यविद्याकार्य्यं यदु-
त्पित्सु तन्निरुणद्ध्यनागतत्वादतीतं चेतरत्। किञ्च न च
विपरीतप्रत्ययो विद्यावत उत्पद्यते। निर्विषयत्वाद्गव-
गतविषयविशेषस्वरूपं हि सामान्यमात्रमाश्रित्य विप-
रीतप्रत्यय उत्पद्यमान उत्पद्यते। यथा शुक्तिकायां रज-
तमिति। स च विषयविशेषावधारणवतोऽशेषविपरीतप्र-
त्ययाश्रयस्योपमर्द्दितत्वान्न पूर्व्ववत् सम्भवति। शुक्तिकादौ

---

आ० तेति। मिथ्याज्ञानेन रागादिदोषेण च निमित्तेन प्रवृत्तत्वादिति
यावत्। तथाभूतस्येत्यस्य विवरणं विपरीतप्रत्ययेत्यादि कर्म्मैव
यथा विशेष्यते। तावन्मात्रं प्रतिभासमात्रशरीरं। प्रारब्धक-
र्म्मणोऽप्यज्ञानजन्यत्वेन ज्ञाननिवर्त्त्यत्वात्तु ज्ञानिनस्ततो देहाभा-
वादि सम्भवतीत्याशङ्क्याह। मुक्तेषुवदिति। यथाप्रवृत्तवेगस्येष्वा-
देर्वेगक्षयादेवाप्रतिबद्धस्य पातस्तथा भोगादेवारब्धक्षयो भोगेन
त्वितरे क्षपयित्वा सम्पद्यन्त इति न्यायादित्यर्थः। तद्धेतुकस्य विप-
रीतप्रत्ययादिप्रतिभासकार्य्यजनकस्येति यावत्। ननु ज्ञानमना-
रब्धकर्म्मवदारब्धमपि कर्म्मत्वाविशेषान्निवर्त्तयिष्यति नेत्याह। ते-
नेति। अविद्याक्षेपेण सदारब्धस्य कर्म्मणो विद्या निवर्त्तिका न भव-
तीत्यत्र हेतुमाह। अविरोधादिति। न हि ज्ञानादारब्धकर्म्म क्षीयते
तदविरोधित्वादविद्यालेशाच्च तदवस्थितेः। अन्यथा जीवन्मुक्ति-
शास्त्रविरोधादिति भावः। आरब्धस्य कर्म्मणो ज्ञानानिवर्त्त्यत्वे
ज्ञानं कर्म्मनिवर्त्तकमिति कथं प्रसिद्धिरित्याह। किं तर्हीति।
प्रसिद्धिविषयमाह। स्वाश्रयादिति। ज्ञानविरोधि यदज्ञान-
कार्य्यमनारब्धं कर्म्म ज्ञानाश्रयप्रमात्राश्रयादज्ञानात्मकात्मना
जन्माभिमुखं तन्निवर्त्तकं ज्ञानमिति प्रसिद्धिरविरुद्धेत्यर्थः। विमतं
न ज्ञाननिवर्त्त्यं कर्म्मत्वादारब्धकर्म्मवदित्यनुमानादनारब्धमपि

भा॰ प्रमाणाप्रमाणयोर्विशेषानुपपत्तेः। एतेन सम्यग्ज्ञानानन्तरमेव शरीरपाताभावः कस्मादित्येतत्परिहृतं। ज्ञानोत्पत्तेः प्रागूर्द्धं तत्कालं जन्मान्तरसञ्चितानाञ्च कर्म्मणामप्रवृत्तफलानां विनाशः सिद्धो भवति फलप्राप्तिविघ्ननिषेधश्रुतेरेव। क्षीयन्ते चास्य कर्म्माणि। तस्य तावदेव चिरं। सर्व्वे पाप्मानः प्रदूयन्ते। तं विदित्वा न लिप्यन्ते कर्म्मणा पापकेन। एतमु हैवैतेन तरतो नैनं कृताकृते तपतः। एतं ह वाव न तपति न बिभेति कुतश्चनेत्यादिश्रुतिभ्यश्च। ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात्कुरुत इत्यादिस्मृतिश्च। यत्तु ऋणैः प्रतिबध्यत इति। तन्न। अविद्याविषयत्वात्। अविद्यावान् ऋणी। तस्य कर्त्तृत्वाद्युपपत्तेः। यत्र वान्यदिव स्यात्तत्रान्योऽन्यत् पश्येदिति हि वक्ष्यत्यनन्यत्सद्वस्त्वात्माख्यं। यत्राविद्यायां सत्यामन्यदिव स्यात्तिमिरकृतद्वितीयचन्द्रवत्तत्राविद्याकृतानेककारकापेक्षं दर्श-

---

आ॰ नयस्य बाधितत्वान्न विदुषो रागादिरित्युपपाद्य ज्ञानान्मोक्षे तज्जन्ममात्रेण शरीरस्थितिहेत्वभावात्पतेदिति सद्यो मुक्तिपक्षं प्रत्याह। एतेनेति। प्रवृत्तफलस्य कर्म्मणो भोगादृते क्षयो नास्तीत्युक्तेन न्यायेनेति यावत्॥ आरब्धकर्म्मणां देहस्थितिमुक्त्वा इतरेषां ज्ञाननिवर्त्त्यत्वमुपसंहरति। ज्ञानोत्पत्तेरिति। तस्य ह न देवाश्च नेति विदुषो विद्याफलप्राप्तौ विघ्ननिषेधश्रुत्यनुपपत्त्या यथोक्तोऽर्थो भातीत्यर्थः॥ न केवलं श्रुतार्थापत्त्या यथोक्तार्थसिद्धिः। किन्तु श्रुतिस्मृतिभ्यामपीत्याह। क्षीयन्ते चेत्यादिना॥ जीवन्मुक्तिं साधयता ज्ञानफले प्रतिबन्धाभाव उक्तः॥ इदानीं पूर्वोक्तं शङ्काबीजमनुवदति। यत्त्विति॥ ऋणित्वं हि विदुषोऽविदुषो वेति विकल्पाद्यं दूषयन् द्वितीयमङ्गीकरोति। तन्नेत्यादिना॥ अवि-

उ॰ अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवँ स देवानां ॥

---

भा॰ नादिकर्म तत्कृतं फलञ्च दर्शयति तत्रान्योऽन्यत्पश्येदित्यादिना। यत्र पुनर्विद्यायां सत्यामविद्याकृतानेकत्वभ्रमप्रहाणात्तत्केन कं पश्येदिति कर्मासम्भवं दर्शयति।

तस्मादविद्यावद्विषय एव वर्णितं कर्मसम्भवान्नेतरत्र। एतच्चोत्तरत्र व्याचिख्यासिष्यमाणैरेव वाक्यैर्विस्तरेण प्रदर्शयिष्यामः। तद्यथैव तावत्। अथ यः कश्चिदब्रह्मविदन्यामात्मनो व्यतिरिक्तां यां काञ्चिद्देवतामुपास्ते स्तुतिनमस्कारयागबल्युपहारप्रणिधानध्यानादिनोपास्ते तस्या गुणभावमुपगम्यास्ते अन्योऽसावनात्मा मत्तः पृथगन्योऽहमस्म्यधिकृतो मयास्मा ऋणिवत्प्रतिकर्त्तव्यमित्येवंप्रत्ययः सन्नुपास्ते न स इत्थंप्रत्ययो वेद विजानाति तत्त्वं न स

---

आ॰ तस्येति शेषः। तदेव स्फुटयते। अविद्यायामिति। अविदुषोऽस्ति कर्तृत्वादीत्यत्र मानमाह। यत्रेति। वक्ष्यमाणवाक्यार्थं प्रकृतोपयोगित्वेन कथयति। अनन्यादिति। कृत्स्नं विदुषेत्युक्तं व्यक्तीकर्त्तुं तस्य नास्ति कर्तृत्वादीत्यत्रापि प्रमाणमाह। यत्र पुनरिति।
विद्यायां सत्यामविद्यायास्तत्कृतानेकत्वभ्रमस्य च प्रमाणं यत्र सम्पद्यते तत्र तस्मादेव कारणात्तत्केनेत्यादिकर्मादेरसम्भवं दर्शयतीति योजना। प्रमाणसिद्धमर्थं निगमयति। तस्मादिति। अविद्याविषयकर्तृत्वमित्येतत्प्रपञ्चयन्नविद्यासूत्रमवतारयति। एतच्चेति। तत्कर्तृत्वमविद्याविषयं यथा स्फुटं भवति तथाऽतो योऽन्यामित्यादावनन्तरग्रन्थ एव कथ्यते प्रथममित्यर्थः। तदक्षराणि व्याकरोति। अथेत्यादिना। विद्यासूत्रानन्तर्यमविद्या-

भा॰ केवलमेवम्भूतो विद्वानविद्यादिदोषवानेव। किं तर्हि यथा पशुर्गवादिर्वाहनदोहनाद्युपकारैरुपभुज्यते एवं स इज्याद्यनेकोपकारैरुपभोक्तव्यत्वादेकैकेन देवादीनां। अतः पशुरिव सर्व्वार्थेषु कर्म्मस्वधिकृत इत्यर्थः। एतस्य ह्यविदुषो वर्णाश्रमादिविभागवतो ह्यधिकृतस्य कर्म्मणो विद्यासहितस्य केवलस्य च शास्त्रोक्तस्य कार्य्यं मनुष्यत्वादिको ब्रह्मान्त उत्कर्षः। शास्त्रोक्तविपरीतस्य च स्वाभाविकस्य कार्य्यं मनुष्यत्वादिक एव स्थावरान्तोऽपकर्षो यथा चैतत्तथा। अथ त्रयो वाव लोका इत्यादिना वक्ष्यामः कृत्स्नेनैवाध्यायशेषेण। विद्यायाश्च कार्य्यं सर्व्वात्मभावापत्तिरित्येतत्संक्षेपतो दर्शितं सर्व्वा ह्येयमुपनिषद्विद्याऽविद्याविभागप्रदर्शनेनैवोपक्षीणा॥

---

आ॰ सूत्रस्याथ शब्दार्थः। यागो गन्धपुष्पादिना पूजा। बल्युपहारो निवेद्य समर्पणं। प्रणिधानमैकाग्र्यं। ध्यानं तत्रैवानन्तरितप्रत्ययप्रवाहकरणं। आदिपदं प्रदक्षिणादिसङ्ग्रहार्थं॥ भेददर्शनमाचोपासनं न शास्त्रीयमित्यभिप्रेत्यैतदेव विवृणोति। अन्योऽसाविति। तस्य मूलमाह। न स इति॥ वाक्यान्तरमवताय्यं व्याचष्टे। न स केवलमिति॥ सोऽविद्वानेवमुक्तदृष्टान्तवशात्पशुरिव देवानां भवति। तेषां मध्ये तस्यैकैकेन बहुभिरुपकारैर्भोग्यत्वादिति योजना। पशुसाम्ये सिद्धमर्थं कथयति। अत इति॥ अथानेनाविद्यासूत्रेण किं लब्धं भवतीत्यपेक्षायामविद्यायाः संसारहेतुत्वं सूचितमिति वक्तुमविद्याकार्य्यं कर्म्म फलं सङ्क्षिपति। एतस्येत्यादिना। कर्म्मसहायभूता विद्यादेवता ध्यानात्मिका शास्त्रीयवत्स्वाभाविककर्म्मणोऽपि द्वैविध्यं सूचयितुं च शब्दः। तत्र तु सहकारिणी विद्या नभस्त्रीदर्शनादिरूपेति भेदः।

उ॰ यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमानेऽ

---

भा॰ यथा चैषोऽर्थः तत्त्वस्य शास्त्रस्य तथा प्रदर्शयिष्यामः। यस्मादेवं तस्मादविद्यावन्तं पुरुषं प्रति देवा ईशते विघ्नं कर्त्तुमनुग्रहं चेत्येतद्दर्शयति। यथाह वै लोके बहवो गोऽश्वादयः पशवो मनुष्यं स्वामिनमात्मनोऽधिष्ठातारं भुञ्ज्युः पालयेयुरेवं बहुपशुस्थानीय एकैकोऽविद्वान् पुरुषो देवान्देवानिति बहुवचनं पित्राद्युपलक्षणार्थं भुनक्ति पालयतीति। इमे इन्द्रादयोऽन्ये मत्तो ममेशितारो भृत्य इवाहमेषां स्तुतिनमस्कारेज्यादिनाऽऽराधनं कृत्वाभ्युदयं निःश्रेयसञ्च तत्प्रदत्तं फलं प्राप्स्यामीत्येवमभिसन्धिः। तत्र लोके बहुपशुमतो यथैकस्मिन्नेव पशावादीयमाने व्याघ्रा-

---

आ॰ कथं यथोक्तकर्मफलमविद्यावतः स्यादित्याशङ्क्याह। यथा चेति। तत्त्वविशिष्टसिद्ध्यर्थं विद्यास्तुत्यर्थमनुक्रामति। विद्याया चेति। सूत्रान्तराशङ्कां वारयति। तस्या इति। कथमेतदवगम्यते तत्राह। यथेति। मनुष्याणामविद्यावतां देवपशुत्वे स्थिते फलितमाह। यस्मादिति। तत्र प्रमाणत्वेनोत्तरं वाक्यमुत्थापयति। एतदिति। किमिदमविद्यावतो देवादिपालनमित्याशङ्क्य वाक्यतात्पर्यमाह। इमे इन्द्रादय इति। अभिसन्धिरविद्यावतः पुरुषस्येति शेषः। एकस्मिन्नेवेत्यादिवाक्यमादाय व्याचष्टे। तत्रेति। मनुष्याणां पशुभावाद्व्युत्थानमप्रियं देवानामिति स्थिते तदुपायमपि तत्त्वज्ञानं तेषां देवा विविघ्नन्तीत्याह। तस्मादिति। तत्त्वविद्याया दौर्लभ्यं कथयन्नेतदुक्तं। मनुष्याणामुत्थाने देवा न सहन्तीत्यत्र प्रमाणमाह। तथा चेति। तेषां ब्रह्मविद्यायाः कैवल्याप्तिः स्वरूपनिष्ठेति भावः। देवादीनां मनुष्येषु ब्रह्म-

उ॰ प्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥ १० ॥

---

भा॰ हिंसाऽपह्रियमाणे महदप्रियं भवति तथा बहुपशु-स्थानीय एकस्मिन् पुरुषे पशुभावाद्व्युत्तिष्ठत्यप्रियं भवतीति किं चित्रं देवानां बहुपश्वपहरण इव कुटुम्बिनः। तस्मादेषां देवानां तन्न प्रियं किं तद्यदेतद्ब्रह्मात्मतत्त्वं कथञ्च न मनुष्या विद्युर्जानीयुः। तथा च स्मरणमनु गीतासु भगवतो व्यासस्य ॥ क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः । न चैतदिष्टं देवानां मर्त्यैरुपरि वर्त्तनमिति ॥ अतो देवाः पशूनिव व्याघ्रादिभ्यो ब्रह्मविज्ञानाद्विघ्नमाचिकीर्षन्ति । अस्मदुपभोग्यत्वान्मा व्युत्तिष्ठेयुरिति। यन्तु मुमोचयिषन्ति तं श्रद्धादिभिर्योजयन्ति विपरीतमश्रद्धादिभिः। तस्मान्मुमुक्षु-

---

आ॰ ज्ञानस्याप्रियत्वेऽपि किं स्यादित्याशङ्क्याह। अत इति॥ तेषां विघ्न-माचरतामभिप्रायमाह । अस्मादिति ॥ तर्हि देवादिभिरुपद्रू-तानां मनुष्याणां मुमुक्षैव न सम्पद्येतेत्याशङ्क्याह। यन्त्विति ॥ उक्तं हि ॥ न देवा दण्डमादाय रक्षन्ति पशुपालवत्। यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तमिति॥ तर्हि किं सर्व्वा-नेव देवाननुगृह्णन्तीत्याशङ्क्याह । विपरीतमिति ॥ देवतापरा-ङ्मुखममुमोचयिषितमिति यावत्॥ सम्प्रति देवाः प्रियवाक्येन॥ अनितमर्थमाह । तस्मादिति । अविद्वत्सु मनुष्येषु देवादीनां स्वातन्त्र्यं तच्छब्दार्थः। श्रद्धादिप्रधानस्तदाराधनपरः सन् देवानां प्रियः स्यात्तदियमस्य मुमुक्षा वैपरीत्यादित्यर्थः ॥ तत्प्रीतिविषयश्च तत्प्रसादादासादितवैराग्यः सर्व्वाणि कर्म्माणि संन्यस्य विद्याप्रापकं श्रवणादिकं प्रत्येकाग्रमना स्यादित्याह । अप्रमादीति ॥ श्रवणा-दिकमनुतिष्ठन्नपि वर्णाश्रमाचारपरो भवेदन्यथा विद्याबाधे

उ० ब्रह्म वा इदमग्र आसीदेकमेव तदेकꣳ सन्न व्यभवत्॥

---

भा० देवाराधनपरः श्रद्धाभक्तिपरः प्रणतोऽप्रमादी स्याद्विद्याप्राप्तिं प्रति विद्यां प्रतीति वा काक्वैतत्प्रदर्शितं भवति देवा अप्रियवाक्येन ॥ १० ॥

सूचितः शास्त्रार्थः । आत्मेत्येवोपासीतेति । तस्य च व्याचिख्यासितस्य सार्थवादेन तदाहुर्यद्ब्रह्मविद्ययेत्यादिना सम्बन्धप्रयोजनेऽभिहितेऽविद्यायाश्च संसाराधिकारणत्वमुक्तं अथ योऽन्यां देवतामुपास्त इत्यादिना। तथाविद्वान् पशुवद्देवादिकर्म्मकर्त्तव्यतया परतन्त्र इत्युक्तं किं पुनर्देवादिकर्म्मकर्त्तव्यत्वे निमित्तं। वर्णाश्रमाश्च। तत्र

---

आ० पक्षे प्रतिबन्धसम्भवादित्याशयेनाह। विद्यां प्रतीति। भयादिनिमित्तध्वनेर्विकृतिः काकुरुच्यते। यथाह काकुःस्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरित्यमरः। तथा काक्वा एव श्रुतेः स्वरसम्येन भयमुपपाद्य देवादिभजने कथ्यते तात्पर्य्यमित्याह। काक्वेति॥१०॥

ब्रह्मकण्डिकामित्थं व्याख्याय ब्रह्म वा इदमित्यादि वाक्यस्यातीतेन सम्बन्धं वक्तुं वृत्तं कीर्त्तयति। सूचित इति। शास्त्रार्थशब्दो ब्रह्मविद्याविषयः। तदाहुरित्यादिनोक्तमनुवदति। तस्य चेति॥ अर्थवादस्तद्यो यो देवानामित्यादिः। सम्बन्धो ज्ञानस्य सर्व्वाप्तिफलेन साध्यसाधनत्वमधिकारिज्ञानयोराश्रयाश्रयित्वमैक्येन विषयविषयित्वमिति विभागः। अविद्यासूत्रे वृत्तं कथयति। अविद्यायाश्चेति। संसारस्याधिकारः प्रवृत्तिरुत्पत्तिरिति यावत्॥ यथा पशुरित्यादिनोक्तमनुभाषते। तथेति॥ अविद्याधिकारः सन्नित्यर्थः। तथाविद्याकार्य्यं प्रपञ्चयितुमध्यायशेषप्रवृत्तिरिति मन्वानोऽविद्यानिवर्त्तिं चातुर्वर्ण्यसृष्टिप्रकटनार्थं तदेतद्ब्रह्मेत्यस्मात् प्राक्तनं वाक्यमित्याकाङ्क्षापूर्व्वकमाह। किं पुनरिति॥ ब्रह्म वा इदमित्यादिवाक्यमिदमारभ्यते। वर्णानेव विशिनष्टि। यन्निमि-

भा॰ के वर्णा इत्यत इदमारभ्यते। यन्निमित्तसम्बन्धेषु कर्मस्वयं परतन्त्र एवाधिकृतः संसारी*त्येतस्यैवार्थस्य प्रदर्शनायाग्नि-सर्गानन्तरमिन्द्रादिसर्गो नोक्तः। अग्नेस्तु सर्गः प्रजापतेः सृष्टिपरिपूरणाय प्रदर्शितः। अयन्त्विन्द्रादिसर्गस्तत्रैव द्रष्टव्य-स्तच्छेषत्वात्। इह तु स एवाभिधीयतेऽविदुषः कर्माधिका-रहेतुप्रदर्शनाय॥ ब्रह्म वा इदमग्र आसीद्यदग्निं सृष्ट्वा-ग्निरूपापन्नं ब्रह्म ब्राह्मणजात्यभिमानाद्ब्रह्मेत्यभिधीयते। वै इदं क्षत्रादिजातं ब्रह्मैवाभिन्नमासीदेकमेव। नासीत् क्षत्रा-दिभेदस्तद्ब्रह्मैकं क्षत्रादिपरिपालयित्रादिशून्यं सन्न व्यभवत् न विभूतवत्कर्मणे नालमासीदित्यर्थः॥

---

आ॰ केति। यैर्निमित्तैर्ब्राह्मण्यादिभिः सम्बन्धेषु कर्मस्वयमविद्वानधिकृतः पशुरिव संसरतीति पशुनिदर्शनश्रुतौ प्रसिद्धं। तानि निमित्ता-नि दर्शयितुमुत्तरं वाक्यं प्रवृत्तमित्यर्थः॥ अथेत्यभ्यमन्थदित्यनागु-ग्राह्यदेवतासर्गं प्रजापतेरेव सृष्टिसत्त्वा नेन्द्रादीनामत्र स्वविद्यां प्रस्तुत्य तेषां नोच्यते। तत्र कः श्रुतेरभिप्राय इत्याह। एतस्येति। पूर्व्वमग्निसर्गानन्तरमिन्द्रादिसर्गो वाच्योऽपि नोक्तः। पक्षाभा-वात्। इह त्वविदुषस्तत्तद्वर्णाद्यभिमानिनः कर्माधिकारित्वे-तस्यार्थस्य प्रदर्शनार्थं तदाविद्यत्वविवक्षया स उत्पाद्यत इत्यर्थः॥ अग्निसर्गोऽपि तर्ह्यत्रैव वाच्यो विशेषाभावादित्याशङ्क्याह। अग्ने-स्त्विति। प्रजापतेः सृष्टिपूर्त्तये सोऽपि सृष्टिसत्त्वोक्तः। इन्द्रादि-सर्गोऽपि तत्रैव वाच्योऽन्यथा तदपूर्त्तेरित्याशङ्क्याह। अयन्त्विति। तर्हि तत्रोक्तस्य कस्मादत्रोक्तिः पुनरुक्तेरित्याशङ्क्य तस्यैवार्थस्येत्य-नोक्तं स्मारयति। इह त्विति॥ सङ्क्षिप्ता वाक्यमादाय व्याचष्टे ब्रह्मेति॥ अग्नेः क्षत्रादिसर्गात्पूर्व्वमिति यावत्। वै शब्दस्याव-धारणार्थत्वं वदन्वाक्यार्थोक्तिपूर्व्वकमितिकथार्थमाह। इद-मिति। द्वितीयमेवकारं व्याचष्टे। नासीदिति।

---

* संसरतीति पाठान्तरः।

उ॰ तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा॰

॰ क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्ज्जन्यो यमो मृत्युरीशान इति।

---

भा॰ ततस्तद्ब्रह्म ब्राह्मणोऽस्मि ममेत्थं कर्त्तव्यमिति ब्राह्मणजातिनिर्वर्त्त्य*कर्म्मचिकीर्षयात्मनः कर्म्मकर्त्तृत्वविभूत्यै श्रेयोरूपं प्रशस्तरूपमत्यसृजतातिशयेनासृजत सृष्टवान्। तत् किं पुनस्तद्यत्सृष्टं क्षत्रं क्षत्रियजातिस्तद्व्यक्तिभेदेन प्रदर्शयति। यान्येतानि प्रसिद्धानि लोके देवत्रा देवेषु क्षत्राणीति जात्याख्यायां पक्षे बहुवचनस्मरणाद्व्यक्तिबहुत्वाद्वा भेदोपचारेण बहुवचनं। कानि पुनस्तानीत्याह। तत्राभिषिक्ता एव विशेषतो निर्दिश्यन्ते। इन्द्रो देवानां राजा। वरुणो यादसां। सोमो ब्राह्मणानां। रुद्रः पशूनां। पर्ज्जन्यो विद्युदादीनां। यमः पितॄणां। मृत्यू रोगादीनां। ईशानो भासामित्येवमादीनि देवेषु क्षत्राणि। तदन्विन्द्रादिक्षत्रदेवताधिष्ठितानि

---

आ॰ कथं तर्हि तस्य कर्म्मानुष्ठानसामर्थ्यमित्याशङ्क्य समनन्तरवाक्यं व्याचष्टे। तदिति। तदेव वाक्यमाकाङ्क्षाद्वारा स्फुटयति। किं पुनरिति। एका चेत् क्षत्रजातिः सृष्टा कथं तर्हि यान्येतानीति बहूक्तिरित्याशङ्क्याह। तद्व्यक्तिभेदेनेति। क्षत्रजातेरेकत्वात् कथं क्षत्राणीति बहुवचनमित्याशङ्क्य जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यां (पा॰ १।२।५८) इति स्मृतिमाश्रित्याह। जातीति। बहूक्तेर्गत्यन्तरमाह। व्यक्तीति। तासां बहुत्वाज्जातेश्च तदभेदात्तत्रापि भेदमुपचर्य्य बहूक्तिरित्यर्थः। क्षत्राणीति बहुवचनमिति

---

* निमित्त इति पाठान्तरः।

उ० तस्मात्क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म ।

---

भा० मनुष्यक्षत्राणि सोमसूर्यवंश्यानि पुरूरवःप्रभृतीनि सृष्टान्येव द्रष्टव्यानि । तदर्थ एव हि देवक्षत्रसर्गः प्रस्तुतः ॥

यस्माद्ब्रह्मणातिशयेन सृष्टं क्षत्रं तस्मात्क्षत्रात्परं नास्ति ब्राह्मणजातेरपि नियन्तृ । तस्माद्ब्राह्मणः कारणभूतः क्षत्रियस्य क्षत्रियमधस्ताद्व्यवस्थितः सन्नुपरिस्थितमुपास्ते । क्व । राजसूये । क्षत्र एव तदात्मीयं यशः ख्यातिरूपं ब्रह्मेति दधाति स्थापयति । राजसूयाभिषिक्तेनासन्द्यां स्थितेन राज्ञाऽऽमन्त्रितो ब्रह्मन्निति ऋत्विक् पुनस्तं प्रत्याह त्वं राजन् ब्रह्मासीति । तदेतदभिधीयते क्षत्र एव तद्यशो दधातीति । सैषा प्रकृता क्षत्रस्य योनिरेव यद्ब्रह्म ॥

---

व्या० सम्बन्धः । तेषां विशेषतो ग्रहणं क्षत्रस्योत्तमत्वं स्थापयितुमिति मन्वानः सन्नाह । कानि पुनरित्यादिना ॥ ननु किमिति देवेषु क्षत्रसृष्टिरुच्यते । ब्राह्मणस्य कर्मानुष्ठानसामर्थ्यसिद्ध्यर्थं मनुष्येष्वेव तत्सृष्टिरुपदेष्टव्येत्याशङ्क्याह । तदन्विति ॥ तथापि विवक्षिता सृष्टिर्मुखतो वक्तव्येत्याशङ्क्योपोद्घातोऽयमित्याह । तदर्थ इति ॥ तस्मादित्यादि व्याचष्टे । यस्मादिति ॥ क्षत्रस्य नियन्तृत्ववदुत्कर्षे हेत्वन्तरमाह । तस्मादिति ॥ ब्रह्मेति प्रसिद्धं ब्राह्मणाख्यमिति यावत् ॥ उक्तमेव प्रपञ्चयति । राजसूयेति ॥ आसन्द्यां मञ्चिकायां । क्षत्रे स्वकीयं यशः समर्पयतो ब्राह्मणस्य निष्कर्षमाशङ्क्याह । सैषेति ॥

उ॰ तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवा-न्तत उपनिश्रयति स्वां योनिं य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति स पापीयान् भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ॥११॥

---

भा॰ तस्माद्यद्यपि राजा परमतां राजसूयाभिषेकगुणं गच्छत्याप्नोति ब्रह्मैव ब्राह्मणजातिमेवान्ततोऽन्ते कर्म्मपरिसमाप्तावुपनिश्रयति स्वां योनिं पुरोहितं निधत्त इत्यर्थः॥ यस्तु पुनर्बलाभिमानात्स्वां योनिं ब्राह्मणजातिं ब्राह्मणं य उ एनं हिनस्ति न्यग्भावेन पश्यति स्वामात्मीयामेव स योनिमृच्छति स्वं प्रभवं विच्छिनत्ति विनाशयति। स एतत्कृत्वा पापीयान् पापतरो भवति। पूर्व्वमपि क्षत्रियः पाप एव। क्रूरत्वादात्मप्रसवहिंसया सुतरां। यथा लोके श्रेयांसं प्रशस्ततरं हिंसित्वा परिभूय पापतरो भवति तद्वत्॥११॥

---

आ॰ तयोर्ब्राह्मणत्वस्य तुल्यत्वात्कुतोऽवान्तरभेदः। क्षत्रमपि क्रतुकाले ब्राह्मण्यं प्राप्नोतीत्याशङ्क्याह। तस्मादिति॥ क्षत्रस्य ब्रह्माभिभवे दोषप्रसङ्गाच्च तस्य तदपेक्षया तद्गुरुत्वमित्याह। यद्यपीति। प्रमादादपि वस्तुमुशब्दः। य एनं हिनस्तीति प्रतीकग्रहणं। यस्तु पुनरित्यादिव्याख्यानमिति भेदः। इयसुनन्तरवर्थस्य प्रयोगे हेतुमाह। पूर्व्वमपीति॥ ब्राह्मणाभिभवे पापीयस्त्वमित्येतदुदाहरणेन बुद्धावारोपयति। यथेति॥११॥

उ० स नैव व्यभवत् स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥ १२ ॥

स नैव व्यभवत् स शौद्रं वर्णमसृजत पूषणमियं वै

---

भा० क्षत्रे सृष्टेऽपि स नैव व्यभवत् कर्मणे ब्रह्म। तथा न व्यभवद्वित्तोपार्जयितुरभावात्। स विशमसृजत कर्मसाधनवित्तोपार्जनाय। कः पुनरसौ विट्। यान्येतानि देवजातानि स्वार्थे निष्ठा। य एते देवजातिभेदा इत्यर्थः। गणशो गणं गणमाख्यायन्ते कथ्यन्ते गणप्राया हि विशः। प्रायेण संहता हि वित्तोपार्जने समर्था नैकैकशः। वसवोऽष्टसङ्ख्यो गणस्तथैकादश रुद्रा द्वादशादित्या विश्वेदेवास्त्रयोदश विश्वाया अपत्यानि सर्वे वा देवा मरुतः सप्त सप्त गणाः ॥ १२ ॥

स परिचारकाभावात्पुनरपि नैव व्यभवत् स शौद्रं वर्णमसृजत शूद्र एव शौद्रः स्वार्थे वृद्धिः कः पुनरसौ

---

आ० कर्तुर्ब्राह्मणस्य नियन्तुश्च क्षत्रियस्य सत्त्वात्किमुत्तरग्रन्थेनेत्याशङ्क्याह। क्षत्र इति। तद्व्याचष्टे। कर्मणे इति। ब्रह्म ब्राह्मणोऽस्मिन्नभिमानी पुरुषः तथा क्षत्रसर्गात्पूर्वमिवेति यावत्। कथं तर्हि लौकिकसामर्थ्यसम्पादनद्वारा कर्मानुष्ठानमत आह। स विशमिति। देवजातानीत्यत्र तकारो निष्ठा गणं गणं कृत्वा किमित्याख्यानं विशामित्याशङ्क्याह। गणेति। विशां समुदायप्रधानत्वमत्रापि प्रत्यक्षमित्याह। प्रायेणेति। १२।

कष्टं पालयितुं धनार्जयितृणां सत्त्वात् कृतं वर्णान्तरसृष्ट्येत्याशङ्क्याह। सपरिचारकेति। शौद्रं वर्णमसृजतेत्यत्रौकारो

उ॰ पूषेयꣳ हीदꣳ सर्वं पुष्यति यदिदं किञ्च ॥ १३ ॥
स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्म्मं तदे-
तत्क्षत्रस्य क्षत्रं यद्धर्म्मस्तस्माद्धर्म्मात्परं नास्त्यथो
अबलीयान् बलीयाꣳसमाशꣳसते धर्म्मेण यथा

---

भा॰ शूद्रो वर्णो यः सृष्टः । पूषणं पुष्यतीति पूषाकः । कः
पुनरसौ पूषेति विशेषतस्तन्निर्दिशति । इयं पृथिवी पूषा ।
स्वयमेव निर्व्वचनमाह । इयं हीदं सर्व्वं पुष्यति पुष्णाति
यदिदं किञ्च ॥ १३ ॥

स चतुरः सृष्ट्वापि वर्णान्नैव व्यभवदुग्रत्वात्क्षत्रस्यानि-
यताशङ्कया तच्छ्रेयोरूपमत्यसृजत । किं तद्धर्म्मं तदेत-
च्छ्रेयोरूपं सृष्टं क्षत्रस्य क्षत्रं क्षत्रस्यापि नियन्तृ उग्रा-
दप्युग्रं यद्धर्म्मो यो धर्म्मस्तस्मात्क्षत्रस्यापि नियन्तृत्वाद्धर्म्मा-
त्परं नास्ति । तेन हि नियम्यन्ते सर्व्वे तत्कथमित्युच्यते । अथो
अप्यबलीयान्दुर्ब्बलतरो बलीयांसमात्मनो बलवत्तर-

---

आ॰ वृद्धिः । पुष्यतीति पुषेरुक्तत्वात्पुनरस्यानर्थकत्वमाशङ्क्याह ।
विशेषत इति । पूषशब्दस्यार्थान्तरे प्रसिद्धत्वात् कथं पृथिव्यां
वृत्तिरित्याशङ्क्याह । स्वयमेवेति ॥ १३ ॥

ननु चातुर्व्वर्ण्ये सृष्टे तावतैव कर्म्मानुष्ठानसिद्धेरलं धर्म्मसृष्ट्ये-
त्यत आह । स चतुर इति । अनियताशङ्कया नियामकाभावे
तस्यानियतत्वसम्भावनयेति यावत् । तच्छब्दः स्रष्टृब्रह्मविषयः ॥
कुतो धर्म्मस्य सर्व्वनियन्तृत्वं क्षत्रस्यैव तत्प्रसिद्धेरित्याह । तत्क-
थमिति । अनुभवमनुसृत्य परिहरति । उच्यत इत्यादिना ॥
तदेवोदाहरति । यथेति । राज्ञा स्पर्द्धमान इति शेषः ॥
धर्म्मस्योत्कृष्टत्वेन नियन्तृत्वे सत्यादभिन्नत्वे हेत्वन्तरमाह ।

उ॰ राज्ञैवं यो वै स धर्म्मः सत्यं वै तत्तस्मात् सत्यं वदन्तमाहुर्धर्म्मं वदतीति धर्म्मं वा वदन्तꣳ सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥ १४ ॥

---

भा॰ मप्याशंसते कामयते जेतुं धर्म्मेण बलेन । यथा लोके राज्ञा सर्व्वबलवत्तमेनापि कुटुम्बिकः । एवं तस्मात् सिद्धं धर्म्मस्य सर्व्वबलवत्तरत्वात्सर्व्वनियन्तृत्वं । यो वै स धर्म्मो व्यवहारलक्षणो लौकिकैर्व्यवह्रियमाणः सत्यं वै तत्सत्यमिति यथाशास्त्रार्थता स एवानुष्ठीयमानो धर्म्मनामा भवति । शास्त्रार्थत्वेन ज्ञायमानस्तु सत्यं भवति । यस्मादेवं तस्मात्सत्यं यथा शास्त्रं वदन्तं व्यवहारकाल आहुः समीपस्था उभयविवेकज्ञाः । धर्म्मं वदतीति प्रसिद्धं लौकिकं न्यायं वदतीति । तथा विपर्य्ययेण धर्म्मं वा लौकिकं व्यवहारं वदन्तमाहुः सत्यं वदति शास्त्रादनपेतं वदतीत्येतद्यदुक्तमुभयं ज्ञायमानमनुष्ठीयमानञ्च तद्धर्म्म एव भवति । तस्मात्

---

आ॰ यो वा इति ॥ कथं धर्म्मस्य सत्यत्वं । स हि पुरुषधर्म्मो वचनधर्म्मः । सत्यत्वमित्यवान्तरभेदादित्याशङ्क्याह । स एवेति ॥ यथोक्ते विवेके लोकप्रसिद्धिं प्रमाणयति । यस्मादिति ॥ उभयशब्दो धर्म्मसत्यविषयो धर्म्मं वदतीत्येतदेवं विभजते । प्रसिद्धमिति ॥ यथा शास्त्रानुसारेण वदन्तं धर्म्मं वदतीति तथा पूर्व्वोक्तवचनवैपरीत्येन धर्म्मं वदन्तं सत्यं वदतीत्याहुरिति योजना ॥ धर्म्ममेव व्याचष्टे । लौकिकमिति ॥ सत्यं वदन्तीत्येतदेव स्फुटयति । शास्त्रादिति ॥ कार्य्यकारणभावेनानयोरेकत्वमुपसंहरति । यदुक्तमिति ॥ शास्त्रार्थसंशये शिष्टव्यवहारान्निश्चयः । यथा यववराहादिशब्देषु धर्म्मसंशयेषु तु शास्त्रार्थवशान्निर्णयः । यथा चैत्यवन्द-

उ० तदेतद्ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः

---

भा० स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञानितरांश्च सर्वानेव नियमयति। तस्मात् स क्षत्रस्यापि क्षत्रमतस्तदभिमानोऽविद्वांस्तद्विशेषानुष्ठानाय ब्रह्मक्षत्रविट्शूद्रनिमित्तविशेषमभिमन्यते। तानि च निसर्गत एव कर्माधिकारनिमित्तानि ॥ १४ ॥

तदेतच्चातुर्वर्ण्यं सृष्टं ब्रह्म क्षत्रं विट् शूद्र इत्युत्तरार्थ उपसंहारो यत्तत्स्रष्टृ ब्रह्म तदग्निनैव नाग्नेयेन रूपेण देवेषु। ब्रह्म ब्राह्मणजातिरभवद्ब्राह्मणो। ब्राह्मणस्वरूपेण मनुष्येषु ब्रह्माभवदितरेषु वर्णेषु विकारान्तरं प्राप्य क्षत्रियेण क्षत्रियोऽभवदिन्द्रादिदेवताधिष्ठितो वैश्येन वैश्यः शूद्रेण

---

आ० नादिश्रुदासेनाभिषेचनादावतो हेतुहेतुमद्भावादुभयोरैक्यमिति भावः ॥ धर्मस्य सत्यादभेदे फलितमाह । तस्मादिति ॥ तस्य सर्वनियन्तृत्वेऽपि प्रवृत्ते किमायातं तदाह । तस्माच्चेति ॥ तर्हि यथोक्तं धर्मवशादेव कर्मानुष्ठानसिद्धेर्वर्णाश्रमाभिमानस्याकिञ्चित्करत्वमित्याशङ्क्याह । अत इति ॥ धार्मिकत्वाद्यभिमानो ब्राह्मण्याद्यभिमानं पुरोधायानुष्ठापयति तदभिमानोऽपि तथैवाभिमानान्तरं पुरस्कृत्यानुष्ठापयेदित्याशङ्क्याह। तानि चेति ॥ १४ ॥

न खल्वविदुषो धार्मिकस्य ब्राह्मण्यादिषु निमित्तेषु सत्सु कर्मप्रवृत्तौ निमित्तान्तरमपेक्ष्यते प्रमाणाभावादित्यर्थः ॥ पुनरुक्तिवैयर्थ्यमाशङ्क्योक्तं। उत्तरार्थं इति। पूर्वत्र देवेषु दर्शितस्य वर्णविभागस्य मनुष्येषूत्तरग्रन्थयोजनार्थ इति यावत् ॥ सृष्टवर्णचतुष्टयनिविष्टमवान्तरविभागमभिधातुमारभते । यत्तदिति ॥

उ॰ शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्याᳪं हि रूपाभ्यां ब्रह्माभवत्

भा॰ शूद्रः। यस्मात् क्षत्रादिषु विकारापन्नमग्नौ ब्राह्मण एव चाविकृतं स्रष्टृ ब्रह्म तस्मादग्नावेव देवेषु देवानां मध्ये लोकं कर्मफलमिच्छन्त्यग्निसम्बद्धं कर्म कृत्वेत्यर्थः। तदर्थमेव हि तद्ब्रह्म कर्माधिकरणत्वेनाग्निरूपेण व्यवस्थितं। तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयत इत्येतदुपपन्नं ब्राह्मणे मनुष्येषु। मनुष्याणां मध्ये कर्मफलेच्छायां नाग्न्यादिनिमित्तक्रियापेक्षा किं तर्हि जातिमात्रस्वरूपप्रतिलम्भेनैव पुरुषार्थसिद्धिः। यत्र तु देवाधीना पुरुषार्थसिद्धिस्तत्रैवाग्न्यादिसम्बन्धक्रियापेक्षा। स्मृतेश्च जप्येनैव तु संसिध्ये-

आ॰ नान्येन देवान्तरस्वरूपेण क्षत्रादिविकारमन्तरेणेति यावत्। विकारान्तरमभिप्राह्मणवत्त्वं। क्षत्रियेणेत्यत्र विवक्षितमर्थमाह। इन्द्रादिदेवताधिष्ठित इति। वैश्येनेति वस्वाद्यधिष्ठितत्वं। शूद्रेणेति पूषाधिष्ठितत्वं॥ अग्न्यादिभावमापन्नस्य क्षत्रादिभावो न तु क्षत्रादिभावमापन्नस्याग्न्यादिभाव इत्येतावन्मात्रेण ब्रह्मणो विकृतत्वाविकृतत्वमभिप्राह्मवत्तुत्यर्थमुक्तमित्यभिप्रेत्य तस्मादित्यादि व्याचष्टे। यस्मादिति॥ यथोक्तप्रार्थनया न्यायत्वं साधयति। तदर्थमेवेति। कर्म फलदानार्थमिति यावत्। मनुष्याणां मध्ये कमपि मनुष्यमवलम्ब्य कर्मफलभोगापेक्षायामधिकरणसम्प्रदानभावेनावस्थिताग्नीन्द्रादिनिमित्तक्रियापेक्षा नास्ति किन्तु ब्राह्मणजातिप्राप्तिमात्रेण तत्सम्बद्धं जप्यादि कर्माविश्यम्भावीति तन्मात्रेण पुरुषार्थः सिध्यतीति प्रतीकग्रहणपूर्वकमाह। मनुष्याणामिति॥ कुत्र तर्हि यथोक्तक्रियापेक्षेति तत्राह। यत्र त्विति॥ देवानां मध्येऽग्निसम्बन्धमेव कर्म कृत्वा पुरुषार्थलाभो मनुष्याणां मध्ये तु

भा॰ ब्राह्मणो नाम संशयः । कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यत इति । पारिव्राज्यदर्शनाच्च । तस्माद्ब्राह्मणत्व एव मनुष्येषु लोकं कर्म्मफलमिच्छन्ति । यस्मादेताभ्यां हि ब्राह्मणाग्निरूपाभ्यां कर्म्मकर्त्रधिकरणरूपाभ्यां यत्स्रष्टृ ब्रह्म साक्षादभवत् ॥

अत्र तु परमात्मलोकमग्नौ ब्राह्मणे चेच्छन्तीति केचित् । तदसत् । अविद्याधिकारे कर्म्माधिकारार्थं वर्णविभागस्य प्रस्तुतत्वात्परेण च विशेषणात् । यदि ह्यत्र लोकशब्देन पर एवात्मोच्येत परेण विशेषणमनर्थकं स्यात्स्वं लोकमदृष्ट्वेति । स्वलोकव्यतिरिक्तश्चेदग्न्यधीनतया प्रार्थ्यमानः प्रकृतो लोकस्ततः स्वमिति युक्तं विशेषणं प्रकृतपरलोकनिवृत्त्य-

---

आ॰ ब्राह्मण्यप्रयुक्तजप्यादिमात्रेण तत्प्राप्तिरित्यत्र प्रमाणमाह । स्मृतेश्चेति । जप्यग्रहणं जातिमात्रप्रयुक्तकर्म्मोपलक्षणार्थं । अन्यदग्निसम्बद्धं कर्म्म ॥ कोऽयं ब्राह्मणो नाम तत्राह । मैत्र इति । सर्व्वेषु भूतेष्वभयप्रदो विशिष्टजातिमानिति यावत् ॥ ननु यथोक्तस्मृतेर्ब्राह्मण्यप्रतिलम्भमात्रादभ्युदयलाभेऽपि कुतस्ततो निःश्रेयससिद्धिस्तत्राह । पारिव्राज्येति । ब्राह्मणा व्युत्थायाथ भिक्षाचर्य्यं चरन्तीति ब्राह्मणस्य पारिव्राज्यं श्रूयते । तच्च सन्न्यासाद्ब्रह्मणः स्थानमिति ब्रह्मलोकसाधनं गम्यते । अतश्च ब्राह्मणजातिनिमित्तं लोकमिच्छन्तीति युक्तमित्यर्थः ॥ ब्रह्मणो मनुष्येष्वित्यस्यार्थमुपसंहरति । तस्मादिति ॥ हेतुवाक्यमादाय व्याचष्टे । यस्मादिति ।

हिशब्दार्थो यस्मादित्युक्तो यत्स्रष्टृ ब्रह्म तदेताभ्यां यस्मात्साक्षादभवत्तस्मादग्नावेवेत्यादि युक्तमिति योजना ॥ अग्नौ हुत्वा ब्राह्मणे च दत्वा परमात्मलक्षणं लोकमाप्तुमिच्छन्तीति भर्तृप्रपञ्चव्याख्यानमनुवदति । अत्रेति ॥ सप्तमी तस्मादित्यादिवाक्यविषया । प्रक्रमालोचनायां कर्म्मफलमिष्टलोकशब्दार्थो न परमात्मा

भा॰ र्थत्वात्स्वत्वेन चाव्यभिचारात्परमात्मलोकस्य। अविद्याकृतानाञ्च स्वत्वव्यभिचारात्। ब्रवीति च कर्मकृतानां व्यभिचारं चीयत एवेति। ब्रह्मणा सृष्टा वर्णाः कर्मार्थं। तच्च कर्म्म धर्म्माख्यं। सर्व्वानेव कर्त्तव्यतया नियन्तृपुरुषार्थसाधनं च। तस्मात्तेनैव चेत्कर्म्मणा स्वो लोकः परमात्माख्योऽविदितोऽपि प्राप्यते किं तस्यैव पदनीयत्वेन क्रियत इत्यत आह॥

---

आ॰ प्रक्रमभङ्गप्रसङ्गादिति दूषयति। तदसदिति॥ कर्म्माधिकारार्थं कर्म्मसु प्रवृत्तिसिद्ध्यर्थमिति यावत्॥ वाक्यशेषगतविशेषणवशादपि कर्म्मफलस्यैवात्र लोकशब्दवाच्यत्वमित्याह। परैश्च चेति॥ तदेव प्रपञ्चयति। यदि हीति॥ परपक्षे स्वमिति विशेषणं व्यावर्त्त्याभावान्न घटते चेत्त्वत्पक्षेऽपि कथं तदुपपत्तिरित्याशङ्क्याह। स्वोलोकेति। परशब्दोऽनात्मविषयः। ननु प्रकृते वाक्ये लोकशब्देन परमात्मा नोच्यते चेदुत्तरवाक्येऽपि तेन नासावुच्येत विशेषाभावादित्याशङ्क्य विशेषणसामर्थ्यान्नैवमित्याह। स्वत्वेन चेति। कर्म्मफलविषयत्वेनापि विशेषणस्य नेतुं शक्यत्वान्न विशेषसिद्धिरित्याशङ्क्याह। अविद्येति॥ तेषां स्वत्वव्यभिचारे वाक्यशेषं प्रमाणयति। ब्रवीति चेति॥ उत्तरवाक्यं व्यावर्त्त्यं पूर्व्वपक्षमाह। ब्रह्मणेति॥ तत्पुनरचेतनमकिञ्चित्करमित्याशङ्क्याह। तच्चेति। सर्व्वैरेव वर्णैः स्वस्वकर्त्तव्यतया तान् प्रति नियन्तृ भूत्वेति योजना। तस्य पुमर्थोपायत्वप्रसिद्धिमादाय फलितमाह। तस्मादिति। अविदितोऽपीति च्छेदः॥ देवताज्ञानकर्म्म मुक्तिहेतुरिति पक्षं प्रतिक्षेप्तुमुत्तरवाक्यमुत्थापयति। अत आहेति॥

उ॰ अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तो

---

भा॰ अथेति पूर्व्वपक्षविनिवृत्त्यर्थः । यः कश्चित् ह वै अस्मात्सांसारिकात् पिण्डग्रहणलक्षणादविद्याकामकर्म्महेतुकादग्न्यधीनकर्म्माभिमानतया वा ब्राह्मणजातिमात्रकर्म्माभिमानितया वा आगन्तुकात्स्वरूपभूताल्लोकात्स्वं लोकमात्माख्यमात्मत्वेनाव्यभिचारित्वाददृष्ट्वाऽहं ब्रह्मास्मीति प्रैति म्रियते । स यद्यपि स्वो लोकोऽविदितोऽविद्यया व्यवहितोऽस्व इवाज्ञात एनं सङ्ख्यापूरण इव लौकिक आत्मा न भुनक्ति न पालयति शोकमोहभयादिदोषापनयेन । यथा च लोके वेदोऽननूक्तोऽनधीतः कर्म्माद्यवबोधकत्वेन न भुनक्त्यन्यद्वा लौकिकं कृष्यादि कर्म्माकृतं स्वात्मनाऽन-

---

आ॰ ज्ञानादेव मुक्तिर्न कर्म्मणेत्यागमप्रसिद्धमिति निपातयोरर्थः । तत्र निमित्तमुपादानञ्चेति द्वयं सङ्क्षिपति । अविद्येति ॥ निमित्तं विवृणोति । अग्न्यधीनेति ॥ आत्माख्यस्य लोकस्य स्वत्वे हेतुमाह । आत्मत्वेनेति । अहं ब्रह्मास्मीत्यदृष्ट्वेति सम्बन्धः ॥ यः परमात्मानमविदित्वैव म्रियते तमेनं परमात्मानं पालयतीति योजना । परमात्मनः स्वरूपत्वादविदितस्यापि पालयितृत्वं स्यादित्याशङ्क्याह । स यद्यपीति । लोकशब्दादुपरिष्टात्तथापीति द्रष्टव्यं । अविदित इत्यस्य व्याख्यानमविद्ययेत्यादि । परमात्माख्यो लोको नाज्ञातो भुनक्तीत्यत्र कर्म्मफलभूतं लोकवैधर्म्म्यं दृष्टान्ततया दर्शयति । अस्व इति ॥ अज्ञातस्यापालयितृत्वे साधर्म्म्यदृष्टान्तमाह । सङ्ख्येति । तथा लौकिको दशमो दशमोऽस्मीत्यज्ञातो न शोकादिनिवर्त्तनेनात्मानं भुनक्ति तथा परमात्मापीत्यर्थः ॥ तत्रैव श्रुत्युक्तं दृष्टान्तद्वयं व्याचष्टे । यथा चे-

उ॰ ऽन्यद्वा कर्म्माकृतं यदिह वा अप्यनेवंविद् महत्पुण्यं कर्म्म करोति तद्धास्यान्ततः क्षीयत

---

भा॰ भिव्यञ्जितमात्मीयफलप्रदानेन भुनक्त्येवमात्मा स्वो लोकः स्वेनैव नित्यात्मस्वरूपेणानभिव्यञ्जितोऽविद्यादिप्रच्छादनेन न भुनक्त्येव। ननु किं स्वलोकदर्शननिमित्तपरिपालनेन कर्म्मणः फलप्राप्तिर्भाव्यादिष्टफलनिमित्तस्य च कर्म्मणो बाहुल्यात्तन्निमित्तं पालनमचयं भविष्यति। तन्न। कृतस्य चयवत्त्वादित्येतदाह । यदि ह वै संसारेऽद्भुतवत्कश्चिन्म-हात्माप्यनेवंवित् स्वं लोकं यथोक्तेन विधिना विदान्म-हदश्वमेधादि पुण्यं कर्म्मेष्टफलमेव नैरन्तर्य्येण करोत्य-नेनैवानन्त्यं मम भविष्यतीति। तत्कर्म्म ह अस्याविद्याव-तोऽविद्याजनितकामहेतुत्वात्स्वप्रदर्शनविभ्रमोद्भूतविभूति-वदन्ततोऽन्ते फलोपभोगस्य चीयत एव। तत्कारणयोर-

---

आ॰ त्वादिना। अविद्यादीत्यादिग्रन्थेन तदुक्तं सर्व्वं सङ्गच्छते॥ यदि-हेत्यादिवाक्यापोह्यचोद्यमुत्थापयति। न चेति॥ तन्वनिष्टफल-निमित्तस्यापि कर्म्मणः प्राप्तिर्भाव्यात्कथं कर्म्मणो मोक्षः सेत्स्यति तत्राह। इष्टेति। बाहुल्यमश्वमेधादिकर्म्मणो महत्तरत्वं तद्धि दुरितमभिभूय मोक्षमेव सम्पादयिष्यतीत्यर्थः॥ यत्कृतकं तद-नित्यमिति न्यायमाश्रित्य परिहरति। तन्नेत्यादिना॥ सत्यर्थः संसार इति निपातार्थं सूचयति। अद्भुतवदिति॥

अनेवंवित्त्वं व्याकरोति। स्वं लोकमिति। यथोक्तो विधिर-न्वयव्यतिरेकादिः॥ पुण्यकर्म्मच्छिद्रेषु दुरितप्रसक्तिं निवारयति। नैरन्तर्य्येणेति॥ तथा पुण्यं सञ्चिन्वतोऽभिप्रायमाह। अनेनेति॥ प्रक्रान्तयच्छब्दापेक्षितं कथयति। तत्कर्म्मेति॥ प्रागुक्तन्याया-

उ॰ एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म्म क्षीयते

---

भा॰ विद्याकामयोश्चलत्वात्तत्क्षयश्चोपपत्तिस्तस्मात् पुण्यकर्म्मफलपालनमन्याशास्त्येव। अत आत्मानमेव स्वं लोकं। आत्मानमिति स्वं लोकमित्यस्मिन्नर्थे स्वं लोकमिति प्रकृतत्वादिह च स्वशब्दस्याप्रयोगादुपासीत। स य आत्मानमेव लोकमुपास्ते। तस्य किमित्युच्यते। न हास्य कर्म्म क्षीयते। कर्म्माभावादेवेति नित्यानुवादः। यथाऽविदुषः कर्म्मक्षयलक्षणं संसारदुःखं सन्ततमेव। न तथा तदस्य विद्यत इत्यर्थः। मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चनेति यद्वत्। स्वात्मलोकोपासकस्य विदुषोऽविद्यासंयोगात्कर्म्मैव न क्षीयत इत्यपरे वर्णयन्ति। लोकशब्दार्थश्च कर्म्म-

---

आ॰ योती निपातः। आरब्धस्यैव कार्य्यस्य भ्रुवत्वमाशङ्क्याह। तत्मादवयोरिति॥ मुक्तेरनित्यत्वदोषसमाधिस्तर्हि केन प्रकारेण स्यादित्याशङ्क्याह। अत इति॥ आत्मशब्दार्थमाह। स्वं लोकमिति॥ तदेव स्फुटयति। आत्मानमिति॥ आत्मशब्दस्य प्रकृतस्वलोकविषयत्वे हेत्वन्तरमाह। इह चेति। प्रयोगे तु पुनरुक्तिभयादर्थान्तरविषयत्वमपि स्यादित्यर्थः॥ विद्याफलमाकाङ्क्षाद्वारा निक्षिपति। स य इति॥ कर्म्मफलस्य क्षयित्वमुक्त्वा कर्म्मणोऽक्षयत्वं वदतो व्याहतिमाशङ्क्याह। कर्म्मेति॥ वाक्यस्य विवक्षितमर्थं वैधर्म्म्यं दृष्टान्तेन व्याचष्टे। यथेति। अविदुष इति छेदः॥ कर्म्मक्षयेऽपि वा विदुषो दुःखाभावे दृष्टान्तमाह। मिथिलायामिति। आत्मानमित्यादि केवलत्यागान्मुक्तिरित्येवंपरतया व्याख्यातं॥ सम्प्रति भर्तृप्रपञ्चव्याख्यामुत्थापयति।

भा॰ समवायिनं द्विधा परिकल्पयन्ति किलैको व्याकृतावस्थः कर्म्माश्रयो लोको हिरण्यगर्भाख्यस्तं कर्म्मसमवायिनं लोकं व्याकृतं परिच्छिन्नं य उपास्ते तस्य किल परिच्छिन्नकर्म्मात्मदर्शिनः कर्म्म क्षीयते। तमेव कर्म्मसमवायिनं लोकमव्याकृतावस्थं कारणरूपमापाद्य यस्तूपास्ते तस्यापरिच्छिन्नकर्म्मात्मदर्शित्वात्तस्य च कर्म्म न क्षीयत इति। भवतीयं शोभना कल्पना न तु श्रौती। स्वलोकशब्देन प्रकृतस्य परमात्मनोऽभिहितत्वात्॥

---

आ॰ स्वात्मेति॥ आत्मलोकोपासकस्य कर्म्माभावे कथं तदक्षयवाचो युक्तिरित्याशङ्क्य कर्म्माभावस्यासिद्धिमभिसन्धाय कर्म्मसाध्यं लोकं व्याकृताव्याकृतरूपेण भिनत्ति। लोकशब्दार्थमिति। चैतन्ये-च्छिकी कल्पना न तु श्रौतीति वक्तुं किलेत्युक्तं॥ तत्राद्यं लोकशब्दार्थमनूद्य तदुपासकस्य दोषमाह। एक इति। परिच्छिन्नः कर्म्मात्मा तत्साध्यो व्याकृतावस्थो लोकस्तस्मिन्नहंबुद्ध्योपासकस्येति यावत्॥ किलशब्दस्तु पूर्ववत्। द्वितीयं लोकशब्दार्थमनूद्य तदुपासकस्य लाभं दर्शयति। तमेवेति। यथा कुण्डलादेरन्तर्बहिरन्वेषणे सुवर्णातिरिक्तरूपानुपलम्भात्तद्रूपेणास्य नित्यत्वं। तथा कर्म्मसाध्यं हिरण्यगर्भादिलोकं कार्य्यत्वादव्याकृतं कारणमेवेत्यङ्गीकृत्य यस्तस्मिन्नहंबुद्ध्योपास्ते तस्यापरिच्छिन्नकर्म्मसाध्यलोकात्मोपासकत्वाद्रूपविस्तं कर्म्मित्वञ्च घटते। तस्य स्वस्यात्मैव कर्म्म। तेन तस्य तन्न क्षीयते। यः पुनरद्वैतावस्थामुपास्ते तस्यात्मैव कर्म्म भवतीति हि भर्तृप्रपञ्चैरुक्तमित्यर्थः॥ आत्मानमित्यादि समुच्चयपरमिति प्राप्तं पक्षं प्रत्याह। भवतीति॥ श्रौतत्वाभावे हेतुमाह। स्वलोकेति। स्वं लोकमदृष्ट्वेत्यत्र स्वलोकशब्देन परस्य प्रकृतस्यात्मनमेवेत्यत्र प्रकृतहानाप्रकृतप्रक्रियापरिहारार्थमुक्तत्वान्नात्र लोकद्वैविध्यकल्पना युक्तेत्यर्थः।

उ॰ अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते। १५।

भा॰ स्वं लोकमिति प्रस्तुत्य स्वशब्दं विहायात्मशब्दप्रक्षेपेण पुनस्तस्यैव प्रतिनिर्देशादात्मानमेव लोकमुपासीतेति। तत्र कर्म्मसमवायिलोककल्पनाया अनवसर एव। परेण च केवलविद्याविषयेण विशेषणाशेषां नोऽयमात्मा लोक इति पुत्रकर्म्मापरविद्याकृतेभ्यो हि लोकेभ्यो विशिनष्टि अयमात्मा नो लोक इति। न ह्यस्य केन च न कर्म्मणा लोको मीयते एषोऽस्य परमलोक इति च। तैः सविशेषणैरस्यैकवाक्यता युक्ता। इहापि स्वं लोकमिति विशेषणदर्शनादस्मात्कामयत इत्ययुक्तमिति चेदिह स्वो लोकः परमात्मा तदुपासनात् स एवभवतीति स्थिते यद्यत्कामयते तत्तदस्मादात्मनः

आ॰ लोकशब्देनात्र परमात्मपरिग्रहे हेत्वन्तरमाह। स्वं लोकमितीति। यथा लोकस्य स्वशब्दार्थो विशेषणं तथात्मानमित्यत्र स्वशब्दपर्यायात्मशब्दार्थस्तस्य विशेषणं दृश्यते न च कर्म्मफलस्य मुख्यमात्मत्वमतो लोकशब्दोऽत्र परमात्मैवेत्यर्थः॥ प्रकरणाविशेषाच्च सिद्धमर्थं दर्शयति। तत्रेति॥ परस्यैव लोकशब्दार्थत्वे हेत्वन्तरमाह। परेणेति॥ उत्तरमेव प्रपञ्चयति। पुत्रेति॥ अथ परेषु वाक्येषु परमात्मा लोकशब्दार्थः। प्रकृते तु कर्म्मफलमिति व्यवस्थेति चेन्नैवमेकवाक्यत्वसम्भवे तद्भेदस्यान्याय्यत्वादित्याह। तैरिति॥ एकवाक्यत्वसम्भावनामेव दर्शयति। इहापीति। यथोत्तरत्रात्मादिशब्देन लोको विशेषितस्तथात्मानमित्यत्राप्यात्मशब्देन विशिष्यते। पूर्व्ववाक्ये च स्वं लोकमदृष्ट्वेति स्वशब्देनात्मवाचिना तस्य विशेषणं दृश्यते। तथा च पूर्व्वापरालोचनायामेकवाक्यत्वसिद्धिरित्यर्थः॥ प्रकरणेन परस्य लोकशब्दार्थत्वमयुक्तं लिङ्गविरोधादिति चोदयति। अस्मादिति॥ तदेव विवृणोति। इहेत्यादिना॥ अर्थवादस्थं लिङ्गं

भा॰ सृजत इति तदात्मप्राप्तिव्यतिरेकेण फलवचनमयुक्तमिति चेन्न। स्वलोकोपासनस्तुतिपरत्वात्स्वस्मादेव लोकात्सर्व्वमिष्टं सम्पद्यत इत्यर्थो नान्यदतः प्रार्थनीयमाप्तकामत्वात्। आत्मतः प्राण आत्मत आशा इत्यादि श्रुत्यन्तरेण। यथा सर्व्वात्मभावप्रदर्शनार्थो वा पूर्व्ववद्यदि हि पर एवात्मा सम्पद्यते तदा युक्तोऽस्माद्ध्येवात्मन इत्यात्मशब्दप्रयोगः स्वस्मादेव प्रकृतात्मनो लोकादित्येवमर्थः। अन्यथाऽव्याकृतावस्थात्कर्म्मणो लोकादिति सविशेषणमवक्ष्यत्। प्रकृतपरमात्मलोकव्यावृत्तये व्याकृतावस्थाव्यावृत्तये च। न ह्यस्मिन् प्रकृते विशेषितेऽश्रुतान्तरालावस्था प्रतिपत्तुं शक्यते॥१५॥

---

आ॰ न प्रकरणाद्दूरवदिति मत्वा समाधत्ते। नेत्यादिना॥ स्तुतिमेव स्पष्टयति। स्वस्मादेवेति। लोकाज्ज्ञातादिति शेषः। यथाछान्दोग्ये स्तुत्यर्थमात्मनः सष्टृत्वमुच्यते तथात्राप्यात्मलोकं स्तोतुमेतत्फलवचनमित्याह। आत्मत इति॥ भवतु वा माभूदस्माद्ध्येवेत्यादिरर्थवादस्तथापि तस्य सर्व्वात्मत्वप्रदर्शनार्थत्वाद्युक्तमत्र लोकशब्देन परमात्मग्रहणमित्याह॥ सर्व्वात्मेति। तस्मात्तत्सर्व्वमभवदिति वाक्यं दृष्टान्तयति। पूर्व्ववदिति॥ किञ्चात्मशब्दस्य त्रिधा परिच्छेदशून्यार्थवाचिताया यच्चाप्नोतीत्यादिन्यायेन सिद्धत्वात्तत्सामानाधिकरण्याल्लोकशब्दस्यापि तदर्थत्वात्परस्यैवात्र लोकत्वमित्याह। यदि हीति। किञ्च यदि लोकशब्देन परं हित्वार्थान्तरमुच्यते तदा सविशेषणं वाक्यं स्यादन्यथा स्वं लोकमिति प्रकृतपरमात्मलोकस्य त्वत्पक्षेऽनन्तरोक्तप्रकृतलोकस्य चाव्यावृत्त्ययोगात्। न चात्र सविशेषणं वाक्यं दृष्टमतः स्वलोकमिति प्रकृतः परमात्मैवात्मापि लोक इत्याह। अन्यथेति॥ विशेषणं विनैवास्मादित्यत्र पराभ्यामर्थान्तरं किं न स्यादित्याशङ्क्याह। न हीति॥ स्वं लोकमिति प्रकृते परमात्मन्यात्मानमेवेति विशेषिते चाव्याकृताख्यापरापराभ्यामन्तरावस्था न प्रतिपत्तुं शक्यते तस्याः श्रुतत्वाभावादित्यर्थः॥१५॥

उ॰ अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यद-नुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति

---

भा॰ अथो अयं वा आत्मा अत्राविद्वान्वर्णाश्रमाद्यभिमानो धर्म्मेण नियम्यमानो देवादिकर्म्मकर्त्तव्यतया पशुवत्प-रतन्त्र इत्युक्तं। कानि पुनस्तानि कर्म्माणि यत्कर्त्तव्यतया पशुवत्परतन्त्रो भवति। के वा ते देवादयो येषां कर्म्मभिः पशुवदुपकरोतीति तदुभयं प्रपञ्चयति। अथो इत्ययं वाक्योपन्यासार्थः। अयं यः प्रकृतो गृही कर्म्माधिकृतो ऽविद्वाञ्छरीरेन्द्रियसङ्घातादिविशिष्टः पिण्ड आत्मेत्युच्यते। सर्व्वेषां देवादीनां पिपीलिकान्तानां भूतानां लोको भोग्य आत्मेत्यर्थः। सर्व्वेषां वर्णाश्रमादिविहितैः कर्म्म-भिरुपकारित्वात्। कैः पुनः कर्म्मविशेषैरुपकुर्व्वन्केषां भूत-विशेषाणां लोक इत्युच्यते। स गृही यज्जुहोति यद्यजते। यागो देवतामुद्दिश्य स्वत्वपरित्यागः। स एवासेचनाव-धिको होमस्तेन होमयागलक्षणेन कर्म्मणावश्यकर्त्तव्यत्वेन देवानां पशुवत्परतन्त्रत्वेन प्रतिबद्ध इति लोकोऽथ यदनु-

---

आ॰ कण्डिकान्तरमवतार्य्य वृत्तमनूद्याकाङ्क्षापूर्व्वकं तात्पर्य्यमाह। अथो इत्यादिना। अथेत्यविद्यावस्थापूर्व्वप्रश्नो वा गृह्यते॥ अपि-पर्य्यायस्याथोशब्दस्यासङ्गतिमाशङ्क्य व्याकरोति। अथो इतीति॥ परस्यापि प्रकृतत्वात्ततो विभिनष्टि। गृहीति। गृहित्वे हेतुरवि-द्वानित्यादिरितरपर्य्युदासार्थं कर्म्माधिकृत इत्युक्तं॥ कथमुक्त-स्यात्मनः सर्व्वभोग्यत्वमाशङ्क्याह। सर्व्वेषामिति॥ तदेव प्रश्नद्वारा

उ॰ यत्प्रजामिच्छते तेन पितॄणामथ यन्मनुष्यान्वा-
सयते यदेभ्योऽशनं ददाति तेन मनुष्याणां अथ
यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य
गृहेषु श्वापदा वयाꣳस्यापिपीलिकाभ्य उपजी-

---

भा॰ ब्रूते स्वाध्यायमधीतेऽहरहस्तेन ऋषीणां लोकोऽथ यत्पि-
तृभ्यो निपृणाति प्रयच्छति पिण्डोदकादि । यच्च प्रजामि-
च्छते प्रजार्थमुद्यमं करोतीच्छा चोत्पत्त्युपलक्षणार्था प्रजा-
ञ्चोत्पादयतीत्यर्थः । तेन कर्म्मणावश्यकर्त्तव्यत्वेन पितॄणां
लोकः पितॄणां भोग्यत्वेन परतन्त्रो लोकः । अथ यन्मनुष्यान्
वासयते भूम्युदकादिदानेन गृहे यच्च तेभ्यो वसद्भ्योऽवसद्भ्यो
वार्थिभ्योऽशनं ददाति तेन मनुष्याणां ॥ अथ यत्पशु-
भ्यस्तृणोदकं विन्दति लम्भयति तेन पशूनां यदस्य
गृहेषु श्वापदावयांसि च पिपीलिकाभिः सह कणबलि-
भाण्डक्षालनाद्युपजीवन्ति तेन तेषां लोको यस्मादयमे-
तानि कर्म्माणि कुर्व्वन्नुपकरोति देवादिभ्यस्तस्माद्यथाह

---

आ॰ प्रकटयति । कैः पुनरिति ॥ यजतिजुहोत्योस्त्यागार्थत्वेनाविशेषा-
त्पुनरुक्तिमाशङ्क्य यजतिश्चोदना द्रव्यदेवताक्रियासमुदाये कृतार्थ-
त्वादिति न्यायेनाह । याग इति । आसेचनं प्रक्षेपः । उक्तञ्च ।
जुहोतिरासेचनाधिकः स्यादिति । यथोक्तहोमादिभिर्देवादीन्
प्रत्युपकुर्व्वतो गृहिणोऽविद्यया प्रतिबन्धसम्भवात्तदुपकारित्व-
व्यावृत्तिरित्याशङ्क्याह । यस्मादिति ॥ पूर्व्वेषामथशब्दानाम-
भिप्रेतमर्थमनूद्य समनन्तरवाक्यमवतार्य्य तदर्थमाह । तस्मा-
दिति ॥ देवादीनां कर्म्माधिकारिणि कर्तृत्वादिपरिपालन-

उ० वन्ति तेन तेषां लोको यथाह वै स्वाय लोकायारि-
ष्टिमिच्छेदेवꣳ हैवंविदे सर्वाणि भूतान्यरिष्टि-
मिच्छन्ति तद्वा एतद्विदितं मीमाꣳसितं ॥ १६ ॥

---

भा० वै लोके स्वाय लोकाय स्वस्मै देहायारिष्टिमविनाशं स्वभावात्प्रच्युतिमिच्छेत्स्वस्वभावप्रच्युतिभयात्पोषणरक्षणादिभिः सर्व्वतः परिपालयेदेवं ह एवंविदे सर्व्वभूतभोग्योऽहमनेन प्रकारेण मयाऽवश्यमृणिवत्प्रतिकर्त्तव्यमित्येवमात्मानं परिकल्पितवते सर्व्वाणि भूतानि देवादीनि यथोक्तान्यरिष्टिमविनाशमिच्छन्ति स्वत्वाऽप्रच्युत्यै सर्व्वतः संरक्षन्ति कुटुम्बिन इव पशूंस्तस्मादेषां तन्न प्रियमित्युक्तं । तद्वै एतन्मदेतद्यथोक्तानां कर्म्मणामृणवदवश्यकर्त्तव्यत्वं पञ्चमहायज्ञप्रकरणे विदितं कर्त्तव्यतया मीमांसितं विचारितञ्चावदानप्रकरणे ॥ १६ ॥

---

व्या० मेव परिरक्ष्यमिति विवक्षित्वा पूर्व्वोक्तं स्मारयति। तस्मादिति ॥ यथोक्तं कर्म्म कुर्व्वन् यद्यपि देवादीन् प्रत्युपकरोति तथापि न तत्कर्त्तृत्वमावश्यकं मानाभावादित्याशङ्क्याह । तद्वा इति ॥ भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञश्चेत्येवं पञ्च महायज्ञाः । ननु श्रुतमपि विचारं विना नानुष्ठेयं। न हि सञ्चरोदनादि श्रुतमित्येवानुष्ठीयते तत्राह । मीमांसितमिति ॥ तदेतदवदयते यद्यजते स यदग्नौ जुहोतीत्याद्यवदानप्रकरणं । ऋणं ह वावजायते जायमानो योऽस्तीत्यादिनार्थवादेनेति शेषः ॥ १६ ॥

भा॰ आत्मैवेदमग्र आसीत् । ब्रह्मविद्वांश्चेत्तस्मात्पशुभा-
वात्कर्त्तव्यताबन्धनरूपात्प्रतिमुच्यते । केनायं कारितः
कर्म्मबन्धनाधिकारेऽवश इव प्रवर्त्तते न पुनस्तद्विमोक्षणो-
पाये विद्याधिकार इति । ननूक्तं देवा रक्षन्तीति । बाढं ।
कर्म्माधिकारे स्वगोचरारूढानेव तेऽपि रक्षन्ति । अन्यथा
कृताभ्यामागमकृतनाशप्रसङ्गात् । न तु सामान्यपुरुषमात्रं
विशिष्टाधिकारानारूढं तस्माद्भवितव्यं । तेन येन प्रेरितो-
ऽवश एव बहिर्मुखीभवति स्वस्माल्लोकात् । सर्वाविद्या साऽ-
विद्यावान् हि बहिर्मुखीभूतः प्रवर्त्तते । सापि नैव प्रव-
र्त्तिका । वस्तुस्वरूपावरणात्मिका हि सा । प्रवर्त्तकवीजत्वन्तु

---

आ॰ वाक्यान्तरमादाय व्याख्यातुं पातनिकां करोति । आत्मै-
वेत्यादिना ॥ कर्म्मैव बन्धनं तत्राधिकारोऽनुष्ठानं तस्मिन्निति
यावत् । विद्याधिकारस्तदुपाये श्रवणादौ प्रवृत्तिस्तत्रेत्यर्थः ॥
यथोक्ताधिकारिणो देवादिभीरक्षणं प्रवृत्तिमार्गे नियमेन
प्रवर्त्तकमिति शङ्कते । नन्विति ॥ उक्तमङ्गीकरोति । बाढ-
मिति ॥ तर्हि प्रवर्त्तकान्तरं न वक्तव्यं तत्राह । कर्म्माधिकारेति ॥
कर्म्मस्वधिकारेण स्वगोचरत्वं प्राप्तानेव देवादयोऽपि रक्षन्ति न
सर्व्वाश्रमसाधारणं ब्रह्मचारिणमतोऽस्य कर्म्ममार्गे प्रवृत्तौ देवा-
दिरक्षणस्याहेतुत्वाद्ब्रह्मचारिणो निवृत्तिं त्यक्त्वा प्रवृत्तिपरत्वपक्ष-
पाते कारणं वाच्यमित्यर्थः ॥ मनुष्यमात्रकर्म्मण्येव ते बलात्प्रवर्त्त-
यन्ति तेषामचिन्त्यशक्तित्वादित्याशङ्क्याह । अन्यथेति ॥ स्वगोचर-
रूढानेवेत्येवकारस्य व्यावर्त्त्यं कीर्त्तयति । न त्विति ॥ विशिष्टाधि-
कारो गृहस्थानुष्ठेयकर्म्मसु गृहस्थत्वेन स्वामित्वं तेन देवगो-
चरतामप्राप्तमित्यर्थः ॥ देवादिरक्षणस्याकारणत्वे फलित-
माह । तस्मादिति ॥ प्रत्यगविद्या यथोक्ताधिकारिणो नियमेन
प्रवृत्त्यनुरागे हेतुरिति शङ्कते । नन्विति ॥ तदेव स्फुटयति ।

उ॰ आत्मैवेदमग्र आसीदेक एव सोऽकामयत

---

भा॰ प्रतिपद्यतेऽन्धत्वमिव गर्त्तादिपतनप्रवृत्तिहेतुः। एवं तर्त्तर्हि
उच्यतां किं यत्प्रवृत्तिहेतुरिति। तदिहाभिधीयते। एषणा
कामः सः स्वाभाविक्यामविद्यायाञ्च वर्त्तमाना बालाः
प्रवर्त्तन्ते। पराञ्चः कामाननुयन्तीति काठकश्रुतौ। स्मृतौ च
काम एष इत्यादि। मानवे च सर्व्वा प्रवृत्तिः कामहेतुक्ये-
वेति। स एषोऽर्थः सविस्तरः प्रदर्श्यत इहाध्यायपरिसमाप्तेः॥

आत्मैवेदमग्र आसीत्। आत्मैव स्वाभाविकोऽविद्वान्
कार्य्यकरणसंघातलक्षणो वर्णी अग्रे प्राग्दारसम्बन्धा-
दात्मेत्यभिधीयते तस्मादात्मनः पृथग्भूतं काम्यमानं

---

आ॰ अविद्यावानिति। तस्याः स्वरूपेण प्रवर्त्तकत्वं दूषयति। स्वापीति॥
अविद्यायास्तर्हि प्रवृत्त्यन्वयव्यतिरेकौ कथमित्याशङ्क्य कारण-
कारणत्वेनेत्याह। प्रवर्त्तकेति॥ सत्यन्यस्मिन् कारणे कारणमेवा-
विद्याप्रवृत्तेरिति चेत्तत्राह। एवं तर्हीति॥ उत्तरवाक्यमुत्त-
रत्वेनावतार्य्य तस्मिन् विवक्षितं प्रवर्त्तकं सङ्क्षिपति। तदिहा-
भिधीयत इति॥ तत्रार्थतः श्रुत्यन्तरं संवादयति। स्वाभावि-
क्यामिति॥ तत्रैव भगवतः सम्मतिमाह। स्मृतौ चेति॥ अथ
केन प्रयुक्तोऽयमित्यादिप्रश्नस्योत्तरं काम एष क्रोध एष रजो-
गुणसमुद्भव इत्यादि॥ अकामतः क्रिया काचिद्दृश्यते नेह कस्य-
चित्। यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितमिति वाक्यमा-
श्रित्याह। मानवे चेति॥ दर्शितमिति शेषः। उक्तेऽर्थे स्रती-
याध्यायशेषमपि प्रमाणयति। स एषोऽर्थ इति॥

एवं तात्पर्य्यमुक्त्वा प्रतीकमादाय पदानि व्याकरोति।
आत्मैवेत्यादिना। वर्णी द्विजत्वद्योतको ब्रह्मचारीति यावत्॥
कथं तर्हि हेत्वभावे तस्य कामित्वमपि स्यादित्याशङ्क्याह। जाया-

उ॰ जाया मे स्याद्थ प्रजायेयाथ वित्तं मे स्याद्थ कर्म्म कुर्वीयेत्येतावान् वै कामो नेच्छंश्च-

भा॰ जायादिभेदरूपं नासीत् स एवैक आसीज्जायाद्येषणा वीजभूताविद्यावानेक एवासीत्स्वाभाविक्या स्वात्मनि कर्त्रादिकारकक्रियाफलात्मकताध्यारोपलक्षणया ऽविद्या-वासनया वासितः। सोऽकामयत कामितवान्। कथं जाया कर्म्माधिकारहेतुभूता मे मम कर्त्तुः स्यात्तया विनाऽह-मनधिकृत एव कर्म्मण्यतः कर्म्माधिकारसम्पत्तये भवे-ज्जाया। अथाहं प्रजायेय प्रजारूपेणाहमेवोत्पद्येय। अथ वित्तं मे स्यात्कर्म्मसाधनं गवादिलक्षणमथाहमभ्युदयनिः श्रेयससाधनं कर्म्म कुर्व्वीय येनाहमनृणी भूत्वा देवादीनां लोकान् प्राप्नुयां तत्कर्म्म कुर्व्वीय। काम्यानि च पुत्त्रवि-त्तस्वर्गादिसाधनान्येतावान् वै काम एतावद्विषयपरि-च्छिन्न इत्यर्थः। एतावानेव हि कामयितव्यो विषयो यदु जायापुत्त्रवित्तकर्म्माणि। साधनलक्षणैषणा। लोकास्त्र चयो

आ॰ दोति॥ सशब्दं व्याकुर्व्वन्नुत्तरवाक्यमादायावशिष्टं व्याचष्टे। स्वाभा-विक्येति॥ कामनाप्रकारं प्रश्नपूर्व्वकं प्रकटयति। कथमिति॥ कर्म्माधिकारहेतुत्वं तस्याः साधयति। तयेति॥ प्रजां प्रति जायाया हेतुत्वद्योतकोऽथशब्दः। प्रजाया मानुषवित्तात्मभावमभ्युपेत्य द्वितीयोऽथशब्दः। तृतीयवस्तुवित्तस्य कर्म्मानुष्ठाने हेतुत्वविव-क्षयेति विभागः॥ कर्म्मानुष्ठानप्रयोजनमाह॥ येनेति॥ तत्किं नित्यनैमित्तिककर्म्मणामेवानुष्ठानं नेत्याह। काम्यानि चेति॥ क्रिया पदमनुषक्तुं च शब्दः। कामशब्दस्य यथाश्रुतमर्थं

उ॰ नातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते

भा॰ मनुष्यलोकः पितृलोको देवलोक इति फलभूता साधनैषणायास्त्रयाः। एतदर्था हि जायापुत्रवित्त-कर्म्मलक्षणा साधनैषणा। तस्मात् सैकैवैषणा या लोकैषणा सैव सत्यैषणा साधनापेक्षेति द्विधाऽतोऽव-धारयिष्यत्युभे ह्येते एषणे एवेति। फलार्थत्वात्सर्व्वा-रम्भस्य। लोकैषणार्थप्राप्तोक्तैवेत्येतावान् वै एतावानेव काम इत्यवध्रियते। भोजनेऽभिहिते तृप्तिर्न हि पृथ-गभिधेया। तदर्थत्वाद्भोजनस्य। ते एते एषणे साध्यसाधनल-क्षणे कामो येन प्रयुक्तो विद्वानवश एव कोशकारवदा-त्मानं वेष्टयति कर्म्ममार्गं एवात्मानं न प्रणिदधद्बहिर्मु-खीभूतो न स्वं लोकं प्रतिजानाति। तथा च तैत्तिरीयके अग्निमुग्धो हैव धूमतान्तः स्वं लोकं न प्रतिजानातीति। कथं

आ॰ प्रत्येकैतावानित्यादिवाक्यस्याभिप्रायमाह। साधनलक्षणेति॥ अस्याः साधनैषणायाः फलभूता इति सम्बन्धः॥ द्वयोरेषणा-त्वमुक्ता लोकैषणा परिशिनष्टि। एतदर्था हीति॥ कथ-न्तर्हि साधनैषणोक्तिरित्याशङ्क्याह। सैवेति॥ एतेन वाक्यशेषो-ऽप्यनुगुणोभवतीत्याह। अत इति॥ साधनवत्फलमपि काम-मात्रत्वेनाथन्तर्हि श्रुत्या साधनमात्रमभिधायैतावानवध्रियते तत्राह। फलार्थत्वादिति॥ उक्तसाधने साध्यमार्थिकमित्यत्र दृष्टान्तमाह। भोजन इति॥ साधनोक्तौ साध्यस्यार्थादु-क्तेरेतावानिति द्वयोरनुवादेऽपि कथमेषणात्वे कामशब्दस्तत्र प्रयुज्यते। नहि तौ पर्य्यायौ। न च तदवाच्यत्वे तयोरनर्थ-कतेत्याशङ्क्यापर्य्यायत्वमेषणाकामशब्दयोरपेत्याह। त एत इति॥ वेष्टनमेव स्पष्टयति। कर्म्ममार्ग इति॥ अग्निमुग्धोऽग्निरेव

उ० जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नो-

---

भा० पुनरेतावत्त्वमवधार्य्यते । कामानामनन्तत्वादनन्ता हि कामा इत्येतदाशङ्क्य हेतुमाह । यस्मान्नेच्छंश्च न इच्छन्नपि अतोऽस्मात्फलसाधनलक्षणाद्भूयोऽधिकतरं न विन्देत् । न हि लोके फलसाधनव्यतिरिक्तं दृष्टमदृष्टं वा लब्धव्यमस्ति। लब्धव्यविषयो हि कामस्तस्य चैतद्व्यतिरेकेणाभावाद्युक्तं वक्तुमेतावान् वै काम इति । एतदुक्तं भवति दृष्टार्थमदृष्टार्थं वा साध्यसाधनलक्षणमविद्यावत् पुरुषाधिकारविषयमेषणाद्वयं कामोऽतोऽस्माद्विदुषा व्युत्थातव्यमिति । यस्मादेवमविद्वानात्मा कामी पूर्व्वं कामयामास तथा पूर्व्वतरोऽपि । एषा लोकस्थितिः प्रजापतेश्चैवमेष सर्ग आसीत् सोऽबिभेदविद्यया । ततः कामप्रयुक्त एकाक्यरममाणो ऽरत्युपघाताय स्त्रियमैच्छत्तां समभवत्ततः सर्गोऽयमा-

---

आ० होमादिद्वारेण मम श्रेयःसाधनं नात्मज्ञानमित्यभिमानवान् धूमतान्तो धूमेन ग्लानिमापन्नः । धूमतां वा ममान्ते देहावसाने भवतीति मन्यमानस्ते धूममभिसम्भवन्तीति श्रुतेः ॥ स्वं लोकमात्मानं वाक्यान्तरमुत्थाप्य व्याचष्टे । कथमित्यादिना । तस्मादेतावत्त्वमवधार्य्यते । तेषामिति शेषः ॥ उक्तमेवार्थं लोकदृष्टिमवष्टभ्य स्पष्टयति । न हीति ॥ लब्धव्यान्तराभावेऽपि कामयितव्यान्तरं स्यादित्याशङ्क्याह । लब्धव्येति । एतद्व्यतिरेकेण साध्यसाधनातिरेकेणेति यावत् ॥ तयोर्द्वयोरपि कामत्वविधायिश्रुतेरभिप्रायमाह । एतदुक्तमिति ॥ कामस्यानर्थत्वात् साध्यसाधनयोश्च तावन्मात्रत्वात्सर्गादौ पुमर्थताविश्वासं त्यक्त्वा स्वप्रकाशमनुष्याभ्यसिद्धेभ्योऽप्येव-

उ॰ त्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता मन एवास्यात्मा वाग्जाया ।

भा॰ सीदिति युक्तं। तस्मात्तत्पूर्वाऽप्येतर्ह्येतस्मिन्नपि काल एकाकी सन् प्राग्दारक्रियातः कामयते जाया मे स्यादथ प्रजायेय अथ वित्तं मे स्यादथ कर्म्म कुर्व्वीयेत्युक्तार्थं वाक्यं। स एवं कामयमानः सम्पादयंश्च जायादीन् यावत्समस्तान् स एतेषां यथोक्तानां जायादीनां एकैकमपि न प्राप्नोत्यकृत्स्नोऽसम्पूर्णोऽहमित्येतावदात्मानं मन्यते। पारिशेष्यात्समस्तानेवैतान् सम्पादयति यदा तदा तस्य कृत्स्नता। यदा तु न शक्नोति कृत्स्नतां सम्पादयितुं तदास्याकृत्स्नत्वं तदास्य कृत्स्नत्वसम्पादनायाहतस्योक्तस्याकृत्स्नत्वाभिमानिनः कृत्स्नतेयमेवं भवति। कथमयं कार्य्यकरणसङ्घातः प्रविभज्यते तत्र मनोऽनुवृत्ति हीतरत्सर्व्वं कार्य्यकरणजातमिति। मनः प्रधानत्वादात्मेवात्मा। यथा

आ॰ वाभ्यां युत्थानं सन्न्यासात्मकं कृत्वा काङ्क्षितमोक्षहेतुं ध्यानमुद्दिश्य अवबाध्यावर्त्तयेदित्यर्थः॥ तस्मादपीत्यादि व्याचष्टे। यस्मादिति॥ प्राकृतस्थितिरेषा न बुद्धिपूर्व्वकारिणामिदं कर्त्तमित्याशङ्क्याह। प्रजापतेश्चेति॥ तत्र हेतुत्वेन पूर्व्वोक्तं स्मारयति। सोऽबिभेदित्यादिना॥ तत्रैव कार्य्यलिङ्गकानुमानं सूचयति। तस्मादिति॥ स यावदित्यादिवाक्यमादाय व्याचष्टे। स एवमिति॥ पूर्व्वसमस्तो वाक्यप्रदर्शनार्थः। द्वितीयस्तु व्याख्यानमध्यपातीत्यविरोधः॥ अर्थसिद्धमर्थमाह। पारिशेष्यादिति॥ तस्याकृत्स्नत्वेत्येतदवतार्य्य व्याकरोति। यदेत्यादिना॥ अकृत्स्नत्वाभिमानिनो विरुद्धं कृत्स्नत्वमित्याशङ्क्याह। कथमिति॥ विरोधमन्तरेण कात्स्न्र्यार्थं विभागं

उ॰ प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवꣳ श्रोत्रेण हि तच्छृणोत्यात्मैवास्य

---

भा॰ जायादीनां कुटुम्बपतिरात्मैव। तदनुकारित्वाज्जायादिचतुष्टयस्य। एवमिहापि मन आत्मा परिकल्प्यते कृत्स्नतायै। तथा वाग्जाया मनोऽनुवृत्तित्वसामान्याद्वाचो वागिति शब्दश्चोदनादिलक्षणो मनसा श्रोत्रादिद्वारेण गृह्यतेऽवधार्य्यते प्रयुज्यते चेति मनसो जायेव वाक्॥

ताभ्याञ्च वाङ्मनसाभ्यां जायापतिस्थानीयाभ्यां प्रसूयते प्राणः कर्म्मार्थमिति प्राणः प्रजेव। तत्र प्राणचेष्टादिलक्षणं कर्म्म चक्षुर्दृष्टवित्तसाध्यं भवतीति चक्षुर्मानुषं वित्तं। तद्द्विविधं वित्तं मानुषमितरच्चातो विशिनष्टि इतरवित्तनिवृत्त्यर्थं मानुषमिति। गवादि हि मनुष्यसम्बन्धि वित्तं चक्षुर्ग्राह्यं कर्म्मसाधनं तस्मात्तत्स्थानीयं। तेन सम्ब-

---

आ॰ दर्शयति। अयमिति॥ विभागे प्रस्तुते मनसो यजमानत्वकल्पनाया निमित्तमाह। तत्रेति॥ उक्तमेव व्यनक्ति। यथेति॥ तथा मनसो यजमानत्वकल्पनावदित्यर्थः॥ वाचि जायात्वकल्पनायां निमित्तमाह। मन इति॥ वाचो मनोऽनुवृत्तित्वे स्वरूपकथनपुरःसरं स्फोरयति। वागिति॥

प्राणस्य प्रजात्वकल्पनां साधयति। ताभ्याञ्चेति॥ कथं पुनश्चक्षुर्मानुषं वित्तमित्युच्यते पशुहिरण्यादि तथेत्याशङ्क्याह। तत्रेति। आत्मादित्रये सिद्धे सतीति यावत्। आदिपदेन कायचेष्टा गृह्यते॥ मानुषमिति विशेषणस्यार्थवत्त्वं समर्थयते। तद्द्विविधमिति॥ सम्प्रति चक्षुषो मानुषवित्तत्वं प्रपञ्चयति। गवादीति॥ तत्पदपरामृष्टमेवार्थं व्याचष्टे। तेन सम्बन्धादिति॥

उ० कर्म्मात्मना हि कर्म्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदꣳ सर्व्वं यदिदं

---

भा० श्रोत्रचक्षुर्मानुषं वित्तं। चक्षुषा हि यस्मात्तन्मानुषं वित्तं विन्दते गवाद्युपलभत इत्यर्थः। किं पुनरितरद्वित्तं श्रोत्रं दैवं देवविषयत्वाद्विज्ञानस्य। विज्ञानं दैवं वित्तं तद्धि श्रोत्रमेव सम्पत्तिविषयं। कस्माच्छ्रोत्रेण हि यस्मात्तद्दैवं वित्तं विज्ञानं शृणोति। अतः श्रोत्राधीनत्वाद्विज्ञानस्य श्रोत्रमेव तदिति किं पुनरेतैरात्मादिवित्तान्तैरिह नि-र्वर्त्त्यं कर्म्मेत्युच्यते। आत्मैव आत्मेति शरीरमुच्यते। कथं पुनरात्मा कर्म्मस्थानीयोऽस्य कर्म्महेतुत्वात्। कथं कर्म्म-हेतुत्वं। आत्मना हि शरीरेण यतः कर्म्म करोति तस्मा-त्कृत्स्नत्वाभिमानिनः। एवं कृत्स्नता सम्पन्ना। यथा वाक्य-जायादिलक्षणा। एवं तस्मात् स एष पाङ्क्तः पञ्चभिर्निर्वृत्तः पाङ्क्तो यज्ञो दर्शनमात्रनिर्वृत्तोऽकर्म्मिणोऽपि कथं पुनरस्य

---

आ० तत्स्थानीयं मानुषवित्तस्थानीयं तेन मानुषेण वित्तेनेत्येतत्॥ सम्बन्धमेव साधयति। चक्षुषा हीति। तस्माच्चक्षुर्मानुषं वित्त-मिति शेषः॥ आकाङ्क्षापूर्व्वकमुत्तरवाक्यमुपादत्ते। किं पुनरिति॥ तस्याचष्टे। दैवेति॥ तत्र हेतुमाह। कस्मादित्यादिना॥ यजमाना-दिनिर्व्वर्त्त्यं कर्म्म प्रश्नपूर्व्वकं विशदयति। किं पुनरित्यादिना॥ इहे-ति सम्पत्तिपक्षोक्तिः॥ शरीरस्य कर्म्मत्वमप्रसिद्धमिति शङ्कित्वा परिहरति। कथं पुनरिति। अस्येति यजमानोक्तिः॥ हिशब्दार्थो यत इत्यनूद्यते॥ तस्मात्कृत्स्नतेत्युक्तमुपसंहरति। तस्येति॥ उक्तरीत्या कृत्स्नत्वे सिद्धे फलितमाह। तस्मादिति। अस्येतिदर्शनोक्तिः। पशोः पुरुषस्य च पाङ्क्तत्वं तच्छब्दार्थः॥ पुरुषस्य पशुत्वाविशेषात्पृथगग्र

I V 1.



उ॰ किञ्च तदिदꣳ सर्व्वमाप्नोति य एवं वेद ॥ १७ ॥ ४ ॥
चतुर्थं ब्राह्मणं ॥

यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता एक-
मस्य साधारणं द्वे देवानभाजयन्त्रीण्यात्मनेऽकुरुत

---

भा॰ पाङ्क्तत्वसम्पत्तिमात्रेण यज्ञत्वमुच्यते । यस्मादाद्योऽपि यज्ञः पशुपुरुषसाध्यः स च पशुः पुरुषस्य पाङ्क्त एव । यथोक्तमनआदिपाङ्क्तत्वयोगात् । तदाह पाङ्क्तः पशुर्गवादिः पाङ्क्तः पुरुषः पशुत्वेनास्य विशेषः । पुरुषेति पृथक्पुरुषग्रहणं । किं बहुना पाङ्क्तमिदं सर्व्वं कर्म्मसाधनं फलञ्च यदिदं किञ्च सर्व्वमेवं पाङ्क्तं यज्ञमात्मानं यः सम्पादयति स तदिदं सर्व्वं जगदात्मत्वेनाप्नोति य एवं वेद ॥ १७ ॥
इति बृहदारण्यके तृतीये प्रपाठके चतुर्थं ब्राह्मणं ॥ ४ ॥

यत्सप्तान्नानि मेधया । अविद्या प्रस्तुता । तत्राविद्वानन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति सवर्णाश्रमा-

---

आ॰ श्रयमयुक्तमित्याशङ्क्याह । पशुत्वेऽपीति । न केवलं पशुपुरुषयोरेव पाङ्क्तत्वं किन्तु सर्व्वस्येत्याह । किं बहुनेति । तस्मादाध्यात्मिकस्य दर्शनस्य यज्ञत्वं पाङ्क्तत्वयोगादविरुद्धमिति शेषः । सम्पत्तिफलं व्याकरोति । सर्व्वमिति । व्याख्यातार्थवाक्यमनुवदन् ब्राह्मणमुपसंहरति । य एवं वेदेति । साध्यं साधनञ्च पाङ्क्तं सूत्रात्मना ज्ञात्वा तस्यात्मत्वेनानुसन्धानस्य तदाप्तिरेव फलं तत्क्रतुन्यायादित्यर्थः ॥ १७ ॥ तृतीयाध्यायस्य चतुर्थं ब्राह्मणं ।

ब्राह्मणान्तरमवतार्य्य सङ्गतिं वक्तुं वृत्तं कीर्त्तयति । यत्सप्तान्नानीत्यादिना । तत्रेत्यतिक्रान्तब्राह्मणोक्तिः । उपास्तिशब्दितं भेददर्शनमविद्याकार्य्यमनेनानूद्य न स वेदेति तद्धेतुरविद्या

उ॰ पशुभ्य एकं प्रायच्छत्तस्मिन्सर्वं प्रतिष्ठितं यच्च
प्राणिति यच्च न कस्मात्तानि न क्षीयन्तेऽद्यमानानि
सर्वदा यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन

---

भा॰ भिमानः कर्म्मकर्त्तव्यतया नियतो जुहोत्यादिकर्म्मभिः
कामप्रयुक्तो देवादीनामुपकुर्व्वन् सर्व्वेषां भूतानां लोक
इत्युक्तं। यथा च स्वकर्म्मभिरेकैकेन सर्व्वैर्भूतैरसौ लोको
भोज्यत्वेन सृष्टः। एवमसावपि जुहोत्यादिपाङ्क्तकर्म्मभिः
सर्व्वाणि भूतानि सर्व्वञ्च जगदात्मभोज्यत्वेनासृजत। एव-
मेकैकः स्वकर्म्मविद्यानुरूप्येण सर्व्वस्य जगतो भोक्ता
भोज्यश्च सर्व्वस्य सर्व्वः कर्त्ता कार्य्यञ्चेत्यर्थः। एतदेव च
विद्याप्रकरणे मधुविद्यायां वक्ष्यामः। सर्व्वं सर्व्वस्य कार्य्य-
मित्यात्मैकत्वविज्ञानार्थं। यदसौ जुहोतीत्यादिना पाङ्क्तेन
काम्येन कर्म्मणात्मभोज्यत्वेन जगदसृजत। विज्ञानेन च

---

आ॰ पूर्व्वेण प्रकृतेति योजना। अथोऽयमित्यत्रोक्तमनुवदति।
सवर्णाश्रमाभिमान इति। आत्मैवेदमग्र आसीदित्यादावुक्तं
स्मारयति। कामप्रयुक्त इति। वृत्तमनूद्योत्तरग्रन्थमवतारयितु-
मपेक्षितं पूरयति। यथा चेति। गृहिणो जगतश्च परस्परं
स्वकर्म्मोपार्जितत्वमेष्टव्यमन्यथाऽन्योन्यमुपकारकत्वायोगादित्यर्थः॥
ननु सूत्रस्यैव जगत्कर्तृत्वं ज्ञानक्रियातिशयवत्त्वादितरेषां तद-
भावादत आह। एवमिति। पूर्व्वकल्पीयविहितप्रतिषिद्ध-
ज्ञानकर्म्मानुष्ठाता सर्व्वो जन्तुरुत्तरसर्गस्य पितृत्वेनात्र विवक्षितो
न तु प्रजापतिरेवेत्युक्तमर्थं सङ्क्षिप्याह। सर्व्वस्येति। सर्व्वस्य
मिथो हेतुहेतुमत्त्वे प्रमाणमाह। एतदेवेति। सर्व्वस्यान्योन्यकार्य्य-
कारणत्वोक्त्या कल्पितत्ववचनं कुत्रोपयुज्यते तत्राह। आत्मैक-

उ॰ स देवानपि गच्छति स ऊर्ज्जमुपजीवतीति श्लोकाः १ १ १

---

भा॰ तज्जगत्सर्व्वं सप्तधा प्रविभज्यमानं कार्य्यकारणत्वेन सप्ता-न्नान्युच्यन्ते भोज्यत्वात् तेनासौ पिता तेषामन्नानां । एतेषा-मन्नानां स विनियोगानां सूत्रभूताः सङ्क्षेपतः प्रकाशक-त्वादिमे मन्त्राः यत्सप्तान्नानि यदजनयदिति क्रियाविशे-षणं मेधया प्रज्ञया विज्ञानेन तपसा च कर्म्मणा ज्ञान-कर्म्मणी एव हि मेधातपःशब्दवाच्ये । तयोः प्रकृतत्वादने-तरे मेधातपसी अप्रकरणात् । पाङ्क्तं हि कर्म्म जायादि-साधनं च एवं वेदेति चानन्तरमेव ज्ञानं प्रकृतं । तस्मान्न प्रसिद्धयोर्मेधातपसोराशङ्का कार्य्या । अतो यानि यत्सप्ता-न्नानि ज्ञानकर्म्मभ्यां जनितवान्पिता तानि प्रकाशयिष्याम इति वाक्यशेषः ॥ १ ॥

---

व्या॰ त्वेति ॥ एवं भूमिकां कृत्वोत्तरग्रन्थस्य तात्पर्य्यमाह । यदसाविति । उच्यन्ते । ध्यानार्थमिति शेषः । अन्नत्वे हेतुः । भोज्यत्वादिति । तेन ज्ञानकर्म्मभ्यां जनकत्वेनेति यावत् । ब्राह्मणमवतार्य्य मन्त्रमवतार-यति । तेषामिति । तत्राद्यं मन्त्रभागमादाय व्याचष्टे । यत्सप्ता-न्नानीति । अजनयदिति क्रियाया विशेषणं यदिति पदं । तथा च तच्छब्दः पितृत्वादिति शेषः । ग्रन्थार्थधारणशक्तिर्मेधा । कृच्छ्र-चान्द्रायणादि तपः । ते कस्मादत्र न गृह्येते तत्राह । ज्ञान-कर्म्मणीति । तयोः प्रकृतत्वं प्रकटयति । पाङ्क्तं हीति । इतरयो-रप्रकृतत्वं हेतूकृतमनूद्य फलितमाह । तस्मादिति । ज्ञान-कर्म्मणोः प्रकृतत्वमुक्तं हेतुमादाय वाक्यं पूरयति । अत इति ॥ १ ॥

उ॰ यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति
मेधया हि तपसाऽजनयत्पितैकमस्य साधारण-

---

भा॰ तत्र मन्त्राणामर्थस्तिरोहितत्वात्प्रायेण दुर्विज्ञेयो भवतीति तदर्थव्याख्यानाय ब्राह्मणं प्रवर्त्तते। तत्र यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति। अस्य कोऽर्थ उच्यत इति। विस्पष्टेनैव व्याचष्टे प्रसिद्धार्थावद्योतकेन। प्रसिद्धो ह्यस्य मन्त्रस्यार्थ इत्यर्थो यदजनयदिति चानुवादस्वरूपेण मन्त्रेण प्रसिद्धार्थतैव प्रकाशिता। अतो ब्राह्मणमविशङ्कयैवाह। मेधया हि तपसाऽजनयत्पितेति॥ ननु कथं प्रसिद्धतास्यार्थस्येत्युच्यते जायादिकर्म्मान्तानां लोकफलसाधनानां पितृत्वं तावत् प्रत्यक्षमेवाभिहितञ्च जाया मे

---

आ॰ यत्सप्तान्नानीत्यादि मन्त्रभागं व्याख्याय ब्राह्मणवाक्यं समुपादाय तात्पर्य्यमाह। तत्रेति॥ मन्त्रब्राह्मणात्मको ग्रन्थः सप्तम्यर्थः। मेधया हीत्यादि ब्राह्मणमाकाङ्क्षापूर्व्वकमुत्थापयति। तत्र यदिति॥ प्रकृतमन्त्रसमुदायः सप्तम्या परामृश्यते॥ व्याख्यानमेव सङ्गृह्णाति। प्रसिद्धो हीति। न केवलं विस्पष्टान्मन्त्रस्य प्रसिद्धार्थत्वं किन्तु मन्त्रस्वरूपालोचनायामपि तत्सिध्यतीत्याह। यदिति॥ मन्त्रार्थस्य प्रसिद्धत्वे मन्त्रस्यानुगुणत्वं हेतुत्वेन फलितमाह। अत इति॥ तत्प्रसिद्धमुपपादयितुं पृच्छति। नन्विति॥ साध्यसाधनात्मके जगति जनयितृत्वमविद्यावतो भावि तत्कर्तृत्वात्प्रसिद्धमनुभूयते हि जायादि कर्म्मादयस्त्वविद्याजनितत्वाह। उच्यत इति॥ श्रुत्या च प्रागुक्तत्वात्प्रसिद्धमेतदित्याह। अभिहितञ्चेति॥ यच्च मेधातपोभ्यां कर्तृत्वं मन्त्रब्राह्मणयोरुक्तं तदपि प्रसिद्धमेव विद्याकर्म्मपुत्राणामभावे लोकत्रयोत्पत्त्यनुपपत्तेरित्याह। तत्र चेति॥ पूर्व्वोत्तरग्रन्थः सप्तम्यर्थः। पुत्रेणैवायं लोको जय्य इत्यादौ वक्ष्य-

उ॰ मितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते।

---

भा॰ स्वादित्यादिना। तत्र च दैवं वित्तं विद्या कर्म्म पुत्रश्च
फलभूतानां लोकानां साधनं स्रष्टृत्वं प्रतीत्यभिहितं। वक्ष्य-
माणञ्च प्रसिद्धमेव। तस्मादयुक्तं वक्तुं मेधयेत्यादि। एषणा
हि फलविषया प्रसिद्धैव च लोके। एषणा च जायादी-
त्युक्तमेतावान्वै काम इत्यनेन। ब्रह्मविद्याविषये च सर्व्वै-
कत्वात्कामानुपपत्तेः। एतेनाशास्त्रीयप्रज्ञातपोभ्यां स्वाभा-
विकाभ्यां जगत्स्रष्टृत्वमुक्तमेव भवति। स्थावरान्तस्य चानिष्ट-
फलस्य कर्म्मविज्ञाननिमित्तत्वात्। विवक्षितस्तु शास्त्रीय एव
साध्यसाधनभावः। ब्रह्मविद्याविधित्सया तद्वैराग्यस्य विव-
क्षितत्वात्सर्व्वो ह्ययं व्यक्ताव्यक्तलक्षणः संसारोऽशुद्धोऽनित्यः

---

आ॰ मात्वाख्यास्यार्थस्य प्रसिद्धतेत्याह। वक्ष्यमाणञ्चेति। मन्त्रार्थस्यैवं
प्रसिद्धत्वे मन्त्रस्य प्रसिद्धार्थविषयं व्याख्यानमुपपन्नमित्युपसंहरति।
तस्मादिति। प्रकारान्तरेण मन्त्रार्थस्य प्रसिद्धार्थत्वमाह। एषणा
हीति। फलविषयत्वं तस्याः स्वानुभवसिद्धमिति वक्तुं
हिशब्दः। तस्या लोकप्रसिद्धत्वेऽपि कथं मन्त्रार्थस्य प्रसिद्धत्व-
मत आह। एषणा चेति। जायाद्यात्मकस्य कामस्य संसारा-
रम्भकत्ववन्मोक्षेऽपि कामः संसारमारभेत कामत्वाविशेषा-
दित्यतिप्रसङ्गमाशङ्क्याह। ब्रह्मविद्येति। तस्या विषयो मोक्षः।
तस्मिन्नद्वितीयत्वाज्जायादिपरिपन्थिनि कामापरपर्य्यायो रागो
नावकल्पते। न हि मिथ्याज्ञाननिदानो रागः सम्यग्ज्ञानाधि-
गम्ये मोक्षे सम्भवति। श्रद्धा तु तत्र भवति तत्त्वबोधाधीनतया
संसारनिरोधिनी तन्न संसारानुवृत्तिर्मुक्तावित्यर्थः। शास्त्री-
यस्य जायादेः संसारहेतुत्वे कर्म्मादेरशास्त्रीयस्य कथं तद्धेतु-
त्वमित्याशङ्क्याह। एतेनेति। अविद्यात्मकस्य कामस्य संसार-

उ॰ स य एतदुपास्ते न स पाप्मनो व्यावर्त्तते मिश्रꣳ ह्येतत् ।

---

भा॰ साध्यसाधनरूपो दुःखोऽविद्याविषय इत्येतस्माद्विरक्तस्य ब्रह्मविद्यारब्धव्येति । तथान्नानां विभागेन विनियोग उच्यते। एकमस्य साधारणमिति मन्त्रपदं तस्य व्याख्यानमिदमेवास्य तत्साधारणमन्नमित्युक्तमस्य भोक्तृसमुदायस्य । किं तद्यदिदमद्यते भुज्यते सर्व्वैः प्राणिभिरहन्यहनि तत्साधारणं सर्व्वभोक्त्रर्थमकल्पयत् पिता सृष्ट्वान्नं॥

स य एतत्साधारणं सर्व्वप्राणभृत्स्थितिकरं भुज्यमानमन्नमुपास्ते तत्परो भवतीत्यर्थः । उपासनं हि नाम तात्पर्य्यं। दृष्टं लोके गुरुमुपास्ते राजानमुपास्त इत्यादौ ।

---

आ॰ हेतुत्वोपदर्शनेनेति यावत्। स्वाभाविकाभ्यामविद्याधीनकामप्रयुक्ताभ्यामित्यर्थः। इतश्च तयोर्जगत्सृष्टिप्रयोजकत्वमेष्टव्यमित्याह॥ स्थावरान्तस्येति॥ यत्सप्तान्नानीत्यादिमन्त्रपदस्य मेधया हीत्यादिब्राह्मणस्य चाक्षरोत्थमर्थमुक्त्वा तात्पर्य्यार्थमाह। विवक्षितश्चेति। शास्त्रपरवशस्य शास्त्रवशादेव साध्यसाधनभावादशास्त्रीयाद्वैमुख्यसम्भवान्न तस्याश्च विवक्षितत्वमित्यर्थः॥ शास्त्रीयस्य साध्यसाधनभावस्य विवक्षितत्वे हेतुमाह। अतोति॥ तदेव प्रपञ्चयति। सर्व्वो हीति । दुःखयतीति दुःखस्य हेतुरिति यावत्। प्रकृतमन्त्रब्राह्मणव्याख्यासमाप्ताविति शब्दो विवक्षितार्थप्रदर्शनसमाप्तौ वा । मन्त्रब्राह्मणयोः श्रुत्यर्थाभ्यामर्थमुक्त्वा समनन्तरग्रन्थमवतारयति । तत्रेति। सप्तविधेऽन्ने सृष्टे सतीति यावत्॥ व्याख्यानमेव विवृणोति। अस्येत्यादिना॥

साधारणमन्नमसाधारणीकुर्व्वतो दोषं दर्शयति ॥ तत्परो भवतीति॥ उक्तं विवृणोति। उपासनं हीति॥ प्रसिद्धोऽप्ययमर्थो मन्त्रं

भा॰ तस्माच्छरीरस्थित्यर्थोपभोगप्रधानो नात्महार्थकर्म-
प्रधान इत्यर्थः । स एवम्भूतो न पाप्मनोऽधर्म्माद्व्यावर्त्तते
न किमुच्यत इत्येतत् । तथाच मन्त्रवर्णो मोघमन्नं विन्दत
इत्यादिः । स्मृतिरपि नात्मार्थं पाचयेदन्नं । अतिथिभ्यो
ऽप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः । अन्नादेर्भ्रूणहा मार्ष्टी-
त्यादिः । कस्मात्पुनः पाप्मनो न व्यावर्त्तते मिश्रं ह्येतत्स-
र्व्वेषां हि स्वं तदप्रविभक्तं यत्प्राणिभिर्भुज्यते सर्व्वभोज्य-
त्वादेव यो मुखे प्रक्षिप्यमाणोऽपि ग्रासः परस्य पीडाकरो
दृश्यते ममेदं स्यादिति हि सर्व्वेषां तत्राशा प्रतिबद्धा ।
तस्मान्न परमपीडयित्वा ग्रसितुमपि शक्यते । दुष्कृतं हि
मनुष्याणामित्यादि स्मरणाच्च । गृहिणा वैश्वदेवाख्यमन्न-

---

आ॰ प्रमाणयति । तथा चेति । मोघं विफलं देवाद्यनुपभोग्यमन्नं
यदि ह्यानदुर्वंशो लभते तदा सर्व्वथैव तस्येति साधारणा-
न्नस्यासाधारणीकरणं निन्दितमित्यर्थः । तथैव स्मृतीरुदाह-
रति । स्मृतिरपीति । न तथा घातयेत्पशुं न चैवः स्वयमश्नीया-
द्विधिवर्जं न निर्वपेदिति पादत्रयं द्रष्टव्यं । इष्टान्भोगान् हि वो
देवा दास्यन्ते यज्ञभाविताः । तैर्दत्तानिति शेषः । * अनेनाभिशंस-
तिस्तेन प्रमुक्ते राजनि तावन्मात्ततस्कर इत्युत्तरपादत्रयं द्रष्टव्यं ।
तत्राद्यपादस्यार्थो भ्रूणहा श्रेष्ठब्राह्मणघातकः । यदाहुः । वरिष्ठ-
ब्रह्महा चैव भ्रूणहेत्यभिधीयत इति । तस्यान्नभक्षणे तत्पापं
मार्ष्टि शोधयतीत्यन्नदातुः पापक्षयोक्तिरितरस्यासाधारणीकृत्य
भुञ्जानस्य पापितेति । अदत्वा तु य एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः ।
स भुञ्जानो । न जानाति श्वगृध्रैर्जग्धिमात्मन इत्यादिवाक्यमादि-
शब्दार्थः । आकाङ्क्षापूर्वकं हेतुमवतार्य्य व्याकरोति । कस्मादित्या-

---

* अनेनेत्यादि तस्कर इत्यन्तं पुस्तकमध्यं ।

मदन्यद्दनि निरूप्यत इति केचित्। तन्न सर्व्वभोक्तृसाधारणत्वं वैश्वदेवाख्यस्यान्नस्य। तन्न सर्व्वप्राणभृद्भुज्यमानान्नवत् प्रत्यक्षं नापि यदिदमद्यत इति तद्विषयं वचनमनुकूलं। सर्व्वप्राणभृद्भुज्यमानान्नान्तःपातित्वाच्च वैश्वदेवाख्यस्य युक्तं श्वचाण्डालादद्यस्यान्नस्य ग्रहणं वैश्वदेवव्यतिरेकेणापि श्वचाण्डालाद्यद्यान्नदर्शनात्तन्न युक्तं यदिदमद्यत इति वचनं। यदि हि तन्न गृह्णीत साधारणशब्देन पित्रा सृष्टत्वाविनियुक्तत्वे तस्य प्रसज्येयातां। दृश्यते हि तत्स्रष्टृत्वं तद्विनियुक्तत्वञ्च सर्व्वस्यान्नजातस्य। न च वैश्वदेवाख्यं शास्त्रोक्तं कर्म्म कुर्व्वतः पाप्मनोऽविनिवृत्तिर्युक्ता॥

---

भा० दिना॥ सर्व्वं भोग्यत्वं साधयति। यो मुख इति॥ परस्य श्वमार्जारादेरिति यावत्। पीडाकरत्वे हेतुमाह। ममेदमिति॥ प्रासुक्तदृष्टिफलमाचष्टे। तस्मादिति॥ साधरणमन्नमसाधारणीकुर्व्वाणस्य पापानिवृत्तिरित्यत्र हेत्वन्तरमाह। दुष्कृतं हीति। यदा हि मनुष्याणां दुष्कृतमन्नमाश्रित्य तिष्ठति तदा तदसाधारणीकुर्व्वतो मत्वन्तरं पापं भवतीत्यर्थः॥ एकमस्येत्यादिमन्त्रब्राह्मणयोः खपक्षमुक्त्वा भर्तृप्रपञ्चपक्षमाह। गृहिणेति॥ यदन्नं गृहिणा प्रत्यहमसौ वैश्वदेवाख्यं निर्व्वर्त्यते तत्साधारणमिति भर्तृप्रपञ्चैरुक्तमित्यर्थः॥ साधारणपदानुपपत्तेर्न युक्तमिदं व्याख्यानमिति दूषयति। तन्नेति॥ वैश्वदेवस्य साधारण्यान्नं प्रासमित्याह। सर्व्वेति॥ वैश्वदेवग्रहेऽपीतरग्रहदृष्टिः स्यादिति चेन्नेत्याह। वैश्वदेवेति॥ यत्तु परपक्षे यदिदमद्यत इति वचो नानुकूलमिति तत्रासत्यपक्षोऽस्तीत्याह। तन्नेति॥ प्रत्यक्षं साधारणान्नं सत्यमर्थः। विपक्षे दोषमाह। यदि हीति॥ प्रसक्तस्रेष्टत्वं निराचष्टे। दृश्यते हीति॥ परपक्षे वाक्यशेषविरोधं दोषान्तरमाह। न चेति॥

उ॰ द्वे देवानभाजयदिति हुतञ्च प्रहुतञ्च तद्देवेभ्यो जुह्वति च प्रजुह्वत्यथो आहुर्दर्शपौर्णमासाविति।

---

भा॰ न च तस्य प्रतिषेधोऽस्ति। न च मत्स्यबन्धनादिकर्म्मवत् स्वभावजुगुप्सितमेतच्छिष्टनिर्वर्त्त्यत्वादकरणे च प्रत्यवायश्रवणादितरत्र च प्रत्यवायोपपत्तेः। अहमन्नमन्नमदन्तमद्मीति मन्त्रवर्णात्। द्वे देवानभाजयदिति मन्त्रपदं। ये द्वेऽन्ने स्रष्टा देवानभाजयत् के ते द्वे इत्युच्येते। हुतञ्च प्रहुतञ्च। हुतमित्यग्नौ हवनं। प्रहुतं हुत्वा बलिहरणं। यस्माद्द्वे एतेऽन्ने हुतप्रहुते देवानभाजयत्पिता। तस्मादेतर्ह्यपि गृहिणः काले देवेभ्यो जुह्वति देवेभ्य इदमन्नमस्माभिर्दीयमानमिति मन्वानाः प्र च जुह्वति प्रजुह्वति च हुत्वा च बलिहरणञ्च कुर्व्वत इत्यर्थः। अथोऽप्यन्ये आहुर्द्वेऽन्ने पित्रा देवेभ्यः

---

आ॰ धर्मादितुल्यत्वं तस्य व्यावर्त्तयति। न च तस्येति॥ अनिषिद्धस्यापि तस्य स्वभावजुगुप्सितत्वात्तदनुष्ठायिनः पापानिवृत्तिरित्याशङ्क्याह। न चेति॥ अवश्यं याति तिर्य्यक्त्वं जग्ध्वा चैवाहुतं हविरित्यकरणे वैश्वदेवस्य प्रत्यवायश्रवणाच्च तदनुष्ठायिनो न पापसम्बन्धोऽस्तीत्याह। अकरणे चेति॥ सर्व्वसाधारणान्नग्रहे तु तत्परस्य निन्दावचनमुपपद्यते तेन तदेव ग्राह्यमित्याह। इतरत्रेति। तत्रैव श्रुत्यन्तरं संवादयति। अहमिति॥ अर्थिभ्योऽविभज्यान्नमदत्त्वा स्वयमेव भुञ्जानं नरमहमन्नमेव भक्षयामि तमनर्थभाजं करोमीत्यर्थः॥ मन्त्रान्तरमादायाकाङ्क्षाद्वारा प्रश्नमुत्थाप्य व्याचष्टे। द्वे देवानित्यादिना॥ हुतप्रहुतयोर्देवान्नत्वे सम्प्रति तमनुष्ठानमनुकूलयति। यस्मादिति॥ पक्षान्तरमुपन्यस्य व्याकरोति। अथो इति॥ यदि दर्शपूर्णमासौ देवान्ने कथं तर्हि हुतप्रहुते इति पक्षस्य प्रामाणिकत्वमाह। हित्वेति॥

भा॰ अन्ने न हुतप्रहुते। किं तर्हि दर्शपूर्णमासाविति। द्वित्वश्रव-
णाविशेषाद*न्यत्र प्रसिद्धत्वाच्च हुतप्रहुते इति प्रथमः
पक्षः। यद्यपि द्वित्वं हुतप्रहुतयोः सम्भवति तथापि श्रौतयो-
रेव तु दर्शपूर्णमासयोर्देवान्नत्वं प्रसिद्धतरं मन्त्रप्रकाशित-
त्वात्। गुणप्रधानप्राप्तौ च प्रधाने प्रथमतरावगतिः। दर्श-
पूर्णमासयोश्च प्राधान्यं हुतप्रहुतापेक्षया। तस्मात्तयोरेव
ग्रहणं युक्तं द्वे देवानभाजयदिति। यस्माद्देवार्थमेते पित्रा
क्लृप्ते दर्शपूर्णमासाख्येऽन्ने तस्मात्तयोर्देवार्थत्वाविघाताय

---

व्या॰ तर्हि द्वे देवानिति। श्रुतद्वित्वस्य हुतप्रहुतयोरपि सम्भवाच्च
प्रथमपक्षस्य पूर्वपक्षत्वमत आह। यद्यपीति। प्रसिद्धतरत्वे हेतु-
माह। मन्त्रेति। अग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्यामिदं हविरजुष-
तेत्यादिमन्त्रेषु दर्शपूर्णमासयोर्देवान्नत्वस्य प्रतिपन्नत्वादिति
यावत्। इतश्च दर्शपूर्णमासयोरेव देवान्नत्वमिति वक्तुं सामा-
न्यन्यायमाह। गुणेति। गुणप्रधानयोरेकत्र साधारणशब्दा-
त्प्राप्तौ सत्यां प्रथमतरां प्रधाने भवत्यवगतिर्गौणमुख्ययोर्मुख्ये कार्य्ये
सम्प्रत्यय इति न्यायादित्यर्थः। अस्त्वेवं प्रकृते किं जातं तदाह।
दर्शपूर्णमासयोश्चेति। तयोर्निरपेक्षश्रुतिदृष्टतया सापेक्षस्मृति-
सिद्धहुताद्यपेक्षया प्राधान्यं सिद्धं। तथा च प्रधानयोस्तयोरित-
रयोश्च गुणयोरेकत्र प्राप्तौ प्रधानयोरेव द्वे देवानिति मन्त्रग्रहो
युक्तिमानित्यर्थः। दर्शपूर्णमासयोर्देवान्नत्वे समनन्तरनिषेध-
वाक्यमनुकूलयति। यस्मादिति। इष्टियजनशीलो न स्यादिति
सम्बन्धः। ननु तत्तद्यजनशीलत्वाभावे कुतो दर्शपूर्णमासयोर्देवा-
र्थत्वं। न हि तावन्निष्पन्नौ तदर्थावित्याशङ्क्याह। इष्टिशब्दे-
नेति। किं पुनरस्मिन्वाक्ये काम्येष्टिविषयत्वमितीष्टिशब्दस्येत्यत्र
नियामकं। तत्र किंशब्दसूचितां पाठकप्रसिद्धिमाह। प्रात-

---

*अत्यन्तेति पाठान्तरः।

उ॰ तस्मान्नेष्टियाजुकः स्यात्पशुभ्य एकं प्रायच्छ-
दिति तत् पयः १ पयो ह्येवाग्रे मनुष्याश्च पशव-

---

भा॰ नेष्टियाजुक इष्टियजनशीलः । इष्टिशब्देन किल काम्या
इष्टयः शातपथीयं प्रसिद्धिस्ताच्छील्यप्रत्ययप्रयोगात्काम्ये-
ष्टियजनप्रधानो न स्यादित्यर्थः ।

पशुभ्य एकं प्रायच्छदिति यत् पशुभ्य एकं प्रायच्छ-
त्पिता किं पुनस्तदन्नं तत्पयः । कथं पुनरवगम्यते पशवोऽस्या-
न्नस्य स्वामिन इत्यत आह पयो ह्यग्रे प्रथमं यस्मान्मनुष्याश्च
पशवश्च पय एवोपजीवन्तीत्युचितं हि तेषां तदन्नमन्यथा
कथं तदेवाग्रे नियमेनोपजीवेयुः । कथमग्रे तदेवोपजीव-
न्तीत्युच्यते । मनुष्याश्च पशवश्च यस्मात्तेनैवान्नेन वर्त्तन्ते

---

आ॰ पयीति ॥ काम्येष्टीनामनुष्ठाननिषेधे स्वर्गकामवाक्यविरोधः
स्यादित्याशङ्क्याह । ताच्छील्येति ॥ तच्च विहितस्योकञ्प्रत्यय-
स्यात्र प्रयोगात्काम्येष्टियजनप्रधानत्वमिह निषिध्यते । तच्च दर्शप्र-
ज्ञानयोर्दर्शपूर्णमासयोरवश्यानुष्ठेयत्वसिद्ध्यर्थं न तु ताः स्वतो
निषिध्यन्ते तन्न स्वर्गकामवाक्यनिरोधोऽस्तीत्यर्थः ॥

पञ्चमविषयमन्नपदमादाय प्रश्नपूर्व्वकं तदर्थं कथयति । पशुभ्य
इति । पशूनां पयोऽन्नमित्येतदुपपादयितुं पृच्छति । कथं
पुनरिति । पयो हीति प्रतीकमुपादाय व्याकरोति । अग्र इति ।
पशवो द्विपादश्चतुष्पादश्चेति श्रुतिमाश्रित्य मनुष्याश्चेत्युक्तं ।
उचितं हीत्यत्र हिशब्दस्तस्मादर्थे । यस्मादित्युपक्रमादौचित्यं
व्यतिरेकद्वारा साधयति । अन्यथेति ॥ नियमेन प्रथमं पशूनां
तदुपजीवनमसम्मतिपन्नमिति शङ्कते । कथमिति ॥ मनुष्यवि-
षये वा प्रश्नस्तदितरपशुविषये वेति पृच्छति । उच्यत इति ॥ तत्रा-
द्यमनुभूयावष्टम्भेन प्रत्याचष्टे । मनुष्याश्चेति । चकारो मनु-

उ० ग्रोपजीवन्ति तस्मात् कुमारं जातं घृतं वै-वाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्त्यथ वत्सं जात-

---

भा० ऽद्यत्वेऽपि यथा पित्राऽऽदौ विनियोगः कृतस्तस्मात्कुमारं बालं जातं घृतं वा त्रैवर्णिका जातकर्मणि जातरूपसंयुक्तं प्रतिलेहयन्ति प्राशयन्ति। स्तनं वाऽनुधापयन्ति पश्चात्पाययन्ति। यथासम्भवमन्येषां स्तनमेवाग्रे धापयन्ति मनुष्येभ्योऽन्येषां पशूनां। अथ वत्सं जातमाहुः। कियत्प्रमाणो वत्स इत्येवं पृष्टाः सन्तोऽतृणाद इति नाद्यापि तृणमत्त्यतीव बालः पयसैवाद्यापि वर्त्तत इत्यर्थः। यच्चाग्रे जातकर्मादौ घृतमुपजीवन्ति यच्चेतरे पय एव तत्सर्व्वथापि पय एवोपजीवन्ति घृतस्यापि पयोविकारत्वात्पयस्त्वमेव

---

आ० व्यमान्नसङ्ग्रहार्थः। तेनैव पयसैवेति यावत्। घृतं वेति वाशब्दो वक्ष्यमाणविकल्पद्योतकः। जातरूपं हेम त्रैवर्णिकेभ्यो ऽन्येषां जातकर्माभावाद्योग्यतामनतिक्रम्य स्तनमेव जातं कुमारं प्रथमं पाययन्तीत्याह। यथासम्भवमिति। यद्वा तेषां जातकर्मानधिकृतानां जातं कुमारं यथासम्भवं घृतं वा स्तनं वा प्रथमं पाययन्तीति यावत्॥ पशुविषयं प्रश्नं पशवश्चेति सूचितं समाधानं प्रत्याह। स्तनमेवेति॥ पशूनां जातवत्समिति सम्बन्धः॥ पशूनां पयोऽन्नमित्यत्र लोकप्रसिद्धं प्रमाणयति। अथेति॥ द्विपात्स्वधिकारविच्छेदार्थे शब्दः प्रतिवचनं व्याचष्टे। नाद्यापीति॥ नन्वेषामग्रे घृतोपजीवित्वमुपलभ्यते पयसैनोपजीवन्ति घृतपयसोर्भेदादतः पश्वन्नत्वं पयसो भागासिद्धमत आह। यच्चेति॥ नन घृतमुपजीवन्तोऽपि पय एवोपजीवन्तीत्ययुक्तं तद्भेदस्योक्तत्वात्तत्राह। घृतस्यापीति॥ मन्त्रपाठक्रममतिक्रम्य पश्वन्ने व्याख्याते प्रश्नमवतिष्ठते। कस्मादिति। द्वे देवान·

उ॰ माहुरत्तृणाद् इति तस्मिन् सर्वं प्रतिष्ठितं। यच्च

भा॰ कस्मात्पुरः सप्तमं सत् पञ्चमं चतुर्थत्वेन व्याख्यायते कर्म्म-
साधनत्वात्कर्म्म हि पयःसाधनाश्रयमग्निहोत्रादि तच्च
कर्म्मसाधनं वित्तसाध्यं वक्ष्यमाणस्यान्नत्रयस्य साध्यस्य। यथा
दर्शपूर्णमासौ पूर्व्वोक्तावन्ने। अतः कर्म्मपक्षत्वात्कर्म्मणा सह
पिण्डीकृत्योपदेशः। साधनत्वाविशेषादर्थसम्बन्धादानन्तर्य्य-
मकारणमिति च। व्याख्यानप्रतिपत्तिसौकर्य्याच्च। सुखं हि
नैरन्तर्य्येण व्याख्यातुं शक्यन्तेऽन्नानि व्याख्यातानि च। सुखं
प्रतीयन्ते तस्मिन् सर्व्वं प्रतिष्ठितं। यच्च प्राणिति यच्च नेत्यस्य
कोऽर्थ इत्युच्यते। तस्मिन्पयस्यन्ने पयसि सर्व्वमध्यात्माधिभूता-

आ॰ भावयदिति व्याख्याने साधिते साधनत्वाविशेषात्पयोऽपि बुद्धिस्थ-
मित्यर्थमाश्रित्य परिहरति। कर्म्मेति॥ तदेव स्फुटयति। कर्म्म
हीति। यद्यपि पयोऽन्नयं साधनमाश्रित्य कर्म्म प्रवृत्तं तथापि
दर्शपूर्णमासानन्तर्य्यं कथं पयसा सिध्यति तत्राह। तच्चेति॥
वित्तेन पयसा साध्यं कर्म्मान्नत्रयस्य साधनमिति। अत्र दृष्टान्त-
माह। यथेति। पूर्व्वोक्तौ दर्शपूर्णमासौ द्वे देवान्ने वक्ष्यमाण-
स्यान्नत्रयस्य यथा साधनं तथा पयसोऽप्यग्निहोत्रादिद्वारा
तत्साधनत्वात्कर्म्मकोटिनिविष्टत्वाद्व्याख्यानानन्तर्य्यं पयोव्याख्या-
नस्य युक्तमित्यर्थः। पाठक्रमस्तर्हि कथमित्याशङ्क्यार्थक्रमेण तद्बा-
धमभिप्रेत्याह। साधनत्वेति। आनन्तर्य्यं पाठक्रमः। अकारणत्व-
मविवक्षितं। पाठक्रमादर्थक्रमस्य बलीयस्त्वात्तेनेतरस्य बाध्यत्व-
मित्येतत्प्रथमे तन्त्रे स्थितमित्यभिप्रेत्याह। इति चेति॥ पञ्चमस्य
चतुर्थत्वेन व्याख्याने हेत्वन्तरमाह। व्याख्यान इति॥ व्याख्या-
नसौकर्य्यं साधयति। सुखं हीति। प्रतिपत्तिसौकर्य्यं प्रकट-
यति। व्याख्यातानीति॥ चत्वारि साधनानि त्रीणि साध्यानीति
विभज्योक्तौ वक्तृश्रोत्रोः सौकर्य्येण धीर्भवति ततश्च पाठक्र-

उ॰ प्राणिति यच्च नेति पयसि हीदꣳ सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न १

---

भा॰ धिदैवलक्षणं कृत्स्नं जगत्प्रतिष्ठितं। यच्च प्राणिति प्राणचेष्टावच्च न स्थावरं चैत्यादि। तच्च च हिशब्देनैव प्रसिद्धद्योतकेन व्याख्यातं। कथं पयोद्रव्यस्य सर्व्वप्रतिष्ठात्वं कारणत्वोपपत्तेः। कारणत्वञ्चाग्निहोत्रादिकर्म्मसमवायित्वमग्निहोत्राद्याहुतिविपरिणामात्मकत्वञ्च। जगतश्चैतत्त्वमिति श्रुतिस्मृतिवादाः शतशो व्यवस्थिताः। अतो युक्तमेव हिशब्देन व्याख्यातुं॥

---

आ॰ नातिक्रमः श्रेयानित्यर्थः। पञ्चमस्य सर्व्वाधिष्ठानविषयं मन्त्रमवतार्य्य प्रश्नपूर्व्वकं तदीयं भाष्यं व्याचष्टे। तस्मिन्नित्यादिना। मन्त्राद्भेदो भाष्येण प्रतिभातीत्याशङ्क्याह। तच्चेति। पयसि हीति भाष्ये हिशब्दस्य प्रसिद्धावद्योतकमस्ति। तेन च हेतुना हिशब्देन तस्मिन्नित्यादिकं मन्त्रपदं व्याख्यातमिति योजना। मन्त्रार्थस्य लोकप्रसिद्ध्यभावान्न प्रसिद्धावद्योतिना हिशब्देन व्याख्यातुं न युक्तमिति शङ्कते। कथमिति। कार्य्यं कारणे प्रतिष्ठितमिति न्यायेन वैदिकीं प्रसिद्धिमादाय समाधत्ते। कारणत्वेति। पयसो द्रवद्रव्यमात्रस्य कुतः सर्व्वजगत्कारणत्वमित्याशङ्क्याह। कारणत्वञ्चेति। तत्समवायित्वेऽपि कुतो जगतः कारणतेत्याशङ्क्याह। अग्निहोत्रादीति। ते वा एते आहुती हुते उत्क्रामतस्तेऽन्तरिक्षमाविशत इत्यादयः श्रुतिवादा द्युपर्जन्यपृथिव्यादिक्रमेणाग्निहोत्राहुत्योर्गर्भाकारप्राप्तिं दर्शयन्ति। अग्नौ प्रास्ता आहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इत्यादिस्मृतिवादाः। पयसि हीत्यादि भाष्यमुपसंहरति। अत इति। पयसः सर्व्वजगदाधारत्वस्य श्रुतिस्मृतिप्रसिद्धत्वादिति यावत्।

उ॰ तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति

---

भा॰ यत्तद्ब्राह्मणान्तरेष्विदमाहुः संवत्सरं पयसा जुह्वदपपुनर्मृत्युं जयतीति संवत्सरेण किल त्रीणि षष्टिशतान्यह्नां तेषु च आहुतीनां सप्त च शतानि विंशतिश्चेति याजुष्मतीरिष्टका अभिसम्पद्यमानाः संवत्सरस्य चाहोरात्राणि संवत्सरमग्निं प्रजापतिमाप्नुवन्त्येवं कृत्वा संवत्सरं जुह्वदपजयति पुनर्मृत्युमितः प्रेत्य देवेषु सम्भूतः पुनर्न म्रियत इत्यर्थ इत्येवं ब्राह्मणवादा आहुर्न तथा विद्यान्न तथा द्रष्टव्यं यदहरेव जुहोति तदहः पुनर्मृत्युमपजयति न संवत्सराभ्यासमपेक्षत एवं विद्वान् सन् यदुक्तं पयसि हीदं सर्व्वं प्रतिष्ठितं पय आहुतिविपरिणामात्म-कत्वात्सर्व्वस्येति। तदेकेनैवाह्ना जगदात्मत्वं प्रतिपद्यते

---

आ॰ सर्व्वं पयसि प्रतिष्ठितमिति विधित्सितदर्शनस्तुतये शाखान्तरीयमतं निन्दितुमुद्भावयति। यत्तदिति। न केवलं कर्म्मणा मृत्युजयः किन्तु दर्शनसहितेनेति दर्शयितुमग्निहोत्राहुतिषु सङ्ख्यां कथयति। संवत्सरेणेति। उक्ताहुतिसङ्ख्यायां संवत्सरावच्छिन्नायामग्निहोत्रविदां सम्प्रतिपत्त्यर्थं किलेत्युक्तं॥ ननु प्रत्यहं सायं प्रातश्चेत्याहुती द्वे विद्येते तत्कथमाहुतीनां षष्ठ्यधिकानि त्रीणि शतानि संवत्सरेण भवन्ति तत्राह। सप्त चेति। प्रत्येकमहोरात्रावच्छिन्नाहुतिप्रयोगाभ्यासमेकस्मिन् संवत्सरे पूर्व्वोक्ता सङ्ख्या तत्रैव प्रयोगाह्नां विंशत्यधिका सप्तशतरूपा सङ्ख्येति सिद्धमित्यर्थः। आहुतीनां सङ्ख्यामुक्त्वा तासु याजुष्मतीनामिष्टकानां दृष्टिमाह। याजुष्मतीरिति। तासामपि षष्ठ्यधिकानि

उ॰ तदहः पुनर्मृत्युमपजयत्येवंविद्वान्त्सर्वꣳ हि देवेभ्योऽन्नाद्यं प्रयच्छति ।

---

भा॰ तदुच्यते अपजयति पुनर्म्मृत्युं पुनर्म्मरणं सकृन्मृत्वा विद्वाञ्छरीरेण वियुज्य स सर्व्वात्मा भवति न पुनर्म्मरणाय परिच्छिन्नं शरीरं गृह्णातीत्यर्थः। कः पुनर्हेतुः सर्व्वात्मप्राप्त्या मृत्युमपजयतीत्युच्यते । सर्व्वं समस्तं हि यस्माद्देवेभ्यः सर्व्वेभ्योऽन्नाद्यमन्नमेव तदद्यञ्च सायंप्रातराहुतिप्रक्षेपेण प्रयच्छति तद्युक्तं सर्व्वमाहुतिमयमात्मानं कृत्वा सर्व्वदेवान्नरूपेण सर्व्वैर्देवैरेकात्मभावं गत्वा सर्व्वदेवमयो भूत्वा

---

आ॰ त्रीणि शतानि सङ्ख्यया भवन्ति । तथाच प्रत्यहमाहुतीरभिनिष्पाद्यमानाः सङ्ख्यासामान्येन याजुष्मतीरिष्टकाश्चिन्तयेदित्यर्थः । आहुतिमयीनामिष्टकानां संवत्सरावयवाहोरात्रेषु सङ्ख्यासामान्येनैव दृष्टिमन्वाचष्टे । संवत्सरस्येति । तान्यपि षष्ट्यधिकानि त्रीणि शतानि प्रसिद्धानि । तथाच तेषु यथोक्तेष्टकादृष्टिः शिष्टेत्यर्थः । चित्यग्नौ संवत्सरात्मप्रजापतिदृष्टिमाह । संवत्सरमिति । यः संवत्सरः प्रजापतिस्तं चित्याग्निं विद्वांसः सम्पादयन्ति अहोरात्रेष्टकाद्वारा तयोः सङ्ख्यासाम्यादित्यर्थः । दृष्टिमनूद्य फलं दर्शयति । एवमिति । उक्तसङ्ख्यासामान्येनाग्निहोत्राहुतीरग्न्यवयवभूतयाजुष्मतीसञ्ज्ञकेष्टकाः सम्पाद्य तद्रूपेणाहुतीर्ध्यायन्नाहुतीमयीश्चेष्टकाः संवत्सरावयवाहोरात्राणि तेनैव सम्पाद्य पुरुषनाडीश्च सङ्ख्यासामान्येन तन्नाडीकान्येवाहोरात्राण्यापाद्य तद्रूपेणाहुतीरिष्टका नाडीश्चानुसन्दधानो नाड्यहोरात्रयाजुष्मतीद्वारा पुरुषसंवत्सरचित्यानां समत्वमापाद्याहमग्निः संवत्सरात्मा प्रजापतिरेवेति ध्यायन्नग्निहोत्रं पयसा संवत्सरं जुह्वद्विद्यया सहितहोमवशात्प्रजापतिं संवत्सरात्मकं प्राप्य मृत्युमपजयतीत्यर्थः । एकीयमतमुपसंहृत्य तन्निन्दापूर्व्वकं मतान्तरमाह । इत्येवमित्या-

उ॰ कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति पुरुषो वा अक्षितिः स हीदमन्नं पुनः पुनर्जनयते।

---

भा॰ पुनर्न म्रियत इति। अथैतदप्युक्तं ब्राह्मणेन। ब्रह्म वै स्वयम्भुस्तपोऽतप्यत तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनीति तत्सर्व्वेषु भूतेष्वात्मानं हुत्वा भूतानि चात्मनि सर्व्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्य्यैदिति॥

कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्व्वदेति। यदा पित्रान्नानि सृष्टा सप्त पृथक् पृथग्भोक्तृभ्यः प्रत्तानि तदा प्रभृत्येव तैर्भोक्तृभिरद्यमानानि। तन्निमित्तत्वात्तेषां स्थितेः

---

आ॰ दिना॥ एवं विद्वानित्युक्तं व्यक्तीकरोति। यदुक्तमिति। तत्तथैव विद्वानेकाहोरात्रावच्छिन्नाहुतिमात्रेण जगद्रूपं प्रजापतिं प्राप्य मृत्युमपजयतीत्याह। तदेकेनेति॥ उक्तेऽर्थे श्रुतिमवतार्य्य व्याचष्टे। तदुच्यत इति। सर्व्वं हीत्यादि हेतुवाक्यमाकाङ्क्षापूर्व्वकमुत्थाप्य व्याकरोति। कः पुनरित्यादिना॥ यथोक्तदर्शनवशादेकयैवाहुत्या मृत्युं प्रजयतीत्यत्र ब्राह्मणान्तरं संवादयति। अथेति॥ यथा संवत्सरमित्याद्युक्तं तथा यदहरेवेत्याद्यपि ब्राह्मणान्तरे सूचितमित्यर्थः। ब्रह्म हिरण्यगर्भभावी जीवः स्वयम्भुः परस्यैव तदात्मनावस्थानात्तपोऽतप्यत कर्म्माण्यतिष्ठत्॥ यत्कृतकं तदनित्यमिति न्यायेन कर्म्मनिन्दाप्रकारमाह। तदैक्षतेति॥ कर्म्मसहायभूतामुपासनामुपदिशति। हन्तेति॥ उपासनामनूद्य समुच्चयफलं कथयति। तत्सर्व्वेष्विति॥ श्रेष्ठत्वेऽपि राजकुमारवदस्वातन्त्र्यमाशङ्क्याह। स्वाराज्यमिति॥

अधिष्ठाय पालयितृत्वमाधिपत्यं। पञ्चान्ने व्याख्याते॥ प्रश्नरूपं मन्त्रपदमादत्ते। कस्मादिति॥ ननु चत्वार्य्यन्नानि व्याख्यातानि त्रीणि व्याचिख्यासितानि तेष्वव्याख्यातेषु कस्मादित्यादिप्रश्नः

भा॰ सर्व्वदा नैरन्तर्य्येण क्षतक्षयोपपत्तेश्च युक्तस्तेषां क्षयः। न च तानि क्षीयमाणानि जगतोऽविभ्रष्टरूपेणैवावस्थानदर्शनाद्भवितव्यमन्नाक्षयकारणेन। तस्मात् कस्मात्पुनस्तानि न क्षीयन्त इति प्रश्नः। तस्येदं प्रतिवचनं। पुरुषो वा अक्षितिर्यथासौ पूर्व्वमन्नानां स्रष्टासीत्पिता मेधया ज्ञानादिसम्बन्धेन च पाङ्क्तकर्म्मणा भोक्ता च तथा येभ्यो दत्तान्यन्नानि तेऽपि तेषामन्नानां भोक्तारोऽपि सन्तः पितर एव मेधया तपसा च जनयन्ति तान्यन्नानि। तदेतदभिधीयते पुरुषो वै योऽन्नानां भोक्ता सोऽक्षितिरक्षयहेतुः। कथमस्याक्षितित्वमित्युच्यते स हि यस्मादिदं भुज्यमानं सप्तविधं

---

आ॰ कस्मादित्याद्यस्य साधनेषूक्तेषु साध्यानामपि ते सामर्थ्यादुक्तत्वमस्तीत्यभिप्रेत्य प्रश्नवर्त्तिं मन्वानो व्याचष्टे। सदेति॥ सर्व्वदेत्यस्य व्याख्यानैरन्तर्य्येणेत्यन्नानां सदा भोक्तृभिरद्यमानत्वे हेतुमाह। तन्निमित्तत्वादिति॥ भोक्तॄणां स्थितेरन्ननिमित्तत्वात्तैः सदाद्यमानानि तानि यवपूर्णकुसूलवत्क्षयवन्ति क्षीणानीत्यर्थः। किञ्च ध्यानकर्म्मफलत्वादन्नानां यत्कृतकं तदनित्यमिति न्यायेन क्षयः सम्भवतीत्याह। क्षतेति॥ अस्तु तर्हि तेषां क्षयो नेत्याह। न चेति। भवतु तर्हि स्वभावादेव सप्तान्नात्मकस्य जगतोऽक्षीणत्वं नेत्याह। भवितव्यञ्चेति॥ स्वभाववादस्यातिप्रसक्तित्वादित्यर्थः। प्रश्नं निगमयति। तस्मादिति॥ प्रतिवचनमादाय व्याचष्टे। तस्येत्यादिना॥ तेषां पितृत्वे हेतुमाह। मेधयेति॥ भोगकालेऽपि विहितप्रतिषिद्धध्यानकर्म्मसम्भवात् प्रवाहरूपेणान्नानामक्षयः सम्भवतीत्यर्थः। तत्र प्रतिज्ञाभागमुपादायाक्षराणि व्याचष्टे। तदेतदिति॥ हेतुभागमुत्थाप्य विभजते। कथमित्यादिना। तस्मात्तदक्षयः सम्भवति। प्रवाहात्मनेति शेषः॥ उक्तं हेतुं व्यतिरेकद्वारोपपादयितुं यद्धैतदित्यादि वाक्यं तद्व्याचष्टे।

भा॰ कार्य्यकारणलक्षणं क्रियाफलात्मकं पुनः पुनर्भूयो भूयो जनयते उत्पादयति धिया धिया तत्तत्कालभाविन्या तया प्रज्ञया कर्म्मभिश्च वाङ्मनःकायचेष्टितैर्यद्धि यद्येतत्सप्तविधमन्नमुक्तं क्षणमात्रमपि न कुर्य्यात्प्रज्ञया कर्म्मभिश्च ततो विच्छिद्येत भुज्यमानत्वात्सातत्येन क्षीयेत च। तस्माद्यथैवायं पुरुषो भोक्तान्नानां नैरन्तर्य्येण यथा प्रज्ञं यथा कर्म्म च करोत्यपि तस्मात्पुरुषोऽक्षितिः सातत्येन कर्त्तृत्वात्तस्माद्भुज्यमानान्यप्यन्नानि न क्षीयन्त इत्यर्थः। अतः प्रज्ञाक्रियाफललक्षणप्रबन्धारूढः सर्व्वलोकः साध्यसाधनलक्षणः क्रियाफलात्मकः संहतानेकप्राणिकर्म्मवासनासन्तानोऽवष्टब्धत्वात्क्षणिकोऽशुद्धोऽसारो-

---

आ॰ यद्धेति॥ अन्वयव्यतिरेकसिद्धं हेतुं निगमयति। तस्मादिति। यथा तथाप्रज्ञमिति पठितव्यं साध्यं निगमयति॥ अन्वयहेतौ सिद्धे फलितमाह। तस्माद्भुज्यमानानीति॥ धिया धियेत्यादिश्रुतेः स होदमित्यत्रोक्तं परिहारं प्रपञ्चयन्त्याः सप्तविधान्नस्य कार्य्यत्वात् प्रतिक्षणध्वंसित्वेऽपि पुनः पुनः क्रियमाणत्वात् प्रवाहात्मना तदक्षयं। मन्दाः पश्यन्तीत्यस्मिन्नर्थे तात्पर्य्यमाह। अत इति॥ प्रज्ञाक्रियाभ्यां हेतुभ्यां बध्यते व्यावर्त्त्यते निष्पाद्यते यः प्रबन्धः समुदायस्तदारूढस्तदात्मकः सर्व्वो लोकश्चेतनाचेतनात्मको द्वैतप्रपञ्चः साध्यत्वेन च वर्त्तमानो ज्ञानकर्म्मफलभूतः क्षणिकोऽपि नित्य इव लक्ष्यते। तत्र हेतुः। संहतेति॥ संहतानां मिथः सहायत्वेन स्थितानामनेकेषां प्राणिनामनन्तानि कर्म्माणि वासनाश्च तत्सन्तानेनावष्टब्धत्वाद्दृढीकृतत्वादिति यावत्॥

उ० यो वै तामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते कर्म्मभिर्यद्धैतन्न कुर्य्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखं

---

भा० नदीस्रोतःप्रदीपसन्तानकल्पः कदलीस्तम्भवदसारः फेनमायामरीच्यम्भःस्वप्नादिसमस्तदात्मगतदृष्टीनामविकीर्यमाणोऽनित्यः सारवानिव लक्ष्यते । तदेतद्वैराग्यार्थमुच्यते धिया धिया जनयते कर्म्मभिर्यद्धैतन्न कुर्य्यात्क्षीयेत हेति विरक्तानां हि । तस्माद्ब्रह्मविद्यारम्भश्चतुर्थप्रमुखेनेति । यो वै तामक्षितिं वेदेति वक्ष्यमाणान्यपि त्रीण्यन्नान्यस्मिन्नवसरे व्याख्यातान्येवेति कृत्वा तेषां याथात्म्यविज्ञानफलमुपसंह्रियते । यो वै तामक्षितिमक्षयहेतुं यथोक्तं वेद पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते कर्म्मभिर्यद्धैतन्न कुर्य्यात्क्षीयेत हेति सोऽन्नमत्ति प्रतीकेनेत्यस्यार्थ उच्यते मुखं मुख्यत्वं प्राधान्यमित्येतत्प्रा-

---

आ० प्रातीतिकमेव संसारस्य स्थैर्यं न तात्त्विकमिति वक्तुं विशिनष्टि । नदीति ॥ असारोऽपि सारवत्प्रातीत्यत्र दृष्टान्तमाह । कदलीति ॥ अशुद्धोऽपि शुद्धवत्प्रातीत्यत्रोदाहरणमाह । मायेत्यादिना ॥ अनेकोदाहरणं संसारस्यानेकरूपत्वद्योतनार्थं ॥ केषां पुनरेष संसारोऽन्यथा भातीत्यपेक्षायां संसाराय परागदृशामिति न्यायेनाह । तदात्मेति ॥ किमिति प्रतिक्षणं प्रध्वंसि जगदिति मुख्योच्यते तत्राह । तदेतदिति ॥ वैराग्यमपि कुत्रोपयुज्यते तत्राह । विरक्तानां हीति ॥ इति वैराग्यमर्थवदिति शेषः । पुरुषोऽन्नानामक्षये हेतुरित्युपपाद्य तज्ज्ञानमनूद्य फलमाह । यो वै तामित्यादिना ॥ यथोक्तमनुवदति । पुरुष इति ॥

उ॰ प्रतीकं मुखेनेत्येतत्स देवानपि गच्छति स ऊर्ज्ज-
मुपजीवतीति प्रशंसा । २ ।

त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्या-
त्मने ऽकुरुतान्यत्रमना अभूवन्नादर्शमन्यत्रमना

---

भा॰ धान्येनैवान्नानां पितुः पुरुषस्याक्षितित्वं यो वेद सोऽन्न-
मत्ति नान्नं प्रतिगुणभूतः सन् यथाऽन्नस्तथा विद्वानन्ना-
नामात्मभूतो भोक्तैव भवति न भोज्यतामापद्यते स
देवानपि गच्छति स ऊर्ज्जमुपजीवति देवानपि गच्छति
देवात्मभावं प्रतिपद्यते ऊर्ज्जममृतञ्चोपजीवतीति यदुक्तं
सा प्रशंसा नापूर्व्वार्थोऽन्योऽस्ति ॥ २ ॥

पाङ्क्तस्य कर्म्मणः फलभूतानि यानि त्रीण्यन्नान्युपक्षि-
प्तानि तानि कार्य्यत्वाद्विस्तीर्णविषयत्वाच्च पूर्व्वेभ्योऽन्नेभ्यः
पृथगुत्कृष्टानि तेषां व्याख्यानार्थ उत्तरो ग्रन्थ आब्रा-
ह्मणपरिसमाप्तेः त्रीण्यात्मने कुरुतेति। कोऽस्यार्थ इत्यु-

---

आ॰ फलविषयमन्त्रपदमुपादाय तदीयब्राह्मणमवतार्य्य व्याकरोति।
सोऽन्नमित्यादिना । यथोक्तोपासनावतो यथोक्तं फलमुपास्ति-
प्राधान्येनैव सोऽन्नमत्तीति सम्बन्धः। विदुषोऽन्नं प्रति गुणत्वाभावे
हेतुमाह। अन्नानामिति। उक्तमर्थं प्रति[illegible]ति। भोक्तैवेति।
प्रशस्तिं सिद्धये प्रपञ्चयति। स देवानित्यादिना। साधनात्मक-
मन्नचतुष्टयम[illegible]मक्षितित्वमुक्तप्र[illegible] पुरुषोपासनस्य
फलञ्चोक्तं ॥ २ ॥

इदानीमाब्राह्मणसमाप्तेरुत्तरग्रन्थस्य तात्पर्य्यमाह । पाङ्क्तस्ये-
त्यादिना। ब्राह्मणशेषस्य तात्पर्य्यमुक्त्वा मन्त्रभेदमनूद्याकाङ्क्षाद्वारा
ब्राह्मणमुत्थाप्य व्याचष्टे। त्रीणीत्यादिना। ध्यानकर्म्मभ्यां समा-

उ॰ अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति ।

---

भा॰ यते मनोवाक्प्राणा एतानि त्रीण्यन्नानि तानि मनो वाचं प्राणञ्चात्मने आत्मार्थमकुरुत कृतवान् कल्पादौ पिता। तेषां मनसोऽस्तित्वं स्वरूपञ्च प्रति संशय इत्यत आह अस्ति तावन्मनः श्रोत्रादिबाह्यकरणव्यतिरिक्तं। यत एवं प्रसिद्धं बाह्यकरणविषयात्मसम्बन्धे सत्यप्यभिमुखीभूतं विषयं न गृह्णाति किं दृष्टवानसीदं रूपमित्युक्तो वदत्यन्यत्र मे गतं मन आसीत् सोऽहमन्यत्रमना आसं नादर्शं। तथेदं श्रुतवानसि मदीयं वच इत्युक्तोऽन्यत्रमना अभूवं नाश्रौषं न श्रुतवानस्मीति। तस्माद्यस्यासन्निधौ रूपादिग्रहणसमर्थस्यापि सतश्चक्षुरादेः स्वस्वविषयसम्बन्धे रूपशब्दादिज्ञानं न भवति। यस्य च भावे भवति तदन्यदस्ति मनो

---

आ॰ यानि सृष्ट्वा चत्वारि भोक्तृभ्यो विभज्य त्रीण्यात्मार्थं कल्पादौ पिता कल्पितवानित्यर्थः॥ अन्यत्रेत्यादि वाक्यमुपादत्ते। तेषामिति। षष्ठी निर्द्धारणार्था॥ तत्र मनसोऽस्तित्वमादौ साधयति। अस्ति तावदिति॥ आत्मेन्द्रियार्थसान्निध्ये सत्यपि कदाचिदेवार्थधीर्जायमाना हेत्वन्तरमाक्षिपति। न चादृष्टादिति। युक्तं तस्य दृष्टसंवादित्वात्तस्मादर्थादिसान्निध्ये ज्ञानकादाचित्कत्वानुपपत्तिर्मनःसाधिकेत्यर्थः॥ लोकप्रसिद्धिरपि तत्र प्रमाणमित्याह। यत इति। अतोऽस्ति बाह्यकरणव्यतिरिक्तं विषयग्राहि करणमिति शेषः॥ तामेव प्रसिद्धिमुदाहरणतयोदाहरति। किं दृष्टवानित्यादिना॥ तत्रैवान्वयव्यतिरेकावनुपन्यस्यति। तस्मादिति। यथोक्तार्थोपपत्तेर्लोकप्रसिद्धिवशादिति यावत्। विमतमात्मा-

उ॰ कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिर धृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि

---

भा॰ नामान्तःकरणं सर्वकरणविषयोपयोगीत्यवगम्यते। तस्मात्सर्वो हि लोको मनसा ह्येव पश्यति मनसा शृणोति तद्व्यग्रत्वे दर्शनाद्यभावादस्तित्वे सिद्धे मनसः स्वरूपार्थमिदमुच्यते॥

कामः स्त्रीव्यतिकराभिलाषादिः। सङ्कल्पः प्रत्युपस्थितविषयविकल्पनं शुक्लनीलादिभेदेन। विचिकित्सा संशयज्ञानं। श्रद्धाऽदृष्टार्थेषु कर्मस्वास्तिक्यबुद्धिर्देवतादिषु च। अश्रद्धा तद्विपरीता बुद्धिः। धृतिर्धारणं देहाद्यवसादे उत्तम्भनं। अधृतिस्तद्विपर्ययः। ह्रीर्लज्जा। धीः प्रज्ञा। भीर्भयं इत्येतदेवमादिकं सर्वं मन एव मनसोऽन्तःकरणस्य रूपाण्येतानि। मनोऽस्तित्वं प्रत्यन्यच्च कारणमुच्यते। तस्मा-

---

आ॰ तिरिक्तापेक्षं तस्मिन्सत्यपि कादाचित्कत्वाद्घटवदित्यनुमानं तच्छब्दार्थः। तस्मादनुमानादिमानादस्त्यस्ति मनो नामेति सम्बन्धः। रूपादिग्रहणसमर्थस्यापि सत इति प्रमातोच्यते॥ अन्तःकरणस्य चक्षुरादिभ्यो वैलक्षण्यमाह। सर्वेति। समनन्तरं वाक्यं फलितार्थविषयत्वेनादत्ते। तस्मादिति॥ तच्छब्देनोक्तं हेतुं सूचयति। तद्व्यग्रत्व इति। कामादिवाक्यमवतार्य व्याकुर्वन्मनसः स्वरूपं प्रति संशयं निरस्यति। अस्तित्व इति।

अश्रद्धादिवत्कामादिर्विवक्षितोऽन्येति मत्वा मनोबुद्ध्योरेकत्वमुपेत्योपसंहरति। इत्येतदिति। द्वैतप्रपञ्चमुखं मनो भोक्तृकर्मवशाज्ज्ञानार्थकारेण विवर्तत इत्यभिप्रेत्यानन्तरवाक्यमवतारयति। मनोऽस्तित्वमिति। तदेवान्यत्कारणं स्फोरयति। यस्मादिति। तस्मादस्ति विवेककारणमन्तःकरणमिति सम्बन्धः। चक्षुरसंप्रयोगमात्रेण स्पर्शविशेषादर्शनेऽपि संप्रयुक्तया

उ॰ पृष्ठत उपस्पृष्टो मनसा विजानाति। यः कश्च शब्दो वागेव सा।

---

भा॰ मनो नामास्त्यन्तःकरणं। यस्माच्चक्षुषो ऽगोचरे पृष्ठतो-ऽप्युपस्पृष्टः केनचिद्धस्तस्यायं स्पर्शो जानोरयमिति विवेकेन प्रतिपद्यते। यदि विवेककृन्मनो नाम नास्ति तर्हि त्वङ्मात्रेण कुतो विवेकप्रतिपत्तिः स्यात्तद्विवेकप्रतिपत्तिकारणं तन्मनोऽस्ति तावन्मनःस्वरूपस्य तस्याधिगतं। त्रीण्यन्नानि फलभूतानि कर्म्मणां मनोवाक्प्राणाख्यानि अध्यात्ममधिभूतमधिदैवञ्च व्याचिख्यासितानि। तत्राध्यात्मिकानां वाङ्मनःप्राणानां मनो व्याख्यातं। अथेदानीं वाग्वक्तव्येत्यारम्भो यः कश्चिल्लोके शब्दो ध्वनिस्ताल्वादि-व्यङ्ग्यः प्राणिभिर्व्वर्णादिलक्षण इतरो वा वादित्रमेघा-दिनिमित्तः सर्व्वो ध्वनिर्वागेव सा इदं तावद्वाचः स्वरूप-मुक्तं। अथ तस्याः कार्य्यमुच्यते॥

---

आ॰ त्वचा विनापि मनोविशेषदर्शनं स्यादित्याशङ्क्याह। यदीति। त्वङ्मात्रस्य स्पर्शमात्रग्राहित्वेन विवेचकत्वायोगादित्यर्थः। विवेचके कारणान्तरे सत्यपि कुतो मनःसिद्धिरित्याह। यत्तदिति। उक्तं निगमयति। अस्ति तावदिति॥ उत्तरग्रन्थमवतारयितुं भूमिकां करोति। त्रीणीति। एवं भूमिकामारचय्याध्यात्मिकवाग्व्याख्यानार्थं यः कश्चेत्यादि वाक्यमादाय व्याकरोति। अथेत्यादिना। शब्दप-र्य्यायो ध्वनिर्द्विविधो वर्णात्मकोऽवर्णात्मकश्चाद्यो वक्तृभि-स्ताल्वादिष्वभिव्यक्तो द्वितीयो मेघादिषु तत्र स सर्व्वोऽपि प्रकृता वागेवेत्यर्थः। प्रकाशमात्रं वाचमिष्ट्वा तत्र प्रमाणमाह। इदं तावदिति। तस्मादभिधेयनिर्णायकत्वात्प्रकाशरूपा वागेवेति शेषः॥

उ॰ एषा ह्यन्नमायत्तैषा हि न प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो

---

भा॰ एषा वागिध यस्मादन्नमभिधेयावसानमभिधेयनिर्द्देशमायत्तानुगता एषा पुनः स्वयन्नाभिधेयवत्प्रकाश्याभिधेयप्रकाशिकैव प्रकाशात्मकत्वात् प्रदीपादिवन्न हि प्रदीपादिप्रकाशः प्रकाशान्तरेण प्रकाश्यते तद्वद्वाक्यप्रकाशिकैव स्वयं न प्रकाश्येत्यनवस्थां श्रुतिं परिहरत्येषा हि न प्रकाश्या प्रकाशकत्वमेव वाचः कार्य्यमित्यर्थः। अथ प्राण उच्यते। प्राणो मुखनासिकासञ्चार्य्या हृदयवृत्तिः। प्रणयनात्प्राणः। अपनयनान्मूत्रपुरीषादेरपानोऽधोवृत्तिः। आनाभिस्थानो व्यानो व्यायमनकर्म्मा व्यानः। प्राणापानयोः सन्धिर्वीर्य्यवत्कर्म्महेतुश्च। उदान उत्कर्षो-

---

आ॰ वचोऽपि प्रकाश्यत्ववत्कथं प्रकाशमात्रं वागित्युक्तमाशङ्क्याह। एषेति। दृष्टान्तं समर्थयते। न हीति। प्रकाशान्तरेण सजातीयेनेति शेषः। प्रकाशिकापि वाक् प्रकाश्या चेत्तत्रापि प्रकाशकान्तरमेष्टव्यमित्यवस्था स्यात्तन्निरासार्थमेषा हि नेति श्रुतिः प्रकाशमात्रं वागित्याह। स्वपरनिर्व्वाहकत्वमुशब्दः। तस्मात्प्रकाशकत्वं कार्य्यं यत्र दृश्यते तत्र वाचः स्वरूपमनुगतमेवेत्याह। तद्वदित्यादिना। आध्यात्मिकप्राणविषयं वाक्यमवतार्य्य व्याकरोति। अथेति। मुखादौ सञ्चार्य्यासञ्चरणशीला हृदयसम्बन्धिनी या वायुवृत्तिः। तत्र प्राणशब्दप्रवृत्तौ निमित्तमाह। प्रणयनादिति। पुरतो निस्सरणादिति यावत्। व्यायमं प्राणापानयोर्नियमनं कर्म्मास्येति तयोर्म्मध्ये वीर्य्यवत्कर्म्मारण्यामन्थ्युत्पादनादि। उत्कर्षो देहे पुष्टिः। आदिपदेनोत्क्रान्तिरुक्ता। प्राणशब्देनानशब्दस्य

भा॰ ऊर्ध्वगमनादिहेतुरापादतलमस्तकस्थान ऊर्ध्ववृत्तिः समानः समं नयनाद्भुक्तस्य पीतस्य च कोष्ठस्थानोऽन्नपक्ता अन इत्येषां वृत्तिविशेषाणां सामान्यभूता सामान्यदेहचेष्टासम्बन्धिनी वृत्तिरेवं यथोक्तं प्राणादिवृत्तिजातमेतत्सर्व्वं प्राण एव। प्राण इति वृत्तिमानाध्यात्मिकोऽननुक्तः कर्म्म चास्य वृत्तिभेदप्रदर्शनेनैव व्याख्यातं। व्याख्यातान्याध्यात्मिकानि मनोवाक्प्राणाख्यान्यन्नान्येतन्मय एतद्विकारः प्राजापत्यैरेतैर्वाङ्मनःप्राणैरारब्धः। कोऽसावयं कार्य्यकारणसङ्घात आत्मा पिण्ड आत्मस्वरूपत्वेनाभिमतोऽविवेकिभिरविशेषेणैतन्मय इत्युक्तस्य विशेषणं वाङ्मयो मनोमयः प्राणमय इत्यपि प्राणस्फुटीकरणं ॥ ३ ॥

---

आ॰ यथिमाशङ्क्याह। अन इत्येषामिति। तथापि तृतीयस्य प्राणशब्दस्य ताभ्यां पुनरुक्तिरित्याशङ्क्याह। प्राण इतीति। साधारणासाधारणवृत्तिमान्प्राण इत्यपौनरुक्त्यमित्यर्थः। मनसो दर्शनादिवद्वाचोऽभिधेयप्रकाशनवच्च प्राणस्यापि कार्य्यं वक्तव्यमित्याशङ्क्याह। कर्म्म चेति। एतन्मय इत्यत्र मयटो विकारार्थत्वं स्वतः प्रकीर्त्तनपूर्व्वकं कथयति। व्याख्यातानीति। आध्यात्मिकानां वागादीनामारम्भकत्वं वारयति। प्राजापत्यैरिति। आरब्धस्वरूपं प्रश्नपूर्व्वकमनन्तरवाक्यमनिर्द्धारयति। कोऽसाविति। कार्य्यकरणसङ्घाते कथमात्मशब्दप्रवृत्तिरित्याशङ्क्याह। आत्मस्वरूपत्वेनेति। वाङ्मय इत्यादि वाक्यस्य पूर्व्वेण पौनरुक्त्यमाशङ्क्याह। अविशेषेणेति। ३।

उ॰ त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥ ४ ॥ त्रयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ ५ ॥ देवाः पितरो मनुष्या एत एव वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ ६ ॥ पिता माता प्रजैत एव मन एव पिता वाङ्माता प्राणः प्रजा ॥ ७ ॥ विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किञ्च-

---

भा॰ तेषामेव प्राजापत्यानामन्नानामाधिभौतिको विस्तारोऽभिधीयते। त्रयो लोकाः भूर्भुवः स्वरित्याख्या। एत एव वाङ्मनःप्राणास्तत्र विशेषो वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥ ४ ॥ तथा त्रयो वेदा इत्यादीनि वाक्यानि स्पष्टार्थानि ॥ ५ ॥ ६ ॥ ७ ॥ विज्ञातं विजिज्ञास्यमविज्ञातमेत एव तत्र विशेषो यत्किञ्च विज्ञानं विस्पष्टं ज्ञातं वाचस्तद्रूपं तत्र स्वयमेव हेतुमाह । वाग्घि विज्ञाता प्रकाशात्मकत्वात्कथमविज्ञाता भवेद्या-

---

आ॰ वागादीनामाध्यात्मिकविभूतिप्रदर्शनार्थमुत्तरग्रन्थमवतारयति। तेषामेवेति ॥ ४ ॥ तत्रेत्युक्तं सामान्यं परामृशति । त्रिलोकीवाक्यवदुत्तरं वाक्यं विज्ञातादिवाक्यात् प्राक्तनं नेतव्यमित्याह । तथेति ॥ ५ ॥ ६ ॥ ७ ॥ विज्ञातादि वाक्यमादाय तद्गतं विशेषं दर्शयति । विज्ञातमिति । विज्ञातं सर्वं वाचो रूपमिति प्रतिज्ञातोऽर्थः समर्थ्यः । प्रकाशकत्वेऽपि कथं वाचो विज्ञातत्वमित्याशङ्क्याह । कथमिति । प्रकाशात्मकत्वमेव कुतो वाचः सिद्धमित्याह । वाचेति । वाग्विशेषस्तद्विभूतिः सन्दिह्यमाना-

उ॰ विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वाऽवति ॥ ८ ॥ यत्किञ्च विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वाऽ

---

भा॰ न्यानपि विज्ञापयति वागेव यस्मात् वाक् प्रज्ञायत इति हि वक्ष्यति वाग्विशेषविद इदं फलमुच्यते वागेवैनं यथोक्तवाग्विभूतिविदं तद्विज्ञातं भूत्वाऽवति पालयति। विज्ञातरूपेणैवास्यान्नं भोज्यतां प्रतिपद्यत इत्यर्थः ॥ ८ ॥ तथा यत्किञ्चाविस्पष्टं विस्पष्टं ज्ञातुमिष्टं विजिज्ञास्यं तत्सर्व्वं मनसो रूपं मनो हि यस्मात्सन्दिह्यमानाकारत्वाद्विजिज्ञास्यं। पूर्व्ववन्मनो विभूतिविदः फलं मन एनं तद्विजिज्ञास्यं भूत्वाऽवति विजिज्ञास्यस्वरूपेणैवान्नत्वमापद्यते ॥ ९ ॥ तथा यत्किञ्चाविज्ञातं विज्ञानागोचरं न च सन्दिह्यमानं प्राणस्य तद्रूपं प्राणो ह्यविज्ञात अविज्ञातरूपो हि यस्मात्प्राणोऽनिरुक्तश्रुतेर्विज्ञातविजिज्ञा-

---

आ॰ कारत्वात्सङ्कल्पविकल्पात्मकत्वादिति यावत्। तस्मात्सर्व्वं विजिज्ञास्यं मनोरूपमिति योजना। विज्ञातादिरूपमिति सम्बन्धः। पूर्व्ववद्वाग्विभूतिविदो यथा फलमुक्तं तद्वदिति यावत्। अनिरुक्तश्रुतेरविज्ञातरूपो यस्मात्प्राणस्तस्मादविज्ञातं सर्व्वं प्राणस्य रूपमिति योजना। विज्ञातादिरूपातिरेकेण लोकवेदाद्यभावाद्विज्ञातादिरूपत्वाभिधानेनैव वागादीनां लोकाद्यात्मत्वे सिद्धे किमर्थं त्रयो लोका इत्यादिवाक्यमित्याशङ्क्य तथैव ध्यानार्थमित्याह। विज्ञातेति। भूरादिष्वेकैकत्र विज्ञातादिविषयदृष्टेर्वागादेश्च व्यवस्थितत्वात्कुतो विज्ञातादेर्वागाद्यात्मत्वं नियन्तुं शक्यमित्याशङ्क्याह। सर्व्वमिति। प्राणविभूतिविदः सम्प्रति फलं कथयति।

उ॰ वति ॥ ९ ॥ यत्किञ्चाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वाऽवति ॥ १० ॥ तस्यैव वाचः पृथिवी शरीरं ज्योतीरूपमय

---

भा॰ त्वाविज्ञातभेदेन वाङ्मनःप्राणविभागे स्थिते त्रयो लोका इत्यादयो वाचनिका एव। सर्व्वत्र विज्ञातादिरूपदर्शना-दर्शनादेव तस्य नियमः स्मर्त्तव्यः। प्राण एनं तद्भूत्वा ऽवत्यविज्ञातरूपेणैवास्य प्राणोऽन्नं भवतीत्यर्थः। शिष्य-पुत्रादिभिः सन्दिह्यमाना अविज्ञातोपकारा आचार्य्य-पित्रादयो दृश्यन्ते। तथा मनःप्राणयोरपि सन्दिह्य-मानाविज्ञातयोरन्नत्वोपपत्तिः ॥ १० ॥

व्याख्यातो वाङ्मनःप्राणानामाधिभौतिको विस्तारो ऽथायमाधिदैविकार्थ आरम्भस्तस्यैतस्या वाचः प्रजापते-रन्नत्वेन प्रस्तुतायाः पृथिवी शरीरं बाह्य आधारो ज्योतीरूपं प्रकाशात्मकं करणं पृथिव्या आधेयभूतं अयं

---

आ॰ प्राण इति। लोके विज्ञातस्यैव भोज्यत्वोपपत्तिरित्याशङ्क्याह। शिष्येति। शिष्यैरविवेकिभिः सन्दिह्यमानोपकारा अपि गुरव-स्तेषां भोज्यतामापद्यमाना दृश्यन्ते पुत्रादिभिश्चातिबालैर-विज्ञातोपकाराः पित्रादयस्तेषां भोज्यत्वमुपपद्यते तथा प्रकृतेऽपि सम्भवतीत्यर्थः । ८ । ९ ।१० ।

वृत्तमनूद्य तस्यैव वाचः पृथिवीत्याद्यवतारयति । व्याख्यात इति। आधिदैविकार्थस्तद्विभूतिप्रदर्शनार्थ इति यावत्। सम-नन्तरसन्दर्भस्य तात्पर्य्यमुक्त्वा वाक्याक्षराणि योजयति । तस्या इति । अथमाधाराधेयभावो वाचो निर्द्दिश्यते तत्राह। द्विरूपा हीति। उक्तमर्थं सङ्क्षिप्य निगमयति । तदुभयमिति।

उ॰ मग्निस्तद्यावत्येव वाक्तावती पृथिवी तावानय-
मग्निः ॥ ११ ॥

अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसा-
वादित्यस्तद्यावदेव मनस्तावती द्यौस्तावान-

---

भा॰ पार्थिवोऽग्निर्दिरूपो हि प्रजापतेर्वाक्कार्य्यमाधारोऽप्रकाशः
करणश्चाधेयं प्रकाशस्तदुभयं पृथिव्यग्नी वागेव प्रजापते-
स्तत्र यावत्परिमाणैवाध्यात्माधिभूतभेदभिन्ना सती
वाग्भवति तत्र सर्व्वत्राधारत्वेन पृथिवी व्यवस्थिता
तावत्येव भवति कार्य्यभूता तावानयमग्निराधेयः करण-
रूपो ज्योतीरूपेण पृथिवीमनुप्रविष्टः तावानेव भवति
समानमुत्तरं ॥ ११ ॥

अथैतस्य प्राजापत्यालोकस्यैव मनसो द्यौर्द्युलोकः
शरीरं कार्य्यमाधारो ज्योतीरूपं करणमाधेयोऽसावा-
दित्यस्तत्र यावत्परिमाणमेवाध्यात्ममधिभूतं वा मन-

---

आ॰ अध्यात्ममधिभूतञ्च या वाक् परिच्छिन्ना तस्यास्तुल्यपरिमाणत्व-
माधिदैविकवागंशत्वादंशाग्निनोश्च तादात्म्यात्तथा सह दर्शयति ।
तत्रेति ॥ तावानयमग्निरिति प्रतीकमादाय व्याकरोति । आधेय
इति ॥ समानमुत्तरमित्यस्यायमर्थोऽध्यात्ममधिभूतं च मनः-
प्राणयोरधिदैविकमनःप्राणांशत्वात्तादात्म्याभिप्रायेण तुल्यपरि-
माणत्वमुच्यते । तथाच वाचा समानं प्राणादावुत्तरवाक्ये कथ्यमान-
समानपरिमाणत्वमिति ॥ ११ ॥

आधिदैविकवाग्विभूतिव्याख्यानानन्तर्य्यमथशब्दार्थः ॥ मनसो
दैवरूप्यमुक्त्वा व्याप्तिमभिधत्ते । तत्रेति । मन एवास्यात्मा वाग्जाया
प्राणः प्रजेत्यध्यात्मं मन एव पिता वाङ्माता प्राणः प्रजेत्य-

उ॰ सावादित्यस्तौ मिथुनꣳ समैतां ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ॥ १२ ॥

---

भा॰ स्तावती तावद्विस्तारा तावत्परिमाणा मनसो ज्योतीरूपस्य करणस्याधारत्वेन व्यवस्थिता द्यौस्तावानसावादित्यो ज्योतीरूपं करणमाधेयं तावग्न्यादित्यौ वाङ्मनसे आधिदैविके मातापितरौ मिथुनं मैथुन्यमितरेतरसंसर्गं समैतां समगच्छेतां । मनसादित्येन प्रसूतं पित्रा वाचाग्निना मात्रा प्रकाशितं कर्म करिष्यामीत्यन्तरा रोदस्योस्ततस्तयोरेव सङ्गमनात्प्राणो वायुरजायत परिस्पन्दाय कर्मणे । यो जातः स इन्द्रः परमेश्वरो न केवलमिन्द्र एवासपत्नोऽविद्यमानः सपत्नो यस्य कः पुनः सपत्नो नाम द्वितीयो वै प्रतिपक्षत्वेनोपगतो द्वितीयः सपत्न इत्युच्यते तेन द्वितीयत्वेऽपि सति वाङ्मनसे न सपत्नत्वं भजेते

---

आ॰ धिभूतञ्च वाङ्मनसयोः प्राणस्य प्रजात्वमुक्तं तथाऽधिदैवेऽपि तस्य तत्प्रजात्वं वाच्यमित्यभिप्रेत्याह । ताविति । कथमादित्यस्य मनसः प्राणं प्रति पितृत्वं वाचो वाग्नेर्मातृत्वं तत्राह ॥ मनसेति । सावित्रं प्रकाशमात्रेयं च प्रकाशमुच्यते कार्य्यसिद्ध्युदर्शनात्तयोः सिद्धं जनकत्वमित्यर्थः । कर्म्मशब्देन कार्य्यमुच्यते तत्करिष्यामीति प्रत्येकमभिसन्धिपूर्व्वकमादित्याग्न्योर्द्यावापृथिव्योरन्तराले सङ्गतिरासीदित्याह । कर्म्मेति । सङ्गतिकार्य्यमभिप्रायानुसारि दर्शयति । तत इति । वायोरिन्द्रत्वासपत्नत्वमुक्तविशिष्टस्योपासनमभिप्रेत्याह । यो जात इति । द्वितीयस्य सपत्नत्वे वागादेरपि तथात्वं स्यादित्याशङ्क्याह । प्रतिपक्षत्वेनेति ।

उ॰ अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्य आपस्तावानसौ

---

भा॰ प्राणं प्रति गुणभावोपगते एव हि ते अध्यात्ममिव तच्च प्रासङ्गिकमसपत्नविज्ञानफलमिदं नास्य विदुषः सपत्नः प्रतिपक्षो भवति य एवं यथोक्तं प्राणमसपत्नं वेद ॥ १२ ॥

अथैतस्य प्रकृतस्य प्राजापत्यान्नस्य प्राणस्य न प्रजोत्पत्त्यानन्तरनिर्दिष्टस्यापः शरीरं कार्य्यं करणाधारः पूर्व्ववज्ज्योतीरूपमसौ चन्द्रस्तच्च यावानेव प्राणो यावत्परिमाणोऽध्यात्मादिभेदेषु तावद्व्याप्तिमत्य आपस्तावत्परिमाणास्तावानसौ चन्द्र आधेयस्तास्वप्स्वनुप्रविष्टः करणभूतोऽध्यात्ममधिभूतञ्च तावद्व्याप्तिमानेव तान्येतानि पित्रा पाङ्क्तेन कर्म्मणा सृष्टानि त्रीण्यन्नानि वाङ्मनःप्राणाख्यानि अध्यात्ममधिभूतञ्च जगत्समस्तमेतैर्व्याप्तं नैतेभ्योऽन्यदस्ति

---

आ॰ यथोक्तसपत्नव्याख्यानपक्षमाह । तेनेति । सपत्नगुणकप्राणोपासने फलवाक्यं प्रमाणयति । तच्चेति । प्राणस्यासपत्नत्वे सिद्धे सतीति यावत् ॥ प्रासङ्गिकत्वं प्रजोत्पत्तिप्रसङ्गादागतत्वं ॥ १२ ॥

आधिदैविकयोर्वाङ्मनसयोर्विभूतिनिर्देशानन्तर्य्यमथेत्युक्तं ॥ नन्वेतस्येतच्छब्देन प्रधानेनोक्तस्य प्राणस्य किमिति न ग्रहणं तत्राह । न प्रजेति ॥ अन्नत्रयस्य समप्रधानत्वेन प्रकृतत्वादेतच्छब्देन प्रधानपरामर्शोपपत्तौ नाप्रधानं परामृश्यतेत्यर्थः । पूर्व्ववद्वाचो मनसश्च पृथिवी द्यौश्च शरीरं यथा तथेत्यर्थः ॥ दैहल्ये प्राणस्योक्तां व्याप्तिमवशिष्टां व्याचष्टे । तच्चेति ॥ तावानित्यादि प्रतीकमादाय व्याचष्टे । चन्द्र इति ॥ वाङ्मनःप्राणानामाधिदैविकरूपेणोपासनं विधातुं फलं कीर्त्तयति । तानीति ॥ एतेभ्यो

उ० चन्द्रस्त एते सर्व्व एव समाः सर्व्वेऽनन्ताः स यो है-
तानन्तवत उपास्तेऽन्तवन्तꣳ स लोकं जयत्यथ यो
हैताननन्तानुपास्तेऽनन्तꣳ स लोकं जयति ॥ १३ ॥

---

भा० कार्य्यात्मकं कारणात्मकं वा। समस्तानि ह्येतानि प्रजाप-
तिस्त एते वाङ्मनःप्राणाः सर्व्व एव समास्तुल्या व्याप्तिमन्तो
यावत्प्राणिगोचरं साध्यात्माधिभूतं व्याप्य व्यवस्थिता अत-
एवानन्ता यावत्संसारभाविनो हि ते। न हि कार्य्यक-
रणप्रत्याख्यानेन संसारोऽवगम्यते। कार्य्यकरणात्मका हि
त इत्युक्तं। स यः कश्चित् ह एतान् प्रजापतेरात्मभू-
तानन्तवतः परिच्छिन्नानधिभूतरूपेणाध्यात्मरूपेण वोपास्ते
स च तदुपासनानुरूपमेव फलमन्तवन्तं लोकं जयति परि-
च्छिन्न एव जायते नैतेषामात्मभूतो भवतीत्यर्थः। अथ
पुनर्यो हैताननन्तान् सर्व्वात्मकान् सर्व्वप्राण्यात्मभूतान-
परिच्छिन्नानुपास्ते सोऽनन्तमेव लोकं जयति ॥ १२ ॥

---

आ० ऽतिरिक्तमधिष्ठानमस्तीत्याशङ्क्य विशिनष्टि। कार्य्यात्मकमिति।
प्रजापतिरेतेभ्योऽतिरिक्तोऽस्तीत्याशङ्क्याह। समस्तानीति। सोप-
स्कारं सूत्रमनूद्य वाक्यमादाय व्याचष्टे। त एत इति। तुल्यां
व्याप्तिमेव व्यनक्ति। यावदिति। तावदध्येवं जगद्व्याप्येति
योजना। तुल्यव्याप्तिमत्त्वमुपजीव्याह। अत एवेति। तेषां याव-
त्संसारभावित्वमभिव्यनक्ति। न हीति। कार्य्यकरणयोर्याव-
त्संसारभावित्वेऽपि प्राणानां किमायातमत आह। कार्य्येति।
तेषु परिच्छिन्नत्वेन ध्याने दोषमाह। स य इति। एवं यावनिन्दां
कृत्वा विवक्षितमुपासनमुपदिशति। अथेति। १२॥

उ॰ स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदश कला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवावपूर्य्यतेऽप च क्षीयते सोऽमा-

---

भा॰ पिता पाङ्क्तेन कर्म्मणा सप्तान्नानि सृष्ट्वा त्रीण्यन्नान्यात्मार्थमकरोदित्युक्तं। तान्येतानि पाङ्क्तकर्म्मफलभूतानि व्याख्यातानि। तत्र कथं पुनः पाङ्क्तस्य कर्म्मणः फलमेतानीत्युच्यते। यस्मात्तेष्वपि त्रिष्वन्नेषु पाङ्क्ततावगम्यते। वित्तकर्म्मणोरपि तत्र सम्भवात्। तत्र पृथिव्यग्नी माता। दिवादित्यौ पिता। योऽयमनयोरन्तरा प्राणः स प्रजेति व्याख्यातं। तत्र वित्तकर्म्मणी सम्भावयितव्य इत्यारम्भः। स एष संवत्सरो योऽयं त्र्यन्नात्मा प्रजापतिः प्रकृतः स एष संवत्सरात्मना विशेषतो निर्द्दिश्यते षोडशकलः षोडशकला अवयवा अस्य सोऽयं षोडशकलः संवत्सरः संवत्सरात्मा कालरूपः। तस्य च कालात्मनः प्रजापते रात्रय एवाहोरात्राणि तिथय इत्यर्थः। पञ्चदशकलाः ध्रुवा एव नित्या

---

आ॰ अन्नत्रये पाङ्क्तत्वज्ञानविषये व्याख्याते वक्तव्याभावात्किमुत्तरग्रन्थेनेत्याशङ्क्य वृत्तं कीर्त्तयति। पितेति॥ तेषां तत्फलत्वे प्रमाणाभावमादाय शङ्कते। तत्रेति॥ प्रकृतं व्याख्यानं सप्तम्यर्थः। कार्य्यलिङ्गकमनुमानं प्रमाणयन्नुत्तरमाह। उच्यत इति॥ अनुमानमेव स्फुटयितुमन्नेषु पाङ्क्तत्वावगतिं दर्शयति। यस्मादिति। तस्मात्तत्कारणमपि तादृशमिति शेषः॥ कथं पुनस्तत्र पाङ्क्तत्वधीरित्याशङ्क्याह। वित्तेति॥ आत्मा जाया प्रजेति त्रयं सङ्गृहितुमपि शब्दः। उक्तं हेतुं व्यक्तीकुर्व्वन्नुक्तं स्मारयति। तत्रेति॥ अन्नत्रयं सप्तम्यर्थः। तथापि कथं पाङ्क्तत्वमित्याशङ्क्यानन्तरग्रन्थ-

उ॰ वास्याᳬं रात्रिमेतया षोडश्या कलया सर्व्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेताᳬं

---

भा॰ व्यवस्थिता अस्य प्रजापतेः षोडशी षोडशानां पूरणी कला स रात्रिभिरेव तिथिभिः कलोक्ताभिरापूर्य्यते चापचीयते च। प्रतिपदाद्याभिर्हि चन्द्रमाः प्रजापतिः शुक्लपक्षे आपूर्य्यते। कलाभिरुपचीयमानाभिर्वर्द्धते यावत्स-म्पूर्णमण्डलः पौर्णमास्यां। ताभिरेवापचीयमानाभिः कला-भिरपचीयते कृष्णपक्षे यावद्ध्रुवैका कला व्यवस्थिता ऽमावास्यायां। सः प्रजापतिः कालात्मामावास्याममावा-स्यायां रात्रिं रात्रौ या व्यवस्थिता ध्रुवा कलोक्तैतया षोडश्या कलया सर्व्वमिदं प्राणभृत्प्राणिजातमनुप्रविश्य यदपः पिबति यच्चौषधीरश्नाति तत्सर्व्वमेवौषध्यात्मना सर्व्वं व्याप्यामावास्यां रात्रिमवस्थाय ततोऽपरेद्युः प्रात-र्जायते द्वितीयया कलया संयुक्तः। एवं पाङ्क्तात्मको

---

आ॰ मवतारयति। तत्र विस्तेति। सप्तमी पूर्व्ववत्॥ अवतारितग्रन्थं व्याचष्टे। योऽयमित्यादिना॥ कथं प्रजापतेस्तिथिभिरापूर्य्य-माणत्वमपक्षीयमाणत्वञ्च तत्राह। प्रतिपदाद्यादिभिरिति॥ वृद्धेर्मर्य्यादां दर्शयति। यावदिति॥ अपक्षयस्य मर्य्यादामाह। यावद्ध्रुवेति॥ अवशिष्टाममावास्यां निविष्टां कलां प्रपञ्चयन् द्वितीयकलोत्पत्तिं शुक्लप्रतिपदि दर्शयति। स प्रजापतिरिति॥ प्राणिजातमेव विशिनष्टि। यदिति॥ स्थावरं जङ्गमञ्चेत्यर्थः। औषध्यात्मनेत्युपलक्षणं जलात्मनेत्यपि द्रष्टव्यं। कालभूते प्रजापतौ पाङ्क्तत्वं वक्तुमुपक्रान्तं तदद्यापि नोक्तमित्याशङ्क्याह। एवमिति॥ तदेव पाङ्क्तत्वं व्यनक्ति। दिवेति॥ कलानां वित्तवदित्यत्वे हेतु-

उ॰ रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृक-लासस्यैतस्या एव देवताया अपचित्यै ॥ १४ ॥

---

भा॰ ऽसौ प्रजापतिः । दिवादित्यो मनः पिता । पृथिव्यग्नी वाग्जाया माता तयोश्च प्राणः प्रजाः । चान्द्रमस्यस्तिथयः कलाः । वित्तमुपचयापचयधर्म्मित्वाद्वित्तवत्तासां च कलानां कालावयवानां जगत्परिणामहेतुत्वं कर्म्म । एवमेव कृत्स्नः प्रजापतिर्जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म्म कुर्व्वीयेत्येषणानुरूप एव पाङ्क्तस्य कर्म्मणः फलभूतः संवृत्तः । कारणानुविधायि हि कार्य्यमिति लोकेऽपि स्थितिर्यस्मादेष चन्द्र एतां रात्रिं सर्व्वप्राणिजातमनुप्र-विष्टो ध्रुवया कलया वर्त्तते । तस्माद्धेतोरेताममावास्यां रात्रिं प्राणभृतः प्राणिनः प्राणं न विच्छिन्द्यात्प्राणिनं न प्रमापयेदित्येतदपि कृकलासस्य । कृकलासो हि पापात्मा स्वभावेनैव हिंस्यते प्राणिभिर्दृष्टोऽप्यमङ्गल इति कृत्वा । ननु प्रतिषिद्धैव प्राणिहिंसा अहिंसन्सर्व्वभूतान्यन्यत्र तीर्थेभ्य इति । बाढं प्रतिषिद्धा तथापि नामावास्याया

---

आ॰ माह । उपचयेति । पाङ्क्तत्वनिर्द्देशेन वाक्यमर्थमाह । एवमेवेति । सम्प्रति कृत्स्नस्य प्रजापतेरुपक्रमानुसारित्वं दर्शयति । जायेति । भवतु प्रजापतेरुक्तरीत्या पाङ्क्तत्वं तथापि कथं पाङ्क्तकर्म्मफलत्वं तत्राह । कारणेति । पाङ्क्तकर्म्मफलत्वं प्रजापते-रुक्त्वा प्रासङ्गिकमर्थमाह । यस्मादिति । अपि कृकलासस्येति कुतो विशेषोक्तिरित्याशङ्क्याह । कृकलासो हीति । कुतस्तस्य पापात्मत्वं तत्राह । दृष्टोऽपीति । विशेषनिषेधस्य शेषानुज्ञा-परत्वाविरोधः सामान्यशास्त्रेण स्यादिति शङ्कते । नन्विति ।

उ॰ यो वै स संवत्सरः प्रजापतिः षोडशकलोऽय-
मेव स योऽयमेवंवित्पुरुषस्तस्य वित्तमेव पञ्च-
दशकला आत्मैवास्य षोडशी कला स वित्तेनै-

---

भा॰ अन्यत्र प्रतिप्रसवार्थं कथनं हिंसायाः कृकलासविषये वा
किमर्थं तस्याः सोमदेवताया अपचित्यै पूजार्थं ॥ १४ ॥

यो वै स परोक्षाभिहितः संवत्सरः प्रजापतिः षोडश-
कलः स नैवात्यन्तं परोक्षो मन्तव्यो यस्मादयमेव सः
प्रत्यक्ष उपलभ्यते । कोऽसावयं यो यथोक्तं त्र्यन्नात्मकं
प्रजापतिमात्मभूतं स एवंवित्पुरुषः केन सामान्येन
प्रजापतिरिति तदुच्यते तस्यैवंविदः पुरुषस्य गवादिवि-
त्तमेव पञ्चदशकला उपचयापचयधर्म्मित्वात्तद्वित्तसा-
ध्यञ्च कर्म्म । तस्य कृत्स्नतायै आत्मैव पिण्ड एवास्य विदुषः

---

आ॰ तीर्थशब्दः शास्त्रविदितप्रदेशविषयः । साधारण्येन सर्व्वत्र निषि-
द्धापि हिंसा विशेषतोऽमरवास्यायां निषिध्यमाना सोमदेवता-
पूजार्था । ततः शेषानुज्ञाभावान्न सामान्योक्तिविरोधोऽस्तीति
परिहरति । वाढमिति ॥ १४ ॥

यत्पूर्व्वमाधिदैविकत्र्यन्नात्मकप्रजापत्युपासनमुक्तं तदहमस्मि
प्रजापतिरित्यहंग्रहेण कर्त्तव्यमित्याह । यो वा इति ।
प्रत्यक्षमुपलभ्यमानं प्रजापतिं प्रश्नद्वारा प्रकटयति । कोऽसा-
विति । तस्य प्रजापतित्वमप्रसिद्धमित्याशङ्क्य परिहरति ।
केनेत्यादिना । कलानां जगद्विपरिणामहेतुत्वे कर्म्मेत्युक्तं । वित्ते
ऽपि कर्म्महेतुत्वमस्ति तेन तत्र कलाशब्दप्रवृत्तिरुचितेत्याह ।
वित्तेति । यथा चन्द्रमाः कलाभिः शुक्लकृष्णपक्षयोरापूर्य्यते
ऽपक्षीयते च तथा स विद्वान्वित्तेनोपचीयमानेनापूर्य्यतेऽपचीय-
मानेन चापक्षीयते । एतच्च लोकप्रसिद्धत्वान्नप्रतिपादनसापेक्षमि-

उ॰ वा च पूर्य्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनागादित्येवाहुः ॥ १५ ॥

अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको

---

भा॰ षोडशी कला ध्रुवस्थानीया स चन्द्रवद्वित्तेनापूर्य्यते चापक्षीयते च। तदेतल्लोके प्रसिद्धं। तदेतन्नभ्यं नाभ्यै हितं नभ्यं नाभिं वार्हतीति किं तद्यदयं योऽयमात्मा पिण्डः प्रधिर्वित्तं परिवारस्थानीयं बाह्यं चक्रस्येवारनेम्यादि। तस्माद्यद्यपि सर्व्वज्यानिं सर्व्वस्वापहरणं जीयते हीयते ग्लानिं प्राप्नोतीत्यात्मना चक्रनाभिस्थानीयेन चेद्यदि जीवति प्रधिना बाह्येन परिवारेणायमगात् क्षीणोऽयं यथा चक्रमरनेमिविमुक्तमेवमाहुर्जीवंश्चेदरनेमिस्थानीयेन वित्तेन पुनरुपचीयत इत्यभिप्रायः॥ १५॥

एवं पाङ्क्तेन दैववित्तविद्यासंयुक्तेन कर्म्मणा ऽन्नात्मकः प्रजापतिर्भवतीति व्याख्यातमनन्तरञ्च जायादि-

---

आ॰ त्याह। स चन्द्रवदिति। आत्मैव ध्रुवा कलेत्युक्तं तदेव रथचक्रदृष्टान्तेन स्पष्टयति। तदेतदिति॥ नाभिश्चक्रपिण्डिका तत्स्थानीयं वा नभ्यं तदेव प्रश्नद्वारा स्फोरयति। किन्तदिति॥ शरीरस्य चक्रपिण्डिकास्थानीयत्वमयुक्तं परिवारादर्शनादित्याशङ्क्याह प्रधिरिति॥ शरीरस्य रथचक्रपिण्डिकास्थानीयत्वे फलितमाह। तस्मादिति। पदार्थमुक्त्वा वाक्यार्थमाह। जीवंश्चेति॥ १५॥

अन्नत्रयात्मनि प्रजापतावहङ्ग्रहोपासनस्य फलस्योक्तत्वादुक्ताभावादुत्तरग्रन्थवैयर्थ्यमित्याशङ्क्य तद्विषयं वक्तुं वृत्तमनुवदति।

उ॰ देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्म्मणा। कर्म्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानाꣳ श्रेष्ठस्तस्मा-द्विद्यां प्रशꣳसन्ति ॥ १६ ॥

---

भा॰ वित्तं परिवारस्थानीयमित्युक्तं। तत्र पुत्रकर्म्मापरविद्यानां लोकप्राप्तिसाधनत्वमात्रं सामान्येनावगतं न पुत्रादीनां लोकप्राप्तिफलं प्रति विशेषसम्बन्धनियमः। सोऽयं पुत्रादीनां साधनानां साध्यविशेषसम्बन्धो वक्तव्य इत्युत्तरकण्डिका प्रणीयते। अथेति वाक्योपन्यासार्थस्त्रयो वा वेत्यवधारणार्थस्त्रय एव शास्त्रोक्तसाधनार्हा लोका न न्यूनानधिका वा। के त इत्युच्यते। मनुष्यलोकः पितृलोको देवलोक इति। तेषां सोऽयं मनुष्यलोकः पुत्रेणैव साधनेन जय्यो जेतव्यः साध्यो यथा च पुत्रेण जेतव्यस्तथोत्तरत्र वक्ष्यामो नान्येन कर्म्मणा विद्यया वेति वाक्यशेषः। कर्म्मणा

---

आ॰ एवमिति। साधनेष्वेव फलमुक्तं। तयोर्मिथो बद्धत्वात्प्रजापतेश्च फलं प्रागेव दर्शितं तत्किमुत्तरग्रन्थेनेत्याशङ्क्य सामान्येन तत्प्रतीतावपीदमस्येति विशेषो नोक्तस्तदुक्त्यर्थमुत्तरा श्रुतिरित्याह। तत्रेति। पूर्व्वग्रन्थः सप्तम्यर्थः। नियमो नावगत इति सम्बन्धः। उपन्यासः प्रारम्भः। वा शब्दस्यावधारणरूपमर्थं विवृणोति। त्रय एवेति॥ तदेव लोकत्रयं प्रश्नद्वारा स्फोरयति। के त इत्यादिना। जयो नाम पुत्रेण मनुष्यलोकातिक्रम इति केचित्तान् प्रत्याह। साध्य इति। पुत्रेणास्य सिद्धत्वमसिद्धत्वमित्याशङ्क्याह। यथा चेति। द्विविधो हि मनुष्यलोकभोगो यः कर्त्तव्यशेषानुष्ठानं भोगश्च। तत्राद्यमाश्रित्यान्ययोगव्यवच्छेदमेवकारार्थं

उ॰ अथातः सम्प्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्या-

---

भा॰ अग्निहोत्रादिलक्षणेन केवलेन पितृलोको जेतव्यो न पुत्रेण नापि विद्यया । विद्यया देवलोको न पुत्रेण नापि कर्म्मणा । देवलोको वै लोकानां त्रयाणां श्रेष्ठः प्रशस्यतमः । तस्मात्तत्साधनत्वाद्विद्यां प्रशंसन्ति ॥ १६ ॥

एवं साध्यलोकत्रयफलभेदेन विनियुक्तानि पुत्रकर्म्मविद्याख्यानि त्रीणि साधनानि । जाया तु पुत्रकर्म्मार्थत्वान्न पृथक्साधनमिति पृथङ्नाभिहिता । वित्तं च कर्म्मसाधनत्वान्न पृथक्साधनं । विद्याकर्म्मणोर्लोकजयहेतुत्वं स्वात्मप्रतिलाभेनैव भवतीति प्रसिद्धं । पुत्रस्य त्वक्रियात्मकत्वात्केन प्रकारेण लोकजयहेतुत्वमिति न ज्ञायतेऽतस्तद्वक्तव्यमित्यथानन्तरमारभ्यते । सम्प्रत्तिः सम्प्रदानं । सम्प्रत्तिरिति वक्ष्यमाणस्य कर्म्मणो नामधेयं । पुत्रे हि

---

आ॰ दर्शयति । नान्येनेति । द्वितीये त्वयोगव्यवच्छेदार्थः । ज्योतिष्टोमं लोकं जयतीति साधनान्तरेणापि मनुष्यलोकजयश्रुतेरिति भावः । पूर्ववाक्यस्थमेवकारमुत्तरवाक्ययोरनुषक्तमुपेत्य वाक्यद्वयं व्याचष्टे । कर्म्मणेत्यादिना ॥ साधनद्वयापेक्षया फलद्वारकमुत्कर्षं विद्यायां दर्शयति । विद्यया देवलोक इति ॥ १६ ॥

वृत्तमनुवदति । एवमिति ॥ पुत्रादिवज्जायावित्तयोरपि प्रकृतत्वात्फलविशेषे विनियोगो वक्तव्य इत्याशङ्क्याह । जायात्विति । न पृथक् पुत्रकर्म्मभ्यामिति शेषः । न पृथक् साधनं कर्म्मणः सकाशादिति मन्तव्यं ॥ भवत्वेवं साधनत्रयनियमस्तथापि विद्याकर्म्मणी हित्वा समनन्तरग्रन्थे किमिति पुत्रनिरूपणमित्या-

उ० सोऽहं ब्रह्माहं यज्ञोऽहं लोक इति यद्वै किञ्चानूक्तं तस्य सर्व्वस्य ब्रह्मेत्येकता ।

---

भा० स्वात्मव्यापारसम्प्रदानं करोत्यनेन प्रकारेण पिता तेन सम्प्रत्तिसञ्ज्ञकमिदं कर्म्म तत्कस्मिन्काले कर्त्तव्यमित्याह। स पिता यदा यस्मिन्काले प्रैष्यन्मरिष्यन्मरिष्यामीत्यरिष्टादिदर्शनेन मन्यतेऽथ तदा पुत्रमाहूयाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स एवमुक्तः प्रत्याह स तु पूर्व्वमेवानुशिष्टो जानाति मयैतत्कर्त्तव्यमिति तेनाह अहं ब्रह्माहं यज्ञोऽहं लोक इति। एतद्वाक्यत्रयमेतस्यार्थस्तिरोहित इति मन्वाना श्रुतिर्व्याख्यानाय प्रवर्त्तते। यद्वै किञ्च यत्किञ्च शिष्टमनूक्तमधीतमनधीतञ्च तस्य सर्व्वस्यैव ब्रह्मेत्येतस्मिन् पद एकतैकत्वं योऽध्ययनव्यापारो मम कर्त्तव्य आसीदेतावन्तं कालं वेदविषयः। स इत ऊर्द्ध्वं त्वं ब्रह्म त्वत्कर्त्तृकोऽस्त्वित्यर्थः॥

---

आ० अथातस्त्वाह। विद्याकर्म्मणोरिति॥ यथोक्ते मोक्षे पुत्रस्य लोकहेतुत्वज्ञापनार्थं सम्प्रत्तिवाक्यमित्याह। अत इति॥ अथात इति पदद्वयं व्याख्याय सम्प्रत्तिपदं व्याचष्टे। सम्प्रत्तिरिति॥ किमिदं सम्प्रदानं नाम तदाह। सम्प्रत्तिरितीति॥ तदेव कर्म्म विशदयति। पुत्रे हीति। अनेन प्रकारेणेति वक्ष्यमाणप्रकारोक्तिः। अरिष्टादीत्यादिपदेन दुःस्वप्नादिसङ्ग्रहः। प्रत्याह वाक्यत्रयमिति सम्बन्धः॥ पुत्रस्याहं ब्रह्मेत्यादि प्रतिवचने हेतुमाह। स त्विति। मया कार्य्यं यदध्ययनादि तदेवावशिष्टं त्वया कार्य्यमिति। पुत्रस्य प्रागनुशिष्टताभावे प्रतिवचनानुपपत्तिरित्यर्थः॥ यद्वै किञ्चेत्यादि वाक्यानां पुत्रानुमन्त्रणवाक्यैरर्थभेदाभावात्पुनरुक्तिरित्याशङ्क्याह। एतस्येति॥ यद्वै किञ्चेत्यादिनाऽऽद्ये वाक्यार्थमाह। योऽध्ययनेति॥

उ॰ ये वै के च यज्ञास्तेषाꣳ सर्व्वेषां यज्ञ इत्येकता ये वै के च लोकास्तेषाꣳ सर्व्वेषां लोक इत्येकतै-

---

भा॰ तथा ये वै के च यज्ञा अनुष्ठेयाः सन्तो मयानुष्ठितास्तानननुष्ठिताश्च तेषां सर्व्वेषां यज्ञ इत्येतस्मिन् पद एकत्वं मत्कर्त्तृका यज्ञा य आसन्। त इत ऊर्द्ध्वं यज्ञस्त्वत्कर्त्तृका भवन्त्वित्यर्थः। ये वै के च लोका मया जेतव्याः सन्तो जिता अजिताश्च तेषां सर्व्वेषां लोक इत्येतस्मिन्पदे एकता इत ऊर्द्ध्वं त्वं लोकस्त्वया जेतव्यास्ते इत ऊर्द्ध्वं मयाध्ययनयज्ञलोकजयकर्त्तव्यक्रतुस्त्वयि समर्पितोऽहन्तु मुक्तोऽस्मि कर्त्तव्यताबन्धनविषयात्क्रतोः। स च सर्व्वं तथैव प्रतिपन्नवान्पुत्रोऽनुशिष्टत्वात्। तत्रेमं पितुरभिप्रायं मन्वानाऽऽचष्टे श्रुतिरेतावद्वेतत्परिमाणं वै इदं सर्व्वं यद्गृहिणा कर्त्तव्यं यदुत वेदा अध्येतव्या यज्ञा यष्टव्या लोकाश्च जेतव्या एतन्मा सर्व्वं सन्नयं सर्व्वं हीमं भारं मदधीनं

---

आ॰ त्वं ब्रह्मेति वाक्यवत्त्वं यज्ञ इति वाक्यमपि भाष्यं व्याख्यातुमित्याह। तथेति॥ आम्नायार्थं सङ्गृह्णाति। मत्कर्त्तृका इति॥ त्वं लोक इत्यस्य व्याख्यानं ये वै केचिदित्यादि। तत्र पदार्थानुक्त्वा वाक्यार्थमाह। इत इति। किमिति त्वत्कर्त्तृकमध्ययनादिकमपि समर्थ्यते त्वयैव किं नानुष्ठीयते तत्राह॥ इत ऊर्द्ध्वमिति। कर्त्तव्यतैव बन्धनं तद्विषयः। क्रतुः सङ्कल्पस्तस्मादिति यावत्। स पुत्र इत्यादेस्तात्पर्य्यमाह। स चेति। तत्रेत्यथोक्तानुशासनोक्तिः। एतत्सर्व्वमित्यादि प्रतीकमादाय व्याचष्टे। सर्व्वं हीति। अनद्यतने भूतेऽर्थे विहितस्य लङो भविष्यदर्थत्वं कथमित्याशङ्क्याह। छन्दसीति। पुत्रानुशासनस्य फलवत्त्वमाह। यस्मादित्यादिना॥

उ॰ तावद्वा इदꣳ सर्वमेतन्मा सर्वꣳ सन्नयमितो भुन-
जदिति तस्मात् पुत्रमनुशिष्टं लोक्यमाहुस्तस्मा-

---

भा॰ मत्तोऽपच्छिद्यात्मनि निधायेतोऽस्माल्लोकान्मा मामभुन-
जत् पालयिष्यतीति लडर्थे लङ् छन्दसि कालनियमा-
भावाद्यस्मादेवं सम्पन्नः पुत्रः पितरमस्माल्लोकात्कर्त्तव्य-
ताबन्धनतो मोचयिष्यति तस्मात्पुत्रमनुशिष्टं लोक्यं
लोकहितं पितुराहुर्ब्राह्मणाः । अत एव ह्येनं पुत्रमनु-
शासति लोक्योऽयं नः स्यादिति पितरः स पिता यदा
यस्मिन्काले एवंवित्पुत्रसमर्पितकर्त्तव्यताक्रतुरस्माल्लोका-
त्प्रैति म्रियतेऽथ तदा एभिरेव प्रकृतैर्वाङ्मनःप्राणैः
पुत्रमाविशति पुत्रं व्याप्नोति अध्यात्मपरिच्छेदहेत्वपग-
मात्पितुर्वाङ्मनःप्राणाः स्वेनाधिदैविकेन रूपेण पृथिव्य-
ग्न्यार्काद्यात्मनाभिन्नघटप्रदीपप्रकाशवत्सर्वमाविशन्ति तैः
प्राणैः सह पिताप्याविशति वाङ्मनःप्राणात्मभावित्वा-
त्पितुरहमस्म्यनन्ता वाङ्मनःप्राणा अध्यात्मादिभेदवि-

---

आ॰ कृतसम्प्रत्तिकः सन् पिता किं करोतीत्यपेक्षायामाह । स पितेति ॥
कोऽयं प्रवेशो न हि विशिष्टस्य केवलस्य वा बिले सर्पवत्प्रवेशः
सम्भवत्यत आह । अध्यात्मेति ॥ हेतुर्मिथ्याज्ञानादिः । वागा-
दिष्वाविष्टेष्वपि कुतोऽर्थान्तरस्य पितुरावेशधीरित्याशङ्क्याह ।
वागिति ॥ तद्भावित्वमेव स्फोरयति । अहमिति ॥ भावना-
फलमाह । तस्मादिति ॥ पुत्रविशेषणात्परिच्छिन्नत्वं पितुस्त-
दवस्थमित्याशङ्क्याह । सर्वेषां हीति । मृतस्य पितुरितो लोका-
दागतस्य कथं यथोक्तरूपत्वमित्याशङ्क्याह । एतदुक्तमिति ॥

उ॰ देनमनुशासति स यदैवंविदस्माल्लोकात्प्रैत्यथैभि
रेव प्राणैः सह पुत्रमाविशति । स यद्यनेन
किञ्चिदक्ष्णया कृतं भवति तस्मादेनꣳ सर्व-

---

भा॰ स्मारा इत्येवं भावितो हि पिता । तस्मात्तत्प्राणानुशिष्टत्वं
पितुर्भवतीति युक्तमुक्तमेभिरेव प्राणैः सह पुत्रमाविशतीति।
सर्वेषां ह्यसावात्मा भवति पुत्रस्य चैतदुक्तं भवति । यस्य
पितुरेवमनुशिष्टः पुत्रो भवति सोऽस्मिन्नेव लोके वर्त्तते
पुत्ररूपेण नैव मृतो मन्तव्य इत्यर्थः । तथा च श्रुत्यन्तरे
सोऽस्यायमितर आत्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयत इति ॥
अथेदानीं पुत्रनिर्वचनमाह । स पुत्रो यदि कदाचि-
दनेन पित्रा अक्ष्णया कोणच्छिद्रतोऽन्तराऽकृतं भवति
कर्त्तव्यं । तस्मात्कर्त्तव्यतारूपात्पित्राऽकृतात्सर्वस्माल्लोकप्रा-
प्तिप्रतिबन्धरूपात्पुत्रो मुञ्चति मोचयति तत्सर्वं स्वयमनु-
तिष्ठन् पूरयित्वा । तस्मात्पूरणेण त्रायति पितरं । यस्मात्त-

---

आ॰ पुत्ररूपेणात्र स्थितिमेव विभजते । नैवेति । मृतः पिताऽनु-
शिष्टपुत्रात्मनात्र वर्त्तते नास्मादत्यन्तं व्यावृत्तः पत्ररूपेण च पर-
त्रेति भावः । उक्तेऽर्थे ऐतरेयश्रुतिं संवादयति। तथा चेति ।
षष्ठीप्रथमाभ्यां पितापुत्रावुच्येते ।

सपदोत्थादिवाक्यमवतार्य्य व्याकरोति । अथेत्यादिना । अकृत-
मकृतादिति च्छेदः। तस्मादिति प्रतीकमादाय व्याकरोति ।
पूरणेनेति । तदेव प्रपञ्चयति । इदं तदिति । पुत्रवैशिष्ट्यं
निगमयति । स पितेति । पुत्रेणैतल्लोकजयमुपसंहरति । एव-
मिति । यथोक्तात्पुत्रादिद्याकर्म्मणोर्विशेषमाह । न तथेति ।
कथं तर्हि ताभ्यां पिता तौ जयति तत्राह। स्वरूपेति । तदेव

उ॰ स्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणै-

---

भा॰ स्मात्पुत्रो नामेदं तत्पुत्रस्य पुत्रत्वं यत्पितुश्छिद्रं पूरयित्वा त्रायति स पितैवंविधेन पुत्रेण मृतोऽपि सन्नमृतोऽस्मिन्नेव लोके प्रतितिष्ठत्येवमसौ पिता पुत्रेणेमं मनुष्यलोकं जयति। न तथा विद्याकर्मभ्यां देवलोकपितृलोकौ स्वरूपलाभसत्तामात्रेण। न हि विद्याकर्मणी स्वरूपलाभव्यतिरेकेण पुत्रवद्व्यापारान्तरापेक्षया लोकजयहेतुत्वं प्रतिपद्येते। अथ कृतसम्प्रत्तिकं पितरमेनमेते वागादयः प्राणा दैवा हिरण्यगर्भा अमृता अमरणधर्माण आविशन्ति कथमिति वक्ष्यति पृथिव्यै चैनमित्यादि। एवं पुत्रकर्मापरविद्यानां मनुष्यलोकपितृलोकदेवलोकसाध्यार्थता प्रदर्शिता श्रुत्या स्वयमेवात्र केचिद्वावदूकाः

---

आ॰ स्पष्टयति। न हीति॥ अनुशिष्टपुत्रेणैतल्लोकजयिनं पितरमधिकृत्य अथैनमित्यादि वाक्यं तद्व्याकरोति। अथेति॥ पुत्रप्रकरणविच्छेदार्थोऽथशब्दः। आवेशप्रकारबुभुत्सायामुत्तरवाक्यप्रवृत्तिं प्रतिजानीते। कथमित्यादिना। पृथिव्यै चेत्यादिवाक्यस्य व्यावर्त्त्यं पक्षं वृत्तानुवादपूर्व्वकमुत्थापयति। एवमिति॥ अत्रेति वैदिकान्निर्धारयितुं सप्तमी। बहुवदनशीलत्वे हेतुः श्रुत्युक्तेति। मोक्षार्थतां ऋणापाकरणश्रुतिस्मृतिभ्यां वदन्तीति शेषः॥ मीमांसकपक्षं प्रकृतश्रुतिविरोधेन दूषयति। तेषामिति॥ कथमित्याशङ्क्य श्रुतेरादिमध्यावसानालोचनया पुत्रादेः संसारफलत्वावगमान्न मुक्तिफलतेत्याह। जायेत्यादिना॥ पुत्रादीनाञ्चेति चकारादेतावान्वै काम इति मध्ये सङ्ग्रहः। यदुक्तमृणापाकरणश्रुतिस्मृतिभ्यां पुत्रादेर्मुक्तिफलतेति तत्राह। तस्मादिति॥ पुत्रादेः श्रुतं संसारफलत्वं परामर्ष्टुं तच्छब्दः। अपिशब्दः

उ॰ वास्मिँल्लोके प्रतितिष्ठत्यथैनमेते देवाः प्राणा अमृता आविशन्ति ॥ १७ ॥

---

भा॰ श्रुत्युक्तविशेषार्थानभिज्ञाः सन्तः पुत्रादिसाधनानां मोक्षार्थतां वदन्ति। तेषां मुखापिधानं श्रुत्येदं कृतं जाया मे स्यादित्यादि पाङ्क्तं काम्यं कर्मेत्युपक्रमेण पुत्रादीनां च साध्यविशेषविनियोगोपसंहारेण च । तस्माद्वृणश्रुतिरविद्वद्विषया न परमात्मविद्याविषयेति सिद्धं । वक्ष्यति च किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति । केचित्तु पितृलोकदेवलोकजयोऽपि पितृलोकदेवलोकाभ्यां व्यावृत्तिरेव। तस्मात्पुत्रकर्मापरविद्याभिः समुच्चित्यानुष्ठिताभिस्त्रिभ्य एतेभ्यो लोकेभ्यो व्यावृत्तः परमात्मविज्ञानेन मोक्षमधिगच्छतीति परम्परया मोक्षार्थान्येव पुत्रादि-

---

आ॰ स्मृतेरुपलक्षणार्थः । श्रुतिस्मृत्योरविरक्तविषयत्वे वाक्यशेषमनुकूलयति । वक्ष्यति चेति ॥ मीमांसकपक्षं निराकृत्य भर्तृप्रपञ्चपक्षमुत्थापयति। के चित्त्विति । मनुष्यलोकजयस्ततो व्यावृत्तिर्यथेत्यपेरर्थः । पुत्रादिसाधनाधीनतया लोकत्रयव्यावृत्तावपि कथं मोक्षः संपद्यते । न हि पुत्रादीन्येव मुक्तिसाधनानि विरक्तत्वविरोधादित्याशङ्क्याह । तस्मादिति ॥ एषिवै चेत्याद्योत्तरा श्रुतिरेव मीमांसकमतवद्भर्तृप्रपञ्चमतमपि निराकरोतीति दूषयति। तेषामिति। कथं सा तन्मतं निराकरोतीत्याशङ्क्य श्रुतिं विभिनत्ति। कृतेति । व्यन्नात्मोपासितुरुदर्कत्वनवचनविरुद्धं परमतमित्ययुक्तं । तदाप्तेरेव मुक्तित्वादित्याशङ्क्याह । न चेति । तथापि कथं यथोक्तं फलं मोक्षो न भवति तत्राह । मेधेति । व्यन्नात्मनो ज्ञानकर्मजन्यत्वे हेतुमाह। पुनः पुनरिति। सूत्रात्मेरमुक्तित्वे हेत्वन्तरमाह । यदेति । कार्यकारणवत्त्वश्रुतेरपि

उ॰ पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति ॥१८॥

---

भा॰ साधनानीच्छन्ति। तेषामपि मुखापिधानायेयमेव श्रुतिरुत्तराहृतसम्प्रत्तिकस्य पुत्रिणः कर्म्मिणस्त्वनात्मविद्याविदः फलप्रदर्शनाय प्रवृत्ता। न चेदमेव फलं मोक्षफलमिति शक्यं वक्तुं। अन्नसम्बन्धात्मेधातपः*कर्म्मत्वाचान्नानां पुनः पुनर्जनयत इति दर्शनात्। यद्धैतन्न कुर्य्यात्क्षीयेत हेति च क्षयश्रवणाच्छरीरं ज्योतीरूपमिति च कार्य्यकरणत्वोपपत्तेस्त्रयं वा इदमिति च नामरूपकर्म्मात्मत्वेनोपसंहारात्। न चेदमेव साधनत्रयं संहतं सत्कस्यचिन्मोक्षार्थं कस्यचित् अनात्मफलमित्यस्मादेव वाक्यादवगन्तुं शक्यं। पुत्रादिसाधनानां अनात्मफलदर्शनेनैवोपक्षीणत्वाद्वाक्यस्य ॥ १७ ॥

पृथिव्यै पृथिव्याश्च एनमग्नेश्च दैवी अधिदैवात्मिका वागेनं हृतसम्प्रत्तिकमाविशति सर्व्वेषां हि वाच उपा-

---

आ॰ त्वभावो न मुक्तिरित्याह। शरीरमिति। अविद्यातद्दुत्थद्वैतस्यात्मकत्वेनोपसंहारात्तदात्मत्वभावो बन्धान्तर्भूतो न मुक्तिरिति युक्त्यन्तरमाह। त्रयमिति॥ नन्वविरक्तस्याकस्य त्वात्मत्वफलमपि कर्म्मादिविरक्तस्य विदुषो मुक्तिफलमिति व्यवस्थितिर्नेत्याह। न चेदमिति॥ न हि पृथिव्यै चेत्यादिवाक्यस्यैकस्य सकृच्छ्रुतस्यानेकार्थत्वं। भिद्यते हि तथा वाक्यमिति न्यायादित्यर्थः॥ १७॥

पृथिव्यै चेत्यादिवाक्यावष्टम्भेन पक्षद्वयं प्रतिक्षिप्य तदक्षराणि व्याचष्टे। पृथिव्या इति। एनमित्युक्तमनूद्य व्याकरोति। एन-

---

* कार्य्येतिपाठान्तरः।

उ॰ दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति॥१९॥

---

भा॰ दानभूता दैवी वाक् पृथिव्यग्निलक्षणा। सा ह्याध्यात्मिकासङ्गादिदोषैर्निरुद्धा। विदुषस्तद्दोषापगमे आवरणभङ्ग इवोदकं प्रदीपप्रकाशवच्च व्याप्नोति। तदेतदुच्यते पृथिव्या अग्नेश्चैनं दैवी वागाविशतीति। सा च दैवी वागनृतादिदोषरहिता शुद्धा। यया वाचा दैव्या यद्यदेव आत्मने परस्मै वा वदति तत्तद्भवत्यमोघाऽप्रतिबद्धाऽस्य वाग्भवतीत्यर्थः॥१८॥

तथा दिवश्चैनं आदित्याच्च दैवं मन आविशति। तच्च दैवं मनः स्वभावनिर्म्मलत्वाद्येन मनसाऽसावानन्द्येव भवति सुख्येव भवत्यथो अपि न शोचति शोकादिनिमित्तासंयोगात्॥१९॥

---

आ॰ मिति॥ कथं पुनः सूत्रात्मभूता वागुपासकमाविशति तत्राह। सर्व्वेषां हीति। तर्हि तयोरभेदादविदुषोऽपि व्याप्त्यैव वागिति विदुषि विशेषो नास्तीत्याशङ्क्याह। सा हीति। दैव्या वाचि दोषविगममुत्तरवाक्येन साधयति। सा चेति। विद्वद्वाचः स्वरूपं सङ्क्षिपति। अमोघेति॥१८॥

वाचि दर्शितन्यायं मनस्यतिदिशति। तथेति। यन्मनः स्वभावनिर्म्मलत्वेन दैवमित्युक्तं तदेव विशिनष्टि। मन इति। असाविति विद्वदुक्तिः। येन मनसा विद्वान्न शोचत्यपि तद्धेत्वभावात्तद्दैवमिति पूर्व्वेण सम्बन्धः॥१९॥

उ॰ अङ्ग्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः सञ्चरꣳश्चासञ्चरꣳश्च न व्यथतेऽथो न रिष्यति स एवंवित्सर्व्वेषां भूतानामात्मा भवति यथैषा देवतैवꣳ स यथैतां देवताꣳ सर्व्वाणि भूतान्यवन्त्येवꣳ हैवंविदꣳ सर्व्वाणि भूतान्यवन्ति ।

---

भा॰ तथाद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति । स वै दैवः प्राणः किं लक्षण इत्युच्यते । यः सञ्चरन् प्राणिभेदेष्वसञ्चरन् समष्टिव्यष्टिरूपेणाथ वा सञ्चरन् जङ्गमेष्वसञ्चरन् स्थावरेषु न व्यथते न दुःखनिमित्तेन भयेन युज्यते । अथो ऽपि न रिष्यति न विनश्यति न हिंसामापद्यते । स यो यथोक्तमेवं वेत्ति अध्यात्मदर्शनं स सर्व्वेषां भूतानामात्मा भवति सर्व्वेषां भूतानां प्राणो भवति सर्व्वेषां भूतानां मनो भवति वाग्भवतीत्येवं सर्व्वभूतात्मतया सर्व्वज्ञो भवतीत्यर्थः । सर्व्वज्ञश्च यथैषा पूर्व्वसिद्धा हिरण्यगर्भदेवता । एवमेव नास्य सर्व्वज्ञत्वे सर्व्वज्ञत्वे वा कश्चित्प्रतिघातः । किञ्च स इति दृष्टान्तनिर्देशो यथैतां हिरण्यगर्भदेवतामिज्यादिभिः सर्व्वाणि भूतान्यवन्ति पालयन्ति

---

आ॰ मनस्युक्तं न्यायं प्राणे अतिदिशति । तथेति । तमेव दैवं प्राणं प्रश्नपूर्व्वकं प्रकटयति । स वा इति । स एवंविदित्यादि व्याचष्टे । स य इति । विदिरत्र लाभार्थः । न केवलं यथोक्तमेव विद्याफलं

उ॰ यद्‌ किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद्भवति

भा॰ पूजयन्त्येवं ह्येवंविदं सर्व्वाणि भूतान्यवन्ति इत्यादिलक्षणां पूजां सततं प्रयुञ्जत इत्यर्थः।

अथेदमाशङ्क्यते सर्व्वप्राणिनामात्मा भवतीत्युक्तं। तस्य च सर्व्वप्राणिकार्य्यकरणात्मकत्वे सर्व्वप्राणिसुखदुःखैः सम्बध्यत इति। तन्न। अपरिच्छिन्नबुद्धित्वात्परिच्छिन्नात्मबुद्धीनां ह्याक्रोशादौ दुःखसम्बन्धो दृष्टोऽनेनाहमाक्रुष्ट इत्यस्य तु सर्व्वात्मना य आक्रुश्यते यश्चाक्रोशति तयोरात्मत्व-बुद्धिविशेषाभावान्न तन्निमित्तं दुःखमुपपद्यते मरणदुःख-वच्च निमित्ताभावात्। यथा हि कस्मिंश्चिन्मृते कस्यचिद्दुःख-मुत्पद्यते ममासौ पुत्त्रो भ्राता चेति पुत्त्रादिनिमित्तं। तन्नि-मित्ताभावे तन्मरणदर्शिनोऽपि नैव दुःखमुपजायते। तथे-श्वरस्यापरिच्छिन्नात्मनो ममतादिदुःखनिमित्तमिथ्या-

आ॰ किन्तु फलान्तरमप्यस्तीत्याह। किञ्चेति॥ सर्व्वभूतात्मत्वे तद्दोष-योगात्तज्जापनार्थं पदमनादेयमित्युत्तरवाक्यव्यावर्त्त्यामाशङ्कामाह। अथेति। सर्व्वप्राणिसुखदुःखैरित्यस्मादूर्द्ध्वं सम्बध्येताध्याहर्त्तव्यः॥ सर्व्वात्मके विदुष्यैकभूतमिष्टदोषयोगो नास्तीत्युत्तरमाह। तन्नेति॥ तदेव प्रपञ्चयति। परिच्छिन्नेति॥ अपरिच्छिन्नधीत्वेऽपि सूत्रात्मके विदुषि सर्व्वभूतान्तर्भावात्तद्दुःखादियोगः स्यादेवे-त्याशङ्क्य जठरकुहरविपरिवर्त्तिक्रिमिदोषैरस्माकमसंसर्गवत्त-स्यतेऽपि सम्भवान्नैवमित्यभिप्रेत्याह। मरणेति। नोपपद्यते विदुषो दुःखमिति पूर्व्वेण सम्बन्धः॥ दृष्टान्तं विवृणोति। यथेति॥ मैत्रस्य स्वदेहाद्यभिमानवतस्तद्दुःखादियोगवद्विदुषः सूत्रात्मनः स्वांशभूतसर्व्वभूताभिमानिनस्तद्दुःखादिसंसर्गः स्यादि-

उ॰ पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति ॥ २० ॥

अथातो व्रतमीमाꣳसा प्रजापतिर्ह कर्म्माणि ससृजे तानि सृष्टान्यन्योन्येनास्पर्द्धन्त वदिष्याम्ये-

---

भा॰ रागादिदोषाभावान्नैव दुःखमुपजायते। तदेतदुच्यते। यत् उ किञ्च यत्किञ्चेमाः प्रजाः शोचन्ति अमैव सहैव प्रजाभिस्तच्छोकादिनिमित्तं दुःखं संयुक्तं भवत्यासां प्रजानां परिच्छिन्नबुद्धिजनितत्वात्सर्व्वात्मनस्तु। केन सह किं संयुक्तं भवेद्वियुक्तं वा। अमुन्तु प्राजापत्ये पदे वर्त्तमानं पुण्यमेव शुभमेव फलमभिप्रेतं पुण्यमिति। निरतिशयं हि तेन पुण्यं कृतं तेन तत्फलमेव गच्छति। न ह वै देवान्पापं गच्छति पापफलस्यावसराभावात्पापं फलं दुःखं न गच्छतीत्यर्थः ॥ २० ॥

त एते सर्व्व एव समाः सर्व्वेऽनन्ता इत्यविशेषेण वाङ्मनःप्राणानामुपासनमुक्तं नान्यतमगतो विशेष उक्तः। किमे-

---

आ॰ त्वाग्रश्च दार्ष्टान्तिकमाह। तथेति। मम तावदित्यादिपदेनाह-न्ताग्रहणं। तदेव दुःखनिमित्तं मिथ्याज्ञानं। आदिशब्देन रागादिग्रहः। उक्तेऽर्थे श्रुतिमवतार्य्य व्याचष्टे। तदेतदिति। सुखमेव गच्छतीति सम्बन्धः। फलरूपेण वर्त्तमानस्य कथं कर्म्म-सम्बन्धः स्यादित्याशङ्क्याह। फलमिति। उक्तमेव व्यनक्ति। निरतिशयमिति ॥ २० ॥

अथेत्यादिवाक्यस्य वक्तव्यशेषाभावादानर्थक्यमाशङ्क्य व्यवहितोपासनानुवादेन तदङ्गव्रतविधानार्थमुत्तरं वाक्यमित्यानर्थक्यं

उ॰ वाहमिति वाग्दध्रे (द्रक्ष्य ईक्षा)म्यहमिति चक्षुः श्रोष्या-
म्यहमिति श्रोत्रमेवमन्यानि कर्म्माणि यथा कर्म्म
तानि मृत्युःश्रमो भूत्वोपयेमे तान्याप्नोत्तान्याप्त्वा

---

भा॰ वमेव प्रतिपत्तव्यं किंवा विचार्य्यमाणे कश्चिद्विशेषो व्रत-
मुपासनं प्रति प्रतिपत्तुं शक्यत इत्युच्यते। अथातोऽनन्तरं
व्रतस्य उपासनस्य मीमांसा उपासनकर्म्मविचारणेत्यर्थः।
एषां प्राणानां कस्य कर्म्मव्रतत्वेन धारयितव्यमिति
मीमांसा प्रवर्त्तते। तत्र प्रजापतिरिति शब्दः किलार्थे प्रजा-
पतिः किल प्रजाः सृष्ट्वा कर्म्माणि करणानि वागादीनि
कर्म्मार्थानि हितानीति कर्म्माणीत्युच्यन्ते ससृजे सृष्ट-
वान्वागादीनि करणानीत्यर्थः। तानि पुनः सृष्टान्यन्यो
ऽन्येनेतरेतरमस्पर्द्धन्त स्पर्द्धां संघर्षं चक्रुः। कथं वदिष्या-
म्येव स्वव्यापाराद्वदनादनुपरतैवाहं स्यामिति वाग्व्रतं दध्रे
धृतवती। यद्यन्योऽपि मत्समोऽस्ति स्वव्यापारादनुपरन्तुं
शक्तः सोऽपि दर्शयत्वात्मनो वीर्य्यमिति। तथा द्रक्ष्या-

---

आ॰ परिचरति। स एत इत्यादिना। व्रतमित्यवश्यानुष्ठेयं कर्म्मोच्यते।
जिज्ञासायाः सत्त्वमतः शब्दार्थः। उपासनेत्याद्यानन्तर्य्यमथश-
ब्दार्थं कथयति। अनन्तरमिति। विचारणामेव स्फोरयति।
एषामिति। प्रवृत्तायां मीमांसायां प्राणव्रतमभग्नत्वेन धारणी-
यमिति निर्धारणार्थमाख्यायिकां प्रस्तौति। तत्रेत्यादिना।
कथं वागादिकरणेषु कर्म्मशब्दप्रवृत्तिरित्याशङ्क्याह। कर्म्मार्था-
नीति। तदीयक्लेशपयोगमुपदर्शयितुं भूमिकां करोति।
तानीति। स्पर्द्धाप्रकारं प्रश्नपूर्व्वकं प्रकटयति। कथमित्यादिना॥

उ॰ मृत्युरवारुन्धत्तस्माच्छ्राम्यत्येव वाक् श्राम्यति चक्षुः श्राम्यति श्रोत्रमथेममेव नाप्नोद्योऽयं मध्यमः प्राणस्तानि ज्ञातुं दध्रिरे ।

---

भा॰ ष्याम्यहमिति चक्षुः । श्रोष्याम्यहमिति श्रोत्रमेवमन्यान्यपि कर्म्माणि करणानि यथा कर्म्म यद्यस्य कर्म्म यथा कर्म्म तानि करणानि मृत्युर्मारकः श्रमः श्रमरूपी भूत्वा उपयेमे सञ्जग्राह । कथं तानि करणानि स्वव्यापारे प्रवृत्तान्याप्नोच्छ्रमरूपेणात्मानं दर्शितवानाप्त्वा च तान्यवारुन्धदवरोधं कृतवान् मृत्युः स्वकर्म्मभ्यः प्रच्यावितवानित्यर्थः । तस्मादद्यत्वेऽपि वदने स्वकर्म्मणि प्रवृत्ता वाक् श्राम्यत्येव श्रमरूपिणा मृत्युना संयुक्ता स्वकर्म्मतः प्रच्याव्यते । तथा श्राम्यति चक्षुः । श्राम्यति श्रोत्रं । अथेममेव मुख्यं प्राणं नाप्नोन्न प्राप्तवान्मृत्युः श्रमरूपी । योऽयं मध्यमः प्राणः तं तेनाद्यत्वेऽपि अश्रान्त एव कर्म्मणि प्रवर्त्तते तानीतराणि करणानि तं ज्ञातुं दध्रिरे धृतवन्ति मनः ॥

---

आ॰ यथा कर्म्म स्वीयं स्वीयं व्यापारमनुसृत्य व्रतं दध्रिरे त्वगादीनि करणानीत्यर्थः ॥ प्रजापतेर्वागादिषु श्रमद्वारा स्वकर्म्मप्रच्युतिरासीदित्यत्र कार्य्यलिङ्गकमनुमानं प्रमाणयति । तस्मादिति । वागादीनां श्रमप्रसक्तत्वनिर्धारणानन्तर्यमथशब्दार्थः ॥ प्रजापतेः प्राणे मृत्युप्रसक्त्यभावे कार्य्यलिङ्गकमनुमानं सूचयति । तेनेति ॥ प्रवर्त्तते प्राण इति सम्बन्धः । तथापि कथं प्राणस्यैव व्रतं धार्य्यमित्यपेक्षायामाह । तानीति ॥

उ॰ अयं वै नः श्रेष्ठो यः सञ्चरंश्चासञ्चरंश्च न व्यथते न रिष्यति हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवंस्तस्मादेत एतेनाख्या-

---

भा॰ अयं वै नोऽस्माकं मध्ये श्रेष्ठः प्रशस्यतमोऽभ्यधिको यस्माद्यः सञ्चरंश्चासञ्चरंश्च न व्यथतेऽथो न रिष्यति हन्तेदानीं अस्यैव प्राणस्य सर्व्वे वयं रूपमसाम प्राणमात्मत्वेन प्रतिपद्येमहि । एवं विनिश्चित्य त एतस्यैव सर्व्वे रूपमभवन् प्राणरूपमेवात्मत्वेन प्रतिपन्नाः प्राणव्रतमेव दध्रिरेऽस्मद्व्रतानि न मृत्योर्वारणाय पर्य्याप्तानीति । यस्मात्प्राणेन रूपेण रूपवन्तीतराणि चलनात्मना स्वेन च प्रकाशात्मना । न हि प्राणादन्यत्र चलनात्मकत्वोपपत्तिश्चलनव्यापारपूर्व्वकाण्येव हि सर्व्वदा स्वव्यापारेषु लक्ष्यन्ते । तस्मादेते वागादयः एतेन प्राणाभिधानेनाख्यायन्तेऽभिधीयन्ते प्राणा इति । एवं य एवं प्राणात्मतां सर्व्वकरणानां वेत्ति प्राणशब्दाभिधेयत्वं च तेन ह वाव तेनैव विदुषा

---

आ॰ व्याख्यानार्थमनुसन्धानप्रकारमेव दर्शयति । अयमिति ॥ तस्य श्रेष्ठत्वे फलितमाह । हन्तेति ॥ इतिशब्दं व्याकरोति । एवं विनिश्चित्येति ॥ अस्माकं वागादीनां व्रतानि मृत्योर्वारणाय न पर्य्याप्तानीति विनिश्चित्य दध्रिरे प्राणव्रतमेवेति सम्बन्धः । प्राणरूपत्वमुक्त्वा करणानां तन्नामत्वमाह । यस्मादिति ॥ यस्मादित्यस्य तस्मादिति व्यवहितेन सम्बन्धः । प्राणरूपं चलनात्मत्वमिति कुतो निर्णीयते तत्राह । न हीति ॥ तर्हि करणेषु प्रकाशात्मकत्वमेव न चलनात्मत्वमित्याशङ्क्याह । चलनेति ॥ सम्प्रति विद्याफलमाह । य एवमिति ॥ तदेव स्पष्टयति । यस्मिन्निति ।

उ॰ यस्मै प्राणा इति तेन ह्वाव तत्कुलमाचक्षते यस्मिन्कुले भवति य एवं वेद य उ हैवंविदा स्पर्द्धते ऽनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मं ॥ २१ ॥

अथाधिदैवतं ज्वलिष्याम्येवाहमित्यग्निर्दध्रे

---

भा॰ तत्कुलमाख्यातमाचक्षते लौकिकाः। यस्मिन्कुले य विद्वाञ्जातो भवति तत्कुलं विद्वन्नाम्नैव प्रथितं भवति अमुष्येदं कुलमिति। यथा तापत्य इति। य एवं यथोक्तं वेद वागादीनां प्राणस्वरूपतां प्राणाख्यत्वं च तस्यैतत्फलं। किञ्च यः कश्चित् उ ह एवंविदा प्राणात्मदर्शिना स्पर्द्धते तत्प्रतिपक्षी सन् सोऽस्मिन्नेव शरीरेऽनुशुष्यति शोषमुपगच्छति अनुशुष्य हैव शोषं गत्वैवान्ततोऽन्ते म्रियते न सहसोपद्रुतो म्रियते इत्येवमुक्तमध्यात्मं प्राणात्मदर्शनमित्युक्तोपसंहारोऽधिदैवतप्रदर्शनार्थः॥ २१ ॥

अथानन्तरमधिदैवतं देवताविषयं दर्शनमुच्यते। कस्य देवताविशेषस्य व्रतधारणं श्रेय इति मीमांस्यते अध्यात्मवत्सर्वे ज्वलिष्याम्येवाहमित्यग्निर्दध्रे। तथाप्यहमित्या-

---

आ॰ तपती सूर्य्यसुता तस्या वंशस्तापत्यः। कस्येदं फलमित्युक्ते पूर्व्वोक्तमेव स्फुटयति। य एवमित्यादिना॥ न केवलं विद्याया यथोक्तमेव फलं किन्तु फलान्तरमप्यस्तीत्याह। किञ्चेति। प्राणविदा सह स्पर्द्धा न कर्त्तव्येति भावः॥ इत्यध्यात्मस्यानर्थक्यमाशङ्क्याह। इत्येवमिति॥ २१॥

अध्यात्मदर्शनमुक्त्वाऽधिदैवतदर्शनं वक्तुमनन्तरवाक्यमवतारयति। अथेति॥ तर्हि ज्वलिष्यामीत्यादि किमर्थमित्याशङ्क्याह।

उ॰ तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादैवतꣳ स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुःसैषाऽनस्तमिताꣳ देवता यद्वायुः ॥ २२ ॥

---

भा॰ दित्यः। भास्याम्यहमिति चन्द्रमाः। एवमन्या देवताः। यथा दैवतं स दृष्टान्तोऽध्यात्मं वागादीनामेषां प्राणानां मध्ये मध्यमः प्राणो मृत्युना नाप्तः स्वकर्मणो न प्रच्यावितः स्वेन प्राणव्रतेनाभग्नव्रतो यथा एवमेतासामग्न्यादीनां देवतानां वायुरपि म्लोचन्त्यस्तं यन्ति स्वकर्मभ्य उपरमन्ते यथाध्यात्मं वागादयोऽन्या देवता अग्न्याद्या न वायुरस्तं याति यथा मध्यमः प्राणोऽतः सैषाऽनस्तमिता देवता यद्वायुर्योऽयं वायुरेवमध्यात्ममधिदैवं च मीमांसिला निर्द्धारितं वाय्वात्मनो व्रतमभग्नमिति ॥ २२ ॥

---

आ॰ कस्येति॥ वदिष्यामीत्यादावुक्तं व्याख्यानमिदानीं प्रष्टव्यमित्याह। अध्यात्मवदिति। यथादैवतं स्वं स्वं देवताव्यापारमनतिक्रम्यान्या देवता विद्युदाद्या दध्रिरे व्रतमित्यर्थः॥ स यथेत्यादि व्याचष्टे। अध्यात्ममिति। वायुरपि मृत्युना नाप्तः स्वकर्मणो न प्रच्यावित इति। स्वेन वायुव्रतेनाभग्नव्रत इति शेषः। तदेव साधयति। म्लोचन्तीति॥ ब्राह्मणोक्तमर्थमुपसंहरति। एवमिति॥ २२॥

उ॰ अथैष श्लोको भवति यतश्चोदेति सूर्य्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तन्देवाश्चक्रिरे धर्म्मँ स एवाद्य स उ श्व इति यद्वा एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति ।

---

भा॰ अथैतस्यैवार्थस्य प्रकाशक एष श्लोको मन्त्रो भवति । यतश्च यस्माद्वायोरुदेत्युद्गच्छति सूर्य्योऽध्यात्मं च चक्षुरात्मना प्राणादस्तञ्च यत्र वायौ प्राणे च गच्छत्यपरसन्ध्यासमये स्वापसमये च पुरुषस्य तं देवास्तं धर्म्मं देवाश्चक्रिरे धृतवन्तो वागादयोऽग्न्यादयश्च प्राणव्रतं वायुव्रतं च पुरा विचार्य्य स एवाद्येदानीं श्वोऽपि भविष्यत्यपि कालेऽनुवर्त्त्यतेऽनुवर्त्तिष्यते च देवैरित्यभिप्रायः । तत्रेमं मन्त्रं सङ्क्षेपतो व्याचष्टे ब्राह्मणं । प्राणाद्वा एष सूर्य्य उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्म्मं स एवाद्य । स उ श्व इत्यस्य कोऽर्थ इत्युच्यते । यद्वै एते व्रतममुर्हि अमुष्मिन्काले वागादयोऽग्न्यादयश्च प्राणव्रतं वायुव्रतं चाध्रियन्त

---

आ॰ ब्राह्मणार्थदार्ढ्यार्थं मन्त्रमवतार्य्य व्याकरोति । अथेत्यादिना । सूर्य्योऽधिदैवमुदयकाले वायोरुद्गच्छति तत्र चापरसन्ध्यासमये ऽस्तं । गच्छति । स एवाध्यात्मं प्रबोधसमये चक्षुरात्मना प्राणादुदेति पुरुषस्य स्वापसमये च तस्मिन्नेवास्तं गच्छतीति यतश्चेत्यादौ विभागः। श्लोकस्योत्तरार्द्धं प्राणादित्यादि ब्राह्मणव्यवहितं श्लोकपूर्वताज्ञापनार्थं प्रथमं व्याचष्टे । ते देवा इति ॥ धारकस्य प्रकृतत्वात्सामान्येन च विशेषं लक्षयित्वाह । व्रतवन्त इति ॥ स एवेति धर्म्मपरामर्शः । तत्रेति सप्तमी सम्पूर्णमन्त्रमधिकरोति । इमं

उ॰ तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवदिति यद्यु चरेत्समा-

---

भा॰ तदेवाद्यापि कुर्वन्त्यनुवर्त्तन्तेऽनुवर्त्तिष्यन्ते व्रतं तयोर-भग्नमेव । यत्तु वागादिव्रतं च तद्भग्नमेव । तेषामस्तमन-काले च वायौ प्राणे च निम्लुक्तिदर्शनात् ॥

अथैतदन्यत्रोक्तं । यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं मनः प्राणं चक्षुः प्राणं श्रोत्रं यदा प्रबु-ध्यते प्राणादेवाधि पुनर्जायन्त इत्यध्यात्मं । अथाधिदैवतं । यदा वा अग्निरनुगच्छति वायुं तर्ह्यनूद्दाति । तस्मादे-नमुदवासीदित्याहुर्वायुं ह्यनूद्दाति यदादित्योऽस्तमेति वायुं तर्हि प्रविशति वायुं चन्द्रमा वायौ दिशः प्रतिष्ठिताः वायोरेवाधि पुनर्जायन्त इति । यस्मादेव व्रतं वागादिष्व-ग्न्यादिषु चानुगतं यदेतद्वायोश्च प्राणस्य च परिस्पन्दात्म-कत्वं सर्व्वैर्देवैरनुवर्त्त्यमानं व्रतं । तस्मादन्योऽप्येकमेव व्रतं

---

आ॰ मन्त्रमिति । पूर्व्वार्द्धोक्तिः ॥ उत्तरार्द्धस्य ब्राह्मणमाकाङ्क्षापूर्व्वक-मुत्थाप्य व्याचष्टे । तमित्यादिना ॥ तैरभग्नं देवैरभग्नत्वेन मीमांसितं तेऽनुगच्छन्तीत्यर्थः ॥ विशेषणस्यार्थवत्त्वं साधयति । यत्त्विति ॥ उक्तहेतुमभिरहस्यमाश्रित्य विशदयति । अथेति ॥

यथाशेत्युपमार्थोऽयशब्दार्थः । अनुगच्छति शाम्यतीत्येतत् । वायु-मनु तदधीन एव तस्मिन्काल उद्दात्यस्तमेति उदवासीदस्तं गत इत्यर्थः । इतिशब्दोऽभिरहस्यविषयवाक्यसमाप्त्यर्थः । अध्यात्मप्रा-णव्रतमधिदैवतञ्च वायुव्रतमित्येकमेव व्रतं धार्य्यमिति मन्त्रब्राह्म-णाभ्यां प्रतिपाद्य तस्मादिति व्याचष्टे । यस्मादिति ॥ न हि वागा-दयोऽग्न्यादयो वा परिस्पन्दविरहिणः स्थातुमर्हन्ति । तेन प्राणा-

उ॰ पिपयिषेत्तेनो एतस्यै देवतायै सायुज्यꣳ सलोकतां जयति ॥ २३ ॥ पञ्चमं ब्राह्मणं ॥

---

भा॰ चरेत्। किन्तत्प्राण्यात्प्राणनव्यापारं कुर्य्यादपान्याच्चापानन-व्यापारञ्च। न हि प्राणव्यापारस्य प्राणनापानलक्षणस्य उपरमोऽस्ति। तस्मात्तदेवैकं व्रतं चरेद्धित्वेन्द्रियान्तरव्यापारं नेन्मा मां पाप्मा मृत्युः श्रमरूपी आप्नुवन्नाप्नुयात्। नेच्छब्दः परिभये। यद्यहमस्माद्व्रतात्प्रच्युतः स्यां ग्रस्त एवाहं मृत्युनेत्येवं त्रस्तो धारयेत्प्राणव्रतमित्यभिप्रायः। यदि कदाचिदु चरेत्प्रारभेत प्राणव्रतं समापिपयिषेत्समापयितुमिच्छेद्यदि ह्यस्माद्व्रतादुपरमेत्प्राणः परिभूतः स्याद्देवाश्च। तस्मात्समापयेदेव। तेन उ तेनानेन व्रतेन प्राणात्मप्रतिपत्त्या सर्व्वभूतेषु वागादयोऽग्न्यादयश्च मदात्मका एवाहं प्राण आत्मा सर्व्वपरिस्पन्दकृदेवं तेनानेन व्रतधारणेनैवास्या एव प्राणदेवतायाः सायुज्यं सयुग्भावमेका-

---

आ॰ दिव्रतं तैरनुवर्त्यत एवेत्यर्थः। एक एकमेवेति नियमे प्राणव्यापारस्याभग्नत्वं हेतुमाह। न हीति। तदनुपरमे फलितमाह। तस्मादिति। ननु प्राणनाद्यभावे जीवनासम्भवात्तस्यार्थिकत्वात्तदनुष्ठानमविधेयमित्याशङ्क्यैवकारलभ्यं नियमं दर्शयति। हित्वेति। नेदित्यादि वाक्यस्याक्षरार्थमुक्त्वा तात्पर्य्यार्थमाह। यद्यहमिति। प्राणव्रतस्य सकृदनुष्ठानमाशङ्क्य सर्व्वेन्द्रियव्यापारनिवृत्तिरूपं सन्न्यासमासरणमनुवर्त्तयेदित्याह। यदीति। विपक्षे दोषमाह। यदि हीति। प्राणादिपरिभवपरिहारार्थं नियमं निगमयति। तस्मादिति। विद्याफलं वक्तुं भूमिकां करोति। तेनेति। व्रतमेव विशिनष्टि। प्राणेति। प्रतिपत्तिमेव प्रकटयति। सर्व्वभूतेष्विति।

I. vi. 1



उ॰ त्रयं वा इदं नाम रूपं कर्म्म तेषां नाम्नां वागित्ये-

भा॰ त्मत्वं सलोकतां समानलोकतां वैकल्पानत्वं विज्ञानमा-
त्रापेक्षमेतज्जयति प्राप्नोतीति ॥ २१ ॥ इति श्रीमद्बृह-
दारण्यके शाङ्करीयभाष्ये तृतीयप्रपाठके पञ्चमं ब्राह्मणं ॥
यदेतदविद्याविषयत्वेन प्रस्तुतं साध्यसाधनलक्षणं व्याकृतं
जगत्प्राणात्मप्राप्त्यन्तोत्कर्षवदपि फलं। या चैतस्य व्याकर-
णात्प्रागवस्थाव्याकृतशब्दवाच्या वृक्षबीजवत्सर्व्वमेतत्त्रयं।
किं तत्त्रयं इत्युच्यते। नामरूपं कर्म्म चेत्यनात्मैव नात्मा
यत्साक्षादपरोक्षाद्ब्रह्म। तस्मादस्माद्विरज्येतेत्येवमर्थस्त्रयं
वा इत्याद्यारम्भः। न ह्यस्मादनात्मनोऽव्यावृत्तचित्तस्या-
त्मानमेव लोकमहं ब्रह्मास्मीत्युपासितुं बुद्धिः प्रवर्त्तते
बाह्यप्रत्यगात्मप्रवृत्त्योर्विरोधात्। तथा काठके। पराञ्चि
खानि व्यतृणत्स्वयम्भूस्तस्मात्परां पश्यति नान्तरात्मन्।

आ॰ सम्प्रति विद्याफलं कथयति। एवमिति॥ कथमेकस्मिन्नेव
विज्ञाने फलविकल्पः स्यादित्याशङ्क्य विज्ञानप्रकर्षापेक्षं सायुज्यं
तन्निकर्षापेक्षञ्च सालोक्यमित्याह। विज्ञानेति॥ २१॥ इती-
याध्यायस्य पञ्चमं ब्राह्मणं॥
प्रवृत्तिरस्याविद्याकार्य्यस्य सङ्क्षेपेणोपसंहारार्थं ब्राह्मणान्तरम-
वतारयति। यदेतदिति॥ फलमपि ज्ञानकर्म्मणोरुक्तविशेषण-
वद्यदेतत्प्रस्तुतमिति सम्बन्धः। अव्याकृतप्रक्रियायामुक्तं स्मार-
यति। या चेति॥ व्याकृताव्याकृतस्य जगतः सङ्गृहीतं रूपमाह।
सर्व्वमिति। वाङ्मनःप्राणाख्यं त्रयमिति भ्रमं प्रत्याह। किन्त-
दित्यादिना॥ किमर्थः पुनरयमुपसंहार इत्याशङ्क्याह। अना-
त्मैवेति॥ आत्मशब्दार्थमाह। यत्साक्षादिति॥ आत्मत्वेन

उ॰ तदेषामुक्थमतो हि सर्व्वाणि नामान्युत्तिष्ठन्ति।

---

भा॰ कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नि-
त्यादि। कथं पुनरस्य व्याकृताव्याकृतस्य क्रियाकारकफ-
लात्मनः संसारस्य नामरूपकर्म्मात्मतैव। न पुनरात्मत्व-
मित्येतत्सम्भावयितुं शक्यत इत्यत्रोच्यते। तेषां नाम्नां यथो-
पन्यस्तानां वागिति शब्दसामान्यमुच्यते। यः कश्च शब्दो
वागेव सेत्युक्तत्वाद्वागित्येतस्य शब्दस्य योऽर्थः शब्दसा-
मान्यमात्रमेतदेषां नामविशेषाणामुक्थकारणमुपादानं
सैन्धवलवणकणानामिव सैन्धवाचलस्तदाहातो ह्यस्मा-
न्नामसामान्यात् सर्व्वाणि नामानि यज्ञदत्तो देवदत्त
इत्येवमादिप्रविभागान्युत्तिष्ठन्ति उत्पद्यन्ते प्रविभज्यन्ते

---

आ॰ जगतो हेयत्वं तच्छब्देन परामृश्यते। वैराग्यमपि किमर्थ-
मित्याशङ्क्याह। न हीति॥ अविरक्तोऽपि कुतूहलितया तत्रा-
धिकारी स्यादित्याशङ्क्याह। वाह्येति॥ अनात्मप्रमाणमप्यात्मानं
प्रत्याययिष्यत्यात्मनः सर्व्वात्मत्वात्कुतो विरोध इत्याशङ्क्याह।
तथेति॥ कथं तर्हि प्रत्यगात्मधीस्तत्राह। कश्चिदिति॥ उप-
संहारस्येत्थमफलत्वेऽपि सर्व्वस्य जगतो नामादिमात्रत्वे प्रमाणा-
भावादयुक्तमिति शङ्कते। कथमिति॥ अनुमानैः सम्भावनां दर्श-
यति। अत्रेति॥ तत्र तत्कार्य्यत्वहेतुकमनुमानमाह। तेषामिति।
वागित्येतदुक्थमिति सम्बन्धः॥ इन्द्रियव्यावृत्त्यर्थं वाक्पदार्थ-
माह। शब्देति॥ सङ्गृहीतमर्थं विवृणोति। यः कश्चेत्यादिना॥
उक्तमुपपादयितुमुत्तरं वाक्यमित्याह। तदाहेति॥ कार्य्य-
कारणभावे किमायातमत आह। कार्य्यञ्चेति॥ सर्व्वे नाम-
विशेषास्तन्मात्रास्ततो न भिद्यन्ते। तत्कार्य्यत्वाद्यत्कार्य्यं तत्ततो
न भिद्यते। यथा मृदो घट इत्यर्थः। सर्व्वे नामविशेषास्तन्मा-

उ॰ एतदेषाꣳ सामैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्त्ति ॥ १ ॥

---

भा॰ लवणाचलादिव लवणकणाः कार्य्यञ्च कारणेनाव्यतिरिक्तं। तथा विशेषाणाञ्च सामान्येऽन्तर्भावात्कथं सामान्यविशेषभाव इति। एतच्छब्दसामान्यमेषां नामविशेषाणां साम समत्वात्साम सामान्यमित्यर्थः। एतद्धि यस्मात्सर्वैर्नामभिरात्मविशेषैः समं। किञ्च आत्मलाभाविशेषाच्च नामविशेषाणां। यस्य च यस्मादात्मलाभो भवति स तेनाविभक्तो दृष्टो यथा घटादीनां मृदा कथं नामविशेषाणां आत्मलाभो वाच इत्युच्यते। यत एतदेषां वाक्छब्दवाच्यं वस्तु ब्रह्मात्मा ततो ह्यात्मलाभो नाम्नां। शब्दव्यतिरिक्तस्वरूपानुपपत्तेस्तत्प्रतिपादयत्येतच्छब्दसामान्यं हि यस्माच्छब्दविशेषान् सर्व्वाणि नामानि बिभर्त्ति धारयति स्वरूपप्रदानेन। एवं

---

आ॰ मान्ये कल्पिताः प्रत्येकं तदनुविद्धत्वाद्रज्ज्विदमंशानुविद्धसर्पादिवदित्यनुमानान्तरमाह। तथेति॥ कार्य्याणां कारणेऽन्तर्भाववदिति यावत्॥ उक्तमेव प्रश्नपूर्व्वकं प्रपञ्चयति। कथमित्यादिना॥ सामत्वं साधयति। एतद्धीति। इतश्च नामविशेषा नाममात्रेऽन्तर्भवन्तीत्याह। किञ्चेति। नामविशेषाणां नाममात्रादात्मलाभात्तस्मादविशेषात्तत्रैवान्तर्भाव इत्यर्थः। सर्व्वे नामविशेषास्तत्सामान्यान्न पृथक् वस्तुतः सन्ति। तेनात्मवत्त्वाद्येष्वात्मवन्तस्ते ततोऽन्ये वस्तुतो न सन्ति। यथा मृदात्मवन्तो घटादयो वस्तुतस्ततोऽन्ये न सन्तीत्युक्तेऽनुमाने व्याप्तिं साधयति। यस्य चेति॥ हेतुसमर्थमुत्तरवाक्यमुत्थापयति। कथमित्यादिना॥ अतः

उ॰ अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषाꣳ सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति ॥ २ ॥

---

भा॰ कार्य्यकारणत्वोपपत्तेः सामान्यविशेषोपपत्तेरात्मप्रदानोपपत्तेश्च नामविशेषाणां शब्दमात्रता सिद्धा । एवमुत्तरयोरपि सर्व्वं योज्यं यथोक्तं ॥ १ ॥

अथेदानीं रूपाणां सितासितप्रभृतीनां चक्षुरिति चक्षुर्विषयसामान्यं चक्षुःशब्दाभिधेयं रूपसामान्यमात्रं प्रकाशमात्रमभिधीयते। अतो हि सर्व्वाणि रूपाण्युत्तिष्ठन्त्येतदेषां सामैतद्धि सर्व्वैरूपैः सममेतदेषां ब्रह्मैतद्धि सर्व्वाणि रूपाणि बिभर्त्ति ॥ २ ॥

---

आ॰ शब्दमात्रात्तद्विशेषाणामात्मलाभो भवतीति शेषः। तत्रैव युक्तिमाह। ततो हीति ॥ तत्रैव वाक्यमवतार्य्य व्याचष्टे। तदित्यादिना॥ तस्मात्तन्मात्रात्तद्विशेषाणामात्मलाभ इति वाक्यशेषः ॥ प्रथमकण्डिकायां सिद्धमर्थमुपसंहरति। एवमिति ॥ उपपत्तित्रयमुत्तरवाक्यद्वयेऽपि तुल्यमित्यादिशति। एवमुत्तरयोरिति ॥ १ ॥

तत्र व्याख्यानसापेक्षाणि पदानि व्याकरोति। अथेत्यादिना ॥ नामव्याख्यानानन्तर्य्यमथशब्दार्थः । चक्षुरुक्थमिति सम्बन्धः । चक्षुरिति चक्षुःशब्दाभिधेयं चक्षुर्विषयसामान्यमभिधीयते तच्चक्षुरूपसामान्यं तदपि प्रकाशमात्रमिति योजना ॥ २ ॥

उ॰ अथ कर्म्मणामात्मेत्येतदेषामुक्थमतो हि सर्व्वाणि कर्म्माण्युत्तिष्ठन्त्येतदेषाᳪं सामैतद्धि सर्व्वैः कर्म्मभिः सममेतदेषां ब्रह्मैतद्धि सर्व्वाणि कर्म्माणि

---

भा॰ अथेदानीं सर्व्वकर्म्मविशेषाणां मननदर्शनात्मकानां चलनात्मकानां च क्रियासामान्यमात्रेऽन्तर्भाव उच्यते। कथं सर्व्वेषां कर्म्मविशेषाणामात्मा शरीरं सामान्यमात्मनः कर्म्मात्मेत्युच्यते। आत्मना हि शरीरेण कर्म्म करोतीत्युक्तं। शरीरे च सर्व्वं कर्म्माभिव्यज्यते। अतस्तात्स्थ्यात्तच्छब्दं कर्म्म कर्म्मसामान्यमात्रं सर्व्वेषामेषामुक्थमित्यादि पूर्व्ववत्तदेतत्त्रयोक्तं नामरूपं कर्म्मत्रयं इतरेतराश्रयमितरेतराभिव्यक्तिकारणमितरेतरप्रलयं संहतं त्रिदण्डविष्टम्भवत्तदेकं। केनात्मनैकत्वमित्युच्यते अयमा-

---

आ॰ कर्म्मप्रकरणानन्तर्य्यमथेत्युच्यते॥ क्रियाविशेषाणां क्रियामात्रेऽन्तर्भावं प्रश्नद्वारा स्फोरयति। कथमित्यादिना। आत्मशब्देनात्र शरीरनिर्वर्त्त्यकर्म्मग्रहणे पुरुषविधब्राह्मणशेषमनुकूलयति। आत्मना हीति॥ तत्रैवोपपत्तिमाह। शरीरे चेति। तथापि कथमात्मशब्दः शरीरनिर्वर्त्त्यं कर्म्म ब्रूयादित्याशङ्क्य लक्षणयेत्याह। अत इति। सङ्क्षेपस्यापि सङ्क्षेपान्तरमाह। तदेतदिति॥ तदेतत्त्रयं त्रिदण्डविष्टम्भवत्संहतं सदेकमिति सम्बन्धः॥ कथं संहतत्वमत आह। इतरेतराश्रयमिति॥ रूपं विषयमाश्रित्य नामकर्म्मणी सिध्यतः आत्मत्वेन निर्विषययोस्तयोः सिद्ध्यदर्शनान्नामकर्म्मणी चाश्रित्य रूपं सिध्यति। न हि ते विना किञ्चिदुत्पद्यत इत्यर्थः। वाचकेन वाच्यस्य तेनेतरस्य ताभ्यां च क्रियायास्तया तयोरपेक्षादर्शनादन्योऽन्यमभिव्यञ्जकत्वमाह। इतरेतरेति॥

उ॰ बिभर्ति तदेतत्त्रयं सदेकमयमात्मात्मो एकः सन्नेतत्त्रयं तदेतदमृतꣳ सत्येन छन्नं प्राणो वा अमृतं

---

भा॰ त्मायं पिण्डः कार्यकारणात्मसङ्घातस्तथाध्यात्मे व्याख्यात एतन्मयो वा अयमात्मेत्यादिना एतावद्धीदं सर्वं व्याकृतमव्याकृतं च। यदुत नामरूपं कर्मेत्यात्मा उ एकोऽयं कार्यकरणसङ्घातः सन्नध्यात्माधिभूताधिदैवभावेन व्यवस्थितमेतदेव त्रयन्नामरूपं कर्मेति। तदेतद्वक्ष्यमाणममृतं सत्येन छन्नमित्येतस्य वाक्यस्यार्थमाह। प्राणो वाऽमृतं करणात्मकोऽन्तरुपष्टम्भनकर्मा आत्मभूतोऽमृतोऽविनाशी। नामरूपे सत्यं कार्यात्मके शरीरावस्थे

---

आ॰ सति नाम्नि रूपसंहारदर्शनाद्रूपे च सति नामसंहारदृष्टेः सतोश्च तयोः कर्मण्यस्मिंश्च सति तयोरुपसंहारोपलम्भादितरेतरप्रलयमित्याह। इतरेतरप्रलयमिति॥ त्रयाणामेकत्वं विरुद्धमिति शङ्कित्वा परिहरति। केनेत्यादिना॥ कथं कार्यकरणसङ्घातात्मना त्रयाणामेकत्वं तत्राह। तथेति॥ नामरूपकर्मणां कार्यकरणसङ्घातमात्रत्वेऽपि ततो व्यतिरिक्तं सङ्घातादन्यत्वादित्याशङ्क्याह। एतावदिति॥ नामादित्रयस्य सङ्घातमात्रत्वे कथं व्यवहारासामर्थ्यमित्याशङ्क्याह। आत्मेति। सङ्घातोऽयमात्मशब्दितः स्वयमेकोऽपि सन्नध्यात्मादिभेदेन स्थितं त्रयमेव भवतीति व्यवहारसामर्थ्यमित्यर्थः॥ एकस्मिन्नपि सङ्घाते कार्यकरणरूपेणावान्तरविभागमाह। तदेतदिति॥ आत्मभूतस्तस्योपाधित्वेन स्थित इति यावत्। अविनाशी स्थूलदेहे गच्छत्यपि यावन्मोक्षं न गच्छतीत्यर्थः। सच्च त्यच्च सत्यं भूतपञ्चकं तदात्मके नामरूपे इत्याह। नामेति॥ करणयाथात्म्यं कथयति। क्रियात्मकस्त्विति॥ पञ्चीकृतपञ्चमहाभूतात्मकं तत्कार्यं सर्वं सच्च त्यच्चेति व्युत्पत्तेः

उ॰ नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ॥ ३ ॥ इति बृहदारण्यके तृतीयोऽध्यायः ॥

---

भा॰ क्रियात्मकस्तु प्राणस्तयोरुपष्टम्भको वाह्याभ्यां शरीरात्मकाभ्यामुपजनापायधर्म्मिभ्यां मर्त्याभ्यां छन्नोऽप्रकाशीकृतः । एतदेव संसारसत्त्वमविद्याविषयं प्रदर्शितं। अत ऊर्द्ध्वं विद्याविषय आत्माधिगन्तव्य इति चतुर्थ आरभ्यते ॥ ३ ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीमच्छङ्करभगवतः कृतौ बृहदारण्यकभाष्ये तृतीयोऽध्यायः समाप्तः ॥

---

आ॰ सत्यं वैराजं शरीरं कार्य्यमपञ्चीकृतपञ्चमहाभूतकार्य्यात्मककरणरूपसप्तदशकलिङ्गस्य सूत्राख्यस्यायतनं तस्यैवाच्छादकं तत्स्थमात्मापि स्थूलदेहच्छन्नत्वाद्दुर्विज्ञातं तेनापि छन्नं प्रत्यक्त्वन्तु सुतरामिति तज्ज्ञानेऽवहितैर्भाव्यमिति भावः ॥ इदानीमविद्याकार्य्यप्रपञ्चमुपसंहरति । एतदिति ॥ अविद्याविषयविवरणस्य वक्ष्यमाणोपयोगमुपसंहरति । अत इति ॥ प्रपञ्चितं सत्यविद्याविषये ततो विरक्तस्यात्मानं विविदुषस्तदज्ञानापनयार्थं चतुर्थप्रमुखः सन्दर्भो भविष्यति । तस्मादविद्याया विषयविवरणमुपयोगीति भावः ॥ २ ॥ षष्ठं ब्राह्मणं ॥ इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीमच्छुद्धानन्दपूज्यपादशिष्येण श्रीमद्भगवदानन्दज्ञानेन कृतायां बृहदारण्यकभाष्यटीकायां षष्ठं ब्राह्मणं ॥ तृतीयोऽध्यायः समाप्तः ॥

ॐ तत् सत् ॥

भा॰ श्रीगणेशाय नमः ॥ आत्मेत्येवोपासीत तदन्वेषणे च सर्व्वमन्विष्टं स्यात्तदेव चात्मतत्त्वं सर्व्वस्मात्प्रेयस्त्वादन्वेष्टव्यं। आत्मानमेवावेदहं ब्रह्मास्मीत्यात्मतत्त्वमेकं विद्याविषयं। यस्तु भेददृष्टिविषयः सोऽन्योऽसावन्योऽहमस्मीति न स वेदेत्यविद्याविषयः एकधैवानुद्रष्टव्यं मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीत्येवमादिभिः प्रविभक्तौ विद्याविद्याविषयौ सर्व्वोपनिषत्सु। तत्र च योऽविद्याविषयः स सर्व्व एव साध्यसाधनादिभेदविशेषविनियोगेन व्याख्यात आतृतीयाध्यायपरिसमाप्तेः। स च व्याख्यातो

---

आ॰ तृतीयाध्याये सूचितविद्याविद्ययोरविद्या प्रपञ्चिता सम्प्रति विद्यां प्रपञ्चयितुं चतुर्थमध्यायमारभमाणो वृत्तं सङ्कीर्त्तयति। आत्मेति ॥ किमित्यर्थान्तरेषु सत्स्वात्मतत्त्वमेवानुसन्धातव्यं तत्राह। तदन्वेषणे चेति ॥ तस्यैवान्वेष्टव्यत्वे परप्रेमास्पदत्वेन परमानन्दत्वं हेत्वन्तरमाह। वदेवेति ॥ आत्मतत्त्वज्ञानस्य सर्व्वाप्तिफलत्वाच्च तदेवान्वेष्टव्यमित्याह। आत्मानमिति॥ उक्तया परिपाट्या प्रसिद्धमर्थं सङ्गृह्णाति। आत्मतत्त्वमिति ॥ उक्तमर्थान्तरमनुवदति। यस्त्विति ॥ सोऽविद्याविषय इति सम्बन्धः। कथं भेददृष्टिविषयस्याविद्याविषयत्वं तत्राह। अन्योऽसाविति। यो भेददृष्टिपरः सन् वेदेत्यविद्या तद्दृष्टिमूलं सूचिता तेन तद्विषयो भेददृष्टिविषय इत्यर्थः। कथं यथोक्तौ विद्याविद्याविषयावसङ्कीर्णावेवमन्तव्यौ शक्येते तत्राह। एकधेति ॥ समाप्तशास्त्रस्य वृत्तमर्थं कथयति। तत्र चेति। विद्याविद्याविषययोरिति यावत्। आदिपदं साध्यसाधनावान्तरभेदसङ्ग्रहार्थं यथोक्तो भेद एव विशेषः। तस्मिन्विनियोगो व्यवस्थापनं तेनेत्यर्थः। उपसंहारशास्त्रस्यान्ते वृत्तमनुभाषते। स चेति ॥ अथ वोक्तौ विद्याविद्याविषयौ कथमसङ्कीर्णौ मन्तव्यावित्याशङ्क्याह। एकधेति ॥ तत्रोत्तरग्रन्थस्य विषयपरिशेषार्थं पुरुषविधशास्त्रशेषमारभ्योक्तं दर्शयति।

भा॰ ऽविद्याविषयः । सर्व्व एव द्विप्रकारोऽन्तःप्राण उपष्ट-म्भको गृहस्येव स्तम्भादिलक्षणः प्रकाशकोऽन्तो वाह्यस्य कार्य्यलक्षणोऽप्रकाशक उपजनापायधर्म्मकस्तृणकुशमृत्तिकासमो गृहस्येव सत्यशब्दवाच्यो मर्त्त्यस्तेनाम्हतशब्दवाच्यः प्राणश्छन्न इति चोपसंहृतः । स एव च प्राणो वाह्याधारभेदेष्वनेकधा विस्तृतः । प्राण एको देव इत्युच्यते । तस्यैव वाह्यः पिण्ड एकः साधारणो विराड्वैश्वानर आत्मा पुरुषविधः प्रजापतिः । को हिरण्यगर्भ

---

आ॰ तच्च चेति । तर्हि समानत्वादविद्याविषयस्य कथमविदुषो गार्ग्यस्य प्रवृत्तिरित्याशङ्क्य तदर्थमवान्तरविभागमनुवदति । स चेति ॥ तावेव प्रकारौ दर्शयन्नादौ सूक्ष्मशरीरमुपन्यस्यति । अन्तरिति ॥ तस्य वाह्यकरणद्वारा स्थूलेषु विषयेषु प्रकाशकत्वमम्हतत्वं च श्रुत्यादितं द्वितीयं प्रकारमाचक्षाणः स्थूलं दर्शयति । वाह्यस्येति ॥ तस्य कयापि विधया सूक्ष्मदेहं सत्यप्रकाशकत्वादप्रकाशकत्वं आगमापायित्वेनावद्येयत्वं सूचयति । उपजनेति ॥ यथा गृहस्य दृणादि वहिरङ्गं तथा सूक्ष्मस्य देहस्य स्थूलो देहस्तथापि दृणादिना विना गृहस्य व्यवहारायोग्यत्ववत्तस्यापि स्थूलदेहं विना न तद्योग्यत्वमिति मत्वाह । दृणेति ॥ तस्य पूर्व्वप्रकरणान्ते नामरूपे सत्यमित्यत्र प्रस्तुतत्वमस्तीत्याह । सत्वेति ॥ सर्व्वथा वाधवैधुर्य्यंसत्यत्वमिति शङ्कां निरसितुं विशिनष्टि । मर्त्त्य इति ॥ तस्य कार्य्यं दर्शयति । तेनेति ॥ उक्तमनूद्याजातशत्रु-शास्यमवतारयति । स एवेति । आदित्यचन्द्रादयो वाह्याधार-भेदा अनेकधात्वमतिष्ठा मूर्द्धेत्यादिवक्ष्यमाणगुणवशाद्द्रष्टव्यं । कथं तर्हि तस्यैकत्वं तत्राह । प्राण इति ॥ प्राणस्य नानात्वमेक-त्वञ्चोक्तं तत्रैकत्वं विवृणोति । तस्यैवेति ॥ प्राणस्यैव स्वभाव-भूतोऽनात्मगत्वाणः पिण्डः समष्टिरूपो हिरण्यगर्भादिशब्दै-रुपाधिविषयैस्तत्र तत्र श्रुतिस्मृत्योरुच्यते । स चाग्निर्मूर्द्धा चक्षुषी

उ० ॥ ॐ ॥ दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति स

भा० तथा हि गार्ग्याजातशत्रोरतीव श्रद्धालुता दृश्यते आख्यायिकायां। श्रद्धावान्लभते ज्ञानमिति च स्मृतिः॥

तत्र पूर्व्वपक्षवाद्यविद्याविषयब्रह्मविद्दृप्तबालाकिर्दृप्तो गर्व्वितोऽसम्यग्ब्रह्मवित्त्वादेव बलाकाया अपत्यं बालाकिर्दृप्तश्चासौ बालाकिश्च दृप्तबालाकिर्हशब्द ऐतिह्यार्थ आख्यायिकायामनूचानोऽनुवचनसमर्थो वक्ता वाग्मी गार्ग्यगोत्रत आस बभूव। कश्चित्कालविशेषे स ह उवाचाजातशत्रुनामानं काश्यं काशिराजमभिगम्य ब्रह्म ते ब्रवाणीति ते तुभ्यं ब्रह्म ब्रवाणि कथयानि। स एवमुक्तोऽजातशत्रुरुवाच सहस्रं गवां दद्मः। एतस्यां वाचि यो मां प्रत्यवोचो ब्रह्म ते ब्रवाणीति तावन्मात्रमेव गोसहस्रप्रदाने निमित्तमित्यभिप्रायः। साक्षाद्ब्रह्मकथनमेव निमित्तं कस्मान्नापेक्षते सहस्रदाने ब्रह्म ते ब्रवाणीति। इयमेव तु वाक् निमित्तमपेक्षत इत्युच्यते। यतः श्रुतिरेव राज्ञोऽभिप्राय-

आ० ख्यायिकानुगुणन्दर्शयति। तथा चेति॥ श्रद्धा ब्रह्मज्ञाने परमसाधनमित्यत्र भगवतोऽपि सम्मतिमाह। श्रद्धावानिति॥

आख्यायिकार्थे बहुधा स्थिते तदक्षराणि व्याचष्टे। तत्रेत्यादिना॥ पूर्व्वपक्षवादित्वे हेतुमाह। अविद्याविषयेति॥ गर्वितत्वे हेतुमाह। असम्यगिति॥ इयमेव तु वाक् निमित्तमित्यत्रापि कस्मादित्यनुषज्यते॥ अतो ब्रह्म ते ब्रवाणीति वागेव सहस्रदाने निमित्तमिति शेषः॥ श्रुतिं व्याचष्टे। जनक इति। प्रसिद्धं जन-

उ० होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥ १ ॥

स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामा-

---

भा० माह। जनको दाता जनकः श्रोतेति वै तस्मिन्वाक्यद्वये पदद्वयमभ्यस्यते जनको जनक इति। वैशब्दः प्रसिद्धाव-द्योतनार्थः। जनको दित्सुर्जनकः शुश्रूषुरिति। तस्माच्छुश्रू-षवो विवक्षवः प्रतिजिघृक्षवश्च जना धावन्तीत्यभिगच्छन्ति। तस्मात्तत्सर्वं मय्यपि सम्भावितवानसीति ॥ १ ॥

एवं राजानं शुश्रूषुमभिमुखीभूतं स ह उवाच गार्ग्यः। य एवासावादित्ये चक्षुषि चैकोऽभिमानी चक्षुर्द्वारेणेह हृदि प्रविष्टोऽहं भोक्ता कर्त्ता चेत्यवस्थितः। एतमेवाहं ब्रह्म पश्याम्यस्मिन्कार्य्यकरणसङ्घात उपासे। तस्मात्तमहं

---

आ० कस्य दातृत्वादि तदवद्योतको वै निपात इति यावत्॥ वाक्या-र्थमाह। जनको दित्सुरित्यादिना। सम्भावितवानसीति प्रागुक्तं वाक्यात्रं सहस्रदाने निमित्तमिति शेषः॥ तस्मान्मुक्तप्रसिद्धाति-क्रमवादिति यावत्। तत्सर्वं दातृत्वादिकमित्यर्थः। इति शब्दोऽभिप्रायसमाप्त्यर्थः॥ १ ॥

हृदि प्रविष्टो भोक्ताहमित्यादि प्रत्यक्षं प्रमाणयति। अह-मिति॥ दृष्टिफलं नैरन्तर्य्याभ्यासं दर्शयति। उपास इति॥ तावता मम किमायातं तदाह। तस्मादिति॥ मामेति प्रतीकमा-दायाभ्यासस्यार्थमाह। मामेति॥ विनिवारयन्प्रत्युवाचेति सम्बन्धः। एकस्य माङो निवारकत्वमपरस्य संवादेन सङ्गति-रिति विभागे सम्भवति कुतो द्विर्वचनमित्याशङ्क्याह। मामे-

उ० तस्मिन्संवदिष्ठा अतिष्ठाः सर्व्वेषां भूतानां मूर्द्धा राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽतिष्ठाः सर्व्वेषां भूतानां मूर्द्धा राजा भवति ॥ २ ॥

---

भा० पुरुषं ब्रह्म तुभ्यं ब्रवीम्युपास्वेति । स एवमुक्तः प्रत्युवाचाजातशत्रुर्मामा मामेति हस्तेन विनिवारयन्नेतस्मिन्ब्रह्मणि विज्ञेये मा संवदिष्ठा मामेत्याबाधनार्थं द्विर्वचनं । एवं समाने विज्ञानविषय एव आवयोरज्ञानज्ञानवत इव दर्शयता बाधिताः स्यामोऽतो मा संवदिष्ठा मा संवादं कार्षीरस्मिन्ब्रह्मणि । अन्यथेज्जानासि तद्ब्रह्म वक्तुमर्हसि । न तु यन्मया ज्ञायत एवाथ चेन्मन्यसे जानीषे त्वं ब्रह्ममात्रं न तु तद्विशेषणोपासनफलानीति तन्न मन्तव्यं यतः सर्व्वमेतदहं जाने । यद्ब्रवीषि कथमतिष्ठा अतीत्य सर्व्वाणि भूतानि तिष्ठतीति । अतिष्ठाः सर्व्वेषां च भूतानां मूर्द्धा शिरो राजेति । वैराजाद्दीप्तिगुणोपेतत्वादेतैर्विशेषणैर्विशिष्टमेतद्ब्रह्मास्मिन्कार्य्यकरणसंघाते कर्त्तृ भोक्तृ चेत्यहमेतमुपास इति फलमप्येवं विशिष्टोपासकस्य । स य एत-

---

आ० त्याबाधनार्थमिति ॥ तदेव स्फुटयति । एवमिति ॥ त्वदुक्तेन प्रकारेण यो विज्ञानविषयोऽर्थस्तस्मिन्नावयोर्विज्ञानसाम्यादेव समानेऽपि विज्ञानवत्त्वे सत्यस्मान् विज्ञानवत इव बोधत्वमेवार्थमस्मान् प्रत्युपदेशेन ज्ञापयता भवता वयं बाधिताः स्याम इति योजना । तथापि गार्ग्यस्य कथमीषद्बाधनं तत्राह । यत इति ॥ अतिष्ठाः सर्व्वेषामित्यादि वाक्यं प्रश्नाद्वारा व्य-

उ॰ स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति

---

भा॰ मेवमुपास्तेऽतिष्ठाः सर्व्वेषां भूतानां मूर्द्धा राजा भवति यथा गुणोपासनमेव हि च फलं यथा यथोपासते तदेव भवतीति श्रुतेः ॥ २ ॥

संवादेनादित्यब्रह्मणि प्रत्याख्यातेऽजातशत्रुणा चन्द्रमसि ब्रह्मान्तरं प्रतिपेदे गार्ग्यः। य एवासौ चन्द्रे मनसि चैकः पुरुषो भोक्ता कर्त्ता चेति पूर्व्ववद्विशेषणं। बृहन्महत्पाण्डरं शुक्लं वासो यस्य सोऽयं पाण्डरवासा अप्शरी-

---

आ॰ तार्थं व्याकरोति। यथेत्यादिना॥ एतं पुरुषमिति शेषः। इतिशब्दो गुणोपास्तिसमाप्त्यर्थः। पूर्व्वोक्तरीत्या त्रिभिर्गुणैर्विशिष्टं ब्रह्म तदुपासकस्य फलमपि आगामीत्युक्ता फलवाक्यमुपादत्ते। स य इति॥ किमिति यथोक्तं फलमुच्यते तत्राह। यथेति॥ २॥

मनसि चेति चकाराद्बुद्धौ चेत्यर्थः। एकः पुरुषस्तमेवाहं ब्रह्मोपासे त्वमप्येवमुपास्स्वेत्युक्ते मा मेत्यादिना प्रत्युवाचेत्याह। इति पूर्व्ववदिति॥ भानुमण्डलतो द्विगुणं चन्द्रमण्डलमिति प्रसिद्धिमाश्रित्याह। महानिति॥ कथं पाण्डरं वासश्चन्द्राभिमानिनः प्राणस्य सम्भवतीत्याशङ्क्याह। अप्शरीरत्वादिति॥ पुरुषो हि शरीरेण वाससेव वेष्टितो भवति पाण्डरत्वञ्चापां प्रसिद्धं आपो वासः प्राणस्येति च श्रुतिरतो युक्तं प्राणस्य पाण्डरवासस्त्वमित्यर्थः। न केवलं सोमशब्देन चन्द्रमा गृह्यते। किन्तु लतापि समानधर्म्मत्वादित्याह। यश्चेति॥ चन्द्रमसं लतात्मकं बुद्धिनिष्ठञ्च पुरुषमेकीकृत्याहंग्रहेणोपास्तिरित्यर्थः। तस्यानुपास्तिफलमाह। यथोक्तेति॥ यज्ञशब्देन प्रकृतिरुक्ता॥ विकार-

उ॰ वा अहमेतमुपास इति स य एतमेवमुपास्तेऽहर-
हर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥ ३ ॥
स होवाच गार्ग्यो य एवासौ विद्युति पुरुष
एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा
मैतस्मिन्संवदिष्ठास्तेजस्वीति वा अहमेतमु-
पास इति स य एतमेवमुपास्ते तेजस्वी ह भवति
तेजस्विनी हास्य प्रजा भवति ॥ ४ ॥

---

भा॰ रन्नात्मा प्राणस्य। यस्मादन्नभूतोऽभिषूयते लतात्मको यज्ञे तमे-
कीकृत्यैतमेवाहं ब्रह्मोपासे यथोक्तगुणं य उपास्ते तस्या-
हरहः सोमोऽभिषुतो यज्ञे प्रसुतश्च विकारेष्वन्नञ्चास्य न
क्षीयतेऽन्नात्मकोपासकस्य ॥ ३ ॥

तथा विद्युति त्वचि हृदये चैका देवता तेजस्वीति
विशेषणं तस्यास्तत्फलं तेजस्वीह भवति तेजस्विनी हास्य
प्रजा भवति। विद्युतां बहुत्वस्याङ्गीकरणादात्मनि प्रजा-
यां च फलबाहुल्यं ॥ ४ ॥

---

आ॰ शब्देन निष्कृतयो गृह्यन्ते। यथोक्तोपासकस्य प्रकृतिविकृत्यनु-
ष्ठानसामर्थ्यं योजया लभ्यमित्यर्थः। अन्नात्मकसोमोपासनानुसारि-
त्वादुपपन्नत्वमभिप्रेत्योपासकं विशिनष्टि। अन्नात्मेति। ३।
संवाददोषेण पक्षे ब्रह्मण्यपि प्राप्याख्याते ग्रन्थान्तरमाह।
तथेति। कथमेकमुपासनमनेकफलमित्याशङ्क्याह। विद्युतामिति।
अप्रवर्तित्वमप्रवर्तकत्वमक्रियावत्त्वं वा। कथमेकस्मिन्नायाव-
पराजिता सेनेति गुणः सम्भवति तत्राह। मरुतामिति।

उ॰ स होवाच गार्ग्यो य एवायमाकाशे पुरुष एत-
मेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैत-
स्मिन्संवदिष्ठाः पूर्णमप्रवर्त्तीति वा अहमेतमुपास
इति स य एतमेवमुपास्ते पूर्य्यते प्रजया पशु-
भिर्नास्यास्माल्लोकात्प्रजोद्वर्त्तते ॥ ५ ॥

स होवाच गार्ग्यो य एवायं वायौ पुरुष
एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रु-
र्मा मैतस्मिन्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता
सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते
जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥

---

भा॰ तथाऽऽकाशे हृद्याकाशे चैका पूर्णमप्रवर्त्ति चेति विशे-
षणद्वयं पूर्णत्वविशेषणफलमिदं पूर्य्यते ह प्रजया पशु-
भिरप्रवर्त्तिविशेषणफलं नास्यास्माल्लोकात्प्रजोद्वर्त्तत इति
प्रजा सन्तानाविच्छित्तिः ॥ ५ ॥

तथा वायौ प्राणे हृदि चैका विशेषणमिन्द्रः परमेश्वरो
वैकुण्ठोऽप्रसह्यो नरैर्जितपूर्व्वा पराजिता सेना मरुतां
गणत्वप्रसिद्धेरुपासनफलमपि । जिष्णुर्ह जयनशीलोऽप-
राजिष्णुर्न च परैर्जितस्वभावो भवति । अन्यतस्त्यजायी
अन्यतस्त्यानां सपत्नानां जयनशीलो भवति ॥ ६ ॥

---

आ॰ विशेषणद्वयस्य फलद्वयं क्रमेण श्रुत्यादर्शयति । जिष्णुरित्यादिना ॥
अन्यतस्त्यानामन्यतो मातृतो जातानां । यज्ञविर्विंध्यते छिद्यते

उ० स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ॥ ७ ॥

स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपꣳ हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥ ८ ॥

---

भा० अग्नौ वा चिहृदि चैका विशेषणं विषासहिर्मर्षयिता परेषां अग्निबाहुल्यात्फलबाहुल्यं पूर्ववत् ॥ ७ ॥

अप्सु रेतसि हृदि चैका विशेषणं प्रतिरूपोऽनुरूपः श्रुतिस्मृत्यप्रतिकूल इत्यर्थः । फलं प्रतिरूपं श्रुतिस्मृतिशासनानुरूपमेव । एनमुपगच्छति प्राप्नोति न विपरीतमन्यथाऽस्मात्तथाविध एवोपजायते ॥ ८ ॥

---

आ० तत्सर्वं भस्मीकरणेन सहते तेनाग्निर्विषासहिः । यथा पूर्वं विद्युतां बाहुल्यादात्मनि प्रजायां च फलबाहुल्यमुक्तं तथा चाग्नीनां बहुत्वादुपासकस्यात्मनि प्रजायां च दीप्ताग्नित्वं सिध्यतीत्याह । अग्नीति ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

प्रतिरूपत्वं प्रतिकूलत्वमित्येतद्व्यावर्त्तयति । अनुरूप इति ॥ अन्यच्च फलमिति सम्बन्धः । अस्मादुपासितुरित्यर्थः । तथाविधश्रुतिस्मृत्यनुकूल इति यावत् । हार्दे चेत्येतदेव स्फुटयति । स्त्वेति ॥

उ० स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमे-
वाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैत-
स्मिन्संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास
इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति
रोचिष्णुर्हास्य प्रजा भवत्यथो यैः सन्निगच्छति
सर्वांꣳस्तानतिरोचते ॥ ९ ॥

स होवाच गार्ग्यो य एवायं यं तं पश्चाच्छब्दोऽ
नूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रु-
र्मा मैतस्मिन्संवदिष्ठा असुरिति वा अहमेतमुपास
इति स य एतमेवमुपास्ते सर्वꣳ हैवास्मिँल्लोक
आयुरेति नैनं पुरा कालात्प्राणो जहाति ॥१०॥

---

भा० आदर्शे प्रसादस्वभावे चान्यत्र खड्गादौ चार्द्रे च स्वच्छ-
त्विस्वाभाव्ये चैका विशेषणं रोचिष्णुर्दीप्तिस्वभावः फलञ्च
तदेव रोचनाधारबाहुल्यात्फलबाहुल्यं ॥ ९ ॥

यं तं गच्छन्तं य एवायं शब्दः पृष्ठतोऽनूदेत्यध्यात्मञ्च
जीवनहेतुः प्राणस्तमेकीकृत्याहासुः प्राणो जीवनहेतुरिति।
गुणस्तस्य फलं सर्व्वमायुरस्मिन् लोके एतीति। यथोपात्तं
कर्म्मणायुः कर्म्मफलपरिच्छिन्नकालात्पुरा पूर्व्वं रोगा-
दिभिः पीड्यमानमप्येनं प्राणो न जहाति ॥ १० ॥

---

आ० सर्व्वंनैवेति विशेषणस्य देवतेति विशेष्यतया सम्बध्यते। तदेव रो-
चिष्णुत्वमित्यर्थः॥ आहैतमेवाहमित्यादीति शेषः। तस्य गुणवदुपा-
सनस्येत्यर्थः। सर्व्वमायुरित्येतद्व्याचष्टे। यथोपात्तमिति।८।९।१०।

उ० स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एत-मेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा द्वितीयोऽनपग इति वा अह-मेतमुपास इति स य एतमेवमुपास्ते द्वितीय-वान् ह भवति नास्माद्गणश्छिद्यते ॥ ११ ॥

स होवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमु-पास इति स य एतमेवमुपास्ते सर्व्वँ हैवास्मिँ-ल्लोक आयुरेति नैनं पुरा कालान्मृत्युराग-च्छति ॥ १२ ॥

---

भा० दिक्षु कर्णयोर्हृदि चैकाश्विनौ देवाववियुक्तस्वभावौ गुणस्तस्य द्वितीयवत्त्वमनपगत्वमवियुक्तता चान्योऽन्यं दिशा-मश्विनोश्चैवंधर्मित्वात्तदेव च फलमुपासकस्य गणाविच्छेदो द्वितीयवत्त्वञ्च ॥ ११ ॥

छायायां बाह्ये तमस्यध्यात्मे चावरणात्मकेऽज्ञाने हृदि चैका देवता विशेषणं मृत्युः फलं सर्व्वं पूर्व्ववन्मृत्योरनागमे रोगादिपीडाभावो विशेषः ॥ १२ ॥

---

आ० का पुनरसावेका देवता तत्राह । अश्विनाविति । तस्य देव-स्येति यावत् । यथोक्तं गुणद्वयमुपपादयति । दिशामिति । द्वितीयवत्त्वं साधुभृत्यपरिवृतत्वं । शब्दब्रह्मोपासकस्येव गणो

उ॰ स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा आत्मन्वीति वा अहमेत-मुपास इति स य एतमेवमुपास्ते आत्मन्वीह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णी-मास गार्ग्यः ॥ १३ ॥

स होवाचाजातशत्रुरेतावन्नु इत्येतावद्धीति

---

भा॰ आत्मनि प्रजापतौ बुद्धौ च हृदि चैकात्मन्वीह भवत्यात्मवान्भवति आत्मन्विनी हास्य प्रजा भवति बुद्धि-मत्त्वात्प्रजायां सम्पादनमिति विशेषः। स्वयं परिज्ञात-त्वेनैवंक्रमेण प्रत्याख्यातेषु ब्रह्मसु स गार्ग्यो ऽक्षीणब्रह्मविज्ञा-नोऽप्रतिभासमानोत्तरस्तूष्णीमवाक्शिरा आस ॥ १३ ॥

तं तथाभूतमालक्ष्य गार्ग्यं स होवाचाजातशत्रुरेता-वन्नु इति। किमेतावद्ब्रह्म निर्ज्ञातमाहोस्विदधिकमप्यस्ती-तर आह एतावद्धीति। नैतावता विदितेन ब्रह्म विदितं

---

आ॰ ब्रह्मोपासकस्यापि फलमित्याह। फलमिति। फलभेदे* च कथमुपासनभेदः स्यादित्याशङ्क्याह। मृत्योरिति॥ व्यस्तानि ब्रह्माण्युपन्यस्य समस्तं ब्रह्मोपदिशति। प्रजापताविति॥ आत्मवत्त्वं वश्यात्मकत्वं। फलस्यात्मगामित्वान्न प्रजायां तदभिधानमुचितमि-त्याशङ्क्याह। बुद्धीति॥ ११॥ १२॥ १३॥

विचारार्था श्रुतिरिति कथयति। किमेतावदिति॥ वाक्या-र्थं बोधसमाधिभ्यां स्फुटयति। किमित्यादिना॥ आदित्यादेर-

---

* फलभेदाभाव इति पाठान्तरः।

उ॰ नैतावता विदितं भवतीति स होवाच गार्ग्य उपत्वायानीति ॥ १४ ॥

---

भा॰ भवतीत्याहाजातशत्रुः किमर्थं गर्वितोऽसि ब्रह्म ते ब्रवाणीति किमेतावद्विदितं विदितमेव न भवतीत्युच्यते न फलवद्विज्ञानश्रवणान्न चार्थवादत्वमेव वाक्यानामवगन्तुं शक्यमपूर्व्वविधानपराणि हि वाक्यानि प्रत्युपासनोपदेशं लक्ष्यन्तेऽतिष्ठाः सर्व्वेषां भूतानामित्यादीनि तदनुरूपाणि च फलानि सर्व्वत्र श्रूयन्ते। विभक्तान्यर्थवादत्वे एतदसमञ्जसं। कथं तर्हि नैतावता विदितं भवतीति। नैष दोषोऽधिकृतापेक्षत्वात्। ब्रह्मोपदेशार्थं हि शुश्रूषवेऽजातशत्रवे अमुख्यब्रह्मविद्गार्ग्यः प्रवृत्तः स युक्त एव मुख्यब्रह्मविदाऽजातशत्रुणाऽमुख्यब्रह्मविद्गार्ग्यो वक्तुं यदमुख्यं ब्रह्म वक्तुं प्रवृत्तस्त्वं तन्न जानीष इति। यद्यमुख्यब्रह्मविज्ञानमपि प्रत्याख्यायेत तदेतावतेति न ब्रूयान्न किञ्चिज्ज्ञातं त्वयेत्येवं ब्रूयात्तस्माद्भवन्त्येतावन्त्यविद्याविषये ब्रह्माण्येता-

---

आ॰ विदितत्वनिषेधं प्रतिज्ञाय हेतुमाह। न फलवदिति ॥ नैतानि वाक्यानि फलवद्विज्ञानपराणि । अर्थवादत्वादित्याशङ्क्याह । न चेति। फलवत्त्वाच्चापूर्व्वविधिपराण्येतानि वाक्यानीत्याह। तदनुरूपाणीति । अर्थवादत्वेऽपि तेषामपूर्व्वार्थत्वं किं न स्यादित्याशङ्क्याह । अर्थवादत्व इति । वाक्यानां फलवद्विज्ञानपरत्वमुपेत्य निषेधवाक्यस्य गतिं पृच्छति । कथं तर्हीति ॥ तस्यानर्थक्यं परिहरति। नैष दोष इति ॥ अधिकृतापेक्षत्वाद्वेदनप्रतिषेधस्येत्युक्तं स्फुटयति। ब्रह्मेति ॥ नैतावतेत्यविशेषेणामुख्यब्रह्मज्ञानमपि निषिद्धमिति चेन्नेत्याह । यदीति। किञ्च निष्कामेन चेदेतान्यु-

उ॰ स होवाचाजातशत्रुः प्रतिलोमं वै तद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुषꣳ सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयाञ्चक्रे बृहन्पा-

---

भा॰ वद्विज्ञानदातृत्वाच्च परब्रह्मविज्ञानस्य युक्तमेव वक्तुं मैतावता विदितं भवतीति । अविद्याविषये विज्ञेयत्वं नामरूपकर्मात्मकत्वमेषां तृतीयेऽध्याये प्रदर्शितं । तस्मान्नैतावता विदितं भवतीति ब्रुवता अधिकं ब्रह्म ज्ञातव्यमस्तीति दर्शितं भवति । तच्चानुपसन्नाय न वक्तव्यमित्याचारविधिज्ञो गार्ग्यः स्वयमेवाहोपसाय्यानीत्युपगच्छानीति त्वां । यथाऽन्यः शिष्यो गुरुं ॥ १४ ॥

स होवाचाजातशत्रुः प्रतिलोमं विपरीतमेतत्किं तद्यद्ब्राह्मण उत्तमवर्ण आचार्यत्वेऽधिकृतः सन् क्षत्रियमनाचार्यस्वभावमुपेयादुपगच्छेच्छिष्यवृत्त्या ब्रह्म मे वक्ष्यतीत्येतदाचारविधिशास्त्रेषु निषिद्धं । तस्मात्तिष्ठ त्वमा-

---

आ॰ यासमान्यनुष्ठीयन्ते तदैतेषां ब्रह्मज्ञानार्थत्वादमुख्यब्रह्मज्ञाननिषेधमन्तरेण निषेधोपपत्तिरित्याह । एतावद्विज्ञानेति । आदित्यादिकमेव मुख्यं ब्रह्मेति निषेधानर्थक्यं तदवस्थमित्याशङ्क्याह । अविद्येति । आदित्यादेर्मुख्यब्रह्मत्वासम्भवान्निषेधस्योपपन्नत्वात्तत्सामर्थ्यसिद्धमर्थमुपन्यस्यति । तस्मादिति । उपगमनवाक्यमुत्थाप्य व्याचष्टे । तच्चेति ॥ १४ ॥

अब्राह्मणादध्ययनमापत्काले विधीयते । अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः । नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेदित्यादीन्याचारविधिशास्त्राणि । आदित्यादिब्रह्मभ्यो विशेष-

उ॰ ण्डुरवासः सोम राजन्निति स नोत्तस्थौ तं पाणि-
ना-पेषं बोधयाञ्चकार स होत्तस्थौ ॥ १५ ॥

---

भा॰ चार्य्य एव सन्। विज्ञापयिष्याम्येव त्वामहं। यस्मिन्विदिते ब्रह्म विदितं भवति। यत्तन्मुख्यं ब्रह्म वेद्यं तं गार्ग्यं सत्त्वमालभ्य विश्रम्भजननाय पाणौ हस्त आदाय गृहीत्वोत्तस्थावुत्थितवान्। तौ ह गार्ग्याजातशत्रू पुरुषं सुप्तं राजगृहप्रदेशे क्वचिदाजग्मतुरागतौ। तं च पुरुषं सुप्तं प्राप्यैतैर्नामभिर्ब्रुवन् पाण्डरवासः सोम राजन्नित्येतैरामन्त्रयाञ्चक्रे। एवमामन्त्र्यमाणोऽपि स सुप्तो नोत्तस्थौ। तमप्रतिबुध्यमानं पाणिना पेषं आपिष्यापिष्य बोधयाञ्चकार प्रतिबोधितवान्। तेन स होत्तस्थौ। तस्माद्यो गार्ग्येणाभिप्रेतो नासावस्मिञ्छरीरे कर्त्ता भोक्ता ब्रह्मेति ॥१५॥

कथं पुनरिदमवगम्यते सुषुप्तपुरुषगमनतत्सम्बोधनानुत्थानैर्गार्ग्याऽभिमतस्य ब्रह्मणोऽब्रह्मत्वं ज्ञापितमिति। जागरितकाले यो गार्ग्याभिप्रेतः पुरुषः कर्त्ता भोक्ता ब्रह्म स सन्निहितः करणेषु यथा तथा अजातशत्र्वभिप्रेतोऽपि

---

आ॰ माह। यस्मिन्निति॥ प्राणस्य व्याप्रियमाणस्यैव सम्बोधनार्थं पृथगुक्तनामाश्रवणादापेषणाच्चोत्थानात्तस्याभोक्तृत्वं सिध्यतीति फलितमाह। तस्मादिति॥ १५॥

तौ ह सुप्तमित्यादि सुप्तपुरुषगत्युक्तिमाक्षिपति। कथमिति॥ गार्ग्यकाश्याभिमतयोरुभयोरपि जागरिते करणेषु सन्निधानाविशेषात्तत्रैव किमिति विवेको न दर्शित इत्यर्थः। जागरितेषु करणेषु द्वयोः सन्निधानेऽपि साङ्कर्य्याद्दुष्करं विवेचनमिति

भा॰ तत्स्वामी भृत्येष्विव राजसन्निहित एव। किन्तु भृत्यस्वामिनोर्गार्ग्याजातशत्र्वभिप्रेतयोर्यद्विवेकावधारणकारणं तत्सङ्कीर्णत्वादनवधारितविशेषं यद्बहुकर्तृत्वमेव भोक्तृत्वं कृत्स्नत्वं यथाभोक्तुर्दृश्यत्वमेव । न तु द्रष्टृत्वं तयोरुभयमिह सङ्कीर्णत्वादिविच्य दर्शयितुमशक्यमिति सुप्तपुरुषगमनं॥ ननु सुप्तेऽपि पुरुषे विशिष्टैर्नामभिरामन्त्रितो भोक्तैव प्रतिपद्यते नाभोक्तेति नैव निर्णयः स्यादिति। न निर्धारितविशेषत्वाद्गार्ग्याभिप्रेतस्य । यो हि सत्येन ब्रह्मः प्राणात्मा ऽन्यतो वागादिष्वनस्तमितो नित्योदयस्तु यथापः शरीरं पाण्डरवासा यथाऽसपत्नवान् यस्य ह्यद्गुन्यस्य सोमो राजा षोडशकलः स स्वव्यापाराक्रुद्धो यथा निर्गात एवाऽनस्तमितस्वभाव आस्ते। न चाऽन्यस्य कस्यचिद्व्यापारस्तस्मिन् काले गार्ग्येणाभिप्रेयते तद्विरोधिनः। तस्मात्स्वनामभिरामन्त्रितेन प्रतिबोद्धव्यं न च प्रत्यबुध्यत।

---

आ॰ परिहरति । जागरितेति ॥ ब्रह्मशब्दादूर्ध्वं तच्छब्दमध्याहृत्य योजना । तर्हि स्वामिभृत्यन्यायेन तयोर्विवेकोऽपि सुकरः स्यादित्याशङ्क्याह। किन्त्विति ॥ तद्विवेकावधारणकारणं तदाह। यद्बहुकर्तृत्वमिति ॥ कथं तदनवधारितविशेषमिति तदाह। तथेति॥ इहेति जागरितोक्तिः । यद्यपि जागरितं हित्वा सुप्ते पुरुषे विवेकार्थं तयोरुपगतिस्तत्र यो भोक्तैव संबोधितः स्वनामभिस्तच्छब्दं श्रोष्यति नाचेतनस्तथापि नैकविवेकसिद्धिर्गार्ग्यकाश्याभीष्टात्मनोरवस्थितसंशयादिति शङ्कते। नन्विति ॥ संशयं निराकरोति। नेत्यादिना॥ विशेषावधारणमेव विशदयति । यो हीत्यादिना ॥ स्वव्यापारस्तु मृतशब्दादिः। यथांनिर्गातो यथोक्तैर्विशेषणैरुपलक्ष्यं रूपमनतिक्रम्य वर्त्तमानः प्राणस्तोऽविशेष-

भा० तस्मात् पारिशेष्याद्गार्ग्याभिप्रेतस्याभोक्तृत्वं। प्राणो भोक्तृस्वभावश्चेद्भुञ्जीतैव स्वं विषयं प्राप्तं। न हि दग्धृस्वभावः प्रकाशयितृस्वभावः सन् वह्निस्तृणोलपादि दाह्यं स्वविषयं प्राप्तं न दहति प्रकाश्यञ्च न प्रकाशयति। न चेत् दहति प्रकाशयति च प्राप्तं स्वं विषयं नासौ वह्निर्दग्धा प्रकाशयिता चेति निश्चीयते। यथा ऽसौ प्राप्तशब्दादिविषयोपलब्धृस्वभावश्चेद्गार्ग्याभिप्रेतः प्राणो बृहन् पाण्डरवासा इत्येवमादिशब्दं स्वं विषयमुपलभेत। यथा प्राप्तं तृणोलपादि वह्निर्दहेत् प्रकाशयेच्चाव्यभिचारेण तद्वत्। तस्मात्प्राप्तानां शब्दादीनामप्रतिबोधादभोक्तृस्वभाव इति निश्चीयते। न हि यस्य यः स्वभावो निश्चितः स तं व्यभिचरति कदाचिदपि। अतः सिद्धं प्राणस्याभोक्तृत्वं सम्बोधनार्थनामविशेषेण सम्बन्धाग्रहणादप्रतिबोध इति चेत्। स्यादेतत्। यथा बहुष्वासीनेषु स्वनाम-

---

आ० श्रवतः स्वापेऽवस्थानेऽपि तस्य तदा भोगाभावस्तत्र भोक्त्रन्तराभ्युपगमादित्याशङ्क्याह। न चेति॥ तस्यैव भोक्तृत्वे फलितमाह। तस्मादिति॥

अस्तु तस्य प्राणशब्दश्रवणं तत्राह। न चेति॥ परिशेषसिद्धमर्थमाह। तस्मादिति॥ प्राणस्याभोक्तृत्वं व्यतिरेकद्वारा साधयति। भोक्तृस्वभावश्चेदिति॥ न च भुङ्क्ते तस्मादभोक्तेति शेषः॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति। न हीत्यादिना॥ उपनयं नास्पष्टयां॥ विपक्षे दोषमाह। न चेदिति॥ उक्तमर्थं सङ्क्षिप्याह। यथेत्यादिना॥ प्राणस्याभोक्तृत्वमुक्तमुपसंहरति। तस्मादिति॥ यद्यपि प्राणः स्वापे शब्दादीन् न प्रतिबुध्यते तथापि भोक्तृस्वभावो भविष्यति नेत्याह। न हीति॥ सम्बोधनशब्दाश्रव-

भा॰ विशेषेण सम्बन्धाग्रहणान्नामयं सम्बोधयतीति शृण्वन्नपि सम्बोध्यमानो विशेषतो न प्रतिपद्येत । तथेमानि वृह-न्नित्येवमादीनि मम नामानीत्यग्रहीत् । सम्बन्धत्वात्प्राणो न गृह्णाति । सम्बोधनार्थं शब्दं न त्वविज्ञातत्वादेवेति चेत् । न । देवताभ्युपगमेऽग्रहणानुपपत्तेः । यस्य हि चन्द्राद्यभिमानिनी देवता ऽध्यात्मं प्राणो भोक्ता ऽभ्युप-गम्यते । तस्य तया संव्यवहाराय विशेषनाम्ना सम्बोधो ऽवश्यं गृहीतव्यो ऽन्यथाऽऽह्वानादिविषये संव्यवहारो ऽनुपपन्नः स्यात् । व्यतिरिक्तपक्षेऽप्यप्रतिपत्तेरयुक्तमिति चेत् । यस्य च प्राणव्यतिरिक्तो भोक्ता तस्यापि वृहन्नित्यादि-नामभिः सम्बोधने वृहत्त्वादिनाम्नां तदा तद्विषयत्वात् प्रतिपत्तिर्युक्ता । न च कदाचिदपि वृहत्त्वादिशब्दैः सम्बोधितः प्रतिपद्यमानो दृश्यते । तस्मात् अकारणम-

---

आ॰ नामतः शब्दार्थः ॥ तस्य स्वनामाग्रहणं सम्बन्धाग्रहणकृतं नाना-त्मत्वकृतमिति शङ्कते । सम्बोधनार्थेति ॥ शङ्कामेव विशदयति ॥ स्यादेतदित्यादिना ॥ देवतायाः सम्बन्धाग्रहणमयुक्तं सर्वज्ञ-त्वादित्युत्तरमाह । न देवतेति ॥ तदेव प्रपञ्चयति । यस्य हीत्यादिना ॥ तयेति ग्रहणकर्तृनिर्देशः । अवश्यमिति सूचि-तामनुपपत्तिमाह । अन्यथेति ॥ आदिपदेन यागस्तुतिनम-स्कारादिर्गृह्यते । संव्यवहारोऽभिमताभोगप्रसादादिः ॥ सम्बोधन-नामाग्रहणकृतानात्मदोषस्य त्वदिष्टात्मनोऽपि तुल्य इति शङ्कते । व्यतिरिक्तेति ॥ सङ्गृहीतं चोद्यं विवृणोति । यस्य चेति ॥ तदा सुषुप्तिदशायां प्रतिपत्तिर्युक्तेति सम्बन्धः । तद्विषयत्वादित्यति-रिक्तात्मविषयत्वादिति यावत् । अस्त्येवातिरिक्तस्यात्मनः सम्बो-धनमवश्यमिति चेन्नेत्याह । न कदाचिदिति ॥ त्वदिष्टात्मनः

भा॰ भोक्तृत्वे सम्बोधनाप्रतिपत्तिरिति चेत्। न। तद्वतस्ताव-न्मात्राभिमानानुपपत्तेः। यस्य प्राणव्यतिरिक्तो भोक्ता स प्राणादिकरणवान् प्राणी तस्य न प्राणदेवतामात्रेऽभि-मानो यथा हस्ते। तस्मात् प्राणनामसम्बोधने कृत्स्नाभि-मानिनो युक्तैवाप्रतिपत्तिः॥ न तु प्राणस्यासाधारण-नामसंयोगे देवतात्मत्वानभिमानाच्चात्मनः स्वनाम-प्रयोगे ऽप्यप्रतिपत्तिदर्शनादयुक्तमिति चेत्। सुषुप्तस्य यल्लौकिकं देवदत्तादि नाम तेनापि सम्बोध्यमानः कदाचिन्न प्रतिपद्यते सुषुप्तस्तथा भोक्तापि सन्प्राणो न प्रतिपद्यत इति चेत्। न। आत्मप्राणयोः सुप्ता-सुप्तत्वविशेषोपपत्तेः। सुप्तत्वात्प्राणग्रस्ततयोपरतकरण आत्मा स्वं नाम प्रयुज्यमानमपि न प्रतिपद्यते।

---

आ॰ सम्बोधनशब्दाप्रतिपत्तावपि भोक्तृत्वाङ्गीकारस्तच्छब्दार्थः। अतो भोक्तृत्वेऽपि प्राणस्येति शेषः। यथा हस्तः पादोऽङ्गुलिरित्यादि नामोक्तौ मैत्रो नोत्तिष्ठति। सर्व्वदेहाभिमानित्वेन तन्मात्रानभि-मानित्वादेव कार्य्यस्यात्मनः सर्व्वकार्य्यकरणाभिमानित्वादङ्गुलि-स्थानीयप्राणनाम्नो तदभावात्तन्नामाग्रहणं न त्वचेतनत्वादिति परिहरति॥ न तद्वत इति॥ तदेव स्फुटयति। यस्येति॥ प्राणमात्रे प्राणादिकरणवतोऽभिमानाभावे फलितमाह। तस्मादिति॥

चन्द्रस्यापि प्राणैकदेशत्वात्तन्नामभिः सम्बोधने कृत्स्नाभिमा-नी समुत्तिष्ठति। अत्राप्यङ्गुल्यादिदृष्टान्तोपपत्तेरित्याशङ्क्याह न त्विति॥ गोत्ववत्तस्य सर्व्ववस्तुषु समाप्तेरङ्गमिति सर्व्व-त्राभिमानसिद्धेर्बाधाबोधौ तुल्यावित्याशङ्क्याह। देवतेति॥ विशिष्टस्यात्मनो देवतायामात्मत्वाभिमानाभावादितरस्य च कूटस्थचिन्मात्रत्वेन तदयोगान्न तुल्यतेत्यर्थः॥ प्रकारान्तरेण तस्याभोक्तृत्वं वारयन्नाह। स्वनामेति॥ अयुक्तं प्राणेतरस्य

भा॰ न तु तदसुप्तस्य प्राणस्य भोक्तृत्वे उपरतकरणत्वं सम्बोधनाग्रहणं वा युक्तं। अप्रसिद्धनामभिः सम्बोधनमयुक्तमिति चेत्। सन्ति हि प्राणविषयाणि प्रसिद्धानि प्राणादिनामानि। तान्यपोह्याप्रसिद्धैर्बृहत्त्वादिनामभिः सम्बोधनमयुक्तं लौकिकन्यायापोहात्। तस्माद्भोक्तुरेव सतः प्राणस्याप्रतिपत्तिरिति चेन्न। देवताप्रत्याख्यानार्थत्वात्। केवलसम्बोधनमात्राप्रतिपत्त्यैवासुप्तस्याध्यात्मिकस्य प्राणस्याभोक्तृत्वे सिद्धे यच्चन्द्रदेवताविषयैर्नामभिः सम्बोधनं तच्चन्द्रदेवता प्राणोऽस्मिञ्छरीरे भोक्तेति गार्ग्यस्य विशेषप्रतिपत्तिनिराकरणार्थं। न हि तल्लौकिकनाम्ना सम्बोधने शक्यं कर्तुं। प्राण-

---

आ॰ भोक्तृत्वमिति शेषः। तदेव विशदयति। सुषुप्तस्येति। विशेषं दर्शयन्नुत्तरमाह। नात्मेति। कार्याभीष्टात्मनः सुप्तत्वयुक्तं पक्षमाह। सुषुप्तत्वादिति। प्राणस्यापि संहृतकरणत्वात्स्वनामाग्रहणमित्याशङ्क्य तस्यासुप्तत्वकृतं वार्य्यं कथयति। न त्विति। न हि करणस्वामिनि व्याप्रियमाणे करणोपरमः सम्भवति। तस्य चानुपरतकरणस्य स्वनामाग्रहणमयुक्तमित्यर्थः। प्राणनामत्वेनाप्रसिद्धनामभिः सम्बोधनात्तदनुत्थानं नामात्मत्वादिति शङ्कते। अप्रसिद्धेति। तदेव स्पष्टयति। सन्ति हीति। प्रसिद्धमनूद्याप्रसिद्धं विधेयमिति लौकिको न्यायः। अप्रसिद्धसञ्ज्ञाभिः सम्बोधनस्यायुक्तत्वे फलितमाह। तस्मादिति। चन्द्रदेवताऽस्मिन्देहे कर्त्री भोक्त्री चात्मेति गार्ग्योऽभिप्रायनिषेधदेवतानामग्रहणस्य तात्पर्यात्सद्धेतोऽर्थवानिति परिहरति। न देवतेति। तदेव प्रपञ्चयति। केवलेति। प्राणादीनामपि सम्बोधनेऽपि तन्निराकरणं कर्तुं शक्यमित्याशङ्क्याह। न हीति। लौकिकनाम्नो देवताविषयत्वाभावादित्यर्थः। प्राणस्याभोक्तृत्वेऽपीन्द्रियाणां भोक्तृत्वमिति केचित्तान्प्रत्याह। प्राणेति। प्राणकरणत्वं चन्द्रदेवतानाम भोक्तृत्वेऽपि देव-

भा॰ प्रत्याख्यानेन प्राणग्रस्तत्वात्करणान्तराणां प्रवृत्त्यनुपपत्तेर्भोक्तृत्वाशङ्कानुपपत्तिः। देवतान्तराभावाच्च। नन्वतिष्ठा इत्याद्यात्मन्नीत्यन्तेन गुणवद्देवताभेदस्य दर्शितत्वादयुक्तमिति चेन्न। तस्य प्राण एवैकत्वाभ्युपगमात्। सर्व्वश्रुतिष्वरनाभिनिदर्शनेन सत्येन छन्नः प्राणो वा ऽमृतमिति च प्राणवाक्यस्यान्यस्यानभ्युपगमाच्चोक्तः। एष उ ह्येव सर्व्वे देवाः कतम एको देव इति प्राण इति च सर्व्वदेवानां प्राण एवैकत्वोपपादनाच्च॥

तथा करणभेदेष्वनाशङ्का। देहभेदेष्विव स्मृतिज्ञानेच्छादिप्रतिसन्धानानुपपत्तेः। न ह्यन्यदृष्टं अन्यः स्मरति जानातीच्छति प्रतिसन्दधाति वा तस्मान्न करणभेद-

---

आ॰ तान्तरमत्र भोक्तृ स्यादित्याशङ्क्याह। देवतान्तराभावाच्चेति॥ भोक्तृत्वाशङ्कानुपपत्तिरिति पूर्व्वेण सम्बन्धः। तत्रोपक्रमविरोधं शङ्कते। नन्विति। दर्शितत्वाद्देवतान्तराभावो नास्तीति शेषः॥ स्वतन्त्रो देवताभेदो नास्तीति समाधत्ते। न तस्येति॥ प्राणे देवताभेदस्यैक्ये युक्तिमाह। अरनाभीति॥ न देवतान्तरस्य भोक्तृत्वं गार्ग्यस्य स्वपक्षविरोधादितिशेषः। सर्व्वश्रुतिष्वित्युक्तं ताः सङ्क्षेपतो दर्शयति। एष इति॥ कति देवा याज्ञवल्क्येत्यादिना सङ्क्षेपविस्तराभ्यां सर्व्वेषां देवानां प्राणात्मन्येवैकत्वमुपपाद्यते। अतो न देवताभेदोऽस्तीत्याह। सर्व्वदेवानामिति॥ प्राणात्पृथग्भूतस्य देवस्यात्मातिरेके सत्यसत्त्वापत्तेश्च प्राणान्तर्भावः। सर्व्वदेवताभेदस्येति वक्तुं चशब्दः॥

करणानामभोक्तृत्वे हेत्वन्तरमाह॥ तथेति॥ देवताभेदेष्विवेति यावत्। अनाशङ्का भोक्तृत्वस्येति शेषः॥ तत्रोदाहरणान्तरमाह। देहभेदेष्विवेति॥ न हि हस्तादिषु प्रत्येकं भोक्तृत्वं शङ्क्यते। तथा श्रोत्रनेत्रादिष्वपि न भोक्तृत्वाशङ्का युक्ता॥ तेषु

भा॰ विषये भोक्तृत्वाशक्ता विज्ञानमात्रविषया वा कदाचिदप्युपपद्यते। ननु सङ्घात एवास्तु भोक्ता किं व्यतिरिक्तकल्पनयेति। नापेषणे विशेषदर्शनात्। यदि हि प्राणशरीरं सङ्घातमात्रो भोक्ता स्यात्सङ्घातमात्राविशेषात्तदा पिष्टस्यानापिष्टस्य च प्रतिबोधे विशेषो न स्यात्। सङ्घातव्यतिरिक्ते तु पुनर्भोक्तरि सङ्घातसम्बन्धविशेषानेकत्वात्पेषणापेषणकृतवेदनायाः सुखदुःखमोहमध्यमाधमोत्तमकर्म्मफलभेदोपपत्तेश्च विशेषो युक्तो न तु

---

आ॰ स्मृतिरूपज्ञानस्येच्छाया योऽहं रूपमद्राक्षं स शब्दं शृणोमीत्यादिप्रतिसन्धानस्य चायोगादित्यर्थः॥ अनुपपत्तिमेव स्फुटयति॥ न हीति॥ क्षणिकविज्ञानस्य निराश्रयस्य भोक्तृत्वाशङ्कापि प्रतिसन्धानासम्भवादेव प्रत्युक्तेत्याह। विज्ञानेति॥ प्राणादीनामनात्मत्वमुक्त्वा स्थूलदेहस्य तदुक्तुं पूर्वपक्षयति। नन्विति॥ सङ्घातो भूतचतुष्टयसमाहारः स्थूलो देह इति यावत्। गौरोऽहम्पश्यामीत्यादि प्रत्यक्षेण तस्यात्मत्वदृष्टेरिति भावः॥ प्रमाणाभावादतिरिक्तकल्पना न युक्तेत्याह। किं व्यतिरिक्तेति॥ सङ्घातस्यात्मत्वं दूषयति। नापेषण इति॥ विशेषदर्शनं व्यतिरेकद्वारा विशदयति। यदि हीति॥ प्राणेन सहितं स्थूलं शरीरमेव सङ्घातस्तन्मात्रो यदि भोक्ता स्यादिति योजना। त्वत्पक्षेऽपि कथं पेषणापेषणयोस्तत्याने विशेषः स्यादित्याशङ्क्याह। सङ्घातेति॥ तस्य सङ्घातेन सम्बन्धविशेषात्स्वकर्मारभ्यत्वादात्मात्मीयत्वस्वप्राप्यपरिपाल्यत्वादयस्तेषामनेकत्वात्पेषणापेषणयोरिन्द्रियोद्भवाभिभवकृतवेदनायाः स्फुटत्वास्फुटत्वात्मको विशेषो युक्तः। सुखदुःखमोहानामुत्तममध्यमाधमकर्म्मफलानां कर्मोद्भवाभिभवकृतविशेषसम्भवाच्च यथोक्तो विशेषः सम्भवतीत्यर्थः॥ परपक्षेऽपि तथैव विशेषः स्यादित्याशङ्क्याह। न त्विति॥ न हि तत्र स्वकर्मारभ्यत्वादयः सम्बन्धविशेषाः कर्म्मफलभेदो वा युज्यते।

भा॰ सङ्घातमात्रे सम्बन्धकर्म्मफलभेदानुपपत्तेर्विशेषो युक्तः ॥

तथा शब्दादिपटुमान्द्यादिकृतश्च । अस्ति चायं विशेषो यस्मात्स्पर्शमात्रेणाप्रतिबुध्यमानं पुरुषं सुप्तं पाणिना पेषमापिष्यापिष्य बोधयाञ्चकाराजातशत्रुः । तस्माच्च आपेषणेन प्रतिबुबुधे ज्वलन्निव स्फुरन्निव कुतश्चिदागत इव पिण्डश्च पूर्व्वविपरीतं बोधचेष्टाकारविशेषादिमत्त्वेनापादयन् सोऽन्योऽस्ति गार्ग्याभिमतब्रह्मभ्यो व्यतिरिक्त इति सिद्धं । संहतत्वाच्च पारार्थ्योपपत्तिः प्राणस्य ॥ गृहस्य स्तम्भादिवच्छरीरस्यान्तरुपष्टम्भकः प्राणः शरीरादिभिः संहत इत्यवोचाम । आरनेमिवच्च नाभिस्थानीय एतस्मिन्सर्व्वमिति च । तस्माद्गृहादिवत्स्वावयवसमुदायजातीयव्यतिरिक्तार्थं संहन्यत इत्येवमव-

---

आ॰ सङ्घातवादिनाऽतीन्द्रियकर्म्माऽनङ्गीकारात् । अतः सङ्घातमात्रे भोक्तरि प्रतिबोधे विशेषासिद्धिरित्यर्थः ॥

शब्दस्पर्शादीनां पटुत्वमतिपटुत्वं मान्द्यमतिमान्द्यमित्येवमादिना कृतो विशेषो बोधे दृश्यते । सोऽपि सङ्घातवादे न सिध्यतीत्यभिप्रायेणाह । तथेति ॥ अयुक्त इति यावत् । चकारो विशेषानुकर्षार्थः । मा तर्हि प्रतिबोधे विशेषो भूदित्याशङ्क्याह । अस्ति चेति ॥ विशेषदर्शनफलमाह । तस्मादिति ॥ आदिशब्देन गुणादि गृह्यते । अन्यः सङ्घातादिति शेषः । देहादेरनात्मत्वमुक्त्वा प्राणस्यानात्मत्वे हेत्वन्तरमाह । संहतत्वाच्चेति ॥ हेतुं साधयति । गृहस्येति ॥ यथा नेमिरराश्च मिथः संहन्यन्ते तथैव प्राणस्य संहतिरित्याह । अरनेमिवच्चेति ॥ किञ्च प्राणे नाभिस्थानीये सर्व्वमर्पितमिति श्रूयते तद्युक्तं तस्य संहतत्वमित्याह । नाभीति ॥ संहतत्वफलमाह । तस्मादिति ॥ प्राणस्य गृहादिवत्पारार्थ्येऽपि संहतशेषित्वमेषितव्यं गृहादे-

भा० गच्छेमहि । यथाऽस्मत्कुशलपकादिमुखावयवानां स्वात्म-जन्मोपचयापचयविनाशनामाकृतिकार्य्यधर्म्मनिरपेक्षलब्ध-सत्तादितद्विषयद्रष्टृश्रोतृमन्तृविज्ञातृत्वं दृष्टामन्यामहे तत्संहतस्य च । तथा प्राणाद्यवयवानां तत्संहतस्य च स्वात्मजन्मोपचयापचयविनाशनामाकृतिकार्य्यधर्म्मनिरपे-क्षलब्धसत्तादितद्विषयद्रष्टृश्रोतृमन्तृविज्ञातृत्वं भवितु-मर्हति । देवताचेतनावत्त्वे समत्वात् गुणाभावाऽनुपगम इति चेत् । प्राणस्य विशिष्टैर्नामभिरामन्त्रणदर्शनाच्चेतनावत्त्व-मभ्युपगतं । चेतनावत्त्वे च पारार्थ्योपगमः समत्वादनुपपन्न इति चेन्न । निरुपाधिकस्य केवलस्य विजिज्ञापयिषितत्वा-त्क्रियाकारकफलात्मकता ह्यात्मनो नामरूपोपाधिज-निता विद्याध्यारोपिता । तन्निमित्तो लोकस्य क्रियाका-

---

आ० कथं दर्शनादित्याशङ्क्याह । जन्मेति । स्वात्मना जन्मादीनां जन्म-चोपचयश्चापचयश्च विनाशश्च नाम चाकृतिश्च कार्यं चेत्येते धर्म्मा-स्तन्निरपेक्षतया लब्धा सत्ता स्फुरणं येन स च तेषु जन्मादिषु विषयेषु द्रष्टा च श्रोता च मन्ता च विज्ञाता च तद्भावं तेषां तत्संहतस्य च दृष्ट्वा प्राणादीनामपि तथात्वं भवितुमर्हतीति मन्यामहे इति सम्बन्धः । प्राणादिः स्वातिरिक्तद्रष्टृशेषः । संहत-त्वात्कुड्यादिवदित्यनुमानात्तस्यां तत्प्रतीतौ च प्राणादिविक्रियान-पेक्षतया सिद्धो द्रष्टा निर्विकारो युक्तस्तस्य विकारवत्त्वे हेत्व-भावादिति भावः । प्राणदेवतापारार्थ्यानुमानं व्याप्त्यन्तरविरुद्ध-मिति शङ्कते । देवतेति ॥

प्राणदेवतायाश्चेतनत्वमेव कथमभ्युपगतं तत्राह । प्राणस्येति ॥ तथापि प्रकृतेऽनुमाने कथं व्याप्त्यन्तरविरोधस्तत्राह । चेतनावत्त्वे चेति । यो येन समः स तच्छेषो न भवति । यथा दीपो दीपान्तरेण तुल्यो न तच्छेष इति व्याप्तिविरोधः स्यादित्यर्थः ।

भा॰ रकफलाभिमानलक्षणः संसारः स निरुपाधिकात्मस्वरूपविद्यया निवर्त्तयितव्य इति तत्स्वरूपविजिज्ञापयिषयोपनिषदारम्भो ब्रह्म ते ब्रवाणि नैतावता विदितं भवतीति चोपक्रम्यैतावदरे खल्वमृतत्वमिति चोपसंहारान्न चातोऽन्यदन्तराले विवक्षितमुक्तं वास्ति। तस्मादनवसरः सम्लाद्गुणभावानुपगम इति चोद्यस्य विशेषवतो हि सोपाधिकस्य संव्यवहारार्थो गुणगुणिभावो न विपरीतस्य निरुपाख्यो हि विजिज्ञापयिषितः सर्व्वसामुपनिषदि स एष नेति नेतीत्युपसंहारात्। तस्मादादित्यादिब्रह्मभ्य एतेभ्यो विज्ञानमयेभ्यो विलक्षणोऽन्योऽस्ति विज्ञानमय इत्येतत् सिद्धं॥

---

आ॰ नायं विरोधः समाधातव्यः। शेषशेषिभावस्यानाप्रतिपाद्यत्वादिति परिहरति। न निरुपाधिकस्येति॥ तदेव स्फुटयति। क्रियेत्यादिना॥ उपनिषदारम्भो निरुपाधिकं स्वरूपं ज्ञापयितुमित्यत्र गमकमाह। ब्रह्मेति॥ द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्चेत्यादिदर्शनादस्यामुपनिषदि सोपाधिकमपि ब्रह्म विवक्षितमित्याशङ्क्याह। न चेति॥ द्विलवादस्य कल्पितविषयवत्त्वान्नेतीति निर्विशेषवस्तुसमर्पणादतोऽन्यदार्त्तमिति चोक्तेरत्र निरूपाधिकमेव ब्रह्म प्रतिपाद्यमिति भावः। शेषशेषिभावस्याप्रतिपाद्यत्वे फलितमाह। तस्मादिति॥ किमर्थं तर्हि शेषशेषिभावस्तत्र तत्रोक्तस्तत्राह। विशेषवतो हीति। सोपाधिकस्य शेषशेषिभावो विवक्षितस्तत्र तत्र च स्वामिभृत्यन्यायेन विशेषसम्भवादसिद्धं समत्वमित्यर्थः। न च विपरीतस्य निरुपाधिकस्य शेषशेषित्वमस्तीत्यत्र हेतुमाह। निरुपाख्यो हीति॥ शेषशेषित्वाद्यशेषविशेषशून्य इत्यर्थः। पाक्षिकपेषवाक्यविचारार्थं सङ्क्षिप्योपसंहरति॥ आदित्यादीति॥

उ॰ स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष

---

भा॰ स एवमजातशत्रुर्व्यतिरिक्तात्मास्तित्वं प्रतिपाद्य गार्ग्यमुवाच । यत्र यस्मिन्काल एष विज्ञानमयः पुरुष एतत्स्वपनं सुप्तोऽभूत्प्राक्पाणिपेषप्रतिबोधाद्विज्ञानं विज्ञायतेऽनेनेत्यन्तःकरणं बुद्धिरुच्यते तन्मयस्तत्प्रायो विज्ञानमयः । किं पुनस्तत्प्रायत्वं तस्मिन्नुपलभ्यत्वं तेन चोपलभ्यत्वमुपलब्धृत्वं च । कथं पुनर्मयटोऽनेकार्थत्वे प्रायार्थतैवावगम्यते । स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय इत्येवमादौ प्रायार्थ एव प्रयोगदर्शनात्परविज्ञानविकारत्वस्याप्रसिद्धत्वाद्य एष विज्ञानमय इति च प्रसिद्धवदनुवादादवयवोपमार्थयोश्चासम्भवात्पारिशेष्यात्प्रायार्थतैव । तस्मात्सङ्कल्पविकल्पाद्यात्मकमन्तःकरणं तन्मय इत्येतत्पुरुषः

---

आ॰ उक्तमनूद्यानन्तरग्रन्थमवतार्य व्याचष्टे । स एवमित्यादिना ॥ एतत् स्वपनं यथा भवति तथेति यावत् । यत्रेत्युक्तं कालं विशिनष्टि । प्रागिति ॥ तदा क्वाभूदिति सम्बन्धः । विज्ञानमय इत्यत्र विज्ञानं परं ब्रह्म तद्विकारो जीवस्तेन विकारार्थे मयडिति केचित्तन्निराकरोति । विज्ञानमिति ॥ अन्तःकरणप्रायत्वमात्मनो न प्रकल्प्यते तस्यासङ्गस्य तेनासम्बन्धादित्याक्षिपति । किं पुनरिति ॥ असङ्गस्याप्याविद्यं बुद्ध्यादिसम्बन्धमुपेत्य परिहरति । तस्मिन्निति ॥ तत्साक्षित्वाच्च तत्प्रायत्वमित्याह । उपलब्धृत्वञ्चेति ॥ नियामकाभावं शङ्कित्वा परिहरति । कथमित्यादिना ॥ एकस्मिन्नेव वाक्ये पृथिवीमय इत्यादौ प्रायार्थत्वोपलम्भाद्विज्ञानमय इत्यत्रापि तदर्थमेव मयटो निश्चितमित्युक्तं इदानीं जीवस्य परमात्मरूपविज्ञानविकारस्य श्रुतिस्मृत्योरप्रसिद्धत्वाच्च प्रायार्थत्वमेवेत्याह । परेति ॥ अप्रसिद्धमपि विज्ञान-

उ० विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागा-
दिति तदु ह न मेने गार्ग्यः ॥१६॥

---

भा० पुरि शयनात्क्वैष तदाऽभूदिति प्रश्नः। स्वभावविजिज्ञाप-
यिषया प्राक् प्रतिबोधात्क्रियाकारकफलविपरीतस्वभाव
आत्मेति कार्य्याभावेन दिदर्शयिषितं। न हि प्राक् प्रति-
बोधात्कर्म्मादि कार्य्यं सुखादि किञ्च न गृह्यते। तस्माद-
कर्म्मप्रयुक्तत्वात्। तथा स्वाभाव्यमेवात्मनोऽवगम्यते यस्मि-
न्स्वाभाव्येऽभूत्। यतश्च स्वाभाव्यात्प्रच्युतः संसारी स्वभाव-
विलक्षण इत्येतद्विवक्षया पृच्छति गार्ग्यं प्रतिभानरहितं
बुद्धिव्युत्पादनाय क्वैष तदाऽभूत्कुत एतदागादित्येतदुभयं
गार्ग्येणैव प्रष्टव्यमासीत्। तथापि गार्ग्येण न पृष्टमिति

---

आ० विकारत्वं श्रुतिवशादिष्यतामित्याशङ्क्याह। य एष इति ॥ य एष
विज्ञानमय इत्यत्र विज्ञानमयस्यैषेति प्रसिद्धवदनुवादादप्र-
सिद्धविज्ञानविकारत्वं सर्व्वनामश्रुतिविरुद्धमित्यर्थः। जीवो
ब्रह्मावयवस्तत्सदृशो वा तदर्थो मयडित्याशङ्क्याह। अवयवेति ॥
ब्रह्मणो निरवयवत्वश्रुतेस्तस्यैव जीवरूपेण प्रवेशश्रवणाच्च प्रकृते
वाक्ये मयटोऽवयवाद्यर्थायोगान्निर्विषयत्वासम्भवाच्च पारिशेष्या-
त्स्वार्थिकत्वं प्रायार्थत्वेन तस्य प्रत्येतव्येत्यर्थः। विज्ञानमयपदार्थ-
मुपसंहरति। तस्मादिति ॥ यथेत्यादि व्याख्याय वाक्यशेषमव-
तार्य्य तात्पर्य्यमाह। क्वैष इति ॥ स्वरूपज्ञापनार्थं प्रश्नप्रवृत्ति-
रित्येतत्प्रकटयति। प्रागिति ॥ कार्य्याभावेनेत्युक्तं व्यनक्ति।
न हीति ॥ तस्मादित्यस्यार्थमाह। अकर्म्मप्रयुक्तत्वादिति ॥ किं तथा
स्वाभाव्यमिति तदाह। यस्मिन्निति ॥ द्वितीयप्रश्नार्थं प्रक्षिपति।
यतश्चेति ॥ उक्तेऽर्थे प्रश्नद्वयमुत्थापयति। एतदिति ॥ तथा स्वाभा-
व्यमेवेति सम्बन्धः। एतदित्यधिकरणमपादानञ्च गृह्यते। किमिति

उ॰ स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन

---

भा॰ नेदानीऽजातशत्रुर्बोधयितव्य एवेति प्रवर्त्तते। ज्ञपयिष्याम्येवेति प्रतिज्ञातत्वात्। एवमसौ व्युत्थाप्यमानोऽपि गार्ग्यो यत्रैव आत्माभूत्प्राक् प्रतिबोधाद्यतश्चैतदागमनमागादुभयं न बुध्येदेव वक्तुं वा प्रष्टुं वा गार्ग्योऽहं न मेने न ज्ञातवान्॥ १६॥

स होवाचाजातशत्रुर्विवक्षितार्थसमर्पणाय यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदागादिति यद्दृष्टवान् तत्कृष्णमाणं यत्रैष एतत्सुप्तोऽभूत्तदा तस्मिन्काल एषां वागादीनां प्राणानां विज्ञानेनान्तःकरणगताभिव्यक्तविशेषविज्ञानोपाधिस्वभावजनितेनादाय विज्ञानं वागादीनां स्वस्वविषयगतसा-

---

आ॰ तं प्रश्नद्वयं पृच्छते। स्वकीया प्रतिज्ञा निर्व्यूढमित्यभिप्रेत्याह। बुद्धीति॥ ननु शिष्यत्वाद्गार्ग्येणैव प्रष्टव्यं। स चेदज्ञत्वान्न पृच्छति तर्हि राज्ञस्तस्मिन्नौदासीन्यमेव युक्तं तत्राह। इत्येतदुभयमिति॥ तदु हेत्यादि व्याकरोति। एवमिति॥ एतदागमनं यथा भवति तथेति यावत्। तत्र क्रियापदयोर्यथाक्रमं वक्तुं प्रष्टुं चेत्याभ्यां सम्बन्धः॥ १६॥

कूटस्थचिदेकरसोऽयमात्मा तत्र क्रियाकारकफलव्यवहारो वस्तुतो नास्तीति विवक्षितोऽर्थस्तस्य प्रकटीकरणार्थं प्रस्तुतं प्रश्नद्वयमनुवदति। यत्रेति॥ उपाधिरन्तःकरणं तस्य स्वभावस्तदुपादानमज्ञानं तेन जनितमन्तःकरणगतमभिव्यक्तं विशेषविज्ञानं चैतन्याभासलक्षणं तेन करणेनेत्यर्थः। वागादीनां स्वं स्वं विषयगतं प्रतिनियतं प्रकाशनं विज्ञानसामर्थ्यमित्यर्थः।

उ॰ विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मि-
ञ्छेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति

भा॰ मध्यं गृहीत्वा य एषोऽन्तर्मध्ये हृदये हृदयस्याकाशो य आकाशशब्देन पर एव स आत्मोच्यते तस्मिन्स्व आत्मन्याकाशे शेते स्वाभाविकेऽसांसारिके। न केवल आकाश एव श्रुत्यन्तरसामर्थ्यात्। सता सोम्य तदा सम्पन्नो भवतीति लिङ्गोपाधिसम्बन्धकृतं विशेषात्मस्वरूपमुत्सृज्या-विशेषे स्वाभाविक आत्मन्येव केवले वर्त्तत इत्यभिप्रायः। यदा शरीरेन्द्रियाध्यक्षतामुत्सृजति तदाऽसौ स्वात्मनि वर्त्तत इति कथमवगम्यते नामप्रसिद्ध्या। कासौ नामप्रसि-द्धिरित्याह। तानि वागादिविज्ञानानि यदा यस्मिन्काले गृह्णात्यादत्तेऽथ तदाह एतत्पुरुषः स्वपिति नाम एतन्ना-मास्य पुरुषस्य तदा प्रसिद्धं भवति गौणमेवास्य नाम भवति स्वमेवात्मानमपीत्यपि गच्छतीति स्वपितीत्युच्यते सत्यं

आ॰ य एषोऽन्तरिति प्रतीकमादाय व्याचष्टे। मध्य इति ॥ आकाश-शब्दस्य भूताकाशविषयत्वमाशङ्क्याकाशोऽर्थान्तरत्वादिव्यपदेशा-दिति न्यायेनाह। आकाशशब्देनेति ॥ सद्रूपे ब्रह्मण्येव सुषुप्तस्य शयनं भूताकाशे तु न भवतीत्यत्र छान्दोग्यश्रुतिमाह। श्रुत्यन्तरेति ॥ कीदृगत्र शयनं विवक्षितमित्याशङ्क्याह। लिङ्गेति ॥ स्वापाधिकारे स्वाभाविकत्वं अविद्यामात्रसंमिश्रितत्वं सन्ततिं सम्पाद्य न विदुरित्यादि श्रुतेरिति द्रष्टव्यं। तानि यदेत्या-दिवाक्यमाकाङ्क्षापूर्व्वकमादत्ते। यदेत्यादिना ॥ विज्ञानानि तत्सा-धनानीत्येतत्। पुरुष इति प्रथमा षष्ठ्यर्थेऽतो वक्ष्यति। अस्य पुरु-षस्येति ॥ अन्वर्थादिनाम्नो विशेषमाह। गौणमेवेति ॥ गौणत्वं

उ॰ नाम तद्गृहीत एव प्राणो भवति गृहीता वाक् गृहीतञ्चक्षुर्गृहीतꣳ श्रोत्रं गृहीतं मनः ॥ १७ ॥

स यत्रैतत्स्वप्न्यया चरति ते हास्य लोकास्तदु-

---

भा॰ स्वपितीति। नाम प्रसिद्धमात्मनः संसारधर्म्मविलक्षणं रूपमवगम्यते। न त्वत्र युक्तिरस्तीत्यागमस्त्वाह। तत्तत्र स्वापकाले गृहीत एव प्राणो भवति। प्राण इति घ्राणेन्द्रियं वागादिप्रकरणाद्वागादिसम्बन्धे हि सति तदुपाधित्वादस्य संसारधर्म्मित्वं लक्ष्यते। वागादयस्तूपसंहृता एव। तदा तेन कथं गृहीता वाक् गृहीतञ्चक्षुर्गृहीतं श्रोत्रं गृहीतं मनस्तस्मादुपसंहृतेषु वागादिषु क्रियाकारकफलात्मताभावात्स्वात्मस्थ एवात्मा भवतीत्यवगम्यते ॥ १७ ॥

नन्‌ दर्शनलक्षणायां स्वप्नावस्थायां कार्य्यकरणवियोगेऽपि संसारधर्म्मित्वमस्य दृश्यते। यथा च जागरिते सुखी दुःखी बन्धुवियुक्तः शोचति मुह्यते च। तस्माच्छोक

---

आ॰ व्युत्पादयति ॥ स्वमेवेति । नाम्नोऽर्थव्यभिचारस्यापि दृष्टत्वान्न तदर्थात्स्वापे स्वरूपेऽवस्थानमिति प्रज्ञामनूद्य तद्गृहीत एवेत्यादि वाक्यमुत्थाप्य व्याचष्टे। सत्यमित्यादिना ॥ का पुनरात्मनः स्वापावस्था यामसंसारिस्वरूपेऽवस्थानमित्यत्र युक्तिरित्याशङ्का भवति तत्राह । वागादीति ॥ तदा सुषुप्त्यवस्थायां तेनात्मनोऽचैतन्याभासेन हेतुनेत्यर्थः। स्वापे करणोपसंहारं विवृणोति। कथमित्यादिना ॥ तदुपसंहारफलं कथयति। तस्मादिति ॥ १७ ॥

अन्वयव्यतिरेकाभ्यां वागाद्युपाधिकमात्मनः संसारित्वमुक्तं तत्र व्यतिरेकासिद्धिमाशङ्कते । नन्विति ॥ व्यतिरेकासिद्धौ फलितमाह। तस्मादिति ॥ स्वप्नस्य रज्जुसर्पवन्मिथ्यात्वेन वस्तुधर्म्मत्वा-

उ० तेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चा-
वचं निगच्छति

---

भा० मोहधर्म्मवानेवायं । नास्य शोकमोहादयः सुखदुःखाद-
यश्च कार्य्यकरणसंयोगजनितभ्रान्त्यध्यारोपिता इति न
मृषात्वात्स प्रकृत आत्मा । यत्र यस्मिन्काले दर्शनलक्षणया
स्वप्न्यया स्वप्नवृत्त्या चरति वर्त्तते तदा ते ह अस्य लोकाः
कर्म्मफलानि । के ते । तत्तत्र उत अपि महाराज इव भवति ।
सोऽयं महाराजत्वमिवास्य लोको न महाराजत्वमेव
जागरित इव । तथा महाब्राह्मण इव । उत इव अपि
उच्चावचं उच्चञ्च देवताद्यवचञ्च तिर्य्यगादि उच्चमिवावच-
मिव च निगच्छति मृषैव महाराजत्वादयोऽस्य लोका
इव शब्दप्रयोगाद्व्यभिचारदर्शनाच्च । तस्मान्न बन्धुवियोगा-
दिजनितशोकमोहादिभिः स्वप्ने सम्बध्यत एव । ननु च
यथा जागरिते जाग्रत्कालाव्यभिचारिणो लोका एवं
स्वप्नेऽपि तेऽस्य महाराजत्वादयो लोकाः स्वप्नकालभा-
विनः स्वप्नकालाव्यभिचारिण आत्मभूता एव । न त्वविद्या-

---

आ० भावादात्मनः संसारित्वमित्युत्तरमाह । न मृषात्वादिति ॥ तदुप-
पादयन्नादौ स यत्रेत्यादीन्यक्षराणि योजयति । स प्रकृत इत्या-
दिना ॥ यथात्र स्वप्नस्वभावो निर्दिश्यते न तस्य मिथ्यात्वं कथ्यते
तत्राह । मृषैवेति ॥ स्वप्ने दृष्टानां महाराजत्वादीनां जाग्रद-
नुवृत्तिराहित्यं व्यभिचारदर्शनं । स्वप्नस्य मिथ्यात्वे सिद्धमर्थ-
माह । तस्मादिति ॥ विमता लोका न मिथ्या तत्कालाव्यभि-
चारित्वाज्जाग्रल्लोकवदिति शङ्कते । ननु यथेति ॥ साध्यवैकल्यं

उ० स यथा महाराजो जानपदान् गृहीत्वा स्वे जन-

---

भा० ध्यारोपिता इति। ननु च जाग्रत्कार्य्यकरणात्मत्वं देवतात्मत्वञ्चाविद्याध्यारोपितं न परमार्थ इति व्यतिरिक्तविज्ञानमयात्मप्रदर्शनेन दर्शितं। तत्कथं दृष्टान्तत्वेन स्वप्नलोकस्य सृत इवोज्जीविष्यन्प्रादुर्भविष्यति। सत्यं। विज्ञानमये व्यतिरिक्तं कार्य्यकरणदेवतात्मत्वप्रदर्शनमविद्याध्यारोपितं शुक्तिकायामिव रजतत्वदर्शनमित्येतत्सिद्धाति व्यतिरिक्तात्मास्तित्वप्रदर्शनन्यायेनैव। न तु तद्विशुद्धिपरतयेव न्याय उक्त इति। स्वप्नमपि दृष्टान्तो जाग्रत्कार्य्यकरणदेवतात्मत्वदर्शनलक्षणं पुनरुच्यते। सर्व्वो हि न्यायः किञ्चिद्विशेषमपेक्षमाणोऽपुनरुक्तीभवति।

न तावत्स्वप्ने अनुभूतमहाराजत्वादयो लोका आत्म-

---

आ० वक्तुं सिद्धान्ती पाश्चिपेषवाक्योक्तं स्मारयति। ननु चेति॥ जाग्रल्लोकस्य मिथ्यात्वे पतितमाह। तत्कथमिति॥ प्रादुर्भावे जाग्रल्लोकस्य कर्तृत्वं प्राकरणिकमेष्टव्यं। तत्र पूर्व्ववादी दृष्टान्तं साधयति। सत्यमित्यादिना॥ अन्वयव्यतिरेकाख्यो न्यायः। देहद्वयस्य आत्मनश्च विवेकमात्रं प्रागुक्तं। ननु प्राधान्येनात्मनः शुद्धिरुक्तेति विभागमङ्गीकृत्य वस्तुतोऽसत्त्वमपि दृष्टान्तं सन्तं कृत्वा तेन स्वप्नसत्त्वमाशङ्क्य तन्निरासेनात्यन्तिकी शुद्धिरात्मनः स्वप्नवाक्येनोच्यते। तथा जाग्रतोऽपि तथा मिथ्यात्वादात्मैकरसः शुद्धः स्यादित्याशयवानाह। इत्यतश्चापीति॥ पाश्चिपेषवाक्ये जाग्रन्मिथ्यात्वोक्त्यर्थादुक्ता शुद्धिरत्रापि सैवोच्यते चेत्पुनरुक्तिरित्याशङ्क्याह। सर्व्वो हीति॥

यत्किञ्चित्सामान्यात्पौनरुक्त्यं सर्व्वत्र तुल्यं स्ववान्तरभेदादपौनरुक्त्यं। प्रकृतेऽपि समं पूर्व्वत्र शुद्धिद्वारस्यार्थिकत्वादिह

उ॰ पदे यथाकामं परिवर्त्तेतैव-मे-वैष एतत्प्राणान्

---

भा॰ भूता आत्मनोऽन्यस्य जाग्रत्प्रतिबिम्बभूतस्य लोकस्य दर्श-
नाद्महाराज एव तावद्यसन्नास्ति प्रकृतिषु पर्य्यङ्के
शयानः स्वप्नान्पश्यन्नुपसंहृतकरणः पुनरुपगतप्रकृतिं महा-
राजमिवात्मानं जागरित इव पश्यति। यथागतं भुञ्जा-
नमिव च भोगान्। न च तस्य महाराजस्य पर्य्यङ्के शयाना-
द्वितीयो ऽन्यः प्रकृत्युपेतो विषये पर्य्यटन्नहनि लोके प्रसि-
द्धोऽस्ति यमसौ सुप्तः पश्यति। न चोपसंहृतकरणस्य रूपा-
दिमतो दर्शनमुपपद्यते। न च देहे देहान्तरस्य तत्तुल्यस्य
सम्भवोऽस्ति। देहस्थस्यैव हि स्वप्नप्रदर्शनं। ननु पर्य्यङ्के शयानः
पथि प्रवृत्तमात्मानं पश्यति न वहिः स्वप्नान् पश्यति
इत्येतदाह। स महाराजो जानपदान् जनपदे भवान्
राजोपकरणभूतान् भृत्यानन्यांश्च गृहीत्वोपादाय स्व
आत्मीय एव जयादिनोपार्ज्जिते जनपदे यथाकामं यो
यः कामोऽस्य यथाकाममिच्छातो यथा परिवर्त्ततेत्यर्थः।

---

आ॰ वाचनिकत्वादिति भावः। जाग्रद्दृष्टान्तेन स्वप्नसत्यत्वचोद्यस-
म्भवादाचलस्य समाधिरिति पूर्व्ववादिमुखेनोक्ता समाधिमधुना
कथयति। न तावदिति॥ विमता न वस्तुरात्मनो धर्म्मा वा
तद्दृश्यत्वाद्घटादिवदित्यर्थः। किञ्च स्वप्नदृष्टानां जाग्रद्दृष्टादर्थान्तर-
त्वेन दृष्टेर्मिथ्यात्वमित्याह। महाराज इति॥ तेषां जाग्रद्दृष्टा-
दर्थान्तरत्वमसिद्धमित्याशङ्क्याह। न चेति॥ प्रमाणसामग्र्यभा-
वाच्च स्वप्नस्य मिथ्यात्वमित्याह। न चेति॥ योग्यदेशाभावाच्च तन्मि-
थ्यात्वमित्याह। न चेति॥ देहाद्बहिरेव स्वप्नदृश्यशरीराद्योग्यदेश

उ॰ गृहीत्वा स्वे शरीरे यथाकामं परिवर्त्तते ॥१८॥

---

भा॰ एवमेव एष विज्ञानमय एतदिति क्रियाविशेषणं। प्राणान् गृहीत्वा जागरितस्थानेभ्यः उपसंहृत्य स्वे शरीरे स्व एव देहे न बहिर्यथाकामं परिवर्त्तते। कामकर्म्मभ्यामुद्भासिता पूर्व्वानुभूतवस्तुसदृशी वासना अनुभवतीत्यर्थः। तस्मात्स्वप्ने मृषाध्यारोपिता एवात्मभूतत्वेन लोका अविद्यमाना एव सन्तस्तथा जागरितेऽपीति प्रत्येतव्यं। तस्माद्विशुद्धोऽक्रियाकारकफलात्मको विज्ञानमय इत्येतत्सिद्धं यस्माद्दृश्यन्ते द्रष्टुर्विषयभूताः क्रियाकारकफलात्मकाः कार्य्यकरणलक्षणा लौकिकास्तथा स्वप्नेऽपि। तस्मादन्योऽसौ दृश्येभ्यः स्वप्नजागरितलोकेभ्यो द्रष्टा विज्ञानमयो विशुद्धः॥ १८॥

---

आ॰- सिद्धिरित्याशङ्क्याह। देहस्येति॥ एतदेव साधयितुं प्रश्नयति। नन्विति॥ तत्र स यथेत्यादिवाक्यमुत्तरत्वेनावतार्य्य व्याचष्टे। न बहिरित्यादिना॥ यथाकामं तं तमनतिक्रम्येत्यर्थः। एतदिति क्रियाया ग्रहणस्य विशेषणमेतद्ग्रहणं यथा तथेत्यर्थः। परिवर्त्तनमेव विवृणोति। कामेति॥ योग्यदेशाभावे सिद्धे सिद्धमर्थं दर्शयति। तस्मादिति। स्वप्नस्य मिथ्यात्वे तद्दृष्टान्तत्वेन जडत्वादिहेतुना जागरितस्यापि तथात्वं शक्यं निश्चेतुमित्याह। तथेति॥ द्वयोर्मिथ्यात्वे प्रतीचो विशुद्धिः सिद्धेत्युपसंहरति। तस्मादिति॥ अक्रियाकारकफलात्मक इति विशेषणं समर्थयते। यस्मादिति॥ जागरितं दृष्टान्तीकृत्य दार्ष्टान्तिकमाह। तथेति॥ अदृष्टप्रभावे फलितमाह। तस्मादिति॥ अन्यत्वपक्षं कथयति। विशुद्ध इति॥ १८॥

उ॰ अथ यदा सुषुप्तो भवति यदा न कस्यचन

---

भा॰ दर्शनवृत्तौ स्वप्ने वासनाराशेर्दृश्यत्वादतद्धर्मतेति विशुद्धताऽवगता। आत्मनस्तत्र यथाकामं परिवर्त्तत इति कामवशात्परिवर्त्तनमुक्तं॥ द्रष्टृदृश्यसम्बन्धस्यास्य स्वाभाविक इत्यशुद्धता शङ्क्यतेऽतस्तद्विशुद्ध्यर्थमाह। अथ यदा सुषुप्तो भवति यदा स्वप्न्यया चरति तदाप्ययं विशुद्ध एवाथ पुनर्यदा हित्वा दर्शनवृत्तिं स्वप्नं यदा यस्मिन्काले सुषुप्तः सुष्ठु सुप्तः सं प्रसादं स्वाभाव्यं गतो भवति सलिलमिवान्यसम्बन्धकालुष्यं हित्वा स्वाभाव्येन प्रसीदति। कदा सुषुप्तो भवति। यदा यस्मिन्काले न कस्यचन न किञ्चनेत्यर्थो वेद विजानाति कस्यचन वा शब्दादेः सम्बन्धिवस्त्वन्तरं किञ्चन न वेदेत्यध्याहार्य्यं। पूर्व्वन्तु न्याय्यं सुप्ते तु विशेषज्ञानाभावस्य विवक्षितत्वादेवं तावद्विशेषविज्ञानाभावे सुषुप्तो भवतीत्युक्तं। केन पुनः क्रमेण सुषुप्तो भवतीत्युच्यते हिता नाम हितफलप्राप्तिनिमित्तत्वान्नाड्यो हिता उच्यन्ते हिता इत्येवं नाम्न्यो नाड्यः शिरो देहस्यान्नरसविपरिणामभूता-

---

आ॰ वृत्तानुवादपूर्व्वकं उत्तरश्रुतिनिरस्यामाशङ्कामाह। दर्शनवृत्तावित्यादिना। तत्रेति स्वप्नोक्तिः। कामादिसम्बन्धस्वकारार्थः। निवर्त्त्यं शङ्कासद्भावान्निवर्त्तकान्तरश्रुतिं प्रतिजानीते। अत इति। स्वप्नेऽपि शुद्धिश्चेत्ता किं सुषुप्तिग्रहणेनेत्याशङ्क्याह। यदेति। गतो भवति तदा सुतरामस्य शुद्धिः सिध्यतीति शेषः॥ तमेकं सुषुप्तिकालं प्रश्नपूर्व्वकं प्रकटयति। कदेति॥ विकल्पं व्यावर्त्तयति। पूर्व्वन्त्विति। वृत्तमनूद्य प्रश्नपूर्व्वकं सुषुप्तिगतिप्रकारं दर्शयति।

उ॰ वेद हिता नाम नाड्यो द्वा-सप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य

भा॰ तास्य द्वासप्ततिसहस्राणि द्वे सहस्रेऽधिके सप्ततिश्च सहस्राणि ता द्वासप्ततिसहस्राणि नाडीनां हृदयाद्धृदयनाम मांसपिण्डस्तस्मान्मांसपिण्डात्पुण्डरीकाकारात् पुरीततं हृदयपरिवेष्टनमाचक्षते तदुपलक्षितं शरीरमिह पुरीतच्छब्देनाभिप्रेतं पुरीततमभिप्रतिष्ठन्त इति शरीरं कृत्स्नं व्याप्नुवन्त्योऽश्वत्थपर्णराजय इव बहिर्मुखाः प्रवृत्ता इत्यर्थः ।

तत्र बुद्धेरन्तःकरणस्य हृदयं स्थानं तत्र बुद्धितन्त्राणि चेतराणि बाह्यानि करणानि तेन बुद्धिः कर्मवशाच्छ्रोत्रादीनि ताभिर्नाडीभिर्मत्स्यजालवत्कर्णशष्कुल्यादिस्थानेभ्यः प्रसारयति प्रसार्य्य चाधितिष्ठति जागरितकाले तां विज्ञानमयोऽभिव्यक्तस्वात्मचैतन्यावभासतया व्याप्नोति सङ्कोचनकाले च तस्या अनुसङ्कुचति। सोऽस्य विज्ञानम-

आ॰ एवं तावदिति ॥ हितमन्नप्राप्तिनिमित्तत्वान्नाड्यो हिता उच्यन्ते ॥ तासां देहसम्बन्धानामन्वयव्यतिरेकाभ्यामन्नरसविकारत्वमाह । अन्नेति ॥ तासामेव मध्यमसङ्ख्यां कथयति । तास्येति ॥ तासाञ्च हृदयसम्बन्धिनीनां ततो निर्गत्य देहव्याप्त्या बहिर्मुखत्वमाह हृदयादिति ॥ ताभिरित्यादि व्याकर्तुं भूमिकां करोति। तत्रेति ।

शरीरं समन्यर्थः । शरीरे करणानां बुद्धितन्त्रत्वे किं स्यात्तदाह । तेनेति ॥ तथापि जीवस्य किमायातमित्याशङ्क्याह । तां विज्ञानमय इति ॥ भोगशब्दो जागरविषयः॥ बुद्धिविकासमनु-

उ० पुरीतति शेते स यथा कुमारो वा महाराजो

भा० यस्य स्वापो जाग्रद्विक्षेपानुभवो भोगो बुद्ध्युपाधिस्वभावानुविधायी हि सः। चन्द्रादिप्रतिविम्ब इव जलाद्यनुविधायी। तस्मात्तस्या बुद्धेर्जाग्रद्विषया यास्ताभिस्ताभिर्नाडीभिः प्रत्यवसर्पणमनुप्रत्यवसृप्य पुरीतति शरीरे शेते तिष्ठति तप्तमिव लोहपिण्डमविशेषेण संव्याप्याग्निवच्छरीरं संव्याप्य वर्त्तत इत्यर्थः। स्वाभाविक एव स्वात्मनि वर्त्तमानोऽपि कर्म्मानुगतबुद्ध्यनुवृत्तित्वात्पुरीतति शेत इत्युच्यते। न हि सुषुप्तिकाले शरीरसम्बन्धोऽस्ति। तीर्णो हि तदा सर्व्वाञ्छोकान्हृदयस्येति वक्ष्यति। सर्व्वसंसारदुःखवियुक्तेयमवस्थेत्यत्र दृष्टान्तः। स यथा कुमारो वात्यन्तबालो वा महाराजो वात्यन्तवश्यप्रकृतिर्यथोक्तकृन्महाब्राह्मणो वात्यन्तपरिपक्वविद्याविनयसम्पन्नोऽतिघ्नीमतिशयेन दुःखं हन्तीत्यतिघ्नी आनन्दस्यावस्था सुखावस्था तां प्राप्य गत्वा शयीतावतिष्ठेत। एषाञ्च कुमारादीनां स्वभावस्थानां सुखं निरतिशयं प्रसिद्धं लोके विक्रियमाणानां हि तेषां दुःखं न

आ० भवन्नात्मा जागर्त्तीत्युच्यते॥ तत्सङ्कोचमनुभवन्स्वपितीत्यत्र हेतुमाह। बुद्धीति॥ बुद्ध्यानुविधायित्वं परामृश्य ताभिरित्यादि व्याचष्टे। तस्मादिति॥ प्रत्यवसर्पणं व्यावर्त्तनं॥ पदार्थमुक्त्वा वाक्यार्थमाह। तप्तमिवेति॥ कर्म्मत्वे देहस्य कर्त्तृत्वे चात्मनो दृष्टान्तद्वयं हृदयाकाशे शयुषि शेते॥ विज्ञानात्मेत्युक्त्वा पुरीतति शयनमाचक्षाणस्य पूर्व्वापरविरोधः स्यादित्याशङ्क्याह। स्वाभाविक इति॥ औपचारिकमिदं वचनमित्यत्र हेतुमाह। न हीति॥ इयमवस्थेति

उ० वा महाब्राह्मणो वातिघ्नीमानन्दस्य गत्वा शयी तैवमेवैष एतच्छेते ॥१९॥

---

भा० स्वभावस्तेन तेषां स्वाभाविक्यवस्था दृष्टान्तत्वेनोपादीयते प्रसिद्धत्वात्। न तेषां स्वाप एवाभिप्रेतः। स्वापस्य दार्ष्टान्तिकत्वेन विवक्षितत्वाद्विशेषाभावाच्च। विशेषे हि सति दृष्टान्तदार्ष्टान्तिकभेदः स्यात्तस्मान्न तेषां स्वापो दृष्टान्तः। एवमेव यथायं दृष्टान्त एष विज्ञानमय एतच्छयनं शेत इत्येतच्छब्दः क्रियाविशेषणार्थः। एवमयं स्वाभाविके स्व आत्मनि सर्व्वसंसारधर्म्मातीतो वर्त्तते स्वापकाल इति ॥ १९ ॥

क्वैष तदाभूदित्यस्य प्रश्नस्य प्रतिवचनमुक्तमनेन च प्रश्ननिर्णयेन विज्ञानमयस्य स्वभावतो विशुद्धिरसंसारित्वञ्चोक्तं। कुत एतदागादित्यस्य प्रश्नस्यापाकरणार्थ आरम्भः। ननु यस्मिन् ग्रामे नगरे वा यो भवति सोऽन्यत्र गच्छं-

---

आ० प्रकृता सुषुप्तिरुच्यते। उक्तेषु दृष्टान्तेषु विवक्षितमंशं दर्शयति एषामिति। दुःखमपि तेषां प्रसिद्धमित्याशङ्क्याह। विक्रियमाणानां चेति। कुमारादिस्वापस्यैव दृष्टान्तत्वं किं न स्यादित्याशङ्क्याह। न तेषामिति। स्वापस्य दृष्टान्तत्वमस्मत्स्वापस्य दार्ष्टान्तिकत्वमिति विभागमाशङ्क्याह। विशेषाभावादिति। क्वैष तदाभूदिति प्रश्नस्योत्तरमुपपादितमुपसंहरति। एवमिति ॥ १९ ॥

स यथेत्यादेः सङ्गतिं वक्तुं वृत्तं सङ्कीर्त्तयति। क्वैष इति। किं पुनराद्यप्रश्ननिर्णयेन फलमिति त्वंपदार्थशुद्धिरित्याह। अनेनेति। शुद्धिद्वारा ब्रह्मत्वञ्च तस्योक्तमाह। असंसारित्वञ्चेति। उत्तरग्रन्थस्य तात्पर्य्यमाह। कुत इति। पूर्व्वेणोत्तरस्य गता-

भा॰ स्तत एव ग्रामान्नगराद्वा गच्छति नान्यतः । तथा सति क्वैष तदाभूदित्येतावानेवास्तु प्रश्नो यत्राभूत्तत एवागमनं प्रसिद्धं स्यान्नान्यत इति । कुत एतदागादिति प्रश्नो निरर्थक एव किं श्रुतिरुपालभ्यते भवता न किं तर्हि द्वितीयस्य प्रश्नस्यार्थान्तरं श्रोतुमिच्छाम्यत आनर्थक्यं चोदयामि । एवन्तर्हि कुत इत्यपादानार्थता न गृह्यतेऽपादानार्थत्वे हि पुनरुक्तता नान्यार्थत्वेऽस्तु तर्हि निमित्तार्थः प्रश्नः कुत एतदागात्किं निमित्तमिहागमनमिति । न निमित्तार्थतापि प्रतिवचनवैरूप्यादात्मनश्च सर्व्वस्य जगतोऽग्निविस्फुलिङ्गादिवदुत्पत्तिः प्रतिवचने श्रूयते । न हि विस्फुलिङ्गानां विद्रवणेऽग्निर्निमित्तमपादानमेव तु सः । तथा परमात्मा विज्ञानमयस्यात्मनोऽपादानत्वेन श्रूयतेऽस्मादात्मन इत्येतस्मिन्वाक्ये । तस्मात्प्रतिवचने वैरूप्यात्कुत इति प्रश्नस्य निमि-

---

आ॰ र्थत्वं शङ्कते । नन्विति ॥ स्थित्यवधेरेव निर्धारितत्वादगत्यवधेर्निर्द्दिधारयिषया प्रश्ने प्रतिवचनं सावकाशमित्याशङ्क्याह । तथा सतीति ॥ अपौरुषेयी श्रुतिरशेषदोषशून्यत्वादनतिशङ्कनीयेति सिद्धान्ती गूढाभिसन्धिराह । किं श्रुतिरिति ॥ न श्रुतिराक्षिप्यते निर्दोषत्वादिति पूर्व्ववाद्याह । नेति ॥ श्रुतेरनापेक्षत्वे त्वदीयश्चोद्यं निरवकाशमित्याह । किन्तर्हीति ॥ तस्य सावकाशत्वं पूर्व्ववादी साधयति । द्वितीयस्येति ॥ पूर्व्ववादिन्यपादानादर्थान्तरे पञ्चम्याः शुश्रूषमाणे सत्येकदेशी ब्रवीति । एवं तर्हीति ॥ कथमन्यार्थत्वं तदाह । अस्त्विति ॥ तर्हि तस्यामपादानार्थत्वेन पुनरुक्तत्वावस्थायामित्यर्थः एकदेशिनं पूर्व्ववादी दूषयति नेति ॥ अपादानार्थतावदित्यपेरर्थः ॥ तदेव स्फुटयति । आत्मनश्चेति ॥ जगतः सर्व्वस्य चेतनस्याचेतनस्य चेति वक्तुं च शब्दः । तर्हि

भा० न्तार्थता न शक्यते वर्णयितुं। नन्वपादानपक्षेऽपि पुनरुक्ततादोषः स्थित एव। नैष दोषः। प्रश्नाभ्यामात्मनि क्रियाकारकफलात्मतापोहस्य विवक्षितत्वात्। इह हि विद्याऽविद्याविषयावुपन्यस्तौ । आत्मेत्येवोपासीत आत्मानमेवावेत् आत्मानमेव लोकमुपासीतेति विद्याविषयस्तथाऽविद्याविषयश्च पाङ्क्तं कर्म्म तत्फलञ्चान्नत्रयं नामरूपकर्म्मात्मकमिति। तत्राविद्याविषये वक्तव्यं सर्व्वमुक्तं । विद्याविषयस्त्वात्मा केवल उपन्यस्तो निर्णीतः ।

तन्निर्णयाय च ब्रह्म ते ब्रवाणीति प्रक्रान्तं। ज्ञपयिष्यामीति च। अतस्तद्ब्रह्मविद्याविषयभूतं ज्ञापयितव्यं याथात्म्यतः। तस्य च याथात्म्यं क्रियाकारकफलभेदशून्यमत्यन्तविशुद्धमद्वैतमित्येतद्विवक्षितं। अतस्तदनुरूपौ प्रश्नावुत्थाप्येते श्रुत्या क्वैष तदाभूत्कुत एतदागादिति। तत्र यत्र भवति तदधिकरणं यद्भवति तदधिकर्त्तव्यं तयोश्चाधि-

आ० भवत्यपादानार्थां पञ्चमीत्याशङ्क्य पूर्व्ववादी पूर्व्वोक्तं स्मारयति। नन्विति॥ सर्व्वा विद्या तत्त्वा निर्मुक्तं प्रत्यगद्वयं ब्रह्म प्रश्नद्वयव्याजेन प्रतिपिपादयिषितमिति न पुनरुक्तिरिति सिद्धान्ती स्वाभिसन्धिमुद्घाटयति । नैष दोष इति ॥ यथोक्तं वस्तुप्रश्नाभ्यां विवक्षितमिति कुतो ज्ञानमित्याशङ्क्य तदुक्तं वार्त्तीयमर्थमनुवदति। इह हीति॥

विद्याविषयनिर्णयस्य कर्त्तव्यत्वमत्र न प्रतिभातीत्याशङ्क्याह तन्निर्णयाय चेति॥ अन्यथा प्रक्रमभङ्गः स्यादिति भावः।किं तद्याथातथ्यं तदाह। तस्य चेति॥ कथं यथोक्तयाथात्म्यव्याख्यानोपयोगित्वं प्रश्नयोरित्याशङ्क्य तयोः श्रौतमर्थमाह। तत्रेति॥ प्रश्नप्रवृत्तिमुक्त्वा प्रतिवचनप्रवृत्तिमाह। सेति॥ निवर्त्तयितव्येति तत्प्रवृ-

उ० स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा

भा० करणाधिकर्त्तव्ययोर्भेदो दृष्टो लोके । तथा यत आगच्छति तदपादानं। य आगच्छति स कर्त्ता। तस्मादन्यो दृष्टस्तथात्मा क्वाप्यभूदन्यस्मिन्नन्यः। कुतश्चिदागादन्यस्मादन्यः। केनचिद्भिन्नेन साधनान्तरेणेत्येवं लोकवत्प्राप्ता बुद्धिः सा प्रतिवचनेन निवर्त्तयितव्येति । नायमात्मान्यो ऽन्यत्राभूदन्यो वान्यस्मादागतः साधनान्तरं वात्मन्यस्ति। किं तर्हि स्वात्मन्येवाभूत्स्वमात्मानमपीतो भवति सता सोम्य तदा सम्पन्नो भवति प्राज्ञेनात्मना संपरिष्वक्तः पर आत्मनि संप्रतिष्ठत इत्यादिश्रुतिभ्योऽत एव नान्योऽन्यस्मादागच्छति। तच्छ्रुत्यैव प्रदर्श्यतेऽस्मादात्मन इत्यात्मव्यतिरेकेण वस्त्वन्तराभावात् । न ह्यस्ति प्राणाद्यात्मव्यतिरिक्तं वस्त्वन्तरं न प्राणादेस्तत एव निष्पत्तेः । तत्कथमित्युच्यते तत्र दृष्टान्तः स यथा लोके ऊर्णनाभिः ऊर्णनाभिर्लूताकीट एक एव प्रसिद्धः सन्स्वात्मा

आ० त्तिरिति शेषः। सम्प्रतिपत्तिवचनयोस्तात्पर्यमाह। नायमिति॥ स्वात्मन्येवाभूदित्यत्र प्रमाणमाह। स्वात्मानमिति॥ सुषुप्तौ स्वात्मव्यवस्थितिरतः शब्दार्थः प्रबोधदशायामात्मन एवागमनापादानत्वमित्यत्र मानत्वेनानन्तरश्रुतिमुत्थापयति। तच्छ्रुत्यैवेति॥ स्थित्यागत्योरात्मन एवावधित्वमित्यत्रोपपत्तिमाह। आत्मेति॥ वस्त्वन्तराभावत्वस्यासिद्धिं शङ्कित्वा दूषयति। नन्वित्यादिना॥

क्रियावतो मृदादेर्घटाद्युत्पत्तिदर्शनाद्ब्रह्मणोऽक्रियात्वात्ततो न प्राणाद्युत्पत्तिरिति शङ्कते। तत्कथमिति॥ सृष्टेर्मायामयत्वमाश्रित्य श्रुत्या परिहरति। उच्यत इति॥ स्वात्मा प्रविभक्तोनेत्युक्तमन्वय-

उ॰ विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा

---

भा॰ प्रविभक्तेन तन्तुना उच्चरेदुद्गच्छेन्नचास्ति तस्योद्गमने स्वतोऽतिरिक्तं कारकान्तरं। यथा चैकरूपादेकस्मादग्नेः क्षुद्रा अल्पा विस्फुलिङ्गास्त्रुटयोऽग्न्यवयवा व्युच्चरन्ति विविधं नाना वोच्चरन्ति। यथेमौ दृष्टान्तौ कारकभेदाभावेऽपि प्रवृत्तिं दर्शयतः। प्राक्प्रवृत्तेश्च स्वभावत एकत्वमेवमेवास्मादात्मनो विज्ञानमयस्य प्राक्प्रतिबोधाद्यत्स्वरूपं तस्मादित्यर्थः। सर्व्वे प्राणा वागादयः सर्व्वे लोकाः सर्व्वाणि कर्म्मफलानि सर्व्वे देवाः प्राणलोकाधिष्ठातारोऽग्न्यादयः सर्व्वाणि भूतानि ब्रह्मादिस्तम्बपर्य्यन्तानि प्राणिजातानि सर्व्व एत आत्मन इत्यस्मिन्पाठे उपाधिसम्पर्कजनितप्रबुध्यमानविशेषात्मान इत्यर्थो व्युच्चरन्ति। यस्मादात्मनः स्थावरं जङ्गमं जगदिदमग्निविस्फुलिङ्गवद्व्युच्चरत्यनिशं यस्मिन्नेव च प्रलीयते जलबुद्बुदवद्यदात्मकं च वर्त्तते स्थितिकाले तस्यास्यात्मनो ब्रह्मण उपनिषत् उपसमीपं निगमयतीत्यभिधायकः शब्द

---

आ॰ व्यतिरेकद्वारा स्फोरयति। न चेति। असहायस्य कारणत्वे दृष्टान्तमुक्त्वा कूटस्थस्य तद्भावे दृष्टान्तमाह। यथा चेति। माध्यन्दिनश्रुतिमाश्रित्याह। सर्व्व एत इति। तस्येत्याद्यवतार्य्य व्याचष्टे। यस्मादित्यादिना। ननु प्रत्यग्भूतस्य ब्रह्मणो वाचकेषु शब्दान्तरे-

उ० वै सत्यं तेषामेष सत्यं ॥ २० ॥ चतुर्थस्य प्रथम ब्राह्मणं ॥ ० ॥

---

भा० उपनिषदित्युच्यते शास्त्रप्रामाण्यादेतच्छब्दगतो विशेषोऽवसीयते उपनिगमयितृत्वं नाम। कासावुपनिषदित्याह सत्यस्य सत्यमिति साधित्वा सर्व्वंच चोपनिषल्लौकिकार्थत्वाद्दुर्विज्ञेयार्थेति तदर्थमाचष्टे प्राणा वै सत्यं तेषामेष सत्यमिति एतस्यैव वाक्यस्य व्याख्यानायोत्तरं ब्राह्मणद्वयं भविष्यति ॥ २० ॥

भवतु तावदुपनिषद्व्याख्यानायोत्तरं ब्राह्मणद्वयं। तस्योपनिषदित्युक्तं तत्र न जानीमः। किं प्रकृतस्यात्मनो विज्ञानमयस्य पाणिपेषणोत्थितस्य संसारिणः शब्दादिभुज इयमुपनिषदाहोस्विदसंसारिणः कस्यचित्किञ्चातः यदि संसारिणस्तदा संसार्य्येव विज्ञेयः। तद्विज्ञानादेव सर्व्वप्राप्तिः स एव ब्रह्मशब्दवाच्यस्तद्विद्यैव ब्रह्मविद्येति अथासंसारिणस्तदा तद्विषयाविद्या ब्रह्मविद्या। तस्माच्च

---

आ० स्त्वपि सत्यु किमित्येतच्छब्दविषयमादरवं क्रियते तत्राह। शास्त्रेति। ब्राह्मणवाक्यस्यार्थोऽपि कथं निश्चीयतामित्याह। एतस्येति ॥ २० ॥

उक्तमङ्गीकृत्य विशेषाद्बुद्ध्या संशयानो विचारं प्रस्तौति ॥ भवत्विति ॥ सन्दिग्धं सप्रयोजनञ्च विचार्य्यमिति न्यायेन सन्देहमुक्त्वा विचारप्रयोजकं प्रयोजनं पृच्छति । किञ्चात इति ॥ कस्मिन्पक्षे किं फलतीति पृष्टे प्रथमपक्षमनूद्य तस्मिन् फलमाह। यदीति ॥ यद्विज्ञानान्मुक्तिस्तस्यैव ज्ञेयता न जीवस्येत्याशङ्क्याह। तद्विज्ञानादिति ॥ ब्रह्मज्ञानादेव सा न संसारिज्ञानादित्याशङ्क्याह। स एवेति ॥ यद्विद्या ब्रह्मविद्या तदेव ब्रह्म न संसारी-

भा॰ ब्रह्मविज्ञानात्सर्व्वभावापत्तिः सर्व्वमेतच्छास्त्रप्रामाण्याद्भवि-
ष्यति। किन्त्वस्मिन्पक्ष आत्मेत्येवोपासीत आत्मानमेवावेत्
अहं ब्रह्मास्मीति परब्रह्मैकत्वप्रतिपादिकाः श्रुतयः कुप्ये-
रन्। संसारिणश्चान्यस्याभाव उपदेशानर्थक्यात्। यत एवंप-
ण्डितानामप्येतन्महामोहस्थानमनुक्तप्रतिवचनप्रश्नविषयं।
अतो यथाशक्त्या ब्रह्मविद्याप्रतिपादकवाक्येषु ब्रह्मविजिज्ञा-
सूनां बुद्धिव्युत्पादनाय विचारयिष्यामो न तावदसंसारी
परः पाणिपेषणप्रतिबोधिताच्छब्दादिभुजोऽवस्थान्तर-
विशिष्टादुत्पत्तिश्रुतेर्न प्रशासिताशनायावर्जितः परो
विद्यते। कस्माद्यस्माद्ब्रह्म ज्ञपयिष्यामीति प्रतिज्ञाय सुप्तं
पुरुषं पाणिपेषं बोधयित्वा तं शब्दादिभोक्तृत्वविशिष्टं
दर्शयित्वा तस्यैव स्वप्नद्वारेण सुषुप्ताख्यमवस्थान्तर-

---

आ॰ त्याशङ्क्याह। तद्विद्यैवेति॥ आद्यकल्पीयफलसमाप्ताविति शब्दः
पक्षान्तरमनूद्य तस्मिन् फलमाह। अथेत्यादिना॥ किमत्र
नियामकमित्याशङ्क्य ब्रह्म वा इदमित्यादि शास्त्रमित्याह। सर्व्व-
मेतदिति॥ ब्रह्मोपनिषत्पक्षे शास्त्रप्रामाण्यात्सर्व्वं समञ्जसञ्चेत्त-
थैवास्तु किं विचारेणेत्याशङ्क्य जीवब्रह्मणोर्भेदो वेति विकल्प्याद्ये
दोषमाह। किन्त्विति॥ अभेदपक्षं दूषयति। संसारिणश्चेति॥
उपदेशानर्थक्यादभेदपक्षानुपपत्तिरिति शेषः। विशेषानुपलम्भस्य
संशयहेतुत्वमनुवदति। यत इति॥ पक्षद्वये फलप्रतीतिं परा-
मृशति। एवमिति। अन्वयव्यतिरेककौशलं पाण्डित्वं। एतदित्यै-
कात्म्योक्तिः। महत्त्वं मोहस्य विचारोत्थनिर्णयं विनानुच्छिन्नत्वं।
तस्य स्थानमालम्बनं केनापि नोक्तं प्रतिवचनं यस्य किं तदैकात्म्य-
मिति प्रश्नस्य तस्य विषयभूतमिति यावत्। न हि येन केनचिदै-
कात्म्यं प्रष्टुं प्रतिवक्तुं वा शक्यते। श्रवणायापि बहुभिर्यो न
लभ्य इत्यादिश्रुतेरित्यर्थः। विचारप्रयोजनमुक्त्वा तत्कार्य्यं विचार-

भा० मुच्चीय तस्मादेवात्मनः सुषुप्त्यवस्थाविशिष्टादग्निविस्फु-लिङ्गोर्णनाभिदृष्टान्ताभ्यामुत्पत्तिं दर्शयति श्रुतिरेवा-स्मादित्यादिना।

न चान्यो जगदुत्पत्तिकारणमन्तराले श्रुतोऽस्ति विज्ञानमयस्यैव हि प्रकरणं। समानप्रकरणे च श्रुत्यन्तरे कौषीतकिनामादित्यादिपुरुषान्प्रस्तुत्य स होवाच यो वै बालाके एतेषां पुरुषाणां कर्त्ता यस्य चैतत्कर्म स वै वेदि-तव्य इति प्रबुद्धस्यैव विज्ञानमयस्य वेदितव्यतां दर्शयति नार्थान्तरस्य। तथा चात्मनस्तु कामाय सर्व्वं प्रियं भवती-त्युक्त्वा य एवात्मा प्रियः प्रसिद्धस्तस्यैव द्रष्टव्यश्रोतव्य-मन्तव्यनिदिध्यासितव्यतां दर्शयति। तथा च विद्योपन्या-सकाल आत्मेत्येवोपासीत तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रे-यस्तदात्मानमेवावेदहं ब्रह्मास्मीत्येवमादिवाक्यानामानु-लोम्यं स्यात्पराभावे। वक्ष्यति च आत्मानं चेद्विजानीयादय-

---

आ० मुपसंहरति। अत इति॥ संशयादिना विचारकार्य्यतामवतार्य्य पूर्व्वपक्षयति। न तावदिति॥ जगत्कर्त्ता हीश्वरो विवक्ष्यते। प्रकृते च सुषुप्तिविशिष्टाज्जीवाज्जगज्जन्मोच्यते। तस्मादीश्वरो जीवाद-तिरिक्तो नास्तीत्यर्थः॥ तदेव प्रपञ्चयति। नेत्यादिना॥

प्रकृतेऽपि जीवे जगत्कारणत्वमीश्वरस्यैवात्र श्रुतमित्याश-ङ्क्याह। न चेति॥ तत्र प्रकरणाविरोधहेतुमाह। विज्ञानेति॥ श्रुत्यन्तरवशादपि जीव एवात्र जगत्कर्त्तेत्याह। समानप्रकरणे चेति॥ श्रुत्यन्तरस्य च जीवविषयत्वं जगद्वाचित्वाधिकरणपूर्व्व-पक्षन्यायेन द्रष्टव्यं। वाक्यशेषवशादपि जीवस्यैव वेदितव्यत्वं। वाक्यान्वयाधिकरणपूर्व्वपक्षन्यायेन दर्शयति। तथा चेति॥ जीवा-तिरिक्तस्य परस्य वेदितव्यस्याभावे पूर्व्वोत्तरवाक्यानामानुकूल्यं

भा॰ मस्मीति पुरुष इति। सर्व्ववेदान्तेषु च प्रत्यगात्मवेद्यतैव प्रदर्श्यतेऽहमिति न वहिर्वेद्यता शब्दादिवत्प्रदर्श्यतेऽसौ ब्रह्मेति। तथा कौषीतकिनामेव न वाचं विजिज्ञासीत वक्तारं विद्यादित्यादिना वागादिकरणैर्व्यापृतस्य कर्त्तुरेव वेदितव्यतां दर्शयति।

अवस्थान्तरविशिष्टोऽसंसारीति चेद्यथापि स्याद्यो जागरिते शब्दादिभुगविज्ञानमयः स एव सुषुप्ताख्यमवस्थान्तरङ्गतोऽसंसारी परः प्रशासितान्यः स्यादिति चेन्नादृष्टत्वाद्न ह्येवंधर्म्मकः पदार्थो दृष्टोऽन्यत्र वैनाशिकसिद्धान्तान्न हि लोके गौस्तिष्ठन्नागच्छन्वा गौर्भवति शयानस्त्वश्वादिजात्यन्तरमिति न्यायाच्च। यद्धर्म्मको यः पदार्थः प्रमाणेनावगतो भवति स देशकालावस्थान्तरेष्वपि तद्धर्म्मक एव भवति। स चेत्तद्धर्म्मकत्वं व्यभिचरति सर्व्वः प्रमाणव्यवहारो लुप्येत। तथाच न्यायविदः साङ्ख्यमीमांसका-

---

आ॰ हेत्वन्तरमाह। तथाचेत्यादिना॥ इतश्च जीवस्यैव वेद्यतेत्याह सर्व्वेति॥ तत्रैव हेत्वन्तरमाह। तथेति॥ सर्वैर्वेदितव्य इत्यत्र न स्पष्टं जीवस्य वेदितव्यत्वमिह तु स्पष्टमिति भेदः स्वापावस्थाज्जीवाज्जाग्रज्जन्मश्रुतेस्तस्यैव वेद्यत्वदृष्टेश्च जगद्धेतुरीश्वरो वेदान्तवेद्यो नास्तीत्युक्ते सम्बरवादी चोदयति। अवस्थान्तरेति॥ चोद्यमेव विवृणोति। यथापीति। उक्तोपपत्तित्वेऽपीति यावत्॥ नावस्थाभेदाद्वस्तुभेदस्तथानुभवादपराद्धान्ताच्चेति परिहरति। नादृष्टत्वादिति॥ अवस्थाभेदाद्वस्तुभेदाभावं दृष्टान्तेन स्पष्टयति। नहीति॥ तत्रैव हेत्वन्तरमाह। न्यायाच्चेति॥ जागरादिविशिष्टस्यैव स्वापवैशिष्ट्यात्तस्य संसारित्वान्नेश्वरोऽन्योऽस्तीत्युक्ता तदभावे वादिसम्मतिमाह। तथाचेति। आदिशब्दो

भा॰ इयोऽसंसारिणोऽभावं युक्तिशतैः प्रतिपादयन्ति। संसारिणोऽपि जगदुत्पत्तिस्थितिलयक्रियाकर्त्तृत्वं विज्ञानस्याभावादयुक्तमिति चेद्यन्मन्यता प्रपञ्चेन स्थापितं भवता शब्दादिभुक् संसार्य्येवावस्थान्तरविशिष्टो जगत इह कर्त्तेति तदसत्। यतो जगदुत्पत्तिस्थितिलयक्रियाकर्तृत्वविज्ञानशक्तिसाधनाभावः सर्व्वलोकप्रत्यक्षः संसारिणः। स कथमस्मदादिः संसारी मनसापि चिन्तयितुमशक्यं पृथिव्यादिविन्यासविशिष्टं जगन्निर्मिनुयादतोऽयुक्तमिति चेन्न। शास्त्रात्तस्मात्त्वं संसारिण एवमेवास्मादात्मन इति जगदुत्पत्त्यादि दर्शयति। तस्मात्सर्व्वं श्रद्धेयमिति स्यादयमेकः पक्षः॥

यः सर्व्वज्ञः सर्व्वविद्योऽशनायापिपासे अत्येत्यसङ्गो न हि सज्यत एतस्य वा अक्षरस्य प्रशासने यः सर्व्वेषु भूतेषु तिष्ठन्नन्तर्याम्यमृतः स यस्मात् पुरुषान्निरुक्तात्यक्रामत्स वा एष महानज आत्मा एष सेतुर्विधरणः सर्व्वस्य वशी

---

आ॰ लोकायतादिसमस्तनिरीश्वरवादिसङ्ग्रहार्थः। युक्तिशतैरिति तस्य देहित्वेऽस्मदादितुल्यत्वात्तदभावे मुक्तवज्जगत्कर्तृत्वायोगाज्जीवानामेवादृष्टद्वारा तत्कर्तृत्वसम्भवात् स्वात्मनिष्ठित्वकरत्वमित्यादिभिरित्यर्थः। जीवो जगज्जन्मादिहेतुर्न भवति तत्रासमर्थत्वात्पाषाणवत्तच्च संसारित्वादिति शङ्कते। संसारिणोऽपीति। ईश्वरस्यैवेत्यपेरर्थः। अयुक्तं प्राणादिकर्तृत्वमिति शेषः॥ सङ्ग्रहवाक्यं विवृणोति। यन्मन्यतेत्यादिना॥ कालात्ययापदेशेन दूषयति। न शास्त्रादिति॥ निरीश्वरवादमुपसंहरति। तस्मादिति॥

सेश्वरवादमुत्थापयति। यः सर्व्वज्ञ इत्यादिना। तान्पृथिव्यादिष्वभिमानिनः पुरुषानुत्पाद्य योऽतिक्रान्तवान् स एष सर्व्वविशेषशून्य इति यावत्॥ उदाहृताः श्रुतयः स्मृतयश्च। न्यायस्तु

भा॰ सर्व्वेशानो य आत्मा अपहतपाप्मा विजरो विमृत्यु-स्तत्तेजोऽसृजत। आत्मा वा इदमेक एवाग्र आसीत्तत्र लिप्यते लोकदुःखेन बाह्य इत्यादिश्रुतिशतेभ्यः। स्मृतेश्चाहं सर्व्वस्य प्रभवो मत्तः सर्व्वं प्रवर्त्तत इति परोऽस्त्यसंसारी। श्रुतिस्मृतिन्यायेभ्यश्च स च कारणं जगतः। नन्वेवमेवास्मा-दात्मन इति संसारिण एवोत्पत्तिं दर्शयतीत्युक्तं। न च एषोऽन्तर्हृदय आकाश इति परस्य प्रकृतत्वादस्मादात्मन इति युक्तः परस्यैव परामर्शः। नैष तदाभूदित्यस्य प्रश्नस्य प्रतिवचनत्वेनाकाशशब्दवाच्यः पर आत्मोक्तो य एषो ऽन्तर्हृदय आकाशस्तस्मिञ्छेत इति यता सोम्य तदा सम्पन्नो भवत्यहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्ति प्राज्ञेनात्मना संपरिष्वक्तः परे आत्मनि सम्प्रतिष्ठित इत्यादिश्रुतिभ्य आकाशशब्दः पर आत्मेति निश्चीयते।

दहरोऽस्मिन्नन्तराकाश इति प्रस्तुत्य तस्मिन्नेवात्मश-ब्दप्रयोगाच्च प्रकृत एव पर आत्मा तस्माद्युक्तमेवमेवा-स्मादात्मन इति परमात्मन एव सृष्टिरिति संसारिणः

---

आ॰ विचित्रं कार्य्यं विशिष्टविज्ञानवत्पूर्व्वकं प्रासादादौ तथोपलम्भा-दित्यादिः। प्रकरणमनुरुध्य जीवस्य प्राणादिकारणत्वमुक्तं स्मारयति। नन्विति॥ नेदं जीवस्य प्रकरणमिति परिहरति। नेत्यादिना॥ प्रतिवचनस्याकाशशब्दस्य परविषयत्वमसिद्धमि-त्याशङ्क्याह। नैष इति॥

इतश्चाकाशशब्दस्य परमात्मविषयतेत्याह। दहरोऽस्मिन्निति॥ य आत्माऽपहतपाप्मा इत्यात्मशब्दप्रयोगः॥ प्रतिवचने परस्या-काशशब्दवाच्यत्वे फलितमाह। प्रकृत एवेति॥ तस्य प्रकृतत्वे

भा॰ सृष्टिस्थितिसंहारज्ञानसामर्थ्याभावं श्रावीश्राम । अत्र चात्मेत्येवोपासीतात्मानमेवावेदहं ब्रह्मास्मीति ब्रह्मविद्या प्रस्तुता । ब्रह्मविषयश्च ब्रह्मविज्ञानमिति ब्रह्म ते ब्रवाणीति ब्रह्म ज्ञपयिष्यामीति चारब्धं । तचेदानीमसंसारि ब्रह्म जगतः कारणमशनायाद्यतीतं नित्यमुक्तबुद्धशुद्धस्वभावं तद्विपरीतश्च संसारी । तस्मादहं ब्रह्मास्मीति न गृह्णीयात् । परं हि देवमीशानं निकृष्टः संसार्य्यात्मत्वेन स्मरन् कथं न दोषभाक् स्यात्तस्मान्नाहं ब्रह्मास्मीति युक्तं । तस्मात्पुष्पोदकाञ्जलिस्तुतिनमस्कारबल्युपहारस्वाध्यायध्यानयोगादिभिराराराधयिषेत । आराधनेन विदित्वा सर्व्वैश्विष्ट ब्रह्म भवति । न पुनरसंसारि ब्रह्म संसार्य्यात्मत्वेन चिन्तयेदग्निमिव शीतत्वेनाकाशमिव मूर्त्तिमत्त्वेन । ब्रह्मात्मत्वप्रतिपादकमपि शास्त्रमर्थवादो भविष्यति । सर्व्वतर्कशास्त्रलोकन्यायैश्चैवमविरोधः स्यान्न मन्त्रब्राह्मण-

---

आ॰ जल्पमर्थमाह । तस्मादिति । इतश्च परस्मादेव शास्त्रादिदृष्टिरित्याह । संसारिश्च इति । यन्महता प्रपञ्चेनेत्यादावितिशेषः । यत्तोश्वरो जगत्कारणं ब्रह्म तदेव जीवस्य स्वरूपं तस्येयमुपनिषदिति सिद्धान्तमाशङ्क्य दूषयति । अत्र चेति ॥ तृतीयोऽध्यायः समन्वर्थः ॥ का पुनः सा ब्रह्मविद्येति तत्राह । ब्रह्मविषयश्चेति । इति ब्रह्मविदां प्रसिद्धमिति शेषः ॥ चतुर्थे ब्रह्मविद्या प्रस्तुतेत्याह । ब्रह्मेति ॥ सत्यमस्ति प्रस्तुता ब्रह्मविद्या सा जीवविद्यापि भवति जीवब्रह्मणोरभेदादित्याशङ्क्याह । तचेति । ब्रह्मविद्यायां प्रस्तुतायामिति यावत् ॥ इदानीं न गृह्णीयादिति सम्बन्धः । मिथोविरुद्धत्वप्रतीत्यवस्थायामित्येतत् । अन्योऽन्यविरुद्धत्वं तच्छब्दार्थः ॥ विपक्षे दोषमाह । परमिति ॥ कथं तर्हीश्वरे मतिं

भा॰ वादेभ्यस्तस्यैव प्रवेशश्रवणात्पुरश्चक्र इति प्रकृत्य पुरः पुरुष आविशदिति। रूपं रूपम्प्रतिरूपो बभूव। तदस्य रूपं प्रतिचक्षणाय। सर्व्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन् यदास्ते इति सर्व्वशाखासु सहस्रशो मन्त्रवादाः स्रष्टिकर्त्तुरेवासंसारिणः शरीरप्रवेशं दर्शयन्ति। तथा ब्राह्मणवादास्तत्सृष्ट्वा तदेवानुप्राविशत् स य एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य एष सर्व्वेषु भूतेषु गूढ आत्मा न प्रकाशत इत्याद्याः।

सर्व्वश्रुतिषु ब्रह्मण्यात्मशब्दप्रयोगादात्मशब्दस्य च प्रत्यगात्माभिधायकत्वादेष सर्व्वभूतान्तरात्मेति च श्रुतेः परमात्मव्यतिरेकेण संसारिणोऽभावादेकमेवाद्वितीयं ब्रह्मैवेदमात्मैवेदमित्यादिश्रुतिभ्यो युक्तमेवाहं ब्रह्मास्मीत्येव धारयितुं। यद्येवं स्थितः शास्त्रार्थस्तदा परमा-

---

आ॰ कुर्य्यादित्याशङ्क्य स्वामित्वेनेत्याह। तस्मादिति॥ आदिपदं प्रदक्षिणादिसङ्ग्रहार्थं ऐकात्म्यशास्त्रादात्ममतिरेव ब्रह्मणि कर्त्तव्येत्याशङ्क्याह। न पुनरिति॥ का तर्हि शास्त्रगतिस्तत्राह। ब्रह्मेति॥ मुख्यार्थत्वे सम्भवे किमित्यर्थवादतेत्याशङ्क्याह। सर्व्वेति॥ संसारित्वासंसारित्वादिना मिथो विरुद्धयोर्जीवेश्वरयोः श्रौतोऽयमद्वैतानुपपत्तिर्न्यायो विज्ञानात्मविषयत्वं तटस्थेश्वरविषयत्वञ्चोपनिषदो निवारयन्परिहरति। नेत्यादिना॥ परस्यैव प्रवेशवादी मन्त्रब्राह्मणवादानुदाहरति। पुरश्च इत्यादिना॥

यत्त्वहं ब्रह्मेति न गृह्णीयादिति तत्राह। सर्व्वश्रुतिषु चेति॥ शास्त्रीयमप्येकत्वमनिष्टप्रसङ्गान्न स्वीकर्त्तव्यमिति शङ्कते। यद्येति॥ परस्य संसारित्वे तदसंसारित्वे च शास्त्रानर्थक्यं फलित-

भा॰ त्मनः संसारित्वं। तथा च सति शास्त्रानर्थक्यमसंसारित्वे चोपदेशानर्थक्यं स्पष्टो दोषः प्रापत्। यदि तावत्परमात्मा सर्व्वभूतान्तरात्मा सर्व्वशरीरसम्पर्कजनितदुःखान्यनुभवतीति स्पष्टं परस्य संसारित्वं प्राप्तं। तथा च परस्यासंसारित्वप्रतिपादिकाः श्रुतयः कुप्येरन्। स्मृतयश्च सर्व्वे च न्यायाः। अथ कथंचित्प्राणशरीरसम्बन्धजैर्दुःखैर्न सम्बध्यत इति शक्यं प्रतिपादयितुं। परमात्मनः साध्यपरिहार्य्याभावादुपदेशानर्थक्यदोषो न शक्यते निवारयितुं। अत्र केचित्परिहारमाचक्षते। परमात्मा न साक्षाद्भूतेष्वनुप्रविष्टः स्वेन रूपेण। किं तर्हि विकारभावमापन्नो विज्ञानात्मत्वं प्रतिपेदे। स च विज्ञानात्मा परस्मादन्योऽनन्यश्च॥

येनान्यस्तेन संसारित्वसम्बन्धी येनानन्यस्तेनाहं ब्रह्मेति धारणार्हः। एवं सर्व्वमविरुद्धं भविष्यतीति। तत्र

---

आ॰ माह। तथा चेति॥ संसारिणोऽनन्यस्यापि परस्यासंसारित्वे संसारित्वाभिमतोऽपि असंसारीत्युपदेशानर्थक्यं तं विनैव मुक्तिसिद्धिरिति दोषान्तरमाह। असंसारित्वे चेति॥ तत्राद्यं दोषं विवृणोति। यदि तावदिति। न लिप्यते लोकदुःखेन बाह्य इत्याद्याः श्रुतयः। यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यत इत्याद्याः स्मृतयः। कूटस्थासङ्गत्वादयो न्यायाः॥ द्वितीये दोषप्रसङ्गमापाद्य प्रकटयति। अथेत्यादिना॥ दोषद्वये स्वयूथ्यसमाधिमुत्थापयति। अत्रेति॥ कथं तर्हि तस्य कार्य्यप्रविष्टस्य जीवत्वं तत्राह। किन्तर्हीति॥ जीवस्य ब्रह्मविकारत्वेऽपि ततोऽभेदान्नाहं ब्रह्मेति धीः। अभेदे ब्रह्मणोऽपि संसारितेत्याशङ्क्याह। स चेति॥

तथापि कथं शङ्कितदोषाभावस्तत्राह। येनेति॥ एवमिति भिन्नाभिन्नत्वपरामर्शः॥ एकदेशिमतं निराकर्त्तुं विक-

भा॰ विज्ञानात्मनो विकारपक्षे एता गतयः पृथिवीद्रव्यवद-नेकद्रव्यसमाहारस्य सावयवस्य परमात्मनः एकदेशविप-रिणामो विज्ञानात्मा घटादिवत्पूर्व्वसंस्थानावस्थस्य वा परस्यैकदेशो विक्रियते । केशोषरादिवत्सर्व्व एव वा परः परिणमेत्क्षीरादिवत्तत्र समानजातीयानेकद्रव्यसमूहस्य कश्चिद्द्रव्यविशेषो विज्ञानात्मत्वं प्रतिपद्यते यदा तदा समा-नजातीयत्वादेकत्वमुपचरितमेव न तु परमार्थतः । तथा च सति सिद्धान्तविरोधः । अथ नित्यायुतसिद्धावयवानुगतो ऽवयवी पर आत्मा तस्य तदवस्थस्यैकदेशो विज्ञानात्मा संसारी । तदापि सर्व्वावयवानुगतत्वादवयविन एवावयव-

---

आ॰ स्ययति । तत्रेति । एता गतय इत्येते पक्षा वक्ष्यमाणाः सम्भवन्ति न गत्यन्तरमित्यर्थः । यथा पृथिवीपृष्ठस्थितद्रव्यमनेकावयवस-मुदायस्तथा भौतिकात्मकानेकद्रव्यसमुदायः सावयवः परमात्मा तस्यैकदेशश्चैतन्यबहुलस्तद्विकारो जीवः पृथिव्येकदेशमृद्विका-रघटशरावादीत्येकः कल्पः । यथा भूमेरूषरादिदेशो नखकेशादि वा पुरुषस्य विकारस्तथावयविनः परस्यैकदेशविकारो जीव इति द्वितीयः कल्पः । यथा क्षीरं सर्वं वा सर्व्वात्मना दधिरु-चकादिरूपेण परिणमते तथा कृत्स्न एव परो जीवभावेन परिणमेदिति कल्पान्तरं । तत्राद्यमनूद्य दूषयति । तत्रेत्यादिना । नानाद्रव्याणां समाहारो वा तानिवान्योन्यापेक्षाणि परस्तेन तस्यैक्यं स्यान्नहि बहूनां मुख्यमैक्यं समाहारस्य च समुदाया-परपर्य्यायस्य समुदायिभ्यो भेदाभेदाभ्यां दुर्भणत्वेन* कल्पित-त्वादित्यर्थः । तर्हि गत्यो मुख्यमैक्यं माभूत्तत्राह । तथाचेति । न हि तन्नानात्वं कस्यापि सम्मतमिति भावः ॥ द्वितीयमनूद्य निराकरोति । अथेत्यादिना । सर्व्वदैवापृथगवस्थितेष्ववयवेषु

---

* दुर्भरत्वेनेति पाठान्तरं ।

भा० ग० ा दोषो गुणो वेति विज्ञानात्मनः संसारित्वदोषेण पर एवात्मा सम्बध्यत इतीयमप्यनिष्टा कल्पना ॥

क्षीरवत्सर्व्वपरिणामपक्षे सर्व्वश्रुतिस्मृतिकोपः स चानिष्टो निष्कलं निष्क्रियं शान्तं दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यान्तरो ह्यजः आकाशवत् सर्व्वगतश्च नित्यः स वा एष महानज आत्माऽमरोऽजरोऽमृतो न जायते म्रियते वा कदाचिदव्यक्तोऽयमित्यादिश्रुतिस्मृतिन्यायविरुद्धा एते सर्व्वे पक्षा अचलस्य परमात्मन एकदेशपक्षे विज्ञानात्मनः कर्म्मफलवत् देशसंसरणानुपपत्तिः परस्य वा संसारित्वमित्युक्तं परस्यैकदेशोऽग्निविस्फुलिङ्गवत् स्फुटितो विज्ञानात्मा संसरतीति चेत्तथापि परस्यावयवस्फुटनेन

---

आ० जीवेष्वनुभूतश्चेतनोऽनयवी परश्चेत्तर्हि यथा प्रत्यवयवं मलसंसर्गे देहस्य मलिनत्वं तथा परस्य जीवगतैर्दुःखैर्महद्दुःखं स्यादिति प्रथमकल्पनावद्द्वितीयापि कल्पना न युक्तेत्यर्थः।

तृतीयं प्रत्याह। क्षीरवदिति ॥ न जायते म्रियते वा विपश्चिदित्याद्याः श्रुतयः। न जायते म्रियते वा कदाचिदित्याद्याः स्मृतयः। श्रुत्यादिकोपस्येष्टत्वमाशङ्क्य वैदिकं प्रत्याह। स चेति। श्रुतिस्मृती विवेचयन्पक्षत्रयसाधारणं दूषणमाह। निष्कलमित्यादिना। कूटस्थस्य निरवयवस्य कार्त्स्न्यैकदेशाभ्यां परिणामासम्भवो न्यायः॥ जीवस्य परमात्मैकदेशत्वे दोषान्तरमाह। अचलस्येति॥ एकदेशस्यैकदेशिव्यतिरेकेणाभावाज्जीवस्य स्वर्गादिषु गत्यनुपपत्तिरित्युक्तं अन्यथा परस्यापि स्यान्नहि पटावयवेषु चलत्सु पटो न चलतीत्याह। परस्य चेति॥ उक्तं यदि तावत्परमात्मेत्यादाविति शेषः॥ जीवस्य संसारित्वे परस्य तन्नास्तीति शङ्कते। परस्येति॥ परस्य निरवयवत्वश्रुतेरवयवस्फुटतानुपपत्तिं मन्वानो दूषयति। तथापीति। यत्र परस्यावयवः स्फुटति तत्र तस्य क्षतं प्राप्नोति

भा॰ चतप्राप्तिस्तत्संसरणे च परमात्मप्रदेशान्तरावयवव्यूहे छिद्रताप्राप्तिरव्रणत्ववाक्यविरोधश्च । आत्मावयवभूतस्य विज्ञानात्मनः संसरणे परमात्मशून्यप्रदेशाभावादवयवान्तरनोदनव्यूहनाभ्यां हृदयशूलेनेव परमात्मनो दुःखित्वप्राप्तिः। अग्निविस्फुलिङ्गादिदृष्टान्तश्रुतेर्न दोष इति चेन्न श्रुतेर्ज्ञापकत्वात् ।

न शास्त्रं पदार्थानन्यथाकर्त्तुं प्रवृत्तं। किं तर्हि यथाभूतानामज्ञातानां ज्ञापने। किञ्चातः शृण्वतो यद्भवति यथाभूता मूर्त्तामूर्त्तादिपदार्थधर्म्मा लोके प्रसिद्धास्तद्दृष्टान्तोपादानेन तदविरोध्ये वस्त्वन्तरं ज्ञापयितुं प्रवृत्तं शास्त्रं न लौकिकवस्तुविरोधज्ञापनाय लौकिकमेव दृष्टान्तमुपादत्ते । उपादीयमानोऽपि दृष्टान्तोऽनर्थकः

---

आ॰ तदीयावयवसंसरणे च परमात्मनः प्रदेशान्तरेऽवयवानां व्यूहे सत्युपचयः स्यात्तथाच परस्यावयवा यतो निर्गच्छन्ति तत्र छिद्रताप्राप्तिर्यत्र च ते गच्छन्ति तत्रोपचयः स्यादित्यकायमव्रणमस्नाविरमित्यादिवाक्यविरोधो भवेदित्यर्थः। परस्यैकदेशो विज्ञानात्मेति पक्षे दुःखित्वमपि तस्य दुर्वारमापतेदिति दोषान्तरमाह। आत्मावयवेति॥ मन्त्रोक्तविस्फुलिङ्गदृष्टान्तश्रुतिवशात्परस्यावयवा जीवाः सिध्यन्तीत्यतो जीवानां परैकदेशत्वेनोक्तो दोषोऽवतरति। युक्त्यपेक्षया श्रुतेर्बलवत्त्वादिति शङ्कते। विस्फुलिङ्गादीति॥ शास्त्रार्थो युक्तिविरुद्धो न सिध्यतीति दूषयति। न श्रुतेरिति॥

तदर्थं विवृणोति। न शास्त्रमिति॥ हेतुभागमाकाङ्क्षापूर्वकं विभजते। किन्तर्हीति॥ कृत्यादिव्यावृत्त्यर्थमज्ञातानामित्युक्तं। अस्तु शास्त्रमज्ञापकं। तथापि परस्य नास्ति सावयवत्वमित्यत्र किमायातमिति पृच्छति। किञ्चात इति॥ शास्त्रस्य यथोक्तस्वभावत्वे यत्परस्य निरवयवत्वं भवति तदुच्यमानं समाहितेन श्रोतव्यमि-

भा॰ स्याद्दार्ष्टान्तिकाश्रुतेः। न ह्यग्निः शीत आदित्यो न तपतीति वा दृष्टान्तशतेनापि प्रतिपादयितुं शक्यं। प्रमाणान्तरेणान्यथाधिगतत्वाद्वस्तुनः। न च प्रमाणं प्रमाणान्तरेण विरुध्यते। प्रमाणान्तराविषयमेव हि प्रमाणान्तरं ज्ञापयति। न च लौकिकपदपदार्थाश्रयणव्यतिरेकेणागमेन शक्यमज्ञातं वस्त्वन्तरमवगमयितुं। तस्मात्प्रसिद्धन्यायमनुसरता न शक्या परमात्मनः सावयवांशांशित्वकल्पना परमार्थतः प्रतिपादयितुं। क्षुद्रा विस्फुलिङ्गा ममैवांश इति श्रूयते स्मर्यते चेति चेत्। एकत्वप्रत्ययार्थपरत्वात्। अग्नेर्हि विस्फुलिङ्गोऽग्निरेवेत्येकत्वप्रत्ययार्हौ दृष्टो लोके। तथा

---

भा॰ त्याह। श्रुतेस्त्विति। तत्र प्रथमं लोकाविरोधेन शास्त्रप्रवृत्तिं दर्शयति। यथेति। आदिपदेन भावाभावादि गृह्यते। पदार्थेष्वेव भोक्तृपारतन्त्र्याद्धर्मशब्दस्तेषां लोकप्रसिद्धपदार्थानां दृष्टान्तानामुपन्यासेनेति यावत्। तदविरोधि लोकप्रसिद्धार्थाविरोधीत्यर्थः। वस्त्वन्तरं निरवयवादि दार्ष्टान्तिकं। तदविरोध्येवेत्येवकारस्य व्यावर्त्यमाह। न लौकिकेति। विपक्षे दोषमाह। उपादीयमानोऽपीति। सामान्येनोक्तमर्थं दृष्टान्तविशेषनिविष्टतया स्पष्टयति। न हीति। अग्नेरुष्णत्वमादित्यस्य तापकत्वमन्यथेत्युच्यते। ननु लौकिकं प्रमाणं लौकिकपदार्थाविरुद्धमेव स्वार्थं समर्पयति। वैदिकं पुनरपौरुषेयं तद्विरुद्धमपि स्वार्थं प्रमापयेदलौकिकविषयत्वादत आह। न चेति। ननु श्रुतेरज्ञातज्ञापकत्वे लोकानपेक्षत्वात्तद्विरोधेऽपि का हानिरत आह। न चेति। लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति न्यायात्तदनपेक्षा श्रुतिर्नाज्ञातं ज्ञापयितुमलमित्यर्थः। शास्त्रस्य लोकानुसारित्वे सिद्धे फलितमाह। तस्मादिति। प्रसिद्धो न्यायो लौकिको दृष्टान्तः। न हि नित्यस्याकाशादेः सावयवत्वं परस्य विभोऽभ्युपगमवता न तस्य सावयवत्वेनांशां-

भा॰ यांशोक्तिर्नैकत्वप्रत्ययार्थः। तथैवं सति विज्ञानात्मनः परमात्मविकारांशत्ववाचकाः शब्दाः परमात्मैकत्वप्रत्ययाधित्सव उपक्रमोपसंहाराभ्याम्। सर्व्वासु ह्युपनिषत्सु पूर्व्वमेकत्वं प्रतिज्ञाय दृष्टान्तैर्हेतुभिश्च परमात्मनो विकारांशादित्वं जगतः प्रतिपाद्य पुनरेकत्वमुपसंहरति।

तद्यथेहैव तावदिदं सर्व्वं यदयमात्मेति प्रतिज्ञायोत्पत्तिस्थितिलयहेतुदृष्टान्तैर्विकारविकारित्वाद्येकत्वप्रत्ययहेतून्प्रतिपाद्यानन्तरमबाह्यमयमात्मा ब्रह्मेत्युपसंहरिष्यति। तस्मादुपक्रमोपसंहाराभ्यामयमर्थो निश्चीयते। परमात्मैकत्वप्रत्ययद्रढिम्ने उत्पत्तिस्थितिलयप्रतिपाद-

---

आ॰ यित्वकल्पना वस्तुतः सम्भवति लोकविरोधादित्यर्थः। जीवस्य परांशत्वानङ्गीकारे श्रुतिस्मृत्योर्गतिर्वक्तव्येति शङ्कते। क्षुद्रा इति। तयोर्गतिमाह। नेत्यादिना। विस्फुलिङ्गे दर्शितं न्यायं सर्व्वांशमात्रेऽतिदिशति। तथापीति। दृष्टान्ते यथोक्तनीत्या स्थिते दार्ष्टान्तिकमाह। तत्रेति। परमात्मना सह जीवस्यैकत्वविषयं प्रत्ययमाधातुमिच्छन्तीति तथोक्तास्तेषामेकत्वप्रत्ययावतारहेतुत्वे हेत्वन्तरं सङ्गृह्णाति। उपक्रमेति। तदेव स्फुटयति। सर्व्वासु हीति।

उक्तमर्थमुदाहरणनिष्ठतया विभजते। तद्यथेति। इहेति प्रकृतोपनिषदुक्तिः। आदिशब्देनांशांशित्वादि गृह्यते। विस्तृतं सङ्ग्रहवाक्यमुपसंहरति। तस्मादिति। तेषां स्वार्थनिष्ठत्वे दोषं वदन्नेकत्वप्रत्ययार्थत्वे हेत्वन्तरमाह। अन्यथेति। सम्भवत्येकवाक्यत्वे वाक्यभेदस्य नेष्यत इति न्यायेनोक्तं प्रपञ्चयति। सर्व्वोपनिषत्स्विति। किञ्च तेषां स्वार्थनिष्ठत्वे श्रुतफलाभावात्फलान्तरं कल्पनीयं। न चैकत्वप्रत्ययविषयतया तत्फले निराकाङ्क्षेषु तेषु कल्पना

भा॰ कानि वाक्यानीति। अन्यथा वाक्यभेदप्रसङ्गाच्च। सर्व्वोपनिषत्सु विज्ञानात्मनः परमात्मनैकत्वप्रत्ययो विधीयत इत्यविप्रतिपत्तिः सर्व्वेषामुपनिषद्वादिनां तदिहैकवाक्ययोगे च सम्भवत्युत्पत्त्यादिवाक्यानां वाक्यान्तरत्वकल्पनायां न प्रमाणमस्ति। फलान्तरञ्च कल्पयितव्यं स्यात्। तस्मादुत्पत्त्यादिश्रुतय आत्मैकत्वप्रतिपादनपराः। अत्र च सम्प्रदायविद आख्यायिकां सम्प्रचक्षते। कश्चित्किल राजपुत्रो जातमात्र एव मातापितृभ्यामपविद्धो व्याधगृहे संवर्द्धितः। सोऽमुष्य-वंशतामजानन् व्याधजातिप्रत्ययो व्याधजातिकर्म्माण्येवानुवर्त्तते न राजास्मीति राजजातिकर्म्माण्यनुवर्त्तते। यदा पुनः कश्चित्परमकारुणिको राजपुत्रस्य राजश्रीप्राप्तियोग्यतां जानन्नमुष्यपुत्रतां बोधयति न त्वं व्याधोऽमुष्यराज्ञः पुत्रः कथञ्चिद्व्याधगृहमनुप्रविष्ट इति स एवं बोधितस्त्यक्त्वा

---

आ॰ युक्ता। दृष्टे सत्यदृष्टकल्पनानवकाशादित्याह। फलान्तरञ्चेति॥ उत्पत्त्यादिश्रुतीनां स्वार्थनिष्ठत्वासम्भवे फलितमुपसंहरति। तस्मादिति॥ तत्त्वमस्यादिवाक्यमैक्यपरं तच्छेषः सृष्ट्यादिवाक्य-मित्युक्तेऽर्थे ब्रविडाचार्य्यसम्मतिमाह। अत्र चेति॥ तत्र दृष्टान्तरूपामाख्यायिकां प्रथयति। कश्चिदिति॥ जातमात्रे प्रागवस्थायामेव राजास्मीत्यभिमानाभिव्यक्तेरित्यर्थः। ताभ्यां तत्परित्यागे निमित्तविशेषस्यानिश्चितत्वद्योतनार्थं किलेत्युक्तं। व्याधजातिप्रत्ययस्तत्प्रयुक्तो व्याधोऽस्मीत्यभिमानो यस्य स तथा व्याधजातिकर्म्माणि तत्प्रयुक्तानि मांसविक्रयणादीनि। राजास्मीत्यभिमानपूर्व्वकं तज्जातिप्रयुक्तानि परिपालनादीनि कर्म्माणि। अज्ञानं तत्कार्य्यञ्चोक्त्वा ज्ञानं तत्फलञ्च दर्शयति। यदेत्यादिना॥ बोधनप्रकारमभिनयति। न त्वमिति॥ कथं तर्हि प्रवरवेश्म-

भा० व्याधजातिप्रत्ययकर्म्माणि पितृपैतामहीमात्मनः पदवी-मनुवर्त्तते राजाहमस्मीति।

तथापि किलायं परस्मादग्निविस्फुलिङ्गादिवत्तज्जाति-रेव विभक्त इह देहेन्द्रियादिगहने प्रविष्टोऽसंसारी सन् देहेन्द्रियादिसंसारधर्ममनुवर्त्तते। देहेन्द्रियसङ्घातोऽस्मि कृशः स्थूलः सुखी दुःखीति परमात्मतामजानन्नात्मनो न त्वमेतदात्मकः परमेव ब्रह्मास्यसंसारीति प्रतिबो-धित आचार्य्येण हित्वैषणात्रयानुवृत्तिं ब्रह्मैवास्मीति प्रतिपद्यतेऽत्र राजपुत्रस्य राजप्रत्ययवद्ब्रह्मप्रत्ययो दृढी-भवति। विस्फुलिङ्गवदेव त्वं परस्माद्ब्रह्मणो भ्रष्ट इत्युक्ते विस्फुलिङ्गस्य प्रागग्नेर्भ्रंशादग्न्येकत्वदर्शनात्तस्मादेकत्वप्रत्य-यदार्ढ्याय सुवर्णमणिलोहाग्निविस्फुलिङ्गदृष्टान्ता नोत्प-त्त्यादिभेदप्रतिपादनपराः।

---

आ० प्रवेशप्रकारमाह। कथञ्चिदिति। राजाहमस्मीत्यभिमानपूर्व्वक-मात्मनः पितृपैतामहीं पदवीमनुवर्त्तत इति सम्बन्धः॥

दार्ष्टान्तिकरूपामाख्यायिकामाचष्टे। तथेति। जीवस्य पर-स्माद्विभागे निमित्तमज्ञानं तत्कार्य्यञ्च प्रसिद्धमिति द्योतयितुं किलेत्युक्तं। तज्जातिस्तत्स्वभावो वस्तुतः परमात्मैवेति यावत्। इहेत्यपरोक्षानुभवगम्यतोक्तिः। गहनं गम्भीरं वनं। संसार-धर्म्मानुवर्त्तने हेतुमाह। परमात्मतामिति। उक्तां विद्यां तत्का-र्य्यविरोधिनीं ब्रह्मात्मविद्यां लम्भयति। न त्वमिति॥ राज-पुत्रस्य राजास्मीति प्रत्ययवद्वाक्यादेवाधिकारिणि ब्रह्मास्मीति प्रत्ययश्चेत्कृतं विस्फुलिङ्गादिदृष्टान्तश्रुत्येत्याशङ्क्याह। अत्रेति॥ तथापि कथं ब्रह्मप्रत्ययदार्ढ्यं तत्राह। विस्फुलिङ्गस्येति॥ दृष्टान्तेष्वेकत्वदर्शने तस्मादिति परामृष्टं उत्पत्त्यादिभेदे नास्ति।

भा॰ सैन्धवघनवत्प्रज्ञैकरसनैरन्तर्य्यावधारणादेकधैवानु-
द्रष्टव्यमिति च। यदि च ब्रह्मणश्चित्रपटवद्वृक्षसमुद्रादिव
च्चोत्पत्त्याद्यनेकधर्म्मविचित्रता विजिज्ञापयिषिता एकरसं
सैन्धवघनवदनन्तरमबाह्यमिति नोपसमहरिष्यदेकधैवा-
नुद्रष्टव्यमिति च न प्रायोक्ष्यत। य इह नानेव पश्यतीति
निन्दावचनं च। तस्मादेकरूपैकत्वप्रत्ययदार्ढ्यायैव सर्व्ववेदा-
न्तेषूत्पत्तिस्थितिलयादिकल्पना न तत्प्रत्ययकरणाय। न च
निरवयवस्य परमात्मनोऽसंसारिणः संसार्य्येकदेशकल्पना
न्याय्या स्वतो देशत्वात्परमात्मनः। अदेशस्य परस्यैकदेशसं-
सारित्वकल्पनायां पर एव संसारीति कल्पितं भवेत्। अथ
परोपाधिकृत एकदेशः परस्य घटकरकाद्याकाशवत्
तदा तत्र विवेकिनां परमात्मैकदेशः पृथक् संव्यवहा-

---

आ॰ शास्त्रतात्पर्य्यमित्यत्र हेत्वन्तरमाह। सैन्धवेति। चकारोऽवधा-
रणादिति पदमनुकर्षति। सङ्गृहीतमर्थं विवृणोति। यदि चेत्या-
दिना। निन्दावचनं च न प्रायोक्ष्यतेति सम्बन्धः। एकत्वस्यावधारण-
फलमाह। तस्मादिति। एकस्य भेदसहत्वं वारयितुमेकरूपविशे-
षणं। आदिशब्देन प्रवेशनियमने गृह्येते। न तत्प्रत्ययकरणायेत्यत्र
तच्छब्देनोत्पत्त्यादिभेदो विवक्षितः। किञ्च परस्यैकदेशो विज्ञा-
नात्मेत्यत्र तदेकदेशः स्वाभाविको वाकाशादौपाधिको वेति विक-
ल्प्याद्यं दूषयति। न चेति। विपक्षे दोषमाह। अदेशस्येति।
द्वितीयमुत्थापयति। अथेति। एकदेशस्यौपाधिकत्वपक्षे परस्मि-
न्विवेकवतां तदखण्डत्वबुद्धिभाजां तदेकदेशो वस्तुतः पृथग्भूत्वा
व्यवहारक्षममिति नैव बुद्धिर्जायते औपाधिकस्य स्फटिक-
लौहित्यवन्मिथ्यात्वादित्युत्तरमाह। न तदेति। ननु जीवे कर्त्ताहं
भोक्ताहमिति परिच्छिन्नधीः सर्व्वेषामुपलभ्यते। सा च तस्य वस्तुतोऽ
परिच्छिन्नस्यासमाञ्जस्याच्चक्षुर्गगनधीवदुपचरिता। तस्मादुभयेषा

भा० रुभागिति बुद्धिरुत्पद्यते। अविवेकिनां विवेकिनाञ्चोपच-
रिता बुद्धिर्दृष्टेति चेन्नाविवेकिनां मिथ्याबुद्धित्वाद्विवे-
किनां च संव्यवहारमात्रावलम्बनार्थत्वाद्यथा कृष्णो रक्त-
श्चाकाश इति विवेकिनामपि कदाचित्कृष्णता रक्तता चा-
काशस्य संव्यवहारमात्रावलम्बनार्थत्वं प्रतिपद्यत इति
न परमार्थतः कृष्णो रक्तो वाकाशो भवितुमर्हति। अतो न
पण्डितैर्ब्रह्मस्वरूपप्रतिपत्तिविषये ब्रह्मणोऽंशांशैकदेशैक-
देशिविकारविकारित्वकल्पना कार्य्या। सर्व्वकल्पनापनय-
नार्थसारपरत्वात्सर्व्वोपनिषदां। अतो हित्वा सर्व्वकल्पना-
माकाशस्येव निर्विशेषता प्रतिपत्तव्या। आकाशवत्सर्व्वगतश्च
नित्यः। न लिप्यते लोकदुःखेन बाह्य इत्यादिश्रुतिशतेभ्यः॥

---

आ० मुक्तात्मबुद्धिदर्शनात्परमात्मैकदेशत्वं जीवस्य दुर्व्वारमिति चोद-
यति। अविवेकिनामिति॥ तत्राविवेकिनां यथोक्ता बुद्धिरुप-
चरिता न भवत्येतस्मिंस्तद्बुद्धित्वेनाविद्यात्वादिति परिहरति।
नेत्यादिना॥ तथापि विवेकिनामीदृशी धीरुपचरितेति चेत्त-
त्राह। विवेकिनाञ्चेति॥ तेषां संव्यवहारोऽभिधाभिधेयलक्ष-
णस्तन्मात्रस्यालम्बनमाभासभूतोऽर्थस्तद्विषयत्वात्तद्बुद्धेरपि मिथ्या-
बुद्धित्वादुपचरितत्वासिद्धिरित्यर्थः। विवेकिनामविवेकिनाञ्चा-
त्मनि परिच्छिन्नधीरुपपन्नेत्येतावता न तस्य वस्तुतो ब्रह्मांशत्वादि
सिध्यतीत्येतद्दृष्टान्तेन साधयति। यथेति॥ अविवेकिनामित्यपे-
रर्थः। ब्रह्मणि वस्तुतोऽंशादिकल्पना न कार्य्येति दार्ष्टान्तिक-
मुपसंहरति। अत इति॥ अंशांशिनोर्विशदीकरणमेकदेशैकदे-
शीति। अतः शब्दोपात्तमेव हेतुं स्फुटयति। सर्व्वकल्पनेति॥
सर्व्वासां कल्पनानामपनयनमेवार्थः। सारत्वेनाभीष्टस्तत्परत्वादुप-
निषदां तदेकसमधिगम्ये ब्रह्मणि न कदाचिदपि कल्पनाऽस्तीत्यर्थः।
उपनिषदां निर्विकल्पकवस्तुपरत्वे फलितमाह। अतो हित्वेति॥

भा॰ नात्मानं ब्रह्मविलक्षणं कल्पयेदुष्णात्मक इवाग्नौ शीतैकदेशं प्रकाशात्मके वा सवितरि तम एकदेशं सर्व्वकल्पनापनयनार्थसारपरत्वात्सर्व्वोपनिषदां । तस्मान्नामरूपोपाधिनिमित्ता एवात्मन्यसंसारधर्म्मिणि सर्व्वे व्यवहाराः । रूपं रूपं प्रतिरूपो बभूव । सर्व्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाभिवदन्यदास्ते इत्येवमादिमन्त्रवर्णेभ्यः । न स्वत आत्मनः संसारित्वमलक्तकाद्युपाधिसंयोगजनितरक्तस्फटिकादिबुद्धिवद्भ्रान्तमेव न परमार्थतो ध्यायतीव लेलायतीव । न कर्म्मणा वर्द्धते नो कनीयान् । न कर्म्मणा लिप्यते पापकेन । समं सर्व्वेषु भूतेषु तिष्ठन्तं । शुनि चैव श्वपाके चेत्यादिश्रुतिस्मृतिन्यायेभ्यः परमात्मनोऽसंसारितैव । अत एकदेशो विकारः शक्तिर्वा विज्ञानात्माऽन्यो वेति विकल्पयितुं निरवयवत्वाभ्युपगमे विशेषतो न शक्यते । अंशादिश्रुतिस्मृतिवादाश्चैकत्वार्था न

---

आ॰ ब्रह्मणो निर्विशेषत्वेऽपि आत्मनस्तदेकदेशस्य सविशेषत्वं किं न स्यादित्याशङ्क्याह । नात्मानमिति ॥ आत्मा निर्विशेषश्चेत्कथं तस्मिन्व्यवहारत्रयमित्याशङ्क्याह । तस्मादिति ॥ आत्मनि सर्व्वो व्यवहारो नामरूपोपाधिप्रयुक्त इत्यत्र प्रमाणमाह । रूपं रूपमिति ॥ असंसारधर्म्मिणीत्युक्तं विशेषणं विशदयति । न स्वत इति ॥ भ्रान्त्या संसारित्वमात्मनीत्यत्र मानमाह । ध्यायतीति ॥ कूटस्थत्वासङ्गत्वादिन्यायः परमात्मनः सांशत्वपक्षो निराकृतः । ननु तस्य निरंशत्वेऽपि कुतो जीवस्य तन्मात्रत्वं तदेकदेशत्वादिसम्भवादत आह । एकदेश इति ॥ कथं तर्हि पादोऽस्य विश्वा भूतानि । ममैवांशो जीवलोके । अंशो नानाव्यपदेशात् । सर्व्व-

भा॰तु भेदप्रतिपादकविवक्षितार्थैकवाक्ययोगादित्येवोषाम सर्व्वोपनिषदां परमात्मैकत्वज्ञापनपरत्वे ॥ अथ किमर्थं तत्प्रतिकूलोऽर्थो विज्ञानात्मभेदः परिकल्प्यत इति कर्म्मकाण्डप्रामाण्यविरोधपरिहारायेत्येके। कर्म्मप्रतिपादकानि हि वाक्यान्यनेकक्रियाकारकफलभोक्तृकर्त्राश्रयाणि। विज्ञानात्मभेदाभावे ह्यसंसारिण एव परमात्मन एकत्वे कथमिष्टफलासु क्रियासु प्रवर्त्तयेयुरनिष्टफलाभ्यो वा क्रियाभ्यो निवर्त्तयेयुः। कस्य वा बद्धस्य मोक्षायोपनिषदारभ्येत। अपि च। परमात्मैकत्ववादिपक्षे कथं परमात्मैकत्वोपदेशः। कथं वा तदुपदेशग्रहणफलं।

---

व्या॰ एते आत्मनो व्युच्चरन्तीति श्रुतिस्मृतिवादस्तत्राह। अंशादिति॥
न्यायागमाभ्यां जीवेश्वरयोरंशांशित्वादिकल्पनां निराकृत्य वेदान्तानामैक्यपरत्वे स्थिते सति द्वैतासिद्धिः फलतीत्याह। सर्व्वोपनिषदामिति। एकत्वज्ञानस्य सनिदानद्वैतध्वंसित्वमथशब्दार्थः॥ प्रकृतं ज्ञानं तत्पदेन परामृश्यते। इत्यद्वैतमेव तत्त्वमिति शेषः। किमर्थमिति प्रश्नं मन्वाने द्वैतिनां मतमुत्थापयति। कर्म्मकाण्डेति॥ वेदान्तानामैक्यपरत्वेऽपि कथं तत्प्रामाण्यविरोधप्रसक्तस्तत्राह। कर्म्मेति॥ तथापि विरोधावकाशः स्यादित्याशङ्क्याह। विज्ञानात्मेति॥ केवलाद्वैतपक्षे कर्म्मकाण्डविरोधमुक्त्वा तत्रैव ज्ञानकाण्डविरोधमाह। कस्य वेति। परस्य नित्यमुक्तत्वादन्यस्य स्वतः परतो वा बद्धस्याभावाच्छिष्याभावस्तथा चाधिकार्य्यभावादुपनिषदारम्भासिद्धिरित्यर्थः॥ कर्म्मकाण्डस्य काण्डान्तरस्य च प्रामाण्यानुपपत्तिर्विज्ञानात्मादिभेदं कल्पयतीत्यर्थापत्तिद्वयमुक्तं॥ तत्र द्वितीयामर्थापत्तिं प्रपञ्चयति। अपि चेति॥ का पुनरुपदेशस्यानुपपत्तिस्तत्राह। बद्धस्येति। तदभाव इत्यत्र तच्छब्दो बद्धमधिकरोति निर्विषयं निरधिकारं। किञ्च यद्यप्यर्थापत्तिद्वयं उक्तया विधयोत्तिष्ठति तर्हि भेदस्य दुर्निरूपत्वात्कथं कर्म्मकाण्डं प्रमाणमिति

भा० यद्रूपस्य हि ब्रह्मणाम्नायोपदेशस्तदभावे उपनिषच्छास्त्रं निर्विषयमेव ॥

एवं तर्ह्युपनिषदादिपक्षस्य कर्म्मकाण्डवादिपक्षेण चोद्य-परिहारयोः समानः पन्थाः। येन भेदाभावे कर्म्मकाण्डं निरालम्बनमात्मानं न लभते प्रामाण्यं प्रति तथोपनिषदपि। एवं तर्हि यस्य प्रामाण्ये स्वार्थविघातो नास्ति तस्यैव कर्म्मकाण्डस्यास्तु प्रामाण्यमुपनिषदां तु प्रामाण्यकल्पनायां स्वार्थविघातो भवेदिति माभूत्प्रामाण्यं। न हि कर्म्मकाण्डं प्रमाणं सदप्रमाणं भवितुमर्हति। न हि प्रदीपः प्रकाश्यं प्रकाशयति न प्रकाशयति चेति। प्रत्यक्षादिप्रमाणविप्रतिषेधाच्च। न केवलमुपनिषदो ब्रह्मैकत्वं प्रतिपाद-

---

आ० यद्ब्रह्मवादिना कर्म्मवादी चोद्यते तद्ब्रह्मवादस्य कर्म्मवादेन तुल्यं। ब्रह्मवादेऽपि शिष्यशासित्रादिभेदाभावे कथमुपनिषत्प्रामाण्य मित्याक्षेपं सुकरत्वाद्धोपनिषदां प्रतीयमानं शिष्यशासित्रादि-भेदमाश्रित्य प्रामाण्यमिति परिहारः स कर्म्मकाण्डस्यापि समानः। तत्रापि प्रातीतिकभेदमादाय प्रामाण्यस्य सुप्रतिपन्नत्वान्न च भेदप्रतीतिर्भ्रान्तिर्बाधाभावादित्यभिप्रेत्याह। एवं तर्हीति ॥ चोद्यसाम्यं विवृणोति। येनेति ॥ इति चोद्यसाम्यात्परिहारस्यापि साम्यमिति शेषः ॥ ननु कर्म्मकाण्डं भेदपरं ब्रह्मकाण्डमभेदपरं प्रतिभात्यन्यतरवस्तुनिर्विकल्पः सम्भवति अतोऽन्यतरस्याप्रामाण्य-मत आह। एवं तर्हीति। तुल्यमुपनिषदामपि स्वार्थावि-घातकत्वमित्याशङ्क्याह। उपनिषदामिति। स्वार्थः शब्दशक्तिव-शात्प्रतीयमानः स्रष्ट्रादिभेदः। यत्तूच्यते कर्म्मकाण्डस्य व्यावहा-रिकं प्रामाण्यं न तात्त्विकं तात्त्विकन्तु काण्डान्तरस्येति तत्राह। न हीति। यद्धि प्रामाण्यस्य व्यावहारिकत्वं तदेव तस्य तात्त्वि-कत्वं। न हि प्रमाणं तत्त्वञ्च नावेदयति व्याघातादित्यभिप्रेत्य

भा॰ यन्त्य: स्वार्थविघातं कर्म्मकाण्डप्रामाण्यविघातञ्च कुर्व्वन्ति प्रत्यक्षादिनिश्चितभेदप्रतिपत्त्यर्थैः प्रमाणैश्च विरुध्यते । तस्मादप्रामाण्यमेवोपनिषदामन्यार्थता वास्तु न त्वेव ब्रह्मैकत्वप्रतिपत्त्यर्थता नोक्तोत्तरत्वात् । प्रमाणस्य हि प्रमाणत्वमप्रमाणत्वं वा प्रमोत्पादनानुत्पादननिमित्तमन्यथा चेत्स्तम्भादीनां प्रामाण्यप्रसङ्गाच्छब्दादौ प्रमेये । किंचातो यदि तावदुपनिषदो ब्रह्मैकत्वप्रतिपत्तिप्रमां कुर्व्वन्ति कथमप्रमाणं भवेयुर्न कुर्व्वन्त्येवेति चेद्यथाग्निः शीत इति स भवानेवं वदन् वक्तव्य उपनिषत्प्रामाण्यप्रतिषेधार्थं भवतो वाक्यमुपनिषत्प्रामाण्यप्रतिषेधं किं न करोत्येवाग्निर्वा रूपप्रकाशमथ करोति यदि करोति भवतु तदा प्रतिषेधार्थं प्रमाणं भवद्वाक्यं अग्निश्च रूपप्रकाशको भवेत् ॥

---

आ॰ दृष्टान्तमाह । न हीति ॥ स्वार्थाभिघातात्कर्म्मकाण्डविरोधाच्चोपनिषदामप्रामाण्यमित्युक्तमुपसंहर्त्तुमितिशब्दः । उपनिषदप्रामाण्ये हेत्वन्तरमाह । प्रत्यक्षादीनीति । प्रत्यक्षादीनि निश्चितानि भेदप्रतिपत्त्यर्थानि प्रमाणानि तैरिति विग्रहः ॥ अध्ययनविध्युपात्तानां कुतस्तासामप्रामाण्यमित्याशङ्क्याह । अन्यार्थता वेति ॥ सिद्धान्तयति । नेत्यादिना ॥ तदेव स्फुटयितुं सामान्यन्यायमाह । प्रमाणस्येति ॥ स्वार्थे प्रमोत्पादकत्वाभावेऽपि प्रामाण्यमिच्छन्तं प्रत्याह । अन्यथेति ॥ यथोक्तप्रयोजकप्रयुक्तं प्रामाण्यमप्रामाण्यं वेत्येतस्मिन्पक्षे किं फलतीति पृच्छति । किञ्चेति ॥ तत्र किमुपनिषदः स्वार्थं बोधयन्ति न वेति विकल्प्याद्यमनूद्य दूषयति । यदि तावदिति ॥ द्वितीयमुत्थाप्य निराकरोति । नेत्यादिना । अग्निर्यथा शीतं न करोति तथोपनिषदोऽपि ब्रह्मैकत्वे प्रमां न कुर्व्वन्तीति वदन्तं प्रति प्रतिबन्धी प्रश्नो न युक्तोऽनुभवविरोधादित्याशङ्क्याह । यदीति ॥

भा॰ प्रतिषेधवाक्यप्रामाण्यं भवत्येवोपनिषदां प्रामाण्यमत्र भवन्तो ब्रुवन्तु कः परिहार इति । नन्वत्र प्रत्यक्षाम्नद्वाक्य उपनिषत्प्रामाण्यप्रतिषेधार्थप्रपत्तिरग्नौ च रूपप्रकाशन-प्रतिपत्तिप्रमापकस्तर्हि भवतः प्रद्वेषो ब्रह्मैकत्वप्रत्यये प्रमां प्रत्यक्षं कुर्वन्तीषूपनिषत्सु उपलभ्यमानासु प्रतिषेधानुप-पत्तेः । शोकमोहादिनिवृत्तिश्च प्रत्यक्षं फलं ब्रह्मैकत्वप्र-तिपत्तिपारम्पर्य्यजनितमित्यवोचाम । तस्मादुक्तोत्तरत्वादु-पनिषदं प्रत्यप्रामाण्यशङ्का तावन्नास्ति । यदोक्तं स्वार्थवि-घातकरत्वादप्रामाण्यमिति तदपि न । तदर्थप्रतिपत्ते-र्बाधकाभावात् । न ह्युपनिषद्भ्यो ब्रह्मैकमेवाद्वितीयं नैव चेति प्रतिपत्तिरस्ति । यथाग्निरुष्णः शीतश्चेत्यस्माद्वाक्याद्विरुद्धा-

---

आ॰ तर्हि स्वार्थे प्रमितिजनकत्वाद्वाक्यस्य प्रामाण्यं स्यादित्याश-ङ्क्याह । प्रतिषेधेति ॥ उपनिषदप्रामाण्ये भवद्वाक्याप्रामाण्यं तत्प्रामाण्ये तूपनिषत्प्रामाण्यं दुर्वारमिति साम्ये प्राप्ते व्यवस्थापकः समाधिर्वक्तव्य इत्याह । अत्रेति ॥ उक्तमेवार्थं चोद्यसमाधिभ्यां विशदयति । नन्वित्यादिना ॥ प्रतिषेधमङ्गीकृत्योक्ता यथोक्तो-पनिषदुपलम्भे सति तस्य निरवकाशत्वात्प्रद्वेषानुपपत्तिरित्याह । प्रतिषेधेति ॥ उपनिषदुत्थाया धियो वैफल्यात्तासाममानतेत्या-शङ्क्याह । शोकेति । एकत्वं प्रति तावदामातेव जायते । सा च विचारं प्रयुज्य मननादिद्वारा दृढीभवति । सा पुनरशेषं शोकादिकमपनयतीति पारम्पर्य्यजनितं फलमिति द्रष्टव्यं । स्वार्थे प्रमाजनकत्वादुपनिषदां प्रामाण्यमित्युक्तमुपसंहरति । तस्मा-दिति ॥ प्रामाण्यहेतुसद्भावादुपनिषदां प्रामाण्यं प्रतिपाद्य तद-प्रामाण्यं परोक्तमनुवदति । यदोक्तमिति । कथं हि तासां स्वार्थविघातकत्वं किं ताभ्यो ब्रह्मैकमेवाद्वितीयं नैव चेति प्रति-पत्तिरुत्पद्यते । किं वा काचिद्ब्रह्मैकत्वप्रतिपत्तिं अन्याश्चोपनि-

भा॰ र्थद्वयप्रतिपत्तिरभ्युपगम्य चैतदवोचाम । न तु वाक्यप्रामाण्यसमय एष न्यायः । यदुतैकस्य वाक्यस्यानेकार्थत्वं सति चानेकार्थत्वे स्वार्थस्य स्यात्तद्विघातश्च विरुद्धोऽन्योऽर्थो न त्वेतद्वाक्यप्रमाणकानां विरुद्धमविरुद्धं चैकं वाक्यमनेकमर्थं प्रतिपादयतीत्येष समयोऽर्थैकत्वाद्ध्येकवाक्यता । न च कानिचिदुपनिषद्वाक्यानि ब्रह्मैकत्वप्रतिषेधं कुर्व्वन्ति ॥

यत्तु लौकिकं वाक्यमग्निरुष्णः शीतश्चेति न तत्रैकवाक्यता तदेकदेशस्य प्रमाणान्तरविषयानुवादित्वादग्निः शीत इत्येतदेकं वाक्यमग्निरुष्ण इति तु प्रमाणान्तरानुभवस्मारकं न तु स्वयमर्थावबोधकमतो नाग्निः शीत इत्यनेनैकवाक्यता प्रमाणान्तरानुभवस्मारणेनैवोपक्षीणत्वात् । यत्तु विरुद्धार्थप्रतिपादकमिदं वाक्यमिति मन्यते तच्छीतोष्णपदाभ्यामग्निपदसामानाधिकरण्यप्रयोगनिमित्ता भ्रान्तिर्न त्वेवैकस्य वाक्यस्यानेकार्थत्वं लौकिकस्य वैदिकस्य

---

आ॰ यद्वान्न प्रतिषेधं कुर्व्वन्तीति विकल्प्याद्यं दूषयति । तदपि नेति ॥ तदेव प्रपञ्चयति । न हीति ॥ एकस्य वाक्यस्यानेकार्थत्वमङ्गीकृत्य वैधर्म्योदाहरणं युक्तमित्याह । अभ्युपगम्येति ॥ तस्याङ्गीकारवादत्वे हेतुमाह । न त्विति ॥ उक्तमर्थं व्यतिरेकद्वारा विवृणोति । सति चेति ॥ भवत्येकस्य वाक्यस्यानेकार्थत्वं नेत्याह । न त्विति ॥ कस्तर्हि तेषां समयस्तत्राह । अर्थैकत्वादिति । तदुक्तं प्रथमे तन्त्रे । अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति ॥ द्वितीयं दूषयति । न चेति ॥

एकस्य वाक्यस्यानेकार्थत्वं लोके दृष्टमित्याशङ्क्याह । यत्त्विति ॥ तदेकदेशस्येत्यादिवाक्यं विवृणोति । अग्निरिति ॥ अनुवादकबोधकभागयोरेकवाक्यत्वाभावं फलितमाह । अत इति ॥ हेत्व-

भा०वा। यच्चोक्तं कर्म्मकाण्डप्रामाण्यविघातकृदुपनिषद्वाक्यमिति तन्नान्यार्थत्वात्। ब्रह्मैकत्वप्रतिपादनपरा ह्युपनिषदो नेष्टार्थप्राप्तौ साधनोपदेशं तस्मिन्वा पुरुषनियोगं वारयन्त्यनेकार्थत्वानुपपत्तेरेव। न च कर्म्मकाण्डवाक्यानां स्वार्थे प्रमा नोत्पद्यते। असाधारणे चेत्स्वार्थे प्रमां उत्पादयति वाक्यं कुतोऽन्येन विरोधः स्यात्। ब्रह्मैकत्वे निर्विषयत्वात्प्रमा नोत्पद्यत एवेति चेन्न प्रत्यक्षत्वात्प्रमायाः। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत। ब्राह्मणो न हन्तव्य इत्येवमादिवाक्येभ्यः प्रत्यक्षा प्रमा जायमाना सा नैव भविष्यति। यद्युपनिषदो ब्रह्मैकत्वं बोधयिष्यन्तीत्यनुमानं न चानुमानं प्रत्यक्षविरोधे प्रामाण्यं लभते। तस्मादसदेवैतद्गीयते प्रमैव नोत्पद्यत इति॥

अपि च यथा प्राप्तस्यैवाविद्या प्रत्युपस्थापितस्य क्रिया-

---

आ० र्थमुक्तमेव स्फुटयति। प्रमाणान्तरेति। शीतः शिशिरोऽग्निरित्येतद्बोधकमेव चेद्वाक्यं कथं तर्हि तत्र लोकस्य विरुद्धार्थधीरित्याशङ्क्याह। यत्त्विति॥ स्वार्थविघातकत्वादप्रामाण्यमुपनिषदामित्येतन्निराकृत्य चोद्यान्तरमनूद्य निराकरोति। यच्चेत्यादिना। तस्मिन्नितीष्टार्थप्रापकसाधनोक्तिः। ननूपनिषद्वाक्यं ब्रह्मैकत्वं साक्षात्प्रतिपादयदर्थात्कर्म्मकाण्डप्रामाण्यविघातकमिति चेत्तत्र तदप्रामाण्यमनुत्पत्तिलक्षणं विपर्य्यासलक्षणं वेति विकल्प्याद्यमनूद्य दूषयति। न चेति। विदितपदतदर्थसङ्गतेर्वाक्यार्थन्यायविदस्तदर्थेषु प्रमोत्पत्तिदर्शनादित्यर्थः॥ स्वार्थे प्रमामुत्पादयदपि वाक्यं मानान्तरविरोधादप्रामाण्यमित्याशङ्क्याह। असाधारणे चेदिति। स्वगोचरशूरत्वात्प्रमाणानामित्यर्थः॥ विमतं न प्रमोत्पादकं प्रमाणापहृतविषयत्वादनुवादिवाक्यवदिति शङ्कते। ब्रह्मेति॥ प्रत्यक्षविरोधादनुमानमनवकाशमिति परिहरति। नेत्यादिना॥

इतश्च कर्म्मकाण्डस्य नाप्रामाण्यमिति वदन् द्वितीयं प्रत्याह।

भा॰ कारकफलसद्भावमर्थाप्य श्रुतिरिष्टानिष्टप्राप्तिपरिहारोपायसामान्ये प्रवृत्तस्य तद्विशेषमजानतस्तदाचक्षाणा श्रुतिः क्रियाकारकफलभेदस्य लोकप्रसिद्धस्य सत्यतामसत्यतां वा नाचष्टे। न च वारयतीष्टानिष्टफलप्राप्तिपरिहारोपाये । विधिपरत्वात्। यथा काम्येषु प्रवृत्ता श्रुतिः कामानां मिथ्याज्ञानप्रभवत्वे सत्यपि यथा प्राप्तानेव कामानुत्पादयत्साधनान्येव विधत्ते न तु कामानां मिथ्याज्ञानप्रभवत्वादनर्थरूपत्वञ्चेति न विदधाति। तथा नित्याग्निहोत्रादिशास्त्रमपि मिथ्याज्ञानप्रभवं क्रियाकारकभेदं यथा प्राप्तमेवादायेष्टविशेषप्राप्तिमनिष्टविशेषपरिहारं वा किमपि प्रयोजनं पश्यदग्निहोत्रादीनि कर्म्माणि विधत्ते। नाविद्यागोचरासद्वस्तुविषयमिति न प्रवर्त्तते यथा काम्येषु। न च पुरुषा न प्रवृत्तेरन्नविद्यावन्तो दृष्टत्वाद्यथा कामिनो विद्यावतामेव कर्म्माधिकार इति चेन्न॥

---

आ॰ अपि चेति॥ यथा प्राप्तस्येत्यस्यैव व्याख्यानमविद्याप्रत्युपस्थापितस्येति साध्यसाधनसम्बन्धबोधकस्य कर्म्मकाण्डस्य न विपर्य्यासो मिथ्यार्थत्वेऽपि तस्यार्थक्रियाकारित्वसामर्थ्यानपहारात्प्रामाण्योपपत्तेरिति भावः। ननु कर्म्मकाण्डस्य मिथ्यार्थत्वे मिथ्याज्ञानप्रभवत्वादनर्थनिष्ठत्वेनाप्रवर्त्तकत्वादप्रमाण्यमत आह। यथेति॥ विमतमप्रमाणं मिथ्यार्थत्वाद्विप्रलम्भकवाक्यवदित्याशङ्क्य व्यभिचारमाह। यथाकाम्येष्विति॥ अग्निष्टोमादिषु काम्येषु कर्म्मसु मिथ्याज्ञानजनितं मिथ्याभूतं काममुपादाय शास्त्रप्रवृत्तिवन्नित्येष्वपि तेषु साधनमसदेवादाय शास्त्रं प्रवर्त्ततां तथापि बुद्धिमन्तो न प्रवर्त्तिष्यन्ते वेदान्तेभ्यस्तन्मिथ्यात्वावगमादित्याशङ्क्याह। न चेति॥ अविद्यावतां कर्म्मसु प्रवृत्तिमाचिपति। विद्यावतामेवेति॥ द्रव्यदेवतादिज्ञानं वा अशनायात्मज्ञानं वा कर्म्मप्रवर्त्तकमिति विकल्प्याद्यमङ्गीकृत्य द्वितीयं दूषयति। नेत्यादिना॥

भा॰ अद्वैकत्वविद्यायां कर्म्माधिकारविरोधस्योक्तत्वात्। एतेन अद्वैकत्वे निर्विषयत्वादुपदेशेन तद्ग्रहणफलाभावदोषपरिहार उक्तो वेदितव्यः। पुरुषेच्छारागादिवैचित्र्याच्च। अनेका हि पुरुषाणां इच्छा रागादयश्च दोषा विचित्रास्ततश्च वाह्यविषयरागाद्यपहृतचेतसो न शास्त्रं निवर्त्तयितुं शक्तं। नापि स्वभावतो वाह्यविषयविरक्तचेतसो विषयेषु प्रवर्त्तयितुं शक्तं। किन्तु शास्त्रादेतावदेव भवतीदमिष्टसाधनमिदमनिष्टसाधनमिति साध्यसाधनसम्बन्धविशेषाभिव्यक्तिः प्रदीपादिवत्तमसि रूपाविज्ञानं। न तु शास्त्रं भृत्यानिव बलान्निवर्त्तयति नियोजयति वा। दृश्यन्ते हि पुरुषा रागादिगौरवाच्छास्त्रमप्यतिक्रामन्तः। तस्मात्पुरुषमतिवैचित्र्यमपेक्ष्य साध्यसाधनसम्बन्धविशेषाननेकधोपदिशति। तत्र पुरुषाः स्वयमेव यथारुचि साधनविशेषेषु प्रवर्त्तन्ते शास्त्रन्तु सवितृप्रदीपादिवदुदास्त एव॥

---

आ॰ कर्म्मकाण्डप्रामाण्यानुपपत्तिं निराकृत्य द्वितीयामर्थापत्तिमतिदेशेन निराकरोति। एतेनेति॥ कर्म्मकाण्डस्यार्थं प्रति समर्थकत्वोपपादनेनेति यावत्। ननु कर्म्मकाण्डसम्बन्धं बोधयत्प्रवृत्त्यादिपरमतो रागादिवशात्तदयोगाच्छास्त्रीयप्रवृत्त्यादिविषयस्य द्वैतस्य सत्यत्वमन्यथा तद्विषयत्वानुपपत्तिरित्यर्थापत्त्यन्तरमायातमिति तत्राह। पुरुषेच्छेति। न प्रवृत्तिनिवृत्ती शास्त्रवशादिति शेषः॥ तदेव स्फुटयति। अनेका हीति॥ शास्त्रस्याकारत्वात्प्रवर्त्तकत्वाद्यभावमुक्त्वा तत्रैव युक्त्यन्तरमाह। दृश्यन्ते हीति॥ तर्हि शास्त्रस्य किंकृत्यमित्याशङ्क्याह। तस्मादिति॥

भा॰ तथा कस्यचित्परोऽपि पुरुषार्थोऽपुरुषार्थवदवभासते यस्य यथावभासः स तथारूपं पुरुषार्थं पश्यति तदनुरूपाणि साधनान्युपादित्सते। तथा चार्थवादोऽपि। त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्य्यमूषुरित्यादि। तस्मान्न ब्रह्मैकत्वं ज्ञापयिष्यन्तो वेदान्ता विधिशास्त्रबाधकाः। न च विधिशास्त्रमेतावता निर्विषयं ज्ञात्राद्युक्तकारकादिभेदं विधिशास्त्रमुपनिषदां ब्रह्मैकत्वं प्रति प्रामाण्यं निवर्त्तयति। स्वविषयशूराणि हि प्रमाणानि श्रोत्रादिवत्। तत्र पण्डितम्मन्याः केचित्स्वचित्तवशात्सर्वं प्रमाणमितरेतरविरुद्धं मन्यन्ते तथा प्रत्यक्षादिविरोधमपि चोदयन्ति ब्रह्मैकत्वे। शब्दादयः किल श्रोत्रादि-

---

आ॰ तत्र सम्बन्धविशेषोपदेशे सतीति यावत्। यथारुचि पुरुषाणां प्रवृत्तिश्चेत् परमपुरुषार्थं कैवल्यमुपदिश्य सम्यग्ज्ञानसिद्धये तदुपायश्रवणादिषु सन्न्यासपूर्व्विका प्रवृत्तिर्बुद्धिपूर्व्वकारिणामुचितेत्याशङ्क्याह। तथेति॥ रागादिवैचित्र्यानुसारेणेति यावत्। उक्तं हि। अपि वृन्दावने शून्ये शृगालत्वमित्यादि। तर्हि कथं पुरुषार्थविवेकसिद्धिस्तत्राह। यस्येति॥ पुरुषार्थदर्शनकार्य्यमाह। तदनुरूपाणीति॥ स्वाभिप्रायानुसारेण पुरुषाणां पुरुषार्थप्रतिपत्तिरित्यत्र मानमाह। तथा चेति॥ यथा दकारत्रये प्रजापतिनोक्ते देवादयः स्वाभिप्रायेण दमाद्यर्थत्रयं जगृहुस्तथा स्वाभिप्रायवशादेव पुरुषाणां पुरुषार्थप्रतिपत्तिरित्यर्थवादतोऽवगतमित्यर्थः॥ पूर्व्वोत्तरकाण्डयोरविरोधमुपसंहरति। तस्मादिति॥ एकस्य वाक्यस्य द्व्यर्थत्वायोगादिति यावत्। अर्थाद्बाधकत्वमाशङ्क्याह। न चेति॥ एतावता वेदान्तानां ब्रह्मैकत्वज्ञापकत्वमात्रेणेत्यर्थः। वेदान्तानामबाधकत्वेऽपि कर्म्मकाण्डस्य तत्प्रामाण्यनिवर्त्तकत्वमस्तीत्याशङ्क्याह। नापीति॥ स्वपक्षे सर्व्वविरोधनिरास-

भा० विषयाभिन्नाः प्रत्यक्षत उपलभ्यन्ते ब्रह्मैकत्वं ब्रुवतां प्रत्यक्षविरोधः स्यात्। तथा श्रोत्रादिभिः शब्दाद्युपलब्धारः कर्त्तारश्च धर्म्माधर्म्मयोः प्रतिशरीरं भिन्ना अनुमीयन्ते संसारिणस्तत्र ब्रह्मैकत्वं ब्रुवतामनुमानविरोधश्च। तथा चागमविरोधञ्च वदन्ति। ग्रामकामो यजेत। पशुस्वर्गकामो यजेतेत्येवमादिवाक्येभ्यो ग्रामपशुस्वर्गादिकामास्तत्साधनाद्यनुष्ठातारश्च भिन्ना अवगम्यन्ते। अत्रोच्यते। ते कुतर्कदूषितान्तःकरणा ब्राह्मणादिवर्णापसदा अनुकम्पनीया आगमार्थविच्छिन्नसम्प्रदायबुद्धय इति। कथं श्रोत्रादिद्वारैः शब्दादिभिः प्रत्यक्षत उपलभ्यमानैर्ब्रह्मण एकत्वं विरुध्यत इति वदन्तो वक्तव्याः। किं शब्दादीनां

---

व्या० द्वारा स्वार्थे वेदान्तानां प्रामाण्यमुक्तं॥ सम्प्रति तार्किकपक्षमुत्थापयति। तथेति। ऐक्ये शास्त्रगम्ये स्वीकृते सतीति यावत्। सर्व्वं प्रमाणमित्यागमवाक्यं प्रत्यक्षादि चेत्यर्थः। कथमैक्यावेदकमागमवाक्यं प्रत्यक्षादिना विरुध्यते तत्राह। तथेति॥ यथा ब्रह्मैकत्वे प्रवृत्तस्य शास्त्रस्य प्रत्यक्षादिविरोधं मन्यन्ते तथा तमस्मान् प्रति चोदयन्त्यपीति योजना। तत्र प्रत्यक्षविरोधं प्रकटयति। शब्दादय इति॥ सम्प्रत्यनुमानविरोधमाह। तथेति॥ स्वदेहसमवेतचेष्टातुल्यचेष्टा देहान्तरे दृष्टा सा च प्रयत्नवत्पूर्व्विका विशिष्टचेष्टात्वात् सम्मतवदित्यनुमानविरुद्धमद्वैतशास्त्रमित्यर्थः॥ तत्रैव प्रमाणान्तरविरोधमाह। तथा चेति॥ मानत्रयविरोधान्न ब्रह्मैक्यमिति प्राप्तं प्रत्याह। कुतर्केति॥ इति दृश्यता तेषामिति शेषः॥ द्वैतग्राहि प्रमाणविरुद्धमिति वदतां कथं शोच्यतेति पृच्छति। कथमिति॥ तत्र ब्रह्मैकत्वे प्रत्यक्षविरोधं परिहरति। श्रोत्रादीति॥ तथात्वे तदेकत्वाभ्युपगमविरोधः स्यादिति शेषः। यथा सर्व्वभूतस्थमेकमाकाशमित्यत्र न शब्दादिभेदग्राहिप्रत्यक्षविरोधस्तथैवं ब्रह्मैक्य-

भा॰ भेदेनाकाशैकत्वं विरुध्यत इत्यथ न विरुध्यते न तर्हि प्रत्यक्षविरोधः। यथोक्तं प्रति शरीरं शब्दाद्युपलब्धारो धर्माधर्मयोश्च कर्त्तारो भिन्ना अनुमीयन्ते। तथाच। आत्मैकत्वे अनुमानविरोध इति भिन्नाः कैरनुमीयन्त इति प्रष्टव्याः।

अथ यदि ब्रूयुः सर्व्वैरस्माभिरनुमानकुशलैरिति। के यूयमनुमानकुशला इत्येवं पृष्टानां किमुत्तरं। शरीरेन्द्रियमनआत्मसु च प्रत्येकमनुमानकौशलप्रत्याख्याने शरीरेन्द्रियमनःसाधना आत्मानोऽवयवमनुमानकुशला अनेककारकसाध्यत्वात्क्रियाणामिति चेत्। एवं तर्ह्यनुमानकौशले भवतामनेकत्वप्रसङ्गोऽनेककारकसाध्या हि क्रियेति भवद्भिरेवाभ्युपगतं। तत्रानुमानं च क्रिया। सा शरीरेन्द्रिय-

---

आ॰ चापि न तद्विरोधोऽस्तीत्याह। यथेति॥ तस्य कल्पितभेदविषयत्वादिति भावः। अनुमानविरोधं परोक्तमनुवदति। यथेति॥ या चेष्टा सा प्रयत्नवत्पूर्व्विकेत्येतावता नात्मभेदः स्वप्रयत्नपूर्व्वकत्वस्यापि सम्भवादनुपलब्धिविरोधे त्वनुमानस्यैवानुत्थानात्स्वदेहचेष्टायाः स्वप्रयत्नपूर्व्वकत्ववत् परदेहे चेष्टायास्तद्यत्नपूर्व्वकत्वे वादावेव स्वपरभेदः सिद्ध्येत् स च नाध्यक्षात्परस्यानध्यक्षत्वात्नानुमानादन्योऽन्याश्रयादित्याशयवानाह। भिन्ना इति॥

दोषान्तराभिधित्सया शङ्कयति। अथेति॥ अस्मदर्थं पृच्छति। के यूयमिति॥ स हि स्थूलदेहो वा करणजातं वा देहद्वयादन्यो वा। नाद्यौ। तयोरचेतनत्वादनुमातृत्वायोगात्। न तृतीयस्तस्याविकारित्वादिति भावः। किंशब्दस्य प्रश्नार्थतां मत्वा पूर्व्ववाद्याह। शरीरेति॥ आत्मा देहादिकरणसाधनर्व्विशिष्टोऽनुमाता क्रियायामनेककारकसाध्यत्वादेवंविशिष्टात्मकर्टकानुमानात्प्रतिदेहमात्मभेदधीरित्यर्थः। विशिष्टस्यात्मनोऽनुमानकर्टत्वे क्रियायामनेककारकसाध्यत्वादिति हेतुश्चेत्तदा तव देहादेरेकैकस्याप्यनेकत्वं

भा० मनआत्मसाधनैः कारकैरात्मकर्तृका निवर्त्येत इत्येतत्प्रतिज्ञातं । नच वयमनुमानकुशला इत्येवं वदद्भिः शरीरेन्द्रियमनआत्मानः प्रत्येकं वयमनेक इत्यभ्युपगतं स्यात् । अहोऽनुमानकौशलं दर्शितमपुच्छशृङ्गैस्तार्किकबलीवर्दैः । यो ह्यात्मानमेव न जानाति स कथं मूढस्तद्गतं भेदमभेदं वा जानीयात्तत्र किमनुमिनोति केन वा लिङ्गेन । न ह्यात्मनः स्वतो भेदप्रतिपादकं किञ्चिल्लिङ्गमस्ति । येन लिङ्गेनात्मभेदं साधयेत् ।

यानि लिङ्गान्यात्मभेदसाधनाय नामरूपवन्त्युपन्यस्यन्ति तानि नामरूपगतान्युपाधय एवात्मनो घटकरकापवरकभूच्छिद्राणीवाकाशस्य । यदाकाशस्य भेदलिङ्गं

---

आ० स्यादित्युत्तरमाह । एवं तर्हीति ॥ तदेव विवृणोति । अनेकेति ॥ आत्मनो देहादीनां चानुमानकारकाणां प्रत्येकमवान्तरक्रियाश्च यज्ञादिषु तथा दर्शनात्तथा चात्मनोऽवान्तरक्रिया किमनेककारकसाध्या किं वा नाद्येऽप्यात्मातिरिक्तानेककारकसाध्या किं वा तदनतिरिक्ततत्साध्या वा नाद्योऽनवस्थानात् । द्वितीये त्वात्मनोऽनेकत्वापत्तेर्नैरात्म्यं स्यान्न चावान्तरक्रिया नानेककारकसाध्या प्रधानक्रियायामपि तथात्वप्रसङ्गात् । एतेन देहादिष्वपि कारकत्वं प्रत्युक्तमिति भावः । यत्त्वात्मात्मप्रतियोगिकभेदवान् वस्तुत्वाद्घटवदिति । तत्रात्मा प्रतिपन्नोऽप्रतिपन्नो वा ॥ द्वितीयं प्रत्याह । यो हीति ॥ प्रतिपन्नत्वपक्षेऽपि भेदेनाभेदेन वा तत्प्रतिपत्तिः । उभयथापि नानुमानप्रवृत्तिरित्याह । तत्रेति ॥ इतश्चात्मभेदानुमानानुत्थानमित्याह । केनेति ॥ किंशब्दस्याक्षेपार्थं स्फुटयति । न हीति ॥

अक्ष्यादीनां प्रतिनियमादिलिङ्गवशादात्मभेदः सेत्स्यति चेन्नेत्याह । यानीति ॥ आत्मनः सजातीयभेदे लिङ्गाभावं दृष्टान्तेन

भा० पश्यति तदाऽऽत्मनोऽपि भेदलिङ्गं लभेत सः। न ह्यात्मनः
परतोऽपि विशेषमभ्युपगच्छद्भिस्तार्किकमतैरपि भेद-
लिङ्गमात्मनो दर्शयितुं शक्यते। स्वतस्तु दूरादपनीतमे-
वाविषयत्वादात्मनः। यद्यत्पर आत्मधर्मत्वेनाभ्युपगच्छति
तस्य तस्य नामरूपात्मकत्वाभ्युपगमान्नामरूपाभ्यां चात्म-
नोऽन्यत्वाभ्युपगमात्। आकाशो वै नामरूपयोर्निर्व-
हिता ते यदन्तरा तद्ब्रह्मेति श्रुतेः। नामरूपे व्याकरवा-
णीति च। उत्पत्तिप्रलयात्मके हि नामरूपे तद्विलक्षणञ्च
ब्रह्म। अतोऽनुमानस्यैवाविषयत्वात्कुतोऽनुमानविरोधः।
एतेनागमविरोधः प्रत्युक्तः। यदुक्तं ब्रह्मैकत्वे। यस्मा
उपदेशो यस्य चोपदेशग्रहणफलं तदभावादेकत्वोपदेशा-
नर्थक्यमिति। तदपि नानेककारकसाध्यत्वात्क्रियाणां

---

व्या० साधयति। यदेति॥ किमौपाधिको वा स्वाभाविको वात्मभेदः
साध्यते नाद्यः। सिद्धसाध्यत्वादित्यभिप्रेत्याह। न हीति॥ न द्वितीय
इत्याह। स्वतस्त्विति॥ आत्मा द्रव्यत्वातिरिक्तापरजातीयोऽस्मद-
विषयगुणवत्त्वाद्घटवदित्यनुमानान्तरमाशङ्क्यान्यतरासिद्धिं द-
र्शयति। यद्यदिति॥ ताभ्यामात्मनोऽन्यत्वाभ्युपगमे मानमुपन्यस्यति।
आकाश इति॥ तत्रैवोपपत्तिमाह। उत्पत्तीति॥ अनुमानविरो-
धमुपसंहरति। अत इति॥ आगमविरोधमुक्तन्यायातिदेशेन नि-
राकरोति। एतेनेति॥ औपाधिकभेदाश्रयत्वेन व्यवहारस्योपपन्न-
त्वदर्शनेनेति यावत्। प्रत्यक्षानुमानागमैरद्वैतस्याविरोधेऽपि स्या-
द्विरोधोऽर्थापत्त्येति चेदत आह। यदुक्तमिति॥ उपदेशो यस्मै
क्रियते यस्य चोपदेशग्रहणप्रयुक्तं फलं तयोर्ब्रह्मैकत्वे सत्युपदेशा-
नर्थक्यमित्यनुवादार्थः। किं क्रियायामनेककारकसाध्यत्वादेव
चोद्यते किंवा ब्रह्मणो नित्यमुक्तत्वादिति विकल्प्याद्यं दूषयति।
तदपीति। तासामनेककारकसाध्यत्वस्य प्रत्युक्तत्वादिति भावः॥

भा॰कस्योद्यो भवति । एकस्मिन् ब्रह्मणि निरुपाधिके नोपदेशो नोपदेष्टा न चोपदेशग्रहणफलं । तस्मादुपनिषदाञ्चानर्थक्यमित्येतदभ्युपगतमेव ।

अथानेककारकविषयानर्थक्यञ्चोद्यते न स्वतोऽभ्युपगमविरोधादात्मवादिनां । तस्मात्तार्किकचाटभटराजाप्रवेश्यमभयं दुर्गं इदमल्पबुद्ध्यगम्यं शास्त्रं। गुरुप्रसादरहितैश्च कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति। देवैरत्रापि विचिकित्सितं पुरा नैषा तर्केण मतिरपनेया। वरप्रसादलभ्यत्वश्रुतिस्मृतिवादेभ्यश्च । तदेजति तन्नैजति तद्दूरे तद्वदन्तिके इत्यादि विरुद्धधर्म्मसमवायित्वप्रकाशकमन्त्रवर्णेभ्यश्च । गीतासु च मत्स्थानि सर्व्वभूतानीत्यादि ।

---

आ॰ यदि ब्रह्मणो नित्यमुक्तत्वाभिप्रायेणोपदेशानर्थक्यं चोद्यते तत्र नित्यमुक्ते ब्रह्मणि ज्ञातेऽज्ञाते वा तदानर्थक्यं चोद्यत इति विकल्प्याद्यमङ्गीकरोति । एकस्मिन्निति ॥

द्वितीयमुत्थापयति । अथेति॥ उपदेशस्तावदनेकेषां कारकाणां साध्यतया विषयस्तदानर्थक्यं तमज्ञाते नित्यमुक्ते ब्रह्मणि चोद्यते-चेदित्यर्थः । सर्व्वैरात्मवादिभिरुपदेशस्य ज्ञानार्थमिष्टत्वात्तद्विरोधादज्ञाते ब्रह्मणि तदानर्थक्यचोद्यमनुपपन्नमित्याह । न स्वत इति॥ अद्वैते विरोधान्तराभावेऽपि तार्किकसमयविरोधोऽस्तीत्याशङ्क्याह । तस्मादिति ॥ प्रमाणविरोधाभावस्तच्छब्दार्थः । आर्य्यमर्य्यादां भिन्दानाश्चाटा विवक्ष्यन्ते। भटास्तु सेवका मिथ्याभाषिणस्तेषां सर्व्वेषां राजानस्तार्किकास्तैरप्रवेश्यमनाक्रमणीयमिदं ब्रह्मात्मैकत्वमिति यावत् ॥ शास्त्रादिप्रसादशून्यैरगम्यत्वे प्रमाणमाह। कस्तमिति ॥ देवतादेर्वरप्रसादेन लभ्यमित्यत्र श्रुतिस्मृतिवादाः सन्ति। तेभ्यश्च शास्त्रादिप्रसादहीनैरलभ्यं तत्त्वमिति निश्चितमित्यर्थः। शास्त्रादिप्रसादवतामेव तत्त्वं सुगममित्यत्र मौतं

उ॰ यो ह वै शिशुꣳ साधानꣳ सप्रत्याधानꣳ सस्थूणꣳ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि।

---

भा॰ तस्मात्परब्रह्मव्यतिरेकेण संसारी नाम नान्यद्वस्त्वन्तरमस्ति तस्मात्सुष्ठूच्यते। ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ इत्यादि श्रुतिशतेभ्यः। तस्मात्परस्यैव ब्रह्मणः सत्यस्य सत्यं नामोपनिषत्परा॥ चतुर्थाध्यायस्य प्रथमं ब्राह्मणं॥

ब्रह्म ज्ञपयिष्यामीति प्रस्तुतं। तत्र यतो जगज्जातं यन्मयं यस्मिंश्च लीयते तदेकं ब्रह्मेति ज्ञापितं। किमात्मकं पुनस्तज्जगज्जायते लीयते च पञ्चभूतात्मकं। भूतानि च नामरूपात्मकानि। नामरूपे सत्यमित्यपि ह्युक्तं। तस्य सत्यस्य पञ्चभूतात्मकस्य सत्यं ब्रह्म। कथं पुनर्भूतानि सत्यमिति मूर्त्तामूर्त्तब्राह्मणं। मूर्त्तामूर्त्तभूतात्मकत्वात्कार्य्यक-

---

आ॰ स्मार्त्तञ्च विज्ञान्तरं दर्शयति। तदेजतीति॥ ब्रह्मादितीये सर्व्वप्रकारविरोधाभावे फलितमाह। तस्मादिति॥ संसारिणो ब्रह्मणोऽर्थान्तरत्वाभावे श्रुतीनामानुकूल्यं दर्शयति। तस्मादिति॥ अद्वैते श्रुतिसिद्धे विचारनिष्पन्नमर्थमुपसंहरति। तस्मात्परस्येति॥ चतुर्थस्य प्रथमं ब्राह्मणं॥

वृत्तवर्त्तिष्यमाणयोः सङ्गतिं वक्तुं वृत्तं कीर्त्तयति। ब्रह्मेति॥ ब्रह्म ते ब्रवाणीति प्रक्रम्य, ज्ञपयिष्यामीति प्रतिज्ञाय जगतो जन्मादयो यतस्तदद्वितीयं ब्रह्मेति व्याख्यातमित्यर्थः॥ जन्मादिविषयस्य जगतः स्वरूपं पृच्छति। किमात्मकमिति॥ विप्रतिपत्तिनिरासार्थं तत्स्वरूपमाह। पञ्चेति॥ कथं तर्हि नामरूपकर्म्मात्मकं जगदित्युक्तं तत्राह। भूतानीति॥ तत्र गमकमाह

भा० रणात्मकानि भूतानि प्राणा अपि सत्यं। तेषां कार्य्यकरणात्मकानां भूतानां सतत्त्वनिर्दिधारयिषया ब्राह्मणद्वयमारभ्यते सैवोपनिषद्व्याख्या। कार्य्यकरणसतत्त्वावधारणद्वारेण हि सत्यस्य सत्यं ब्रह्मावधार्य्यते। अत्रोक्तं प्राणा वै सत्यं तेषामेष सत्यमिति। तत्र के प्राणाः कियन्तो वा प्राणविषया उपनिषदः का इति च ब्रह्मोपनिषत्प्रसङ्गेन करणानां स्वरूपमवधारयति। पथिगतकूपारामाद्यवधारणवत्। यो ह वै शिशुं साधानं सप्रत्याधानं सस्थूणं सदामं वेदत-स्येदं फलं। किन्तत् सप्त सप्तसङ्ख्याकान् ह द्विषतो द्वेषकर्तॄन् भ्रातृव्यान् भ्रातृव्या हि द्विविधा भवन्ति द्विषन्तोऽद्विषन्तश्च

---

आ० नामरूपे इति॥ भूतानां सत्यत्वे कथं ब्रह्मणः सत्यत्ववाचो युक्तिरित्याशङ्क्याह। तस्येति॥ तत्सत्यमित्यवधारणादाद्येषु भूतेषु सत्यत्वासिद्धिरिति शङ्कयित्वा समाधत्ते। कथमित्यादिना॥ सच्च त्यच्च सत्यमिति व्युत्पत्त्या भूतानि सत्यशब्दवाच्यानि विवक्ष्यन्ते चेत्कथं तर्हि कार्य्यकरणसङ्घातस्य प्राणानाञ्च सत्यत्वमुक्तं तत्राह। मूर्त्तेति॥ यथोक्तभूतरूपत्वात्कार्य्यकरणानां तदात्मकानि भूतानि सत्यानीत्यङ्गीकारात्कार्य्यकरणानां सत्यत्वं प्राणा अपि तदात्मकाः सत्यशब्दवाच्या भवन्तीति। प्राणा वै सत्यमित्यविरुद्धमित्यर्थः॥ एवं पातनिकां कृत्वोत्तरब्राह्मणद्वयस्य विषयमाह। तेषामिति॥ उपनिषद्व्याख्यानाय ब्राह्मणद्वयमित्युक्तिविरुद्धमेतदित्याशङ्क्याह। सैवेति॥ कार्य्यकरणात्मकानां भूतानां स्वरूपनिर्धारणैवोपनिषद्व्याख्येत्यत्र हेतुमाह। कार्य्येति॥ ब्राह्मणद्वयमेवमवतार्य्य शिशुब्राह्मणस्यावान्तरसङ्गतिमाह। तत्रेत्यादिना। उपनिषदः काः कियन्त्यो वेत्युपसङ्ख्यातव्यमित्याकाङ्क्षायामिति शेषः॥ ब्रह्म चेदवधारयितुमिष्टं तर्हि तदेवावधार्य्यतां किमिति मध्ये करणस्वरूपमवतार्य्यते तत्राह। पथीति॥ ब्राह्मणतात्पर्य्यमुक्त्वा तदक्षराणि योजयति। यो हेत्यादिना॥ विशेषणस्यार्थं भ्रातृव्यान्

उ॰ अयं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येद-

---

भा॰ तत्र द्विषन्तो ये भ्रातृव्यास्तान् द्विषतो भ्रातृव्यानवरुणद्धि सप्तेमे शीर्षण्याः प्राणा विषयोपलब्धिद्वाराणि तत्प्रभवा विषयरागाः सहजत्वाद्भ्रातृव्याः।

ते ह्यस्य स्वात्मस्थां दृष्टिं विषयविषयां कुर्वन्ति। तेन ते द्वेष्टारो भ्रातृव्याः। प्रत्यगात्मेक्षणप्रतिषेधकरत्वात्। काठके चोक्तं। पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन्नित्यादि। तत्र यः शिश्वादीन् वेद तेषां याथात्म्यमवधारयति स एतान् भ्रातृव्यानवरुणद्ध्यपावृणोति विनाशयति। तस्मै फलश्रवणेनाभिमुखीभूतायाह। अयं वाव शिशुः। कोऽसौ। यो ऽयं मध्यमः प्राणः। शरीरमध्ये यः प्राणो लिङ्गात्मा यः पञ्चधा शरीरमाविष्टो बृहन्पाण्डरवासः सोमराजन्नित्युक्तः। यस्मिन्वाङ्मनःप्रभृ-

---

आ॰ भिनत्ति। भ्रातृव्या हीति॥ के पुनरत्र भ्रातृव्या विवक्ष्यन्ते तत्राह। सप्तेति॥ कथं श्रोत्रादीनां सप्तत्वं द्वारभेदादित्याह। विषयेति॥ कथं तेषां भ्रातृव्यत्वमित्याशङ्क्य विषयाभिलाषद्वारेणेत्याह। तत्प्रभवा इति॥

तथापि कथं तेषां द्वेष्टृत्वमत आह। ते हीति॥ यद्यपीन्द्रियाणि विषयिविषयां दृष्टिं कुर्वन्त्येवात्मविषयामपि तां करिष्यन्ति। तत्र यथोक्तभ्रातृव्यत्वं तेषामिति तत्राह। प्रत्यगिति॥ इन्द्रियाणि विषयप्रवणानि तत्रैव दृष्टिहेतवो न प्रत्यगात्मनीत्यत्र प्रमाणमाह। काठके चेति॥ फलितमुपसंहरति। तत्रेति॥ उक्तविशेषणेषु भ्रातृव्येषु सिद्धेष्विति यावत्॥ प्राणे वागादीनि प्रविभक्तत्वे हेतुमाह। पञ्चधेति॥ यथा आत्मा त्रयश्चतुरोऽपि पादवन्मनकोशान्

उ० मेवाधानमिदं प्रत्याधानं प्राणःस्थूणान्नं दाम॥ १॥

---

भा० तानि करणानि विषक्तानि। पञ्जीशशकुनिदर्शनात्स एष शिशुरिव विषयेष्वितरकरणवदपटुत्वाच्छिशुः साधन-मित्युक्तं। किं पुनस्तस्य शिशोर्वत्सस्थानीयस्य करणात्मन आधानं। तस्येदमेव शरीरमाधानं कार्य्यात्मकं। आधीयते-ऽस्मिन्नित्याधानं। तस्य हि शिशोः प्राणस्येदं शरीरमधि-ष्ठानं। अस्मिन् हि करणान्यधिष्ठितानि प्रलब्धात्मकान्युप-लब्धिद्वारं भवन्ति न तु प्राणमात्रे विषक्तानि। तथा हि दर्शि-तमजातशत्रुणा। उपसंहृतेषु करणेषु विज्ञानमयो नोप-लभ्यते। शरीरदेशे व्यूढेषु तु करणेषु विज्ञानमय उपलभ्य-मान उपलभ्यते। तच्च दर्शितं पाणिपेषप्रतिबोधनेन। इदं प्रत्याधानं। शिरःप्रदेशविशेषेषु प्रति प्रत्याधीयत इति प्रत्याधानं। प्राणः स्थूणा अन्नपानजनिता शक्तिः प्राणो बल-मिति पर्य्यायाः। बलावष्टम्भो हि प्राणोऽस्मिन् शरीरे। स

---

आ० पर्य्यायेणोत्पाद्योत्क्रामति तथा प्राणो वागादीनीति निदर्शनात्प्राणे विषक्तानि वागादीनि सिद्धानीत्यर्थः॥ शरीरस्य प्राणं प्रत्याधानत्वं साधयति। तस्य हीति॥ शरीरस्याधिष्ठानत्वं स्फुटयति॥ अस्मिन् हीति॥ प्राणमात्रे विषक्तानि नोपलब्धिद्वाराणीत्यत्र प्रमाणमाह। तथा हीति॥ देहाधिष्ठाने प्राणे विषक्तानि तान्यु-पलब्धिद्वाराणीत्यत्रानुभवमनुकूलयति। शरीरेति॥ तत्रैवा-जातशत्रुब्राह्मणसंवादं दर्शयति। तच्चेति॥ शरीराश्रिते प्राणे वागादिषु विषक्तेषु उपलब्धुरुपलभ्यमानत्वमिति यावत्॥ प्रत्या-धानत्वं शिरसो व्युत्पादयति। प्रदेशेति॥ बलपर्यायस्य प्राणस्य स्थूणात्वं समर्थयते। बलेति॥ अयं मुमूर्षुरात्मा यस्मिन्काले देहम-

भा॰ यत्रायमात्माऽबल्यं नेत्य संमोहमिवेति दर्शनात्। यथा वत्सः स्थूणावष्टम्भः। एवं शरीरपक्षपाती वायुः प्राणः स्थूणेति। केचिदन्नं दाम। अन्नं हि भुक्तं त्रेधा परिणमते। यः स्थूलः परिणामः स एतद्द्वयं भूत्वेमामप्येति मूत्रञ्च पुरीषञ्च। यो मध्यमो रसः सारः स लोहितादिक्रमेण स्वकार्यं शरीरं साप्तधातुकं उपचिनोति। स्वयोन्यन्नागमे हि शरीरमुपचीयतेऽन्नमयत्वात्। विपर्य्ययेऽपक्षीयते पतति। यस्त्वणिष्ठो रसोऽमृतमूर्क्प्रभाव इति च कथ्यते। स नाभेरूर्द्ध्वं हृदयदेशमागत्य हृदयाद्विप्रसृतेषु द्वासप्ततिनाडीसहस्रेष्वनुप्रविश्य यत्तत्करणसङ्घातरूपं लिङ्गं शिशुसञ्ज्ञकं तस्य शरीरे स्थितिकारणं भवति बलमुपजनयत्स्थूणाख्यं तेनान्नमुभयतः पाशवत्सदामवत् प्राणशरीरयोर्निबन्धनं भवति॥ १॥

---

आ॰ बलभावं नीत्वा सम्मोहमिव प्रतिपद्यते तदोत्क्रामतीति षष्ठे दर्शनादिति यावत्। यथावष्टम्भोऽस्मिन्देहे प्राण इत्यत्र दृष्टान्तमाह। यथेति। भर्ष्टप्रपञ्चपक्षं दर्शयति। शरीरेति। उक्तं हि प्राण इत्युच्छ्वासनिश्वासकर्म्मा वायुः शारीरः शरीरपक्षपाती शब्द्यते। एतस्यां स्थूणायां शिशुः प्राणः करणदेवता लिङ्गपक्षपाती शब्द्यते। स देवः प्राण एतस्मिन्बाह्ये प्राणे बद्ध इति तद्व्याख्यातुं भूमिकां करोति। अन्नं हीति। त्वगसृङ्मांसमेदोमज्जास्थिशुक्रेभ्यः सप्तभ्यो धातुभ्यो जातं साप्तधातुकं। तथापि कथमन्नस्य दामत्वं तदाह। तेनेति॥ १॥

उ० तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन्लोहिन्यो राजयस्ताभिरेनꣳ रुद्रोन्वायत्तो ऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनका तयादित्यो यत् कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽ

---

भा० इदानीन्तस्यैव शिशोः प्रत्याधाने ऊढस्य चक्षुषि काश्चनोपनिषद उच्यन्ते। तमेताः सप्ताक्षितय उपतिष्ठन्ते। तं करणात्मकं प्राणं शरीरेऽन्नबन्धनं चक्षुष्यूढं एता वक्ष्यमाणाः सप्त सप्तसंख्याका अक्षितयोऽक्षितिहेतुत्वादुपतिष्ठन्ते। यद्यपि मन्त्रकरणे तिष्ठतिरुपपूर्व्व आत्मनेपदी भवति। इहापि सप्त देवताभिधानानि मन्त्रस्थानीयानि करणानि। तिष्ठतेरतोऽत्राप्यात्मनेपदं न विरुद्धं। कास्ता अक्षितय इत्युच्यन्ते। तत्तत्र या इमाः प्रसिद्धा अक्षन्नक्षिणि लोहिन्यो लोहिता राजयो रेखास्ताभिर्द्वारभूताभिरेतं मध्यमं प्राणं रुद्रोऽन्वायत्तोऽनुगतः। अथ या अक्षन्नक्षिणि आपो धूमादिसंयोगेनाभिव्यज्यमानास्ताभिरद्भिर्द्वारभूताभिः पर्जन्यो देवतात्माऽन्वायत्तोऽनुगत उपतिष्ठत इत्यर्थः।

---

आ० यो ह वै शिशुमित्यादौ सूचितशिश्वादिपदार्थान् व्याख्यायानन्तरसन्दर्भस्य तात्पर्यं दर्शयन्नुत्तरवाक्यमुपादाय व्याकरोति। इदानीमित्यादिना॥ ननु यत्र मन्त्रेणोपस्थानं क्रियते तत्रैवोपपूर्व्वस्य तिष्ठतेरात्मनेपदं भवति। उक्तं हि। उपान्मन्त्रकरणे (पा० १।३।२५) इति। दृश्यते यथादित्यं गायत्र्योपतिष्ठत इति। न चात्र मन्त्रेण किञ्चित् क्रियते। किन्त्वन्नाक्षयहेतुत्वात्प्राणस्य। सप्ताक्षितय इत्युपनिषदो विवक्ष्यन्ते तत्राह। यद्यपीति॥

उ० धरयैनं वर्त्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥ २ ॥

तदेष श्लोको भवत्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपं तस्यासत ऋषयः

---

भा० सप्तान्नभूतोऽक्षितिः प्राणस्य पर्जन्यो वर्षति आनन्दिनः प्राणा भवन्तीति श्रुत्यन्तरात्। या कनीनका दृक्शक्तिः तया कनीनकया द्वारेण आदित्यो मध्यमप्राणमुपतिष्ठते। यत् कृष्णं चक्षुषि तेनैनमग्निरुपतिष्ठते। यच्छुक्लं चक्षुषि तेनेन्द्रोऽधरया वर्त्तन्या पक्ष्मणा एनं पृथिव्यन्वायत्ताऽधरत्वसामान्यात्। द्यौरुत्तरयोर्द्ध्वत्वसामान्यात्। एताः सप्तान्नभूताः प्राणस्य सन्ततमुपतिष्ठन्ते इत्येवं यो वेद तस्यैतत् फलं। नास्यान्नं क्षीयते य एवं वेद ॥ २ ॥

तत्रैतस्मिन्नर्थे एष श्लोको मन्त्रो भवति। अर्वाग्बिलश्चमस इत्यादिः। तत्र मन्त्रार्थमाचष्टे श्रुतिः अर्वाग्बि-

---

आ० मन्त्रेण कस्य चिदनुष्ठानस्य करणे विवक्षिते तिष्ठतिरुपपूर्वो यद्यप्यात्मनेपदीभवति तथाप्यत्र सप्त रुद्रादिदेवतानामपि मन्त्रवदवस्थितानि तैश्च करणान्युपासनानुष्ठानान्यत्र क्रियन्ते। अतस्तिष्ठतेरुपपूर्वस्यात्मनेपदमविरुद्धमिति योजना। लोहितरेखाभा रुद्रस्य प्राणमत्यनुगतेरनन्तरमित्यर्थशब्दार्थः। पर्जन्यस्यान्नद्वारा प्राणाप्याय्यहेतुत्वे प्रमाणमाह। पर्जन्य इति। कथं पुनरेतेषां प्राणमत्यक्षितत्वं सर्वेषां सिध्यति तत्राह। एता इति। सम्यग्युपासितफलमाह। इत्येवमिति ॥ २ ॥

रुद्रादिशब्दानां देवताविषयत्वान्मन्त्रस्यापि तद्विषयत्वाच्छ्रुत्या चक्षुषि रुद्रादिगणस्योक्तत्वात् इन्द्रियसम्बन्धात्तस्य करणग्रामत्व-

उ० सप्त तीरे वागष्टमी ब्रह्मणा संविदानेत्यर्वाग्बिल-
श्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्च-
मस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति
प्राणा वै यशो निहितं विश्वरूपं प्राणानेतदाह
तस्यासत ऋषयः सप्त तीर इति प्राणा वा ऋषयः
प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वा-
ग्घ्यष्टमी ब्रह्मणा संवित्ते ॥ ३ ॥

---

भा० चमस ऊर्ध्वबुध्न इति। कः पुनरसावर्वाग्बिलश्चमस
ऊर्ध्वबुध्नः। इदं तच्छिरश्चमसाकारं हि तत्। कथमेष
ह्यर्वाग्बिलो मुखस्य बिलरूपत्वात् शिरसो बुध्नाकारत्वा-
दूर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति। यथा सोमश्च-
मसे। एवं तस्मिञ्छिरसि विश्वरूपं नानारूपं निहितं स्थितं
भवति। किं पुनस्तद्यशः प्राणा वै यशो विश्वरूपं प्राणाः
श्रोत्रादयो वायवश्च मरुतः सप्तधा तेषु प्रसृता यश इत्ये-
तदाह मन्त्रः। शब्दादिज्ञानहेतुत्वात्। तस्यासत ऋषयः
सप्ततीर इति। प्राणाः परिस्पन्दात्मकास्त एव च ऋषयः
प्राणानेतदाह मन्त्रः वागष्टमी ब्रह्मणा संविदानेति।

---

आ० प्रतीतेस्तद्विषयश्लोको न प्रसिद्धदेवताविषय इत्यभिप्रेत्याह।
तत्रेति॥ मन्त्रस्य व्याख्यानसापेक्षत्वं तत्रेत्युच्यते। शिरसश्चमसा-
कारत्वमस्पष्टमित्याशङ्क्य समाधत्ते। कथमित्यादिना॥ वागष्ट-
मीत्युक्तं। तस्याः सप्तमत्वेनोक्तत्वान्न चैकस्या द्वित्वमित्याशङ्क्याह।
ब्रह्मणेति॥ शब्दराशिर्ब्रह्म तेन संवादः संसर्गस्तं गच्छन्तीति

उ॰ इमावेव गोतमभरद्वाजा-वयमेव गोतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपा-वयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्न-मद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्वस्यात्ता

---

भा॰ ब्रह्मणा संवादं कुर्वत्यष्टमी भवति। तद्धेतुमाह वाग्घ्यष्टमी ब्रह्मणा संविदान इति ॥ ३ ॥

के पुनस्तस्य चमसस्य तीरे आसत ऋषय इति। इमा-वेव गोतमभरद्वाजौ कर्णौ अयमेव गोतमोऽयं भरद्वाजो दक्षिणश्चोत्तरश्च विपर्ययेण वा। तथा चक्षुषी उपदिशन्नु-वाच इमावेव विश्वामित्रजमदग्नी। दक्षिणं विश्वामित्र उत्तरं जमदग्निः विपर्य्ययेण वा। इमावेव वसिष्ठकश्यपौ नासिके उपदिशन्नुवाच। दक्षिणः पुटो भवति वसिष्ठः। उत्तरः कश्यपः। पूर्व्ववद्वा। वागेवात्रिरदनक्रियायोगा-त्सप्तमो वाचा ह्यन्नमद्यते। तस्मादत्तिर्ह वै प्रसिद्धं नामैत-दत्तृत्वादत्रिरिति। अत्तिरेव सन् यदत्रिरुच्यते परोक्षेण

---

आ॰ शब्दराशिमुच्चारयन्ती वागष्टमी स्यादिति यावत्। तथापि सप्तमत्वं विहाय कथमष्टमत्वं तत्राह। तद्धेतुमिति ॥ ३ ॥

वक्तृत्वात्तृत्वभेदेन द्विधा वागिष्टा तत्र वक्तृत्वेनाष्टमो सप्तमी चात्तृत्वेनेत्यविरोधः। रसना तूपलब्धिहेतुरिति भावः। विपर्ययेण वा इत्येतत्पूर्व्ववदित्युच्यते। अत्रिः सप्तम इति सम्बन्धः। अत्रित्वे हेतुः अदनक्रियायोगादिति। हेतुं साधयति। वाचा हीति॥ साध्यमर्थं निगमयति। तस्मादिति॥ तर्हि कथमत्रिरिति

II 3.1



उ॰ भवति सर्व्वमस्यान्नं भवति य एवं वेद ॥ ४ ॥
इतिद्वितीयं ब्राह्मणम् ॥

द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्च मर्त्यञ्चा-
मृतञ्च स्थितञ्च यच्च सच्च त्यञ्च ॥ १ ॥

---

भा॰ सर्व्वस्यैतस्यान्नजातस्य प्राणस्याग्निनिर्व्वचनविज्ञानादत्ता भवति। अत्तैव भवति। नामुष्मिन्नन्येन पुनः प्रत्यपद्यत इति। एतदुक्तं भवति सर्व्वमस्यान्नं भवति। य एवमेतद्यथोक्तं प्राणयाथात्म्यं वेद स एवं मध्यमः प्राणो भूत्वाऽऽधानप्रत्याधानगतो भोक्तैव भवति। न भोज्यं भोज्याद्व्यावर्त्तत इत्यर्थः॥ ४॥ चतुर्थस्य द्वितीयं ब्राह्मणम्॥

तत्र प्राणा वै सत्यमित्युक्तं। याः प्राणानामुपनिषदस्ता ब्राह्मणोपनिषत्प्रसङ्गेन व्याख्याताः। एते ते प्राणा इति च। ते किमात्मकाः। कथं वा तेषां सत्यत्वमिति च वक्तव्यमिति। पञ्चभूतानां सत्यानां कार्य्यकरणात्मकानां स्वरूपाव-

---

आ॰ व्यपदिश्यतेऽत आह। अत्तिरेवेति। प्राणस्य यदन्नजातं तदेतस्य सर्व्वस्यात्ता भवति अत्तिनिर्व्वचनविज्ञानादिति संबन्धः। सर्व्वमस्येत्यादिवाक्यमर्थोक्तिपूर्व्वकं प्रकटयति। अत्तैवेति। न केवलमत्तिनिर्व्वचनं ज्ञातमेतद्विज्ञानफलं किन्तु प्राणयाथात्म्यवेदनप्रयुक्तमित्याह। य एवमिति॥ ४॥ चतुर्थस्य द्वितीयं ब्राह्मणम्॥

सम्बन्धं वक्तुं वृत्तङ्कीर्त्तयति। तत्रेति। अजातशत्रुब्राह्मणावसानं सप्तम्यर्थः। उपनिषदो ब्रह्माद्यभिधानानि चकारादुक्तमित्यनुषङ्गः। उत्तरब्राह्मणतात्पर्य्यमाह। ते किमात्मका इति। ब्रह्मणो निर्धारणीयत्वात् किमिति भूतानां सत्त्वं निर्धार्य्यते

भा० धारणार्थमिदं ब्राह्मणमारभ्यते । यदुपाधिविशेषापनयद्वारेण नेति नेतीति ब्रह्मणः सत्यं निर्दिधारयिषितं । तत्र द्विरूपं ब्रह्म पञ्चभूतजनितकार्य्यकरणसम्बद्धं मूर्त्तामूर्त्ताख्यं मर्त्त्यामृतस्वभावं तज्जनितवासनारूपञ्च सर्व्वज्ञं सर्व्वशक्ति सोपाख्यं भवति । क्रियाकारकफलात्मकञ्च सर्व्वव्यवहारास्पदं । तदेव ब्रह्म विगतसर्व्वोपाधिविशेषं सम्यग्दर्शनविषयमजमजरममृतमभयं वाङ्मनसयोरप्यविषयमद्वैतत्वान्नेति नेतीति निर्दिश्यते । तत्र यदपोहद्वारेण नेति नेतीति निर्दिश्यते ब्रह्म । ते एते द्वे वाव वाव शब्दोऽवधारणार्थः । द्वे एवेत्यर्थः । ब्रह्मणः परमात्मनो रूपे रूप्यते याभ्यामरूपं परब्रह्माविद्याध्यारोपणाभ्यां । के ते द्वे । मूर्त्तञ्च एव मूर्त्तमेव च । तथा अमूर्त्तञ्च एवामूर्त्तमेव चेत्यर्थः । अन्तर्णीतस्वात्मविशेषणे मूर्त्तामूर्त्ते द्वे एवेत्यवधार्य्येते । कानि पुनस्तानि विशेषणानि

---

आ० तत्राह । यदुपाधीति ॥ तेषामुपाधिभूतानां सत्यावधारणार्थं ब्राह्मणमिति सम्बन्धः । सत्यस्य सत्यमित्यत्र षष्ठ्यन्तसत्यशब्दितं द्वेयं प्रथमान्तसत्यशब्दितमादेयं तयोराद्यस्वरूपोक्त्यर्थमथेत्यतः प्राक्तनं वाक्यं तदूर्द्धमाब्राह्मणसमाप्तेरादेयनिरूपणार्थमिति समुदायार्थः ॥ सविशेषमेव ब्रह्म न निर्विशेषमिति केचित् तान्निराकर्त्तुं विभजते । तत्रेति ॥ ब्राह्मणार्थे पूर्व्वोक्तनीत्या स्थिते सतीति यावत् ॥ द्वे वावेत्यादिश्रुतेः सोपाधिकं ब्रह्मरूपं विवृणोति । पञ्चभूतेति ॥ शब्दप्रत्ययविषयत्वं सोपाख्यत्वं । निरुपाधिकं ब्रह्मरूपं दर्शयति । तदेवेति ॥ एवं भूमिकामारचय्य अक्षराणि व्याकरोति । तत्रेत्यादिना ॥ द्वैरूप्ये सतीति यावत् । अमूर्त्तश्चेत्यत्र चकारादेवकारानुवृत्तिः । विवक्षितशब्दयो रूप-

उ० तदेतन्मूर्त्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमे-
तत्स्थितमेतत्सत्तस्यैतस्य मूर्त्तस्यैतस्य मर्त्यस्यै-

---

भा० मूर्त्तामूर्त्तयोरित्युच्यन्ते । मर्त्यञ्च मर्त्यं मरणधर्म्यमृतञ्च तद्विपरीतं स्थितं परिच्छिन्नं गतिपूर्व्वकं यत् स्थास्नु यच्च यातीति यद्व्याप्यपरिच्छिन्नं स्थितं विपरीतं सच्च सदित्यन्येभ्यो विशेष्यमाणासाधारणधर्म्मविशेषवत् त्यच्च तद्विपरीतं त्यदित्येव सर्व्वदा परोक्षाभिधानार्हं ॥ १ ॥

तत्र चतुष्टयविशेषणविशिष्टं मूर्त्तं तथाऽमूर्त्तञ्च । कानि मूर्त्तविशेषणानि कानि चेतराणीति विभज्यन्ते । तदेतन्मूर्त्तं मूर्च्छितावयवमितरेतरानुप्रविष्टावयवं घनं संहतमित्यर्थः । किं तद्यदन्यत् कस्मादन्यत् वायोश्चान्तरिक्षाच्च भूतद्वयात्परिशेषात्पृथिव्यादिभूतत्रयमेतन्मर्त्यं यदेतन्मूर्त्ताख्यं भूतत्रयं इदं मर्त्यं मरणधर्म्मि । कस्माद्यस्मात्स्थि-

---

आ० इयमवधारितश्चेन्मर्त्यत्वादीनि वक्ष्यमाणविशेषणान्यवधारणविरोधादयुक्तानीत्याशङ्क्याह । अन्तर्णीतेति । मूर्तामूर्तयोरन्तर्भावितानि स्वात्मनि यानि विशेषणानि तान्याकाङ्क्षाद्वारा दर्शयति । कानि पुनरित्यादिना । यद्गतिपूर्व्वकं स्थास्नु तत्परिच्छिन्नं स्थितमिति योजना । विशेष्यमाणत्वं प्रत्यक्षेणोपलभ्यमानत्वं ॥ १ ॥

तत्रेति निर्धारणायां सप्तमी । तत्र प्रत्येकं मूर्तामूर्तचतुष्टयविशेषणत्वे सतीति यावत् । कथं स्थितत्वे मर्त्यत्वं तत्राह । परिच्छिन्नं हीति । तदेव दृष्टान्तेन स्पष्टयति । यथेत्यादिना । अतो मर्त्यत्वान्मूर्तमिति शेषः । मूर्तत्वमर्त्यत्वयोरन्योन्यं हेतुहेतुमद्भावं द्योतयितुं वाशब्दः । कथं पुनश्चतुर्षु धर्मेषु विशेषणविशेष्यभावो हेतुहेतुमद्भावश्च निश्चेतव्यस्तत्राह । अन्योन्येति ।

उ॰ तस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः ॥ २ ॥

---

भा॰ तमेतत् परिच्छिन्नं मूर्त्तान्तरेण सम्प्रयुज्यमानं विरुध्यते। यथा घटः स्तम्भकुड्यादिना तथामूर्त्तं स्थितं परिच्छिन्नमर्थान्तरसम्बन्धि। ततोऽर्थान्तरविरोधान्मर्त्यमेतत्सद्विशेष्यमाणासाधारणधर्म्मवत्। तस्माद्धि परिच्छिन्नं परिच्छिन्नत्वान्मर्त्यमतो मूर्त्तं। मूर्त्तत्वाद्वा मर्त्यं मर्त्यत्वात् स्थितं स्थितत्वात् सत्। अतोऽन्योन्याव्यभिचाराच्चतुर्णां धर्म्माणां यथेष्टं विशेषणविशेष्यभावो हेतु हेतुमद्भावश्च दर्शयितव्यः। सर्व्वथाऽपि तु भूतत्रयं चतुष्टयविशेषणविशिष्टं मूर्त्तं रूपं ब्रह्मणः। तत्र चतुर्णामेकस्मिन् गृहीते विशेषणे इतरद्गृहीतमेव विशेषणमित्याह। तस्यैतस्य मूर्त्तस्यैतस्य स्थितस्यैतस्य सतश्चतुष्टयविशेषणस्य भूतत्रयस्येत्यर्थः। एष रसः सार इत्यर्थः। त्रयाणां हि भूतानां सारिष्ठः सविता। एतत् साराणि त्रीणि भूतानि यत एतत् त्रितयविभज्य-

---

आ॰ रूपरूपीभावस्यापि व्यवस्थाभावमाशङ्क्याह। सर्व्वथापीति। तस्यैतस्यैव रस इति वक्तव्ये किमिति मूर्त्तस्येत्यादिना विशेषणचतुष्टयमनूद्यते तत्राह। तत्रेति। सारत्वं साधयति। त्रयाणां हीति। तत्र प्रतिज्ञामनूद्य हेतुमाह। एतदिति। एतेन सवितृमण्डलेन क्षतानि विभज्यमानान्यस्त्रीयन्तीति श्रुत्यन्तरोक्तमित्येतानि रूपाणि विशेषणानि येषां पृथिव्यत्तेजसां तानि तथा। ततो भूतत्रयकार्य्यमध्ये सवितृमण्डलस्य प्राधान्यमित्यर्थः। य एष तपति। अस्यार्थमाह। आधिदैविकस्येति। हेतुवाक्य-

उ॰ अथामूर्त्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्य-
त्तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य ।

---

भा॰ मानरूपविशेषणानि भवन्ति। आधिदैविकस्य कार्य्यस्यैतद्रूपं
यत् सविता यदेतन्मण्डलं तपति । सतो भूतत्रयस्य हि
यस्मादेष रस इत्येतदुच्यते। मूर्त्तो ह्येष सविता तपति ।
सारिष्ठश्च। यत्त्वाधिदैविकं करणं मण्डलस्याभ्यन्तरं तद्व-
क्ष्यामः ॥ २ ॥

अथामूर्त्तमथाधुनाऽमूर्त्तमुच्यते । वायुश्चान्तरिक्षञ्च
यत्परिशेषितं भूतद्वयं एतदमृतममूर्त्तत्वादस्थितमतोऽ
विरुद्ध्यमानं केनचिदमृतममरणधर्म्यैतद्यत् स्थितविपरीतं
व्याप्य परिच्छिन्नं यस्माद्यदेतदन्येभ्योऽप्रविभज्यमानविशेष-
मतस्त्यं त्यदिति परोक्षाभिधानार्हमेव पूर्व्ववत्। तस्यैतस्या-
मूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्य चतुष्टयविशेषण-
स्यामूर्त्तस्यैष रसः। कोऽसौ। य एष एतस्मिन्मण्डले पुरुषः

---

आ॰ मादाय तस्य तात्पर्यमाह। सत इति॥ मण्डलमेवैतच्छब्दार्थः॥
मण्डलपरिग्रहे हेतुमाह। मूर्त्तो हीति॥ मूर्त्तग्रहणस्योपलक्षण-
त्वात् चतुर्णामन्वयो हेतुत्वार्थः । अतश्च मण्डलात्मा सविता
भूतत्रयकार्य्यमध्ये भवति प्रधानं कार्य्यकारणयोरैकरूप्यस्यौत्स-
र्गिकत्वादित्याह । सारिष्ठश्चेति॥ मण्डलञ्चेदाधिदैविकं कार्य्यं
किम्पुनस्तथाविधं करणमिति तदाह। यत्त्विति॥२॥

आधिदैविकं मूर्त्तमभिधाय तादृगेवामूर्त्तं प्रतीकोपादानपूर्व्वकं
स्फुटयति। अथेत्यादिना॥ अमूर्त्तमुभयत्र हेतुत्वेन सम्बध्यते।
अपरिच्छिन्नत्वमविरोधे हेतुः। अमूर्त्तत्वादीनां मिथो विशेषण-
विशेष्यभावो हेतुहेतुमद्भावश्च यथेष्टंग्रहण्य इत्याह। पूर्व्व-

उ॰ त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुष-
स्त्यस्य ह्येष रस इत्यधिदैवतं ॥ ३ ॥

---

भा॰ करणात्मको हिरण्यगर्भः प्राण इत्यभिधीयते । यः स
एषः अमूर्त्तस्य भूतद्वयस्य रसः पूर्व्ववत् सारिष्ठः । एतत्पुरु-
षसारश्चामूर्त्तं भूतद्वयं हैरण्यगर्भलिङ्गारम्भाय हि भूत-
द्वयाभिव्यक्तिरव्याकृतात्तस्मात्तादर्थ्यात्तत्सारं भूतद्वयं ।

त्यस्य ह्येष रसो यस्माद्यो मण्डलस्थः पुरुषो मण्ड-
लवन्न गृह्यते सारस्य भूतद्वयस्य तस्मादस्ति मण्डलस्थस्य
पुरुषस्य भूतद्वयस्य च साधर्म्यं। तस्माद्युक्तं प्रसिद्धवद्धेतू-
पादानं त्यस्य ह्येष रस इति । रसः कारणं हिरण्यगर्भ-
विज्ञानात्मा चेतन इति केचित् । तच्च किल हिरण्य-

---

आ॰ वदिति ॥ पुनरुक्तिरपि पूर्व्ववत् । य एष इत्यादिप्रतीकग्रहणं
तस्य व्याख्यानं । करणात्मक इति यथा भूतत्रयस्य मण्डलं सारि-
ष्ठमुक्तं तद्वदित्याह । पूर्व्ववदिति ॥ सारिष्ठत्वमनूद्य हेतुमाह ।
एतदिति ॥ तादर्थ्याद्भूतद्वयस्य भूतत्रयोपसर्जनस्य स्वयं प्रधानस्य
हिरण्यगर्भारम्भार्थत्वादिति यावत्। भूतद्वयम्भूतत्रयोपसर्जन-
मिति शेषः ॥

हेतुमवताय्यं व्याचष्टे। त्यस्य हीति ॥ पुरुषशब्दादुपरिष्टा-
त्पशब्दो द्रष्टव्यः । अमूर्तत्वादिति विशेषणचतुष्टयवैशिष्ट्यसा-
धर्म्यं तत्फलमाह । तस्मादिति ॥ स्वमतमुक्त्वा भर्तृप्रपञ्चमतमाह ।
रस इति॥ त्यस्य हीत्यादौ रसशब्देन भूतद्वयकारणमुक्तं न च
तच्चेतनादन्यत् । नच जीवः । तस्याऽसामर्थ्यात् । नापि परः कौट-
स्थ्यात् । तस्माच्चेतनः सूत्रात्मैव रसशब्दार्थः । सोऽपि कथं भूतद्वय-
कारणमत आह । तच्चेति ॥ परकीयपक्षः समभ्यर्थः । तत्क-
र्मवशाच्चासाधारणमसव्यतिपन्नमित्यभिप्रेत्य किलेत्युक्तं । यथाहुः ॥

भा॰ गर्भविज्ञानात्मनःकर्म्म वाय्वन्तरिक्षयोः प्रयोक्तृ तत्कर्म्म वाय्वन्तरिक्षाधारं सदन्येषां भूतानां प्रयोक्तृ भवति। तेन स्वकर्म्मणा वाय्वन्तरिक्षयोः प्रयोक्तेति तयो रसः कारणमुच्यत इति। तच्च मूर्त्तरसेनातुल्यत्वात्। मूर्त्तस्य तु भूतत्रयस्य रसो मूर्त्तमेव मण्डलं दृष्टं भूतत्रयसमानजातीयं न चेतनः। तथा मूर्त्तयोरपि भूतयोस्तत्समानजातीयेनैवामूर्त्तरसेन युक्तं भवितुं। वाक्यप्रवृत्तेस्तुल्यत्वात्। यथा हि मूर्त्तामूर्त्ते चतुष्टयधर्म्मवती विभज्येते। तथा रसरसवतोरपिमूर्त्तामूर्त्तयोस्तुल्येनैव न्यायेन युक्तो विभागः। न चार्द्धवैशसं। मूर्त्तरसेऽपि मण्डलाधिपश्चेतनो विवक्ष्यत इति चेदत्यल्पमिदमुच्यते। सर्व्वत्रैव तु मूर्त्ता-

---

आ॰ यो ह्येतस्मिन्मण्डले विज्ञानात्मा स एव स्वस्वविद्याकर्म्मपूर्व्वप्रज्ञापरिष्कृतो विज्ञानात्मत्वमापद्यते। तदेतत्कर्म्मरूपं विज्ञानात्मनस्तद्वाय्वन्तरिक्षप्रयोक्तृ भवतीति। ननु हिरण्यगर्भदेहस्य पञ्चभूतात्मकत्वात्तद्वयोत्पत्तावपीतरभूतोत्पत्तिं विना कुतोऽस्य भोगः सिध्यतीत आह। तत्कर्म्मेति। वाय्वन्तरिक्षाधारं तद्रूपपरिच्छिन्नमिति यावत्। वाय्वन्तरिक्षयोर्भूतत्रयोपसर्जनयोरिति शेषः। प्रयोक्ता हिरण्यगर्भविज्ञानात्मा निराकरोति। तन्नेति। कथं मूर्तरसेन सह ययोक्तामूर्तरसस्यातुल्यतेत्याशङ्क्याह। मूर्तस्येति। अमूर्तश्चासौ रसश्चेत्यमूर्तरसस्तेनेति यावत्। अमूर्तरसस्य चेतनत्वे तु रसयोर्वैजात्यं स्यादिति भावः। अस्तु तयोर्वैजात्यं नेत्याह। यथाहीति। मूर्तं मर्त्यं स्थितं सदिति मूर्तस्य धर्म्मचतुष्टयममूर्तं अमृतं यापि त्यदित्यमूर्तस्य विभजनं। असङ्कीर्णत्वेन प्रदर्शनं यथा रसवतो मूर्तामूर्तयोस्तुल्यत्वमुक्तं। तथा रस रसयोरपि। तयोस्तुल्येनैव प्रकारेण प्रदर्शनमुचितं नत्वमूर्तरसः। चेतनो मूर्तो रसस्त्वचेतन इति

उ० अथाध्यात्ममिदमेव मूर्त्तं यदन्यत्प्राणाच्च यश्चा-

---

भा० मूर्त्तयोर्ब्रह्मरूपेण विवक्षितत्वात् । पुरुषशब्दोऽचेतनेऽनुपपन्न इति चेत् । न । पक्षपुच्छादिविशिष्टस्यैव लिङ्गस्य पुरुषशब्ददर्शनात् । न वा इत्थं सन्तः शक्ष्यामः । प्रजाः प्रजनयितुमिमान् सप्त पुरुषानेकं पुरुषं करवामेति । त एतान् सप्त पुरुषानेकं पुरुषमकुर्वन्नित्यादौ अन्नरसमयादिषु च श्रुत्यन्तरेषु पुरुषशब्दप्रयोगादित्यधिदैवतमित्युक्तोपसंहार अध्यात्मविभागोत्तरार्थः ॥ २ ॥

अथाधुनाध्यात्मं मूर्त्तामूर्त्तयोर्विभाग उच्यते । किन्त-

---

आ० युक्तो विभागः । अर्धजरतीयस्याप्रामाणिकत्वादित्याह । तथेति ॥ अर्द्धवैशसं परिहर्तुं शङ्कते । मूर्तरसेऽपीति ॥ अमूर्तरसवन्मूर्तरसशब्देनापि चेतनस्यैव शक्यो मण्डलापन्नस्य ग्रहणमित्येतद्दूषयति । अत्यल्पमिति ॥ मण्डलस्य चेतनकार्य्यतयाऽचेतनत्वे सर्व्वस्य तत्कार्यतया तन्मात्रत्वाद्द्वयोश्चेतनतेति विशेषणानर्थक्यमित्यर्थः । मण्डलाधारस्य चेतनत्वं पुरुषशब्दवशादेष्टव्यमिति शङ्कते । पुरुषशब्द इति ॥ अनुपपत्तिं परिहरति । नेत्यादिना ॥ तदेव व्याकरोति । न वा इति ॥ इत्थं विभक्ताः सन्तो नैव शक्ष्यामो व्यवहारं प्रजनयितुमित्यालोच्य त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाङ्मनोरूपानिमान् सप्त पुरुषानेकं पुरुषं संहतं लिङ्गं करवामेति निश्चित्य अमी प्राणाः सप्तपुरुषानुक्तानेकं पुरुषं लिङ्गात्मानं कृतवन्त इत्यर्थः । आदिशब्देन लौकिकमपि दर्शनं गृह्यते । श्रुत्यन्तरं तैत्तिरीयकं पुरुषशब्दप्रयोगः । स वा एष पुरुषोऽन्नरसमय इत्यादिः । परकीयं व्याख्यानं प्रत्याख्याय प्रकृतं श्रुतिव्याख्यानमनुवर्तयति । अधिदैवतमिति ॥ २ ॥

चक्षुषो रसत्वं प्रतिज्ञापूर्व्वकं प्रकटयति । आध्यात्मिकस्येत्यादिना ॥ चक्षुषः सारत्वे शरीरावयवेषु प्राधम्यं हेत्वन्तरमाह ।

उ॰ यमन्तरात्मन्नाकाश एतन्मर्त्त्यमेतत्स्थितमेतत्सत्त-
स्यैतस्य मूर्त्तस्यैतस्य मर्त्त्यस्यैतस्य स्थितस्यैतस्य
सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥ ४ ॥

---

भा॰ मूर्त्तमिदमेव किन्तेदं यदन्यत्प्राणाच्च वायोर्यश्चायमन्तर-
भ्यन्तर आत्मन्याकाशः खं शरीरस्थश्च यः प्राण एतद्द्वये
वर्जयित्वा यदन्यच्छरीरारम्भकं भूतत्रयमेतन्मर्त्त्यमित्यादि
समानमन्यत्पूर्व्वेण। एतस्य सतो ह्येष रसो यच्चक्षुरित्या-
ध्यात्मिकस्य शरीरारम्भकस्य कार्य्यस्यैष रसः सारस्तेन हि
सारेण सारवदिदं शरीरं समस्तं। यथाधिदैवतमादित्य-
मण्डलेन प्राथम्याच्च चक्षुषी एव प्रथमे सम्भवत इति। तेजो
रसो निरवर्त्ततामिरिति लिङ्गात्तैजसं हि चक्षुरेतत्सार-
माध्यात्मिकं भूतत्रयं सतो ह्येष रस इतिमूर्त्तत्वसारत्वे
हेत्वर्थः ॥ ४ ॥

---

आ॰ प्राथम्याच्चेति। तत्र प्रमाणमाह। चक्षुषी एवेति॥ सम्भवतो
जायमानस्य जन्तोश्चक्षुषी एव प्रथमं प्रधाने सम्भवतो
जायेते। शम्बरै रेतसः सिक्तस्य चक्षुषी एव प्रथमे सम्भवत इति
श्रावणमित्यर्थः। चक्षुषः सारत्वे हेत्वन्तरमाह। तेज इति॥
शरीरमात्रस्याविशेषेण निष्पादकं। तत्र सर्व्वत्र सन्निहितमपि
तेजो विशेषतश्चक्षुषि स्थितं। आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविश-
दिति श्रुतेः। अतः तेजः शब्दपर्य्यायरसशब्दस्य चक्षुषि प्रवृत्तिर-
विरुद्धेति भावः। इतश्च तेजःशब्दपर्य्यायो रसशब्दश्चक्षुषि सम्भ-
वतीत्याह। तेजसो हीति॥ प्रतिज्ञार्थमुपसंहरति। एतत्सार-
मिति॥ हेतुमवतार्य्य तस्यार्थमाह। सतो हीति॥ ४॥

II 3. 5



उ॰ अथामूर्त्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतत्त्यं तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन्पुरुषस्त्यस्य ह्येष रसः ॥ ५ ॥

---

भा॰ अथाधुनाऽमूर्त्तमुच्यते । यत्परिशेषितं भूतद्वयं प्राणश्च यश्चाऽयमन्तरात्मन्नाकाश एतदमूर्त्तं । अन्यत्पूर्व्ववत् । एतस्य त्यस्यैष रसः सारो योऽयं दक्षिणेऽक्षन्पुरुषो दक्षिणेऽक्षन्निति विशेषग्रहणं शास्त्रप्रत्यक्षत्वात् । लिङ्गस्य हि दक्षिणेऽक्ष्णि विशेषतोऽधिष्ठातृत्वं शास्त्रस्य प्रत्यक्षं सर्व्वश्रुतिषु तथा प्रयोगदर्शनात् । त्यस्य ह्येष रस इति पूर्व्ववत् । विशेषतोऽग्रहणादस्यामूर्तत्वसारत्वे हेत्वर्थः ॥ ५ ॥

---

आ॰ चक्षुषो मूर्तत्वान्मूर्तभूतत्रयकार्य्यत्वं युक्तं । साधर्म्यादेहावयवेषु प्राधान्याच्च तस्याध्यात्मिकभूतत्रयसारत्वसिद्धिरित्यर्थः ॥ कुतो विशेषोक्तिरित्याशङ्क्याह । दक्षिण इति ॥ शास्त्रस्य तेन वा दक्षिणेऽक्षिणि विशेषस्य प्रत्यक्षत्वादित्यर्थः ॥ द्वितीयं व्याख्यानमाश्रित्य हेत्वर्थं स्फुटयति । लिङ्गस्येति ॥ हेतुमनूद्य तदर्थं कथयति । त्यस्येति ॥ यथा पूर्व्वत्र चक्षुषि मूर्तादिचतुष्टयदृष्ट्या तादृग्भूतत्रयसारतोक्ता । तथात्रापि लिङ्गात्मन्यमूर्तत्वादिचतुष्टयस्य विशेषेणाग्रहणादमूर्तत्वादिना साधर्म्यात्तथाविधभूतद्वयसारत्वं । तस्य शरीरे प्राधान्याच्च तत्सारत्वसिद्धिरित्यर्थः ॥ ५ ॥

उ॰ तस्य हैतस्य पुरुषस्य रूपं ।

भा॰ ब्रह्मण उपाधिभूतयोर्मूर्त्तामूर्त्तयोः कार्य्यकरणविभागेनाध्यात्माधिदैवतयोर्विभागो व्याख्यातः सत्यशब्दवाच्ययोः । अथेदानीं तस्य हैतस्य पुरुषस्य करणात्मनो लिङ्गस्य रूपं वक्ष्यामो वासनामयं मूर्त्तामूर्त्तवासनाविज्ञानमयसंयोगजनितं विचित्रं पटभित्तिचित्रवन्मायेन्द्रजालमृगतृष्णिकोपमं सर्व्वव्यामोहास्पदं एतावन्मात्रमेवात्मेति विज्ञानवादिनो वैनाशिका यत्र भ्रान्ताः । एतदेव वासनारूपं पटरूपवदात्मनो द्रव्यस्य गुण इति नैयायिका वैशेषिकाश्च सम्प्रतिपन्नाः । इदमात्मार्थं त्रिगुणं

आ॰ तस्य हेत्यादि वृत्तान्तवादपूर्व्वकं सम्बन्धमाह । ब्रह्मण इति ॥ विभागो विशेषः । तस्याधिदैवं प्रकृतस्यैतस्याध्यात्मसन्निहितस्यामूर्तरसभूतान्तःकरणस्यैव रागादिवासनेति वक्तुं तस्येत्यादि वाक्यमित्यर्थः ॥ कथमिदं रूपं लिङ्गस्य प्राप्तमिति तदाह । मूर्त्तेति ॥ मूर्त्तामूर्त्तवासनाभिर्विज्ञानमयसंयोगेन च जनितं बुद्धे रूपमिति यावत् ॥ नेदमात्मनो रूपं तस्यैकरसस्यानेकरूपत्वानुपपत्तेरिति विशिनष्टि ॥ विचित्रमिति ॥ वास्तवत्वशङ्कां वारयति ॥ मायेति ॥ वैचित्र्यमनुसृत्यानेकोदाहरणं । अन्तःकरणस्यैव रागादिवासनाखेत्कथं पुरुषस्तन्मयो दृश्यते तत्राह । सर्व्वेति ॥ तदेव व्याकुर्व्वन्विज्ञानवादिनां भ्रान्तिमाह । एतावन्मात्रमिति ॥ बुद्धिमात्रमेवाहंवृत्तिविशिष्टं स्वरसभङ्गुरं रागादिकलुषितमात्मा नान्यः स्थायी क्षणिको वेति यत्र ते भ्रान्तास्तस्य रूपं वक्ष्याम इति सम्बन्धः ॥ तार्किकाणामपि बौद्धवद्भ्रान्तिमुद्भावयति । एतदेवेति ॥ अन्तःकरणमेवाहंधीग्राह्यं रागादिधर्म्मकमात्मा तस्य वासनामयं रूपं पटस्य शौक्ल्यवद्गुणः स च संसार इति यत्र तार्किकाः भ्रान्तास्तस्य रूपं वक्ष्याम इति पूर्व्ववत् । साङ्ख्यानां भ्रान्तिमाह ॥

भा॰ स्वतन्त्रं प्रधानाश्रयं पुरुषार्थेन हेतुना प्रवर्त्तत इति साङ्ख्याः। औपनिषदम्मन्या अपि केचित्प्रक्रियां रचयन्ति। मूर्त्तामूर्त्तराशिरेकः परमात्मराशिरुत्तमः ताभ्यामन्योऽयं मध्यमः किल तृतीयः कर्त्ता भोक्ता विज्ञानमयेनाजातशत्रुप्रतिबोधितेन सह विद्याकर्म्मपूर्व्वप्रज्ञासमुदायप्रयोक्तृकर्म्मराशिः प्रयोज्यः पूर्व्वोक्तो मूर्त्तामूर्त्तभूतराशिः साधनञ्चेति। तत्र च तार्किकैः सह सन्धिं कुर्व्वन्ति। लिङ्गाश्रयश्चैष कर्म्मराशिरित्युक्त्वा पुनस्ततस्त्रस्यन्तः साङ्ख्यत्वभयात्सर्व्वः

---

व्या॰ इदमिति॥ केन प्रकारेणान्तःकरणमात्मार्थमिष्यते तत्राह। पुरुषार्थेनेति। कथमस्य त्रिगुणत्वादिकं सिद्ध्यति तत्राह। प्रधानाश्रयमिति॥ नान्तःकरणमेवात्मा किन्त्वन्यः सर्व्वगतः सर्व्वक्रियाशून्यः स्वप्रकाशस्तस्य भोगापवर्गानुगुण्येन प्रधानात्मकमन्तःकरणं तत्सधर्म्मकं प्रवर्त्तत इति यत्र कापिला भ्राम्यन्ति तस्य रूपं वक्ष्याम इति सम्बन्धः। यत्र विपश्चितां भ्रान्तिस्तदन्तःकरणं तस्य हेतुत्वेनोच्यते। नात्मेति॥ स्वपक्षमुक्त्वा भर्तृप्रपञ्चपक्षमुत्थापयति। औपनिषदम्मन्या इति॥ कीदृशी प्रक्रियेत्युक्ते राशित्रयकल्पनां वदन्नादावधमं राशिं दर्शयति। मूर्तेति॥ उत्कृष्टराशिमाचष्टे। परमात्मेति॥ राश्यन्तरमाह। ताभ्यामिति॥ तान्येतानि त्रीणि वस्तूनि मूर्तामूर्तमाहारजनादिरूपमात्मतत्त्वमिति परोक्तिमाश्रित्य राशित्रयकल्पनामुक्त्वा मध्यमाधमराश्योर्विशेषमाह। प्रयोक्तेति॥ उत्पादकत्वं प्रयोक्तृत्वं। कर्म्मग्रहणं विद्याप्रज्ञयोरुपलक्षणं। साधनं ज्ञानकर्म्मकारणं कार्य्यकरणजातं तदपि प्रयोज्यमित्याह। साधनञ्चेति॥ इतिशब्दो राशित्रयकल्पनासमाप्त्यर्थः। परकीयकल्पनान्तरमाह। तत्रेति॥ राशित्रये कल्पिते सतीति यावत्॥ सन्धिकरणमेव स्फोरयति। लिङ्गाश्रयश्चेति॥ तत इत्युक्तिपरामर्शः। साङ्ख्यभयात्त्रस्यन्तो वैशेषिकचित्तमप्यनुसरन्तीति सम्बन्धः। कथं तच्चित्तानुसरणं

भा० कर्म्मराशिः पुष्पाश्रय इव गन्धः पुष्पवियोगेऽपि पुटतैला-
श्रयो भवति तद्वल्लिङ्गवियोगेऽपि परमात्मैकदेशमाश्रयति।
स परमात्मैकदेशः किलान्यत आगतेन गुणेन कर्म्मणा
सगुणो भवति। निर्गुणोऽपि सन्कर्त्ता भोक्ता बध्यते मुच्यते
च विज्ञानात्मेति वैशेषिकचित्तमप्यनुसरन्ति॥

स च कर्म्मराशिर्भूतराशेरागन्तुकः स्वतो निर्गुण एव
परमात्मैकदेशत्वात् स्वत उत्थिताऽविद्याऽनागन्तुकाप्यूषर-
वदनात्मधर्म्म इत्यनया कल्पनया साङ्ख्यचित्तमनुवर्त्तन्ते।

---

आ० तदुपपादयति। कर्म्मराशिरिति॥ कथं निर्गुणमात्मानं कर्म्मराशि-
राश्रयतीत्याशङ्क्याह। परमात्मैकदेश इति॥ अन्यत इति
कार्य्यकरणात्मकाद्भूतराशेरिति यावत्॥ यदा भूतराशिनिष्ठं
कर्म्मादि तद्द्वाराऽऽत्मन्यागच्छति तदा सकर्तृत्वादि संसारमनु-
भवतीत्याह। सन्कर्त्तेति॥ स्वतस्तस्य कर्म्मादिसम्बन्धत्वेन संसा-
रित्वं स्यादिति चेन्नेत्याह। स चेति॥

निर्गुण एव विज्ञानात्मेति शेषः॥ साङ्ख्यचित्तानुसा-
रार्थमेव परेषां प्रक्रियान्तरमाह। स्वत इति। नैसर्गिक्यप्य-
विद्या परस्मादेवाभिव्यक्ता सती तदेकदेशं विकृत्य तस्मिन्नेवान्तः-
करणाख्ये तिष्ठतीति वदन्तोऽनात्मधर्म्मोऽविद्येत्युक्त्वा साङ्ख्यचि-
त्तमप्यनुसरन्तीत्यर्थः॥ अविद्या परस्मादुत्पन्ना चेत्तमेवाश्रयेन्नत-
देकदेशमित्याशङ्क्याह। ऊषरवदिति। यथा पृथिव्या जातोऽ-
प्यूषरदेशस्तदेकदेशमाश्रयति एवमविद्या परस्माज्जाताऽपि तदे-
कदेशमाश्रयिष्यतीत्यर्थः॥ तदेतद्दूषयितुमुपक्रमते। सर्व्वमेत-
दिति॥ तार्किकैः सह सन्धिकरणादिकमेतत्सर्व्वमधिकृत्य साम-
ञ्जस्येन पूर्व्वोक्तानां कल्पनानामापातेन रमणीयत्वमनुभवन्तीति
यावत्। यथोक्तकल्पनानां श्रुतिन्यायानुसारित्वाभावात्त्याज्यत्वं
सूचयति। नेत्यादिना॥ कर्म्मद्वयं प्रत्येकं क्रियापदेन सम्बध्यते।
नञश्चोभयत्रान्वयः। कथं यथोक्तकल्पनानां आपातरमणीयत्वेन

भा॰ सर्व्वमेतत्तार्किकैः सह सामञ्जस्यकल्पनया रमणीयं पश्यन्ति नौपनिषत्सिद्धान्तं सर्व्वन्यायविरोधञ्च पश्यन्ति । कथमुक्ता एव तावत् सावयवत्वे परमात्मनः संसारत्वसत्रत्वकर्म्मफलदेशसंसरणानुपपत्त्यादयो दोषाः । नित्यभेदे च विज्ञानात्मनः परेणैकत्वानुपपत्तिः । लिङ्गमेवेति चेत्परमात्मन उपचरितदेशत्वेन कल्पितं घटकरकभूच्छिद्राकाशादिवत् तथा लिङ्गवियोगेऽपि परमात्मदेशाश्रयणं । वासनाया अविद्यायाश्च स्वत उत्थानमूषरवदित्यादिकल्पनाऽनुपपन्नैव । न च वास्य देशव्यतिरेकेण वासनाया वस्त्वन्तरसञ्चरणं मनसापि कल्पयितुं शक्यं । न च श्रुतयो

---

व्या॰ श्रुतिन्यायबाह्यत्वमिति पृच्छति । कथमिति । यदुक्तं परस्यैकदेशो विज्ञानात्मेति तत्र तदेकदेशत्वं वास्तवमवास्तवं वा प्रथमे स परस्मादभिन्नो भिन्नो वेति विकल्प्याद्यं दूषयति । उक्ता एवेति । आदिशब्देन श्रुतिस्मृतिविरोधो गृह्यते । कल्पान्तरमाह । नित्यभेदे चेति । भेदाभेदयोर्विरुद्धत्वादनुपपत्तिश्चकारार्थः । लिङ्गोपाधिरात्मा परस्यांश इति कल्पान्तरं प्रस्तूयते । लिङ्गमेवेति । उपचरितत्वं कल्पितत्वं लिङ्गोपाधिना कल्पितः परांशो जीवात्मेत्युक्ते स्वापादौ लिङ्गध्वंसे वासनाऽनात्मनि स्याल्लिङ्गाभावे तदधीनजीवाभावात् । ततश्च तद्वियोगेऽपि लिङ्गस्था वासना जीवे तिष्ठतीति प्रक्रियाऽनुपपन्नेति दूषयति । तथेति । यत्तु परस्मादविद्यायाः समुत्थानमिति तन्निराकरोति । अविद्यायाश्चेति । आदिपदेनानात्मधर्म्मत्वमविद्याया गृह्यते । परस्मादविद्योत्पत्तौ तस्यैव संसारः स्यात् । तयोरैकाधिकरण्यात् । अतश्चाविद्यायां सत्यां न मुक्तिः । न च तस्यामस्थायां तत्सिद्धिकारणे स्थिते कार्य्यस्यात्यन्तनाशायोगात् कार्य्याविद्यानाशे तत्कारणपराभवः । तथाच मोक्षविधोऽभावान्मोक्षा-

भा० गच्छन्ति कामः सङ्कल्पो विचिकित्सा हृदये ह्येव रूपाणि ध्यायतीव लेलायतीव कामा येऽस्य हृदि श्रिताः क्षीणा हि तदा सर्व्वान् शोकान् हृदयेत्याद्याः । न चासां श्रुतीनां श्रुतादन्यार्थान्तरकल्पना न्याय्या । आत्मनः परब्रह्मत्वोपपादनार्थपरत्वादासामेतावन्मात्रार्थोपक्षयत्वाच्च सर्व्वोपनिषदां ।

तस्माच्छ्रुत्यर्थकल्पनाऽकुशलाः सर्व्व एवोपनिषदर्थमन्यथा कुर्व्वन्ति । तथापि वेदार्थश्चेत् स्यात् कामं भवतु न मे द्वेषः । न च द्वे वाव ब्रह्मणो रूपे इति राशित्रयापत्तेः समञ्जसं। यदा तु मूर्त्तामूर्त्ते तज्जनितवासनाश्च मूर्त्ता-

---

आ० सिद्धिः । न चात्मधर्म्मोऽविद्या विद्याया अपि तद्धर्म्मत्वप्रसङ्गात् तयोरेकाश्रयत्वादिति भावः । यत्तु लिङ्गोपरमे तद्गतां वासनाऽऽत्मन्यस्तीति तत्राह । न चेनि । पुटकादौ तु युग्माद्यवयवानामेवानुवृत्तिरिति भावः ॥ इतश्च वासनाया जीवाश्रयत्वमसङ्गतमित्याह । न चेति ॥ ननु जीवे समवायिकारणे मनःसंयोगादसमवायिकारणात् कामाद्युत्पत्तिरित्युदाहृतश्रुतिषु विवक्ष्यते तत्राह । न चासामिति ॥ दृश्यमानसंसारमौपाधिकमभिधाय जीवस्य ब्रह्मत्वोपपादने तात्पर्य्यं श्रुतीनामुपक्रमोपसंहारैकरूप्यादिभ्यो गम्यते तन्नार्थान्तरकल्पनेत्यर्थः । इतश्च यथोक्तश्रुतीनां नार्थान्तरकल्पनेत्याह । एतावन्मात्रेति ॥ सर्व्वासामुपनिषदामेकरसेऽर्थे पर्य्यवसानमफलवत्त्वादिलिङ्गेभ्यो गम्यते तत् कथमुक्तश्रुतीनामर्थान्तरकल्पनेत्यर्थः ॥

ननूपनिषदामैक्यादर्थान्तरमपि प्रतिपाद्यं व्याख्यातारो वर्णयन्ति । तत्कथमर्थान्तरकल्पनानुपपत्तिरत आह ॥ तस्मादिति ॥ सर्व्वोपनिषदामैक्यपरत्वप्रतिभासत्वच्छब्दार्थः । ननु परैरुच्यमानोऽपि वेदार्थो भवत्येव किमित्यसौ द्वेषादिकं त्यज्यते तत्राह । तथापीति ॥ न चार्थान्तरस्य वेदार्थत्वं तत्र तात्पर्य्ये लिङ्गाभावादिति

भा॰ मूर्त्ते द्वे रूपे ब्रह्म च रूपि तृतीयं। न चान्यचतुर्थमन्त-
राले तदेतदनुकूलमवधारणं द्वे एव ब्रह्मणो रूप इति।
अन्यथा ब्रह्मैकदेशस्य विज्ञानात्मनो रूप इति कल्प्यं पर-
मात्मनो वा विज्ञानात्मद्वारेणेति। तदा च रूपे ऐवेति
द्विवचनमसमञ्जसं। रूपाणीति वासनाभिः सह बहुवचनं
युक्ततरं स्यात्। द्वे च मूर्त्तामूर्त्ते वासनाश्च तृतीयमिति।
अथ मूर्त्तामूर्त्ते एव परमात्मनो रूपे वासनास्तु विज्ञा-
नात्मन इति चेत्। न। तदा विज्ञानात्मद्वारेण विक्रिय-
माणस्य परमात्मन इतीयं वाचो युक्तिरनर्थिका स्यात्।
वासनाया अपि विज्ञानात्मद्वारस्याविशिष्टत्वात्। न च
वस्तु वस्त्वन्तरद्वारेण विक्रियत इति मुख्यया वृत्त्या शक्यं
कल्पयितुं। न च विज्ञानात्मा परमात्मनो वस्त्वन्तरं।

---

आ॰ भावः॥ लिङ्गवियोगेऽपि पुंसि वासनास्तीत्येतन्निरासत्य राशि-
त्रयकल्पनां निराकरोति। न चेति॥ कथं सिद्धान्तेऽपि वावशब्दा-
दिसामञ्जस्यं तत्राह। यदेति॥ राशित्रयपक्षे जीवस्य रूपमध्येऽ
न्तर्भावे निषेध्यकोटिनिवेशः स्याद्रूपिमध्येऽन्तर्भावे श्रुतिः श्लिष्ट-
ष्टीयेत्यत्राह। अन्यथेति॥ भवत्वेवं श्रुतेः श्लिष्टेति तत्राह।
तदेति॥ रूपिमध्ये जीवान्तर्भावकल्पनायामिति यावत्॥ विष-
यभेदेनोपक्रमविरोधं चोदयति। अथेति॥ इत्थं व्यवस्थायां
जीवद्वारा विक्रियमाणस्य परस्य रूपे मूर्तामूर्ते इत्युक्तिरयुक्ता॥
वासनाकर्म्मादेरपि तद्वारात्संबन्धाविशेषादिति दूषयति।
तदेति॥ विज्ञानात्मद्वारा परस्य विक्रियमाणत्वमङ्गीकृत्योक्तं
तदेव नास्तीत्याह। न चेति॥ तथाभूतस्यान्यथाभूतस्य च विक्रि-
याया दुरुपपादत्वादित्यर्थः। किञ्च जीवस्य ब्रह्मणो वस्त्वन्तरत्व-
मात्यन्तिकमनात्यन्तिकं वा नाद्य इत्याह। न चेति॥ न द्वितीयो
भेदाभेदनिरासादिति द्रष्टव्यं॥ परपक्षदूषणमुपसंहरति।

भा० तथा कल्पनायां सिद्धान्तहानात् । तस्माद्वेदार्थमूढानां स्वचित्तप्रभवा एवमादिकल्पना अक्षरबाह्या । न ह्यक्षर-बाह्यो वेदार्थो वेदार्थोपकारी वा निरपेक्षत्वाद्वेदस्य प्रामाण्यम्प्रति । तस्माद्राशित्रयकल्पना असमञ्जसा ।

योऽयं दक्षिणेऽक्षन्पुरुष इति लिङ्गात्मा प्रस्तुतः । अध्यात्मेऽधिदैवे च । य एव एतस्मिन्मण्डले पुरुष इति॥ तस्येति प्रकृतोपादानत्वात् स एवोपादीयते । योऽसौ त्यस्यामूर्त्तस्य रसो न तु विज्ञानमयः । ननु विज्ञानमयस्यैवैतानि रूपाणि कस्मान्न भवन्ति । विज्ञानमयोऽप्यापि प्रकृतत्वात्तस्येति च प्रकृतोपादानान्नैवं विज्ञानमयस्यारूपित्वेन विजिज्ञापयिषितत्वात् । यदि हि तस्यैव विज्ञानमयस्यैतानि माहारजनादीनि रूपाणि स्युः । तस्यैव नेति नेतीत्यनाख्येयरूपतयाऽऽदेशो न स्यात् । नन्वन्यस्यैवासावादेशो न तु विज्ञानमयस्येति । न षष्ठान्त उपसंहाराद्विज्ञातारमरे

---

आ० तस्मादिति ॥ एवमादिकल्पनाराशित्रयं जीवस्य कामाद्याश्रयत्वमित्याद्याः ॥ अक्षरबाह्यत्वे फलितमाह । न हीति ॥ वेदार्थोपकारित्वाभावे हेतुमाह । निरपेक्षत्वादिति ॥ वेदार्थत्वाद्यभावे सिद्धमर्थं कथयति । तस्मादिति ॥

तस्य हेत्वन्तरं परकीयप्रक्रियां प्रत्याख्याय स्वमते तच्छब्दार्थमाह ॥ योऽयमिति ॥ प्रकृतत्वात् लिङ्गात्मकग्रहे जीवस्यापि पाणिपेषवाक्ये तद्भावात्तस्यैवात्र तच्छब्देन ग्रहः स्यादिति शङ्कते । नन्विति ॥ प्रकृतत्वेऽपि तस्य निर्विशेषब्रह्मत्वेन ज्ञापयितुमिष्टत्वान्न वासनामयं संसाररूपं तत्त्वतो युक्तमिति परिहरति । नैवमिति ॥ इतश्च जीवस्य न वासना निरूपिता किन्तु लिङ्गस्यैत्याह । यदि हीति ॥ निषेधकोटिप्रवेशादिति भावः । नायं

भा० केन विजानीयादिति विज्ञानमयं प्रस्तुत्य स एष नेति नेतीति विज्ञापयिष्यामीति च प्रतिज्ञाया अर्थवत्त्वात्। यदि च विज्ञानमयस्यैवासंव्यवहार्य्यमात्मस्वरूपं ज्ञापयितुमिष्टं स्यात् प्रध्वस्तसर्व्वोपाधिविषयं। तत इयं प्रतिज्ञाऽर्थवती स्यात्। येनासौ ज्ञापितो जानात्यात्मानमेवाहं ब्रह्मास्मीति शास्त्रनिष्ठां प्राप्नोति न बिभेति कुतश्च नेति। अथ पुनरन्यो विज्ञानमयोऽन्यो नेति नेतीति व्यपदिश्यते तदाऽन्यदहो ब्रह्मान्योऽहमस्मीति विपर्य्ययो गृहीतः स्यात्। नात्मानमेवावेदहं ब्रह्मास्मीति। तस्मात्तस्य हैतस्य लिङ्गपुरुषस्यैवेतानि रूपाणि। सत्यस्य च सत्ये परमात्मस्वरूपे वक्तव्ये निरवशेषं सत्यं वक्तव्यं। सत्यस्य च विशेषरूपाणि वासनास्तासामिमानि रूपाण्युच्यन्ते। एतस्य पुरुषस्य प्रकृतस्य लिङ्गात्मन एतानि रूपाणि। कानि तानीत्युच्यन्ते॥

---

आ० जीवस्यादेशः किन्तु ब्रह्मणस्तटस्थस्येति शङ्कयित्वा दूषयति॥ नन्वित्यादिना॥ षष्ठावसाने विज्ञातारमरे केनेत्यात्मानमुपक्रम्य स एष नेति नेत्यात्मशब्दात्तस्यैवादेशो न तटस्थस्येत्यर्थः॥ इतश्च प्रत्यगर्थस्यैवायमादेश इत्याह। विज्ञापयिष्यामीति॥ तदेव समर्थयति। यदीति॥ कथमेतावता प्रतिज्ञार्थवत्त्वं तदाह॥ येनेति॥ ज्ञानफलं कथयति। शास्त्रेति॥ अन्वयमुखेनोक्तमर्थं व्यतिरेकमुखेन साधयति। अथेत्यादिना॥ विपर्य्यये गृहीते ब्रह्मकण्डिकाविरोधं दर्शयति। नात्मानमिति॥ तच्छब्देन जीवपरामर्शासम्भवे फलितमाह। तस्मादिति॥ ननु लिङ्गस्य चेदेतानि रूपाणि किमित्युपन्यस्यन्ते परमात्मस्वरूपस्यैव वक्तव्यत्वादत आह॥ सत्यस्य चेति॥

उ॰ यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं॥

---

भा॰ यथा लोके महारजनं हरिद्रा तया रक्तं माहारजनं यथा वासो लोके। एवं स्त्र्यादिविषयसंयोगे तादृशं वासनारूपं रञ्जनाकारमुत्पद्यते चित्तस्य। येनासौ पुरुषो रक्त इत्युच्यते वस्त्रादिवत्। यथा च लोके पाण्ड्वाविकं अवेरिदमाविकमूर्णादि। यथा च एतदापाण्डुरं भवति। तथा ऽन्यद्वासनारूपं। यथा च लोके इन्द्रगोपोऽत्यन्तरक्तो भवति एवमस्य वासनारूपं क्वचिद्विषयविशेषापेक्षया रागस्य तारतम्यं क्वचित्पुरुषचित्तवृत्त्यपेक्षया। यथा च लोकेऽग्न्यर्चिर्भास्वरं भवति तथा क्वचित्कस्यचिद्वासनारूपं भवति। यथा पुण्डरीकं शुक्लं तद्वदपि च वासनारूपं कस्यचिद्भवति यथा सकृद्विद्युत्तं यथा सकृद्विद्योतनं सर्व्वतःप्रकाशकं भवति। तथा ज्ञानप्रकाशविवृद्ध्यपेक्षया कस्यचिद्वासनारूपमुपजायते। नैषां वासनारूपाणां आदिरन्तो मध्यसङ्ख्या वा देशः कालो निमित्तं वाऽवधार्य्यते। असङ्ख्येय

---

आ॰ इन्द्रगोपोपमानेन कौसुम्भस्य गतत्वान्महारजनं हरिद्रेति व्याख्यातं। तत्र लोकप्रसिद्धिं दर्शयति। येनेति॥ ऊर्णादीत्यादिपदं कम्बलादिग्रहणार्थं। मनसि वासनावैचित्र्ये किं कारणमिति तदाह। क्वचिदिति॥ चित्तवृत्तिशब्देन सत्त्वादिगुणपरिणामो विवक्षितः। परिमितदृष्टान्तोक्त्या वासनानामपि परिमितत्वं दृष्टान्तदार्ष्टान्तिकयोः साम्यादित्याशङ्क्याह। नैषामिति॥ तत्र वाक्यशेषं संवादयति। तथाचेति॥ वासनानन्त्यात्तदीयपरिमित-

उ० यथा सकृद्विद्युत्तं सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेदाथात आदेशो नेति नेति ॥

---

भा० त्वाद्वासनायाः वासनाहेतूनाञ्चानन्त्यात्। तथा च वक्ष्यति षष्ठ इदंमयोऽदोमय इत्यादि। तस्मान्न स्वरूपसङ्ख्याऽवधारणार्था दृष्टान्ताः। यथा माहारजनं वास इत्यादयः किन्तर्हि प्रकारप्रदर्शनार्थाः। एवंप्रकाराणि हि वासनारूपाणि इति ॥

यत्तु वासनारूपमभिहितमन्ते सकृद्विद्योतनमिवेति तत्किल हिरण्यगर्भस्याव्याकृतात्प्रादुर्भवतस्तडिद्वत्सकृदेव व्यक्तीभवतीति वक्तदीयं वासनारूपं हिरण्यगर्भस्य यो वेद तदस्य सकृद्विद्युत्ता इव। ह वा इत्यवधारणार्थौ। एवमेवास्य श्रीः ख्यातिर्भवतीत्यर्थः। यथा हिरण्यगर्भस्यैवमेतद्यथोक्तं वासनारूपमन्त्यं यो वेद। एवं निरवशेषं सत्यस्य स्वरूपमभिधाय यत्तत्सत्यस्य सत्यमवोचाम तस्यैव स्वरूपावधारणार्थं

---

आ० प्रदर्शनपरिमितदृष्टान्तग्रहणस्यातात्पर्ये कुत्र तात्पर्यमित्याशङ्क्याह। तस्मादिति ॥ प्रकारप्रदर्शनमेवाभिनयति। एवंप्रकाराणीति ॥ अन्त्यवासनादिविशिष्टसूत्रोपास्तिं फलवर्ती तत्प्रकर्षाभिधानपूर्व्वकमभिदधाति। यत्त्वित्यादिना ॥ व्यक्तिः सर्व्वस्य वस्तुजातस्येति शेषः ॥

तदीयमित्यस्य व्यक्तीकरणमाह। हिरण्यगर्भस्येति ॥ तदेव स्फुटयति। यथेत्यादिना ॥ वृत्तमनूद्यानन्तरग्रन्थमवतारयति। एवमित्यादिना ॥ तस्यैव ब्रह्मण इति सम्बन्धः। कस्मादनन्तरमित्युक्ते तद्दर्शयन्नतःशब्दस्यापेक्षितं पूरयन्व्याकरोति। सत्यस्येति ॥ यथोक्तादेशस्याभावपर्य्यवसायित्वं मन्वानः शङ्कते।

भा॰ ब्रह्मण इदमारभ्यते। अथानन्तरं सत्यस्वरूपनिर्देशानन्तर यत्सत्यस्य सत्यं तदेवावशिष्यते यस्मात्। अतस्तस्मात्सत्यस्य सत्यं स्वं स्वरूपं निर्देक्ष्यामः। आदेशो निर्देशो ब्रह्मणः। कःपुनरसौ निर्देश इत्युच्यते। नेति नेतीत्येवं निर्देशः। ननु कथमाभ्यां नेति नेतीति शब्दाभ्यां सत्यस्य सत्यं निर्दिदिक्षितमित्युच्यते सर्वोपाधिविशेषापोहेन। यस्मिन्न कश्चिद्विशेषोऽस्ति नाम वा रूपं वा कर्म वा भेदो वा जातिर्वा गुणो वा तद्द्वारेण हि शब्दप्रवृत्तिर्भवति। न चैषां कश्चिद्विशेषो ब्रह्मण्यस्ति। अतो न निर्देष्टुं शक्यते इदं तदिति। गौरसौ स्पन्दते शुक्लो विषाणीति यथा लोके निर्दिश्यते। तथाऽध्यारोपितनामरूपकर्मद्वारेण ब्रह्म निर्दिश्यते। विज्ञानमानन्दं ब्रह्म विज्ञानघन एव ब्रह्मात्मेत्येवमादिशब्दैः।

---

आ॰ नन्विति॥ निरवधिनिषेधासिद्धेस्तदवधित्वेन सत्यस्य सत्यं ब्रह्म निर्देष्टुमिष्टमिति परिहरति। उच्यत इति॥ ब्रह्मणो विधिमुखेन निर्देशे सम्भाव्यमाने किमिति निषेधमुखेन तन्निर्दिश्यते तत्राह। यस्मिन्निति॥ तद्विधिमुखेन निर्देष्टुमशक्यमिति शेषः। नामरूपाद्यभावेऽपि ब्रह्मणि शब्दप्रवृत्तिमाशङ्क्याह। तद्द्वारेणेति॥ जात्यादीनामन्यतमस्य ब्रह्मण्यपि सम्भवात्तद्द्वारा तत्र शब्दप्रवृत्तिः स्यादिति चेन्नेत्याह। न चेति॥ उक्तमर्थं वैधर्म्यदृष्टान्तेन स्पष्टयति। गौरिति॥ तथा जात्याद्यभावान्न ब्रह्मणि शब्दप्रवृत्तिरिति शेषः॥ कथन्तर्हि क्वचिद्विधिमुखेन ब्रह्मोपदिश्यते तत्राह। अध्यारोपितेति॥ विज्ञानानन्दादिवाक्येषु शबलो गृहीतशक्तिभिः शब्दैर्लक्ष्यते ब्रह्मेत्यर्थः॥

उ॰ न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं

भा॰ यदा पुनः स्वरूपमेव निर्दिदिक्षितं भवति निरस्त-सर्व्वोपाधिविशेषं तदा न शक्यते केनचिदपि प्रकारेण निर्देष्टुं तदाऽयमेवाभ्युपायः। यदुत प्राप्तनिर्देशप्रति-षेधद्वारेण नेति नेतीति निर्देशः। इदञ्च नकारद्वयं वीप्साव्याप्त्यर्थं। यद्यत्प्राप्तं तत्तन्निषिध्यते। तथा च सत्य-निर्दिष्टाशङ्का ब्रह्मणः परिहृता भवति। अन्यथा हि नकारद्वयेन प्रकृतद्वयप्रतिषेधे यदन्यः प्रकृतात्प्रतिषि-द्धं स्यात ब्रह्म तन्न निर्दिष्टं। कीदृशन्नु खल्वित्याशङ्का न निवर्त्तिष्यते। तथा चानर्थकश्च स निर्देशः पुरुषस्य विविदिषाया अनिवर्त्तकत्वात्। ब्रह्म ज्ञपयिष्यामीति च वाक्यमपरिसमाप्तार्थं स्यात्। यदा तु सर्व्वदिक्कालादि-विविदिषा निवर्त्तिता स्यात्सर्व्वोपाधिनिराकरणद्वारेण

---

आ॰ ननु व्याख्यामुपेक्ष्य साक्षादेव ब्रह्म किमिति न विवक्ष्यते तत्राह। यदा पुनरिति॥ निर्देष्टुं व्याख्यामुपेक्ष्य साक्षादेव वक्तु-मिति यावत। तत्र शब्दप्रवृत्तिनिमित्तानां जात्यादीनामावश्यो-क्तत्वादित्यर्थः। विधिमुखेन निर्देशासम्भवे फलितमाह। तदेति॥ प्राप्तो निर्देशो यस्य विशेषस्य तत्प्रतिषेधमुखेनेति यावत्। एवं ब्रह्म निर्दिदिक्षितं चेदेकेनैव नञा सम्भृतं द्वितीयेनेत्याशङ्क्याह। इदञ्चेति॥ वीप्सया व्याप्तिः सर्व्वविषयसङ्ग्रहस्तदर्थं नकारद्वय-मित्युक्तमेव व्यनक्ति। यद्यदिति॥ विषयत्वेन प्राप्तं सर्व्वं ब्रह्मेत्युक्ते सत्यविषयः प्रत्यगात्मा ब्रह्मेत्येकत्वे शास्त्रपर्य्यवसाना-न्नैराकाङ्क्ष्यं श्रोतुः सिध्यतीत्याह। तथा चेति॥ इतिशब्दस्य प्रकृत-परामर्शित्वात्प्रकृतमूर्त्तामूर्त्तादेरन्यत्वे ब्रह्मणो नकारपर्य्यवसानं किमिति नेष्यते तत्राह। अन्यथेति॥ आशङ्का निवृत्त्यभावे

उ॰ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यं ॥ ६ ॥ इति तृतीयं ब्राह्मणम् ॥

---

भा॰ तदा सैन्धवघनवदेकरसं प्रज्ञानघनमनन्तरमबाह्यं सत्यस्य सत्यमहं ब्रह्मास्मीति सर्व्वतो निवर्त्तते। विविदिषात्मन्येवावस्थिता प्रज्ञा भवति। तस्माद्वीप्सार्थं नेति नेतीति नकारद्वयं। ननु महता यत्नेन परिकरबन्धं कृत्वा किं युक्तमेव निर्द्देष्टुं ब्रह्म। बाढं। कस्मान्नहि * यस्मादिति। नेति नेत्येतस्मादितीति व्याप्तव्यप्रकारा नकारद्वयविषया निर्द्दिश्यन्ते। यथा ग्रामो ग्रामो रमणीय इत्यन्यत्परं निर्द्देशनं नास्ति। तस्मादयमेव निर्द्देशो ब्रह्मणः। यदुक्तं।

---

आ॰ दोषमाह। तथा चेति। अनर्थकश्चेति चकारेण समुच्चितं दोषान्तरमाह। अश्चेति। उक्तमर्थमन्वयमुखेन समर्थयते। यदात्विति। सर्व्वोपाधिनिरासेन तत्र तत्र विषयवेदनेच्छा यदा निवर्त्तिता तदा यथोक्तं प्रत्यग्ब्रह्माहमिति निश्चित्याकाङ्क्षा सर्व्वतो व्यावर्त्तते तेन निर्द्देशस्य सार्थकत्वं यदा चोक्तरीत्या ब्रह्मात्मन्येव प्रज्ञाऽवस्थिता भवति तदा प्रतिज्ञावाक्यमपि परिसमाप्त्यर्थं स्यादिति योजना। वीप्सापक्षमुपसंहरति। तस्मादिति। आदेशस्य प्रक्रमाननुगुणत्वमाशङ्क्यानन्तरवाक्येन परिहरति। नन्वित्यादिना। न हीति प्रतीकोपादानं यस्मादित्यस्य हि शब्दार्थस्य तस्मादित्यनेन सम्बन्धः। व्याप्तव्याः सङ्ख्याः विषयीकर्त्तव्या ये प्रकाराः ते नकारद्वयस्य विषयाः सन्तो निर्द्दिश्यन्त इति नेत्येतस्मादित्यनेन भागेनेति योजना। इति शब्दाभ्यां व्याप्तस्य सर्व्वप्रकारसङ्ग्रहे दृष्टान्तमाह। यथेति। ग्रामो ग्रामो रमणीय इत्युक्ते राज्यनिविष्टरमणीयसर्व्वग्रामसङ्ग्रहवत्प्रकृते

---

* नह्येतस्मादिति पाठान्तरः।

भा॰ तस्योपनिषत्सत्यस्य सत्यमित्येवं प्रकारेण सत्यस्य सत्यं तत्परं ब्रह्म। अतो युक्तमुक्तं नामधेयं। ब्रह्मणो नामैव नामधेयं। किं तत् सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यमिति ॥ ६ ॥

इति चतुर्थस्य प्रपाठकस्य तृतीयं ब्राह्मणम् ॥

आत्मेत्येवोपासीत । तदेवैतस्मिन्सर्व्वस्मिन्पदनीयमात्मतत्त्वं यस्मात् प्रेयः पुत्रादेरित्युपन्यस्तस्य वाक्यस्य व्याख्यानविषये सम्बन्धप्रयोजने अभिहिते तदात्मानमेवावेदहं ब्रह्मास्मीति । तस्मात्तत्सर्व्वमभवदित्येवं प्रत्यगात्मा ब्रह्मविद्याया विषय इत्येतदुपन्यस्तं। अविद्यायास्तु विषयोऽन्योऽसावन्योऽहमस्मीति न सदेवेत्यारभ्य चातुर्वर्ण्यप्रविभागादिनिमित्तपाङ्क्तकर्म्मसाध्यसाधनलक्षणो वीजाङ्कुरवद्व्याहृताव्याहृतस्वभावो नामरूपात्मकः संसारः । अयं

---

आ॰ ऽपीतिशब्दाभ्यां विषयभूतसर्व्वप्रकारसङ्ग्रहे नकाराभ्यां तन्निषेध इत्यर्थः। यथोक्तान्निषेधरूपान्निर्देशादन्यन्निर्देशेन यस्माद्ब्रह्मणो न परमस्ति तस्मादित्युपसंहारः। अथेत्यादि वाक्यं प्रकृतोपसंहारत्वेन व्याचष्टे। यदुक्तमित्यादिना॥ ६॥ इति चतुर्थे प्रपाठके तृतीयं ब्राह्मणम्॥

सम्बन्धाभिधित्सया वृत्तङ्कीर्त्तयति। आत्मेत्येवेति॥ किमित्यात्मतत्त्वमेवं ज्ञातव्यं तत्राह। तदेवेति॥ इत्थं सूचितस्य विद्याविषयस्य वाक्यस्य व्याख्यानमेव विषयस्तत्र विद्या साधनं साध्या मुक्तिरिति सम्बन्धः। मुक्तिश्च फलमित्येतदात्मानमित्यादिना दर्शितेत्याह। इत्युपन्यस्तस्येति॥ विद्याविषयत्वमुक्तं निगमयति। एवमिति॥ उक्तमर्थान्तरं स्मारयति। अविद्यायास्त्विति॥ अन्योऽसावित्याद्यारभ्याविद्याया विषयस्य संसाररूप उपसंहृतस्त्रयमित्यादिनेति सम्बन्धः। संसारमेव विशिनष्टि। चातुर्व्वर्ण्येति॥ चातुर्व्वर्ण्यं चातुराश्रम्यमिति प्रविभागादिनिमित्तं यस्य पाङ्क्तस्य

भा०त्रा इदं नामरूपं कर्म्मेत्युपसंहृतः शास्त्रीय उत्कर्षलक्षणो ब्रह्मलोकान्तः। अधोभावश्च स्थावरान्तोऽशास्त्रीयः पूर्व्वमेव प्रदर्शितो द्वया हेत्यादिना। एतस्मादविद्याविषयाद्विरक्तस्यास्य प्रत्यगात्मविषयब्रह्मविद्यायामधिकारः कथं नाम स्यादिति * तृतीयेऽध्याये उपसंहृतः समस्तोऽविद्याविषयः। चतुर्थे तु ब्रह्मविद्याविषयं प्रत्यगात्मानं ब्रह्म ते ब्रवाणीति ब्रह्म ज्ञपयिष्यामीति च प्रस्तुत्य तद्ब्रह्मैकमद्वयं सर्व्वविशेषशून्यं क्रियाकारकफलस्वभावसत्यशब्दवाच्याशेषभूतधर्म्मप्रतिषेधद्वारेण नेति नेतीति ज्ञापितं। अस्याः ब्रह्मविद्याया अङ्गत्वेन सन्न्यासो विधित्सितः। जायापुत्रवित्तादिलक्षणं पाङ्क्तं कर्म्माविद्याविषयं। यस्मा-

---

आ० कर्म्मफलस्य साध्यसाधनमित्येवमात्मकमिति यावत्। तस्यानादित्वं दर्शयति। बीजाङ्कुरवदिति॥ तमेव त्रिधा सङ्क्षिपति। नामेति॥ स चोत्कर्षापकर्षाभ्यां द्विधा भिद्यते तत्राद्यमुदाहरति। शास्त्रीयमिति॥ उत्कृष्टो हि संसारस्त्र्यात्मभावः शास्त्रीयज्ञानकर्म्मजन्य इत्यर्थः॥ द्वितीयं कथयति। अधोभावश्चेति॥ निकृष्टः संसारः स्वाभाविकज्ञानकर्म्मसाध्य इत्यर्थः॥ किमित्यविद्याविषयो व्याख्यातो न हि स पुरुषस्योपयुज्यते तत्राह। एतस्मादिति॥ प्रत्यगात्मैव विषयस्तस्मिन् या ब्रह्मेति विद्या तस्यामिति यावत्। तार्त्तीयमर्थमनूद्य चातुर्थिकमर्थं कथयति। चतुर्थे त्विति॥ एवं वृत्तमनूद्योत्तरग्रन्थस्य तात्पर्य्यमाह। अस्या इति॥ किमिति सन्न्यासो विधित्स्यते कर्म्मणैव विद्यालाभादित्याशङ्क्याह। जायेति॥ अविद्याया विषय एव विषयो यस्येति विग्रहस्तस्मात् सन्न्यासो विधित्सित इति पूर्व्वेण सम्बन्धः॥ ननु प्रकृतं कर्म्माविद्याविषयमपि किमित्यात्मज्ञानं तादर्थ्येनानुष्ठीयमानं नोपनयति तत्राह।

---

* कथञ्चिदपीति पाठान्तरः॥

भा॰ आत्मप्राप्तिसाधनं। अन्यसाधनं ह्यन्यस्मै फलसाधनाय प्रयुज्यमानं प्रतिकूलं भवति। न हि बुभुक्षापिपासानिवृत्त्यर्थं धावनं गमनं वा साधनं। मनुष्यलोकपितृलोकदेवलोकसाधनत्वेन हि पुत्रादिसाधनानि श्रुतानि नात्मप्राप्तिसाधनत्वेन विशेषितत्वाच्च। न च ब्रह्मविदो विहितानि काम्यत्वश्रवणादेतावान्वै काम इति। ब्रह्मविद्श्चाप्तकामत्वादाप्तकामस्य कामानुपपत्तेः। येषां नोऽयमात्माऽयं लोक इति च श्रुतेः। केचित्तु ब्रह्मविदोऽप्येषणासम्बन्धं वर्णयन्ति तैर्बृहदारण्यकं न श्रुतं। पुत्राद्येषणानामविद्वद्विषयत्वं। विद्याविषये च येषां नोऽयमात्माऽयं लोक इत्यतः किं प्रजया करिष्याम इत्येष विभागस्तैर्न श्रुतः श्रुत्या कृतः॥

---

आ॰ अन्येति। तदेव दृष्टान्तेन स्पष्टयति। न हीति॥ प्राकृतस्य कर्म्मणोऽन्यसाधनत्वमेव कथमधिगतमित्याशङ्क्याह। मनुष्येति॥ सोऽयं मनुष्यलोकः पुत्रेणैव जय्यः कर्म्मणा पितृलोको विद्यया देवलोक इति विशेषितत्वं श्रुतमेव॥ विशेषितत्वोक्तिद्वारा स्फुटीकृतमिति चकारेण द्योत्यते॥ ननु ब्रह्मविद्या स्वफले विहितं कर्म्मापेक्षते श्रौतसाधनत्वाद्दर्शादिवत्। तथाच समुच्चयान्न कर्म्मसन्न्याससिद्धिरत आह। न चेति॥ कर्म्मणां काम्यत्वेऽपि ब्रह्मविदस्तानि किन्न स्युरित्याशङ्क्याह। ब्रह्मविदश्चेति॥ इतश्च तस्य पुत्रादि साधनानुपपत्तिरित्याह। येषामिति॥ समुच्चयपक्षमनुभाष्य श्रुतिविरोधेन दूषयति। केचित्त्विति॥ श्रुतिविरोधमेव स्फोरयति। पुत्रादीति॥ अविद्वद्विषयत्वं श्रुतं। तत्प्रकरणे तेषामुपदेशादिति शेषः। किम्प्रजया करिष्याम इत्यत आरभ्य येषां नोऽयमात्माऽयं लोक इति च विद्याविषये श्रुतिरिति योजना। एष विभागः श्रुत्या कृतस्तैः समुच्चयवादिभिर्न श्रुत इति सम्बन्धः॥

भा॰ सर्व्वक्रियाकारकफलोपमर्द्दस्वरूपायां च विद्यायां सत्यां सह कार्य्येणाविद्यया असुत्पत्तिलक्षणस्य विरोधस्योर्न विद्यातो व्यासवाक्यञ्च तैर्न श्रुतं । कर्म्मविद्यास्वरूपयोर्विद्याविद्यात्मकयोः प्रतिकूलवर्त्तनं विरोधः । यदिदं वेदवचनं कुरु कर्म्म त्यजेति च । काङ्गतिं विद्यया यान्ति काञ्च गच्छन्ति कर्म्मणा । एतद्वै श्रोतुमिच्छामि तद्भवान् प्रब्रवीतु मे । एतावन्योन्यवैरूप्ये वर्त्तेते प्रतिकूलतः । इत्येवम्पृष्टस्य प्रतिवचनेन कर्म्मणा बाध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात् कर्म्म न कुर्व्वन्ति यतयः पारदर्शिन इत्येवमादिविरोधः प्रदर्शितः । तस्माच्च साधना-

---

आ॰ न केवलं श्रुतिविरोधादेव समुच्चयासिद्धिः किन्तु युक्तिविरोधाच्चेत्याह । सर्व्वेति ॥ द्वितीयचकारोऽवधारणार्थो नञा सम्बध्यते ॥ स्मृतिविरोधाच्च समुच्चयासिद्धिरित्याह । व्यासेति ॥ तत्र प्रथमं पूर्व्वोक्तं युक्तिविरोधं स्फुटयति । कर्म्मेति ॥ प्रतिकूलवर्त्तनं निवर्त्यनिवर्त्तकभावः ॥ सम्प्रति स्मृतिविरोधं स्फोरयति । यदिदमिति ॥ प्रसिद्धं वेदवचनं कुरु कर्म्मेत्यसम्मृति यदिदमुपलभ्यते विवेकिनम्प्रति च त्यजेति तत्र काङ्गतिमित्यादिः शिष्यस्य व्यासम्प्रति प्रश्नस्तस्य बीजमाह । एताविति ॥ विद्याकर्म्माख्यावुपायौ परस्परविरुद्धत्वे वर्त्तेते । साभिमानत्वनिरभिमानत्वादिपुरस्कारेण प्रातिकूल्यात् समुच्चयानुपपत्तेर्य्ययोक्तस्य प्रश्नस्य साधकाग्रत्वमित्यर्थः । इत्येवम्पृष्टस्य भगवतो व्यासस्येति शेषः । विरोधो ज्ञानकर्म्मणोः समुच्चयस्येति वक्तव्यं ॥ समुच्चयानुपपत्तिमुपसंहरति । तस्मादिति ॥ कथन्तर्हि ब्रह्मविद्यापुरुषार्थसाधनमिति तत्राह । सर्व्वविरोधादिति ॥ सर्व्वस्य क्रियाकारकफलभेदात्मकस्य द्वैतेन्द्रजालस्य ब्रह्मविद्यया विरोधादिति यावत् ॥ एकाकिनी ब्रह्मविद्या मुक्तिहेतुरिति स्थिते फलितमाह । इति पारिव्राज्यमिति ॥

भा० न्तरसहिता ब्रह्मविद्या पुरुषार्थसाधनं सर्व्वविरोधात् साधननिरपेक्षैव पुरुषार्थसाधनमिति । पारिव्राज्यं सर्व्वसाधनसन्न्यासलक्षणमङ्गत्वेन विधित्स्यते । एतावदेवामृतत्वसाधनमित्यवधारणात् वक्तसमाप्तौ लिङ्गाच्च कर्म्मी सन् याज्ञवल्क्यः प्रवव्राजेति । मैत्रेय्यै च कर्म्मसाधनरहितायै साधनत्वेनामृतत्वस्य ब्रह्मविद्योपदेशाद्वित्तनिन्दावचनाच्च । यदि ह्यमृतत्वसाधनं कर्म्म स्याद्वित्तसाध्यम्पाङ्क्तं कर्म्मेति तन्निन्दावचनमनिष्टं स्यात् । यदि तु परित्याजयिषितं कर्म्म ततो युक्ता तत्साधननिन्दा । कर्म्माधिकारनिमित्तवर्णाश्रमादिप्रत्ययोपमर्द्दाच्च । ब्रह्म तं परादात् इत्यन्त-

---

आ० न केवलं सन्न्यासस्य श्रवणादिपौष्कल्यद्वारेण विद्यापरिपाकाङ्गत्वं श्रुत्यादिवशादवगम्यते किन्तु लिङ्गादपीत्याह । एतावदेवेति ॥ तत्रैव लिङ्गान्तरमाह । वक्तसमाप्ताविति । इतश्चोभयतः सम्बध्यते । यदि कर्म्मसहितं ज्ञानं मुक्तिहेतुस्तदा किमिति कर्म्मिणः सतो याज्ञवल्क्यस्य पारिव्राज्यमुच्यते तस्मात्तत्यागस्तदङ्गत्वेन विधित्सित इत्यर्थः ॥ तत्रैव लिङ्गान्तरमाह । मैत्रेय्यै चेति । न हि मैत्रेयी भर्त्तरि त्यक्तकर्म्मणि स्वयं कर्म्माधिकर्त्तुमर्हति पतिद्वारमन्तरेण भार्य्यायास्तदनधिकारात् । तथाच कर्म्मशून्यायै मुक्तौ साधनत्वेन विद्योपदेशात् कर्म्मत्यागस्तदङ्गत्वेन ध्वनित इत्यर्थः ॥ तत्रैव हेत्वन्तरमाह । वित्तेति ॥ किमहन्तेन कुर्य्यामिति निन्द्यते । यतश्च तत् साध्यं कर्म्म ज्ञानसहायत्वेन मुक्तौ नोपकरोतीत्यर्थः ॥ तदेव विवृणोति । यदि हीति ॥ तन्निन्दावचनमित्यत्र तच्छब्देन वित्तमुच्यते तत्पक्षे वा कथं निन्दावचनमिति तत्राह । यदि त्विति ॥ ब्राह्मणोऽहं क्षत्रियोऽहमित्यभिमानस्य कर्म्मानुष्ठाननिमित्तस्य निन्दया सर्व्वमिदमात्मैवेति प्रत्यये श्रुतेस्तात्पर्य्यदर्शनाद्विद्याङ्गत्वेन सन्न्यासो विधित्सित इत्याह । कर्म्माधिकारेति ॥ ननु जाग्रति त्रिधा कर्म्मानुष्ठानम-

उ॰ मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात् स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ १ ॥

---

भा॰ आरादादित्यादेः । न हि ब्रह्मक्षत्राद्यात्मप्रत्ययोपमर्द्दे ब्राह्मणेनेदं कर्त्तव्यं क्षत्रियेणेदं कर्त्तव्यमिति विषयाभावादात्मानं लभते विधिर्यस्यैव पुरुषस्योपमर्द्दितः प्रत्ययो ब्रह्मक्षत्राद्यात्मविषयस्तस्य तत्प्रत्ययसन्न्यासात्तत्कार्य्याणां कर्म्मणां कर्म्मसाधनानाञ्चार्थप्राप्तस्य सन्न्यासः । तस्मादात्मज्ञानाङ्गत्वेन सन्न्यासविधित्सयैवाख्यायिकेयमारभ्यते ॥

मैत्रेयीति होवाच याज्ञवल्क्यो मैत्रेयीं स्वां भार्य्यामामन्त्रितवान् याज्ञवल्क्यो नाम ऋषिः । उद्यास्यन्नूर्ध्वं यास्यन् पारिव्राज्याख्यमाश्रमान्तरं वै अरे इति सम्बोधनं अहमस्माद्गार्हस्थ्यात्स्थानादाश्रमादूर्ध्वं गन्तुमिच्छन्नस्मि भवामि । अतो हन्तानुमतिं प्रार्थयामि ते तव । किञ्चा-

---

आ॰ प्रवर्त्तयितुमत आह । न हीति ॥ ननु वर्णाश्रमाभिमानवतः सन्न्यासोऽपीष्यते स कथं तदभावे तत्राह । यस्यैवेति ॥ अर्थप्राप्तस्ये-त्यवधारणार्थश्चकारः । प्रयोजकज्ञानवतो वैधसन्न्यासाभ्युपगमादविरोध इति भावः ॥ आत्मज्ञानाङ्गत्वं सन्न्यासस्य श्रुतिस्मृतिन्यायसिद्धञ्चेत्किमर्थमियमाख्यायिका प्रणीयते तत्राह । तस्मादिति ॥ सिद्धापेक्षितार्थवादसिद्ध्यर्थमाख्यायिकेति भावः ॥

भार्य्यामामन्त्र्य किं कृतवानिति तदाह । उद्यास्यन्निति ॥ वै शब्दोऽवधारणार्थः । आश्रमान्तरं यास्यन्नेवाहमस्मीति सम्बन्धः । यथोक्तेच्छानन्तरं भार्य्यायाः कर्त्तव्यं दर्शयति । अत इति ॥ सति-भार्य्यादौ सन्न्यासस्य तदनुज्ञापूर्व्वकत्वनियमादितिभावः । कर्त्त-

उ॰ सा होवाच मैत्रेयी । यन्नु म इयम्भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितꣳ स्याद्-

---

भा॰ न्यन्तवाऽनया द्वितीयया भार्य्यया कात्यायन्या अन्तं विच्छेदं करवाणि । पतिद्वारेण युवयोर्मया सम्बध्यमानयोर्यः सम्बन्ध आसीत्तस्य सम्बन्धस्य विच्छेदं करवाणि द्रव्यविभागं कृत्वा वित्तेन संविभज्य युवां गमिष्यामि ॥ १ ॥

सैवमुक्ता ह उवाच यद्यदि नु इति वितर्के मे मम इयं पृथिवी भगो भगवन् सर्व्वा सागरपरिक्षिप्ता वित्तेन धनेन पूर्णा स्यात्कथं न कथञ्च नेति चेपार्थः प्रश्नार्थो वा तेन पृथिवीपूर्णवित्तसाध्येन कर्मणाऽग्निहोत्रादिना मृता किं स्यामिति व्यवहितेन सम्बन्धः ।

---

आ॰ थान्तरं कथयति । विच्छेति ॥ आवयोर्विच्छेदः स्वाभाविकोऽस्ति किं तत्र कर्त्तव्यमित्याशङ्क्याह । पतिद्वारेणेति ॥ त्वयि प्रव्रजिते स्वयमेवावयोर्विच्छेदो भविष्यतीत्याशङ्क्याह । द्रव्येति ॥ वित्ते तु न स्त्री स्वातन्त्र्यमिति भावः ॥ १ ॥

मैत्रेयी मोक्षमेवापेक्षमाणा भर्त्तारं प्रत्यानुकूल्यमात्मनो दर्शयति । सैवमिति ॥ कर्म्मसाध्यस्य गृहप्रासादादिवन्नित्यत्वानुपपत्तिराक्षेपनिदानं । कथंशब्दस्य प्रश्नार्थत्वपक्षे वाक्यं योजयति । तेनेति ॥ कथं तेनेत्यत्र कथंशब्देन किमहं तेनेत्यत्र किंशब्दमुपादाय वाक्यं योजयन्ती वित्तसाध्यस्य कर्म्मणोऽमृतत्वसाधनत्वमाशासिद्धौ तत्प्रकारप्रश्नस्य निरवकाशत्वादित्यर्थः । मुनि-

उ॰ मृतत्वस्य तु नाशास्ति वित्तेनेति ॥२॥ सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्य्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ४ ॥

---

भा॰ प्रत्युवाच याज्ञवल्क्यः । कथमिति यदि क्षेपार्थमनुमोदनं नेति होवाच याज्ञवल्क्य इति प्रश्नस्यप्रतिवचनार्थं नैव स्यां अमृता । किं तर्हि यथैव लोके उपकरणवतां साधनवतां जीवितं सुखोपायभोगसम्पन्नं तथैव तद्वदेव तव जीवितं स्यादमृतत्वस्य तु नाशा मनसाप्यस्ति वित्तेन वित्तसाध्येन कर्मणेति ॥ २ ॥

सा होवाच मैत्रेयी एवमुक्ता प्रत्युवाच मैत्रेयी यद्येवं येनाहं नामृता स्यां किमहं तेन वित्तेन कुर्यां यदेव भगवान्केवलममृतत्वसाधनं वेद तदेवामृतत्वसाधनं मे मह्यं ब्रूहि ॥ ३ ॥

---

आ॰ इति भार्य्याहृदयाभिज्ञः सन्तुष्टः सन्नाक्षेपं प्रश्नस्य प्रतिवदती-त्याह । प्रत्युवाचेति ॥ वित्तेन ममामृतत्वाभावे तदर्थित्वात्कर मदेयमित्याशङ्क्याह । किन्तर्हीति ॥ २ ॥ वित्तस्यामृतत्वसाधना-भावमधिगम्य तस्मिन्नास्थां त्यक्त्वा मुक्तिसाधनमेवात्मज्ञानमात्मार्थं दातुं पतिं नियुञ्जाना ब्रूते । सा हेति ॥ भार्य्यायेप्सितं मोक्षोपायं विवक्षुस्तामादौ स्तौति । स हेत्यादिना ॥ वित्तेन साध्यं कर्म्म तस्मिन्नमृतत्वसाधने प्रश्निते किमहं तेन कुर्य्यामिति भार्य्ययापि प्रत्याख्याते सतीति यावत् ॥ स्वाभिप्रायो न कर्म्ममुक्तिहेतुरिति तस्य भार्य्याद्वारापि सम्पत्तौ स्तवामित्यर्थः ॥ ३ ॥ ४ ॥

उ॰ स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ४ ॥ स होवाच न वा अरे पत्युःकामाय पतिःप्रियो भवत्यात्मनस्तु कामाय पतिःप्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु

---

भा॰ स होवाच याज्ञवल्क्यः एवं वित्तसाध्येऽमृतत्वसाधने प्रत्याख्याते याज्ञवल्क्यः स्वाभिप्रायसम्पत्तौ तुष्ट आह । स होवाच प्रिया इष्टा बतेत्यनुकम्प्याह अरे मैत्रेयि नोऽस्माकं पूर्व्वमपि प्रिया सती भवती इदानीं. प्रियमेव चित्तानुकूलं भाषसे एह्यास्स्व उपविश व्याख्यास्यामि यत्ते तवेष्टममृतत्वसाधनमात्मज्ञानं कथयिष्यामि व्याचक्षाणस्य तु मे मम व्याख्यानं कुर्व्वतो निदिध्यासस्व वाक्यान्यर्थतो निश्चयेन ध्यातुमिच्छेति ॥ ४ ॥ स होवाच अमृतत्वसाधनं

---

आ॰ अमृतत्वसाधनमात्मज्ञानं विवक्षितश्चेदात्मा वा अरे द्रष्टव्य इत्यादि वक्तव्यं किमिति न वा अरे पत्युरित्यादि वाक्यमित्याशङ्क्याह ॥ जायेति ॥ उवाच जायादीनामात्मार्थत्वेन प्रियत्वमात्मनस्त्वनौपाधिकप्रियत्वेन परमानन्दत्वमिति शेषः ॥ प्रतीकमादाय व्याचष्टे ॥ न वा इति ॥ किं तन्निपातेन स्मार्य्यते तदाह । प्रसिद्धमिति । यथोक्ते क्रमे नियामकमाह । पूर्व्वं पूर्व्वमिति ॥ यद्यदासन्नं प्रीतिसाधनं तत्तदनतिक्रम्य तस्मिन्विषये पूर्व्वं पूर्व्वं वचनमिति योजना ॥ तत्र हेतुमाह ॥ तत्रेति । न वा अरे सर्व्वस्येत्युक्तं । पत्यादीनामुक्तत्वादंशेन पुनरुक्तिप्रसङ्गादित्याशङ्क्याह ।

उ॰ कामाय जाया प्रिया भवति १ न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति १ न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति १ न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति १ न वा अरे क्षत्रस्य

---

भा॰ वैराग्यमुपदिदिक्षुः। जायापतिपुत्रादिभ्यो विरागमुत्पादयति। तत्सन्न्यासाय न वै॥ वै शब्दः प्रसिद्धस्मरणार्थः। प्रसिद्धमेव तल्लोके। पत्युर्भर्तुः कामाय प्रयोजनाय जायायाः पतिः प्रियो न भवति किन्तर्ह्यात्मनस्तु कामाय प्रयोजनायैव भार्यायाः पतिः प्रियो भवति। तथा न वा अरे जायायै इत्यादि समानमन्यत्। न वा अरे पुत्राणां। न वा अरे वित्तस्य। न वा अरे ब्रह्मणः। न वा अरे क्षत्रस्य। न वा अरे लोकानां। न वा अरे देवानां। न वा अरे भूतानां। न वा

---

आ॰ सर्व्वं प्रत्यक्षमिति॥ उक्तवदनुक्तानामपि ग्रहणं कर्तव्यं। न च सर्व्वे विशेषतो ग्रहीतुं शक्यन्ते। तेन सामान्यार्थं सर्व्वपदमित्यर्थः। सर्व्वपर्य्यायेषु सिद्धमर्थमुपसंहरति। तस्मादिति॥ ननु तृतीये प्रियत्वमात्मन आख्यातं तदेवात्रापि कथ्यते चेत्पुनरुक्तिः स्यात्तत्राह। तदेतदिति॥ अथोपन्यासविवरणाभ्यां प्रीतिरात्मन्येवेत्युक्तं। पुत्रादावपि तद्दर्शनादत आह। तस्मादिति॥ आत्मनो निरतिशयप्रीत्यास्पदत्वेन परमानन्दत्वमभिधायोत्तर वाक्यमादाय व्याचष्टे। तस्मादित्यादिना॥ कथं पुनरिदं दर्शनमुत्पद्यते तत्राह। श्रोतव्य इति॥ श्रवणादीनामन्यतमेनात्म-

उ० कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं
प्रियं भवति । न वा अरे लोकानां कामाय लोकाः
प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया
भवन्ति । न वा अरे देवानां कामाय देवाः पिया
भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति । न
वा अरे भूतानां कामाय भूतानि प्रियाणि भव-

---

भा० अरे सर्व्वस्य। पूर्व्वं पूर्व्वं यथाऽऽत्मने प्रीतिसाधने वचनं।
तत्र तत्रेष्टतरत्वाद्वैराग्यस्य सर्व्वपरित्यागमुक्तानुसार्थं। तस्मा-
ल्लोकप्रसिद्धमेतत्। आत्मैव प्रियो नान्यत्। तदेतत्प्रेयः
पुत्रादित्युपन्यस्तं। तदेतद्विस्तरेणेयं प्रपञ्चितं। तस्मा-
दात्मप्रीतिसाधनत्वाद्गौणी अन्यत्र प्रीतिरात्मन्येव मुख्या।
तस्मादात्मा वा अरे द्रष्टव्यो दर्शनार्हः दर्शनविषयमापा-
दयितव्यः। श्रोतव्यः पूर्व्वमाचार्यतः आगमतश्च। पश्चा-
न्मन्तव्यस्तर्कतः। ततो निदिध्यासितव्यो निश्चयेन ध्यातव्यः।

---

आ० आत्मलाभान्निमिति सर्व्वेषामध्ययनमित्याशङ्क्याह। एवं हीति॥
विधमनुसारित्वमेव प्रदर्शयति श्रुतत्वाविशेषादविकल्पहेत्वभावाच्च
सर्व्वैरेवात्मज्ञानं जायते चेत्तेषां समप्रधानत्वमाग्नेयादिवदापते-
दित्याशङ्क्याह। यदेति॥ श्रवणस्य प्रमाणविचारत्वेन प्रधानत्वा-
दङ्गित्वं। मननिदिध्यासनयोस्तु तत्कार्यप्रतिबन्धप्रध्वंसित्वा-
दङ्गत्वमित्यङ्गाङ्गिभावेन यदा श्रवणादीन्यसकृत्तदनुष्ठानेन
समुचितानि तदा सामग्रीपौष्कल्यात्तत्त्वज्ञानं फलाभिरक्तं
सिध्यति। मननाद्यभावे श्रवणमात्रेण नैव तदुपपद्यते। मनना-
दिना प्रतिबन्धाप्रध्वंसिवाक्यस्य फलवज्ज्ञानजनकत्वायोगादि-

उ॰ न्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वं विदितं ॥ ५ ॥

---

भा॰ एवं ह्यसौ दृष्टो भवति श्रवणमनननिदिध्यासनसाधनै-र्निर्वर्त्तितैः । यदैकत्वमेतान्युपगतानि तदा सम्यग्दर्शनं ब्रह्मै-कत्वविषयं प्रसीदति नान्यथा । श्रवणमात्रेण यद्ब्रह्मक्षत्रादि-कर्म्मनिमित्तं वर्णाश्रमादिलक्षणमात्मन्यविद्याऽध्यारोप-प्रत्ययविषयं क्रियाकारकफलात्मकमविद्याप्रत्ययविषयं । रज्ज्वामिव सर्पप्रत्ययस्तदुपमर्दार्थमाह । आत्मनि खलु अरे मैत्रेयि दृष्टे श्रुते मते विज्ञात इदं सर्व्वं विदितं भवति ॥ ५ ॥

---

आ॰ त्यर्थः । परामर्शवाक्यतात्पर्य्यमाह । यदीत्यादिना ॥ कर्म्मनि-मित्तं ब्रह्मक्षत्रादि तदेव वर्णाश्रमावस्थादिरूपमात्मन्यविद्यया-रोपितस्य प्रत्ययो मिथ्याज्ञानं तस्य विषयतया स्थितं क्रियाद्या-त्मकं तदुपमर्दनार्थमाहेति सम्बन्धः । अविद्याध्यारोपितप्रत्यक्ष-विषयमित्येतदेव व्याकरोति । अविद्येति ॥ अविद्याजनितप्रत्यय-विषयत्वे दृष्टान्तमाह । रज्ज्वामिति ॥ ५ ॥

उ॰ ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्यो ऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं

---

भा॰ ननु कथमन्यस्मिन्विदितेऽन्यद्विदितं भवति। नैष दोषः। न ह्यात्मव्यतिरेकेणान्यत्किञ्चिदस्ति। यद्यस्ति न तद्विदितं स्यान्न त्वन्यदस्ति आत्मैव तु सर्व्वं। तस्मात्सर्व्वमात्मनि विदिते विदितं स्यात्। कथं पुनरात्मैव सर्व्वमित्येतच्छ्रावयति। ब्रह्म ब्राह्मणजातिस्तं पुरुषं परादात् परादध्यात् पराकुर्यात्। कं योऽन्यत्रात्मन आत्मस्वरूपव्यतिरेकेणात्मैव न भवति इयं ब्राह्मणजातिरिति तां यो वेद तं परादध्यात्सा ब्राह्मणजातिरनात्मस्वरूपेण मां पश्यतीति। परमात्मा हि सर्व्वेषामात्मा। तथा क्षत्रं क्षत्रियजातिस्तथा लोका देवा भूतानि सर्वमिदं ब्रह्मेति

---

आ॰ आत्मनि विदिते सर्व्वं विदितमित्युक्तमाक्षिपति। नन्विति॥ दृष्टिविरोधं निराचष्टे। नैष दोष इति॥ आत्मनि ज्ञाते ज्ञातमेव सर्व्वं। ततोऽर्थान्तरस्याभावादित्युक्तमेव स्फुटयति। यद्यीत्यादिना॥ आकाङ्क्षापूर्व्वकमुत्तरवाक्यमुदाहृत्य व्याचष्टे। कथमित्यादिना॥ पुरुषं विशेषतो ज्ञातुं प्रश्नमुपन्यस्य प्रतीकं गृहीत्वा व्याकरोति॥ कमित्यादिना॥ पराकरणे पुरुषस्यापराधित्वं दर्शयति। अनात्मेति॥ परमात्मातिरेकेण दृश्यमानानामपि ब्राह्मणजातिः स्वस्वरूपेण पश्यन्कथमपराधी स्यादित्याशङ्क्याह।

उ॰ वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदꣳ सर्व्वं यदयमात्मा ॥ ६ ॥

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्या-

---

भा॰ यावन्यच प्रक्रान्तानि यान्यनुक्रान्तानि सर्वाण्यात्मैव यदयमात्मा योऽयमात्मा द्रष्टव्यः श्रोतव्य इति प्रकृतः। यस्मादात्मनो जायते आत्मन्येव लीयते आत्ममयञ्च स्थितिकाले आत्मव्यतिरेकेणाग्रहणादात्मैव सर्व्वं ॥ ६ ॥

कथं पुनरिदानीमिदं सर्व्वमात्मैवेति ग्रहीतुं शक्यते। चिन्मात्रानुगमात्सर्व्वत्र चित्स्वरूपतैवेति गम्यते। तत्र दृष्टान्त उच्यते। यत्स्वरूपव्यतिरेकेणाग्रहणं यस्य तस्य तदात्मत्वमेव लोके दृष्टं। स यथा स इति दृष्टान्तो लोके। यथा दुन्दुभेर्भेर्य्यादेर्हन्यमानस्य ताड्यमानस्य दण्डादिना न बाह्यान्छब्दान्बहिर्भूतान्छब्दविशेषान् दुन्दु-

---

आ॰ परमात्मेति। इदं ब्रह्मेत्युत्तरवाक्यानुवादस्तस्य व्याख्यानं यान्यनुक्रान्तानीत्यादि। आत्मैव सर्व्वमित्येतत्प्रतिपादयति। यस्मादित्यादिना। स्थितिकाले तिष्ठन्ति तस्मादात्मैव सर्व्वं। तद्व्यतिरेकेणाग्रहणादिति योजना। ६।

स्थित्यवस्थायां सर्व्वस्यात्ममात्रत्वं प्रागुक्तं ज्ञापकाभावादित्याशङ्कते। कथं पुनरिति। घटः स्फुरतीत्यादि प्रत्ययमाश्रित्य परिहरति। चिन्मात्रेति। स यथा दुन्दुभेरित्यादि वाक्यमवतारयति। तत्रेति। सर्व्वत्र चिद्व्यतिरेकेणासत्त्वं सप्तम्यर्थः। दृष्टान्ते विवक्षितं संक्षिपति। यत्स्वरूपेति। दुन्दुभिदृष्टान्तमादायाक्षराणि व्याचष्टे। स यथेत्यादिना। शब्दविशेषानेव विशद-

उ० घातस्य वा शब्दो गृहीतः ॥ ७ ॥ स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ८ ॥

---

भा० निःशब्दसामान्यान्निष्कृष्टान्दुन्दुभिशब्दविशेषान्न शक्नुयाद्ग्रहणाय ग्रहीतुं। दुन्दुभेस्तु ग्रहणेन शब्दसामान्यविशेषत्वेन दुन्दुभिशब्दाः। एत इति शब्दविशेषा गृहीता भवन्ति। दुन्दुभिशब्दसामान्यव्यतिरेकेणाभावात्तेषां दुन्दुभ्याघातस्य वा। दुन्दुभेराहननमाघातः। दुन्दुभ्याघातविशिष्टस्य शब्दसामान्यस्य ग्रहणेन तद्गता विशेषा गृहीता भवन्ति। न तु त एव निर्भिद्य ग्रहीतुं शक्यन्ते। विशेषरूपेणाभावात्तेषां। तथा प्रज्ञानव्यतिरेकेण स्वप्नजागरितयोर्न कश्चिद्वस्तुविशेषो गृह्यते। तस्मात्प्रज्ञानव्यतिरेकेणाभावो युक्तस्तेषां ॥ ७ ॥ तथा स यथा शङ्खस्य ध्मायमानस्य शब्देन संयोज्यमानस्यापूर्यमाणस्य न बाह्याञ्छब्दान् शक्नुयादित्येवमादि पूर्ववत् ॥ ८ ॥

---

आ० यथेति। दुन्दुभीति। कथन्तर्हि दुन्दुभिशब्दविशेषाणां ग्रहणं तदाह। दुन्दुभेस्त्विति। दुन्दुभिशब्दसामान्यस्येति यावत्। उक्तेऽर्थे दुन्दुभ्याघातस्येत्यादिवाक्यमुत्थाप्य व्याचष्टे। दुन्दुभ्याघातस्येति। वाशब्दार्थमाह। तद्गतविशेषा इति। उक्तमर्थं व्यतिरेकमुखेन विशदयति। न त्विति। विवक्षितन्दार्ष्टान्तिकमाचष्टे। तथेति। तत्रैव वस्तुविशेषग्रहणसम्भावनामभिप्रेत्य स्वप्नजागरितयोरित्युक्तं। यथा दुन्दुभिदृष्टान्तवदिति यावत्। शङ्खस्य तु ग्रहणेनेत्यादिवाक्यमादिशब्दार्थः। दुन्दुभेस्तु ग्रहणेनेत्यादिवाक्यमनुकर्षयति। पूर्ववदिति ॥ ७ ॥ ८ ॥

उ० स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ९ ॥

---

भा० तथा वीणायै वाद्यमानायै वीणाया वाद्यमानाया अनेकदृष्टान्तोपादानमिह सामान्यबहुत्वख्यापनार्थम्। अनेके हि विलक्षणाश्चेतनाचेतनरूपाः सामान्यविशेषास्तेषां पारम्पर्यगत्या यथैकस्मिन्महासामान्येऽन्तर्भावस्तथा प्रज्ञानघने कथन्नाम प्रदर्शयितव्य इति दुन्दुभिशङ्खवीणाशब्दसामान्यविशेषाणां यथा शब्दत्वे। एवं स्थितिकाले तावत्सामान्यविशेषाव्यतिरेकाद्ब्रह्मैकत्वं शक्यमवगन्तुं एवमुत्पत्तिकाले प्रागुत्पत्तेर्ब्रह्मैवेति शक्यमवगन्तुं ॥ ९ ॥

---

आ० तथेति दृष्टान्तद्वयपरामर्शः ॥ एकेनैव दृष्टान्तेन विवक्षितार्थसिद्धौ किमित्यनेकदृष्टान्तोपादानमित्याशङ्क्याह । अनेकेति ॥ इहेति जगदुच्यते श्रुतिर्वा ॥ सामान्यबहुत्वमेव स्फुटयति । अनेके हीति । तेषां स्वस्वसामान्येऽन्तर्भावेऽपि कुतो ब्रह्मणि पर्यवसानमित्याशङ्क्याह । तेषामिति ॥ कथमित्यस्मात्पूर्वं तथेत्यध्याहारः । इति मन्यते श्रुतिरिति शेषः । विमतं नात्मातिरेकि तदतिरेकेणाग्रह्यमाणत्वाद्यद्यदतिरेकेणाग्रह्यमाणं तत्तदतिरेकि न भवति यथा दुन्दुभ्यादिशब्दास्तत्सामान्यातिरेकेणाग्रह्यमाणास्तदतिरेकेण न सन्तीत्यनुमानं विवक्षन्नाह । दुन्दुभीति । शब्दत्वेऽन्तर्भावः । तथा प्रज्ञानघने सर्वं जगदन्तर्भवतीति शेषः ॥ दृष्टान्तत्रयमवष्टभ्य निष्टङ्कितमर्थमुपसंहरति । एवमिति ॥ स यथाऽऽर्द्रैधाग्नेरित्यादिवाक्यस्य तात्पर्यमाह । एवमित्यादिना ॥ ९ ॥

उ॰ स यथार्द्रैन्धाग्नेरभ्याहितात्पृथग्धूमा विनिश्च-
रन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेत-

---

भा॰ यथाग्नेर्विस्फुलिङ्गधूमाङ्गारार्चिषां प्रागविभागादग्नि-
रेवेति भवत्यग्न्येकत्वमेवं जगन्नामरूपविकृतं प्रागुत्पत्तेः
प्रज्ञानघन एवेति युक्तं ग्रहीतुमित्येतदुच्यते । स यथा
ऽऽर्द्रैधाग्नेरार्द्रैधोभिरिद्धोऽग्निरार्द्रैधाग्निस्तस्मादभ्याहिता-
त्पृथग्धूमाः पृथङ्नानाप्रकारं धूमग्रहणं विस्फुलिङ्गादि-
प्रदर्शनार्थं धूमविस्फुलिङ्गादयो विनिर्गच्छन्ति । एवं यथा
ऽयं दृष्टान्तः । अरे मैत्रेयि अस्य परमात्मनः प्रकृतस्य
महतो भूतस्य निःश्वसितमेतन्निश्वसितमिव निश्वसितं ।
यथाऽप्रयत्नेनैव पुरुषनिश्वासो भवत्येवं वा अरे किं तन्नि-
श्वसितमिव ततो जातमित्युच्यते । यदृग्वेदो यजुर्वेदः साम

---

आ॰ स्थितिकालवदित्येवं शब्दार्थः ॥ तत्र वाक्यमवतार्य व्याचष्टे ।
इत्येतदिति ॥ महतोऽनवच्छिन्नस्य भूतस्य परमार्थस्येति यावत् ॥
निश्वसितमिवेत्युक्तं व्यनक्ति । यथेति ॥ अरे मैत्रेयि ततो जातमिति
सम्बन्धः । तदेवाकाङ्क्षापूर्व्वकं विशदयति । किन्तदित्यादिना ॥
इतिहास इति ब्राह्मणमेवेति सम्बन्धः । संवादादिरित्यादिप-
देन प्राणसंवादादिग्रहणं । असद्वा इदमग्र आसीदित्यादिशब्दे-
नासदेवेदमग्र आसीदिति गृह्यते । देवजनविद्या नृत्यगीतादि-
शास्त्रं । वेदः सोऽयं वेदाद्भिन्नं भवतीत्यर्थः । इत्याद्या विद्येति
सम्बन्धः । आदिशब्दः शिल्पशास्त्रसङ्ग्रहार्थः । प्रियमित्येतदुपासी-
तेत्याद्या इत्यत्रादिशब्दः सत्यस्य सत्यमित्युपनिषत्सङ्ग्रहार्थः । तदेते
श्लोका इत्यादय इत्यत्रादिशब्देन तदप्येष श्लोको भवति । असन्नेव
स भवतीत्यादि गृह्यते इत्यादीनीत्यादिपदमथ योऽन्यां देवता-
मुपास्ते ब्रह्मविदाप्नोति परमित्यादि ग्रहीतुं । अर्थवादेषु व्याख्या-

उ० ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इति-
हासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनु

---

भा० वेदोऽथर्वाङ्गिरसश्चतुर्विधं मन्त्रजातं इतिहास इत्युर्व-
शीपुरूरवसोः संवादादिरुर्वशी हाप्सरा इत्यादि ब्राह्मण-
मेव पुराणमसद्वा इदमग्र आसीदित्यादि विद्या देवजन-
विद्या वेदः सोऽयमित्यादिरुपनिषदः प्रियमित्येतदुपासी-
तेत्याद्याः श्लोकाः ब्राह्मणप्रभवा मन्त्रास्तदेते श्लोका
इत्यादयः सूत्राणि वस्तुसङ्ग्रहवाक्यानि वेदे यथाऽऽत्मेत्येवो-
पासीतेत्यादीनि अनुव्याख्यानानि । मन्त्रविवरणानि
व्याख्यानान्यर्थवादाः । अथवा वस्तुसङ्ग्रहवाक्यविवरणा-
न्यनुव्याख्यानानि । यथा चतुर्थाध्याये आत्मेत्येवोपासी-
तेत्यस्य यथाऽन्योऽसावन्योऽहमस्मीति न स वेद यथा

---

व्या० नयदप्रवृत्तौ हेत्वभावं मत्वा पक्षान्तरमाह । अथवेति ।
इतिहासादिशब्दव्याख्यानमुपसंहरति । एवमिति । ब्राह्मण-
मितिहासादिपदवेदनीयमिति शेषः । ऋगादिशब्दानामिति-
हासादिशब्दानां च प्रसिद्धार्थत्यागे को हेतुरित्याशङ्क्य निश्व-
सितश्रुतिरितिहासादिशब्दानां प्रसिद्धार्थत्यागे हेतुः । परिशे-
षस्त्वन्वयेनेत्यभिप्रेत्याह । एवं मन्त्रेति । ननु प्रथमे काण्डे वेदस्य
नित्यत्वेन प्रामाण्यं स्थापितं तदनित्यत्वे वक्षामिरित्यत आह ।
निश्वसितेति । नेत्यादौ वेदे विश्रेष्यते । कस्मात्ते तर्हि ताम्वेदा-
नित्यादिवाक्यान्नियतरचनावत्त्वं वेदस्य गम्यते । अनादिनि-
धनानित्यादेश्च सदातनत्वं तस्य निर्णीयते । न च कृतकत्वादप्रा-
माण्यं प्रत्यक्षादौ व्यभिचारात् । न च पौरुषेयत्वादनपेक्षत्व-
भावादप्रामाण्यं । बुद्धिपूर्वप्रणीतत्वाभावेन तत्सिद्धेः । न कोऽप्यत्र-
वाप्याद्यसमबाधितार्थत्वादिति भावः । सिद्धे वेदस्य प्रामाण्ये

उ॰ व्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्व्वाणि-
निश्वसितानि ॥ १० ॥

भा॰ पश्चादेवमित्यस्यायमेवाध्यायशेषः । मन्त्रविवरणानि
व्याख्यानानि । एवमष्टविधम्ब्राह्मणं । एवं मन्त्रब्राह्मण-
योरेव ग्रहणं नियतरचनावतो विद्यमानस्यैव वेदस्याभि-
व्यक्तिः पुरुषनिश्वासवत् । न च पुरुषबुद्धिप्रयत्नपूर्व्वकः ।
अतः प्रमाणं निरपेक्ष एव स्वार्थे । तस्माद्यत्तेनोक्तं
तत्तथैव प्रतिपत्तव्यं ॥ आत्मनः श्रेय इच्छद्भिर्ज्ञानं वा
कर्म्म वेति नामप्रकाशवशा हि रूपस्य विक्रियाव्यवस्था ।
नामरूपयोरेव हि परमात्मोपाधिभूतयोर्व्याक्रियमा-
णयोः सलिलफेनवत्तत्त्वान्यत्वेनानिर्वक्तव्ययोः सर्व्वावस्थयोः
संसारत्वमिति । अतो नाम्न एव निश्वसितत्वमुक्तं । तद्वच-
नेनैवेतरस्य निश्वसितत्वसिद्धेः । अथवा सर्व्वस्य द्वैतजात-
स्याविद्याविषयत्वमुक्तं । ब्रह्म तं परादात् इदं सर्व्वं

आ॰ यदितमाह । तस्मादिति ॥ नामप्रपञ्चसृष्टिरेवात्रोपदिष्टा ।
न रूपप्रपञ्चसृष्टिः । सा चोपदेष्टव्या ॥ सृष्टिपूर्तेरन्यथानुपपत्तेरि-
त्याशङ्क्याह । नामेति ॥ यद्यपि नामतन्त्रा रूपसृष्टिरिति नाम-
सृष्टिवचनेन रूपसृष्टिरर्थादुक्ता तथापि सर्व्वसंसारसृष्टि-
र्नोक्ता । नामरूपयोरेव संसारत्वे प्राक् तत्सृष्टेः संसारो न
स्यादित्याशङ्क्याह । नामरूपयोरिति ॥ सर्व्वावस्थयोर्व्यक्ताव्यक्ताव-
स्थयोरिति यावत् ॥ नामप्रपञ्चस्यैवात्र सर्गोक्तिमुपपादितामुप-
संहरति । इतीति ॥ अतः शब्दार्थं स्फुटयति । तद्वचनेनेति ॥
निश्वसितश्रुतिं विधान्तरेणावतारयति । अथ वेत्यादिना ।
मिथ्यात्वेऽपि प्रतिबिम्बवत् प्रामाण्यसम्भवात् उन्मत्तादिवाक्या-

उ० स यथा सर्व्वासामपाᳫं समुद्र एकायनमेवᳫं सर्व्वेषाᳫं स्पर्शानां त्वगेकायनमेवᳫं सर्व्वेषाᳫं रसानां जिह्वैकायनमेवᳫं सर्व्वेषां गन्धानां नासिके एका-

---

भा० यद्‌यमात्मेति तेन वेदस्याप्रामाण्यमाशङ्क्यते । तदाशङ्कानिवृत्त्यर्थमिदमुक्तं पुरुषनिश्वासवदप्रयत्नोत्थितत्वात्प्रमाणं वेदो न यथाऽन्यो ग्रन्थ इति ॥ १० ॥

किञ्चान्यत् केवलं स्थित्युत्पत्तिकालयोरेव प्रज्ञानघनव्यतिरेकेणाभावाज्जगतो ब्रह्मत्वं प्रलयकाले च जलबुद्बुदफेनादीनामिव सलिलव्यतिरेकेणाभावः । एवं प्रज्ञानव्यतिरेकेण तत्कार्य्याणां नामरूपकर्म्मणां तस्मिन्नेव लीयमानानामभावः । तस्मादेकमेव ब्रह्म प्रज्ञानघनमेकरसं प्रतिपत्तव्यमित्यत आह । प्रलयप्रदर्शनाय दृष्टान्तः । स इति दृष्टान्तो यथा येन प्रकारेण सर्व्वासां नदीवापीतडागादिगतानामपां समुद्रोऽब्धिरेकायनमेक-

---

आ० नाच मिथ्याज्ञानाधीनप्रयत्नजन्यत्वेनाप्तत्वाद्वेदस्य तदभावादिलक्षणाव्यभिचाराच्च नाप्रामाण्यमित्याह । तदाशङ्केति ॥ १० ॥

अन्यो ग्रन्थो बुद्धादिप्रणीतः स्वर्गकामश्चैत्यं वन्देदित्यादिः स यथा सर्व्वासामपामित्यादि समनन्तरग्रन्थमुत्थापयति । किञ्चान्यदिति ॥ तदेव व्याकरोति । न केवलमिति ॥ प्रलयकाले च प्रज्ञानव्यतिरेकेणाभावाज्जगतो ब्रह्मत्वमिति सम्बन्धः । उक्तमर्थं दृष्टान्तेन स्पष्टयति । जलेति ॥ तथापि प्रज्ञानमेवैकमेवं स्यान्न ब्रह्मेत्याशङ्क्याह । तस्मादिति ॥ सत्यज्ञानादिवाक्याद्ब्रह्मणस्तन्मात्रत्वादित्यर्थः । यथोक्तं ब्रह्म चेत्प्रतिपत्तव्यं किमिति तर्हि स यथेत्यादि वाक्यमित्याशङ्क्य तच्छेषत्वेन प्रलयं दर्शयितुं दृष्टान्तवचनमे-

उ° यनमेवꣳ सर्व्वेषाꣳ रूपाणाञ्चक्षुरेकायनमेवꣳ सर्व्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्व्वेषाꣳ सङ्कल्पानां मन एकायनमेवꣳ सर्व्वासां विद्यानाꣳ

---

भा° गमनमेकप्रलयोऽविभागप्राप्तिरित्यर्थः। यथाऽयं दृष्टान्तः। एवं सर्व्वेषां स्पर्शानां मृदुकर्कशकठिनपिच्छिलादीनां वायोरात्मभूतानां त्वगेकायनं त्वगिति त्वग्विषयं स्पर्शसामान्यमात्रं तस्मिन्प्रविष्टाः स्पर्शविशेषा आप इव समुद्रं तद्व्यतिरेकेणाभावभूता भवन्ति। तस्यैव हि ते संस्थानमात्रा आसन्। तथा तदपि स्पर्शसामान्यमात्रं त्वक्शब्दवाच्यं मनःसङ्कल्पे मनोविषयसामान्यमात्रे त्वग्विषय इव स्पर्शविशेषाः। प्रविष्टं तद्व्यतिरेकेणाभावभूतं भवति। एवं मनोविषयोऽपि बुद्धिविषयसामान्यमात्रे प्रविष्टः। तद्व्य-

---

आ° तदित्याह। अप आहेति॥ प्रलीयतेऽस्मिन्निति प्रलयः। एकश्चासौ प्रलयश्चेत्येकप्रलयः। तडागादिगतानामपां कुतः समुद्रे लयो न हि तासां तेन सङ्गतिरित्याशङ्क्याह। अविभागेति॥ अत्र हि समुद्रशब्देन जलसामान्यमुच्यते तद्व्यतिरेकेण च जलविशेषाणामभावो विवक्षितः तेषां तत्संस्थानमात्रत्वात् अतस्तासामस्मिन्नविभागस्य प्राप्तिरिति समुद्रेऽविभागप्राप्तिरित्यर्थः। पिच्छिलादीनामित्यादिशब्देनानुक्तस्पर्शविशेषाः सर्व्वे गृह्यन्ते। विषयाणामिन्द्रियकार्यत्वाभावात्कुतः स्पर्शानां त्वचि विलयः स्यादित्याशङ्क्याह॥ त्वगितीति। स्पर्शविशेषाणां स्पर्शसामान्येऽन्तर्भावं प्रपञ्चयति। तस्मिन्निति। तथापि समस्तस्य जगतो ब्रह्मव्यतिरेकेणाभावाद्ब्रह्मत्वमिष्टमेतत्कथं प्रतिज्ञातमित्याशङ्क्य परम्परया ब्रह्मणि सर्व्वप्रविलयं दर्शयितुं क्रममनुक्रामति। तथेति॥ मनसि सति विषयविषयिभावस्य दर्शनादसति चादर्शनान्मनः स्पन्दितमात्रं विष-

उ० हृदयमेकायनमेवꣳ सर्व्वेषां कर्म्मणाꣳ हस्तावेका-
यनमेवꣳ सर्व्वेषामानन्दानामुपस्थ एकायनमे-
वꣳ सर्व्वेषां विसर्गाणां पायुरेकायनमेवꣳ सर्व्वे-

---

भा० तिरेकेणाभावभूतो भवति विज्ञानमात्रमेव भूत्वा प्रज्ञा-
नघने परे ब्रह्मणि आप इव समुद्रे प्रलीयते। एवं पर-
म्पराक्रमेण शब्दादौ सह ग्राहकेण करणेन प्रलीने प्रज्ञा-
नघने उपाध्यभावात् सैन्धवघनवत् प्रज्ञानघनमेकरसम-
नन्तरमपारं निरन्तरं निरञ्जनं ब्रह्म व्यवतिष्ठते। तस्मा-
दात्मैवैकमद्वयमिति प्रतिपत्तव्यं। तथा सर्व्वेषां गन्धानां
पृथिवीविशेषाणां नासिके घ्राणविषयसामान्यं। तथा सर्व्वेषां
रसानां अब्विशेषाणां जिह्वेन्द्रियविषयसामान्यं तथा रूपाणां
तेजोविशेषाणां चक्षुर्विषयसामान्यं। तथा श्रोत्रादिविषय-
सामान्यं पूर्व्ववत्। तथा श्रोत्रादिविषयसामान्यानां मनो-

---

आ० यज्जातमिति तस्य तद्विषयमात्रे प्रविष्टस्य तदतिरेकेणाभावमसत्त्व-
मित्यर्थः। सङ्कल्पस्याध्यवसायपारतन्त्र्यदर्शनादध्यवसायात्मिका-
यां च बुद्धौ तद्विषयस्य पूर्व्ववदनुप्रवेशात्सङ्कल्पविकल्पात्मकमनः-
स्पन्दितं द्वैतस्य सङ्कल्पात्मके मनस्यन्तर्भावात्तस्य च सम्मनो-
विषयसामान्यस्य बुद्धिविषयसामान्ये प्रविष्टस्य तद्व्यतिरेके-
णासत्त्वमित्याह। एवमिति। सर्व्वं जगत् उक्तेन न्यायेन बुद्धि-
मात्रं भूत्वा तद्यच्छेच्छान्त आत्मनीति श्रुत्या ब्रह्मणि पर्य्यवस्यती-
त्याह। विज्ञानमात्रमिति॥ ननु जगदिदं विलीयमानं शक्तिशे-
षमेव विलीयते। तत्त्वज्ञानादृते तस्य निःशेषनाशासम्भवात्।
तथा च कुतो ब्रह्मैकरसस्य प्रतिपत्तिरत आह। एवमिति॥
शक्तिशेषत्वेऽपि तस्या दुर्निरूपत्वाद्ब्रह्मैकरसस्य धीरविरुद्धे-

iv.



उ॰ षामधूनां पादावेकायनमेवꣳ सर्वेषां वेदानां वागेकायनं ॥ ११ ॥

भा॰ विषयसामान्ये सङ्कल्पे मनोविषयसामान्यस्यापि बुद्धिविषयसामान्ये विज्ञानमात्रे विज्ञानमात्रं भूत्वा परस्मिन् प्रज्ञानघने प्रलीयते। तथा कर्म्मेन्द्रियाणां विषया वदनादानगमनविसर्गानन्दविशेषास्तत्क्रियासामान्येष्वेव प्रविष्टा न विभाज्या भवन्ति समुद्र इवाब्भिविशेषास्तानि च सामान्यानि प्राणमात्रं प्राणश्च प्रज्ञानमात्रं। एवं यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राण इति कौषीतकिनोऽधीयते। ननु सर्व्वत्र विषयस्यैव प्रलयोऽभिहितो न तु करणस्य तत्र कोऽभिप्राय इति। वाढं। किन्तु विषयसमानजातीयं करणं मन्यते श्रुतिर्न तु जात्यन्तरं। विषयस्यैव स्वात्म-

आ॰ तिभावः। एकायनप्रक्रियातो सर्व्वमुपसंहरति। तस्मादिति॥ श्राह्यविषयसामान्यमित्यादावेकायनमिति सर्व्वत्र सम्बन्धः। कथं पुनरत्र प्रति पर्य्यायं ब्रह्मणि पर्य्यवसानं तत्राह। तथेति॥ यथा सर्व्वेषु पर्य्यायेषु ब्रह्मणि पर्य्यवसानं तथोच्यत इति यावत्। पूर्व्ववदिति त्वग्विषयसामान्यवदित्यर्थः सङ्कल्पे चय इति शेषः। विज्ञानमात्र इत्यत्रापि तथैव। एवं सर्व्वेषां कर्म्मणामित्यादेरर्थमाह। तथा कर्म्मेन्द्रियाणामिति॥ क्रियासामान्यानां सूत्रात्मसंस्थानभेदत्वमभ्युपेत्याह। तानि चेति॥ क्रियाज्ञानशक्त्योश्चिदुपाधिभूतयोश्चिदभेदाभेदमभिप्रेत्य प्राणश्चेत्यादिना भाष्यं। तत्र तयोरन्योन्याभेदे मानमाह। यो वा इति॥ श्रुतिमुखात्करणलयो न प्रतिभाति। स्वयञ्च व्याख्यायते। तत्र को हेतुरिति पृच्छति। नन्विति॥ श्रुत्या करणलयस्यानुक्तत्वमङ्गीकरोति। वाढमिति॥ एष्टमभिप्रायं प्रकटयति। किन्त्विति॥ करणस्य विषय-

उ० स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानु-
विलीयेत नाहास्योद्ग्रहणायेव स्यात्

---

भा० ग्राहकत्वेन संस्थानान्तरं करणं नाम। यथा रूपविशेष-
स्यैव संस्थानं प्रदीपः करणं सर्व्वरूपप्रकाशने। एवं सर्व्व-
विषयविशेषाणामेव स्वात्मविशेषप्रकाशकत्वेन संस्थाना-
न्तराणि करणानि प्रदीपवत्। तस्मान्न करणानां पृथक्-
प्रलये यत्नः कार्य्यो विषयसामान्यात्मकत्वाद्विषयप्रलयेनैव
प्रलयः सिद्धो भवति करणानामिति ॥ ११ ॥

तत्रेदं सर्व्वं यदयमात्मेति प्रतिज्ञातं तत्र हेतुरभि-
हित आत्मसामान्यत्वमात्मजत्वमात्मप्रलयत्वञ्च। तस्मादु-
त्पत्तिस्थितिप्रलयकालेषु प्रज्ञानव्यतिरेकेणाभावात्प्रज्ञानं
ब्रह्मैवात्मैवेदं सर्व्वमिति प्रतिज्ञातं यत्तत्तर्कतः साधितं
स्वाभाविकोऽयं प्रलय इति पौराणिका वदन्ति। यत्तु

---

आ० साजात्यं विषयोरिति। विषयस्यैवेति। किमत्र प्रमाणमित्याशङ्क्या-
नुमानं सूचयति। प्रदीपवदिति। चक्षुस्तैजसं रूपादिषु मध्ये
रूपस्यैव व्यञ्जकत्वात्सम्प्रतिपन्नवदित्यादीन्यनुमानानि शास्त्रप्रका-
शिकायामधिगन्तव्यानि। करणानां विषयसाजात्ये फलितमाह।
तस्मादिति। पृथग्विषयप्रलयादिति शेषः। एकायनप्रक्रिया-
समाप्ताविति शब्दः। ११।

स यथा सैन्धवखिल्यादेः सम्बन्धं वक्तुं वृत्तं कीर्त्तयति। तत्रेत्या-
दिना। पूर्व्वः सन्दर्भस्तत्रेत्युच्यते। प्रतिज्ञातेऽर्थे पूर्व्वोक्तं हेतु-
मनूद्य साध्यसिद्धिं फलं दर्शयति। तस्मादिति। उक्तहेतुर्यथोक्तं
ब्रह्मैव सर्व्वमिदं जगदिति यत्प्रतिज्ञातमिदं सर्व्वं यदयमा-
त्मेति तत्पूर्व्वोक्तदृष्टान्तप्रबन्धरूपतर्कवशात्साधितमिति योजना।

भा॰ बुद्धिपूर्व्वकः प्रलयो ब्रह्मविदां ब्रह्मविद्यानिमित्तोऽयमात्यन्तिक इत्याचक्षते अविद्यानिरोधद्वारेण यो भवति तदर्थोऽयं विशेषारम्भः। तत्र दृष्टान्त उपादीयते स यथेति। सैन्धवखिल्यः सिन्धोर्विकारः सैन्धवः सिन्धुशब्देनोदकमभिधीयते स्यन्दनात्सिन्धुरुदकं तद्विकारस्तत्र भवो वा सैन्धवस्त्रासौ खिल्यश्चेति सैन्धवखिल्यः खिल एव खिल्यः स्वार्थे यत्प्रत्ययः स्वार्थे उदके सिन्धौ लवणो प्रास्तः प्रक्षिप्तः उदकमेव विलीयमानमनुविलीयेत। यत्तद्भौमतेजसःसम्पर्कात्काठिन्यप्राप्तिः। खिल्यस्य स्वयोनिसम्पर्कादपगच्छति। तदुदकस्य विलयनं तदनु सैन्धवखिल्यो विलीयत इत्युच्यते तदेतदाह उदकमेवानुविलीयेतेति। न ह नैवास्य खिल्यस्योद्ग्रहणायोद्धृत्य पूर्व्ववद्ग्रहणाय यहीतुं नैव समर्थः कश्चित्स्यात्सुनिपुणोऽपि। इव शब्दोऽनर्थकः। ग्रहणाय नैव समर्थः॥

---

आ॰ उत्तरवाक्यस्य विषयपरिशेषार्थमुक्तप्रलये पौराणिकसम्मतिमाह। स्वाभाविक इति॥ कार्य्याणां प्रकृतावाश्रितत्वं स्वाभाविकत्वं। प्रलयान्तरेऽपि तेषां सम्मतिं सङ्गिरते। यश्चेति॥ द्वितीयप्रलयमधिकृत्यानन्तरग्रन्थमवतारयति। अविद्येति। तत्रेत्यान्तिकप्रलयोक्तिः॥ उदकं विलीयमान मनुयुक्तं॥ काठिन्यविलयेऽपि तस्यापादप्रवारितत्वाख्याह। यत इति॥ न चेति प्रतीकमादाय व्याचष्टे। नैवेति॥

उ॰ यतो यतस्त्वाद्दीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एव ।

---

भा॰ कस्माद्यतो यतो यस्माद्यस्माद्देशात्तदुदकमाददीत गृहीत्वा स्वादयेल्लवणास्वादमेव तदुदकं न तु खिल्यभावो यथायं दृष्टान्त एवमेव तु अरे मैत्रेयि इदं परमात्माख्यं महद्भूतं यस्मान्महतो भूताद्विद्यया परिच्छिन्ना सती कार्य्यकरणोपाधिसम्बन्धात् खिल्यभावमापन्नासि मर्त्या जन्ममरणाशनायापिपासादिसंसारधर्म्मवत्यसि नामरूपकार्य्यात्मिकामुष्यान्वयाहमिति । स खिल्यभावस्तव कार्य्यकरणभूतोपाधिसम्पर्कभ्रान्तिजनितो महति भूते स्वयोनौ महासमुद्रस्थानीये परमात्मन्यजरेऽमरेऽभये शुद्धे सैन्धवघनवदेकरसे प्रज्ञानघनेऽनन्तेऽपारे निरन्तरेऽविद्याजनितभ्रान्तिभेदवर्जिते प्रवेशितः । तस्मिन्प्रविष्टे

---

आ॰ अन्वयप्रदर्शनार्थं नैवेति पुनरुक्तं । महद्भूतमेकमद्वैतमित्युत्तरत्र सम्बन्धः। अस्यार्थस्य सर्व्वोपनिषत्प्रसिद्धत्वप्रदर्शनार्थो वैशब्दः। इदं महद्भूतमित्यत्रेदंशब्दार्थं विशदयति । यस्मादित्यादिना । तदिदं परमात्माख्यं महद्भूतमिति पूर्व्वेण सम्बन्धः । खिल्यभावापत्तिकार्य्यं कथयति । मर्त्येत्यादिना ॥ कोऽसौ खिल्यभावोऽभिप्रेतस्तत्राह । नामरूपेति ॥ कार्य्यकरणसङ्घाते तादात्म्याभिमानद्वारा आत्मभिमानोऽत्र खिल्यभाव इति । इति शब्देनाभिमानो कथ्यते। यथोक्ते खिल्यभावे सति कुतो भूतस्य महत्त्वमित्याशङ्क्याह । स खिल्यभाव इति ॥ खिल्यभावः स्वशब्दार्थः। परस्य परिशुद्धत्वार्थमजरादिविशेषणानि । केन रूपेणैकरस्यं त-

भा॰ स्वयोनिग्रस्ते खिल्यभावेऽविद्याकृते भेदभावे प्रणाशिते इद-मेकमद्वैतं महद्भूतं महच्च तद्भूतञ्च महद्भूतं सर्व्वमहत्तर-त्वात्तदाकाशादिकारणत्वाच्च भूतं त्रिष्वपि कालेषु स्वरू-पाव्यभिचारात्सर्व्वदैव परं निष्पन्नमिति। त्रैकालिको निष्ठाप्रत्ययः। अथवा भूतशब्दः परमार्थवाची महच्च पार-मार्थिकञ्चेत्यर्थः। लौकिकन्तु यद्यपि महद्भवति स्वप्नमथा छतं हि महदादि पर्व्वतोपमं न परमार्थवस्तु। अतो विशि-नष्टि इदञ्च महच्च तद्भूतञ्चेति। अनन्तं नास्यान्तो विद्यत इत्यनन्तं। कदाचिदापेक्षिकं स्यादित्यतो विशिनष्ट्यपार-मिति। विज्ञप्तिर्विज्ञानं विज्ञानञ्च तद्घनञ्चेति विज्ञानघनः। घनशब्दो जात्यन्तरप्रतिषेधार्थः। यथा सुवर्णघनोऽयोघन इति। एव शब्दोऽवधारणार्थः। नान्यज्जात्यन्तरमन्तराले विद्यत इत्यर्थः।

---

आ॰ दाह। प्रज्ञानेति॥ तस्यापरिच्छिन्नत्वमाह। अनन्त इति॥ तस्य सापेक्षत्वं वारयति। अपार इति॥ प्रतिभासमाने भेदे कथं यथोक्तं तत्त्वमित्याशङ्क्याह। अविद्येति॥ भवतु यथोक्ते तत्त्वे खिल्यभावस्य प्रवेशस्तथापि किं स्यादित्यत आह। तस्मिन्निति॥ महत्त्वं साधयति। सर्व्वेति॥ भूतत्वमुपपादयति। त्रिष्वपीति॥ महदित्युक्ते पारमार्थिकञ्चेति विशेषणं किमर्थमित्याशङ्क्याह। लौकिकमिति॥ जाग्रत्कालीनं परिदृश्यमानं हि महदादि मह-द्यद्यपि भवति तथापि स्वप्नप्रमायादिसमत्वान्न तत्परमार्थवस्तु। न हि दृश्यं जडं इन्द्रजालादेर्विशिष्यतेऽतो लौकिकान्महतो ब्रह्म व्यावर्त्तयितुं विशेषणमित्यर्थः। आपेक्षिकं स्यादानन्त्य-मिति शेषः।

उ॰ एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति

---

भा॰ यदीदमेकमद्वैतं परमार्थतः स्वच्छं संसारदुःखासंस्पृक्तं। किं निमित्तोऽयं खिल्यभावः। आत्मनो जातो मृतः सुखी दुःख्यहं ममेत्येवमादिलक्षणोऽनेकसंसारधर्म्मोपद्रुत इत्युच्यते। एतेभ्यो भूतेभ्यो यान्येतानि कार्य्यकरणविषयाकारपरिणतानि नामरूपात्मकानि सलिलफेनबुद्बुदोपमानि स्वच्छस्य परमात्मनः सलिलोपमस्य येषां विषयपर्य्यन्तानां प्रज्ञानघने ब्रह्मणि परमार्थविवेकज्ञानेन प्रविलापनमुक्तं नदीसमुद्रवत्। एतेभ्यो हेतुभूतेभ्यो भूतेभ्यः सत्यशब्दवाच्येभ्यः समुत्थाय सैन्धवखिल्यवद्यथाऽद्भ्यः सूर्य्यचन्द्रादिप्रतिबिम्बो यथा वा स्वच्छस्य स्फटिकस्यालक्तकाद्युपाधिभ्यो रक्तादिभावः एवं। कार्य्यकरणभूतभूतोपाधिभ्यो विशेषात्मखिल्यभावेन सम्यगुत्थाय येभ्यो

---

आ॰ अवधारणरूपमर्थमेव स्फोरयति। नान्यदिति॥ एतेभ्यो भूतेभ्यः समुत्थायेत्यादि समनन्तरवाक्यव्यावर्त्त्यामाशङ्कामाह। यदिदमिति॥ वस्तुतः सिद्धत्वे किं सिध्यति तदाह। संसारेति॥ तर्हि तस्मिन्निमित्ताभावान्न तस्य खिल्यत्वमिति मत्वाह। किं निमित्त इति॥ खिल्यभावमेव विशिनष्टि। जात इति॥ अनेकः संसाररूपो धर्म्मोऽशनायापिपासादिस्तेनोपद्रुतो दूषित इति यावत्। खिल्यभावे निमित्तं दर्शयन्नुत्तरमाह। उच्यत इति॥ एतच्छब्दार्थं व्याकरोति। यानीति॥ स्वच्छस्य परमात्मनः कार्य्यकरणविषयाकारेण परिणतानीति यावत्। तानि व्यवहारसिद्ध्यर्थं विशिनष्टि। नामरूपात्मकानीति॥ तेषामतिदुर्व्वलत्वं सूचयति। सलिलेति॥ स्वच्छत्वे दृष्टान्तमाह। सलिलोपमस्येति॥ तेषां प्रत्यक्-

उ॰ न प्रेत्य सञ्ज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥

---

भा॰ भूतेभ्यो उत्थितस्तानि यदा कार्य्यकरणविषयाकारपरिणतानि भूतान्यात्मनो विशेषात्मखिल्यहेतुभूतानि शास्त्राचार्य्योपदेशेन ब्रह्मविद्यया नदीसमुद्रवत्प्रविलापितानि विनश्यन्ति सलिलफेनबुद्बुदादिवत्। तेषु विनश्यत्सु स एष विशेषात्मखिल्यभावो विनश्यति । यथोदकालक्तकादिहेत्वपनये सूर्य्यचन्द्रस्फटिकादिप्रतिबिम्बो विनश्यति चन्द्रादिस्वरूपमेव परमार्थतो व्यवतिष्ठते। तद्वत्प्रज्ञानघनमनन्तमपारं स्वच्छं व्यवतिष्ठते। न तत्र प्रेत्यविशेषसञ्ज्ञास्ति। कार्य्यकरणसङ्घातेभ्यो विमुक्तस्येति । एवमरे मैत्रेयि ब्रवीमि नास्ति विशेषसञ्ज्ञेत्यहमसावमुष्य पुत्रो ममेदं क्षेत्रं धनं सुखी दुःखीत्येवमादिलक्षणाऽविद्याकृतत्वात्तस्या अविद्या-

---

व्या॰ तेऽपि प्रज्ञातत्वाभावे कथमेतच्छब्देन परामर्शः स्यादित्याशङ्क्याह । येषामिति ॥ उक्तमेकायनप्रक्रियायामिति शेषः । ब्रह्मणि प्रज्ञानघने भूतानां प्रलये दृष्टान्तमाह । नदीति ॥ हेतौ पञ्चमीति दर्शयति । हेतुभूतेभ्य इति ॥ पूर्व्वस्मिन् ब्राह्मणे वद्यन्तसत्यशब्दवाच्यतया तेषां प्रज्ञातत्वमाह । सत्येति ॥ यथा सैन्धवः सन् खिल्यः सिन्धोस्तेजःसम्बन्धमपेक्ष्योद्गच्छति तथा भूतेभ्यः खिल्यभावो भवतीत्याह । सैन्धवेति ॥ समुत्थानमेव विवृणोति । यथेत्यादिना ॥ तान्येवेत्यादि व्याचष्टे । येभ्य इति ॥ खिल्यहेतुभूतानि तत्र हेतुत्वेऽपि तानीति यावत् । ब्रह्मविद्योत्पत्तौ हेतुमाह । शास्त्रेति ॥ तत्पक्षं सदृष्टान्तमाचष्टे। नदीवदिति ॥ यथा सलिले फेनादयो विनश्यन्ति तथा तेषु भूतेषु विनश्यत्सु सत्सु अनु पश्चात्खिल्यभावो नश्यती-

उ॰ सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य-

---

भा॰ यास्य ब्रह्मविद्यया निरन्वयतो नाशित्वात्कुतो विशेषस-ञ्ज्ञासम्भवो ब्रह्मविदश्चैतन्यस्वभावस्थितस्य शरीरावस्थित-स्यापि विशेषसञ्ज्ञा नोपपद्यते किं पुनः कार्य्यकरणविमुक्तस्य सर्व्वत इति ह उवाच उक्तवान् किल परमार्थदर्शनं मैत्रेय्यै भार्य्यायै याज्ञवल्क्यः ॥ १२ ॥

एवं प्रतिबोधिता सा ह किल उवाच उक्तवती मैत्रेयी अत्रैवैतस्मिन्नेवैकस्मिन्वस्तुनि ब्रह्मणि विरुद्धधर्म्मवत्त्वमाच-क्षाणेन भगवता मम मोहः कृतस्तदाह अत्रैव मा भगवान् पूजावानमूमुहन् मोहं कृतवान्। कथं तेन विरुद्धधर्म्मवत्त्व-मुक्तमित्युच्यते पूर्व्वविज्ञानघन एवेति प्रतिज्ञाय पुनर्न प्रेत्य सञ्ज्ञास्तीति कथं विज्ञानघन एव कथं वा न प्रेत्यसञ्ज्ञा-स्तीति न ह्युष्णः शीतश्चाग्निरेवैको भवत्यतो मूढोऽस्म्यत्र

---

आ॰ त्याह। सलिलेति॥ किं पुनर्भूतानां खिल्यभावस्य च विनाशे सत्य-वशिष्यते तत्राह। यथेति। तत्रेति कैवल्योक्तिः॥ उक्तमेव वाक्यार्थं स्फुटयति। नास्तीति॥ ब्रह्मविदोऽशरीरस्य विशेष-सञ्ज्ञाभावं कैमुतिकन्यायेन कथयति। शरीरावस्थितस्येति॥ मुमुक्षस्येति यावत्। सर्व्वतो मुक्तस्येति शेषः॥ १२॥

उक्तं परमार्थदर्शनमेव व्यक्तीकर्त्तुं चोदयति। एवमिति॥ तेन याज्ञवल्क्येनेति यावत्। इति वदता विरुद्धधर्म्मवत्त्वमुक्त-मिति शेषः॥ एवं वदतोऽपि कुतो विरुद्धधर्म्मोक्तिस्तत्राह। कथमिति॥ एकस्यैव विज्ञानघनत्वे सञ्ज्ञाराहित्ये च कुतो विरु-द्धधीरित्याशङ्क्याह। नहीति॥ विरोधबुद्धिफलमाह। अत इति। अत्रेत्युक्तविषयपरामर्शः। न वा इति प्रतीकं गृहीत्वा व्याकरोति। अरे इति॥ मोहनवाक्यं ब्रवीत्येव भवानिति शङ्कते।

उ॰ सञ्ज्ञास्तीति स होवाच याज्ञवल्क्यो न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥ १३ ॥

---

भा॰ स होवाच याज्ञवल्क्यो न वै अरे मैत्रेयि अहं मोहं ब्रवीमि मोहनं वाक्यं न ब्रवीमीत्यर्थः। ननु कथं विरुद्ध-धर्मत्वमवोचो विज्ञानघनं सञ्ज्ञाभावञ्च ननु यदेकस्मिन्ध-र्म्मिणि अभिहितं त्वयैवेदं विरुद्धधर्म्मत्वेन एकं वस्तु परि-गृहीतं भ्रान्त्या न तु मयोक्तं। मया त्विदमुक्तं यस्तु अवि-द्याप्रत्युपस्थापितः कार्य्यकरणसम्बन्ध्यात्मनः खिल्यभाव-स्तस्मिन् विद्यया नाशिते तन्निमित्ताविशेषसञ्ज्ञाशरीरा-दिसम्बन्धिनि अन्यत्वदर्शनलक्षणा सा कार्य्यकरणसङ्घातो-पाधौ प्रविलापिते नश्यति हेत्वभावात्। उदकाद्याधार-नाशादिव चन्द्रादिप्रतिबिम्बः तन्निमित्तश्च प्रकाशादिर्न पुनः परमार्थचन्द्रादित्यस्वरूपानाशवदसंसारि ब्रह्मस्वरू-पस्य विज्ञानघनस्य नाशः तद्विज्ञानघन इत्युक्तं स आत्मा सर्व्वस्य जगतः परमार्थतो भूतनाशान्न विनाशी। विनाशी त्वविद्याकृतखिल्यभावो वाचारम्भणं विकारो नामधेयमिति

---

आ॰ नन्विति॥ समाधत्ते। न मयेति॥ कथं तर्हि ममैकस्मिन्नेव वस्तुनि विरुद्धधर्म्मवत्त्वबुद्धिरित्याशङ्क्याह। त्वयैवेति॥ त्वया तर्हि किमु-क्तमिति तत्राह। मया त्विति॥ खिल्यभावस्य विनाशे प्रत्यगात्मरू-पमेव विनश्यतीत्याशङ्क्याह। न पुनरिति॥ ब्रह्मस्वरूपस्यानाशे विज्ञानघनस्य किमायातमित्याशयेनाह। तदिति॥ विज्ञानघनस्य प्रत्युक्तत्वं दर्शयति। आत्मेति॥ कथं तर्हि तान्येवानुविनश्यतीति तत्राह। भूतनाशेति॥ खिल्यभावस्याविद्याकृतत्वे प्रमाणमाह।

उ॰ यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरꣳ शृणोति तदितर इतरमभिवदति तदितर

---

भा॰ श्रुत्यन्तरात्। अयन्तु पारमार्थिकोऽविनाशी वा अरे अयमात्मा अतोऽलं पर्य्याप्तं वै अरे इदं महद्भूतं अनन्तमपारं यथा व्याख्यातं विज्ञानाय विज्ञातुं न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वादिति हि वक्ष्यति ॥१३॥

कथं तर्हि प्रेत्यसञ्ज्ञा नास्तीत्युच्यते शृणु। यत्र यस्मिन्नविद्याकल्पिते कार्य्यकरणसङ्घातोपाधिजनिते विशेषात्मनि खिल्यभावे हि यस्माद्द्वैतमिव परमार्थतोऽद्वैते ब्रह्मणि द्वैतमिव भिन्नमिव वस्त्वन्तरमात्मन उपलक्ष्यते। ननु द्वैतेनोपमीयमानत्वात् द्वैतस्य पारमार्थिकत्वमिति न। वाचारम्भणं विकारो नामधेयमिति श्रुत्यन्तरादेकमेवाद्वितीय-

---

आ॰ वाचारम्भणमिति ॥ खिल्यभाववत्परमात्मनोऽपि नाशित्वं स्यादिति चेन्नेत्याह। अयन्त्विति ॥ पारमार्थिकत्वे प्रमाणमाह। अविनाशीति॥ अविनाशित्वं फलमाह। अत इति ॥ पर्य्याप्तं विज्ञातुमिति सम्बन्धः। इदमित्यादिपदानां गतार्थत्वादव्याख्येयत्वं सूचयति। यथेति ॥ विज्ञानघन एवेत्यत्र वाक्यशेषं प्रमाणयति। न हीति ॥१३॥

आत्मनो विज्ञानघनत्वं प्रामाणिकं चेत्तर्हि निषेधवाक्यमयुक्तमिति शङ्कते। कथमिति॥ अविद्याकृतविशेषविज्ञानाभावाभिप्रायेण निषेधवाक्योपपत्तिरित्युत्तरमाह। शृण्विति ॥ यस्मिन्नुक्तलक्षणे खिल्यभावे सति यस्माद्यथोक्ते ब्रह्मणि द्वैतमिव द्वैतमुपलक्ष्यते। तस्मात्तस्मिन्नस्तीतर इतरं जिघ्रतीति सम्बन्धः। द्वैतमि-

उ॰ इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येत्तत्केन कꣳ शृणुयात्तत्केन कमभिवदेत्तत्केन कं मन्वीत तत्केन कं विजानीयात् १

---

भा॰ आत्मैवेदं सर्वमिति च। तत्तत्र यस्माद्द्वैतमिव तस्मादेवेतरोऽसौ परमात्मनः खिल्यभूत आत्मा परमार्थचन्द्रादेरिवोदकचन्द्रादिप्रतिबिम्बो द्रष्टा इतरेण चक्षुरादिकरणेनेतरत् द्रष्टव्यं रूपादिकं पश्यति इतर इतरमिति कारकप्रदर्शनार्थं पश्यतीति क्रियाफलयोरभिधानं। यथा छिनत्तीति यथोद्यम्योद्यम्य निपातनं छेद्यस्य च द्वैधीभावस्य च उभयं छिनत्तीत्येकेनैव शब्देनाभिधीयते क्रियावसानत्वात् फला। क्रियाव्यतिरेकेण च तत्फलस्यानुपलम्भात्। इतरो

---

आ॰ वेत्युक्तमनूद्य व्याचष्टे। भिन्नमिवेति॥ इवशब्दस्योपमार्थमुपेत्य शङ्कते। नन्विति॥ द्वैतेन द्वैतस्योपमीयमानत्वाद्दृष्टान्तस्य दार्ष्टान्तिकस्य च तस्य वस्तुत्वं स्यादुपमानोपमेययोश्चन्द्रमुखयोर्वस्तुत्वोपलम्भादित्यर्थः। द्वैतप्रपञ्चस्य मिथ्यात्ववादिश्रुतिविरोधान्न तस्य सत्यतेति परिहरति। वाचारंभणमिति॥ तत्र तस्मिन् खिल्यभावे सतीति यावत्। स्वप्नादिद्वैतमिव जागरितेऽपि तद्द्वैतं यस्मादालक्ष्यते तस्मात्परमात्मनः सकाशादितरोऽसावात्मा खिल्यभूतोऽपरमार्थतः सन्नितरं जिघ्रतीति योजना। परस्मादितरस्मिन्नात्मन्यपरमार्थे खिल्यभूते दृष्टान्तमाह। चन्द्रादेरिवेति॥ इतरशब्दमनूद्य तस्यार्थमाह। करणेति॥ अविद्यादशायां सर्वाण्यपि कारकाणि सन्ति कर्तृकर्मनिर्देशस्य सर्वकारकोपलक्षणत्वादित्याह। इतरेति॥ क्रियाफलयोरेकशब्दत्वे दृष्टान्तं विवृणोति। यथेति॥ दृष्टान्तेऽपि विप्रतिपत्तिमाशङ्क्यानन्तरोक्तं हेतुमेव स्पष्टयति। क्रियेति॥

उ॰ येनेदꣳ सर्व्वं विजानाति तं केन विजानीयात्

---

भा॰ घ्राता इतरेण घ्राणेनेतरं घ्रातव्यं जिघ्रति तथा सर्व्वं पूर्व्ववद्विजानाति इयमविद्यावदवस्था। यत्र तु ब्रह्मविद्यया अविद्यानाशमुपगमिता तत्रात्मव्यतिरेकेणान्यस्याभावो यत्र वै अस्य ब्रह्मविदः सर्व्वं नामरूपाद्यात्मन्येव प्रविलापितं आत्मैव संवृत्तं यत्रैवमात्मैवाभूत्तत्र केन करणेन कं द्रष्टव्यं कः पश्येत्तथा जिघ्रेद्विजानीयात्॥

सर्व्वत्र हि कारकसाध्या क्रिया। अतः कारकाभावेऽनुपपत्तिः क्रियायाः। क्रियाभावे च फलाभावः। तस्मादविद्यायामेव सत्यां क्रियाकारकफलव्यवहारो न ब्रह्मविदः। आत्मत्वादेव सर्व्वस्य नात्मव्यतिरेकेण कारकं क्रियाफलं

---

आ॰ अतश्च जिघ्रतीत्यत्रापि क्रियाफलयोरेकशब्दत्वमविरुद्धमिति शेषः। उत्तरवाक्यार्थमनूद्य वाक्यान्तरेष्वतिदिशति। इतर इति॥ तथेतरो द्रष्टा नरेव चक्षुषोऽन्ते द्रष्टव्यं पश्यतीत्यादि द्रष्टव्यमिति शेषः। उत्तरेष्वपि वाक्येषु पूर्व्ववाक्यवत्कर्त्तृकर्म्मनिर्देशस्य सर्व्वकारकोपलक्षणत्वं क्रियापदस्य च क्रिया। तत्फलाभिधायित्वं तुल्यमित्याह। सर्व्वमिति॥ यत्र हीत्यादि वाक्यार्थमुपसंहरति। इयमिति॥ यत्र वा अस्येत्यादि वाक्यस्य तात्पर्य्यमाह। यत्र त्विति॥ उक्तेऽर्थे वाक्याक्षराणि व्याचष्टे। यत्रेति॥ तमेवार्थं सङ्क्षिपति। यत्रैवमिति॥ सर्व्वं कर्त्तृकरणादीति शेषः। तत्केनेत्यादि व्याकरोति। तत्रेति॥

किं शब्दस्याक्षेपार्थं कथयति। सर्व्वत्र हीति॥ ब्रह्मविदोऽपि कारकद्वारा क्रियादि स्वीक्रियतामित्याशङ्क्याह। आत्मत्वादिति॥ सर्व्वस्यात्मत्वासिद्धिमाशङ्क्य सर्व्वमात्मैवाभूदिति श्रुत्या समाधत्ते। न चेति॥ कथं तर्हि सर्व्वमात्मव्यतिरेकेण भातीत्या-

उ॰ विज्ञातारमरे केन विजानीयादिति ॥ १४ ॥
चतुर्थं ब्राह्मणं ॥

---

भा॰ वास्ति। न चानात्मा सर्व्वमात्मैव भवति कस्यचित्। तस्मादविद्ययैवानात्मत्वं परिकल्पितं न तु परमार्थत आत्मव्यतिरेकेणास्ति किञ्चित्तस्मात्परमार्थात्मैकत्वप्रत्यये क्रियाकारकफलप्रत्ययानुपपत्तिरतो विरोधाद्ब्रह्मविदः क्रियाणां तत्साधनानाञ्चात्यन्तमेव निवृत्तिः। केन कमिति क्षेपार्थं वचनं प्रकारान्तरानुपपत्तिदर्शनार्थं। न केनचिदपि प्रकारेण क्रियाकरणादिकारकानुपपत्तेः। केनचित् किञ्चित्कश्चित्कथंचिन्न पश्येदेवेत्यर्थः। यत्राप्यविद्यावस्थायामन्योऽन्यं पश्यति तत्रापि येनेदं सर्व्वं विजानाति तं केन विजानीयात् येन विजानाति तस्य करणस्य विज्ञेये विनि-

---

आ॰ यश्चाह। तस्मादिति॥ भेदभानस्याविद्याकृतत्वे फलितमाह। तस्मात्परमार्थेनेति॥ तद्धेतोरज्ञानस्यापनीतत्वादिति शेषः॥ एकत्वप्रत्ययादज्ञाननिवृत्तिद्वारा क्रियादिप्रत्यये निवृत्तेऽपि क्रियादि स्यादित्याह। अत इति। कारकप्रमाणयोरभावे कार्य्यस्य विरुद्धत्वादिति यावत्॥ ननु किंशब्दे प्रश्नार्थे प्रतीयमाने कथं क्रियातत्साधनयोरत्यन्तनिवृत्तिर्विदुषो विवक्ष्यते तत्राह। केनेति। किंशब्दस्य प्रागेवाक्षेपार्थत्वमुक्तं तथाक्षेपार्थवचो विदुषः सर्व्वप्रकारक्रियाकारकाद्यसम्भवप्रदर्शनार्थमित्यत्यन्तमेव क्रियानिवृत्तिर्विदुषो युक्तेत्यर्थः॥ सर्व्वप्रकारानुपपत्तिमेवाभिनयति। केनचिदिति॥ कैवल्यावस्थामाश्रित्य सम्बन्धाभाववचनमित्युक्त्वा तत्रैव किं पुनर्न्यायं वक्तुमविद्यावस्थायामपि साक्षिणो ज्ञानाविषयत्वमाह। यत्रापीति॥ येन कूटस्थबोधेन ज्ञातो लोकः सर्व्वं जानाति तं साक्षिणं केन करणेन को वा ज्ञाता जानीयादित्यत्र हेतुमाह।

भा॰ युक्तत्वात् ज्ञातुश्च ज्ञेये एव हि जिज्ञासा नात्मनि। न चा-
ग्नेरिवात्मात्मनो विषयो न चाविषये ज्ञातुर्ज्ञानमुपपद्यते।
तस्माद्येनेदं सर्व्वं विजानाति तं विज्ञातारं केन करणेन को
वान्यो विजानीयाद्यदा तु पुनः परमार्थविवेकिनो ब्रह्म-
विदो विज्ञातैव केवलो द्वयोर्वर्त्तते तं विज्ञातारमरे केन
विजानीयादिति ॥ १४ ॥ चतुर्थस्य चतुर्थं ब्राह्मणं ॥

यत्कैवल्यं कर्म्मनिरपेक्षममृतत्वसाधनं तद्वक्तव्यमिति मैत्रे-
यिब्राह्मणमारब्धं। तच्चात्मज्ञानं सर्व्वसन्न्यासाङ्गविशिष्टं।
आत्मनि च विज्ञाते सर्व्वमिदं विज्ञातं भवति। आत्मा
च प्रियः सर्व्वस्मात्तस्मादात्मा द्रष्टव्यः स च श्रोतव्यो
मन्तव्यो निदिध्यासितव्य इति च। दर्शनप्रकारा उक्ता-

---

आ॰ येनेति। येन चक्षुरादिना लोको जानाति तस्य विषयग्राहके-
नैवोपक्षीणत्वान्न साक्षिणि प्रवृत्तिरित्यर्थः॥ आत्मनः सन्दिग्धभा-
वत्वाच्च प्रमेयत्वासिद्धिरित्याह। ज्ञातुश्चेति। किञ्चात्मा स्वेनैव
ज्ञायते ज्ञानान्तरेण वा नाद्य इत्याह। न चेति॥ न द्वितीय
इत्याह। न चाविषय इति। ज्ञानान्तरस्याभावात्तस्य विषयोऽय-
मात्मा कुतस्तेन ज्ञातुं शक्यते। न हि ज्ञानान्तरमस्ति नान्यतोऽस्ति
द्रष्टेत्यादिश्रुतेरित्यर्थः॥ आत्मनि प्रमातृप्रमाणयोरभावे ज्ञानावि-
षयत्वं फलतीत्याह। तस्मादिति॥ विज्ञातारमित्यादिवाक्यस्यार्थं
प्रपञ्चयति। यदा त्विति। तदेवं स्वरूपापेक्षं विज्ञानघनत्वं।
विशेषविशेषविज्ञानापेक्षं तु संज्ञाभाववचनमित्यविरोध
इति॥ १४॥ इति चतुर्थं ब्राह्मणं॥

पूर्व्वोत्तरब्राह्मणयोः सङ्गतिं वक्तुं वृत्तं कीर्त्तयति। यत्कैवल-
मिति॥ कैवल्यं व्याचष्टे। कर्म्मेति। निरपेक्षमिति तच्चात्मज्ञा-
नमुक्तमिति सम्बन्धः। ततो निराकाङ्क्षत्वं सिद्धमिति चकारार्थः॥
आत्मज्ञानं सन्न्यासिनामेवेति नियन्तुं विशिनष्टि। सर्व्वेति॥ ननु

भा॰ तत्र च श्रोतव्य आचार्य्यागमाभ्यां । मन्तव्यस्तर्कतस्तत्र तर्कस्त्र उक्त आत्मैवेदं सर्व्वमिति । प्रतिज्ञातस्य हेतुवचनं आत्मैकसामान्यत्वमात्मैकोद्भवत्वमात्मैकप्रलयत्वञ्च । तत्रायं हेतुरसिद्ध इत्याशङ्क्यते आत्मैकसामान्योद्भवप्रलयाख्यस्तदा शङ्कानिवृत्त्यर्थमेतद्ब्राह्मणमारभ्यते । यस्मात्परस्परोपकार्य्योपकारकभूतं जगत्सर्व्वं पृथिव्यादि यच्च लोके परस्परोपकार्य्योपकारकभूतं तदेककारणपूर्व्वकमेकसामान्यात्मकमेकप्रलयं च दृष्टं । तस्मादिदमपि पृथिव्यादिलक्षणं जगत्परस्परकार्य्यकारणत्वात् तथाभूतं भवितुमर्हति । एष ह्यर्थोऽस्मिन्ब्राह्मणे प्रकाश्यतेऽथवा आत्मैवेदं सर्व्वमिति प्रतिज्ञातस्यात्मोत्पत्तिस्थितिलयत्वं

---

आ॰ कुतस्ततो नैराकाङ्क्ष्यं सत्यपि तस्मिन्विषयान्तरसम्भवादत आह । आत्मनि चेति ॥ न वा अरे पत्युरित्यादावुक्तं स्मारयति । आत्मा चेति ॥ तस्य निरतिशयप्रेमास्पदत्वेन परमानन्दत्वे फलितमाह । तस्मादिति ॥ स चेद्दर्शनार्हस्तर्हि तद्दर्शने कानि साधनानीत्याशङ्क्याह । स चेति ॥ दर्शनप्रकारा दर्शनस्योपायप्रभेदाः ॥ श्रवणमननयोः स्वरूपे विशेषं दर्शयति । तत्रेति ॥ कोऽसौ तर्को येन आत्मा मन्तव्यो भवति तत्राह । तत्र चेति ॥ दुन्दुभ्यादिग्रन्थः सप्तम्यर्थः ॥ उक्तमेव तर्कं सङ्क्रृणाति । आत्मैवेदमिति ॥ प्रधानादिवादमादाय हेत्वसिद्धिशङ्कायां तन्निराकरणार्थमिदम्ब्राह्मणमिति सङ्गतिं सङ्गिरते । तत्रायमिति ॥ कथं हेत्वसिद्धिशङ्कोद्ध्रियते तत्राह । यस्मादिति । तस्मात्तथा भूतं भवितुमर्हतीति उत्तरत्र सम्बन्धः ॥ अन्योऽन्योपकार्य्योपकारकभूतं जगदेकचैतन्यानुविद्धमेकप्रकृतिकञ्चेत्यत्र व्याप्तिमाह । यच्चेति । दृष्टं सम्प्रादोति शेषः ॥ दृष्टान्ते सिद्धमर्थं दार्ष्टान्तिके योजयति । तस्मादिति । तच्छब्दार्थं स्फुटयति । परस्परेति ॥ तथाभूतमित्येककारणपूर्व्वकत्वा-

भा॰ हेतुमुक्त्वा पुनरागमप्रधानेन मधुब्राह्मणेन प्रतिज्ञातस्या-
र्थस्य निगमनं क्रियते। तथाहि नैयायिकैरुक्तं हेत्वपदेशात्
प्रतिज्ञायाः पुनर्वचनं निगमनमिति। अन्यैर्व्याख्यातं आदु-
न्दुभिदृष्टान्तात् श्रोतव्यार्थं आगमवचनं प्राङ्मधुब्राह्मणा-
न्मन्तव्यार्थमुपपत्तिप्रदर्शनेन। मधुब्राह्मणेन तु निदिध्या-
सनविधिरुच्यत इति। सर्व्वथापि तु यथागमेनावधारितं
तर्कतस्तथैव मन्तव्यं। यथा तर्कतो मतस्य तर्कागमाभ्यां
निश्चितस्य तथैव निदिध्यासनं क्रियत इति पृथङ्निदिध्या-
सनविधिरनर्थक एव। तस्मात्पृथक्प्रकरणविभागोऽनर्थक

---

आ॰ दिति मन्यते॥ विमतमेव कारणकं परस्परोपकार्य्योपकारक-
भूतत्वान्मधुप्रवदित्ययुक्तं हेत्वसिद्धेः। न हि सर्व्वं जगत्परस्परोपका-
र्य्योपकारकभूतमित्याशङ्क्याह। एष हीति॥ हेत्वसिद्धिशङ्कां
परिहर्त्तुं ब्राह्मणमिति सङ्गतिमुक्त्वा प्रकारान्तरेण तामाह।
अथ वेति॥ प्रतिज्ञा हेतुक्रमेणोक्त्वा हेतुसहितस्य प्रतिज्ञार्थस्य
पुनर्वचनं निगमनं इत्यत्र तार्किकसम्मतिमाह। तथा हीति॥
भर्तृप्रपञ्चानां ब्राह्मणारम्भप्रकारमनुवदति। अन्यैरिति। इष्ट-
व्यादिवाक्यादारभ्य दुन्दुभिदृष्टान्तादागमवचनं श्रोतव्य इत्युक्त-
श्रवणनिरूपणार्थं॥ दुन्दुभिदृष्टान्तादारभ्य मधुब्राह्मणात्प्रागुप-
पत्तिप्रदर्शनेन मन्तव्य इत्युक्तं मननिरूपणार्थमागमवचनं। निदि-
ध्यासनं व्याख्यातुं पुनरेतद्ब्राह्मणमित्यर्थः॥ एतद्दूषयति। सर्व्वथा-
पीति। श्रवणादेर्विधेयत्वेऽपीति यावत्। अन्वयव्यतिरेकाभ्यां
श्रवणे प्रवृत्तस्य तत्त्वैकाग्र्ये सत्यर्थलब्धं मननं न विधिमपेक्षते। यथा
तर्कतो मतं तत्त्वं तथा तर्कस्य तर्कागमाभ्यां निश्चितस्योभयस्या-
मर्थादेव निदिध्यासनसिद्धौ तदपि विध्यनपेक्षितमेवेत्यर्थः॥
श्रयाणां विध्यनपेक्षितत्वे फलितमाह। तस्मादिति। इति पर-
कीयव्याख्यानमयुक्तमिति शेषः॥ सिद्धान्तेऽपि श्रवणादिविध्युप-

उ॰ इयं पृथिवी सर्व्वेषां भूतानां मध्वस्यै पृथिव्यै सर्व्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शारीर-

---

भा॰ इत्यस्मदभिप्रायः। श्रवणमननिदिध्यासनानामिति। सर्व्वथापि लब्धायदयस्यार्थोऽस्मिन्ब्राह्मण उपसंह्रियते॥

इयं पृथिवी प्रसिद्धा सर्व्वेषां भूतानां मधु सर्व्वेषां ब्रह्मादिस्तम्बपर्य्यन्तानां भूतानां प्राणिनां मधुकार्य्यं मध्विव मधु। यथैको मध्वपूपोऽनेकैर्मधुकरैर्निर्वर्त्तित एवमियं पृथिवी सर्व्वभूतनिर्वर्त्तिता तथा सर्व्वाणि भूतानि पृथिव्यै पृथिव्या अस्या मधुकार्य्यं। किञ्च यश्चायं पुरुषोऽस्यां पृथिव्यां तेजोमयश्चिन्मात्रप्रकाशमयोऽमृतमयोऽमरणधर्म्मा पुरुषो यश्चायमध्यात्मं शारीरः शरीरे भवः पूर्व्ववत्तेजोमयोऽमृतमयः पुरुषः स च लिङ्गाभिमानी स च सर्व्वेषां भूतानामुपकाराकरणत्वेन मधु सर्व्वाणि च

---

आ॰ ममात्मीयं परकीयं प्रस्थानं प्रत्याख्यातमित्याशङ्क्याह। सर्व्वथापि त्विति। तद्विध्युपगमेऽपीति यावत्॥

एवं सङ्गतिं ब्राह्मणस्योक्त्वा तदक्षराणि व्याकरोति। इयमित्यादिना॥ यदुक्तं मध्विव मध्विति तद्विवृणोति। यथेति॥ न केवलमुक्तं मधुद्वयमेव किन्तु मध्वन्तरञ्चास्तीत्याह। किञ्चेति। पुरुषशब्दस्य क्षेत्रविषयत्वं वारयति। स चेति॥ तस्य पृथिवीवन्मधुत्वमाह। स च सर्व्वेषामिति॥ सर्व्वेषाञ्च भूतानां तं प्रति मधुत्वं दर्शयति। सर्व्वाणि चेति॥ नन्वाद्यमेव मधुद्वयं श्रुतमश्रुतन्तु मधुद्वयमशक्यं कल्पयितुं कल्पकाभावादत आह। च शब्देति॥ प्रथमपर्य्यायार्थमुपसंहरति। एवमिति। पृथिवी सर्व्वाणि भूतानि पार्थिवः पुरुषः

उ॰ स्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मे-
दममृतमिदं ब्रह्मेदꣳ सर्वं ॥ १ ॥

---

भा॰ भूतान्यस्य मधु। च शब्दसामर्थ्यात्। एवमेतच्चतुष्टयं तावदेकं सर्व्वभूतकार्य्यं। सर्व्वाणि च भूतान्यस्य कार्य्यं। अतोऽस्यैककारणपूर्व्वकता यस्मादेकस्मात्कारणादेतज्जातं तदेवैकं परमार्थतो ब्रह्मेतरत्कार्य्यं वाचारम्भणं विकारो नामधेयमात्रमित्येष मधुपर्य्यायाणां सर्व्वेषामर्थः सङ्क्षेपतः। अयमेव स योऽयं प्रतिज्ञात इदं सर्व्वं यदयमात्मेति इदममृतं यन्मैत्रेय्य अमृतत्वसाधनमुक्तमात्मविज्ञानमिदं तदमृतमिदं ब्रह्म यद्ब्रह्म ते ब्रवाणि ज्ञपयिष्यामीत्यध्यायादौ प्रकृतं यद्विषया च विद्या ब्रह्मविद्येत्युच्यते इदं सर्व्वं। यस्माद्ब्रह्मणो विज्ञानात्सर्व्वं भवति॥ १॥

---

आ॰ शारीरश्चेति चतुष्टयमेकं मध्विति शेषः॥ मधुशब्दार्थमाह। सर्व्वेति। अस्येति पृथिव्यादेरिति यावत्॥ परस्परमुपकार्य्योपकारकभावे फलितमाह। अत इति। अस्येति सर्व्वं जगदुच्यते॥ उक्तञ्च यस्मात्परस्परोपकार्य्योपकारकभूतमित्यादि भवत्वनेन न्यायेन मधुपर्य्यायेषु सर्व्वेषु कार्य्योपदेशो ब्रह्मोपदेशस्तु कथमित्याशङ्क्याह। यस्मादिति। स प्रकृत आत्मैवायं चतुर्ष्वपि भेद इति योजना॥ इदमिति चतुष्टयकल्पनाधिष्ठानविषयं ज्ञानं परामृशति। इदं ब्रह्मेति॥ अत्र चतुष्टयाधिष्ठानमिदं शब्दार्थः॥ तृतीये च तस्य प्रकृतत्वं दर्शयति। यद्विषयेति। इदं सर्व्वमित्यत्र ब्रह्मज्ञानमित्युक्तं। सर्व्वं सर्व्वात्मिसाधनमिति यावत्॥ तदेव स्पष्टयति। यस्मादिति॥ १॥

उ॰ इमा आपः सर्व्वेषां भूतानां मध्वासामपाꣳ सर्व्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयो ऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वं ॥ २ ॥ अयमग्निः सर्व्वेषां भूतानां मध्वस्याग्नेः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वं ॥ ३ ॥ अयं वायुः सर्व्वेषां भूतानां मध्वस्य वायोः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृत-

---

भा॰ तथा आपो अध्यात्मं रेतस्यपां विशेषतोऽवस्थानं ॥ २ ॥ तथाग्निर्वाच्यग्नेर्विशेषतोऽवस्थानं ॥ ३ ॥ तथा वाय्वध्यात्मं प्राणो भूतानां शरीरारम्भकत्वेनोपकारान्मधुत्वं । तदन्त-

---

आ॰ यथा पृथिवी मधुत्वेन व्याख्याता तथान्येऽपि व्याख्येया इत्याह । तथेति ॥ रेतस इति विशेषणस्यार्थमाह । अध्यात्ममिति । आपो रेतो भूत्वा शिश्नं प्राविशन्निति हि श्रुत्यन्तरं ॥ २ ॥ पृथिव्यामप्सु चोक्तन्यायमग्नावतिदिशति । तथेति ॥ वाङ्मय इत्यस्यार्थमाह । वाचीति । अग्निर्वाग्भूत्वा मुखं प्राविशदिति हि श्रूयते ॥ ३ ॥ अग्नावुक्तन्यायं वायौ योजयति । तथेति ॥ वायुः प्राणो भूत्वा नासिके प्राविशदिति श्रुत्यन्तरमाश्रित्याह । अध्यात्ममिति ॥ पृथिव्यादि तदन्तर्वर्त्तिनाञ्च पुरुषाणामेकवाक्योपात्तानामेकरूपं मधुत्वमिति शङ्कां परिहरन्नवान्तरविभागमाह ।

उ॰ मयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं ॥ ४ ॥ अयमादित्यः सर्वेषां भूतानां मध्वस्यादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं ॥ ५ ॥

इमा दिशः सर्वेषां भूतानां मध्वासां दिशाꣳ सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ श्रौत्रः

---

भा॰ र्गतानां तेजोमयादीनां करणत्वेनोपकारान्मधुत्वं । तथा चोक्तं । तस्यैव वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निरिति ॥ ४ ॥ तथादित्यो मधु चक्षुरध्यात्मं ॥ ५ ॥

तथा दिशो मधु दिशां यद्यपि श्रोत्रमध्यात्मं तथापि शब्दप्रतिश्रवणवेलायान्तु विशेषतः सन्निहितो भवति इत्य-

---

आ॰ भूतानामिति ॥ पृथिव्यादीनां कार्य्यत्वं तेजोमयादीनां करणत्वमित्यत्र समानाधिकारसम्मतिमाह । तथा चोक्तमिति ॥ ४ ॥ यद्यप्यादित्यस्तृतीये भूतेऽन्तर्भवति तथापि देवताभेदमाश्रित्याग्नावुक्तन्यायं तस्मिन्नतिदिशति । तथेति ॥ आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदिति श्रुतिमाश्रित्याह चक्षुरिति ॥ ५ ॥

आदित्यगतं न्यायं दिक्षु सम्पादयति । तथेति ॥ दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्निति श्रुतेः श्रोत्रमेव दिशामध्यात्मं तथा-

उ॰ प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं ॥ ६ ॥ अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिꣳश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं ॥ ७ ॥ इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं ॥ ८ ॥ अयꣳ स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिꣳ स्तन-

---

भा॰ ध्यात्मं। प्रातिश्रुत्कः प्रतिश्रुत्कायां प्रतिश्रवणवेलायां भवः प्रातिश्रुत्कः ॥ ६ ॥ तथा चन्द्रः अध्यात्मं मानसः ॥ ७ ॥ तथा विद्युत्त्वक् तेजसि भवस्तैजसोऽध्यात्मं ॥ ८ ॥ तथा

---

आ॰ चाध्यात्मं श्रोत्रमित्येव वक्तव्ये कथं प्रातिश्रुत्क इति विशेषण-मित्याशङ्क्याह। दिग्मामिति ॥ तथापीत्यस्मिन्नर्थे तुशब्दः ॥ ६ ॥ दिक्षु व्यवस्थितन्यायं चन्द्रे दर्शयति। तथेति ॥ चन्द्रमा मनो भूत्वा हृदयं प्राविशदिति श्रुतिमनुसृत्याह । अध्यात्ममिति ॥ ७ ॥ चन्द्रवद्विद्युतोऽपि मधुत्वमाह। तथेति ॥ अध्यात्मं तैजस इत्यस्यार्थमाह । त्वगिति ॥ ८ ॥ पर्जन्योऽपि विद्युदादिवत्सर्वेषां

उ० यित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं ॥ ९ ॥ अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वं ॥ १० ॥

---

भा० स्तनयित्नुः शब्दे भवः शाब्दोऽध्यात्मं यद्यपि तथापि स्वरे विशेषतो भवतीति सौवरो ऽध्यात्मं ॥ ९ ॥ तथाकाशो ऽध्यात्मं हृदयाकाशो हृदयः आकाशान्ताः पृथिव्यादयो भूतगणा देवतागणाश्च कार्य्यकरणसङ्घातात्मान उपकुर्वन्तो मधु भवन्ति प्रति शरीरिणमित्युक्तं । येन ते प्रयुक्ताः शरीरिभिः सम्बध्यमाना मधुत्वेनोपकुर्वन्ति तद्वक्तव्यमितीदमारभ्यते ॥ १० ॥

---

आ० भूतानां मधु भवतीत्याह । तथेति ॥ अध्यात्मं शाब्द इत्यस्यार्थमाह । शब्दे भव इति । यद्यप्यध्यात्मं शब्दे भव इति शाब्दः पुरुषस्तथापि स्वरे विशेषतो भवतीत्यध्यात्मं सौवरः पुरुष इति योजना ॥ ९ ॥ स्तनयित्नावुक्तन्यायमाकाशेऽतिदिशति । तथेति ॥ पर्य्यायान्तरं वृत्तमनूद्योत्थापयति । आकाशान्ता इति । प्रति शरीरिणं सर्व्वेषां शरीरिणां प्रत्येकमिति यावत् ॥ १० ॥

उ॰ अयं धर्म्मः सर्वेषां भूतानां मध्वस्य धर्म्मस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्धर्म्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्म्मस्तेजो-

---

भा॰ अयं धर्म्मोऽयमित्यप्रत्यक्षोऽपि धर्म्मः कार्य्येण तत्प्रयुक्तेन प्रत्यक्षेण व्यपदिश्यते अयं धर्म्म इति। प्रत्यक्षवद्धर्म्मश्च व्याख्यातः श्रुतिस्मृतिलक्षणः। क्षत्रादीनामपि नियन्ता जगतो वैचित्र्यकृत्पृथिव्यादीनां परिणामहेतुत्वात्प्राणिभिरनुष्ठीयमानरूपश्च तेन चायं धर्म्म इति प्रत्यक्षेण व्यपदेशः। सत्यधर्म्मयोश्चाभेदेन निर्द्देशः कृतः। शास्त्राचारलक्षणयोरिह तु भेदेन व्यपदेश एकत्वे सत्यपि दृष्टादृष्टभेदरूपेण कार्य्यारम्भकत्वात्। यस्त्वदृष्टोऽपूर्व्वाख्यो धर्म्मः सामान्यविशेषात्मनाऽदृष्टेन रूपेण कार्य्यमारभते *सामान्यरूपेण

---

आ॰ धर्म्मस्य शास्त्रैकगम्यत्वेन परोक्षत्वादयमिति निर्द्देशानर्हत्वमाशङ्क्याह। अयमितीति। यद्यपि धर्म्मो प्रत्यक्षोऽयमिति निर्द्देशानर्हस्तथापि पृथिव्यादिधर्म्मकार्य्यस्य प्रत्यक्षत्वात्तेन सारस्याभेदमौपचारिकमादाय प्रत्यक्षघटादिवदयन्धर्म्म इति व्यपदेशोपपत्तिरित्यर्थः॥ कोऽसौ धर्म्मो यस्य प्रत्यक्षत्वेन व्यपदेशस्तत्राह। धर्म्मश्चेति। व्याख्यातमादौ तच्छ्रेयोरूपमत्यसृजत धर्म्ममित्यादाविति शेषः॥ तर्हि तस्य प्रत्यक्षत्वाच्च चोदनालक्षणत्वमित्याशङ्क्य गौणत्वमुख्यत्वाभ्यामविरोधमभिप्रेत्याह। श्रुतीति॥ तस्मिन्नेव कार्य्यलिङ्गकमनुमानं सूचयति। क्षत्रादीनामिति। तत्रैवानुमानान्तरं विवक्षित्वोक्तं। जगत इति॥ जगद्वैचित्र्यकारित्वे हेतुमाह। पृथिव्यादीनामिति॥ धर्म्मस्य प्रत्यक्षेण

---

* समष्टिरूपेणेतिपाठान्तरः।

उ॰ मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृत-
मिदं ब्रह्मेदꣳ सर्वं ॥ ११ ॥

इदꣳ सत्यꣳ सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयो

---

भा॰ पृथिव्यादीनां प्रयोक्ता भवति विशेष*रूपेण चाध्यात्मं कार्य्यकरणसङ्घातस्य तत्र पृथिव्यादीनां प्रयोक्तरि यश्चायमस्मिन्धर्म्मे तेजोमयस्तथाध्यात्मं कार्य्यकरणसङ्घातकर्त्तरि धर्म्मे भवो धार्म्मः ॥ ११ ॥

तथा दृष्टेनानुष्ठीयमानेनाचाररूपेण सत्याख्यो भवति स एव धर्म्मः सोऽपि द्विःप्रकार एव सामान्यविशेषात्म-रूपेण सामान्यरूपः पृथिव्यादिसमवेतो विशेषरूपः कार्य्य-

---

आ॰ व्यपदेशे हेत्वन्तरमाह । प्राणिभिरिति । तेनानुष्ठीयमानाचारेण प्रत्यक्षेण धर्म्मस्य लक्ष्यमाणत्वेनेति यावत् ॥ ननु तृतीयेऽध्याये यो वै स धर्म्मः सत्यं वै तदिति सत्यधर्म्मयोरभेदवचनात्तयोर्भेदेनात्र पर्य्यायद्वयोपादानमनुपपन्नमत आह । सत्येति ॥ कथमेकत्वे सति भेदेनोक्तिरित्याशङ्क्याह । दृष्टेति ॥ अदृष्टेन रूपेण कार्य्यारम्भकत्वं प्रकटयति यस्त्विति ॥ सामान्यात्मनारम्भकत्वमुदाहरति । सामान्यरूपेणेति ॥ विशेषात्मना कार्य्यारम्भकत्वं व्यनक्ति । विशेषेति ॥ धर्म्मस्य द्वौ भेदावुक्तौ तयोर्मध्ये प्रथममधिकृत्य यश्चेत्यादि वाक्यमित्याह । तत्रेति ॥ द्वितीयं विषयीकृत्य यश्चायमध्यात्ममित्यादि प्रवृत्तमित्याह । तथेति ॥ ११ ॥

इदं सत्यमित्यस्मिन्पर्य्याये सत्यशब्दार्थमाह । तथा दृष्टेनेति । सोऽपीत्यपिशब्दो धर्म्मोदाहरणार्थः ॥ द्वयोरपि प्रकारयोर्विनियोगं विभजते । सामान्यरूप इति ॥ उभयत्र समवेतशब्दस्तत्र

---

* बहिरूपेणेतिपाठान्तरः ।

उ॰ ऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ सात्यस्तेजो-
मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृत
मिदं ब्रह्मेदꣳ सर्वं ॥ १२ ॥

इदं मानुषꣳ सर्वेषां भूतानां मध्वस्य मानुषस्य
सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजो-
मयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजो-
मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृ-
तमिदं ब्रह्मेदꣳ सर्वं ॥ १३ ॥

---

भा॰ करणसङ्घातसमवेतस्तच्च पृथिव्यादिसमवेते वर्त्तमानक्रि-
यारूपे सत्ये तथाध्यात्मं कार्य्यकरणसङ्घातसमवेतरि। सत्ये
भवः सात्यः। सत्येन वायुरावातीति श्रुत्यन्तरात्॥१२॥

धर्म्मसत्याभ्यां प्रयुक्तोऽयं कार्य्यकरणसङ्घातविशेषः। स
येन जातिविशेषेण संयुक्तो भवति स जातिविशेषो मानु-
षादिस्तत्र मानुषादिजातिविशिष्टा एव सर्व्वे प्राणिनिकायाः
परस्परोपकार्य्योपकारकभावेन वर्त्तमाना दृश्यन्ते। अतो
मानुष्यादिजातिरपि सर्व्वेषां भूतानां मधु। तत्र मानुषा-

---

आ॰ कारणत्वेनानुगतार्थः। यश्चायमस्मिन्नित्यादिवाक्यस्य विषय-
माह। तत्रेति। सत्ये यश्चेत्यादि वाक्यमिति शेषः॥ यथायमध्यात्म-
मित्यादि वाक्यस्य विषयमाह। तथाध्यात्ममिति॥ सत्यस्य पृथि-
व्यादौ कार्य्यकरणसङ्घाते च कारणत्वे प्रमाणमाह। सत्येनेति॥१२॥

इदं मानुषमित्यत्र मानुषग्रहणं सर्व्वजात्युपलक्षणमित्यभि-
प्रेत्याह। धर्म्मसत्याभ्यामिति॥ कथं पुनरेषा जातिः सर्व्वेषां
भूतानां मधु भवति तत्राह। तत्रेति। भोगभूमिः सप्तम्यर्थः॥

उ॰ अयमात्मा सर्व्वेषां भूतानां मध्वस्यात्मनः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वं ॥ १४ ॥

भा॰ द्विजातिरपि बाह्याध्यात्मिका चेत्युभयथा निर्द्देशभाग्भवति ॥ १३ ॥

यस्तु कार्य्यकरणसङ्घातो मानुषादिजातिविशिष्टः सोऽयमात्मा सर्व्वेषां भूतानां मधु न चायं शरीरशब्देन निर्दिष्टः पृथिवीपर्य्याय एव । न पार्थिवांशस्यैव तत्र ग्रहणात् । इह तु सर्व्वात्माप्रत्ययसमिताध्यात्माधिभूताधिदैवादिसर्व्वविशेषः सर्व्वभूतदेवतागणविशिष्टः कार्य्यकरणसङ्घातः सोऽयमात्मेत्युच्यते । तस्मिन्नस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषोऽमूर्त्तरसः सर्व्वात्मको निर्द्दिश्यते । एकदेशेन तु पृथिव्यादिषु निर्द्दिष्टोऽत्राध्यात्मविशेषाभावात् स न

आ॰ यश्चायमस्मिन्नित्यादिवाक्यद्वयस्य विषयभेदं दर्शयति । तत्रेति । व्यवहारभूमाविति यावत् । धर्म्मादिवदित्यपेरर्थः । निर्देष्टुः स्वशरीरनिष्ठा जातिराध्यात्मिकी शरीरान्तराश्रिता तु बाह्येति भेदः । वस्तुतस्तु नोभयथात्वमित्यभिप्रेत्य निर्देशभागित्युक्तं । १३ ।

अन्तिमपर्य्यायमवतारयति । यस्त्विति । आत्मनः शरीरस्य गतत्वात्पुनरुक्तिरनुपयुक्तेति शङ्कते । नन्विति । अवयवावयवविषयत्वेन पर्य्यायद्वयमपुनरुक्तमिति परिहरति । नेत्यादिना । परमात्मानं व्यावर्त्तयति । सर्व्वभूतेति । चेतनं व्यवच्छिनत्ति । कार्य्येति । यश्चायमस्मिन्नित्यादिवाक्यविषयमाह । तस्मिन्निति ।

उ॰ स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानाꣳ राजा तद्यथा रथनाभौ च रथ-

---

भा॰ निर्दिश्यते। यस्तु परिशिष्टो विज्ञानमयो यदर्थोऽयं देह-लिङ्गसङ्घात आत्मा स यश्चायमात्मेत्युच्यते॥ १४॥

यस्मिन्नात्मनि परिशिष्टो विज्ञानमयोऽन्त्ये पर्याये प्रवेशितः सोऽयमात्मा तस्मिन्नविद्याकृतकार्य्यकरणसङ्घा-तोपाधिविशिष्टे ब्रह्मविद्यया परमार्थात्मनि प्रवेशिते स एवमुक्तोऽनन्तरोऽवाह्यः कृत्स्नः प्रज्ञानघनभूतः सर्व्वेषां भूतानामयमात्मा सर्व्वरूपात्मः सर्व्वेषां भूतानामधिपतिः सर्व्वभूतानां स्वतन्त्रो न कुमारामात्यवत् किं तर्हि सर्व्वेषां भूतानां राजा राजत्वविशेषणमधिपतिरिति भवति कश्चि-द्राजोचितवृत्तिमाश्रित्य राजा न त्वधिपतिरतो विशि-

---

आ॰ यश्चायमध्यात्ममिति किमिति नोक्तमित्याशङ्क्याह। एकदेशेनेति। अन्त्येत्यन्त्यपर्य्यायोक्तिः॥ यश्चायमात्मेत्यस्यार्थमाह। यस्त्विति॥ १४॥

स वा अयमात्मेत्यस्यार्थमाह। यस्मिन्निति। परिशिष्टः पूर्व्व-पर्य्यायेष्वनुपदिष्टोऽन्त्ये पर्य्यायेऽयमात्मेत्युक्तो विज्ञानमयो यस्मि-न्नात्मनि खिल्यदृष्टान्तवचसा प्रवेशितस्तेन परेणात्मना तादात्म्य-ङ्गतो विद्वान् अत्र आत्मशब्दार्थ इत्यर्थः॥ उक्तमात्मशब्दार्थमनूद्य सर्व्वेषामित्यादि व्याचष्टे। तस्मिन्निति। अविद्यया कृतः कार्य्यक-रणसङ्घात एवोपाधिस्तेन विशिष्टे जीवे तस्मिन्परमार्थात्मनि ब्रह्मणि ब्रह्मविद्यया प्रवेशिते स एवायमात्मा यथोक्तविशेषणः सर्व्वैरुपास्यः सर्व्वेषां भूतानां अधिपतिरिति सम्बन्धः॥ व्याख्येय-म्पदमादाय तस्य वाच्यमर्थमाह। सर्व्वेषामिति। तस्यैव विव-क्षितोऽर्थः सर्व्वैरुपास्य इत्युक्तः॥ स्वातन्त्र्यं व्यतिरेकद्वारा स्फोर-यति। नेत्यादिना॥ सर्व्वेषां भूतानां राजेत्येतावतैव यथोक्तार्थ-

उ॰ नेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि

---

भा॰ नाभ्यधिपतिरिति। एवं सर्व्वभूतात्मा विद्वान्ब्रह्मविन्मुक्तो भवति। यदुक्तं ब्रह्मविद्यया सर्व्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्व्वमभवदितीदं तद्व्याख्यातमेवमात्मानमेव सर्व्वात्मत्वेनाचार्यागमाभ्यां श्रुत्वा मत्वा तर्कतो विज्ञाय साक्षादेवं यथा मधुब्राह्मणे दर्शितं तस्माद्ब्रह्मविज्ञानादेवंलक्षणात्पूर्व्वमपि ब्रह्मैव सदविद्यया अब्रह्मासीदसर्व्वमेव च सदसर्व्वमासीत्तां त्वविद्यामस्माद्विज्ञानात् तिरस्कृत्य ब्रह्मविद्ब्रह्मैव सन् ब्रह्माभवत्सर्व्वः सन्सर्व्वमभवत्। परिसमाप्तः शास्त्रार्थो यदर्थः प्रस्तुतः। तस्मिन्नेतस्मिन्सर्व्वात्मभूते ब्रह्मविदि सर्व्वात्मनि सर्व्वं जगत्समर्पितमित्येतस्मिन्नर्थे दृष्टान्त उपादीयते। तद्यथा रथ-

---

आ॰ सिद्धौ किमित्यधिपतिरिति विशेषणमित्याशङ्क्याह। राजत्वेति। राजत्वजात्याक्रान्तोऽपि कश्चित्तदुचितपरिपालनादिव्यवहारवानित्युपलब्धं न पुनस्तस्य स्वातन्त्र्यं राजपरत्वात्तस्मात्तद्व्यवच्छेदार्थमधिपतिरिति विशेषणमित्यर्थः॥ राजाधिपतिरित्युभयोरपि मिथो विशेषणविशेष्यत्वमभिप्रेत्य वाक्यार्थं निगमयति। एवमिति॥ उक्तस्य विद्याफलस्य तृतीयेनैकवाक्यत्वमाह। यदुक्तमिति॥ तदेव व्याख्यानं स्फोरयति। एवमिति। मैत्रेयीब्राह्मणोक्तक्रमेणेति यावत्॥ एवमित्यस्यार्थं कथयति। यथेति। मधुब्राह्मणे पूर्व्वब्राह्मणोक्तक्रमेणात्मनि श्रवणादित्रयं सम्पाद्य विद्वान् ब्रह्माभवदिति सम्बन्धः॥ ननु मोक्षावस्थायामेव विदुषो ब्रह्मत्वापरिच्छिन्नत्वं न प्राच्यामविद्यादशायामित्याशङ्क्याह। तस्मादिति। समानाधिकरण्यं पञ्चमीत्रयं। एवंलक्षणाद्ब्रह्मास्मीति श्रवणादिजातात्साक्षात्कारादिति यावत्॥ अब्रह्मत्वादिधीध्वस्तिस्तर्हि कथ-

उ॰ सर्वाणि भूतानि सर्वे एत आत्मानः समर्पिताः ॥ १५ ॥

---

भा॰ नाभौ च रथनेमौ चाराः सर्व्वे समर्पिता इति प्रसिद्धोऽर्थः। एवमेतस्मिन्नात्मनि परमात्मभूते ब्रह्मविदि सर्व्वाणि भूतानि ब्रह्मादिस्तम्बपर्य्यन्तानि सर्व्वे देवा अग्न्यादयः सर्व्वे लोका भूरादयः सर्व्वे प्राणा वागादयः सर्व्व एत आत्मनो जलचन्द्रवत्प्रतिशरीरानुप्रवेशिना अविद्याकल्पिताः सर्व्वं जगदस्मिन्समर्पितं। यदुक्तं ब्रह्मविद्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्य्यश्चेति। स एष सर्व्वात्मभावो व्याख्यातः। स एष विद्वान्ब्रह्मवित्सर्व्वोपाधिः सर्व्वात्मा सर्व्वं भवति। निरुपाधिर्निरुपाख्योऽनन्तरोऽवाह्यः कृत्स्नः प्रज्ञा-

---

आ॰ मित्याशयेनाह। तान्विति। इत्तमनूद्योत्तरग्रन्थमवतारयति। परिसमाप्त इति। यस्य शास्त्रस्यार्थौ विषयप्रयोजनाख्यौ ब्रह्मवल्लिकायां चतुर्थादौ च प्रकृतशास्त्रस्यार्थौ यथोक्तन्यायेन निर्द्धारित इत्यनुवादार्थः। सर्व्वात्मभूतत्वं सर्पादिवत्कल्पितानां सर्व्वेषामात्मभावेन स्थितत्वं। सर्व्वं ब्रह्म तद्रूपत्वं सर्व्वात्मत्वं। सर्व्व एत आत्मान इति कुतो भेदोक्तिः। आत्मैक्यस्य शास्त्रीयत्वादित्याशङ्क्याह। जलचन्द्रवदिति। दार्ष्टान्तिकभागस्य संपिण्डितमर्थमाह। सर्व्वमिति। उक्तस्य सर्व्वात्मभावस्य तृतीयेनैकवाक्यत्वं निर्दिशति। यदुक्तमिति। सर्व्वात्मभावे विदुषः सप्रपञ्चत्वं स्यादित्याशङ्क्याह। स एष इति। सर्व्वेण कल्पितेन द्वैतेन सहितमधिष्ठानभूतं ब्रह्म प्रत्यग्भावेन पश्यन्विद्वान्सर्व्वोपाधिस्तद्रूपेण स्थितः सर्व्वो भवति। तदेवं कल्पितं सप्रपञ्चत्वमविद्वद्दृष्ट्या विदुषोऽभीष्टमित्यर्थः। विद्वद्दृष्ट्या तस्य निष्प्रपञ्चत्वं दर्शयति। निरुपाधिरिति। निरुपाख्यत्वं शब्दप्रत्ययागोचरत्वं ब्रह्मणः सप्रप-

भा० सघनोऽजोऽजरोऽमृतोऽभयोऽचलो नेति नेत्यस्थूलोऽनणुरित्येवंविशेषणो भवति ॥ १५ ॥

तमेतमर्थमजानन्तस्तार्किकाः केचित्पण्डितमन्यास्त्वागमविदः शास्त्रार्थं विरुद्धं मन्यमाना विकल्पयन्तो मोहमगाधमुपयान्ति । तमेतमर्थमेतौ मन्त्रावनुवदतः । अनेजदेकं मनसो जवीयस्तदेजति तन्नैजतीति । तथा च तैत्तिरीयके । यस्मात्परं नापरमस्ति किञ्चित् । एतत्सामगायन्नास्ते । अहमन्नमहमन्नमहमन्नमित्यादि । तथा च छान्दोग्ये । जक्षत्क्रीडन्रममाणः स यदि पितृलोककामः सर्वगन्धः सर्वरसः सर्वज्ञः सर्वविदित्यादि । आथर्वणे च । दूरात्सुदूरे तदिहान्तिके च । कठवल्लीष्वपि । अणोरणीयान्महतो महीयान् । कस्तं मदामदं देवं । तद्धावतोऽन्यानत्येति तिष्ठदिति च । तथा गीतासु । अहं क्रतुरहं यज्ञः । पिताहमस्य जगतः । नादत्ते कस्यचित्पापं । समं सर्वेषु भूतेषु । अविभक्तं विभक्तेषु । ग्रसिष्णुः प्रभविष्णु चेत्येवमाद्यागमार्थं विरुद्धमिव प्रतिभान्तं मन्यमानाः स्वचित्तसामर्थ्यादर्थनिर्णयाय विक-

---

आ० सत्यमविद्याकृतं निष्प्रपञ्चत्वं तात्त्विकमित्याम्नायार्थो विरोध उक्तः ॥ १५ ॥

कथं तर्हि तार्किका मीमांसकाश्च शास्त्रार्थमिममपश्यन्तो ब्रह्मास्ति नास्तीत्यादि विकल्पयन्तो मोमुह्यन्ते तत्राह । तमेतमिति । नादिद्यामोहस्याग्रानं सूत्रमुक्ता प्रकृते ब्रह्मणो द्वैरूप्ये प्रमाणमाह । तमित्यादिना । तैत्तिरीयश्रुतावादिशब्देन चाहमन्नमन्नमहमन्नमदन्तमद्मीत्यादि गृह्यते । छान्दोग्यश्रुतावादिशब्देन सत्यकामः । सत्यसङ्कल्पो विजरो विमृत्युरित्यादि गृहीतं । श्रुतिसिद्धे द्वैरूप्ये

भा॰ अयमन्योऽस्मात्मा नास्त्यात्मा कर्त्ताऽकर्त्ता मुक्तो बद्धः क्षणिको विज्ञानमात्रं शून्यश्चेत्येवं विकल्पयन्तो न पारमधिगच्छन्ति। अविद्याया विरुद्धधर्मदर्शित्वात्सर्व्वत्र। तस्मात्तत्र य एव श्रुत्याचार्यदर्शितमार्गानुसारिणः त एवाविद्यायाः पारमधिगच्छन्ति। त एव चास्मान्मोहसमुद्रादगाधादुत्तरिष्यन्ति नेतरे स्वबुद्धिकौशलानुसारिणः। परिसमाप्ता ब्रह्मविद्याऽमृतत्वसाधनभूता॥ यां मैत्रेयी पृष्टवती भर्त्तारं यदेव भगवानमृतत्वसाधनं वेद तदेव मे ब्रूहि इत्येतस्या ब्रह्मविद्यायाः स्तुत्यर्थेयमाख्यायिका नीता। तस्या आख्यायिकायाः सङ्क्षेपतोऽर्थप्रकाशनार्थावेतौ मन्त्रौ भवतः। एवं हि मन्त्रब्राह्मणाभ्यां स्तुतत्वादमृतत्वसर्व्वप्राप्त्यादिसाधनत्वं ब्रह्मविद्यायाः प्रकटीकृतं राजमार्गमुपनीतं भवति। यथा आदित्य उद्यन् शार्वरं तमोऽपनय-

---

आ॰ स्मृतिमपि संवादयति। तथेति॥ पूर्व्वोक्तप्रकारेणागमार्थे विरोधसमाधाने विद्यमानेऽपि तदज्ञानादविभ्रान्तिरित्युपसंहरति। इत्येवमादीति॥ विकल्पमेव स्फुटयति। अस्तीति॥ सर्व्वत्र श्रुतिस्मृतिव्याख्यानेति यावत्॥ के तर्हि पारं ब्रह्मविद्यायाः समधिगच्छन्ति तत्राह। तस्मादिति॥ ब्रह्मज्ञानफलमाह। त एवेति॥ तद्यथेत्यादिवाक्यार्थं विस्तरेणोक्तं वृत्तं कीर्त्तयति। परिसमाप्तेति॥

ब्रह्मविद्या परिसमाप्ता चेत्किमुत्तरग्रन्थेनेत्याशङ्क्याह। एतस्या इति॥ इयमिति प्रवर्ग्यप्रकरणस्थामाख्यायिकां परामृशति। नीतेति॥ इदं वैतन्मध्विदादिना ब्राह्मणेनेति शेषः॥ तदेतदृषिरित्यादेस्तात्पर्य्यमाह। तस्या इति॥ तद्वाम्नरेत्यादिरेको मन्त्रः। आथर्वणायेत्यादिरपरः॥ मन्त्रब्राह्मणाभ्यां ब्रह्मा-

भा॰ तीति तद्वत्। अपि चैवं स्तुता ब्रह्मविद्या या इन्द्रराजरक्षिता सा दुष्प्राप्या देवैरपि। यस्मादश्विभ्यामपि देवभिषग्भ्यामिन्द्ररक्षिता विद्या महताऽऽयासेन प्राप्ता। ब्राह्मणस्य शिरश्छित्वाश्व्यं शिरः प्रतिसन्धाय तस्मिन्निन्द्रेण छिन्ने पुनः स्वशिर एव प्रतिसन्धाय तेन ब्राह्मणस्य स्वशिरसैवोक्तामेषा ब्रह्मविद्या श्रुता। तस्मात्ततः परतरं किञ्चित्पुरुषार्थसाधनं न भूतं न भावि वा कुत एव वर्त्तमानमिति नातःपरा स्तुतिरस्ति। अपि चैवं स्तूयते ब्रह्मविद्या। सर्व्वपुरुषार्थानां कर्म्म हि साधनमिति लोके प्रसिद्धं। तच्च कर्म्म वित्तसाध्यं तेनाशापि नास्ति अमृतत्वस्य। तदिदममृतत्वं केवलयात्मविद्यया कर्म्मनिरपेक्षया प्राप्यते। यस्मात्कर्म्मप्रकरणे वक्तुं प्राप्तापि सती प्रवर्ग्यप्रकरणे कर्म्मप्रकरणादुत्तीर्य्य कर्म्मणा विरुद्धत्वात्केवलसन्न्याससहिताभिहिताऽमृतत्वसाधनाय। तस्मान्नातः परं पुरुषार्थसाधनमस्ति। अपि चैवं स्तुता

---

आ॰ वरीत्या ब्रह्मविद्यास्तुतत्वे किं सिध्यतीत्याशङ्क्याह। एवं हीति॥ तस्या मुक्तिसाधनत्वं दृष्टान्तेन स्फुटयति। यथेति॥ केन प्रकारेण ब्रह्मविद्यायाः स्तुतत्वं तदाह। अपि चेति॥ अपिशब्दः स्तावकब्राह्मणसम्भावनार्थः। मन्त्रद्वयसमुच्चयार्थश्चशब्दः। एवंशब्दसूचितं स्तुतिप्रकारमेव प्रकटयति। या इन्द्रेति॥ तस्या दुष्प्रापत्वे हेतुमाह। यस्मादिति॥ महान्तमायासं स्फुटयति। ब्राह्मणस्येति॥ ज्ञातार्थेनापीन्द्रेण रक्षितत्वे विद्याया दौर्लभ्यं फलितमाह। तस्मादिति॥ न केवलमुक्तेनैव प्रकारेण विद्या स्तूयते किन्तु प्रकारान्तरेणापीत्याह। अपि चेति॥ तदेव प्रकारान्तरं प्रकटयति। सर्व्वेति॥ केवलयेत्यस्य व्याख्यानं कर्म्मनिरपेक्षयेति। तत्र हेतुः। यस्मादिति॥ किमिति तर्ह्मप्रकरणे प्राप्तापि प्रकरणान्तरे

भा॰ ब्रह्मविद्या। सर्व्वो हि लोको द्वन्द्वारामः। स वै नैव रेमे तस्मादेकाकी न रमते इति श्रुतेः। याज्ञवल्क्यो लोकसाधारणोऽपि सन्नात्मज्ञानबलात् भार्य्यापुत्रवित्तादिसंसाररतिं परित्यज्य प्रज्ञानघन आत्मरतिर्बभूव। अपि चैवं स्तुता ब्रह्मविद्या। यस्माद्याज्ञवल्क्येन संसारमार्गाद्व्युत्तिष्ठतापि प्रियायै भार्य्यायै प्रीत्यर्थमेवाभिहिता। प्रियं भाषसे एह्यास्वेति लिङ्गात्।

अथेयं स्तुत्यर्थाऽऽख्यायिकेत्यवोचाम। का पुनः साऽऽख्यायिकेत्युच्यते। इदमित्यनन्तरनिर्द्दिष्टं व्यपदिशति बुद्धौ सन्निहितत्वात्। वैशब्दः स्मरणार्थः। तदित्याख्यायिकानिर्वृत्तं प्रकरणान्तराभिहितं परोक्षं वैशब्देन स्मारयन्निह व्यपदिशति। यत्तत्प्रवर्ग्यप्रकरणे सूचितं नाविष्कृतं मधु तदिदं मधिब्राह्मणनन्तरं निर्द्दिष्टं इयं पृथिवीत्यादिना। कथं तत्र प्रकरणान्तरे सूचितं दध्यङ् ह वा आभ्यामाथर्वणो मधु-

---

आ॰ कथ्यते तत्राह। कर्म्मणेति। प्रसिद्धं पुमर्थोपायं कर्म्मेत्युक्ता विद्यायामेवादरं तदधिकृतो समधिगतेति फलितमाह। तस्मादिति॥ प्रकारान्तरेण ब्रह्मविद्यायाः स्तुतिं दर्शयति। यपि चेति॥ अनात्मासक्तिं त्यक्त्वा आत्मन्येवात्मरतिहेतुत्वान्महती विद्येत्यर्थः॥ विद्यान्तरेण तस्याः स्तुतिमाह। अपि चैवमिति॥ कथं ब्रह्मविद्या भार्य्यायै प्रीत्यर्थमेवोक्तेति गम्यते तत्राह। प्रियमिति॥

आख्यायिकायाः स्तुत्यर्थत्वं प्रतिपाद्य हत्तमनूद्याकाङ्क्षापूर्व्वकं तामवतार्य्य व्याकरोति। अथेत्यादिना॥ ब्रह्मविद्या सप्तम्यर्थः। पदार्थमुक्त्वा वाक्यार्थमाह। यदिति॥ दध्यङ्ङित्यादि व्याकुर्व्वन्नाकाङ्क्षापूर्व्वकं प्रवर्ग्यप्रकरणस्थामाख्यायिकामनुकीर्त्तयति। कथमित्यादिना॥ आभ्यामश्विभ्यामिति यावत्। केन प्रकारेणोवा-

भा॰ नामब्राह्मणमुवाच। तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति। स होवाचेन्द्रेण वा उक्तोऽस्म्येतच्चेदन्यस्मा अनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति। तस्माद्वै बिभेमि यद्वै मे स शिरो न छिन्द्यात्तद्वामुपनेष्य इति। तौ होचतुरावां त्वा तस्मात्त्रास्यावहे इति। कथं मा त्रास्येथे इति। यदा नावुपनेष्यसे। अथ ते शिरश्छित्त्वाऽन्यत्राहृत्योपनिधास्यावः। अथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्यावः। तेन नावनुवक्ष्यसि। स यदा नावनुवक्ष्यसि। अथ ते तदिन्द्रः शिरश्छेत्स्यति। अथ ते स्वंशिर आहृत्य तत्ते प्रतिधास्याव इति। तथेति तौ होपनिन्ये। तौ यदोपनिन्ये। अथास्य शिरश्छित्त्वान्यत्रोपनिदधतुः। अथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुः। तेन हाभ्यामनूवाच। स यदाभ्यामनूवाचाथास्य तदिन्द्रः शिरश्चिच्छेद। अथास्य स्वं शिर आहृत्य

---

भा॰ चेत्यपेक्षायामाह। तदेनयोरिति॥ एनयोरश्विनोस्तन्मधु प्रीत्यास्पदमासीत्। तदश्विभ्यां प्रार्थितो ब्राह्मणस्तदुवाचेत्यर्थः॥ यदश्विभ्यां मधु प्रार्थितं तदेतेन वक्ष्यमाणेन प्रकारेण प्रयच्छन्नेवैनयोरश्विनोराचार्यत्वेन ब्राह्मणसमीपगमनं कृतवानित्याह। तदेवेति॥ आचार्यत्वानन्तरं ब्राह्मणस्य वचनं दर्शयति। स होवाचेति॥ एतच्छब्दो मध्वनुभवविषयः। यद्यर्थो यच्छब्दस्तच्छब्दस्तर्हीत्यर्थो वां युवामुपनेष्ये शिष्यत्वेन स्वीकरिष्यामीति यावत्। तौ देवभिषजावश्विनौ शिरश्छेदनिमित्तं मरणं पश्यन्त्यर्थः। नावावामुपनेष्ये शिष्यत्वेन स्वीकरिष्यसि यदेति यावत्। अथ शब्दस्तदेत्यर्थः। ब्राह्मणस्यानुज्ञानन्तर्यमथेत्युक्तं। मधुप्रवचनानन्तर्यं तृतीयस्याथशब्दस्यार्थः। यदश्वस्य शिरो ब्राह्मणे निबद्धं तस्य छेदनानन्तर्यं चतुर्थस्याथशब्दस्यार्थः। तर्हि समस्तमपि

उ० इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्तद्वां नरा सनये दंस उग्र-

---

भा० तच्चाश्विनौ प्रतिदधतुरिति । यावत्तु प्रवर्ग्यकर्माङ्गभूतं मधु तावदेव तत्राभिहितं न तु कक्ष्यमात्मज्ञानाख्यं । तत्र याऽऽख्यायिकाभिहिता सेह स्तुत्यर्था प्रदर्श्यते ॥ ० ॥ ॥ ० ॥ इदं वै तन्मधु दध्यङ्ङाथर्वणोऽनेन प्रपञ्चेनाश्विभ्यामुवाच । तदेतदृषिस्तदेतत्कर्म ऋषिर्मन्त्रः पश्यन्नुपलभमानोऽवोचदुक्तवान् । कथं तद्दंस इति व्यवहितेन सम्बन्धः । दंस इति कर्मणो नामधेयं । तच्च दंसः किं विशिष्टं । उग्रं क्रूरं । वां युवयोः । हे नरा नराकारौ अश्विनौ तच्च कर्म्म किन्निमित्तं सनये लाभाय लाभलुब्धो हि लोकेऽपि क्रूरं

---

आ० मधु प्रवर्ग्यप्रकरणे प्रदर्शितमेवेति कृतमनेन ब्राह्मणेनेत्याशङ्क्याह । यावत्त्विति । प्रवर्ग्यप्रकरणे स्थिताख्यायिका किमर्थमत्रानीतेत्याशङ्क्यैतस्याः ब्रह्मविद्यायाः स्तुत्यर्थेयमाख्यायिकेत्यभिप्रायमुपसंहरति । तत्रेति ॥

ब्राह्मणभागव्याख्यां निगमयति । इदमिति ॥ तद्वामित्यादि मन्त्रमुत्थाप्य व्याचष्टे । तदेतदिति ॥ कथं लाभायेति क्रूरकर्मानुष्ठानमत आह । लाभेति ॥ ननु प्रतिषेधे मुख्यो नकारः कथमिवार्थे व्याख्यायते तत्राह । नकारस्त्विति ॥ वेदे पदादुपरिष्टात् यो नकारः श्रुतः स खलूपचारः सन् उपमार्थोऽपि सम्भवति न निषेधार्थः । तत्रोदाहरणमाह । यथेति ॥ अश्वं न गूढमश्विनेत्यत्र नकारो यथोपमार्थीयस्तथा प्रकृतेऽपीत्यर्थः ॥ तदेव स्फुटयति । अश्वमिवेति ॥ यद्वदिति उपमार्थीये नकारे सति वाक्यस्वरूपमनूद्य तदर्थं कथयति । तन्यतुरित्यादिना ॥ विद्यास्तुतिद्वारा तत्कर्तारावश्विनावत्र न स्तूयेते किन्तु क्रूरकर्मका-

उ॰ माविष्कृणोमि तन्यतुर्न वृष्टिं दध्यङ् ह यन्मध्वा-
थर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥ १६॥

---

भा॰ कर्माचरति तथैवैतौ उपलभ्येते । यथा लोके तद्वाविः प्रकाशं कृणोमि करोमि यद्दृष्टं भवद्भ्यां कृतं किमिवेत्युच्यते तन्यतुः पर्जन्यो न इव । नकारस्तूपरिष्टादुपचारः । उपमार्थीयो वेदे न प्रतिषेधार्थः । यथाश्वं न अश्वमिवेति यद्वत् । तन्यतुरिव वृष्टिं यथा पर्जन्यो वृष्टिं प्रकाशयति स्तनयित्न्वादिशब्दैस्तद्वदहं युवयोः क्रूरं कर्माविष्कृणोमि इति सम्बन्धः । नन्वश्विनोः स्तुत्यर्थौ कथमिमौ मन्त्रौ स्यातां । निन्दावचनौ हि इमौ । नैष दोषः । स्तुतिरेवैषा न निन्दावचनौ । यस्मादीदृशमप्यति क्रूरं कर्म कुर्वतो-र्युवयोर्न लोम च हीयत इति । न चान्यत् किञ्चि-द्धीयत एवेति । स्तुतावेतौ भवतः । निन्दां प्रशंसां हि

---

आ॰ रित्वेन निन्द्येते तदप्याख्यायिका विद्यास्तुत्यर्थेत्ययुक्तमिति शङ्कते। नन्विति ॥ आख्यायिकाया विद्यास्तुत्यर्थत्वमविरुद्धमिति परिहरति । नैष इति ॥ लोममात्रमपि न हीयते यस्मात्तस्माद्विद्यास्तुत्या तद्वतोः स्तुतिरेवात्र विवक्षितेति योजना॥ यद्यपि क्रूरकर्म्मकारिणोरश्विनोर्न दृष्टहानिः तथाप्यदृष्टहानिः स्यादेवेत्याशङ्क्य कैमुतिकन्यायेनाह । न चेति ॥ कथं पुनर्निन्दायां दृश्यमानायां स्तुतिरिष्यते तत्राह । निन्दामिति ॥ न हि निन्दा निन्द्यं निन्दितु-मपि तु विधेयं स्तोतुमिति न्यायादित्यर्थः । यथा निन्दा न निन्द्यं निन्दितुमेव तथा स्तुतिरपि स्तुत्यं स्तोतुमेव न भवति किन्तु निन्दितुमपि तथा च नानयोर्व्यवस्थितत्वमित्याह । तथेति ॥ तद्वामित्यादिमन्त्रस्य पूर्वार्द्धं व्याख्यायाख्यायिकायाः स्तुत्यर्थत्व-

उ॰ इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचदाथर्वणायाश्विना दधी-

---

भा॰ लौकिकाः स्मरन्ति। तथा प्रशंसारूपा च निन्दा लोके प्रसिद्धा दध्यङ्ङामाथर्व्वणः। ह इति अनर्थको निपातः। यन्मधुकक्षमात्मज्ञानलक्षणं। अथर्व्वणो वां युवाभ्यामश्वस्य शीर्ष्णा शिरसा यदीमुवाच यत् प्रोवाच मधु। ईमिति अनर्थको निपातः। इदं वै तन्मधु इत्यादि पूर्व्ववत् मन्त्रान्तरप्रदर्शनार्थं॥ १६॥

तथाऽन्यो मन्त्रस्तामेवाख्यायिकामनुसरति स्म। अथर्व्वणो दध्यङ्ङामाथर्व्वणोऽन्यो विद्यत इति। अतो विशिनष्टि दध्यङ्ङामाथर्व्वणस्तस्मै दधीचे आथर्व्वणाय हे अश्विना-विति मन्त्रदृशो वचनं अश्व्यं अश्वस्य स्वभूतं शिरो प्रात्यक्षस्य शिरसि छिन्नेऽश्वस्य शिरश्छित्वा ईदृशमति क्रूरं कर्म्म कृत्वा अश्व्यं शिरो ब्राह्मणं प्रति ऐरयतं गमितवन्ता युवां। स च आथर्व्वणो वां युवाभ्यां तन्मधु प्रावोचद्यत्पूर्व्वं

---

आ॰ विरोधश्चोद्धृत्य उत्तरार्द्धं व्याचष्टे। दध्यङ्ङामेति। यत्कक्ष्यं ज्ञानाख्यं मधु तदाथर्वणो युवाभ्यामश्वस्य शिरसा प्रावोचत्। यथासौ मधु युवाभ्यामुक्तवान् तदहमाविष्कृणोमि इति सम्बन्धः॥ समानार्थत्वे किमिति पुनरुच्यते तत्राह। मन्त्रान्तरेति॥ १६॥

तुल्यार्थस्य ब्राह्मणस्य तात्पर्य्यमाह। तथेति॥ विशेषणकृत्यं दर्शयन्व्याकरोति। दध्यङ्ङामेति। प्रथममश्व्यमित्यादि पदार्थवचन मश्वस्येत्यादौ छित्वेत्यस्य कर्म्मोक्तिः। अश्व्यं शिर इत्यत्र त्वन्वयार्थ-मुक्तमिति विभागः॥ प्रेक्षापूर्व्वकारित्वामीदृशी प्रवृत्तिरयुक्तेति

उ० चेऽश्व्यं शिरः प्रत्यैरयतं स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥ १७ ॥

---

भा० प्रतिज्ञातं वक्ष्यामीति। स किमर्थमेवं जीवितसन्देहमारुह्य प्रावोचदित्युच्यते ऋतायन् यत्पूर्वं प्रतिज्ञातं सत्यं तत्परिपालयितुमिच्छञ्जीवितादपि हि सत्यधर्मपरिपालना गुरुतरेत्येतस्य लिङ्गमेतत्किं तन्मधु प्रावोचदित्युच्यते त्वाष्ट्रं त्वष्टादित्यस्तस्य सम्बन्धि यज्ञशिरश्छिन्नं त्वष्टाऽभवत्तत्प्रतिसन्धानार्थं प्रावर्ग्यं कर्म। तत्र प्रवर्ग्यकर्माङ्गभूतं यद्विज्ञानं तत्त्वाष्ट्रं मधु यज्ञस्य शिरश्छेदनप्रतिसन्धानादिविषयं दर्शनं त्वाष्ट्रं यन्मधु हे दस्रौ दस्राविति परबलानां उपचयितारौ शत्रूणां वा हिंसितारौ। अपि च न केवलं त्वाष्ट्रमेव मधु कर्मसम्बन्धि युवाभ्यामवोचदपि च कक्ष्यं गोप्यं रहस्यं परमात्मसम्बन्धि यद्विज्ञानं मधु मधुब्राह्मणेनोक्तं अध्यायद्वयप्रकाशितं तच्च वां युवाभ्यां प्रावोचदित्यनुवर्त्तते ॥ १७ ॥

---

आ० शङ्कित्वा समाधत्ते। स किमर्थमिति॥ ऋतायन्नित्यस्यार्थसिद्धमर्थं कथयति। जीवितादपीति॥ यज्ञस्य शिरोऽच्छिद्यत ते देवावश्विनावब्रुवन्भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रतिधत्तमित्यादि श्रुत्यन्तरमाश्रित्याह॥ यज्ञस्येत्यादि॥ प्रवर्ग्यकर्मण्येवं प्रवृत्तेऽपि प्रकृते विज्ञाने किमायातं तदाह। तच्चेति॥ उक्तमेव स्फुटयति। यज्ञस्येति। यद्यथोक्तदर्शनं तत्त्वाष्ट्रं मधु यच्च तन्मधु तत्प्रावोचदिति सम्बन्धः। अध्यायद्वयप्रकाशितं तृतीयचतुर्थाभ्यामध्यायाभ्यां प्रकटितमिति यावत्॥ १७॥

उ॰ इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरः पुरुष आवि-

---

भा॰ इदं वै तन्मध्विति पूर्ववदुक्तौ द्वौ मन्त्रौ प्रवर्ग्यसम्बन्ध्याख्यायिकोपसंहर्त्तारौ। द्वयोः प्रवर्ग्यकर्म्मार्थयोरध्याययोरर्थः आख्यायिकाभूताभ्यां मन्त्राभ्यां प्रकाशितः ब्रह्मविद्यार्थयोस्त्वध्याययोरर्थ उत्तराभ्यामृग्भ्यां प्रकाशयितव्य इत्यतः प्रवर्त्तते यत्कक्ष्यं च मधु उक्तवान् आथर्वणो युवाभ्यामित्युक्तं। किं पुनस्तन्मध्वित्युच्यते पुरश्चक्रे पुरः पुराणि शरीराणि यत इयमव्याकृतव्याकरणप्रक्रिया स परमेश्वरो नामरूपे अव्याकृते व्याकुर्व्वाणः प्रथमं भूरादीँल्लोकान्सृष्ट्वा चक्रे कृतवान्द्विपदो द्विपादुपलक्षितानि मनुष्यशरीराणि। तथा पुरःशरीराणि चक्रे चतुष्पदश्चतुष्पादुपलक्षितानि पशुशरीराणि। पुरः पुरस्तात्स ईश्वरः पक्षी लिङ्गशरीरं भूत्वा पुरः शरीराणि पुरुष आविश-

---

आ॰ उक्तमन्त्राभ्यां वक्ष्यमाणमन्त्रयोरपुनरुक्तार्थवत्त्वं वक्तुं वृत्तं कीर्त्तयति। उक्ताविति॥ आख्यायिकाविशेषेण प्राप्तं सङ्कोचं परिहरति। द्वयोरिति॥ उत्तरमन्त्रद्वयप्रवृत्तिं प्रतिजानीते। ब्रह्मेति॥ सम्प्रत्यवान्तरसङ्गतिमाह। यत्कक्ष्येति॥ हिरण्यगर्भकर्त्तृकं शरीरनिर्म्माणमत्र नोच्यते किन्तु प्रकरणवशादीश्वरकर्त्तृकमित्याह। यत इति। शरीरसृष्ट्यपेक्षया लोकसृष्टिप्राथम्यं पुरस्तादेहसृष्ट्यनन्तरं प्रवेशात्पूर्व्वमिति यावत॥ स हि सर्व्वेषु शरीरेषु वर्त्तमानः पुरि शेत इति व्युत्पत्त्या पुरिशयः सन्पुरुषो

उ॰ शदिति स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतं॥१८॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचद्रूपꣳरूपं प्रतिरूपो

---

भा॰दित्यस्यार्थमाचष्टे श्रुतिः। स वा अयं पुरुषः सर्व्वासु पूर्षु सर्व्वशरीरेषु पुरिशयः पुरि शेत इति पुरिशयः सन् पुरुष इत्युच्यते। न एतेनानेन किञ्चन किञ्चिदपि अनावृतं अनाच्छादितं। तथा नैनेन किञ्चनासंवृतं। अन्तः अननुप्रवेशितं वाह्यभूतेनान्तर्भूतेन च नानावृतं। एवं स एव नामरूपात्मनान्तर्वहिर्भावेन कार्य्यकरणरूपेण व्यवस्थितः पुरश्चक्रे इत्यादिमन्त्रः सङ्क्षेपतः आत्मैकत्वमाचष्ट इत्यर्थः॥१८॥

इदं तन्मध्वित्यादि पूर्व्ववत् रूपं रूपं प्रतिरूपो बभूव। रूपं प्रति रूपं प्रति प्रतिरूपो रूपान्तरं बभूवेत्यर्थः॥ प्रतिरूपोऽनुरूपो वा यादृक् संस्थानौ मातापितरौ तत्संस्थानस्तदनुरूप एव पुत्रो जायते। न हि चतुष्पदो द्विपादा

---

आ॰ भवतीत्युक्त्वा प्रकारान्तरेण पुरुषार्थं व्युत्पादयति। नेत्यादिना॥ वाक्यद्वयस्यैकार्थत्वमाशङ्क्य सर्व्वं जगदोतप्रोतत्वेनात्मव्याप्तमित्यर्थं विशेषमाश्रित्याह। वाह्येति॥ पूर्णत्वे सत्यात्मनो दिव्यो ह्यमूर्त्त इत्यादिश्रुतिमाश्रित्य फलितमाह। एवमिति॥ मन्त्रब्राह्मणयोरर्थवैमत्यमाशङ्क्याह। पुर इति॥१८॥

प्राचीनमेव ब्राह्मणमनूद्य मन्त्रान्तरमवतारयति। इदमिति। प्रतिशब्दस्तन्त्रेणोच्चरितः रूपं रूपमुपाधिभेदं प्रतिरूपो रूपान्तरं प्रतिबिम्बं बभूवेत्येतत्प्रतिरूपो बभूवेत्यत्र विवक्षितमिति योजना॥ अनुरूपो वेत्युक्तं विवृणोति। यादृगित्यादिना॥ उक्त-

उ॰ बभूव तदस्य रूपं प्रतिचक्षणाय इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेत्ययं वै

---

भा॰ जायते द्विपदो वा चतुष्पाद्वा एव हि परमेश्वरो नामरूपे व्याकुर्वाणो रूपं रूपं प्रतिरूपो बभूव । किमर्थं पुनः प्रतिरूपमागमनं तस्येत्युच्यते । तदस्यात्मनो रूपं प्रतिचक्षणाय प्रतिख्यापनाय यदि हि नामरूपे न व्याक्रियेते तदाऽस्यात्मनो निरुपाधिकं रूपं प्रज्ञानघनाख्यं न प्रतिख्यायेत । यदा पुनः कार्य्यकरणात्मना नामरूपेऽव्याकृते भवतस्तदास्य रूपं प्रतिख्यायेत । इन्द्रः परमेश्वरो मायाभिः प्रज्ञाभिर्नामरूपभूतकृतमिथ्याभिमानैर्वा न तु परमार्थतः पुरुरूपो बहुरूप ईयते गम्यते एकरूप एव प्रज्ञानघनः सन्नविद्याप्रज्ञाभिः । कस्मात्पुनः कारणात् युक्ता रथ इव वाजिनः स्वविषयप्रकाशनाय हि यस्मादस्य

---

आ॰ मर्थमनुभवारूढं करोति । न हीति । रूपान्तरंभवने कर्मान्तरं वारयति । स एव हीति । प्रतिख्यापनाय शास्त्राचार्यादिभेदेन तत्त्वप्रकाशनायेत्यर्थः । तदेव व्यतिरेकेणान्वये च स्फुटयति । यदि हीत्यादिना । मायाभिः प्रज्ञाभिरिति पक्षमुक्त्वा स्वपक्षमाह । मायाभिरिति । मिथ्याधीहेतुभूतानाद्यनिर्व्वाच्यादज्ञानमानाज्ञानवशादेष बहुरूपो भाति । प्रकारभेदात्तु बहुक्तिरिति वाक्यार्थमाह । एकरूप एवेति । अविद्याप्रज्ञाभिर्बहुरूपो गम्यत इति पूर्व्वेण सम्बन्धः । परस्य बहुरूपत्वे निमित्तं प्रश्नपूर्व्वकं निवेदयति । कस्मादित्यादिना । यथा रथेषु युक्ता वाजिनो रथिनं स्वगोचरं देशं प्रापयितुं प्रवर्त्तन्ते तथास्य प्रतीचो रथस्थानीये शरीरे युक्ता हरयः । स्वविषयप्रकाशनं यस्मा-

उ॰ हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमवाह्यमयमात्मा

---

भा॰ हरयो हरणादिन्द्रियाणि। शता शतानि दश च प्राणिभेदबाहुल्यात् शतानि दश च भवन्ति। तस्मादिन्द्रियविषयबाहुल्यात्तत्प्रकाशनायैव च युक्तानि तानि नात्मप्रकाशनाय। पराञ्चि खानि व्यतृणत्स्वयम्भूरिति हि काठके। तस्मात्तैरेव विषयस्वरूपैरीयते न प्रज्ञानघनैकरसेन स्वरूपेण। एवं तर्ह्ययमन्यः परमेश्वरोऽन्ये हरय इत्येवं प्राप्ते उच्यते अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च प्राणिभेदस्यानन्त्यात्। किं बहुना तदेतद्ब्रह्म य आत्माऽपूर्वं नास्य कारणं पूर्वं विद्यत इति अपूर्वं। नास्यापरं कार्यं विद्यत इत्यनपरं। नास्य आत्यन्तरमन्तराले विद्यत इत्यनन्तरं। अवाह्यं तथा वहिरस्य

---

आ॰ प्रवर्त्तन्ते तस्मादिन्द्रियाणां तद्विषयाणाञ्च बहुत्वात्तद्रूपैरेव बहुरूपो भातीति योजना॥ हरिशब्दस्येन्द्रियेषु प्रवृत्तौ निमित्तमाह। हरणादिति। प्रतीचो विषयान्प्रतीति शेषः॥ इन्द्रियबाहुल्ये तु हेतुमाह। प्राणीति। इन्द्रियबाहुल्यात्प्रत्यगात्मा बहुरूप इति शेषः॥ नन्वात्मानं प्रकाशयितुमिन्द्रियाणि प्रवृत्तानि नतु रूपादिकमेव तत्कथं तद्विषयवशादात्मनोऽन्यथा प्रथेत्याशङ्क्याह। तत्प्रकाशनायेति॥ तस्मादिन्द्रियविषयबाहुल्यादित्यचोक्तमुपसंहरति। तस्मादिति॥ यद्वा यथोक्तश्रुतिवशेन लब्धमर्थमाह। तस्मादिति। यस्मादिन्द्रियाणि पराग्विषये प्रवृत्तानि तस्मात्तैरिन्द्रियैर्विषयस्वरूपैरेवायं प्रत्यगात्मा गम्यते न तु स्वासाधारणेन रूपेणेत्यर्थः॥ युक्ता हीति सम्बन्धमाश्रित्य शङ्कते। एवं तर्हीति॥

उ॰ ब्रह्म सर्वानुभूरित्यनुशासनं ॥ १९ ॥ इतिपञ्चमं ब्राह्मणम् ॥ ॥

अथ वꣳशः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्या-

---

भा॰ न विद्यत इत्यवाह्यं। किं पुनस्तं निरन्तरं ब्रह्मायमात्मा कोऽसौ यः प्रत्यगात्मा द्रष्टा श्रोता मन्ता बोद्धा विज्ञाता सर्वानुभूः सर्वात्मना सर्वमनुभवतीति सर्वानुभूरित्येतदनुशासनं सर्ववेदान्तोपदेशः। एष सर्ववेदान्तानामुपसंहृतोऽर्थः। एतदमृतमभयं परिसमाप्तश्च शास्त्रार्थः॥ १९॥ चतुर्थस्याध्यायस्य पञ्चमं ब्राह्मणं॥ ॥

अथेदानीं ब्रह्मविद्यार्थस्य मधुकाण्डस्य वंशः स्तुत्यर्थो ब्रह्मविद्यायाः मन्त्रश्चायं स्वाध्यायार्थो जपार्थश्च तत्र वंश

---

आ॰ अयमित्यादिवाक्येन परिहरति। अयमिति। तत्तदिन्द्रियादिरूपेणात्मन एवाविद्यया भानात्सम्बन्धस्य कल्पितत्वान्नाद्वैतहानिरित्यर्थः। इन्द्रियानन्त्ये हेतुमाह। प्राणिभेदस्येति। वाक्यार्थव्याख्यानार्थमित्यागतेन तत्सन्दर्भेण भूमिकामारचय्य तत्परं वाक्यमवतार्य्य व्याकरोति। किं बहुनेत्यादिना। न केवलमध्यायद्वयस्यैवार्थः सङ्क्षिप्योपसंहृतः किन्तु सर्ववेदान्तानामित्याह। एष इति। तस्योभयविधपुरुषार्थरूपार्थमाह। एतदिति। वक्तव्यान्तरपरिशेषशङ्कां परिहरति। परिसमाप्तश्चेति। १९॥ चतुर्थस्य पञ्चमं ब्राह्मणं॥ ॥

ब्रह्मविद्यां सङ्क्षेपविस्तराभ्यां प्रतिपाद्य वंशब्राह्मणतात्पर्य्यमाह। अथेति। महाजनपरिगृहीता हि ब्रह्मविद्या तेन सा

उ॰ च्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥ आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानाभिम्लात आनभिम्लातादानभिम्लात आनभिम्लातादानभिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्याꣳ सैतवप्राचीनयोग्यौ पाराशर्य्यात्पाराशर्य्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजः पाराशर्य्यात्पाराशर्य्यो वैजवापायनाद्वैजवापायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥ घृतकौशिकाद्घृतकौशिकः पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणि-

---

भा॰ इव वंशो यथा वेणुर्वंशः पर्व्वणः पर्व्वणो हि भिद्यते तद्वदायात्प्रभृत्यामूलप्राप्तेरयं वंशोऽध्यायचतुष्टयस्याचार्य्यपरम्पराक्रमो वंश इत्युच्यते। तत्र प्रथमान्तः शिष्यः पञ्च-

---

था॰ महाभागधेयेति स्तुतिः ॥ ब्राह्मणस्यार्थान्तरमाह। मन्त्रस्येति। स्वाध्यायः स्वाधीनोच्चारणक्षमत्वे सत्यध्यापनं जपस्तु प्रत्यहमावृत्तिरिति भेदः॥ यथोक्तनीत्या ब्राह्मणारम्भे स्थिते वंशशब्दार्थमाह। तत्रेति ॥ तदेव स्फुटयति। यथेति। शिष्यावसानोपलक्षणीभूतात्पौतिमाष्यादारभ्य तदादिर्वेदाख्यब्रह्ममूलपर्य्यन्तोऽयं वंशः। पर्व्वणः पर्व्वणो भिद्यत इति सम्बन्धः ॥ वंशशब्देन विवक्षितमर्थमाह। अध्यायचतुष्टयस्येति ॥ अथात्र शिष्याचार्य्यवाचकशब्दाभावे कुतो व्यवस्थेति तत्राह। तत्रेति। परमेष्ठिब्रह्मशब्दयोरे-

उ० रैापजन्धनेरैापजन्धनिरासुरेरासुरिर्भारद्वाजा-द्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गैातमा-द्गैातमो गैातमाद्गैातमो वात्स्याद्वात्स्यः शाण्डि-ल्याच्छाण्डिल्यः कैशोर्य्यात्काप्यात्कैशोर्य्यःकाप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकैाण्डिन्याद्विदर्भीकैाण्डिन्यो वत्सन-पातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथःसैाभरात्प-न्थाःसैाभरो ऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्रा-द्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीचआथर्व-णाद्दध्यङ्ङाथर्वणोऽथर्वणोदैवादथर्वदैवो मृत्योः

---

भा० मन्त्र आचार्य्यः। परमेष्ठी विराट् ब्रह्मणो हिरण्यगर्भात्ततः परमाचार्य्यपरम्परा नास्ति। यत्पुनर्ब्रह्म तन्नित्यं स्वयम्भु तस्मै ब्रह्मणे स्वयम्भुवे नमः॥१॥२॥ इति श्रीगोविन्दभगव-त्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यश्रीमच्छङ्कर-

---

आ० कार्यत्वमाशङ्क्याह। परमेष्ठीति॥ कुतस्तर्हि ब्रह्मणो विद्याप्राप्ति-स्तत्राह। तत इति॥ स्वयं प्रतिभातवेदो हिरण्यगर्भो नाचार्य्या-न्तरमपेक्षते। ईश्वरानुगृहीतस्य बुद्धावाविर्भूताद्वेदादेव विद्या-लाभसम्भवादित्यर्थः॥ कुतस्तर्हि वेदो जायते तत्राह। यत्पुन-रिति॥ परस्यैव ब्रह्मणो वेदरूपेणावस्थानात्तस्य नित्यत्वान्न हेत्वपेक्षेत्यर्थः॥ आदावन्ते च कृतमङ्गला ग्रन्थाः प्रचारिणो भव-न्तीति द्योतयितुमन्ते ब्रह्मणे नम इत्युक्तं व्याचष्टे। तस्मा इति॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्य श्रीमच्छुद्धानन्दपूज्यपादशिष्य

उ० प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ इति षष्ठं ब्राह्मणं ॥ ॐ तत्सत् ॥ इति चतुर्थोऽध्यायः ॥

---

भा० भगवतः कृतायां बृहदारण्यकवृत्तौ चतुर्थोऽध्यायः समाप्तः ॥ उपनिषद्वृत्तौ द्वितीयोऽध्यायः ॥ ॥ ॐ तत्सत् ॥ ॥

---

भा० श्रीमद्भगवदानन्दज्ञानकृतायां श्रीमद्बृहदारण्यकभाष्यटीकायां चतुर्थोऽध्यायः समाप्तः ॥ ॥ बृहदारण्यकोपनिषद्भाष्यटीकायां द्वितीयोऽध्यायः सम्पूर्णः ॥ ॥ ॐ तत्सत् ॥ ॥

उ॰ ॐ नमः परमात्मने ॥ जनको वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य

---

भा॰ जनको ह वैदेह इत्यादि याज्ञवल्कीयं काण्डमारभ्यते। उपपत्तिप्रधानत्वादतिक्रान्तेन मधुकाण्डेन समानार्थत्वेऽपि सति न पुनरुक्तता। मधुकाण्डं ह्यागमप्रधानं। आगमोपपत्ती ह्यात्मैकत्वप्रकाशनाय प्रवृत्ते शक्नुतः करतलगतविल्वमिव दर्शयितुं। श्रोतव्यो मन्तव्य इति ह्युक्तं। तस्मादागमार्थस्यैव परीक्षापूर्वकं निर्द्धारणाय याज्ञवल्कीयं काण्डमुपपत्तिप्रधानमारभते। आख्यायिका तु विज्ञा-

---

आ॰ मधुकाण्डे त्वाष्ट्रं कक्ष्यमेति मधुद्वयं व्याख्यातं। सम्प्रति काण्डान्तरारम्भं प्रतिजानीते। जनक इति ॥ ननु पूर्वस्मिन्नध्यायद्वये व्याख्यातमेव तत्त्वमुत्तरत्रापि वक्ष्यते। तथा च पुनरुक्तेरलं मुनिकाण्डेनेति तत्राह। उपपत्तीति ॥ तुल्यमुपपत्तिप्रधानत्वं मधुकाण्डस्यापीति चेन्नेत्याह। मधुकाण्डं हीति ॥ ननु प्रमाणादागमादेव तत्त्वज्ञानमुत्पत्स्यते किमुपपत्त्या तत्प्रधानेन काण्डेन वेति तत्राह। आगमेति ॥ करणत्वेनागमस्तत्त्वज्ञाने हेतुः। उपपत्तिरुपकरणतया पदार्थपरिशोधनद्वारा तद्धेतुरित्यत्र गमकमाह। श्रोतव्य इति ॥ करणोपकरणयोरागमोपपत्त्योस्तत्त्वज्ञानहेतुत्वे सिद्धं फलितमुपसंहरति। तस्मादिति ॥ यथोक्तरीत्या काण्डारम्भेऽपि किमित्याख्यायिका प्रणीयते तत्राह। आख्यायिका त्विति ॥ विज्ञानवतां पूजा च प्रयुज्यमाना दृश्यन्ते। तथा च विज्ञानं महाभागधेयमिति स्तुतिरत्र विवक्षितेत्यर्थः ॥ विद्याग्रहणे दानाख्योपायप्रकारज्ञापनपरा वा आख्यायिकेत्यर्थान्तरमाह। उपायेति ॥ कथं पुनर्दानस्य विद्याग्रहणोपायत्वं तत्राह। प्रसिद्धो हीति ॥ गुरुशुश्रूषया विद्यापुष्कलेन धनेन वेत्यादौ दानाख्यो विद्याग्रह-

उ० वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्म-
णानामनूचानतम इति स ह गवाꣳ सहस्रमव-

---

भा० स्तुत्यर्थोपायविधिपरा वा। प्रसिद्धो ह्युपायो विद्वद्भिः शास्त्रेषु च दृष्टो दानं। दानेन ह्युपनमन्ते प्राणिनः। प्रभूतं हिरण्यं गोसहस्रदानञ्चेह उपलभ्यते। तस्मादन्यपरेणापि शास्त्रेण विद्याप्राप्त्युपायदानप्रदर्शनार्थाख्यायिकारब्धा॥

अपि च तद्विद्यासंयोगः तैश्च सह वादकरणं विद्या-प्राप्त्युपायो न्यायविद्यायां दृष्टः। तच्चास्मिन्नध्याये प्राबल्येन प्रदर्श्यते। प्रत्यक्षा च विद्वत्संयोगे प्रज्ञावृद्धिः। तस्माद्विद्या-प्राप्त्युपायप्रदर्शनार्थैवाख्यायिका। जनको नाम ह किल सम्राट् राजा बभूव विदेहानां। तत्र भवो यः स वैदेहः। स

---

आ० णोपायो यस्मात्प्रसिद्धस्तस्मात्तस्य तदुपायत्वेनास्ति वक्तव्यमित्यर्थः। दाने सर्वं प्रतिष्ठितमित्यादिश्रुतिषु विद्वद्भिरेव विद्याग्रहणो-पायो दृष्टस्तस्मान्न तस्योपायत्वे विवदितव्यमित्याह। विद्वद्भिरिति॥ उपपन्नश्च दानस्य विद्याग्रहणोपायत्वमित्याह। दानेनेति॥ भवतु दानं विद्याग्रहणोपायस्तथापीयमाख्यायिका कथं तत्प्रदर्शनप-रेत्याशङ्क्याह। प्रभूतमिति॥ ननु समुदितेषु ब्राह्मणेषु वरिष्ठतमं निर्द्धारयितुं राजा पृष्टवान्। तत्कथमपरेण ग्रन्थेन विद्याग्रहणो-पायविधानायाख्यायिकारभ्यते तत्राह। तस्मादिति॥ उपलम्भो यथोक्तस्तच्छब्दार्थः॥

इतश्चाख्यायिका विद्याप्राप्त्युपायप्रदर्शनपरेत्याह। अपि चेति॥ तस्मिन्वेद्येऽर्थे विद्या येषां ते तद्विद्यास्तैः सह सम्बन्धस्तैरेव प्रश्नप्रतिवचनद्वारा वादकरणञ्च॥ विद्याप्राप्त्युपाय इत्यत्र गम-कमाह। न्यायविद्यायामिति॥ तत्त्वनिर्णयफलां हि वीतरा-गकथामिच्छन्ति। तद्विद्यासंयोगादेर्विद्याप्राप्त्युपायत्वेऽपि कथं

उ॰ इरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ॥ १ ॥

---

भा॰ स बहुदक्षिणेन यज्ञेन शाखान्तरप्रसिद्धो बहुदक्षिणो नाम यज्ञोऽश्वमेधो वा दक्षिणाबाहुल्याद्बहुदक्षिण इहो-च्यते तेनेजे अयजत्। तत्र तस्मिन्यज्ञे निमन्त्रिता दर्शन-कामा वा कुरूणां देशानां पञ्चालानाञ्च ब्राह्मणास्तेषु हि विदुषां बाहुल्यं प्रसिद्धं अभिसमेता अभिसङ्गता बभूवुः। तत्र महान्तं विद्वत्समुदायं दृष्ट्वाऽस्य तस्य ह किल जन-कस्य यजमानस्य को नु स्विदत्र ब्रह्मिष्ठ इति विशेषेण ज्ञातु-मिच्छा विजिज्ञासा बभूव। कथं कःस्वित्को नु खलु एषां ब्राह्मणानां अनूचानतमः। सर्व्वे इमेऽनूचानाः कः स्विदेषां अतिशयेनानूचानतम इति। स ह्यनूचानतमो विषयोत्पन्नजिज्ञासुः सन् तद्विज्ञानोपायार्थं गवां सहस्रं प्रथमवयसामवरुरोध गोष्ठेऽवरोधं कारयामास। किं

---

आ॰ प्रकृते तत्त्वदर्शनपरत्वमत आह। तत्रेति॥ तद्विद्यासंयोगादिति यावत्॥ न केवलं तर्कशास्त्रवशादेव तद्विद्यासंयोगे प्रज्ञावद्भिः किन्तु स्वानुभववशादपीत्याह। प्रत्यक्षाच्चेति॥ आख्यायिकाता-त्पर्य्यमुपसंहरति। तस्मादिति॥ राजसूयाभिषिक्तः सार्व्वभौमो राजा सम्राडित्युच्यते बहुदक्षिणेन यज्ञेनायजदिति सम्बन्धः। अश्वमेधे दक्षिणाबाहुल्यमश्वमेधप्रकरणे स्थितं। ब्राह्मणा अभिस-ङ्गता बभूवुरिति सम्बन्धः। कुरुपञ्चालानामिति कुरोर्विशेषणं तत्राह। तेषु हीति॥ तत्र यज्ञशालायामिति यावत्॥ विजि-ज्ञासामेवाकाङ्क्षापूर्व्विकां व्युत्पादयति। कथमित्यादिना॥ अनू-चानत्वमनुवचनसमर्थत्वं। एषां मध्ये ऽतिशयेनानूचानतमः स एकः

उ॰ तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति । ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सोम्योदज सामश्रवा ३ इति ता हो-

---

भा॰ विशिष्टास्ता गावोऽवरुद्धा इत्युच्यते। पलचतुर्भागः पादः सुवर्णस्य। दश दश पादा एकैकस्याः गोः शृङ्गयोराबद्धा बभूवुः। पञ्च पञ्च पादा एकैकस्मिन् शृङ्गे ॥ १ ॥

ता एवमवरुध्य ब्राह्मणांस्तान् ह उवाच। हे ब्राह्मणा भगवन्त इत्यामन्त्र्य यो वो युष्माकं ब्रह्मिष्ठः सर्वे यूयं ब्रह्माणोऽतिशयेन युष्माकं ब्रह्मिष्ठः स एता गा उदजतां उत्कालयतु स्वगृहं प्रति। ते ह ब्राह्मणा न दधृषुः। ते ह किलैवमुक्ता ब्राह्मणाः ब्रह्मिष्ठतामात्मनः प्रतिज्ञातुं न दधृषुः न प्रगल्भाः संवृत्ताः। अप्रगल्भभूतेष्वथ याज्ञवल्क्यः स्वमात्मीयमेव ब्रह्मचारिणमन्तेवासिनमुवाच। एता गा हे सोम्य उदज उद्गमयास्मद्गृहान्प्रति। हे सामश्रवः साम-

---

आ॰ स्यादिति योजना। एकस्य पलस्य चत्वारो भागास्तेषामेको भागः पाद इत्युच्यते। प्रत्येकं शृङ्गयोर्दश दश पादाः सम्बद्धा इति भ्रान्तिं निराकर्तुं विभजते। पञ्चेति॥ एकैकस्मिञ्छृङ्गे आबद्धा बभूवुरिति पूर्व्वेण सम्बन्धः॥ १॥

ब्राह्मणा वेदाध्ययनसम्पन्नास्तदर्थनिष्ठा इति यावत्। उत्कालयतु उद्गमयतु। यतो याज्ञवल्क्याद्यजुर्वेदविदः सकाशाद्ब्रह्मचारी सामविधिं शृणोति ऋक्षु चाध्यूढं साम गीयते। त्रिष्वेव च वेदेष्वन्तर्भूतोऽथर्वा वेदस्तस्मादर्थाद्यजुर्वेदिनो मुनेः शिष्यस्य सामवेदाध्ययनानुपपत्तेर्वेदचतुष्टयविशिष्टो मुनिरित्याह। अत

उ॰ दाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो-
ब्रवीतेत्यथ ह जनकस्य वैदेहस्य होताश्वलो
बभूव स हैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य
ब्रह्मिष्ठोऽसी ३ इति स होवाच नमो वयं ब्रह्मिष्ठाय
कुर्म्मो गोकामा एव वयꣳ स्म इति तꣳ ह तत
एव प्रष्टुं दध्रे होताश्वलः ॥ २ ॥

---

भा॰ विधिं हि शृणोत्यतोऽर्थाच्चतुर्वेदो याज्ञवल्क्यः। ता गा ह
उदाचकार उत्कालितवानाचार्य्यगृहं प्रति। याज्ञवल्क्येन
ब्रह्मिष्ठपणस्वीकरणेनात्मनो ब्रह्मिष्ठता प्रतिज्ञातेति ते ह
चुक्रुधुः क्रुद्धवन्तः ब्राह्मणाः। तेषां क्रोधाभिप्रायमाचष्टे।
कथं नोऽस्माकमेकैकप्रधानानां ब्रह्मिष्ठोऽस्मीति ब्रवीतेति।
अथ हैवं क्रुद्धेषु ब्राह्मणेषु जनकस्य यजमानस्य होतर्त्विक्
अश्वलो नाम बभूव आसीत्। स एवं याज्ञवल्क्यं ब्रह्मिष्ठा-
भिमानी राजाश्रयत्वाच्च धृष्टो याज्ञवल्क्यं पप्रच्छ पृष्ट-
वान्। कथं याज्ञवल्क्येति होवाच त्वं नु खलु नो याज्ञवल्क्य
ब्रह्मिष्ठोऽसीति प्लुतिर्भर्त्सनार्था। स होवाच याज्ञवल्क्यो
नमस्कुर्मो वयं ब्रह्मिष्ठाय। इदानीं गोकामाः स्मो वयमिति।

---

आ॰ इति॥ निमित्तनिवेदनपूर्व्वकं ब्राह्मणानां सभ्यानां क्रोधप्राप्तिं
दर्शयति। याज्ञवल्क्येनेति॥ क्रोधानन्तर्य्यमथशब्दार्थं कथयति।
क्रुद्धेष्विति॥ आश्वलप्रश्नस्य प्राथम्ये हेतुः। राजेति॥ याज्ञवल्क्य-
मित्यनुवादोऽन्वयप्रदर्शनार्थः। प्रश्नमेव प्रश्नपूर्व्वकं विशदयति।
कथमित्यादिना॥ अनौद्धत्यं ब्रह्मविदो लिङ्गमिति सूचयति।
स्वहेति॥ किमिति तर्हि स्वगृहं प्रति गावो ब्रह्मिष्ठपणभूता

उ॰ याज्ञवल्क्येति होवाच यदिदꣳ सर्वं मृत्युना-

---

भा॰ तं धृष्टप्रतिज्ञं मत्वा तत एव धृष्टपणस्वीकरणा-त्प्रष्टुं दध्रे धृतवाग्मनो होताश्वलः ॥ २ ॥

याज्ञवल्क्येति होवाच तत्र मधुकाण्डे पाङ्क्तेन कर्मणा दर्शनसमुच्चितेन यजमानस्य मृत्योरत्ययो व्याख्यातः। उद्गीथप्रकरणे सङ्क्षेपतस्तस्यैव परीक्षाविषयोऽयमिति तद्गत-दर्शनविशेषार्थोऽयं विशेष आरभ्यते। यदिदं साधनजा-तं नरस्य कर्मण ऋत्विगग्न्यादि मृत्युना कर्मलक्षणेन स्वाभाविकासङ्गसहितेनाप्तं न केवलं व्याप्तमभिपन्नं च मृत्युना वशीकृतं च। केन दर्शनलक्षणेन साधनेन यजमानो मृत्योराप्तिमतीत्य मृत्युगोचरत्वमतिक्रम्य मुच्यते। स्वतन्त्रो मृत्योरवशो भवतीत्यर्थः। नमूद्गीथ एवाभिहितं येना-तिमुच्यते मुख्यप्राणात्मात्मदर्शनेनेति। बाढं। उक्तो योऽनुक्तो

---

आ॰ गीतास्तमाह। इदानीमिति॥ न तस्य तादृशी प्रतिज्ञा प्रतिभा-तीत्याशङ्क्याह। तत एवेति॥ २॥

तत्र प्रथमं मुनेराभिमुख्यमापादयितुं सम्बोधयति। याज्ञव-ल्क्येति॥ उक्तरीत्या याज्ञवल्क्यप्रश्ने प्रकृते तस्योद्गीथाधिकारेण सङ्ग-तिमाह। तत्रेति॥ मधुकाण्डे पूर्वत्र व्याख्याते यदुद्गीथप्रकरणं तस्मि-न्नासङ्गपाप्मनो मृत्योरत्ययः समुच्चितेन कर्मणा सङ्क्षेपतो व्याख्यात इति सम्बन्धः। तस्यैवोद्गीथदर्शनस्येति यावत्। परीक्षाविषयो विचारभूमिरयं प्रश्नप्रतिवचनरूपो ग्रन्थ इत्यर्थः। तच्छब्दः सम-नन्तरनिर्दिष्टग्रन्थविषयः दर्शनमुद्गीथोपासनं तस्य विशेषो वागादेरग्न्याद्यात्मत्वं विज्ञानं तत्सिद्ध्यर्थोऽयं क्रमः। एवमवान्तर-सङ्गतिमुक्त्वा प्रश्नाक्षराणि व्याचष्टे। यदिदमिति॥ ऋत्विगादिमि-

उ॰ एतꣳ सर्वं मृत्युनाभिपन्नं केन यजमानो मृत्यो-

---

भा॰ विशेषस्तत्र तदर्थोऽयमारम्भ इत्यदोषः। होत्रर्त्विजाग्निना वाचेत्याह याज्ञवल्क्यः। एतस्यार्थं व्याचष्टे। कः पुनर्होता येन मृत्युमतिक्रामतीत्युच्यते। वाग्वै यज्ञस्य यजमानस्य यज्ञो वै यजमान इति श्रुतेः। यज्ञस्य यजमानस्य या वाक् सैव होताऽधियज्ञे। कथं तत्तत्र या इयं वाग्यज्ञस्य यजमानस्य सोऽयं प्रसिद्धोऽग्निरधिदैवतं। तदेतत् त्र्यन्नप्रकरणे व्याख्यातं। स चाग्निर्होता अग्निर्वै होतेति श्रुतेः। तदेतद्यज्ञस्य साधनद्वयं। होता चर्त्विगधियज्ञमध्यात्मञ्च वागेतदुभयं साधनद्वयं परिच्छिन्नं मृत्युनाऽऽप्तं स्वाभाविकाज्ञानासङ्गप्रयुक्तेन कर्मणा मृत्युना। प्रतिक्षणमन्यथात्व-

---

आ॰ त्यनेन मृत्युनाभिपन्नमित्यगतार्थत्वमाशङ्क्याह। न केवलमिति॥ कर्मणो मृत्युत्वात्तेन मृत्योरत्ययायोगात्तदत्ययसाधनं किञ्चिद्दर्शनमेव वाच्यमित्याशयेन पृच्छति। केनेति॥ दर्शनविषयं प्रश्नमाक्षिपति। नन्विति॥ येन मुख्यप्राणात्मदर्शनेनातिमुच्यते तदुद्गीथप्रक्रियायामेवोक्तं। तथाच मृत्योरत्ययोपायस्य विज्ञानस्य निर्ज्ञातत्वात्केनेति प्रश्नानुपपत्तिरिति योजना॥ तस्यैव परीक्षाविषयोऽयमित्यादावुक्तमादाय परिहरति। बाढमिति॥ उद्गीथप्रकरणे वागादेरग्न्याद्यात्मत्वदर्शनरूपो यो विशेषो वक्तव्योऽपि नोक्तस्तदुक्त्यर्थोऽयं प्रश्नप्रतिवचनरूपो ग्रन्थ इति कृत्वा केनेत्यादिप्रश्नोपपत्तिरित्यर्थः॥ कीदृक् पुनर्दर्शनं मृत्युजयसाधनं होत्रेत्यादावुक्तमित्याशङ्क्याह। एतस्येति॥ व्याचष्टे वाग्वै यज्ञस्येत्यादिनेति शेषः॥ व्याख्यानमेव विशदयितुं पृच्छति। कः पुनरिति॥ दर्शनविषयं दर्शयन्नुत्तरमाह। उच्यत इति॥ यज्ञशब्दस्य यजमाने रूढप्रयोगो नास्तीत्याशङ्क्याह। यज्ञ इति॥

उ॰ राप्तिमतिमुच्यत इति होत्रर्त्विजाग्निना वाचा

भा॰ माप्याद्यमानं वशीकृतं। तदनेनाधिदैवतरूपेणाग्निना दृश्य-
मानं यजमानस्य मृत्योरतिमुक्तये भवति। तदेतदाह स
मुक्तिः। स होताग्निर्मुक्तिरग्निस्वरूपदर्शनमेव मुक्तिः। यदैव
साधनद्वयमग्निरूपेण पश्यति तदानीमेव हि स्वाभाविका-
दासङ्गान्मृत्योर्विमुच्यते। आध्यात्मिकात् परिच्छिन्नरूपा-
दाधिभौतिकाच्च तस्मात् स होताग्निरूपेण दृष्टो मुक्ति-
र्मुक्तिसाधनं यजमानस्य साऽतिमुक्तिः। सैव च मुक्तिः
सातिमुक्तिरतिमुक्तिसाधनमित्यर्थः। साधनद्वयस्य परि-
च्छिन्नस्य याऽधिदेवतारूपेणापरिच्छिन्नेनाग्निरूपेण या
दृष्टिः सा मुक्तिः। यासौ मुक्तिरधिदेवतादृष्टिः सैवाध्या-

आ॰ यजमानस्य या वागध्यात्मं सैवाधियज्ञे होतास्तु। तथापि
कथं तयोर्दैवतात्मनादर्शनमित्याह। कथमिति॥ तयोरग्न्या-
त्मनादर्शनमुत्तरवाक्यावष्टम्भेन व्याचष्टे॥ तत्त्वेति॥ कथं
पुनर्वागग्न्योरेकत्वं तदाह। तदेतदिति॥ तयोरेकत्वेऽपि कुतो
होतुस्तदैक्यमित्याशङ्क्याह। स चेति॥ स मुक्तिरित्येतदवतार-
यितुं भूमिकां करोति। यदेतदिति॥ न केवलमेवदुभयं मृत्युना
संस्पृष्टमेव किन्तु तेन वशीकृतञ्चेत्याह। स्वाभाविकेति॥ मृत्यु-
मार्त्तं मृत्युनाभिपन्नमित्यनयोरर्थमनूद्य होत्रेत्यादेरर्थमनुवदति।
तदनेनेति॥ साधनद्वयं तच्छब्दार्थः। यजमानग्रहणं होतुरुपल-
क्षणं। उक्तेऽर्थे समनन्तरं वाक्यमवतार्य्य व्याकरोति। तदेतदाहेति॥
मुक्तिशब्दस्तत्साधनविषयः॥ पदार्थमुक्त्वा वाक्यार्थमाह। अग्नि-
स्वरूपेति॥ वाचा होतुश्चाग्निस्वरूपेण दर्शनमेव मुक्तिहेतुरिति
यावत्॥ उक्तमर्थं प्रपञ्चयति। यदैवेति॥ स मुक्तिरित्यस्यार्थमुप-
संहरति। तस्मादिति॥ वाक्यान्तरं समुत्थाप्य व्याचष्टे। सावि-

उ॰ वाग्वै यज्ञस्य होता तद्येयं वाक् सोऽयमग्निः स होता सा मुक्तिः सातिमुक्तिः ॥ ३ ॥

याज्ञवल्क्येति होवाच यदिदꣳ सर्वमहोरा-

---

भा॰ त्माधिभूतपरिच्छेदविषयासङ्गास्पदं मृत्युमतिक्रम्याधिदेवतात्वस्याग्निभावस्य प्राप्तिर्या फलभूता साऽतिमुक्तिरित्युच्यते। तस्या अतिमुक्तेर्मुक्तिरेव साधनमिति कृत्वा साऽतिमुक्तिरित्याह। यजमानस्य ह्यतिमुक्तिर्वागादीनामग्न्यादिभाव इत्युद्गीथप्रकरणे व्याख्यातं। तत्र सामान्येन मुख्यप्राणदर्शनमात्रं मुक्तिसाधनमुक्तं। न तद्विशेषो वागादीनामग्न्यादिदर्शनं। इह विशेषो वर्ण्यते। मृत्युप्राप्त्यतिमुक्तिस्तु सैव फलभूता योद्गीथब्राह्मणेन व्याख्याता मृत्युमतिक्रान्तो दीप्यत इत्याद्या ॥ ३ ॥

याज्ञवल्क्येति होवाच। स्वाभाविकादज्ञानासङ्गप्रयुक्तात्कर्मलक्षणान्मृत्योरतिमुक्तिर्व्याख्याता। तस्य कर्मणः सा

---

आ॰ मुक्तिरिति॥ मुक्त्यतिमुक्त्योरसङ्कीर्णत्वं दर्शयति। साधनद्वयस्येति॥ प्राप्तिरतिमुक्तिरिति सम्बन्धः। तामेव सङ्गृह्णाति। या फलभूतेति॥ फलभूतायामग्न्यादिदेवताप्राप्तौ कथमतिमुक्तिशब्दोपपत्तिरित्याशङ्क्याह। तस्या इति॥ ननु वागादीनामग्न्यादिभावोऽत्र श्रूयते। यजमानस्य न किञ्चिदुच्यते। तत्राह। यजमानस्येति॥ तर्हि तेनैव गतार्थत्वादनर्थकमिदं ब्राह्मणमित्याशङ्क्य बाढमित्यादिनोक्तं स्मारयति। तत्रेति॥ दर्शनवत्फलेऽपि विशेषः स्यादित्याशङ्क्याह। मृत्युप्राप्तीति ॥ ३ ॥

प्रश्नान्तरमवतार्य्य तात्पर्य्यमाह। याज्ञवल्क्येति॥ आश्रयभूतानि कानि तानीत्याशङ्क्याह। दर्शपूर्णमासादीति॥ प्रतिपन्नमन्यथात्वं

उ॰ त्राभ्यामाप्तꣳ सर्व्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इत्यध्वर्य्यु- णर्त्विजा चक्षुषादित्येन चक्षुर्वै यज्ञस्याध्वर्य्युस्तद्य-

---

भा॰ सर्व्वस्य मृत्योराश्रयभूतानां दर्शपूर्णमासादिकर्म्मसाधनानां यो परिणामहेतुः कालस्तस्मात्कालात्पृथगतिमुक्तिर्वक्त- व्येतीदमारभ्यते। क्रियानुष्ठानव्यतिरेकेणापि प्रागूर्ध्वञ्च क्रियायाः साधनविपरिणामहेतुत्वेन व्यापारदर्शनात्का- लस्य। तस्मात्पृथक्कालादतिमुक्तिर्वक्तव्येत्यत आह। यदिदं सर्व्वमहोरात्राभ्यामाप्तं स च कालो द्विरूपोऽहोरात्रादि- लक्षणस्तिथ्यादिलक्षणश्च तत्राहोरात्रादिलक्षणात्तावदति- मुक्तिमाह। अहोरात्राभ्यां हि सर्व्वं जायते वर्द्धते विन- श्यति च। तथा यज्ञसाधनञ्च यज्ञस्य यजमानस्य चक्षुर-

---

आ॰ विपरिणामोऽग्न्यादिसाधनान्याश्रित्य काम्यं कर्म्म मृत्युशब्दित- मुत्पद्यते। तेषां साधनानां विपरिणामहेतुत्वात्कालो मृत्युः। ततो ऽतिमुक्तिर्वक्तव्येत्युत्तरग्रन्थारम्भ इत्यर्थः। कर्म्मणो मुक्तिरुक्ता चेत्कालादपि सोक्तैव तस्य कर्म्मान्तर्भावेन मृत्युत्वादित्याशङ्क्याह। पृथगिति॥ कर्म्मनिरपेक्षतया कालस्य मृत्युत्वं व्युत्पादयति॥ क्रियेति॥ कालस्य पृथङ्मृत्युत्वे सिद्धे फलितमाह। तस्मादिति॥ उत्तरग्रन्थस्थप्रश्नयोर्विषयं भेत्तुं कालं भिनत्ति। स चेति॥ आदित्य- श्चन्द्रश्चेति कर्तृभेदाद्द्वैविध्यमुन्नेयं॥ कालस्य द्वैरूप्ये सत्याद्यकण्डिका विषयमाह। तत्रेति॥ अहोरात्रयोर्मृत्युत्वे सिद्धे ताभ्यामतिमुक्ति- र्वक्तव्या॥ तदेव कथमित्याशङ्क्याह। अहोरात्राभ्यामिति॥ यज्ञसा- धनञ्च तथा ताभ्यां जायते वर्द्धते नश्यति चेति सम्बन्धः। प्रतिवचन- व्याख्याने यज्ञशब्दार्थमाह। यजमानस्येति॥ स मुक्तिरित्यस्य तात्प- र्य्यार्थमाह। यजमानस्येत्यादिना॥ तस्यैवाक्षरार्थं कथयति। सोऽ

उ॰ दिदं चक्षुः सोऽसावादित्यः सो ऽध्वर्य्युः सा मुक्तिः सातिमुक्तिः ॥ ४ ॥

याज्ञवल्क्येति होवाच यदिदꣳ सर्व्वं पूर्व्वपक्षापरपक्षाभ्यामाप्तꣳ सर्व्वं पूर्व्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्व्वपक्षापरपक्षयोराप्तिम-

---

भा॰ ध्वर्युश्च शिष्टान्यक्षराणि पूर्व्ववन्नेयानि । यजमानस्य चक्षुरध्वर्य्युश्च साधनद्वयमध्यात्माधिभूतपरिच्छेदं हित्वाऽधिदैवतात्मना दृष्टं यत्स मुक्तिः सोऽध्वर्य्युरादित्यभावेन दृष्टो मुक्तिः सैव मुक्तिरेवातिमुक्तिरिति पूर्व्ववदादित्यात्मभावमापन्नस्य हि नाहोरात्रे सम्भवतः ॥ ४ ॥

इदानीं तिथ्यादिलक्षणादतिमुक्तिरुच्यते। यदिदं सर्व्वमहोरात्रयोरविशिष्टयोरादित्यः कर्त्ता न प्रतिपदादीनां तिथीनां । तासान्तु वृद्धिक्षयोपगमनेन प्रतिपत्प्रभृतीनां चन्द्रमाः कर्त्ता । अतस्तदापत्त्या पूर्व्वपक्षापरपक्षात्ययः

---

आ॰ ध्वर्य्युरिति ॥ यथोक्तनीत्या आदित्यात्मत्वेऽपि कथमहोरात्रलक्षणामृत्योरतिमुक्तिरत आह। आदित्येति ॥ नोदेत नास्तमेतेत्यादिश्रुतेरादित्ये वस्तुतो नाहोरात्रे स्तः। तथा च तदात्मनि विदुष्यपि तेन सम्भवत इत्यर्थः ॥ ४ ॥

कण्डिकान्तरस्य तात्पर्य्यमाह। इदानीमिति॥ नन्वहोरात्रादिलक्षणे काले तिथ्यादिलक्षणस्य कालस्यान्तर्भावात्ततोऽतिमुक्तावुक्तायां तिथ्यादिलक्षणादपि कालादसावुक्तैवेति कृतं पृथगारम्भेणेति तत्राह। अहोरात्रयोरिति ॥ अविशिष्टयोर्वृद्धिक्षयशून्ययोरिति यावत् ॥ कथं तर्हि तिथ्यादिलक्षणात्कालादतिमुक्तिरत आह। अतस्तदापत्त्येति ॥ चन्द्रप्राप्त्या तिथ्याद्यत्ययो-

उ॰ तिमुच्यते इत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै यज्ञस्योद्गाता तद्योऽयं प्राणः स वायुः स उद्गाता सा मुक्तिः सातिमुक्तिः ॥ ५ ॥

---

भा॰ आदित्यापत्त्याऽहोरात्रात्ययवत्। तत्र यजमानस्य प्राणो वायुः। स एवोद्गातेत्युद्गीथब्राह्मणेऽवगतं वाचा च ह्येव स प्राणेन चोद्गायदिति च निर्द्धारितं। अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्र इति च प्राणवायुचन्द्रमसा-मेकत्वाच्चन्द्रमसा वायुना चोपसंहारेण कश्चिद्विशेष एवं मन्य-माना श्रुतिर्वायुनाधिदैवतरूपेणोपसंहरति। अपि च वायु-निमित्तौ हि वृद्धिक्षयौ चन्द्रमसः। तेन तिथ्यादिलक्षणस्य कालस्य कर्त्तुरपि कारयिता वायुः। अतो वायुरूपपन्न-

---

आ॰ माध्यन्दिनश्रुत्योच्यते। काण्वश्रुत्या तु वायुभावापत्त्या तदत्यय उक्तः। तथा च श्रुत्योर्विरोधे कः समाधिरित्याशङ्क्याह। तत्रेति॥ काण्वश्रुताविति यावत्॥ उद्गातुरपि प्राणात्मकवायुरूपत्वं श्रुतिद्वयानुसारेण दर्शयति। स एवेति॥ न केवलमुद्गातुः प्राणत्वं प्रतिज्ञामात्रेण प्रतिपन्नं किन्तु विचार्य निर्द्धारित-ञ्चेत्याह। वाचेति॥ प्राणचन्द्रमसोश्चैकत्वं सप्तान्नाधिकारे निर्द्धा-रितमित्याह। अथेति॥ उक्तया रीत्या प्राणादीनामेकत्वे श्रुत्योर-विरोधं फलितमाह। प्राणेति॥ मनोब्रह्मणोश्चन्द्रमसा प्राणो-द्गात्रोश्च वायुनोपास्यत्वेनोपसङ्ग्रहे मत्युतरयो विशेषो नास्तीति श्रुत्योर्विकल्पेनोपपत्तिरित्यर्थः। उपसंहरति प्राणमुद्गातारञ्च तद्रूपेणोपास्यतया सङ्गृह्णाति काण्वश्रुतिरित्यर्थः॥ इतश्च काण्वश्रु-तिरुपपन्नेत्याह। अपि चेति॥ वायुः सूत्रात्मा तन्निमित्तौ स्वाव-यवस्य चन्द्रमसो वृद्धिक्षयौ। सूत्राधीना हि चन्द्रादेर्जगतश्चेष्टे-त्यर्थः। वृद्ध्यादिहेतुत्वे फलितमाह। तेनेति॥ कर्त्तुश्चन्द्रस्येत्यर्थः॥

उ॰ याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनार-

---

भा॰ त्तिथ्यादिकालादतीतो भवतीत्युपपन्नतरं भवति । तेन श्रुत्यन्तरे चन्द्ररूपेण दृष्टिर्मुक्तिरतिमुक्तिश्च । इह तु कालानां साधनद्वयस्य तत्कारणरूपेण वाय्वात्मना दृष्टिर्मुक्तिरतिमुक्तिश्चेति न श्रुत्योर्विरोधः ॥ ५ ॥

मृत्योः कालादतिमुक्तिर्व्याख्याता । यजमानस्य सोऽतिमुच्यमानः केनावष्टम्भेन परिच्छेदविषयं मृत्युमतीत्य फलं प्राप्नोत्यतिमुच्यत इत्युच्यते । यदिदं प्रसिद्धमन्तरिक्षमाकाशोऽनारम्बणमनालम्बनमिव प्रश्नादस्यैव तदालम्बनं तत्तु न ज्ञायत इत्यभिप्रायः । यत्तु तद्ध्यायमानमालम्बनं तत्सर्व्वनाम्ना केनेति पृच्छ्यते । अन्यथा फलप्राप्तेरसम्भवात् । येनावष्टम्भेनाक्रमेण यजमानः कर्म्मफलं प्रतिपद्यमानोऽतिमुच्यते किन्तदिति प्रश्नविषयः । केन

---

आ॰ वायोश्चन्द्रमसि कारयितृत्वेऽपि प्रकृते किमायातं तदाह ॥ अत इति ॥ उदितानुदितहोमवद्विकल्पमुपेत्याविरोधमुपसंहरति । तेनेति ॥ श्रुत्यन्तरं माध्यन्दिनश्रुतिः साधनद्वयस्येत्युभयत्र सम्बध्यते तत्रादौ मनसो ब्रह्मणश्चेत्यर्थः । उत्तरत्र प्राणस्योद्गातुश्चेत्यर्थः । तच्छब्दश्चन्द्रविषयः ॥ ५ ॥

यदिदमन्तरिक्षमित्यादि प्रश्नान्तरं वृत्तानुवादपूर्व्वकमुपादत्ते । मृत्योरिति ॥ व्याख्यानव्याख्येयभावेन क्रियापदे नेतव्ये इत्येतत्प्रश्नरूपमुच्यते । समनन्तरवाक्येनेति यावत् ॥ तद्व्याचष्टे । यदिदमिति ॥ केनेतिप्रश्नस्य विषयमाह । यत्त्विति ॥ प्रश्नविषयं प्रपञ्चयति । अन्यथेति ॥ आलम्बनमन्तरेणेति यावत् ॥ प्रश्नार्थं सङ्क्षिप्योपसंहरति । केनेति ॥ अक्षरन्यासोऽक्षराणामर्थेषु वृत्ति-

उ॰ मृणमिव केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति ब्रह्मणर्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य

---

भा॰ क्रमेण यजमानः स्वर्गं लोकमाक्रमत इति स्वर्गं लोकं फलं प्राप्नोत्यतिमुच्यत इत्यर्थः। ब्रह्मणर्त्विजा मनसा चन्द्रेणेत्यक्षरन्यासः पूर्ववत्। तत्राध्यात्मं यज्ञस्य यजमानस्य यदिदं प्रसिद्धं मनः सोऽसौ चन्द्रोऽधिदैवं मनोऽध्यात्मं चन्द्रमाधिदैवतमिति हि प्रसिद्धं। स एव चन्द्रमा ब्रह्मर्त्विक् तेनाधिभूतं ब्रह्मणः परिच्छिन्नं रूपमध्यात्मं च मनस एतद्द्वयमपरिच्छिन्नेन चन्द्रमसो रूपेण पश्यति। तेन चन्द्रमसा मनसावलम्बनेन कर्म्मफलं स्वर्गलोकं प्राप्नोति अतिमुच्यत इत्यभिप्रायः। इतीत्युपसंहारार्थं वचनमित्येव-

---

आ॰ रिति यावत्॥ मनो वै यज्ञस्येत्यादेरर्थमाह। तत्रेति॥ व्यवहारभूमिः सप्तम्यर्थः॥ वाक्यार्थमाह। तेनेति॥ द्वितीयातृतीयाभ्यां समुच्यते॥ दर्शनफलमाह। तेनेति॥ वागादीनामग्न्यादिभावेन दर्शनमुक्तं। त्वगादीनान्तु वाय्वादिभावेन दर्शनं वक्तव्यं। तत्कथं वक्तव्यं शेषे सत्युपसंहारोपपत्तिरित्याशङ्क्याह। सर्व्वाणीति॥ वागादावुक्तन्यायस्य त्वगादावतिदेशोऽत्र विवक्षित इत्याह। एवम्प्रकारा इति॥ अथशब्दो दर्शनप्रभेदकथनानन्तर्य्यार्थः॥ केयं सम्पन्नामेति पृच्छति। सम्पन्नामेति॥ उत्तरमाह। केनचिदिति॥ महतां फलवतामश्वमेधादिकर्म्मणां कर्म्मत्वादिना सामान्ये वाल्पीयस्सु कर्म्मसु विवक्षितफलसिद्ध्यर्थं सम्पत्तिस्सम्पदुच्यते॥ यथाशक्त्यग्निहोत्रादिनिर्वर्त्तनेनाश्वमेधादि मया निर्वर्त्त्यत इति ध्यानं सम्पदित्यर्थः। यद्वा फलस्यैव देवलोकादेरुज्ज्वलत्वादिसामान्येनाल्पाद्याहुतिसम्पादनं सम्पदित्याह। फलस्येति॥ सम्पदनुष्ठानावसरमादर्शयति। सर्व्वीत्माहेनेति॥ असम्भवोऽनुष्ठानस्य यदेति शेषः।

उ॰ ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा सा मुक्तिः सातिमुक्तिरित्यतिमोक्षा अथ सम्पदः ॥ ६ ॥

---

भा॰ प्रकारा मृत्योरतिमोक्षाः। सर्व्वाणि हि दर्शनप्रकाराणि यज्ञाङ्गविषयाण्यस्मिन्नवसर उक्तानीति हृत्वोपसंहार इत्यतिमोक्षाः। एवम्प्रकारा अतिमोक्षा इत्यर्थः। अथ सम्पदः। अथाधुना सम्पद उच्यन्ते। सम्पन्नाम केनचित्सामान्येनाग्निहोत्रादीनां कर्म्मणां फलवतां तत्फलाय सम्पादनं सम्पत्फलस्यैव वा सर्व्वोत्साहेन फलसाधनानुष्ठाने प्रयततां केनचिद्वैगुण्येनासम्भवः। तदिदानीं आहिताग्निः सन्यत्किञ्चित्कर्म्माग्निहोत्रादीनां यथा सम्भवमादायालम्बनीकृत्य कर्म्मफलविद्वत्तायां सत्यां यत्कर्म्मफलकामो भवति तदेव सम्पादयति। अन्यथा राजसूयाश्वमेधपुरुष-

---

आ॰ कर्म्मिणामेव सम्पदनुष्ठानेऽधिकार इति दर्शयितुमाहिताग्निः सन्नित्युक्तं। अग्निहोत्रादीनामिति निर्द्धारणे षष्ठी। यथासम्भवं वर्णाश्रमानुरूपमिति यावत्। आदायेत्यस्य व्याख्यानं आलम्बनीकृत्येति। न केवलं कर्म्मित्वमेव सम्पदनुष्ठातुरपेक्षते किन्तु तत्फलविद्यावत्त्वमपीत्याह। कर्म्मेति॥ तदेव कर्म्मफलमेवेत्यर्थः॥ कर्म्माण्येव फलवन्ति न सम्पदस्तत्कथं तासां कार्य्यतेत्याशङ्क्याह। अन्यथेति॥ विहिताध्ययनस्यार्थज्ञानानुष्ठानादिपरम्परया फलवत्त्वमिष्टं। न चाश्वमेधादिषु सर्व्वेषामनुष्ठानसम्भवं कर्म्मस्वधिकृतानामपि त्रैवर्णिकानां केषाञ्चिदनुष्ठानासम्भवादवन्तेषां तदध्ययनार्थवत्त्वमुपपत्त्या सम्पदामपि फलवत्त्वमेष्टव्यमित्यर्थः॥ महतोऽश्वमेधादिफलस्य कथमल्पीयसा सम्पदा प्राप्तिरित्याशङ्क्य शास्त्रप्रामाण्यादित्यभिप्रेत्याह। यदिति॥ तदा तत्पाठः स्वाध्यायार्थ एवेति पूर्व्वेण सम्बन्धः। अध्ययनस्य फलवत्त्वे वक्तव्ये फलितमाह। तस्मादिति॥

उ० याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भि र्होतास्मिन्यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्र इति पुरोऽनुवाक्या च याज्या च शस्यैव

भा० मेधसर्व्वमेधलक्षणानामनधिकृतानां त्रैवर्णिकानामध्ययनश्रवणेषां तत्पाठः स्वाध्यायार्थ एव केवलः स्यात्। यदि तत्फलप्राप्त्युपायः कश्चन न स्यात्तस्मात्तेषां सम्पदैव तत्फलप्राप्तिस्तस्मात्सम्पदामपि फलवत्त्वमतः सम्पद आरभ्यन्ते ॥ ६ ॥

याज्ञवल्क्येति होवाच। अभिमुखीकरणाय कतिभिरयमद्यास्मिन्यज्ञे कतिभिर्ऋग्भिः कतिसङ्ख्याभिर्ऋग्जातिभिरयं होतर्लिगस्मिन्यज्ञे करिष्यति शस्त्रं शंसत्याहेतरस्तिसृभिर्ऋग्जातिभिरित्युक्तवन्तं प्रत्याहेतरः कतमास्तास्तिस्र इति। सङ्ख्येयविषयोऽयं प्रश्नः। पूर्व्वस्तु सङ्ख्याविषयः पुरोऽनुवाक्या च। प्राक् प्रयोगकालाद्याः प्रयुज्यन्ते ऋचः सर्ज्जातिः पुरोऽनुवाक्येत्युच्यते। यागार्थं याः प्रयुज्यन्ते ऋचः सर्ज्जातिर्याज्या। शस्त्रार्थं याः प्रयुज्यन्ते ऋचः सर्ज्जातिः शस्या। सर्व्वास्तु याः काश्चनर्चस्ताः स्तोत्रि-

---

आ० तेषां राजसूयादीनामिति यावत्। ब्राह्मणादीनां राजसूयाद्यध्ययनसामर्थ्यात्तेषां सम्पदैव तत्फलप्राप्तावपि किं सिध्यति। तस्मात्सम्पदामिति ॥ कर्म्मणामिवेति दृष्टान्तार्थोऽपिशब्दः ॥ तासां फलवत्त्वे फलितमाह। अत इति ॥ ६ ॥

सम्पदामारम्भमुपपाद्य प्रश्नवाक्यमुत्थापयति। याज्ञवल्क्येतीति॥ प्रतीकमादाय व्याचष्टे। कतिभिरित्यादिना ॥ कतिभिः कतमा इति प्रश्नयोर्विषयभेदं दर्शयति। सङ्ख्येति ॥ स्तोत्रिया नामा-

उ॰ तृतीया किन्ताभिर्जयतीति यत्किञ्चेदं प्राणभृ-
दिति ॥ ७ ॥

याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्य्युरस्मि-
न्यज्ञ आहुतीर्होष्यतीति तिस्र इति कतमास्ता-
स्तिस्र इति या हुता उज्ज्वलन्ति या हुता अति-

---

भा॰ या वा अन्या वा सर्व्वा एतास्वेव तिसृषु ऋग्जातिष्वन्त-
र्भवन्ति। किन्ताभिर्जयतीति यत्किञ्चेदं प्राणभृदिति।
अतश्च सङ्ख्यासामान्याद्यत्किञ्चित्प्राणभृज्जातं तत्सर्व्वं
जयति तत्सर्व्वं फलजातं सम्पादयति सङ्ख्यादिसामा-
न्येन ॥ ७ ॥

याज्ञवल्क्येति होवाचेति पूर्व्ववत्। कत्ययमद्याध्वर्य्यु-
रस्मिन्यज्ञ आहुतीर्होष्यतीति कत्याहुतिप्रकारास्तिस्र
इति। कतमास्तास्तिस्र इति। पूर्व्ववदितर आह या हुता
उज्ज्वलन्ति समिदाज्याहुतयः। या हुता अतिनेदन्ते अती-
वशब्दं कुर्व्वन्ति मांसाद्या हुतयः। या हुता अधिशेरते
अधि अधो गत्वा भूमेः अधि शेरते पयःसोमाहुतयः।
किन्ताभिर्जयतीति ताभिरेवं निर्व्वर्त्तिताभिराहुतिभिः किं

---

आ॰ न्यापि काचिदृग्जातिरस्तीत्याशङ्क्याह। सर्व्वास्त्विति॥ अन्या वेति
शास्त्रे जातिग्रहः। विधेयाभेदात्सर्व्वशब्दात्पुनरुक्तिः। अतश्च सम्प-
त्तिकारणादित्यर्थः॥ सङ्ख्यासामान्यात्त्रिधा विशेषादिति यावत्॥७॥
प्राणभृज्जातं लोकत्रयं विवक्षितं प्रथमः सङ्ख्याविषयो द्विती-
यस्तु सङ्ख्येयविषयः प्रश्न इति विभागं सूचयति। पूर्व्ववदिति॥
तेन सामान्येनोज्ज्वलत्वेनेति यावत्॥ उक्तमर्थं सङ्क्षिप्याह। देव-

उ॰ नेदन्ते या हुता अधिशेरते किन्ताभिर्जयतीति या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति दीप्यत इव हि देवलोको या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयत्यतीव हि पितृलोको या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयत्यध इव हि मनुष्यलोकः ॥ ८ ॥

---

भा॰ जयतीति। या आहुतयो हुता उज्ज्वलन्ति उज्ज्वलनयुक्ता आहुतयो निर्वर्त्तिताः फलञ्च देवलोकाख्यं उज्ज्वलमेव तेन सामान्येन या मया एता उज्ज्वलन्त्य आहुतयो निर्वर्त्त्यमानास्ता एताः साक्षाद्देवलोकस्य कर्म्मफलस्य रूपं देवलोकाख्यं फलमेव मया निर्वर्त्त्यत इत्येवं सम्पादयति। या हुता अतिनेदन्ते आहुतयः पितृलोकमेव ताभिर्जयति कुत्सितशब्दकर्तृत्वसामान्येन पितृलोकसम्बद्धायां हि संयमिन्यां पुर्य्यां वैवस्वतेन पात्यमानानां हा हताः स्म मुञ्च मुञ्चेति शब्दो भवति। तथाऽवदानाहुतयस्तेन पितृलोकसामान्यात्पितृलोक एव मया निर्वर्त्त्यत इति सम्पादयति। या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयति भूम्युपरि सम्बन्धसामान्यादध इव हि अध एव मनुष्यलोकः उपरितनान्साध्यान् लोकानपेक्ष्याथवाधोगमनमपेक्ष्यातो

---

आ॰ लोकाख्यमिति॥ कथं मांसाद्याहुतीनां पितृलोकेन सह यथोक्तं सामान्यमत आह। पितृलोकेति॥ अधोगमनमपेक्ष्येति॥ अस्ति हि सोमाद्याहुतीनामधस्तादूमनमस्ति च मनुष्यलोकस्य पाप-

उ॰ याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति

---

भा॰ मनुष्यलोक एव मया निर्वर्त्त्यत इति सम्पादयति पयः सोमाहुतिनिवर्त्तनकाले ॥ ८ ॥

याज्ञवल्क्येति होवाचेति पूर्ववत्। अयमृत्विग्ब्रह्मा दक्षिणतो ब्रह्मासने स्थित्वा यज्ञं गोपायति। कतिभिर्देवताभिर्गोपायतीति प्रासङ्गिकमेतद्बहुवचनं। एकया हि देवतया गोपायत्यसौ एवं ज्ञाते बहुवचनेन प्रश्नो नोपपद्यते स्वयं जानतस्तस्मात्पूर्व्वयोः कण्डिकयोः प्रश्नप्रतिवचनेषु कतिभिः कतिभिस्तिसृभिस्तिसृ इति प्रसङ्गं दृष्ट्वेहापि बहुवचनेनैव प्रश्नोपक्रमः क्रियते। अथवा प्रतिवादिव्यामोहार्थं बहुवचनमितर आह। एकयेत्येका सा देवता यया दक्षिणतः स्थित्वा ब्रह्मासने यज्ञं गोपायति। कतमा सैकेति। मन एवेति मनः सा देवता। मनसा हि ब्रह्मा व्याप्रियते ध्यानेनैव तस्य यज्ञस्य मनश्च वाक् च वर्त्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मेति श्रुत्यन्तरात्तेन मन एव

---

आ॰ प्रचुरस्य तादृग्गमनं तदपेक्ष्येत्यर्थः। अतः सामान्यादिति यावत्। दक्षिणत आहवनीयस्येति शेषः ॥ ८ ॥

प्रासङ्गिकं बहुवचनमित्युक्तं प्रकटयति। एकया हीति ॥ अल्पकयाप्रश्नुतेति हृदि निधाय बहुत्वे गत्यन्तरमाह। अथवेति ॥ मनसो देवतात्वं साधयति। मनसेति ॥ वर्त्तनी वर्त्मनी तयोर्वाङ्मनसयोर्वर्त्मनोरन्यतरां वाचं मनसा मौनेन ब्रह्मा संस्करोति। वाग्विसर्गे प्रायश्चित्तविधानादिति श्रुत्यन्तरस्यार्थः ॥ तथापि कथं

उ॰ कतमा सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ॥ ९ ॥

याज्ञवल्क्येति होवाच कत्ययमद्योद्गातास्मिन्यज्ञे स्तोत्रिया स्तोष्यतीति तिस्र इति कतमास्ता-स्तिस्र इति पुरोऽनुवाक्या च याज्या च शस्यैव

---

भा॰ देवता तया मनसा हि गोपायति ब्रह्मा यज्ञं। तच्च मनोवृ-त्तिभेदेनानन्तं। वै शब्दः प्रसिद्धावद्योतकः। प्रसिद्धं मनस आनन्त्यं। तदानन्त्याभिमानिनो देवा अनन्ता वै विश्वेदेवाः। सर्व्वे देवा यत्रैकं भवन्तीति श्रुत्यन्तरात्तेनानन्त्यसामा-न्यादनन्तमेव स तेन लोकं जयति ॥ ९ ॥

याज्ञवल्क्येति होवाचेति पूर्व्ववत्। कति स्तोत्रियाः स्तोष्यतीत्ययमुद्गाता स्तोत्रिया नाम ऋक्सामसमुदायः कति-पयानामृचां। स्तोत्रिया वा शस्या वा याः काश्चन ऋच-स्ताः सर्व्वास्तिस्र एवेत्याह। ताश्च व्याख्याताः पुरोऽनुवाक्या च याज्या च शस्यैव तृतीयेति। तत्र पूर्व्वमुक्तं यत्किञ्चेदं

---

आ॰ सम्पदः सिद्धिलत्नाह। तच्चेति। देवाः सर्व्वे यस्मिन्मनस्येकं भवन्तीत्यभिन्नत्वं प्रतिपाद्यन्ते तस्मिन्विश्वेदेवदृष्ट्या भवत्यनन्तलोक-प्राप्तिरिति श्रुत्यन्तरस्यार्थः॥ अनन्तमेवेत्यादि व्याचष्टे। तेनेति॥ उक्तेन प्रकारेणेति यावत्। तेन मनसि विश्वेदेवदृष्ट्यध्यासेनेत्यर्थः। स इत्युपासकोक्तिः पूर्व्ववदित्यभिमुखीकरणायेत्यर्थः॥ ९॥

प्रतिवचनमुपादत्ते। स्तोत्रिया वेति॥ प्रगीतमन्त्रजातं स्तोत्रमप्रगी-तं शस्त्रं॥ कतमास्तास्तिस्र इत्यादेस्तात्पर्य्यमाह। ताश्चेति॥ प्रश्नान्तरं कृतमनूद्योपादत्ते। तत्रेति। यज्ञाधिकारः सम्बन्धार्थः। पुरोऽनु-

उ॰ तृतीया कतमास्ता या अध्यात्ममिति प्राण एव पुरोऽनुवाक्याऽपानो याज्या व्यानः शस्या किन्ताभिर्जयतीति पृथिवीलोकमेव पुरोऽनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्युलोकꣳ शस्यया ततो ह होताश्वल उपरराम ॥ १० ॥ पञ्चमे प्रथमं ब्राह्मणं ॥

---

भा॰ प्राणश्चत्सर्व्वं जयतीति तत्केन सामान्येनेत्युच्यते कतमास्तास्तिस्र ऋचो या अध्यात्मं भवन्तीति प्राण एव पुरोऽनुवाक्या। अपशब्दसामान्यादपानो याज्या। आनन्तर्य्यादपानेन हि प्रत्तं हविर्देवता अश्नन्ति। यागश्च प्रदानं। व्यानः शस्या। अप्राणन्नपानन्नृचमभिव्याहरतीति श्रुत्यन्तरात्किन्ताभिर्जयतीति व्याख्यातं। तत्र विशेषसम्बन्धसामान्यमनुक्तमिहोच्यते सर्व्वमन्यद्व्याख्यातं। लोकसम्बन्धसामान्येन पृथिवीलोकमेव पुरोऽनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया

---

आ॰ वाक्यादिना लोकत्रयजयलक्षणं फलं॥ केन सामान्येनेत्यपेक्षायां सङ्ख्याविशेषेणेत्युक्तं स्मारयति। तदिति॥ अधियज्ञमुक्तं स्मारयित्वाध्यात्मं विशेषं दर्शयितुमुत्तरो ग्रन्थ इत्याह। उच्यत इति॥ प्राणादौ पुरोऽनुवाक्यादौ च पृथिव्यादिलोकदृष्टिरिति प्रश्नपूर्व्वकमाह। कतमा इति॥ अपाने याज्यादृष्टौ हेत्वन्तरमाह। अपानेन हीति॥ हस्ताद्यादानव्यापारेणेति यावत्॥ प्राणापानव्यापारव्यतिरेकेण शस्त्रप्रयोगस्य श्रुत्यन्तरे सिद्धत्वाद्व्याने शस्यादृष्टिरित्याह। अप्राणन्निति॥ तत्र पुरोऽनुवाक्यादिषु चेति यावत्। इहेत्यनन्तरवाक्योक्तिः। सर्व्वमन्यदिति सङ्ख्यासामान्योक्तिः॥ किन्त-

भा॰ मध्यत्वसामान्यात् द्युलोकं प्रश्नयोर्ध्वत्वसामान्यात्ततो ह तस्मादात्मनः प्रश्ननिर्णयादसौ होताश्वल उपरराम नायमस्मद्गोचर इति ॥ १० ॥ इति श्रीमद्बृहदारण्यके पञ्चमप्रपाठके प्रथमब्राह्मणभाष्यं ॥

आख्यायिकासम्बन्धः प्रसिद्ध एव। मृत्योरतिमुक्तिर्व्याख्याता काललक्षणात्कर्मलक्षणाच्च। कः पुनरसौ मृत्युर्यस्मादतिमुक्तिर्व्याख्याता। स च स्वाभाविकाज्ञानासङ्गास्पदोऽध्याधिभूतविषयपरिच्छिन्नो ग्रहातिग्रहलक्षणो मृत्युः। तस्मात्परिच्छिन्नरूपान्मृत्योरतिमुक्तस्य रूपाण्यग्न्यादित्यादीन्युद्गीतप्रकरणे व्याख्यातानि अश्वलप्रश्ने च तद्गतो विशेषः

---

आ॰ द्विशेषसम्बन्धसामान्यं तदाह। लोकेति ॥ पृथिवीलक्षणेन लोकेन सह प्रथमत्वेन सम्बन्धसामान्यं पुरोऽनुवाक्यायामस्ति तेन पृथिवीलोकमेव प्राप्नोतीत्यर्थः ॥ अश्वलस्य तूष्णीम्भावं भजतोऽभिप्रायमाह। नायमिति ॥ १० ॥ अश्वलब्राह्मणं प्रथमं ॥

ब्राह्मणान्तरमवतारयन्नाख्यायिका किमर्थेति शङ्कमानम्प्रत्याह। आख्यायिकेति ॥ याज्ञवल्क्यो हि विद्याप्रकर्षवशादत्र पूजाभागी लक्ष्यते नार्त्तभागस्तथा विद्यामान्द्यादतो विद्यास्तुत्यर्थेयमाख्यायिकेत्यर्थः ॥ इदानीं ब्राह्मणार्थं वक्तुं वृत्तं कीर्त्तयति। मृत्योरिति ॥ मृत्युस्वरूपं पृच्छति। कः पुनरसाविति ॥ तत्स्वरूपनिरूपणार्थं ब्राह्मणमुत्थापयति। स चेति ॥ मृत्युरिति सम्बन्धः ॥ स्वाभाविकं नैसर्गिकमनादिसिद्धमज्ञानं तस्मादासङ्गस्तस्यास्पदमेवास्पदं यस्य स तथेति विग्रहः ॥ तस्य विषयमुक्त्वा व्याप्तिमाह। अध्यात्मेति ॥ तस्य स्वरूपमाह। ग्रहेति ॥ यथोक्तमृत्युव्याप्तिमग्न्यादीनां कथयति। तस्मादिति। तान्यपि ग्रहातिग्रहगृहीतान्यर्थेन्द्रियसंसर्गित्वादित्यर्थः। तद्गतो विशेषोऽग्न्यादिगतो दृष्टिभेद इति यावत्। कश्चिद्व्याख्यात इति सम्बन्धः ॥ सूत्रस्यापि मृत्युग्रस्तत्वमभिप्रेत्याह। तथेति। अग्न्यादित्याद्यात्मकं सौत्रप-

भा॰ कश्चिन्नचैतत्कर्म्मणां ज्ञानसहितानां फलमेतत्। तस्मात्साध्यसाधनरूपात् संसारान्मोक्षः कर्त्तव्य इत्यतो बन्धनरूपस्य मृत्योः स्वरूपमुच्यते। बद्धस्य हि मोक्षः कर्त्तव्यः। यद्यप्यतिमुक्तस्य स्वरूपमुक्तं तथापि ग्रहातिग्राहाभ्यामविनिर्मुक्त एव मृत्युरूपाभ्यां॥

तथा चोक्तमशनाया मृत्युरेष एव मृत्युरित्यादित्यस्थं पुरुषमङ्गीकृत्याह एको मृत्युर्बहव इति च तदात्मभावापन्नो हि मृत्योराप्तिमतिमुच्यत इत्युच्यते। न च तत्र ग्रहातिग्रहौ मृत्युरूपौ न स्तः। अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यः। मनश्च ग्रहः। स कामेनातिग्राहेण गृहीत इति वक्ष्यति। प्राणो वै ग्रहः। सोऽपानेन नाति-

---

आ॰ इदमिति यावत्। कथं यथोक्तमृत्युग्रस्तमिति शेषः॥ किमिति मृत्योर्बन्धनरूपस्य स्वरूपमुच्यते तत्राह। एतस्मादिति॥ ननु मोक्षे कर्त्तव्ये बन्धनरूपोपवर्णनमनुपयुक्तमित्याशङ्क्याह। बन्धस्य हीति॥ अग्न्यादीनां यथोक्तमृत्युव्याप्तिमुक्तां व्यक्तीकरोति। यद्यपीति॥ अविनिर्मुक्त एवातिमुक्तोऽपीति शेषः।

तथापि कथं सूत्रस्य यथोक्तमृत्युव्याप्तिस्तत्राह। तथा चेति। तथापि कथमग्न्यादीनां मृत्युव्याप्तिर्न हि तत्र प्रमाणमस्ति तत्राह। एक इति॥ बहव इति छान्दसं तथापि विदुषो मृत्योरतिमुक्तस्य न तदाप्तिरित्याशङ्क्याह। तदात्मेति॥ सौत्रे पदे मृत्युव्याप्तिं प्रकारान्तरेण प्रकटयति। न चेति॥ मनसि कार्य्यकरणरूपेण दिवश्चादित्यस्य चैक्यमस्तु तथापि कथं ग्रहातिग्रहग्रस्तीतत्वं सूत्रस्येत्याशङ्क्याह। मनश्चेति॥ वागादेर्वक्तव्यादेश्च ग्रहत्वेऽतिग्रहत्वे च हिरण्यगर्भे किमायातमित्याशङ्क्याह। तथेति॥ कर्म्मफलस्य संसारत्वाच्च तत्फलं सौत्रपदं मृत्युग्रस्तमेवेत्याह। सविषारितश्चेति॥ यदेव कर्म्मबन्धप्रवृत्तिप्रयोजकं तदेव बन्धनिवृत्तेर्न

भा॰ पाप्मनेति वाक्ये स नाम्नातिपाप्मनेति च तथा अन्नविभागे व्याख्यातमस्माभिः। सुविचारितं चैतद्यदेव प्रवृत्तिकारणं तदेव निवृत्तिकारणं न भवतीति। केचित्तु सर्व्वमेव निवृत्तिकारणं मन्यन्ते॥

अतः कारणात्पूर्व्वस्मात्पूर्व्वस्मान्मृत्योर्मुच्यते उत्तरमुत्तरम्प्रतिपद्यमानो व्यावृत्त्यर्थमेव प्रतिपद्यते न तु तादर्थ्यमित्यत आह। द्वैतक्षयात्सर्व्वं मृत्युर्द्वैतक्षये तु परमार्थतो मृत्योराप्तिमतिमुच्यते। अतश्चापेक्षिकी गौणी मुक्तिरन्तराले सर्व्वमेतदेवमबार्हदारण्यकं। ननु सर्व्वैकत्वं

---

आ॰ कारणमतः कर्म्मफलं हैरण्यगर्भं पदं बन्धनमेवेत्यर्थः॥ स्वमतमुक्त्वा मतान्तरमाह। केचित्त्विति। सर्व्वमेव कर्म्मेति शेषः। स्वर्गकामवाक्ये देहात्मत्वनिवृत्तिर्गोदोहनवाक्ये स्वतन्त्राधिकारनिवृत्तिर्नित्यनैमित्तिकविधिष्वर्थान्तरोपदेशेन स्वाभाविकप्रवृत्तिनिरोधो निषेधेषु साक्षादेव नैसर्गिकप्रवृत्तयो निरुध्यन्ते। तदेवं सर्व्वमेव कर्म्मकाण्डं निवृत्तिद्वारेण मोक्षपरमित्यर्थः।

ननु शास्त्रीयात्कर्म्मणो हेतोरुत्तरमुत्तरं कार्य्यकरणसङ्घातमतिशयवन्तमायजात्प्रतिपद्यमानः सङ्घातात्पूर्व्वस्मान्मुच्यते तत्कुतो निवृत्तिपरत्वं कर्म्मकाण्डस्येत्याशङ्क्याह। अतः कारणादिति। यद्वीदमुत्तरमुत्तरं सातिशयं फलं प्राजापत्यं पदं तदपि प्रासादारोहणक्रमेण व्यावृत्तिद्वारा मोक्षमवतारयितुं। ननु तत्रैव प्राजापत्ये पदे श्रुतेस्तात्पर्य्यं तस्यापि निरतिशयफलत्वाभावादित्यर्थः॥ फलितमाह। इत्यत इति॥ यस्मात्पूर्व्वं पूर्व्वं परित्यज्योत्तरमुत्तरं प्रतिपद्यमानस्तत्तन्निवृत्तिद्वारा मुक्त्यर्थमेव तत्प्रतिपद्यते। न तु तत्तत्पदप्राप्त्यर्थमेव वाक्यं पर्य्यवसितं तस्यान्तवत्त्वेनाफलत्वात्। तस्माद्द्वैतक्षयपर्य्यन्तं सर्व्वोऽपि फलविशेषो मृत्युग्रस्तत्वात्प्रासादारोहणन्यायेन मोक्षार्थोऽवतिष्ठते हिरण्यगर्भपदप्राप्त्या द्वैतक्षये तु वस्तुतो मृत्योराप्तिमतीत्य परमात्मरूपेण स्थितो मुक्तो भवति। तथा च

भा॰ मोक्षस्तस्मात्तत्सर्व्वमभवदिति श्रुतेः। वाढं। भवत्येतदपि न तु ग्रामकामो यजेत पशुकामो यजेतेत्यादिश्रुतीनां तादर्थ्यं। यदि ह्यद्वैतार्थत्वमेवासां ग्रामपशुस्वर्गाद्यर्थत्वं नास्तीति ग्रामपशुस्वर्गादयो न गृह्णीरन् गृह्यन्ते तु कर्म्म-फलवैचित्र्यविशेषाः॥

यदि च वैदिकानां कर्म्मणां तादर्थ्यमेव संसार एव नाभविष्यदथ तादर्थ्येऽप्यनुनिष्पादितपदार्थः स्वभावः संसार इति चेद्यथा च रूपदर्शनार्थ आलोके सर्व्वोऽपि तत्रस्थः

---

आ॰ मनुष्यभावादूर्ध्वमर्वाक् परमात्मभावान्मध्ये या तत्तत्पदप्राप्तिः सा स्वस्यापेक्षिकी ततो गौणी मुक्तिर्मुख्या तु पूर्व्वोक्तैवेत्यर्थः॥ सर्व्वमेतदुक्तमेवेत्यामाशङ्कारचितं न तु वृहदारण्यकस्य कृत्स्नस्य स्वार्थं इति दूषयति। सर्व्वमेतदिति॥ सर्व्वैकत्वलक्षणो मोक्षो वृहदारण्यकार्थं एवास्माभिरुच्यते तत्कथमस्मदुक्तमवार्हदार-ण्यकमिति शङ्कते। न त्विति॥ अङ्गीकरोति। वाढमिति॥ अङ्गीकृत-मंशं विशदयति। भवतीति॥ एतत्सर्व्वैकत्वमारण्यकार्थो भव-त्यपीति योजना॥ कथं तर्हि सर्व्वमेतदवृहदारण्यकमित्युक्तं तत्राह। न त्विति॥ तदुक्तरीत्या कर्म्मश्रुतीनां यथोक्तमोक्षा-र्थत्वं न घटते। तेन सर्व्वमेतदौत्सेक्षिकं न श्रौतमित्युक्तमित्यर्थः॥ श्रुतीनां मोक्षार्थत्वाभावं समर्थयते। यदि हीति। तस्मात्तासां न मोक्षार्थतेति शेषः।

किञ्च संसारस्तावद्धर्म्माधर्म्महेतुकः। तौ च विधिनिषेधाधीनौ। तयोश्चेत्त्वदुक्तरीत्या मोक्षार्थत्वे तदा हेत्वभावात्संसार एव न स्यादित्याह। यदि चेति॥ विधिनिषेधयोर्निवृत्तिद्वारा मुक्त्यर्थत्वेऽपि विध्यादिज्ञानादनुनिष्पादितोऽयं कर्म्मपदार्थस्तस्यायं स्वभावो यदुत कर्त्तारमनर्थेन संयुनक्तीति चोदयति। अथेति॥ मोक्षार्थ-मपि कर्म्मवाह्यं संसारार्थं भवतीति सदृष्टान्तमाह। यथेति॥ प्रमा-णाभावेन परिहरति। नेति॥ तदेव व्यनक्ति। अद्वैतार्थत्व इति॥

भा॰ प्रकाशस्तत एव न प्रमाणानुपपत्तेः अद्वैतार्थत्वे वैदिकानां कर्म्मणां विद्यासहितानामन्यस्यानुनिष्पादितत्वे प्रमाणानुपपत्तिः न प्रत्यक्षं नानुमानमत एव च नागम उभयमेकेन वाक्येन प्रदर्श्यत इति चेत्कुल्याप्रणयनालोकादिवत्तस्यैवं वाक्यधर्म्मानुपपत्तेः। न चैकवाक्यगतस्यार्थस्य प्रवृत्तिनिवृत्तिसाधनत्वमवगन्तुं शक्यते। कुल्याप्रणयनालोकादावर्थस्य प्रत्यक्षत्वाददोषः। यदप्युच्यते मन्त्रा अस्मिन्नर्थे दृष्टा इत्ययमेव तु तावदर्थः। प्रमाणमन्या मन्त्राः पुनः किमस्मिन्नर्थे आहोस्विदन्यस्मिन्नर्थे इति मृग्यमेतत्॥

---

आ॰ अन्यस्य बन्धस्येति यावत्॥ अनुपपत्तिं स्फोरयति। न प्रत्यक्षमिति। कर्म्मश्रुतिवाक्यस्यावान्तरतात्पर्य्यं यथाश्रुतेऽर्थे दृश्यते॥ निवृत्तिद्वारा मुक्तौ तु महातात्पर्य्यमित्यङ्गीकृत्य शङ्कते। उभयमिति॥ इमाः क्षुद्राः सरितः कुल्यास्तासां प्रणयनमाहरणं पानीयार्थमाचमनीयाद्यर्थं च। प्रदीपश्च प्रासादशोभार्थे कृतो गमनादिहेतुरपि भवति। वृक्षमूले च सेचनमनेकार्थं तथा कर्म्मकाण्डमनेकार्थमिति उपपादयति। कुल्येति॥ एकस्य वाक्यस्य यथा श्रुतेनार्थेनार्थवत्त्वे सम्भवति नान्यत्र तात्पर्य्यं कल्प्यं कल्पकाभावान्न च त्वदुक्तया रीत्यानेकार्थत्वलक्षणो धर्म्मो वाक्यस्यैकस्योपपद्यतेऽर्थैकत्वादेकं वाक्यमिति न्यायादिति परिहरति। तस्यैवमिति॥ वाक्यस्यानेकार्थत्वाभावेऽपि तदर्थस्य कर्म्मणो बन्धमोक्षाख्यानेकार्थत्वं स्यादित्याशङ्क्याह। न चेति॥ परोक्तं दृष्टान्तं विघटयति। कुल्येति॥ विद्यां चाविद्यां चेत्यादयो मन्त्राः समुच्चयपरा दृष्टाः॥ समुच्चये कर्म्मकाण्डस्य निवृत्तिद्वारा मोक्षार्थत्वमित्यस्मिन्नर्थे सिध्यतीति शङ्कते। यदपीति॥ कर्म्मकाण्डस्योक्तरीत्या मोक्षार्थत्वेनाक्षिप्तप्रमाणमिति परिहरति। अयमेवेति॥ मन्त्राणां समुच्चयपरत्वात्तस्य च यथोक्तार्थाक्षेपकत्वात्ततोऽस्यार्थस्य प्रमाणं गम्यतेत्याशङ्क्याह। मन्त्राः पुनरिति॥ तेषां न समुच्चयपरतेत्यग्रे व्यक्तीभविष्यतीत्यर्थः॥

भा॰ तस्माद्ग्रहातिग्रहलक्षणो मृत्युर्बन्धस्तस्मान्मोक्षो वक्तव्य इत्यत इदमारभ्यते। न च आसीनो विषयसम्बन्धाविवान्तरालेऽवस्थानमर्द्धजरतीयं कौशलं। यत्तु मृत्योरतिमुच्यत इत्युक्त्वा ग्रहातिग्रहावुच्येते तस्यार्थसम्बन्धात्सर्वोऽयं साध्यसाधनलक्षणो बन्धो ग्रहातिग्रहाविनिर्मोकान्निगडे हि निर्ज्ञाते निगडितस्य मोक्षाय यत्नः कर्त्तव्यो भवति। तस्मात्तदर्थेनारम्भः। अथ हैनं ह पप्रच्छ ऐतिह्यार्थः। अथानन्तरमश्वले उपरते प्रकृतं याज्ञवल्क्यं जरत्कारुगोत्रो जारत्कारवः ऋतभागस्यापत्यमार्त्तभागः पप्रच्छ याज्ञव-

---

आ॰ परमतासम्भवे स्वमतमुपसंहरति। तस्मादिति॥ बन्धनिरूपणमनुपयोगीत्याशङ्क्याह। तस्मान्मोक्ष इति॥ यत्तु कर्म्मकाण्डबन्धाय मुक्तये वा न भवति किन्त्वन्तरावस्था न कारणमिति तद्दूषयति। न चेति॥ यथा न जागर्त्ति न स्वपितीति विषयग्रहणच्छिद्रे ऽन्तरालेऽवस्थानं दुर्घटं यथा चार्द्धं कुक्कुट्याः पाकार्थमर्द्धञ्च प्रसवायेति कौशलं नोपलभ्यते। तथा कर्म्मकाण्डं न बन्धाय नापि साक्षान्मोक्षायेति व्याख्यानं कर्त्तुं न जानीम इत्यर्थः॥ यत्तु श्रुतिरेवोत्तरोत्तरपदप्राप्त्यभिधानव्याजेन मोक्षे पुरुषमवतारयतीति तत्राह। यत्त्विति॥ मृत्योरात्मिमतीत्य मुच्यत इत्युक्त्वा यदेतद्ग्रहातिग्रहवचनं तदयं सर्व्वः साध्यसाधनलक्षणो बन्ध इत्यनेनाभिप्रायेणोच्यते। तस्यार्थेन मृत्युपदार्थेनान्वयप्रदर्शनादिति योजना। अर्थसम्बन्धादित्युक्तं स्फुटयति। ग्रहातिग्रहाविनिर्मोकादिति॥ एवं हि श्रुतिर्बन्धमेव प्रतिपादयति न तु मोक्षे पुरुषमवतारयतीति भावः॥ ननु पुरुषस्यापेक्षितो मोक्षः प्रतिपाद्यतां किमित्यनर्थात्मबोधः प्रतिपाद्यते तत्राह। निगडे हीति॥ बन्धज्ञानं विना ततो विश्लेषायोगान्मुमुक्षोः सप्रयोजकबन्धज्ञानार्थत्वेनानन्तरब्राह्मणप्रवृत्तिरित्युपसंहरति। तस्मादिति॥ कति

उ॰ अथ हैनं जारत्कारव आर्तभागः पप्रच्छ याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा इति।

---

भा॰ ल्क्येति होवाचेत्यभिमुखीकरणाय पूर्ववत्प्रश्नः कतिग्रहाः कत्यतिग्रहा इति॥

इतिशब्दो वाक्यपरिसमाप्त्यर्थः। तत्र निर्ज्ञातेषु वा ग्रहातिग्रहेषु प्रश्नः स्यादनिर्ज्ञातेषु वा। यदि तावद्ग्रहा अतिग्रहाश्च निर्ज्ञातास्तदा तद्गतस्यापि गुणस्य सङ्ख्याया निर्ज्ञातत्वात्कति ग्रहाः कत्यतिग्रहा इति सङ्ख्याविषयः प्रश्नो नोपपद्यते। अथानिर्ज्ञातास्तथा सङ्ख्येयविषयप्रश्न इति। के ग्रहाः कति ग्रहा इति प्रष्टव्यं न तु कतिग्रहाः कत्यतिग्रहा इतिप्रश्नः। अपि च निर्ज्ञातसामान्यकेषु विशेषविज्ञानाय प्रश्नो भवति। यथा कतमेऽत्र कठाः कतमेऽत्र कलापा इति। न चात्र ग्रहातिग्रहा

---

आ॰ ग्रहा इत्यादिः प्रथमः सङ्ख्याविषयः प्रश्नः। कतमे त इति द्वितीयः सङ्ख्येयविषय इत्याह। पूर्ववदिति॥

सम्प्रति प्रश्नमाक्षिपति। तत्रेत्यादिना॥ आद्यं प्रश्नमाक्षिप्य द्वितीयमाक्षिपति॥ अपि चेति॥ विशेषतश्च ज्ञातेष्विति च शब्दार्थः। मृत्यतिमुक्तिपदार्थद्वयप्रतियोगिनौ बन्धनाख्यौ ग्रहातिग्रहौ सामान्येन प्राप्तौ। प्रश्नस्तु विशेषबुभुत्सायामिति प्रष्टा चोदयति। ननु चेति॥ तथापि प्रश्नद्वयमनुपपन्नमित्याक्षेप्ता ब्रूते। ननु तत्रेति॥ वाग्वै यज्ञस्य होतेत्यादाविति यावत्। निर्ज्ञातत्वाद्विशेषस्येति शेषः। अतिमोक्षोपदेशेन त्वगादेरपि सूचितत्वात्तेषु चतुष्कस्यानिर्द्धारणादविशेषेण प्रपन्नेषु वागादिषु विशेषबुभुत्सायां सङ्ख्यादिविषयत्वेन प्रश्नस्योपपन्नार्थत्वान्नाक्षेपोपपत्ति-

उ० अष्टौ ग्रहा अष्टावतिग्रहा इति ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ॥ १ ॥

---

भा० नाम पदार्थाः केचन लोके प्रसिद्धाः। येन विशेषार्थः प्रश्नः स्यान्न तु चातिमुच्यत इत्युक्तं। ग्रहगृहीतस्य हि मोक्षः समुक्तिः सातिमुक्तिरिति हि द्विरुक्तं। तस्मात्प्राप्ता ग्रहातिग्रहाश्च। ननु तत्रापि चत्वारो ग्रहा अतिग्रहाश्च निर्ज्ञाता वाक्चक्षुः प्राणमनांसि। तत्र कतीति प्रश्नो नोपपद्यते निर्ज्ञातत्वान्नानवधारणार्थत्वात्। न हि चतुष्टं तत्र विवक्षितमिह तु ग्रहातिग्रहदर्शनेऽष्टत्वगुणविवक्षया कतीति प्रश्न उपपद्यत एव। तस्मात्स मुक्तिः सातिमुक्तिरिति मुक्त्यतिमुक्ती द्विरुक्ते ग्रहातिग्रहा अपि सिद्धाः। अतः कतिसङ्ख्याका ग्रहाः कति वा अतिग्रहा इति पृच्छति। इतर आह। अष्टौ ग्रहा अष्टावतिग्रहा इति। ये तेऽष्टौ ग्रहा अभिहिताः कतमे ते नियमेन ग्रहीतव्या इति तत्राह ॥ १ ॥

---

आ० रिति समाधत्ते। नानवधारणार्थत्वादिति ॥ तदेव स्पष्टयति। न हीति ॥ तत्र पूर्व्वब्राह्मणे वागादिष्विति यावत्। कथितां प्रथमप्रश्नोपपत्तिं कथयति। इह त्विति ॥ ननु ग्रहाणामेव पूर्व्वत्वोपदेशातिदेशाभ्यां प्रतिपन्नत्वात्तेषु विशेषबुभुत्सायां कति ग्रहा इति प्रश्नेऽप्यतिग्रहाणामप्रतिपन्नत्वात्कथं कत्यतिग्रहा इति प्रश्नः स्यादत आह। तस्मादिति ॥ पूर्व्वस्माद्ब्राह्मणादिति यावत्। वागादयो वक्तव्यादयश्च चत्वारो ग्रहाश्चातिग्रहाश्च यद्यपि विशेषतो निर्ज्ञातास्तथाप्यतिदेशप्राप्ताश्चत्वारो विशेषतो न ज्ञायन्ते। तेन तेषु विशेषतो ज्ञानसिद्धये प्रश्न इत्यभिप्रेत्य विशिनष्टि। नियमेनेति ॥ द्वितीये प्रश्ने परिहारमुत्थापयति। तत्राहेति ॥ १ ॥

उ॰ प्राणो वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धं जिघ्रति ॥ २ ॥ वाग्वै ग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ३ ॥ जिह्वा वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान्विजानाति ॥ ४ ॥ चक्षुर्वै ग्रहः स रूपेणातिग्राहेण गृहीतश्चक्षुषा हि

---

भा॰ प्राणो वै ग्रहः प्राण इति घ्राणमुच्यते। प्रकरणाद्वायुसहितः सोऽपानेनेति गन्धेनेत्येतदपानसचिवत्वादपानो गन्ध उच्यते। अपानोपहृतं हि गन्धं। घ्राणेन सर्व्वो लोको जिघ्रति। तदेतदुच्यते अपानेन हि गन्धान् जिघ्रतीति॥ २ ॥ वाग्वै ग्रहो वाचा ह्यध्यात्मपरिच्छिन्नया आसङ्गविषयासद्याऽसत्याऽनृताऽसभ्यबीभत्सादिवचनेषु व्यापृतया गृहीतो लोकोपहृतः तेन वाक् ग्रहः स नाम्नातिग्राहेण

---

आ॰ प्राणशब्दस्य घ्राणविषयत्वे पूर्व्वोत्तरग्रन्थयोर्वागादीनां प्रकृतत्वं हेतुमाह। प्रकरणादिति॥ तस्य गन्धेन गृहीतत्वसिद्ध्यर्थं विशिनष्टि। वायुसहित इति॥ अपानशब्दस्य गन्धविषयत्वे गन्धस्यापानेनाभावं हेतुमाह। अपानेति॥ तत्रैव हेत्वन्तरमाह। अपानोपहृतं हीति॥ अयमाशयोऽन्यापानशब्दार्थः। उक्तेऽर्थे वाक्यं पातयति। तदेतदिति॥ २॥

वाचो ग्रहत्वमुपपादयति। वाचाहीति॥ आसङ्गस्य विषयः शब्दादिरेवास्पदं यस्या वाचस्तयेति विग्रहः। तत्सिद्ध्यर्थमध्यात्मपरिच्छिन्नयेति विशेषणं। असत्यं परपीडाकरं मिथ्यावचनं तदेव स्वदृष्टमात्रविरोध्यनृतं विपरीतं वा आदिपदेनेष्टानिष्टोक्तिग्रहः॥ वाचि प्रकृतायां स नाम्नेति कथमुच्यते तत्राह। वागात्म इति॥ वक्तव्येन वाचो वशीकृतत्वं

उ॰ रूपाणि पश्यति ॥ ५ ॥ श्रोत्रं वै ग्रहः स शब्दे-नातिग्राहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति ॥ ६ ॥ मनो वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान्कामयते ॥ ७ ॥ हस्तौ वै ग्रहः स कर्म्मणातिग्राहेण गृहीतो हस्ताभ्याꣳ हि कर्म्म करोति ॥ ८ ॥ त्वग्वै ग्रहः स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

---

भा॰ गृहीतः स वागाख्यो ग्रहो नाम्ना वक्तव्येन विषयेणाति-ग्रहेणातिग्राहेणेति दैर्घ्यं छान्दसं नाम वक्तव्यार्था हि वाक्। तेन वक्तव्येनार्थेन प्रयुक्ता वाक् तेन वशीकृता तेन तत्कार्य्य-मकृत्वा नैव तस्या मोक्षः। अतो नाम्नातिग्रहेण गृहीता वागित्युच्यते वक्तव्यासङ्गेन हि प्रवृत्ता सर्व्वानर्थैर्युज्यते। समानमन्यदित्येते। त्वक्पर्य्यन्ता अष्टौ ग्रहाः स्पर्शपर्य्यन्ताश्च एतेऽष्टावतिग्रहा इति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

---

आ॰ साधयति। वक्तव्यार्थेति ॥ तादर्थ्येन वचनकरणत्वेनेति यावत् ॥ वचनार्थे वाचो वक्तव्येन वशीकृतत्वे फलितमाह। तेनेति ॥ तत्कार्य्यं वचनं मोक्षस्यासाधारणे देवतात्मनि पर्य्यवसानं वक्तव्यार्थोक्तिं विना वाचो पर्य्यवसाने सिद्धमर्थमाह। अत इति ॥ वाचोऽति-ग्रहगृहीतत्वमनुभवेन साधयति। वक्तव्येति ॥ वाचा हीत्यादेर-पानेन हीत्यादिना तुल्यार्थत्वादव्याख्येयत्वमाह। समानमिति ॥ घ्राणं वाग्जिह्वा चक्षुः श्रोत्रं मनो हस्तौ त्वगित्युक्ता ग्रहानभिगम-यति। इत्येत इति ॥ गन्धो नाम रसो रूपं शब्दः कामः कर्म्म स्पर्श इत्यतिग्रहानभिगमयति। स्पर्शपर्य्यन्ताश्चेति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

उ॰ याज्ञवल्क्येति होवाच यदिदꣳ सर्वं मृत्योरन्नं

---

भा॰ उपसंहृतेषु ग्रहातिग्रहेषु आह । पुनर्याज्ञवल्क्येति होवाच । यदिदं सर्व्वं मृत्योरन्नं सर्व्वं जायते विपद्यते च ग्रहातिग्रहलक्षणेन मृत्युना ग्रस्तं । का स्वित्का नु स्यात् सा देवता यस्या देवताया मृत्युरप्यन्नं भवेन्मृत्युर्यस्योपसेचनमिति श्रुत्यन्तरात् । अयमभिप्रायः प्रष्टुर्यदि मृत्योर्मृत्युं वक्ष्यत्यनवस्था स्यात् । अथ न वक्ष्यत्यस्माद्ग्रहातिग्रहलक्षणान्मृत्योर्मोक्षो नोपपद्यते । ग्रहातिग्रहमृत्युविनाशे हि मोक्षः स्यात् । स यदि मृत्योरपि मृत्युः स्याद्ग्रहातिग्रहलक्षणस्य मृत्योर्विनाशः । अतो दुर्वचनं प्रश्नं मन्वानः पृच्छति । का स्वित्सा देवतेति । अस्ति तावन्मृत्योर्मृत्युः । नन्वनवस्था स्यात् । तस्याप्यन्यो मृत्युरिति नानवस्था । सर्व्वमृत्योर्मृत्यन्तरानुपपत्तेः । कथं पुनरवगम्यतेऽस्ति मृत्योर्मृत्युरिति ।

---

व्या॰ प्रतीकमादाय व्याचष्टे । यदिदमिति ॥ यदिदं व्याकृतं जगत्सर्व्वं मृत्योरन्नमिति योजना ॥ तस्य तदन्नत्वं साधयति । सर्व्वमिति ॥ मृत्योरन्नत्वसम्भावनायां श्रुत्यन्तरं संवादयति । मृत्युरिति ॥ मृत्योर्मृत्युमधिकृत्य प्रश्नस्य करटदन्तनिरूपणवदप्रयोजनत्वमाशङ्क्याह । अयमिति ॥ तत्त्वेव ग्रहातिग्रहलक्षणे मृत्योर्मोक्षो भविष्यतीति चेन्नेत्याह । ग्रहेति ॥ अस्तु तर्हि ग्रहातिग्रहनाशे मुक्तिरित्यत आह । स यदीति ॥ न च मृत्योर्मृत्युरस्त्यनवस्थानादित्युक्तमिति भावः । पक्षेऽनवस्थानात्पक्षे चामुक्तिरित्यतः प्रश्नार्थः ॥ अस्तिपक्षं परिगृह्णाति । अस्ति तावदिति ॥ मृत्योर्मृत्युर्ब्रह्मात्मसाक्षात्कारो विवक्षितस्तस्याप्यन्यो मृत्युरस्ति चेदनवस्था । नास्ति चेत्तज्ज्ञानस्यापि स्थितेरमुक्तिरिति मन्यते ।

उ॰ का स्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति ॥ १० ॥
याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत

---

भा॰ दृष्टत्वादग्निस्तावत्सर्वस्य दृष्टो मृत्युर्विनाशकत्वात् सोऽग्नि-र्भक्ष्यते सोऽग्निरपामन्नं। एवमाप तर्ह्यस्ति मृत्योर्मृत्यु रिति। तेन सर्वं ग्रहातिग्रहजातं भक्ष्यते मृत्योर्मृत्युना। तस्मिन् बन्धने नाशिते मृत्युना भक्षिते संसारान्मोक्ष उपपन्नो भवति। बन्धनं हि ग्रहातिग्रहलक्षणमुक्तं। तस्माच्च मोक्ष उपपद्यत इत्येतत्प्रसाधितं। अतो बन्धमोक्षाय पुरुषप्रयास' सफलो भवत्यतोऽपजयति पुनर्मृत्युं ॥ १० ॥

परेण मृत्युना मृत्यौ परमात्मदर्शनेन योऽसौ मुक्तो विद्वान् सोऽयं पुरुषो यत्र यस्मिन्काले म्रियते उदूर्द्ध्वम-

---

आ॰ गच्छतीति। तत्रास्तिपक्षं परिगृह्य परिहरति। नानवस्थेति। यथोक्तस्य मृत्योः स्वपरविरोधित्वान्न किंचिदवद्यमित्यर्थः। उक्तं पक्षं प्रश्नद्वारा प्रमाणारूढं करोति। कथमिति। दृष्टत्वं स्फुटयति। अग्निस्तावदिति। दृष्टफलमाचष्टे। सर्वाशीति। तस्य कार्यं कथयति। तेनेति। अप पुनर्मृत्युं जयतीत्यस्य पातनिकां करोति। तस्मिन्निति। उक्तमेव व्यक्तीकरोति। बन्धनं हीति। प्रसाधितं मृत्योरपि मृत्युरस्तीति प्रदर्शनेनेति शेषः। मोक्षोपपत्तौ फलित-माह। अत इति। पुरुषप्रयासः श्रमादिपूर्वकश्रवणादितत्फलस्य ज्ञानस्य फलं दर्शयन्वाक्यं योजयति। अत इति। ज्ञानं पञ्चम्यर्थः। सम्यग्ज्ञानस्यापपुनर्मृत्युं जयतीत्युक्तं ॥ १० ॥

पक्षं विशदीकर्तुं प्रश्नान्तरमुत्थापयति। परेणेति। परेण मृत्युना परमात्मदर्शनेनेति सम्बन्धः। ग्रहातिग्रहलक्षणो बन्धः सप्तम्यर्थः। ग्रहशब्देन प्रयोग्यराभिसंधीतः। नामादीनां स्थूलानां

उ॰ उदस्मात्प्राणाः क्रामन्त्याहो३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते ॥ ११ ॥

---

भा॰ स्माद्ब्रह्मविदो म्रियमाणात्प्राणा वागादयो ग्रहाः नामादयश्चातिग्रहा वासनारूपा अन्तस्थाः सम्प्रयोजकाः क्रामन्त्यूर्ध्वं उत्क्रामन्ति। आहोस्विन्नेति नेतीति होवाच याज्ञवल्क्यो नोत्क्रामन्त्यत्रैवास्मिन्नेव परेणात्मना अविभागं गच्छन्ति। विदुषि करणानि स्वयोनौ परब्रह्मतत्त्वे समवनीयन्ते एकीभावेन समवसृज्यन्ते प्रलीयन्त इत्यर्थः। ऊर्मय इव समुद्रे। तथा च श्रुत्यन्तरं कलाशब्दवाच्यानां प्राणानां परस्मिन्नात्मनि प्रलयं दर्शयति। एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं

---

आ॰ वरिष्ठत्वे तत्त्वरसतस्य मुक्तत्वात्कथं तदुत्क्रान्तिः पृच्छ्यते तत्राह। वासनारूपा इति। तेषामनुत्क्रान्तौ मुक्तसम्भवं सूचयति। स प्रयोजका इति। उत्क्रान्तिपक्षे ध्रुवं जन्म मृतस्य चेति न्यायात्पुनरुत्पत्तिःस्यादनुत्क्रान्तिपक्षे मरणप्रसिद्धिर्विरुध्येतेति भावः। द्वितीयं पक्षं परिगृह्य परिहरति। नेति होवाचेत्यादिना। कार्याणि कारणानि वा सर्वाणि परेणात्मना सह विभागं गच्छन्ति सन्त्यस्मिन्नेव विदुषि समवनीयन्त इति सम्बन्धः। तेषां विदुषि विलये हेतुमाह। स्वयोनाविति। विद्वानेव हि पूर्वमविद्यया तेषां योनिरासीत् तस्मिन्विद्यादशायां तद्वशादविद्यायामपनीतायां परिपूर्णे तत्त्वे तेषां पर्यवसानं सम्भवतीत्यर्थः। कारणे कार्याणां प्रविलये दृष्टान्तमाह। ऊर्मय इति। प्राणादीनां कारणसंसर्गाख्यो लयश्चेत्पुनरुत्पत्तिः स्यादित्याशङ्क्य ज्ञाने सत्यज्ञानध्वंसान्नैवमित्यभिप्रेत्याह। तथा चेति। सविषयाणामेकादशे-

उ॰ याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते

---

भा॰ गच्छन्तीति। इति परेणात्मनाऽविभागं गच्छन्तीति दर्शितं। न तर्हि मृतो नहि मृतश्चायं यस्मात् उच्छ्रयत्युच्छूनतां प्रतिपद्यते आध्मायति वाह्येन वायुना पूर्य्यते दृतिवदाध्मातो मृतः शेते निश्चेष्टः। बन्धननाशे मुक्तस्य न कचिद्गमनमिति वाक्यार्थः॥ ११॥

मुक्तस्य किं प्राणा एव समवनीयन्ते आहोस्वित्तत्प्रयोजकमपि सर्व्वं। अथ प्राणा एव न तत्प्रयोजकं सर्व्वं प्रयोजके विद्यमाने पुनः प्राणानां प्रसङ्गः। अथ सर्व्वमेव कामकर्म्मादि ततो मोक्ष उपपद्यत इत्येवमर्थ उत्तरः प्रश्नः। याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमनेन

---

आ॰ क्रियाशिवायवश्च पञ्चेति षोडशकलास्तासां स्वातन्त्र्यमाश्रयान्तरं च वारयति। पुरुषायणा इति॥ तासां निवृत्तिश्च पुरुषव्यतिरेकेण नास्तीति पुरुषं प्राप्येति प्राणास्तेनोत्क्रामन्ति तर्हि मृतो न भवतीति प्रतीतिविरोधं शङ्कित्वा परिहरति। न तर्हीत्यादिना॥ इतिशब्दो भस्त्राविषयः॥ प्रकृतं वाक्यं प्रत्यक्षसिद्धदेहमरणानुवादकमित्यभिप्रेत्याह। बन्धनेति॥ ११॥

प्राणा उत्क्रामन्तीति विशेषणमाश्रित्य प्रश्नान्तरमादत्ते। मुक्तस्येति॥ पक्षद्वयेऽपि प्रयोजनं कथयति। अथेत्यादिना॥ यत्पुनश्चेत्राद्यभूत्तदधुना नाममात्रावशेषमित्युक्तेनावशिष्टं किञ्चिदिति यथावगम्यते तथात्रापि नाममात्रं म्रियमाणं विद्वांसं न जहातीत्युक्तेन किञ्चिदवशिष्टमिति दृष्टिः स्यादिति प्रत्युक्तितात्पर्य्यमाह। सर्व्वमिति॥ यथाश्रुतमर्थमाश्रित्य प्रत्युक्तिं व्याचष्टे। नाममात्रन्त्विति। विदुषो नामनित्यत्वे हेत्वन्तरमुत्तरवाक्यावष्टम्भेन दर्शयति। नित्यं हीति॥ अनन्तशब्दो नाम्नो व्यक्तिप्राचुर्य्ये प्रतिभाति।

उ॰ किमेनं न जहातीति नामेत्यनन्तं वै नामानन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ॥१२॥

याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मन-

---

भा॰ जहातीति आहेतरो नामेति। सर्वं समवनीयत इत्यर्थः। नाममात्रन्तु न लीयते आकृतिसम्बन्धान्नित्यं हि नाम। अनन्तं वै नाम नित्यत्वमेवानन्त्यं नाम्नस्तदानन्त्याधिकृता अनन्ता वै विश्वेदेवा अनन्तमेव स तेन लोकं जयति तन्नामानन्त्याधिकृतान्विश्वान्देवानात्मत्वेनोपेत्य तेनानन्त्यदर्शनेनानन्तमेव लोकं जयति ॥ १२ ॥

ग्रहातिग्रहरूपं बन्धनमुक्तं मृत्युरूपं। तस्य च मृत्योर्मृत्युसद्भावान्मोक्षस्योपपद्यते। स च मोक्षो ग्रहातिग्रहरूपाणामिहैव प्रलयः प्रदीपनिर्वाणवत्। यत्तद्ग्रहातिग्रहाख्यं बन्धनं मृत्युरूपं तस्य यत्प्रयोजकं यत्स्वरूपनिर्द्धारणार्थ-

---

आ॰ कुतो नित्यतेत्याशङ्क्याह। नित्यत्वमेवेति॥ व्यक्तिभेदस्य प्रसिद्धत्वाच्च तदसत्त्वं ब्रह्मविदः स्वदृष्ट्या नामापि न शिष्यते परदृष्ट्या तदवशेषोक्तिः शुको मुक्त इत्यादिव्यपदेशदर्शनादतो नामनित्यत्वं व्यावहारिकमिति भावः। ब्रह्मास्मीति दर्शनेन विश्वेदेवानात्मत्वेनोपगम्यानन्तं लोकं जयतीति सिद्धानुवादो ब्रह्मविद्यां स्तोतुमित्यभिप्रेत्यानन्तरवाक्यमादत्ते। तदानन्त्येति॥ तद्व्याचष्टे। तन्नामानन्त्येति॥ १२॥

यत्रास्येत्यादेस्तात्पर्यं वृत्तानुवादपूर्वकं कथयति। ग्रहातिग्रहरूपमित्यादिना॥ किमेनमित्यादिवाक्यस्य व्याख्यामुक्त्वा यत्रेत्यादेस्तात्पर्यमुक्तं। इदानीं भर्तृप्रपञ्चप्रस्थानमुत्थापयति। अत्रेति॥ किमेनमित्यादाविति यावत्। समुच्चयानुष्ठानाद्वैतयोः सम्प्रयोग-

उ॰ चन्द्रं दिशः श्रोत्रं पृथिवीꣳ शरीरमाकाश-
मात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहि-
तञ्च रेतश्च निधीयते क्वायं तदा पुरुषो भवती-
त्याह—र सोम्य हस्तमार्त्तभागा—वामेवैतस्य वेदि-
ष्यावो न नावेतत् स—जन इति ।

---

भा॰ मिदमारभ्यते। याज्ञवल्क्येति होवाच। अत्र केचिद्वर्णयन्ति
ग्रहातिग्रहस्य सप्रयोजकस्य विनाशेऽपि किल न मुच्यते
नामावशिष्टोऽविद्योषरस्थानीयया स्वात्मप्रभवया पर-
मात्मनः परिच्छिन्नो भोज्याच्च जगतो व्यावृत्त उच्छिन्न-
कामकर्म्मान्तराले व्यवतिष्ठते। तस्य परमात्मैकत्वदर्शनेन
द्वैतदर्शनमपनेतव्यमिति। अतः परं परमात्मदर्शनमारब्ध-
व्यमित्येवमपवर्गाख्यामन्तरालावस्थां परिकल्प्योत्तरग्र-
न्थसम्बन्धं कुर्व्वन्ति।

---

आ॰ तयोर्नाशेऽपि पुंसो मुक्तिर्न चेत्तर्हि तस्य बद्धत्वायोगात्कामसौ
दशामवलम्बतामित्याशङ्क्याह। नामावशिष्ट इति। स्थितेरूषरव-
दवस्थितात्मविद्यया परस्मात्परिच्छिन्नश्चेदात्मा तर्हि बन्धपक्षस्यैव
स्यान्नतु भोज्याज्जगतो व्यावृत्तिरित्याशङ्क्याह। उच्छिन्नेति। सर्व्वस्य
कर्म्मादिफलस्य सूत्रात्मनः समुच्चयासादितस्य भोगादप्राप्त्यर्था-
भावात्कामासिद्धा कर्म्माभावात्प्रयोजकाणामुच्छित्तिरित्यर्थः।
किमेनमित्यादावन्तरावस्थस्य विद्याधिकारिणो निर्द्धारणात्तदपे-
क्षितविद्याशेषत्वेनोपदेशब्राह्मणादेरारम्भं सम्भावयति। तस्येति।
इति शब्दो वर्णयन्तीत्यनेन सम्बध्यते। तर्हि यत्नोपदेशब्राह्मणादौ ब्रह्म-
विद्योच्यते तस्यैवारम्भो युक्तो यत्रास्येत्यादिस्तु कथेत्याशङ्क्य फलव-
द्विद्याप्राप्तिशेषत्वेन निवर्त्यमनुप्रयोजकनिर्द्धारणार्थो यत्नेत्यादि-
रित्यभिप्रेत्याह। एवमिति।

भा॰ तत्र वक्तव्यं विशीर्णेषु करणेषु विदेहस्य परमात्मदर्शनश्रवणमनननिदिध्यासनानि कथमिति। समवनीतप्राणस्य हि नाममात्रावशिष्टस्येति तैरुच्यते मृतः शेत इति युक्तं न मनोरथेनाप्येतदुपपादयितुं शक्यते। अथ जीवन्नेवाविद्यामात्रावशिष्टो भोज्यादपावृत्त इति परिकल्प्यते तत्तु किंनिमित्तमिति वक्तव्यं। समस्तद्वैतैकत्वात्मप्राप्तिनिमित्तमिति यद्युच्यते तत्पूर्व्वमेव निराकृतं कर्म्मसहितेन द्वैतैकत्वात्मदर्शनेन। सम्पन्नो विद्वान्मृतः समवनीतप्राणो जगदात्मत्वं हिरण्यगर्भस्वरूपं वा प्राप्नुयादसमवनीतप्राणो भोज्याज्जीवन्नेव वा व्यावृत्तो विरक्तः परमात्मदर्शनाभिमुखः स्यात्। न चोभयमेकप्रयत्ननिष्पाद्येन साधनेन लभ्यं

---

आ॰ हिरण्यगर्भादन्यो वाऽन्योवा विद्याधिकारी प्रथमेऽपि मृतस्य जीवतो वा विद्याधिकारो विवक्षितस्तयेति पृच्छति। तत्रेति॥ तत्राद्यमाक्षिपति। विशीर्णेष्विति॥ आक्षेपं स्फुटयितुं तदीयां मुक्तिमनुवदति। समवनीतेति॥ नाममात्रावशिष्टस्याधिकारो विद्यायामिति शेषः। समवनीतप्राणस्येत्यत्र श्रुतिं संवादयति। मृत इति॥ कथमेतावता यथोक्ताक्षेपसिद्धिस्तत्राह। न मनोरथेनेति॥ उपसंहृतप्राणस्य श्रवणाद्यधिकारित्वमेतच्छब्दार्थः॥ द्वितीयं शङ्कते। अथेति॥ अपावृत्तो वृत्ताधिकारीति शेषः। जीवतो भोग्याद्व्यावर्त्तनं सम्यग्धियं विना दुःशकमिति मत्वा पृच्छति। तत्त्विति। अप्राप्ते कामो भवति प्राप्ते निवर्त्तत इति प्रसिद्धे अपरविद्यया कर्म्मसमुच्चितया हैरण्यगर्भपदप्राप्तिरेव निवृत्तिकारणमिति शङ्कते। समस्तेति॥ अपरविद्यासमुच्चितं कर्म्म हैरण्यगर्भभोगप्रापकं न भोग्यान्निवृत्तिसाधनमिति तृतीये व्युत्पादितमिति परिहरति। तत्पूर्व्वमेवेति॥ उक्तमेव व्यक्तीकुर्व्वन् विभजते। कर्म्मसहितेनेति॥ यथैकमेव समुच्चितं कर्म्मोभयार्थं किं न स्यादत आह। नचेति॥

उ॰ तौ होत्क्रम्य मन्त्रयाञ्चक्राते तौ ह यदूचतुः कर्म्म

भा॰ हिरण्यगर्भप्राप्तिसाधनं चेत्। ततो व्यावृत्तिसाधनं परमात्माभिमुखीकरणस्य मोक्षाय्यावृत्तेः। साधनत्वेन हिरण्यगर्भप्राप्तिसाधनं। न हि यद्गतिसाधनं तद्गतिनिवृत्तेरपि। अथ मृत्वा हिरण्यगर्भं प्राप्य ततः समवनीतप्राणो नामावशिष्टः परमात्मज्ञानेऽधिक्रियते। ततोऽस्मदाद्यर्थं परमात्मज्ञानोपदेशोऽनर्थकः स्यात्। सर्व्वेषां हि ब्रह्मविद्या पुरुषार्थायोपदिश्यते तद्यो यो देवानामित्याद्यया श्रुत्या। तस्मादत्यन्तनिकृष्टा शास्त्रवाह्यैवेयं कल्पना। प्रकृतं वर्त्तयिष्यामः॥

तत्र केन प्रयुक्तं ग्रहातिग्रहलक्षणं बन्धनमित्येतन्निर्द्धारयिषयाह। यत्रास्य पुरुषस्य असम्यग्दर्शिनः शिरः

आ॰ उभयथार्थत्वाभावं समर्थयते। हिरण्यगर्भेत्यादिना॥ समुच्चितं कर्म्म नोभयार्थमित्यत्र दृष्टान्तमाह। न हीति॥ हिरण्यगर्भो विद्याधिकारीति पक्षं निक्षिपति। अथेति दूषयति। तत इति॥ ननु महानुभावानामस्मदादिभिन्नानामेव ब्रह्मविद्योपदिश्यमाना मोक्षं फलयति। नास्माकमित्याशङ्क्याह। सर्व्वेषामिति॥ न च त्वन्मतेऽपि यद्द्वारा श्रवणादि कृत्वा विद्योदयस्तद्द्वारैव चिदात्मनो मुक्तिसिद्धौ कृतमित्यत्र श्रवणादिनेति वाच्यं। द्वारभेदस्यानुष्ठातृविभागाधीनप्रवृत्तिप्रयुक्तप्रयोजनं चेत् विद्योदयस्य च काल्पनिकत्वेन यथाप्रतीति व्यवस्थोपपत्तेः। वस्तुतो निर्विशेषे चिन्मात्रेऽविद्याविद्ये बन्धमुक्ती चेत्यभिप्रेत्यापरपक्षनिराकरणमुपसंहृत्य श्रुतिव्याख्यानं प्रस्तौति। तस्मादिति॥

वार्त्तव्ये श्रुतिव्याख्याने यत्रेत्याद्याकाङ्क्षापूर्व्वकमवतारयति। तत्रेति॥ तत्र पुरुषशब्देन विद्वानुक्तो ऽनन्तरं तत्सन्निधिरित्याशङ्क्य वक्ष्यमाणकर्म्माश्रयत्वलिङ्गेन वाच्यः सन्निधिरित्यभिप्रेत्याह। अस-

उ॰ हैव तदूचतुरथ यत्प्रशशꣳसतुः कर्म्म हैव तत्प्रशशꣳसतुः पुण्यो वै पुण्येन कर्म्मणा भवति

---

भा॰ पाण्यादिमतो मृतस्य वागग्निमप्येति। वातं प्राणोऽप्येति चक्षुरादित्यमप्येति। इति सर्व्वत्र सम्बध्यते। मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मेत्यत्रात्माधिष्ठानं हृदयाकाशमुच्यते। स आकाशमप्येति ओषधीरपि यन्ति लोमानि वनस्पतीनपि यन्ति केशा अप्सु लोहितं रेतश्च निधीयत इति। पुनरादानलिङ्गं सर्व्वत्र हि वागादिशब्देन देवताः परिगृह्यन्ते। न तु करणान्येवापक्रामन्ति प्राङ्मोक्षात्। तत्र देवताभिरनधिष्ठितानि करणानि न्यस्तदात्रोपमानानि। विदेहश्च कर्त्ता पुरुषोऽस्वतन्त्रः किमाश्रितो भवतीति पृच्छ्यते। क्वायं तदा पुरुषो भवतीति। किमाश्रितस्तदा पुरुषो भवतीति। यमाश्रयमाश्रित्य पुनः कार्य्यकरणसङ्घातमुपादत्ते। येन ग्रहातिग्रहलक्षणबन्धनं प्रयुज्यते।

---

आ॰ व्यग्रदर्शिन इति। सन्निधिबाधे लिङ्गान्तरमाह। निधीयत इति। तस्य हि पुनरादानयोग्यत्वनिधाने प्रयोगदर्शनादिहापि पुनरादानं लोहितादेराभात्यतः प्रसिद्धसंसारिगोचर एवायं प्रश्न इत्यर्थः। अविदुषो वागादिलयाभावाद्वा मनसि दर्शनादिन्यायात्तस्य चात्र श्रुतेर्विद्वानेव पुरुषस्तदीयकथाविषयस्य श्रुतिप्रसिद्धत्वादित्याशङ्क्याह। सर्व्वत्र हीति। अन्यार्थशब्दानां वागादिशब्दितानामपक्रमणेऽपि करणानां तदभावे तदधिष्ठानस्य देहस्यापि भावेन भोगसम्भवान्न प्रश्नावकाशोऽस्तीत्याशङ्क्याह। तत्रेति। देवतांशेषूपसंहृतेष्विति यावत्। तेषां ताभिरनधिष्ठितत्वे स्वकार्य्यक्रियाक्षमत्वं भवतीत्याह। कर्त्तेति। करणानामधिष्ठातृहीनानां

उ॰ पापः पापेनेति ततो ह जारत्कारव आर्त्तभाग उपरराम ॥ १३ ॥ इति बृहदारण्यके पञ्चमे प्रपाठके द्वितीयं ब्राह्मणं ॥

---

भा॰ तत्किमिति प्रश्नः । अत्रोच्यते । स्वभावयदृच्छाकालकर्म्म-दैवविज्ञानमात्रशून्यानि वादिभिः परिकल्पितानि । अतोऽनेकविप्रतिपत्तिस्थानत्वान्नैवं जल्पन्यायेन वस्तुनिर्णयः । अत्र वस्तुनिर्णयञ्चेदिच्छसि आहर सोम्य हस्तमार्त्तभाग हे आवामेवैतस्य त्वत्पृष्टस्य वेदितव्यं यत्तद्वेदिष्यावो निरूपयिष्यावः । कस्मान्न नौ आवयोरेतद्वस्तु सजने जनसमुदाये निर्णेतुं न शक्यते । अत एकान्तङ्गमिष्यावो विचारणाय । तौ हेत्यादिश्रुतिवचनं तौ याज्ञवल्क्यार्त्तभागावेकान्तं गत्वा किञ्चक्रतुरित्युच्यते । तौ ह उत्क्रम्य सजनाद्देशात्मन्त्रयाञ्चक्राते । आदौ लौकिकवादिपक्षाणामेकैकं परिगृह्य विचारितवन्तौ । तौ ह विचार्य्य यदूचतुरपोह्य पूर्व्वपक्षान्सर्व्वानेतच्छृणु । कर्म्म हैवाश्रयं पुनः पुनः कार्य्यकरणोपादानहेतुं तत्तत्रोचतुरुक्तवन्तौ । न केवलं कालकर्म्म दैवेश्वरेष्वभ्युपगतेषु हेतुषु यत्प्रशशंसतुस्तौ कर्म्म

---

आ॰ भोगहेतुत्वाभावेऽपि कथमाश्रयप्रश्नो भोक्तुः स्यादित्याशङ्क्याह । विदेहस्येति ॥ प्रश्नं विवृणोति । यमाश्रयमिति ॥ आह रेत्यादि परिहारमवतारयति । अत्रेति ॥ मीमांसका लोकायता ज्योतिर्विदो वैदिका देवताकाङ्क्षिणो विज्ञानवादिनो माध्यमिकाश्चेत्यनेके विप्रतिपत्तारो जल्पन्यायेन परस्परप्रचलितमात्रपर्य्यन्तेन विचारेणेति यावत् । अत्रेति प्रश्नोक्तिः । ननु प्रष्टाऽऽर्त्तभागो याज्ञवल्क्यश्च

भा॰ हैव तत्प्रशशंसतुः। यस्मान्निर्द्धारितमेतत्कर्म्म प्रयुक्तं गृह्णाति-ग्रहादिकार्य्यकरणोपादानं पुनः पुनः। तस्मात्पुण्यो वै शास्त्रविहितेन पुण्येन कर्म्मणा भवति। तद्विपरीतेन विपरीतो भवति। पापः पापेनेत्येवं याज्ञवल्क्येन प्रश्नेषु निर्णीतेषु ततोऽशक्यप्रकम्प्यत्वाद्याज्ञवल्क्यस्य ह जारत्कारव आर्त्तभाग उपरराम॥१३॥ इति श्रीमद्बृहदारण्यके पञ्चमे प्रपाठके द्वितीयब्राह्मणभाष्यं॥

अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ। गृहातिग्रहलक्षणं बन्धनमुक्तं। यस्मात्सप्रयोजकान्मुक्तो मुच्यते। येन वा बद्धः संसरति स मृत्युः। तस्माच्च मोक्ष उपपद्यते। यस्मान्मृत्योर्मृत्युरस्ति। मुक्तस्य च न गतिः क्वचित्। सर्व्वोत्सादो नाममात्रावशेषः प्रदीपनिर्वाणवदिति चावधृतं। तत्र संसरतां

---

आ॰ प्रतिवक्तेति द्वाविशेषलब्धेते। तथाच तौ हेत्यादिवचनमयुक्तं तृतीयस्यात्राभावादत आह। तौ हेत्यादीति॥ तत्रेत्येकान्ते स्थित्वा विचारावस्थायामिति यावत्। न केवलं कर्म्मकारणमूचतुः किन्तु तदेव कालादिषु हेतुष्वभ्युपगतेषु सत्सु प्रशशंसतुः। अतः प्रशंसावचनात्कर्म्मणः प्राधान्यं गम्यते। न तु कालादीनामहेतुत्वं। तेषां स्वरूपनिष्पत्तौ कारकतया गुणभावदर्शनात्फलकालेऽपि तत्प्राधान्येनैव तद्धेतुत्वसम्भवादित्याह। न केवलमिति॥ पुण्यो वै पुण्येनेत्यादि व्याचष्टे। यस्मादित्यादिना॥१३॥ आर्त्तभागब्राह्मणं द्वितीयं॥०॥

ब्राह्मणान्तरमवतार्य्य वृत्तं कीर्त्तयति। अथेत्यादिना॥ उक्तमेव तस्य मृत्युत्वं व्यक्तीकरोति। यस्मादिति॥ अग्निर्वै मृत्युरित्यादावुक्तं स्मारयति। तस्मादिति॥ यत्रायमित्यादावुक्तमनुद्रवति। मुक्तस्य चेति॥ यत्रास्येत्यादौ निर्णीतमनुभाषते। तत्रेति॥ पूर्व्वब्राह्मणस्थो ग्रन्थः सप्तम्यर्थः। तस्य चावधारितमित्यनेन सम्बन्धः। संसरतां मुच्यमानानाञ्च यानि कार्य्यकरणानि तेषामिति वैयधिक-

भा॰ मुच्यमानानाञ्च कार्य्यकरणानां स्वकारणसंसर्गे समाने मुक्तानामत्यन्तमेव पुनरनुपादानं। संसरतान्तु पुनः पुनरुपादानं येन प्रयुक्तानां भवति तत्कर्म्मेत्यवधारितं विचारणपूर्व्वकं। तत्क्षये च नामावशेषेण सर्व्वोपसंहारो मोक्षस्तच्च पुण्यपापाख्यं कर्म्म। पुण्यो वै पुण्येन कर्म्मणा भवति पापः पापेनेत्यवधारितत्वादेतत्कृतः संसारः। तत्रापुण्येन स्थावरजङ्गमेषु स्वभावदुःखबहुलेषु नरकतिर्य्यक्प्रेतादिषु च दुःखमनुभवति। पुनः पुनर्जायमानो म्रियमाणश्चेत्येतद्राजवर्त्मवत्सर्व्वलोकप्रसिद्धं। यत्तु शास्त्रीयः पुण्यो वै पुण्येन कर्म्मणा भवति तत्रैवादरः क्रियते। इह श्रुत्या पुण्यमेव च कर्म्म सर्व्वपुरुषार्थसाधनमिति सर्व्वे श्रुतिस्मृतिवादाः।

---

आ॰ एवमुपादानमनुपादानमित्युभयञ्च कार्य्यकरणानामिति सम्बन्धः। कर्म्मणो भावाभावाभ्यां बन्धमोक्षावुक्तौ ॥ तदभावद्वारा कर्म्मणो मोक्षहेतुत्वं स्फुटयति। तत्क्षये चेति ॥ तस्य भावद्वारा बन्धहेतुत्वं प्रकटयति। तच्चेति ॥ पुण्यपापयोरुभयोरपि संसारफलत्वाविशेषात्पुण्यफलवत्पापफलमित्यत्र वक्तव्यं। अन्यथा ततो विरागायोगादित्याशङ्क्य वर्त्तिष्यमाणस्य तात्पर्य्यं वक्तुं भूमिकां करोति। तत्रेति। पुण्येष्वपुण्येषु च निर्द्धारणार्थां सप्तमी। स्वभावदुःखबहुलेष्वित्युभयतः सम्बध्यते। तर्हि पुण्यफलमपि सर्व्वलोकप्रसिद्धत्वान्नात्र वक्तव्यमित्याशङ्क्याह। यत्त्विति ॥ शास्त्रीयः सुखानुभव इति शेषः। इहेति शास्त्रयोक्तिः। शास्त्रीयं कर्म्म सर्व्वमपि संसारफलमेवेति वक्तुं शक्यमिति। उक्ताशङ्कोत्तरत्वेनापि तदवतारयति। पुण्यमेवेत्यादिना। मोक्षस्य पुण्यसाध्यत्वं विधान्तरैः साधयति। यावद्यावदिति। कथं तस्यानिवर्त्तनमित्याशङ्क्याह। ज्ञानसहितस्येति। समुच्चितमपि कर्म्म संसारफलमेवेत्यत्र हेतुमाह। आत्मेति। मोक्षेऽपि स्वर्गादाविव पुरुषार्थत्वाविशेषात्

भा॰ मोक्षस्यापि पुरुषार्थत्वात्तत्साध्यता प्राप्ता। यावद्यावत्पुण्यो-
त्कर्षस्तावत्तावत्फलोत्कर्षप्राप्तिः। तस्मादुत्तमेन पुण्योत्कर्षेण
मोक्षो भविष्यतीत्याशङ्का स्यात्। सा निवर्त्तयितव्या। ज्ञान-
सहितस्य च प्रकृष्टस्य कर्म्मण एतावती गतिः। व्याकृतनाम-
रूपास्पदत्वात्कर्म्मणस्तत्फलस्य च। न त्वकार्य्ये नित्येऽव्या-
कृतधर्म्मिण्यनामरूपात्मके क्रियाकारकफलस्वभाववर्जिते
कर्म्मणो व्यापारोऽस्ति। यत्र च व्यापारः संसार एवे-
त्यस्यार्थस्य प्रदर्शनाय ब्राह्मणमारभ्यते। यत्तु कैश्चिदुच्यते।
विद्यासहितं कर्म्म निरभिसन्धि विषदध्यादिवत्कार्य्यान्तर-
मारभत इति। तन्न। अनारभ्यत्वान्मोक्षस्य। बन्धननाश
एव हि मोक्षो न कार्य्यभूतः। बन्धनञ्चाविद्येत्यवोचाम।

---

टी॰ कर्म्मणो व्यापारः स्यादित्याशङ्क्याह। न त्विति। अकार्य्यत्वमुत्पत्ति-
हीनत्वं नित्यत्वं। नाशशून्यत्वं अव्याकृतधर्म्मित्वं व्याकृतनामरूप-
राहित्यं। अशब्दमस्पर्शमित्यादिश्रुतिमाश्रित्याह। अनामेति।
निष्कलं निष्क्रियमित्यादि श्रुतिमाश्रित्याह। क्रियेति। चतुर्विध-
क्रियाफलविलक्षणे मोक्षे कर्म्मणो व्यापारो न सम्भवतीति भावः।
नन्वाख्यायिकया च प्रजापतेः सर्व्वकर्म्मव्यापारात्कथं मोक्षे प्रजा-
पतिभावलक्षणे तद्व्यापारो नास्ति तत्राह। यत्र चेति। कर्म्मफलस्य
सर्व्वसंसारत्वमेवेति कुतः सिद्ध्यति। तत्राह। इत्यस्येति। विद्यास-
हितमपि कर्म्म संसारफलं विद्यैव मोक्षार्थेति स्वपक्षदार्ढ्यार्थं विचा-
रयन् पूर्व्वपक्षयति। यत्त्विति। यथा केवलं विषदध्यादिमरणज्वरा-
दिकरमपि मन्त्रशर्करादियुक्तं जीवनपुष्ट्याद्यारभते तथा स्वतो
बन्धफलमपि कर्म्मफलाभिलाषमन्तरेणानुष्ठितं विद्यासमुच्चितं
मोक्षाय क्षममित्यर्थः। मुक्तेः साध्यत्वाङ्गीकारे समुच्चितकर्म्मसा-
ध्यत्वं स्यान्न तु तस्यासाध्यत्वं धीमात्रायत्तत्वादित्युत्तरमाह। तन्नेति।
हेतुमेव साधयति। बन्धनेति। किन्तद्बन्धनं तदाह। बन्धनञ्चेति।

भा॰ अविद्यायाश्च न कर्म्मणा नाश उपपद्यते। दृष्टविषयत्वाच्च कर्म्मसामर्थ्यस्य। उत्पत्त्याप्तिविकारसंस्कारा हि कर्म्मसामर्थ्यस्य विषय उत्पादयितुं प्रापयितुं विकर्त्तुं संस्कर्त्तुं च सामर्थ्यं कर्म्मणो नातो व्यतिरिक्तविषयोऽस्ति कर्म्मसामर्थ्यस्य। लोकेऽप्रसिद्धत्वात्। न च मोक्ष एषां पदार्थानामन्यतमोऽविद्यामात्रव्यवहित इत्यवोचाम। बाढं। भवतु केवलस्यैव कर्म्मण एवं स्वभावः। अतो विद्यासंयुक्तस्य तु निरभिसन्धेर्भवत्यन्यथा स्वभावः। दृष्टं ह्यन्यशक्तित्वेन निर्ज्ञा-

---

आ॰ अविद्यानाशोऽपि कर्म्मारभ्यो भविष्यतीति चेन्नेत्याह। अविद्यायाश्चेति॥ मोक्षो न कर्म्मसाध्योऽविद्यास्तमयत्वाद्रज्जुविद्यास्तमयवदित्यर्थः। तत्रैव हेत्वन्तरमाह। दृष्टविषयत्वाच्चेति॥ न कर्म्मसाध्या मुक्तिरिति शेषः। तदेव स्पष्टयति। उत्पत्तीति॥ उक्तमेव कर्म्मसामर्थ्यविषयमन्वयव्यतिरेकाभ्यां साधयति। उत्पादयितुमिति॥ अप्रसिद्धत्वादिति छेदः॥ उत्पत्त्यादीनामन्यतमत्वान्मोक्षस्यापि कर्म्मसामर्थ्यविषयता स्यादिति चेन्नेत्याह। न चेति॥ नित्यत्वादात्मत्वात्कूटस्थत्वान्नित्यशुद्धत्वान्निर्गुणत्वाच्चेत्यर्थः॥ आत्मभूतो यथोक्तो मोक्षस्तर्हि किमिति सर्व्वेषां न प्रथत इत्याशङ्क्याह। अविद्येति॥ उक्तकर्म्मसामर्थ्यं पूर्व्ववाद्यङ्गीकरोति। बाढमिति॥ अङ्गीकारमेव स्फोरयति। भवत्विति॥ एवं स्वभावत उत्पादनादौ समर्थता का तर्हि विप्रतिपत्तिस्तत्राह॥ विद्यासंयुक्तस्येति॥ अन्यथा स्वभावश्चतुर्विधे क्रियाफले विलक्षणेऽपि मोक्षे समर्थतेति यावत्॥ उत्पत्त्यादौ समर्थस्य कर्म्मणो विद्यासंयुक्तस्य तद्विलक्षणेऽपि मोक्षे सामर्थ्यमस्तीत्यत्र दृष्टान्तमाह। दृष्टं हीति॥ उक्तदृष्टान्तवशात्कर्म्मणोऽपि केवलस्य संसारफलस्य विद्यासंयोगान्मुक्तिफलत्वमपि स्यादित्याह। तथेति॥ समाधत्ते। नेत्यादिना॥ अतीन्द्रियत्वात्कर्म्मणो मुक्तिसाधनत्वे प्रत्यक्षाद्यसम्भवेऽप्यर्थापत्तिरस्तीति शङ्कते। नन्विति॥ नित्येषु कर्म्मसु मोक्षातिरिक्तस्य फलस्य श्रुतस्याभावे सति तदुपलभ्यमानचोदनाया मोक्षफलत्वं विना

भा॰ तासामपि पदार्थानां विषदध्यादीनां विद्यामन्त्रसंस्का-
राद्दिसंयुक्तानामन्यविषये सामर्थ्यं। तथा कर्मणोऽप्य-
स्तीति चेन्न। प्रमाणाभावात्। तत्र हि कर्मण उक्तविषय-
व्यतिरेकेण विषयान्तरे सामर्थ्यास्तित्वे प्रमाणं न प्रत्यक्षं
नानुमानं नोपमानं नार्थापत्तिर्न शब्दोऽस्ति। ननु फला-
न्तराभावे चोदनान्यथानुपपत्तिः प्रमाणमिति। न हि
नित्यानां कर्मणां विश्वजिन्न्यायेन फलं कल्प्यते। नापि
श्रुतं फलमस्ति।

चोद्यन्ते च तानि पारिशेष्यान्मोक्षस्तेषां फलमिति
गम्यते। अन्यथा हि पुरुषा न प्रवर्त्तेरन्। ननु विश्वजिन्न्याय-
एवायातो मोक्षस्य फलस्य कल्पितत्वान्मोक्षे चान्यस्मिन्वा
फलेऽकल्पिते पुरुषा न प्रवर्त्तेरन्निति मोक्षः फलं कल्प्यते।

---

व्या॰ उपपत्तिस्तेषां तत्साधनत्वे मानमित्यर्थः॥ ननु विश्वजिता यजे-
तेत्यत्र यागकर्त्तव्यतारूपो नियोगोऽवगम्यते। तस्य नियोज्यसापे-
क्षत्वात् स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वादिति न्यायेन स्वर्गकामो
नियोज्योऽङ्गीकृतस्तथा नित्येष्वपि कर्मसु भविष्यति स्वर्गो नियो-
ज्यविशेषणमत आह। न हीति॥ जीवन् जुहुयादिति जीवन-
विशिष्टस्य नियोज्यस्य लाभान्न नित्येषु स्वर्गो नियोज्यविशेषण-
मित्यर्थः॥ ननु जीवनविशिष्टोऽपि फलाभावेन नियोज्यः स्यात्तथा
च कर्मणा पितृलोक इति श्रुतं फलं तेषु कल्पयिष्यते नेत्याह।
नापीति॥

नित्यविधिप्रकरणे पितृलोकवाक्यस्याश्रवणादित्यर्थः॥ तर्हि
फलाभावाच्चोदनैव माभूदिति चेन्नेत्याह। चोद्यन्ते चेति॥ तथापि
फलान्तरं कल्प्यतामित्याशङ्क्य कल्पकाभावान्नैवमित्यभिप्रेत्याह।
पारिशेष्यादिति॥ मुक्तेर्यत्कल्पकं तदेव फलान्तरस्यापि किं
न स्यादित्याशङ्क्य तस्य निरतिशयफलविषयत्वान्मुक्तिकल्पक-

भा॰ श्रुतार्थापत्त्या यथा विश्वजिति । नन्वेवं सति कथमुच्यते विश्वजिन्न्यायो न भवतीति । फलं कल्प्यते च । विश्वजिन्न्यायश्च न भवतीति विप्रतिषिद्धमभिधीयते । मोक्षः फलमेव न भवतीति चेन्न । प्रतिज्ञाहानात्कर्म्म कार्य्यान्तरं विषद्ध्यादिवदारभत इति हि प्रतिज्ञातं । स चेन्मोक्षः कर्म्मणः कार्य्यं फलमेव न भवति सा प्रतिज्ञा हीयेत । कर्म्मकार्य्यत्वे च मोक्षस्य स्वर्गादिफलेभ्यो विशेषो वक्तव्यः । अथ कर्म्म कार्य्यं न भवति नित्यानां कर्म्मणां फलं मोक्ष इत्यस्या वचनव्यक्तेः कोऽर्थ इति वक्तव्यं । न च कार्य्यफलशब्दभेदमात्रेण विशेषः शक्यः कल्पयितुं । अफलश्च मोक्षो नित्यैश्च कर्म्मभिः क्रियते । नित्यानां कर्म्मणां

---

आ॰ मेवेत्यभिप्रेत्याह । अन्यथेति । अनुपपत्त्या चेन्नियोज्याभाव नित्येषु फलं कल्प्यते । कथं तर्हि विश्वजिन्न्यायो न प्राप्नोतीति सिद्धान्ती प्रत्याह । नन्विति । उक्तमेव विवृणोति । मोक्षे चेति । अकल्पिते सतीति छेदः । श्रुतार्थापत्त्या विधेः श्रुतस्य प्रवर्त्तकानुपपत्त्येति यावत् । विश्वजितीव नित्येषु मोक्षे फले कल्प्यमाने सति फलितमाह । नन्वेवमिति । कथमित्युक्तामनुपपत्तिमेव स्फुटयति । फलञ्चेति । फलकल्पनायां विश्वजिन्न्यायोऽवतरति मोक्षस्तु स्वरूपस्थितित्वेनानुत्पाद्यत्वात् । फलमेव न भवतीति शङ्कते । मोक्ष इति । नियमशङ्कावयमुत्तरमाह । नेति । प्रतिज्ञाहानिं प्रकटयति । कर्म्मेत्यादिना । कर्म्मकार्य्यत्वं मुक्तेरपेत्योक्तं । तदेवायुक्तमित्याह । कर्म्मकार्य्यत्वे चेति । फलत्वेऽपि कर्म्मकार्य्यत्वं न मुक्तेरस्तीत्युक्तं दोषं परिहर्त्तुं चोदयति । अथेति । प्रतिज्ञाविरोधेन प्रतिविधत्ते । नित्यानामिति । फलत्वमङ्गीकृत्य कार्य्यत्वेनाङ्गीकृते कथं व्याघात इत्याशङ्क्याह । न चेति । विशेषार्थमत इति शेषफलत्वमङ्गीकृत्य कार्य्यत्वानङ्गीकारे व्याघातमुक्त्वा वैपरीत्येऽपि तद्ध-

भा॰ फलं न कार्य्यमिति चेथोऽर्थो * विप्रतिषिद्धोऽभिधीयते यथाग्निः शीत इति। विज्ञानवदिति चेद्यथा ज्ञानस्य कार्य्यं मोक्षो ज्ञानेनाक्रियमाणोऽप्युच्यते तद्वत्कर्म्मकार्य्यत्वमिति चेन्न। अज्ञाननिवर्त्तकत्वात् ज्ञानस्य। अज्ञानव्यवधाननिवर्त्तकत्वाज्ज्ञानस्य। मोक्षो ज्ञानस्य कार्य्यमित्युपचर्य्यते। न तु कर्म्मणा निवर्त्तयितव्यमज्ञानं। न चाज्ञानव्यतिरेकेण मोक्षस्य व्यवधानान्तरं कल्पयितुं शक्यं। नित्यत्वान्मोक्षस्य साधकस्वरूपाव्यतिरेकाच्च। यत्कर्म्मणा निवर्त्येत। अज्ञानमेव निवर्त्तयतीति चेन्न। विलक्षणत्वात्। अनभिव्यक्तिरज्ञानमभिव्यक्तिलक्षणेन ज्ञानेन विरुध्यते। कर्म्म तु नाज्ञानेन विरुध्यते। तेन ज्ञानविलक्षणं कर्म्म। यदि ज्ञानाभावो यदि

---

आ॰ त्पादयति। अथवचेति॥ आद्यं व्याघातं दृष्टान्तेन स्पष्टयति। निग्राबामिति॥ दृष्टान्तेन व्याघातं परिहरन्नाशङ्कते ज्ञानवदिति। चेदिति॥ तदेव स्फुटयति। यथेति॥ दृष्टान्तं विघटयति। नेति॥ ज्ञानस्य मोक्षस्य व्यवधिभूताज्ञाननिवर्त्तकत्वान्मोक्षः। तेनाक्रियमाणोऽपि तत्कार्य्यमिति व्यपदेशभाग्भवतीत्यर्थः॥ तदेव स्फुटयति। अज्ञानेति॥ दार्ष्टान्तिकं निराचष्टे। न त्विति॥ यत्कर्म्मणा निवर्त्येत तन्मोक्षस्य व्यवधानान्तरं कल्पयितुं न तु शक्यमिति सम्बन्धः व्यवधानध्वंसे कर्म्मणः प्रवेशोऽपि मुक्तावेव तत्प्रवेशः स्यादिति चेन्नेत्याह। नित्यत्वादिति॥

नित्यकर्म्मनिवर्त्यं व्यवधानान्तरं माभूदज्ञानमेव तन्निवर्त्यं भविष्यति। तथा च मोक्षस्य कर्म्मकार्य्यत्वं शक्यमुपचरितुमिति शङ्कते। अज्ञानमेवेति॥ कर्म्मणो ज्ञानादिलक्षणत्वान्नाज्ञाननिवर्त्तकत्वमित्युत्तरमाह। न विलक्षणत्वादिति॥ वैलक्षण्यमेव

---

* शेषोऽर्थ इति पाठान्तरः।

भा॰ संशयज्ञानं यदि विपरीतज्ञानं वोच्यतेऽज्ञानमिति सर्वं
हि तज्ज्ञानेनैव निवर्त्यते। न तु कर्म्मणान्यतमेनापि
विरोधाभावात्। अथादृष्टं कर्म्मणामज्ञाननिवर्त्तकत्वं कल्प्य-
मिति चेन्न। ज्ञानेनाज्ञाननिवृत्तौ गम्यमानायामदृष्टनिवृ-
त्तिकल्पनानुपपत्तेः। यथावघातेन व्रीहीणान्तुषनिवृत्तौ
गम्यमानायामग्निहोत्रादिनित्यकर्म्मकार्य्यो न कल्प्यते तुष-
निवृत्तिः। तद्वदज्ञाननिवृत्तिरपि नित्यकर्म्मकार्य्याऽदृष्टा न
कल्प्यते। ज्ञानेन विरुद्धत्वञ्चासकृत्कर्म्मणामवोचाम। यद-
विरुद्धं ज्ञानं कर्म्मभिस्तदेव लोकप्राप्तिनिमित्तमित्युक्तं।
विद्यया देवलोक इति श्रुतेः। किञ्चान्यत्कल्पे च फले

---

आ॰ प्रकटयति। अनभिव्यक्तिरिति॥ इतश्च ज्ञाननिवर्त्यमेवाज्ञानमि-
त्याह। यदीति॥ अन्यतमेन नित्यादिना व्यस्तेन समस्तेन वा श्रौतेन
स्मार्त्तेन चेत्यर्थः। कर्म्माज्ञानयोरविरोधो हेत्वर्थः। अज्ञाननिवर्त्त-
कत्वं कर्म्मणो नान्वयव्यतिरेकसिद्धं। किन्त्वदृष्टमेव कल्प्यमिति
शङ्कते। अथेति॥ दृष्टे सत्यदृष्टकल्पना न न्याय्येति परिहरति। न
ज्ञानेनेति॥ उक्तमर्थं दृष्टान्तेन बुद्धावारोपयति। यथेत्यादिना॥
अदृष्टेति छेदः॥ अस्तु ज्ञानादज्ञानध्वस्तिः किन्तु कर्म्मसमुच्चिता-
दित्याशङ्क्याह। ज्ञानेनेति॥ ननु कर्म्मभिरविरुद्धमपि हिरण्य-
गर्भादिविज्ञानमस्ति। तथा च समुच्चितं ज्ञानमज्ञानध्वंसि भवि-
ष्यति नेत्याह। यदविरुद्धमिति। नित्यानां कर्म्मणां समुच्चिता-
नामसमुच्चितानाञ्च स्वरूपावाप्तौ मोक्षे तत्प्रतिबन्धकाज्ञानध्वस्तौ
वा न दृष्टसामर्थ्यं कल्प्यमित्युक्तं। इदानीं तत्कल्पनामङ्गीकृत्यापि
दूषयति। किञ्चेति॥ कर्म्मणोऽस्ति मोक्षसामर्थ्यमित्येतदुक्तादेव
कारणान्न भवति। किन्त्वन्यच्च कारणं तत्रास्तीत्यर्थः॥ तदेव दर्शयितुं
विचारयति। कल्पे चेति॥ विरोधमपनयति। अर्थेति॥ कार्य्य-
त्वाभावं समर्थयते। यस्मिन्निति॥ पक्षान्तरमाह। किञ्चेति॥ सामर्थ्य-
विषयं विशदयति। यथेति। कथमिह निर्णयस्तमाह। पुरुषेति॥

भा॰ नित्यानां कर्मणां श्रुतानां यत्कर्मभिर्विरुध्यते द्रव्यगुणकर्मणां कार्य्यमेव न भवति किन्तत्कल्प्यतां। यस्मिन्कर्मणः सामर्थ्यमेव न दृष्टं किं वा यस्मिन् दृष्टं सामर्थ्यं यच कर्मणां फलमविरुद्धं तत्कल्प्यतामिति पुरुषप्रवृत्तिजननाथावश्यं चेत्कर्मफलं कल्पयितव्यं। कर्माविरुद्धविषय एव श्रुतार्थापत्तेः क्षीणलाञ्छितो मोक्षः फलं कल्पयितुं न शक्यः। तद्ध्वधानाभ्यानिवृत्तिर्वा। अविरुद्धत्वाददृष्टसामर्थ्यविषयत्वाच्चेति पारिशेष्यन्यायान्मोक्ष एव कल्पयितव्य इति चेत्। सर्वेषां हि कर्मणां सर्वं फलं। न चान्यदितरकर्मफलव्यतिरेकेण फलं कल्पनायोग्यमस्ति। परिशिष्टश्च मोक्षः। सचेष्टोऽवेदविदां फलं। तस्मात्स एव कल्पयितव्य इति

---

आ॰ कल्पयितव्यं फलमिति सम्बन्धः। उत्पत्त्यादीनामन्यतमो हि कर्मभिरविरुद्धो विषयः। तत्रैव नित्यकर्मचोदनानुपपत्तेरुपशान्तत्वान्नित्यकर्मफलत्वेन मोक्षः। तद्ध्वधानाभ्यानिवृत्तिर्वा न शक्यते कल्पयितुं। कर्माभ्यानयोर्विरोधाभावादुक्तं सामर्थ्यं यस्मिन्नुत्पत्त्यादौ तद्विषयत्वाच्च कर्मफलत्वाद्विनाश्ये मोक्षे न व्यापारः। तथा च नित्यकर्मविधिवशात्पुरुषप्रवृत्तिसम्पादनाय. फलचेत्कल्पयितव्यं तर्हि तदुत्पत्त्यादीनामन्यतमादेव तदविरुद्धं कल्प्यमित्यर्थः। इतिशब्दः श्रुतार्थापत्तिपरिहारसमाप्त्यर्थः। मोक्ष एव नित्यानां कर्मणां फलत्वेन कल्पयितव्यः। पारिशेष्यन्यायादिति शङ्कते। पारिशेष्येति॥

पारिशेष्यन्यायमेव विशदयति। सर्वेषामिति॥ सर्वञ्च स्वर्गपश्वपुत्रादीति यावत्। तथापि मोक्षादन्यदेव नित्यकर्मफलं किं न स्यात्तत्राह। न चेति॥ मोक्षस्यापीतरकर्मफलनिवेशमाशङ्क्याह। परिशिष्टश्चेति॥ तस्य फलत्वमेव कथं सिद्धं तत्राह। स चेति॥ परिशेषायत्तमर्थं निगमयति। तस्मादिति॥ पारिशेष्या-

भा० चेन्न । कर्म्मफलव्यक्तीनामानन्त्यात्पारिशेष्यन्यायानुपपत्तेः । न हि पुरुषेच्छाविषयाणां कर्म्मफलानामेतावत्त्वं नाम केनचिदवधृतं तत्साधनानां वा । पुरुषेच्छानां चानियतदेशकालनिमित्तत्वात्पुरुषेच्छाविषयसाधनानां च पुरुषेष्टफलप्रयुक्तत्वात् । प्रतिप्राणि चेष्टावैचित्र्यात्फलानां तत्साधनानां चानन्त्यसिद्धिस्तदानन्त्याच्चाशक्यमेतावत्त्वं पुरुषैर्ज्ञातुं । अज्ञाते च साधनफलैतावत्त्वे कथं मोक्षस्य परिशेषसिद्धिरिति । कर्म्मफलजातिपारिशेष्यमिति चेत् । सत्यपीच्छाविषयाणां तत्साधनानां चानन्त्ये कर्म्मफलजातित्वं नाम सर्व्वेषां तुल्यं । मोक्षस्त्वकर्म्मफलत्वात्परिशिष्टः स्यात्तस्मात्परिशेषात्स एव युक्तः कल्पयितुमिति चेन्न । तस्यापि

---

आ० सिद्ध्या दूषयति । नेति ॥ कर्म्मफलं व्यक्त्यानन्त्यमुक्तं व्यनक्ति । न हीति ॥ फलवत्फलसाधनानां फलविषयेच्छानां चानन्त्यं कथयति ॥ तत्साधनानामिति ॥ तदानन्त्ये हेतुमाह । अनियतेति ॥ इच्छाद्यानन्त्ये हेत्वन्तरमाह । पुरुषेति ॥ एतावत्त्वं नाम नास्तीत्युभयत्र सम्बन्धः । पुरुषस्येष्टं फलं शोभनाध्यासविषयभूतं तत्र विषयिणां शोभनाध्यासे न प्रयुक्तत्वादिति हेत्वर्थः । इच्छाद्यानन्त्यं प्राणिभेदेषु दर्शयित्वा तदानन्त्यमेकैकस्मिन्नपि प्राणिनि दर्शयति । प्रति प्राणि चेति ॥ इच्छाद्यानन्त्ये फलितमाह । तदानन्त्याच्चेति ॥ साधनादिष्वेतावत्त्वाज्ञानेऽपि किं स्यात्तदाह । अज्ञाते चेति ॥ इतिशब्दः पारिशेष्यानुपपत्तिसमाप्त्यर्थः । प्रकारान्तरेण पारिशेष्यं शङ्कते । कर्म्मेति ॥ तामेव शङ्कां विशदयति । सत्यपीति ॥ तथापि कथं मोक्षस्य परिशिष्टत्वं तदाह । मोक्षस्त्विति ॥ परिशेषफलमाह । तस्मादिति ॥ शङ्कितं परिशेषं दूषयति । नेत्यादिना ॥ अर्थापत्तिपरिशेषौ पराकृत्य अर्थापत्तिपराकरणं प्रपञ्चयितुं प्रस्तौति । तस्मादिति ॥ अन्यथाप्युपपत्तिं प्रकटयति ।

भा० नित्यकर्म्मफलत्वाभ्युपगमे कर्म्मफलसमानजातीयत्वोपपत्तेः परिशेषानुपपत्तिः। तस्मादन्यथाप्युपपत्तिस्तस्मात् क्षीणा श्रुतार्थापत्तिः। उत्पत्त्याप्तिविकारसंस्काराणामन्यतमदपि नित्यानां कर्म्मणां फलमुपपद्यत इति क्षीणा श्रुतार्थापत्तिः। चतुर्णामन्यतम एव मोक्ष इति चेन्न तावदुत्पाद्यो नित्यत्वात्। अत एवाविकार्य्योऽसंस्कार्य्यश्चात एवासाधनद्रव्यात्मकत्वाच्च। साधनात्मकं हि द्रव्यं संस्क्रियते। यथा प्राज्याज्यादि प्रोक्षणादिना। न च संस्क्रियमाणः संस्कारनिर्वर्त्त्यो वा यूपादिवत्पारिशेष्यादाप्यः स्वात्मप्राप्योऽप्यात्मस्वभावत्वादेकत्वाच्च॥

इतरैः कर्म्मभिर्वैलक्षण्यान्नित्यानां कर्म्मणां तत्फलेनापि विलक्षणेन भवितव्यमिति चेन्न। कर्म्मत्वसालक्षण्यात्सलक्षणं

---

व्या० उत्पत्तीति। नित्यानामुत्पत्त्यादिफलत्वेऽपि मोक्षस्य तत्फलत्वं सिध्यतीति शङ्कते। चतुर्णामिति। तत्र मोक्षस्योत्पाद्यत्वं दूषयति। न तावदिति। उभयत्रातः शब्दो नित्यत्वपरामर्शी। असंस्कार्य्यत्वे हेत्वन्तरमाह। असाधनेनेति। तदेव व्यतिरेकमुखेन विवृणोति। साधनात्मकं हीति। इतश्च मोक्षस्यासंस्क्रियमाणत्वमित्याह। न चेति। यथा यूपस्तक्षणाष्टाश्रीकरणाञ्जनादिना संस्क्रियते। यथा चाहवनीयः संस्कारेण निष्पाद्यते। न तथा मोक्षो नित्यमुक्तत्वान्निर्गुणत्वाच्चेत्यर्थः। पक्षान्तरमनुभाष्य दूषयति। पारिशेष्यादित्यादिना।

एकत्वं पूरणत्वं साधनवैलक्षण्यं फलवैलक्षण्यं कल्पयतीति शङ्कते। इतरैरिति। हेतुवैलक्षण्यासिद्धौ कल्पकाभावात्फलवैलक्षण्यासिद्धिरिति दूषयति। न कर्म्मत्वेति। निमित्तकृतहेतुवैलक्षण्यवशात्फलवैलक्षण्यसिद्धिरिति शङ्कते। निमित्तेति। निमित्तवैलक्षण्यं फलवैलक्षण्यस्यानिमित्तमिति परिहरति। न चाम-

भा० कस्मात्फलं न भवति। इतरकर्म्मफलैर्निमित्तवैलक्षण्यादिति चेन्न। क्षामवत्यादिभिः समानत्वात्। यथा हि गृहदाहादौ निमित्ते क्षामवत्यादीष्टिर्यथा भिन्ने जुहोति स्कन्ने जुहोतीत्येवमादौ नैमित्तिकेषु कर्म्मसु न मोक्षः फलं कल्प्यते। तैश्चाविशेषान्नैमित्तिकत्वेन जीवनादिनिमित्ते च श्रवणात्। तथा नित्यानामपि न मोक्षः फलं। आलोकस्य सर्व्वेषां रूपदर्शनसाधनत्वे उलूकादय आलोकेन रूपं न पश्यन्तीति। उलूकादिचक्षुषोर्वैलक्षण्यादितरलोकचक्षुर्भिर्न

---

आ० मत्यादिभिरिति॥ तदेव प्रपञ्चयति। यथा हीति॥ यस्याहिताग्नेरग्निर्गृहान्दहेदग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदित्यत्र दहेदिति विधिविभक्त्या प्रसिद्धार्थयच्छब्दोपहितया गृहदाहाख्यनिमित्तपरामर्शेनाग्नये क्षामवते पुरोडाशमित्यादिना क्षामवती विधीयते। यस्योभयं हविरार्त्तिमार्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेदित्यत्र आर्छेदिति विधिविभक्त्या निर्वपेदिति विधास्यमाननिमित्तं हविरार्त्तिमनूद्य निर्वापो विधीयते। भिन्ने जुहोति स्कन्ने जुहोत्यथ यस्य पुरोडाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति। यदा तद्धविस्तिष्ठेताथ तदेव हविर्निर्वपेद्यज्ञो हि यज्ञस्य प्रायश्चित्तमिति च भेदनादिनिमित्तं प्रायश्चित्तमुक्तं। न च तन्मुक्तिफलं। तथा निमित्तभेदेऽपि न नित्यकर्म्ममुक्तिफलमित्यर्थः। क्षामवत्यादितुल्यत्वं नित्यकर्म्मणां कुतो लब्धमित्याशङ्क्याह। तैश्चेति॥ क्षामवत्यादिभिरिति यावत्॥ अविशेषे हेतुर्नैमित्तिकत्वेनेति तदेव कथमिति चेत्तत्राह। जीवनादीति॥ दार्ष्टान्तिकं स्पष्टयति। तथेति॥ नित्यं कर्म्म कर्म्मान्तराद्विलक्षणमपि न मोक्षफलमित्यत्र दृष्टान्तमाह। आलोकस्येति॥ चक्षुरन्तरैरुलूकादिचक्षुषोर्वैलक्षण्येऽपि न रसादिविषयत्वमित्यत्र हेतुमाह। रसादीति॥ वैलक्षण्यं तर्हि कुत्रोपयुज्यते तत्राह। सुदूरमपीति॥ मनुष्यान्विहायोलूकादौ गत्वापीति

भा॰ रसादिविषयत्वं परिकल्प्यते । रसादिविषये सामर्थ्यस्या-
दृष्टत्वात् । सुदूरमपि गत्वा यद्विषये* दृष्टं सामर्थ्यं तत्रैव
कश्चिद्विशेषः कल्पयितव्यः । यत्पुनरुक्तं विद्यामन्त्रार्क-
रादिसंयुक्तविषदध्यादिवन्नित्यानि कार्यान्तरमारभन्त
इति । आरभ्यतां विशिष्टं कार्य्यं । तदिष्टत्वादविरोधो निर-
भिसन्धेः कर्म्मणो विद्यासंयुक्तस्य विशिष्टकार्य्यान्तरारम्भेन
कश्चिद्विरोधः । देवयाज्यात्मयाजिनोरात्मयाजिनो विशेष-
श्रवणाद्देवयाजिनः श्रेयानात्मयाजीत्यादौ यदेव विद्यया
करोतीत्यादौ च ॥

यस्तु परमार्थदर्शनविषये मनुनोक्त आत्मयाजिशब्दः
समं पश्यन्नात्मयाजीत्यत्र च समं पश्यन्नात्मयाजी भवतीत्यर्थः ।
अथवा भूतपूर्व्वगत्या आत्मयाज्यात्मसंस्कारार्थं नित्यानि

आ॰ यावत् । यद्विषये रूपादावित्यर्थः । विशेषो दूरस्थत्वादिरतिशयः ।
दार्ष्टान्तिकं पूर्व्ववादानुवादपूर्व्वकमाचष्टे । यत्पुनरित्यादिना ॥
तत्रैवेति यावत् । तदेव विवृणोति । निरभिसन्धेरिति ॥ विद्या-
संयुक्तं कर्म्म विशिष्टकार्य्यकरमित्यत्र शतपथश्रुतिं प्रमाणयति ।
देवयाजीति ॥ तदाहुरित्युपक्रम्य देवयाजी श्रेयानित्यादौ काम्य-
कर्त्तुर्देवयाजिनः सकाशादात्मशुद्ध्यर्थं कर्म्म कुर्वन्नात्मयाजी
श्रेयानिति आत्मयाजिनो विशेषश्रवणात्सर्व्वक्रतुयाजिनामात्म-
याजी विशिष्यत इति स्मृतेश्च विशिष्टस्य कर्म्मविशिष्टकार्य्यार-
म्भकत्वमविरुद्धमित्यर्थः ॥

छान्दोग्येऽपि विद्यासंयुक्तस्य कर्म्मणो विशिष्टकार्य्यारम्भकत्वं
दृष्टमित्याह । यदेवेति ॥ न त्वात्मयाजिशब्दो नित्यकर्म्मानुष्ठा-
यिविषयो न भवति । सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि ।

* विशेषाय इति पाठान्तरः ।

भा॰ कर्म्माणि करोति इदं मेने नाङ्गं संस्क्रियत इति श्रुतेः । तथा गार्भैर्होमैरित्यादिप्रकरणे कार्य्यकरणसंस्कारार्थत्वं नित्यानां कर्म्मणां दर्शयति । संस्कृतश्च य आत्मयाजी तैः कर्म्मभिः समं द्रष्टुं समर्थो भवति । तस्येह वा जन्मान्तरे वा सममात्मदर्शनमुत्पद्यते । समं पश्यन् स्वाराज्यमधिगच्छतीत्येषोऽर्थः । आत्मयाजीशब्दस्तु भूतपूर्व्वगत्या प्रयुज्यते । ज्ञानयुक्तानां नित्यानां कर्म्मणां ज्ञानोत्पत्ति-

---

आ॰ सम्यग्ज्ञानात्मयाजी वै स्वाराज्यमधिगच्छतीति ॥ अत्र परात्मदर्शनविषये तस्य प्रयुक्तत्वादत आह । यस्त्विति ॥ यदि समं पश्यन्भवेत्तदा परेणात्मनैकीभूतः स्वाराड्भवतीत्यात्मयागस्तुतिरत्र विवक्षिता। महती हीयं ब्रह्मविद्या। यद्ब्रह्मविदेवात्मयाजी भवति हि तदनुष्ठानं पृथगपेक्ष्यते। ब्रह्मवित्पुण्यकृद्दिति च वक्ष्यतीत्यर्थः ॥ परदर्शनवत्यात्मयाजिशब्दस्य गत्यन्तरमाह । अथ वेति ॥ भूता या पूर्व्वस्थितिस्तामपेक्ष्यात्मयाजिशब्दो विदुषीत्यर्थः ॥ तदेव प्रपञ्चयति । आत्मेति ॥ तेषां तत्संस्कारार्थत्वे प्रमाणमाह । इदमिति ॥ तत्रैव स्मृतिं प्रमाणयति । तथेति ॥ गर्भसम्बन्धिभिर्होमैर्मौञ्जीनिबन्धनादिभिश्च वैदिकमेवैनः शमयतीत्यस्मिन्प्रकरणे नित्यकर्म्मणां संस्कारार्थत्वं निश्चितमित्यर्थः ॥ संस्कारोऽपि कुत्रोपयुज्यते तत्राह । संस्कृतश्चेति ॥ यो हि नित्यकर्म्मानुष्ठायी तदनुष्ठानजनितापूर्व्ववशात्परिशुद्धबुद्धिः सम्यग्धीयोग्यो भवति । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुरिति स्मृतिरित्यर्थः ॥ कदा पुनरेषा सम्यग्धीरुत्पद्यते तत्राह । तस्येति ॥ उत्पन्नस्य सम्यग्ज्ञानस्य फलमाह । सममिति ॥ कथं पुनः सम्यग्ज्ञानवत्यात्मयाजिशब्द इत्याशङ्क्य पूर्व्वोक्तं स्मारयति । आत्मेति ॥ किमितीह भूतपूर्व्वगतिराश्रितेति तत्राह । ज्ञानप्रयुक्तानामिति ॥ ऐहिकैरामुष्मिकैर्वा कर्म्मभिः शुद्धबुद्धेः श्रवणादिवशादैक्यज्ञानं मुक्तिफलमुदेति । कर्म्म तु विद्यासंयुक्तमपि संसारफलमेवेति भावः ॥ तत्रैव हेत्वन्तरमाह । किञ्चेति ॥ विद्यायुक्तमपि कर्म्मबन्धायैवेत्यत्र न

भा॰ साधनत्वप्रदर्शनार्थं । किञ्चान्यत् । ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च । उत्तमां सात्त्विकीमेतां गतिमाहु-र्मनीषिण इति च ॥

देवसार्ष्टिव्यतिरेकेण भूताप्ययं दर्शयति । भूतान्यप्येति । पञ्च वै भूतान्यत्येतीति पाठं ये कुर्वन्ति तेषां वेदविषये परिखिन्नबुद्धित्वाददोषः । न चार्थवादत्वमध्यायस्य ब्रह्मान्त-कर्मविपाकार्थस्य तद्व्यतिरिक्तात्मज्ञानार्थस्य च कर्मकाण्डो-पनिषद्भ्यां तुल्यार्थत्वदर्शनात् । विहिताकरणप्रतिषिद्ध-

---

का॰ केवलमुक्तमेव कार्यं किन्त्वन्यच्च तदुपपादकमस्तीत्यर्थः ॥ तदेव दर्शयति । ब्रह्मेति । सात्त्विकीं सत्त्वगुणप्रसूतज्ञानसमुचित-कर्मफलभूतामिति यावत् ॥

यत्र हि विद्यायुक्तमपि कर्मसंसारफलमेवेति सूच्यते । एष सर्वः समुद्दिष्टस्त्रिप्रकारस्य कर्मणः । त्रिविधस्त्रिविधः कर्मसंसारः सार्वभौतिक इत्युपसंहारादिति चकारार्थः । किञ्च । प्रवृत्तं कर्म-संसेव्य देवानामेति सार्ष्टितामिति । कर्मफलभूतदेवतासदृशैश्वर्य-प्राप्तिमुक्त्वा तदतिरेकेण निवृत्तं सेवमानस्तु भूतान्यप्येति पञ्च चेति । भूतेष्वप्ययवचनान्न समुच्चयस्य मुक्तिफलतेत्याह । देवसा-र्ष्टीति । निवृत्तं सेवमानस्तु भूतान्यप्येति पञ्च चेति पाठात् मुक्तिरेव समुच्चयानुष्ठानाद्विवक्षितेति चेन्नेत्याह । भूतानीति । ज्ञानमेव मुक्तिहेतुरिति प्रतिपादकोपनिषद्विरोधान्नायं पाठः साधीया-नित्यर्थः । ननु विग्रहवती देवतैव नास्ति । मन्त्रमपि हि सा देवता शब्दप्रत्ययावलम्बनं । अतो ब्रह्मा विश्वसृडित्यादेरर्थवादत्वान्न तद्व-लेन नित्यकर्मणां मुक्तिसाधनत्वं निराकर्त्तुं शक्यमत आह । न चेति । ज्ञानार्थस्य संपश्यन्नात्मयाजीत्यादेरिति शेषः । किञ्च । अकुर्व-न्विहितं कर्म निन्दितञ्च समाचरन् । प्रसक्तश्चेन्द्रियार्थेषु नरः पत-नमृच्छति । शारीरजैः कर्मदोषैर्याति स्थावरतां नरः । वाचिकैः पक्षिमृगतां मानसैरन्त्यजातितां । श्वसूकरखरोष्ट्राणां गोजा-विमृगपक्षिणां । चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छतो-

भा॰ कर्म्मणाञ्च स्थावरश्वशूकरादिफलदर्शनात्। वान्ताश्यादि-
प्रेतदर्शनाच्च । न च श्रुतिस्मृतिविहितप्रतिषिद्धव्यतिरे-
केण विहितानि वा प्रतिषिद्धानि वा कर्माणि केनचिदव-
गन्तुं शक्यन्ते । येषामकरणादनुष्ठानाच्च प्रेतश्वशूकर-
स्थावरादीनि कर्म्मफलानि प्रत्यक्षानुमानाभ्यामुपलभ्यन्ते।
न चैषामकर्म्मफलत्वं केनचिदभ्युपगम्यते। तस्माद्विहिताक-
रणप्रतिषिद्धसेवानां यथैते कर्म्मविपाकाः प्रेततिर्य्यक्-
स्थावरादयस्तथोत्कृष्टेष्वपि ब्रह्मान्तेषु कर्म्मविपाकत्वं वेदि-
तव्यं । तस्मात्स आत्मनो वपामुदखिदत्सो ऽरोदीद्यद-
रोदीरित्यादिवचसाभूतार्थवादत्वं ।

---

व्या॰ त्वादिवाक्यैः प्रतिपादितफलानां प्रत्यक्षेणापि दर्शनात्। यथा तत्र
नाभूतार्थवादत्वं तथा यथोक्ताध्यायस्यापि नाभूतार्थवादते-
त्याह । विहितेति। किञ्च वङ्गादिदेशे छर्दिताश्यादिप्रेतानां
प्रत्यक्षत्वादध्ययनरहितानामपि स्त्रीशूद्रादीनां वेदोच्चारणदर्श-
नेन ब्रह्मग्रहसद्भावागमाच्च न ब्रह्मादिवाक्यस्यार्थवादतेत्याह।
वान्तेति। ननु स्थावरादीनां श्रौतस्मार्त्तकर्म्मफलत्वाभावात्तद्-
र्शनेन वचनानां भूतार्थत्वं शक्यं कल्पयितुमत आह। न चेति॥
सेवादिदृष्टकारणसाम्येऽपि फलवैषम्योपलम्भादवश्यमतीन्द्रियं
कारणं वाच्यं। न च तत्र श्रुतिस्मृती विहायान्यन्मानमस्ति। तथा
च श्रौतस्मार्त्तकर्म्मकृतान्येव स्थावरादीनि फलानीत्यर्थः॥ सन्निहि-
तासन्निहितेषु स्थावरादिषु प्रत्यक्षानुमानयोर्यथायोगं प्रवृ-
त्तिरुन्नेया। स्थावराणां जीवशून्यत्वादकर्म्मफलत्वमिति केचित्ता-
न्प्रत्याह। न चैषामिति॥ अस्मदादिवदेव वृक्षादीनां वृद्ध्यादि-
दर्शनात्सजीवत्वप्रसिद्धेस्तस्मात्पशवन्ति पादपा इत्यादिप्रयोगाच्च
तेषां कर्म्मफलत्वसिद्धिरित्यर्थः॥ स्थावरादीनां कर्म्मफलत्वे सिद्ध
फलितमाह। तस्मादिति॥ ब्रह्मादीनां पुण्यकर्म्मफलत्वेऽपि प्रकृते
किं स्यात्तदाह। तस्मादिति॥

भा॰ तत्राप्यभूतार्थवादत्वं माभूदिति चेद्भवत्वेवं । न चैतावता न्यायस्य बाधो भवति। न चास्मत्पक्षो वा दुष्यति। न च ब्रह्मा विश्वसृज इत्यादीनां काम्यकर्म्मफलत्वं शक्यं। वक्तुं तेषां देवसार्ष्टितायाः फलस्योक्तत्वात् । तस्मात्साभिसन्धीनां नित्यानां कर्म्मणां सर्व्वमेधाश्वमेधादीनां च ब्रह्मत्वादीनि फलानि। येषां पुनर्नित्यानि निरभिसन्धीन्यात्मसंस्कारार्थानि क्रियन्ते तेषां ज्ञानोत्पत्त्यर्थानि तानि। ब्राह्मीयं क्रियते तनुरित्यादि स्मरणात्तेषामारादुपकारकत्वान्मोक्षसा-

---

आ॰ कर्म्मविपाकप्रकरणस्याभूतार्थवादत्वाभावे दृष्टान्तेऽपि तन्न स्यादिति शङ्कते। तत्रापीति॥ अङ्गीकरोति॥ भवत्विति॥ कथं तर्हि वैधर्म्यदृष्टान्तसिद्धिरत आह। न चेति॥ वैधर्म्यदृष्टान्ताभावमात्रेण कर्म्मविपाकाध्यायस्य नाभूतार्थवादतेत्यस्य न्यायस्य नैव बाधः। साधर्म्यदृष्टान्तादपि तत्सिद्धेरित्यर्थः॥ ननु प्रजापतिरात्मनो वपामुदखिददित्यादीनामभूतार्थवादत्वाभावे कथमर्थवादाधिकरणं घटिष्यते तत्राह। न चेति॥ तदघटनायामपि नास्मत्पक्षक्षतिस्तत्रैव तदभूतार्थवादत्वं मानान्तरविरोधादित्यर्थः॥ ननु कर्म्मविपाकप्रकरणस्यार्थवादत्वाभावेऽपि ब्रह्मादीनां काम्यकर्म्मफलत्वान्न ज्ञानसंयुक्तनित्यकर्म्मफलत्वं ततो मोक्ष एव तत्फलमित्यत आह। न चेति॥ तेषां काम्यानां कर्म्मणामिति यावत्। देवसार्ष्टिताया देवैरिन्द्रादिभिस्समानैश्वर्य्यप्राप्तेरित्यर्थः॥ उत्कृष्टं कर्म्म संसेव्य देवानामेति सार्ष्टितामित्यत्रेति शेषः॥ ननु विद्यासंयुक्तानां कर्म्मणां फलं ब्रह्मादिभावश्चेत्कथं तानि ज्ञानोत्पत्त्यर्थान्याश्रीयन्ते तत्राह। तस्मादिति॥ कर्म्मणां मुक्तिफलत्वाभावस्तच्छब्दार्थः साभिसन्धीनां देवताभावे फलेऽनुरागवतामिति यावत्। नित्यानि कर्म्माणि श्रौतानि स्मार्त्तानि चाग्निहोत्रसन्ध्योपासनप्रभृतीनि निरभिसन्धीनि फलाभिलाषविकलानि परमेश्वरार्पणबुद्ध्या क्रियमाणानि। आत्मशब्दो मनोविषयः। कर्म्मणां चित्तशुद्धिद्वारा ज्ञानोत्पत्त्यर्थत्वे प्रमाणमाह।

भा॰ धनान्यपि कर्माणि भवन्तीति न विरुध्यन्ते । यथा चायमर्थः षष्ठे जनकाख्यायिकासमाप्तौ वक्ष्यामः । यत्तु विषदध्यादि-वदित्युक्तं । तत्र प्रत्यक्षानुमानविषयत्वादविरोधः । यत्त्व-त्यन्तशब्दगम्योऽर्थस्तत्र वाक्यस्याभावे तदर्थप्रतिपादकस्य न शक्यं कल्पयितुं विषदध्यादिसाधर्म्यं । न च प्रमाणान्तर-विरुद्धार्थविषये श्रुतेः प्रामाण्यं कल्प्यते । यथा शीतोऽग्निः क्लेदयतीति श्रुते तु तादर्थ्ये वाक्यस्य प्रमाणान्तरस्याभा-सत्वं। यथा खद्योतोऽग्निरिति तत्कर्मागमनमन्तरिक्षमिति

---

आ॰ प्राप्नोतीति । कथं तर्हि कर्मणां मोक्षसाधनत्वं क्वचिदापद्यते तत्राह । तेषामिति । संस्कृतबुद्धीनामिति यावत् । कर्मणां परं परया मोक्षसाधनत्वं कथमर्थसिद्धवदुच्यते तत्राह । यथा चेति । अयमर्थस्तथेति शेषः । निरस्तमप्यधिकविवक्षया पुनरनुवदति । यत्त्विति । विषादेर्मन्त्रादिसंस्कृतस्य जीवनादिहेतुत्वं प्रत्यक्षा-दिसिद्धमतो दृष्टान्ते कार्यारम्भकत्वे विरोधो नास्तीत्याह । तत्रेति । कर्मणो विद्यासंयुक्तस्य कार्यान्तरारम्भकत्वलक्षणोऽर्थः शब्देनैव गम्यते । न च तत्र मानान्तरमस्ति । न च समुच्चितस्य कर्मणो मोक्षारम्भकत्वप्रतिपादकं वाक्यमुपलभ्यते तदभावे कर्मणि विद्यायुक्तेऽपि विषदध्यादिसाधर्म्यं कल्पयितुं न शक्यमि-त्याह । यत्त्विति । कर्मसाध्यत्वे च मोक्षस्यानित्यता स्यादिति भावः । अपाम सोममृता अभूमेत्यादिश्रुतेर्मोक्षस्य कर्मसाध्य-स्यापि नित्यत्वमिति चेन्नेत्याह । न चेति । यत्कृतकं तदनित्यमि-त्यनुमानानुगृहीतं तद्यथेहेत्यादिवाक्यं तद्विरोधेनार्थवादश्रुतेः स्वार्थे प्रामाण्यमित्यर्थः । प्रमाणान्तरविरुद्धेऽर्थे प्रामाण्यं श्रुते-र्नेष्यते चेदद्वैतश्रुतेरपि कथं प्रत्यक्षादिविरुद्धे स्वार्थे प्रामाण्यमि-त्याशङ्क्याह । श्रुते त्विति । तत्त्वमस्यादिवाक्यस्य षड्विधतात्पर्य-लिङ्गैरद्वैतपरत्वे निर्धारिते सद्भेदविषयस्य प्रत्यक्षादेराभासत्वं भवतीत्यर्थः । तदेव दृष्टान्तेन साधयति । यथेत्यादिना । यदविवे-किनां खद्योतस्य प्रत्यक्षं तद्यद्यपि प्रथमभावित्वेन प्रबलं निश्च-

उ॰ अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच १

---

भा॰ बालानां यत्प्रत्यक्षमपि तद्विषयप्रमाणान्तरस्यातथार्थत्वे निश्चिते निश्चितार्थमपि बालप्रत्यक्षमाभासीभवति। तस्माद्वेदप्रामाण्यस्याव्यभिचारात्तादर्थ्ये सति वाक्यस्य तथात्वं स्यात् न तु पुरुषमतिकौशलं। न हि पुरुषमतिकौशलात्सविता रूपं न प्रकाशयति। तथा वेदवाक्यान्यपि नान्यार्थानि भवन्ति। तस्मान्न मोक्षार्थानि कर्म्माणीति सिद्धं। अतः कर्म्मफलानां संसारत्वप्रदर्शनायैव ब्राह्मणमारभ्यते॥

अथानन्तरमुपरते जारत्कारवे भुज्युरिति नामतो लह्यस्यापत्यं लाह्यस्तदपत्यं लाह्यायनिः पप्रच्छ याज्ञ-

---

आ॰ तार्थं च तथापि तस्मिन्नेवाकाशादौ विषये प्रवृत्तस्याप्तवाक्यादेर्मानान्तरस्य यथार्थत्वे सति तद्विरुद्धं पूर्व्वोक्तमविवेकिप्रत्यक्षमप्याभासीभवति। तथेदं द्वैतविषयं प्रत्यक्षाद्यद्वैतागमविरोधे भवत्याभास इत्यर्थः॥ ननु तात्पर्य्यं नाम पुरुषस्य मनोधर्म्मस्तद्वशाच्चेदद्वैतश्रुतेर्यथार्थत्वं तर्हि प्रतिपुरुषमन्यथैवं तात्पर्य्यदर्शनात्तद्वशादन्यथैवं श्रुत्यर्थः स्यादित्याशङ्क्य दार्ष्टान्तिकं निगमयन्नुत्तरमाह। तस्मादित्यादिना॥ तादर्थ्यमर्थपरत्वं तथात्वं याथार्थ्यं शब्दधर्म्मस्तात्पर्य्यं तच्च षड्विधलिङ्गगम्यं तथा च शब्दस्य पुरुषाभिप्रायवशान्नान्यथार्थत्वमित्यर्थः॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति। न हीति। विचारार्थमुपसंहरति। तस्मादिति॥ विद्यासंयुक्तस्यापि कर्म्मणो मोक्षारम्भकत्वासम्भवस्तच्छब्दार्थः। माभूत्कर्म्मणां मोक्षार्थत्वं किन्तावतेत्याशङ्क्य ब्राह्मणारम्भं निगमयति। अत इति॥

ब्राह्मणारम्भमेवं प्रतिपाद्य तदक्षराणि व्याकरोति। अथेति॥ याज्ञवल्क्यमभिमुखीकृत्य भुज्युः स्वस्य पूर्व्वनिर्वृत्तां कथां कथ-

भा॰ वल्क्येति होवाच आदावुक्तमश्वमेधदर्शनं। समष्टिव्यष्टिफलस्याश्वमेधक्रतोर्ज्ञानसमुच्चितो वा केवलज्ञानसम्पादितो वा। सर्व्वकर्म्मणां परा काष्ठा। भ्रूणहत्याश्वमेधाभ्यां न परं पुण्यपापयोरिति हि स्मरन्ति। तेन हि समष्टीर्व्यष्टीश्च प्राप्नोति। तत्र व्यष्टयो निर्ज्ञाता *अण्डान्तर्विषया अश्वमेधयागफलभूताः। मृत्युरस्यात्मा भवत्येतासां देवतानामेको भवतीत्युक्तं। मृत्युश्चाशनाया लक्षणो बुद्ध्यात्मा समष्टिः प्रथमजो वायुः सूत्रं सत्यं हिरण्यगर्भः। तस्य व्याकृतो विषयो

---

आ॰ यति। तामवतारयितुमश्वमेधस्वरूपं तत्फलं च विभज्य दर्शयति। आदाविति। क्रतुरुक्त इति पूर्व्वेण सम्बन्धः॥ क्रतोर्द्वैविध्यमाह। ज्ञानेति॥ अश्वमेधस्य द्विधा विभक्तस्य सर्व्वकर्म्मोत्कर्षमुक्तिरति। सर्व्वकर्म्मणामिति॥ तस्य पुण्यश्रेष्ठत्वे मानमाह। भ्रूणहत्येति॥ समष्टिव्यष्टिफलत्वेनोक्तं स्पष्टयति। तेनेति॥ अश्वमेधेन सहकारिज्ञानगाभेदेन समष्टीः समनुगतरूपा व्यष्टीश्च व्यावृत्तरूपा देवताः प्राप्नोतीत्यर्थः॥ काः पुनर्व्यष्टयो विवक्ष्यन्ते तत्राह। तत्रेति॥ अग्निरादित्यो वायुरित्याद्या व्यष्टयो देवताः। सोऽग्निरभवदित्यादावण्डान्तर्वर्त्तिन्योऽश्वमेधफलभूता दर्शिता इत्यर्थः॥ का तर्हि समष्टिर्देवतेत्युक्ते तत्रैवोक्तं स्मारयति। मृत्युरिति॥ तामेव समष्टिरूपां देवतां प्रपञ्चयितुमिदं ब्राह्मणमिति वक्तुं पातनिकां करोति। मृत्युश्चेति॥ प्राणात्मकबुद्धिधर्म्मोऽशनायाः कथं मृत्योर्लक्षणं तत्राह। बुद्ध्यात्मेति॥ तर्हि बुद्धेर्व्यष्टित्वान्मृत्युरपि तथा स्यादित्याशङ्क्याह। समष्टिरिति॥ प्रागेव व्यष्ट्युत्पत्तेरुत्पन्नत्वेन समष्टित्वं साधयति॥ प्रथमज इति॥ सर्व्वाश्रयत्वं दर्शयति। सूत्रमिति॥ तत्र वायुर्वै गौतमेत्यादि वाक्यं प्रमाणमिति सूचयति। वायुरिति॥ तथापि कथं प्रथमजत्वं

---

* अन्तरण्डतिपाठान्तरः।

भा॰ यदात्मकं सर्व्वं द्वैतैकत्वं यः सर्व्वभूतान्तरात्मा विष्णुम-
मूर्त्तरमो यदाश्रितानि सर्व्वभूतकर्म्माणि यः कर्म्मणां कर्म्म-
सम्बद्धानाञ्च विज्ञानानां परा गतिः परं फलं। तस्य
कियान्गोचरः कियती व्याप्तिः सर्व्वतः परिमण्डलीभूता
सा वक्तव्या। तस्यामुक्तायां सर्व्वः संसारो बन्धगोचर उक्तो
भवति। तस्य च समष्टिव्यष्ट्यात्मदर्शनस्यालौकिकत्वप्रदर्श-
नार्थमाख्यायिकामात्मनो वृत्तां प्रकुरुते। तेन च प्रति-
वादिबुद्धिं *व्यामोहयिष्यामीति मन्यते।

---

आ॰ भूतानां प्रथममुत्पत्तेरित्याशङ्क्याह। सत्यमिति। हिरण्यगर्भ-
स्योक्तप्रथमत्वेऽपि किमायातं मत्तोरित्याशङ्क्याह। हिरण्यगर्भ
इति। जगदेव समष्टिव्यष्टिरूपं न सूत्रमित्याशङ्क्याह। यदा-
त्मकमिति। द्वैतं व्यष्टिरूपमेकत्वं समष्टिरूपं तत्सर्व्वं यदा-
त्मकं तस्येति सम्बन्धः। तस्योक्तप्रमाणत्वं प्रकटयति। यः सर्व्वेति।
विज्ञानात्मानं व्यावर्त्तयति। विष्णुमिति। तस्य स्रोषरस इव-
गुणत्वाह। अमूर्त्तेति। तस्य साधनाश्रयत्वं दर्शयति। यदाश्रि-
तानीति। तस्यैव फलाश्रयत्वमाह। यः कर्म्मणामिति। परा
गतिरित्यस्यैव व्याख्यानं परं फलमिति। एवं भूमिकामारचय्यान-
न्तरग्रान्थमवतारयति। तस्येति। प्रश्नमेव प्रकटयति। किय-
तीति। सर्व्वतः परितो मण्डलभावमासाद्य स्थितेति यावत्।
ननु किमिति सा वक्तव्या। तस्यामुक्तायामपि वक्तव्यसंसारावशे-
षादाकाङ्क्षाविश्रान्त्यभावादत आह। तस्यामिति। इयान्बन्धो
नाधिको न्यूनो वेत्यन्ययव्यवच्छेदेन बन्धपरिमाणपरिच्छेदार्थं कर्म्म-
फलव्याप्तिरनोच्यते तत्परिच्छेदश्च वैराग्यद्वारा मुक्तिहेतुरिति
भावः। ग्रान्थस्यैवं प्रवृत्तावपि किमिति भुज्युः स्वस्य पूर्व्वनिर्वृत्तां
कथामाहेत्याशङ्क्याह। तस्य चेति। समष्टिव्यष्ट्यात्मदर्शनस्या-
लौकिकत्वप्रदर्शनेन वा किं स्यात्तदाह। तेन चेति।

---

* व्यामोहयामीतिपाठान्तरः।

उ० मद्रेषु चरकाः पर्य्यव्रजाम ते पतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्सुधन्वाऽऽङ्गिरस इति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन्स

---

भा० मद्रेषु मद्रा नाम जनपदास्तेषु चरका अध्ययनार्थं व्रतचरणाच्चरका अध्वर्य्यवो वा पर्य्यव्रजाम पर्य्यटितवन्तस्ते पतञ्चलस्य ते वयं पर्य्यटन्तः पतञ्चलस्य नामतः काप्यस्य कपिगोत्रस्य गृहानैम गतवन्तः। तस्यासीद्दुहिता गन्धर्वगृहीता गन्धर्वेणामानुषेण सत्त्वेन केनचिदाविष्टा। गन्धर्वो वा धिष्ण्योऽग्निर्ऋत्विग्देवता विशिष्टविज्ञानत्वादवसीयते। न हि सत्त्वमात्रस्येदृशं विज्ञानमुपपद्यते। तं सर्वे वयं परिवारिताः सन्तोऽपृच्छाम कोऽसीति कस्त्वमसि किं नामा किंसतत्त्वः। सोऽब्रवीद्गन्धर्वः सुधन्वा नामत आङ्गिरसो गोत्रतः। तं यदा यस्मिन्काले लोकानामन्तान्पर्य्यवसानान्यपृच्छामाथैनं गन्धर्वमब्रूम भुवनकोशपरिमाणज्ञानाय प्रवृत्तेषु सर्वे-

---

आ० इति मन्यते भुज्युरिति शेषः। तस्मै परम्पराजयेनात्मजयस्यो-क्तत्वादित्यर्थः। धिष्ण्यत्वमपेक्ष्याग्नित्वं॥ अग्निर्वै देवानां होतेति श्रुतिमाश्रित्याह। ऋत्विगिति॥ यथोक्तं गन्धर्वशब्दार्थं सङ्क्र-मलिङ्गमाह। विशिष्टेति॥ तस्यान्यथासिद्धिं दूषयति। न हीति॥ अथैनमित्यादेरर्थं विवृणोति। भुवनेति॥ भवत्वेवं गन्धर्वं प्रति भवतः प्रश्नस्तथापि किमायातं तदाह। स चेति॥ तेन गन्धर्ववचनेनेति यावत्। दिव्येभ्यो गन्धर्वेभ्यः सकाशादि-

उ॰ त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभ-
वन्निति ॥ १ ॥
स होवाचोवाच वै सोऽगच्छन्वै ते तद्यत्राश्वमेध-
याजिनो गच्छन्तीति क्व न्वश्वमेधयाजिनो गच्छ-

---

भा॰ स्वात्मानं श्लाघयन्तः पृष्टवन्तो वयं कथं क पारिक्षिता अभ-
वन्निति। स च गन्धर्वः सर्व्वमस्मभ्यमब्रवीत्। तेन दिव्येभ्यो मया
लब्धं ज्ञानं। तत्तवनास्त्यतो निगृहीतोऽसीत्यभिप्रायः। सोऽहं
विद्यासम्पन्नो लब्धागमो गन्धर्वात् त्वा त्वां पृच्छामि याज्ञ-
वल्क्यं। क पारिक्षिता अभवन् तत् त्वं किं जानासि हे याज्ञ-
वल्क्य कथय पृच्छामि। क पारिक्षिता अभवन्निति ॥ १ ॥
स होवाच याज्ञवल्क्यः उवाच वै सः। वै शब्दः स्मरणार्थः।
उवाच वै स गन्धर्वस्तुभ्यं। अगच्छन्वै ते पारिक्षितास्तत्र
क यत्र यस्मिन्नश्वमेधयाजिनो गच्छन्तीति निर्णीते प्रश्न

---

आ॰ त्येतत्। एतज्ज्ञानाभावे त्वयागमप्रतिभाप्रश्निष्ठत्वप्रतिज्ञाहानि-
श्चेत्याह। अत इति॥ प्रष्टुरभिप्रायमुक्त्वा प्रश्नाक्षराणि व्याचष्टे।
सोऽहमिति। प्रथमा तावत्क्व पारिक्षिता अभवन्नित्युक्ति-
र्गन्धर्व्वप्रश्नार्थं। द्वितीया तत्रानुरूपप्रतिवचनार्था। यो हि क्व
पारिक्षिता अभवन्निति प्रश्नो गन्धर्व्वं प्रति कृतस्तस्य प्रत्युक्तिं सर्व्वां
सोऽस्मभ्यमब्रवीदिति तत्र विवक्ष्यते। तृतीया तु मुनिं प्रति
प्रश्नार्थेति विभागः॥ १॥
अज्ञानादिनिग्रहं प्रपरिहरन्नुत्तरमाह। स होवाचेति॥
स्मरणार्थो गन्धर्व्वाल्लब्धस्य ज्ञानस्येति शेषः॥ किमुवाचेत्यपेक्षा-
यामाह। गच्छन्निति॥ अहोरात्रं आदित्यरथगत्या यावा-
न्मात्रा मितस्तावान्देशो द्वात्रिंशद्गुणितस्तत्परिव्याप्तः। स च चन्द्र-

उ॰ श्नीति द्वात्रिंꣳशतं वै देवरथाह्न्यान्ययं लोकस्तꣳ समन्तं पृथिवी द्विस्तावत्पर्य्येति ताꣳ समन्तं पृथिवीं द्विस्तावत्समुद्रः पर्य्येति तद्यावती क्षुरस्य

---

भा॰ आह। क नु कस्मिन्नश्वमेधयाजिनो गच्छन्तीति। तेषां गतिविवक्षया भुवनकोशपरिमाणमाह। द्वात्रिंशतं वै द्वेऽधिके त्रिंशतं वै देवरथाह्न्यानि देव आदित्यस्तस्य रथो देवरथस्तस्य रथस्य गत्याह्ना यावत्परिच्छिद्यते देशपरिमाणं तद्देवरथाह्न्यं तद्द्वात्रिंशद्गुणितं देवरथाह्न्यानि तावत्परिमाणोऽयं लोको लोकालोकगिरिणा परिच्छिन्नः। यत्र वैराजं शरीरं यत्र च कर्म्मफलोपभोगः प्राणिनां स एष लोक एतावाँल्लोकोऽतः परमलोकस्तं लोकं समन्तं समन्ततो लोकविस्ताराद्द्विगुणपरिमाणविस्तारेण परिमाणेन तं लोकं परिच्छिन्ना पर्य्येति पृथिवी। तां पृथिवीं तथैव समन्तं द्विस्तावद्द्विगुणेन परिमाणेन समुद्रःपर्य्येति यं घनोदमाचक्षते पौराणिकाः। तत्राण्डकपालयोर्विवरपरिमाणमुच्यते। येन

---

व्या॰ रश्मिव्याप्तेन देशेन सार्द्धं पृथिवी स्मृतेत्युच्यते। रविचन्द्रमसोर्यावन्मयूखैरवभास्यते। ससमुद्रसरिच्छैला तावती पृथिवी स्मृतेत्याह। द्वात्रिंशतमित्यादिना। अयं लोक इत्यस्यार्थमाह। तावदिति। तत्र लोकभागं विभजते। यत्रेति। उक्तं लोकमनूद्यावच्छिन्नस्यालोकत्वमाह। एतावानिति। प्रतीकमादाय व्याचष्टे। लोकमित्यादिना। अन्वयं दर्शयितुं तं लोकमिति पुनरुक्तिः। तत्र पौराणिकसम्मतिमाह। यद्घनोदमिति। उक्तं हि। अण्डस्यास्य समन्तात्तु सन्निविष्टोऽम्नतोदधिः। समन्ताद्घनतोयेन

उ॰ धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाश-
स्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वा-
युरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनो

---

भा॰ विवरेण मार्गेण बहिर्निर्गच्छन्तो व्याप्नुवन्त्यश्वमेधयाजिनः।
तत्र यावती यावत्परिमाणा क्षुरस्य धारा अग्रं यावद्वा
सौक्ष्म्येण युक्तं मक्षिकायाः पत्रं तावांस्तावत्परिमाणोऽन्तरेण
मध्ये कपालयोराकाशश्छिद्रं तेनाकाशेनेत्येतत्तान्पा-
रिक्षितानश्वमेधयाजिनः प्राप्तानिन्द्रः परमेश्वरो योऽश्वमे-
धेऽग्निश्चितः सुपर्णो यद्विषयं दर्शनमुक्तं तस्य प्राची दिक्शिर
इत्यादिना सुपर्णः पक्षी भूत्वा पक्षपुच्छात्मकः सुपर्णो
भूत्वा वायवे प्रायच्छन्मूर्त्तत्वाभावात्स्वात्मनो गतिस्तचेति।
तान्पारिक्षितान् वायुरात्मनि धित्वा स्थापयित्वा स्वात्म-
भूतान्कृत्वा तत्र तस्मिन् अगमयत्। क। यत्र पूर्वेऽतिक्रान्ताः
पारीक्षिता अश्वमेधयाजिनोऽभवन्निति। एवमिव वै एव-
मेव स गन्धर्वो वायुमेव प्रशशंस पारीक्षितानां गतिं। यस्मा-

---

आ॰ सार्थमाहः स तिष्ठतीति। तद्यावतीत्यादेस्तात्पर्यमाह। तत्रेति।
कोशादिपरिमाणे यथोक्तरीत्या स्थिते सतीति यावत्। कपा-
लविवरस्यानुपयुक्तत्वात्किन्तत्परिमाणमित्यपेक्षायामाह । ये-
नेति। व्यवहारभूमिः सत्यर्थः। परमात्मानं व्यावर्तयति। योऽ
श्वमेध इति॥ सुपर्णशब्दस्य श्येनसादृश्यमाश्रित्य चितेऽग्नौ प्रवृत्तिं
दर्शयति । यद्विषयमिति॥ उक्तार्थं पदमनुवदति । सुपर्ण
इति॥ भूत्वेत्यस्यार्थमाह। पक्षीति॥ ननु चितोऽग्निरस्माद्वि-
रश्वमेधयाजिनं गृहीत्वा स्वयमेव गच्छतु किमिति तान्वायवे

उ॰ अवन्नित्येवमिव वै स वायुमेव प्रशशंस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद ततो ह भुज्युर्लाह्यायनिरुपरराम ॥ २ ॥ इति तृतीयं ब्राह्मणं ॥

---

भा॰ षाऽऽख्यायिका तन्निर्वृत्तस्त्वर्थमाख्यायिकातोऽपसृत्य स्वेन श्रुतिरूपेणैवाचष्टेऽस्मभ्यं । यस्माद्वायुः स्थावरजङ्गमानां भूतानामन्तरात्मा बहिश्च स एव तस्मादध्यात्माधिभूताधिदैवभावेन विविधा या व्यष्टिर्व्याप्तिः स वायुरेव । तथा समा व्यष्टिः केवलेन सूत्रात्मना वायुरेव । एवं वायुमात्मानं समष्टिव्यष्टिरूपात्मकत्वेनोपगच्छति । य एवं वेद तस्य किं फलमित्याह । अप पुनर्मृत्युं जयति सकृन्मृत्वा पुनर्न म्रियते । तत आत्मनः प्रश्ननिर्णयाद् भुज्युर्लाह्यायनिरुपरराम ॥ २ ॥ इति श्रीमद्बृहदारण्यके पञ्चमे प्रपाठके तृतीयब्राह्मणभाष्यं ॥ ॥

---

आ॰ प्रयच्छति तत्राह । मूर्त्तत्वादिति ॥ आत्मनश्चित्यस्याप्तेरिति यावत् । तथेत्यस्माकाद्वदेशोक्तिरिति युक्तं । वायवे प्रदानमिति शेषः । आख्यायिकासमाप्ताविति शब्दः । परितो दुरितं क्षीयते येन स परिक्षिदश्वमेधस्तद्याजिनः पारिक्षितास्तेषां गतिं वायुमिति सम्बन्धः ॥ श्रुतिवचने वर्त्तमाने कथमाख्यायिकासमाप्तिस्तत्राह । समाप्तेति ॥ वायुप्रशंसायां हेतुमाह । यस्मादिति ॥ किं पुनर्व्यष्टिसमष्टिवायुतत्त्वविज्ञाने फलं तदाह । एवमिति ॥ २ ॥ इति बृहदारण्यकपञ्चमप्रपाठकभाष्यटीकायां तृतीयं भुज्युब्राह्मणं ॥ ॥

उ॰ अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति

---

भा॰ अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ पुण्यपापप्रयुक्तैर्ग्रहातिग्रहैर्बद्धीतः पुनः पुनर्ग्रहातिग्रहांस्त्यजन्नुपाददत्संसरतीत्युक्तं। पुण्यस्य च पर उत्कर्षो व्याख्यातो व्याकृतविषयः समष्टिव्यष्टिरूपद्वैतैकत्वात्मप्राप्तिः। यस्तु ग्रहातिग्रहैर्बद्धः संसरति सोऽस्ति नास्त्यस्तित्वे च किं लक्षण इत्यात्मन एवं विवेकावगमायोषस्तप्रश्न आरभ्यते। तस्य च निरुपाधिस्वरूपस्य क्रियाकारकविनिर्मुक्तस्वभावस्याधिगमाय योक्ताद्ध्यनादिमुच्यते सम्प्रयोजकात्। आख्यायिकासम्बन्धस्तु प्रसिद्धः। अथ ह एनं प्रकृतं याज्ञवल्क्यं उषस्तो नामतश्च-

---

आ॰ ब्राह्मणान्तरमवतारयति। अथेति॥ तस्यापुनरुक्तमर्थं वक्तुमार्तभागप्रश्ने वृत्तं कीर्तयति। पुण्येति॥ भुज्युप्रश्नान्ते सिद्धमर्थमनुद्रवति। पुण्यस्य चेति॥ नामरूपाभ्यां व्याकृतं जगद्धिरण्यगर्भात्मकं तद्विषयमुत्कर्षं विशिनष्टि। समष्टीति॥ कथं यथोक्तोत्कर्षस्य पुण्यकर्मफलत्वं तत्राह। द्वैतेति॥ सम्प्रत्यागन्तरब्राह्मणस्य विषयं दर्शयति। यस्त्विति॥ माध्यमिकानामन्येषामात्मनो विवादः किं नास्ति देहादीनामन्यतमस्तेभ्यो विलक्षणो वेति यावत्॥ इत्येवं विप्रतिपन्नात्मनो देहादिभ्यो विवेकेनाधिगमायेदं ब्राह्मणमित्याह। इत्यात्मन इति॥ विवेकाधिगमस्य भेदज्ञानत्वेनानर्थकरत्वमाशङ्क्य कहोलप्रश्नतात्पर्यं सङ्क्षिपति। तस्य चेति॥ ब्राह्मणसम्बन्धमुक्त्वा आख्यायिकासम्बन्धमाह। आख्यायिकेति॥ विद्या स्तुत्यर्था सुखावबोधार्था चाख्यायिकेत्यर्थः। भुज्युप्रश्ननिर्णयानन्तर्यमथशब्दार्थः। सम्बोधनमाभिमुख्यकरणार्थं। प्रकृतं व्यवहितमित्युक्ते घटादिवदव्यवधानं गौणमिति प्रश्ने। यदिति॥ तन्निराकर्तुमपरोक्षादित्युक्तं। मुख्यमेव प्रकृतं व्यवहितं

उ॰ होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व इत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति

---

भा॰ कहोलापत्यं चाक्रायणः पप्रच्छ। यद्ब्रह्म साक्षादव्यवहितं केनचिद्द्रष्टुरपरोक्षादगौणं। न श्रोत्रब्रह्मादिवत्किं तद्य आत्मा-त्मशब्देन प्रत्यगात्मोच्यते। तत्रात्मशब्दस्य प्रसिद्धत्वात्सर्व्वस्याभ्यन्तरः सर्व्वान्तरो यद्यः शब्दाभ्यां प्रसिद्ध आत्मा ब्रह्मेति। तमात्मानं मे मह्यं व्याचक्ष्वेति विस्पष्टं। शृङ्गे गृहीत्वा यथा गां दर्शयति तथाऽऽचक्ष्व सोऽयमित्येवं कथयस्वेत्यर्थः॥

एवमुक्तः प्रत्याह याज्ञवल्क्यः। एष ते तव आत्मा सर्व्वान्तरः सर्व्वस्याभ्यन्तरः। सर्व्वविशेषणोपलक्षणार्थं सर्व्वान्तर-

---

आ॰ स्वरूपं ब्रह्म। तथा च द्रष्टृधीनसिद्धत्वाभावात्स्वतोऽपरोक्षमित्यर्थः। श्रोत्रं ब्रह्म मनो ब्रह्मेत्यादि यथा गौणं न तथा गौणं द्रष्टुरव्यवहितं ब्रह्माद्वितीयत्वादित्याह। न श्रोत्रेति। उक्तमव्यवधानमाकाङ्क्षाद्वाराऽनन्तरवाक्येन साधयति। किन्तदित्यादिना॥ तस्य परिच्छिन्नत्वशङ्कां वारयति। सर्व्वस्येति॥ सर्व्वनामभ्यां प्रत्यग्ब्रह्म विशेष्यं समर्प्यते इतरैस्तु शब्दैर्विशेषणानीति विभागमभिप्रेत्याह। यद्यः शब्दाभ्यामिति॥ इतिवच्यते इत्यनेन सम्बध्यते। इतिशब्दो द्वितीयः प्रश्नसमाप्त्यर्थः॥ तमेव प्रश्नं विवृणोति। विस्पष्टमिति॥

तदेवं वाक्यार्थान्वययोग्ये पृष्टे तत्प्रदर्शनार्थं प्रत्युक्तिमवतारयति। एवमुक्त इति॥ सर्व्वान्तर इति विशेषोक्त्या प्रश्नस्य विशेषणान्तराणामनाख्यामाशङ्क्याह। सर्व्वविशेषणेति॥ एष सर्व्वा-

उ॰ स त आत्मा सर्वान्तरो योऽपानेनापानिति स त
आत्मा सर्वान्तरो यो व्यानेन व्यानिति स त

---

भा॰ ग्रहणं। यत्साक्षादव्यवहितं अपरोक्षादगौणं ब्रह्म बृहत्तमम् आत्मा सर्व्वस्याभ्यन्तर एतैर्गुणैः समस्तैर्युक्त एषः। कोऽसौ तवात्मा योऽयं कार्य्यकरणसङ्घातस्तव। स येनात्मनात्मवानेष तवात्मा। तव कार्य्यकरणसङ्घातस्येत्यर्थः। तत्र पिण्डस्याभ्यन्तरे लिङ्गात्मा करणसङ्घातस्तृतीयो यश्च सन्दिह्यमानस्तेषु कतमो मे ममात्मा सर्व्वान्तरस्त्वया विवक्षित इत्युक्तः। इतर आह यः प्राणेन मुखनासिकासञ्चारिणा प्राणिति प्राणचेष्टां करोति येन प्राणः प्रणीयत इत्यर्थः। स ते तव कार्य्यकरणस्यात्मा विज्ञानमयः। समानमन्यत्। योऽपानेनापानिति व्यानेन व्यानितीति छान्दसं दैर्घ्यं। सर्व्वाःकार्य्यकरणसङ्घातगताः प्राणनादिचेष्टा दारुयन्त्रस्येव येन क्रियन्ते। न हि

---

आ॰ न्तर इति भाष्यस्यार्थं विवृणोति। यदिति। एषशब्दार्थं प्रश्नपूर्व्वकमाह। कोऽसाविति। आत्मशब्दार्थं विवृणोति। सोऽयमिति। येनेत्यत्र सम्बन्धो द्रष्टव्यः। षष्ठ्यर्थं सूचयति। तवेति। प्रश्नान्तरमुत्थाप्य प्रतिवक्ति। तत्रेत्यादिना। सर्व्वान्तरस्तवात्मेत्युक्ते सतीति यावत्। तृतीयो मात्रसाक्षी प्रणीयते प्राणनविशिष्टः क्रियत इति यावत्। कथमेतावता सन्देहोऽपाकृत इत्याशङ्क्य विवक्षितमनुमानं वक्तुं व्याप्तिमाह। सर्व्वा इति। या त्वचेतनप्रवृत्तिः सा चेतनाधिष्ठानपूर्व्विका यथा रथादिप्रवृत्तिरित्यर्थः। येन क्रियते सोऽस्तीति सम्बन्धः। दृष्टान्तस्य साध्य-

उ॰ आत्मा सर्व्वान्तरो य उदानेनोदानिति स त आत्मा सर्व्वान्तर एष त आत्मा सर्व्वान्तरः ॥ १ ॥

स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवति यदेव

---

भा॰ चेतनावदनधिष्ठितस्य दारुयन्त्रस्येव प्राणनादिचेष्टा विद्यन्ते। तस्माद्विज्ञानमयेनाधिष्ठितविलक्षणेन दारुयन्त्रवत्प्राणनादिचेष्टां प्रतिपद्यते। तस्मात्सोऽस्ति कार्य्यकरणसङ्घातविलक्षणो यश्चेष्टयति ॥ १ ॥

स होवाचोषस्तश्चाक्रायणो यथा कश्चिदन्यथा प्रतिज्ञाय पूर्व्वं पुनर्विप्रतिपन्नो ब्रूयादन्यथा असौ गौरसावश्वो यश्चलति धावतीति वा पूर्व्वं प्रत्यक्षं दर्शयामीति प्रतिज्ञाय पश्चाच्चलनादिलिङ्गैर्व्यपदिशत्येवमेवैतद्ब्रह्म प्राणनादिलिङ्गैर्व्यपदिष्टं भवति त्वया। किं बहुना त्यक्त्वा गोतृष्णा

---

आ॰ वैकल्यं परिहरति। न हीति॥ सम्प्रत्यनुमानमावतरति। तस्मादिति॥ विमता चेष्टा चेतनाधिष्ठानपूर्व्विका ऽचेतनप्रवृत्तित्वाद्रथादिचेष्टावदित्यर्थः प्रतिपद्यते। प्राणादीति शेषः॥ अनुमानफलमाह। तस्मात्सोऽस्तीति॥ चेष्टयति कार्य्यकरणसङ्घातमिति शेषः॥ १॥

प्रश्नप्रतिवचनयोरनुरूपत्वमाशङ्कते। स होवाचेति॥ दृष्टान्तमेव स्पष्टयति। असावित्यादिना॥ प्रत्यक्षं गामश्वं वा दर्शयामीति पूर्व्वं प्रतिज्ञाय पश्चाद्यश्चलत्यसौ गौर्योवा धावति सोऽश्व इति चलनादिलिङ्गैर्यथा गवादि व्यपदिशतइति। एवमेव ब्रह्मप्रत्यक्षं दर्शयामीति मत्प्रश्नानुसारेण प्रतिज्ञाय प्राणनादिलिङ्गैस्तद्व्यपदिशतस्ते प्रतिज्ञाहानिरनवधेयवचनता स्यादित्यर्थः। प्रतिज्ञा

उ॰ साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरः १

---

भा॰ निमित्तं व्याजं। यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्व्वान्तरस्तं मे व्याचक्ष्वेतीतर आह। यथा मया प्रथमं प्रतिज्ञातस्तव आत्मा एवंलक्षण इति तां प्रतिज्ञामनुवर्त्त एव। तत्तथैव यथोक्तं मया। यत्पुनरुक्तं तमात्मानं घटादिवद्विषयीकुरु इति। तदशक्यत्वान्न क्रियते। कस्मात्पुनस्तदशक्यमित्याह। वस्तुस्वाभाव्यात्। किं पुनस्तद्वस्तुस्वाभाव्यं। दृष्ट्यादिकर्त्तृत्वं। दृष्टेर्द्रष्टा आत्मा। दृष्टिरिति द्विविधा भवति लौकिकी पारमार्थिकी चेति। तत्र लौकिकी चक्षुःसंयुक्तान्तःकरणवृत्तिः। सा क्रियत इति जायते विन-

---

आ॰ प्रश्नावनुसर्त्तव्यौ। बुद्धिपूर्व्वकारित्वेति फलितमाह। किं बहुनेति। प्रत्युक्तितात्पर्य्यमाह। यथेति। प्रतिज्ञानुवर्त्तनमेवाभिनयति। तत्तथेति। कतमो याज्ञवल्क्येत्यादिप्रश्नस्य तात्पर्य्यमाह। यत्पुनरिति। न दृष्टेरित्यादिवाक्यस्य तात्पर्य्यं वदन्नुत्तरमाह। तदशक्यत्वादिति। आत्मनो वस्तुत्वाद्घटादिवद्विषयीकरणं नाशक्यमिति शङ्कते। कस्मादिति। वस्तुस्वरूपमनुसृत्य परिहरति। आहेति। घटादेरपि तर्हि वस्तुस्वाभाव्यान्मा भूद्विषयीकरणमिति मन्वानः शङ्कते। किं पुनरिति। दृष्ट्यादिसाक्षित्वं वस्तुस्वाभाव्यं तस्याविषयत्वं। न चैवं वस्तुस्वाभाव्यं घटादेरस्तीत्युत्तरमाह। दृष्टेरिति। दृष्ट्यादिसाक्षिणोऽपि दृष्टिविषयत्वं किं न स्यादित्याशङ्क्याह। दृष्टिरिति। यथा प्रदीपो लौकिकज्ञानेन प्रकाश्यो न स्वप्रकाशकं ज्ञानं प्रकाशयति तथा दृष्टिसाक्षी दृष्ट्या न प्रकाश्यत इत्यर्थः। दृष्टेर्भङ्गैव नास्तीति सौगता-

उ॰ न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारꣳ शृणुयात्

---

भा॰ श्यति च। या त्वात्मनो दृष्टिरग्न्युष्णप्रकाशादिवत्सा च द्रष्टुः स्वरूपत्वान्न जायते न विनश्यति च। सा क्रियमाणयोपाधिभूतया संसृष्टेवेति व्यपदिश्यते। द्रष्टेति भेदवच्च द्रष्टुर्दृष्टेरिति च। याऽसौ लौकिकी दृष्टिश्चक्षुर्द्वारा रूपोपरक्ता जायमानैव नित्ययाऽऽत्मदृष्ट्या संसृष्टेव तत्प्रतिच्छाया तया व्याप्तैव जायते तया विनश्यति च तेनोपचर्यते द्रष्टा सदा पश्यन्नपि पश्यति न पश्यति चेति॥

न तु पुनर्द्रष्टुर्दृष्टेः कदाचिदप्यन्यथात्वं। तथा च वक्ष्यति षष्ठे। ध्यायतीव लेलायतीव। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति च। तमिममर्थमाह। लौकिक्या

---

आ॰ ऽऽन्यत्वाह। दृष्टिरितीति॥ लौकिकीं व्याचष्टे। तत्रेति॥ पारमार्थिकीं दृष्टिं व्याकरोति। या त्विति॥ नन्वात्मा नित्यदृष्टिस्वभावश्चेत्कथं द्रष्टेत्यादिव्यपदेशः सिध्यति तत्राह। सा क्रियमाणयेति॥ बाह्यबुद्धिवृत्तिरूपं कर्तृत्वं क्रियात्मकमाध्यात्मिकं नित्यदृग्रूपे व्यवक्रियत इत्यर्थः॥ आत्मनो नित्यदृष्टिः स्वभावश्चेत्कथं पश्यति न पश्यति चेति व्यामिश्रो व्यवहार इत्याशङ्क्याह। याऽसाविति॥ या चक्षुर्विशेषणा लौकिकी दृष्टिरसौ तत्प्रतिच्छायेति सम्बन्धः। तया तत्प्रतिच्छायया व्याप्तैवेति यावत्॥

किमित्यौपचारिको व्यपदेशो मुख्यस्तु किं न स्यादित्याशङ्क्याह। न त्विति॥ दृष्टेर्वस्तुतो न विक्रियावत्त्वमित्यत्र वाक्यशेषमनुकूलयति। तथा चेति॥ उक्तेऽर्थे न दृष्टेरित्यादिश्रुतिमवतार्य व्याचष्टे। तमिममित्यादिना॥ उक्तमेव प्रपञ्चयति। योऽसाविति॥ न दृष्टेरित्यादिवाक्यार्थं निगमयति। तस्मादिति॥ उक्त-

उ० न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः ।

---

भा० दृष्टेः कर्मभूताया द्रष्टारं स्वकीयया नित्यया दृष्ट्या व्याप्तारं न पश्येः। या सा लौकिकी दृष्टिः कर्मभूता सा रूपोपरक्ता रूपाभिव्यञ्जिका नात्मानं स्वात्मनो व्याप्तारं मतेर्मनोवृत्तेः केवलाया व्याप्तारं प्रत्यञ्चं व्याप्नोति। तस्मात्तं प्रत्यगात्मानं दृष्टेर्द्रष्टारं न पश्येः। तथा श्रुतेः श्रोतारं न शृणुयाः। तथा मतेर्मनोवृत्तेः केवलाया व्याप्तारं न मन्वीथाः। तथा विज्ञातेः केवलाया बुद्धिवृत्ते-र्व्याप्तारं न विजानीयाः। एष वस्तुनः स्वभावोऽतो नैव दर्शयितुं शक्यते गवादिवत्। न दृष्टेर्द्रष्टारमित्यक्षराण्य-न्यथा व्याचक्षते केचित्। न दृष्टेर्द्रष्टारं दृष्टेः कर्त्तारं दृष्टि-भेदमकृत्वा दृष्टिमात्रस्य कर्त्तारं न पश्येरिति। दृष्टे-रिति कर्मणि षष्ठी। सा दृष्टिः क्रियमाणा घटवत्कर्म

---

आ० न्यायमुत्तरवाक्येष्वतिदिशति। तथेति। उक्तं वस्तुस्वाभाव्य-मुपसंहृत्य फलितमाह। एष इति। न दृष्टेरित्यत्र स्वपक्षमुक्त्वा भर्तृप्रपञ्चपक्षमाह। न दृष्टेरिति। कथमक्षराणामन्यथा व्याख्ये-त्याशङ्क्य तदिष्टमक्षरार्थमाह। न दृष्टेरिति। इतिशब्दो व्याचक्षत इत्यनेन सम्बध्यते। एवं व्याकुर्वतामभिप्रायमाह। दृष्टेरिति। कर्मणि षष्ठीमेव स्फुटयति। सा दृष्टिरिति। षष्ठीं व्याख्याय ततो द्वितीयां व्याचष्टे। द्रष्टारमितीति। पदार्थमुक्त्वा वाक्या-र्थमाह। तेनेति। उक्तां परकीयव्याख्यां दूषयति। तत्रेति। दृष्टिकर्तृत्वविवक्षायां तृजन्तेनैव तत्सिद्धेः षष्ठी निरर्थिकेत्यर्थः। कथं पुनर्व्याख्यातारो यथोक्तदोषं न पश्यन्ति तत्राह। पश्य-

भा॰ भवति । द्रष्टारमिति तृजन्तेन द्रष्टुर्दृष्टिकर्तृत्वमाचष्टे । तेनासौ दृष्टेर्द्रष्टा दृष्टेः कर्त्तेति व्याख्यातृणामभिप्रायः । तत्र दृष्टेरिति षष्ठ्यन्तेन दृष्टिग्रहणं निरर्थकमिति दोषं न पश्यन्ति । पश्यतां वा पुनरुक्तमसारः । प्रमादपाठ इति वानादरः । कथं पुनराधिक्यं तृजन्तेनैव दृष्टिकर्तृत्वस्य सिद्धत्वाद्दृष्टेरिति निरर्थकं । तदा द्रष्टारं न पश्येरित्येतावदेव वक्तव्यं । यस्माद्धातोः परस्तृच्छ्रूयते । तद्धात्वर्थकर्त्तरि हि तृच् स्मर्य्यते । गन्तारं भेत्तारं वा नयतीत्येतावानेव हि शब्दः प्रयुज्यते । न तु गतेर्गन्तारं भिदेर्भेत्तारमित्यसत्यर्थविशेषे प्रयोक्तव्यः । न चार्थवादत्वेन हातव्यं सत्यां गतौ न च प्रमादपाठः । सर्व्वेषामविगानात् । तस्माद्व्याख्यातृणामेव बुद्धिदौर्बल्यं नाध्येतृप्रमादः ।

---

आ॰ तत्रेति ॥ षष्ठीनैरर्थक्यं प्रागुक्तमाकाङ्क्षाद्वारा समर्थयते । कथमित्यादिना ॥ कियत्तर्हि सार्थवदित्याशङ्क्याह । तदेति ॥ तत्र हेतुमाह । यस्मादिति ॥ क्रिया धात्वर्थः । कर्त्ता प्रत्ययार्थः । तथा चैकेनैव पदेनोभयलाभात्पृथक्क्रियाग्रहणमनर्थकमित्यर्थः ॥ दृष्टेरित्यस्यानर्थकत्वं दृष्टान्तेन साधयति । गन्तारमित्यादिना ॥ अर्थवादत्वेन तर्हीदमुपयातमित्याशङ्क्याह । न चेति ॥ विधिशेषत्वाभावादसद्गुणगीत्या चार्थवत्त्वसम्भवादित्यर्थः ॥ अथ यदपश्चे निरर्थकमेवेदं पदं प्रमादात्पठितमिति चेन्नेत्याह । न चेति ॥ सर्व्वेषां काण्वमाध्यन्दिनानामिति यावत् ॥ कथं तर्हीदं पदमनर्थकमिति परेषां प्रतीतिरत आह । तस्मादिति ॥

उ॰ एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तं ततो होषस्तश्चाक्रायण उपरराम ॥ २ ॥ चतुर्थं ब्राह्मणं॥

---

भा॰ यथा त्वस्माभिर्व्याख्यातं लौकिकदृष्टेर्विविच्य नित्यदृष्टिविशिष्ट आत्मा प्रदर्शयितव्यः । तथा कर्मकर्तृविशेषणत्वेन दृष्टिशब्दस्य द्विःप्रयोग उपपद्यते । आत्मरूपनिर्द्धारणाय । न हि द्रष्टुर्दृष्टेरिति च प्रदेशान्तरवाक्येनैवं एकवाक्यतोपपन्ना भवति । तथा चक्षूंषि पश्यन्ति श्रोत्रमिदं श्रुतमिति श्रुत्यन्तरेणैकवाक्यतोपपन्ना । न्यायाच्चैवमेव आत्मनो नित्यत्वमुपपद्यते विक्रियाभावे । विक्रियावच्च नित्यमिति च विप्रतिषिद्धं । ध्यायतीव लेलायतीव न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते । एष नित्यो महिमा ब्राह्मणस्येति च श्रुत्यन्तराण्यन्यथा न गच्छन्ति । ननु द्रष्टा

---

आ॰ कथं पुनर्भवतामपि दृष्टेर्द्विरुपादानमुपपद्यते तत्राह । यथा त्विति ॥ प्रदर्शयितव्यपदादुपरिष्टादिति शब्दो द्रष्टव्यः । कर्तृकर्मविशेषणत्वेन साक्षित्वाद्यसमर्पकत्वेनेति यावत् ॥ तत्समर्पणमिति कुतोपयुज्यते तत्राह । आत्मेति ॥ दृष्ट्यादिसाक्ष्यात्मा न तद्विषय इति तत्स्वरूपनिश्चयार्थं साक्ष्यादिसमर्पणमित्यर्थः । आत्मा नित्यदृष्टिस्वभावो न दृश्यया दृष्टेर्विषय इत्येष चेन्न दृष्टेरित्यादिवाक्यस्यार्थस्तदा न हीत्यादिनाऽस्यैकवाक्यत्वं सिद्ध्यति॥ तस्माद्यथोक्तार्थत्वमेव न दृष्टेरित्यादिवाक्यस्येत्याह । न हीति ॥ आत्मा कूटस्थदृष्टिरित्यत्र तलवकारश्रुतिं संवादयति । तथा चेति ॥ तस्य कूटस्थदृष्टित्वे हेत्वन्तरमाह । न्यायाच्चेति ॥ तमेव न्यायं विशदयति । एवमेवेति ॥ विपक्षे दोषमाह । विक्रियावच्चेति ॥ इतश्चात्मनो नास्ति विक्रियावत्त्वमित्याह । ध्यायतीवेति ॥ अन्यथा विक्रियावत्त्वे सतीति यावत् ॥ अविक्रियत्वेऽपि

उ॰ अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञ-

---

भा॰ श्रोता मन्ता विज्ञातेत्येवमादीन्यक्षराण्यात्मनोऽविक्रियत्वेन गच्छन्तीति। न। यथा प्राप्तलौकिकवाक्यानुवादित्वात्तेषां। नात्मतत्त्वनिर्धारणार्थानि तानि। न दृष्टेर्द्रष्टारमित्येवमादीनामन्यार्थासम्भवाद्यथोक्तार्थपरत्वमवगम्यते। तस्मादनवबोधादेव हि विशेषणं परित्यक्तं दृष्टेरिति। एष तव आत्मा सर्वैरुक्तैर्विशेषणैर्विशिष्टः। अत एतस्मादात्मन अन्यदार्त्तं कार्यं वा शरीरं करणात्मकं वा लिङ्गमेतदेवैकमनार्त्तमविनाशि कूटस्थं। ततो होषस्तश्चाक्रायण उपरराम ॥ २ ॥ इति श्रीमद्बृहदारण्यके पञ्चमे प्रपाठके चतुर्थब्राह्मणभाष्यं ॥ ४ ॥

बन्धनं सप्रयोजकमुक्तं यच्च बद्धस्याप्यासितमधि-

---

आ॰ श्रुत्यक्षराण्युपपन्नानीति शङ्कते। नन्विति॥ न तेषां विरोधो दृष्टो दृष्ट्यादिकर्तृत्वमनुसृत्य प्रवृत्ते लौकिके वाक्ये तदर्थानुवादित्वादुक्तश्रुत्यक्षराणां स्वार्थे प्रामाण्याभावादिति परिहरति। नेत्यादिना॥ न दृष्टेरित्यादीन्यपि तर्हि श्रुत्यक्षराणि न स्वार्थे प्रमाणानीत्याशङ्क्याह। न दृष्टेरिति॥ अन्योऽर्थो दृष्ट्यादिकर्त्ता यथोक्तोऽर्थो दृष्ट्यादिसाक्षी द्रष्टृपदस्य साक्षिविषयत्वे सिद्धे दृष्टेरिति साक्ष्यसमर्पणात्तदर्थवत्त्वोपपत्तिरित्युपसंहरति। तस्मादिति॥ पक्षान्तरं निराकृत्य स्वपक्षमुपपाद्यानन्तरं वाक्यं विभजते। एष इति॥ अन्यदार्त्तमिति विशेषणसामर्थ्यसिद्धमर्थमाह। एतदेवेति॥ २॥ इति श्रीमद्बृहदारण्यके पञ्चमप्रपाठके चतुर्थब्राह्मणभाष्यटीकायां उषस्तब्राह्मणं॥

ब्राह्मणद्वयार्थं सङ्गतिं वक्तुमनु वदति। बन्धनमिति॥ चतुर्थं ब्राह्मणार्थं संक्षिपति। यच्चेति॥ उत्तरब्राह्मणतात्पर्यमाह।

उ० वल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य

भा० गतं व्यतिरिक्तत्वं च। तस्येदानीं बन्धमोक्षसाधनं ससन्न्यासमात्मज्ञानं वक्तव्यमिति कहोलप्रश्न आरभ्यते। अथ ह एनं कहोलो नामतः कुषीतकस्यापत्यं कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाचेति पूर्व्ववत्। यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्व्वान्तरस्तं मे व्याचक्ष्वेति। यं विदित्वा बन्धनात्प्रमुच्यते। याज्ञवल्क्य आह। एष ते तवात्मा। किमुषस्तकहोलाभ्यां एक आत्मा पृष्टः किं वाभिन्नावात्मानौ तुल्यलक्षणाविति। भिन्नाविति युक्तं प्रश्नयोरपुनरुक्तत्वोपपत्तेः। यदि ह्येक आत्मा उषस्तकहोलप्रश्नयोर्विवक्षितस्तत्रैकेनैव प्रश्नेनाधिगतत्वात्तद्विषयो द्वितीयः प्रश्नोऽनर्थकः स्यात्। नचार्थवादरूपत्वं वाक्यस्य। तस्माद्भिन्नावेतावात्मानौ क्षेत्रज्ञपरमात्माख्याविति। केचिद्व्याच-

आ० तस्येति। उषस्तप्रश्नानन्तर्य्यमथशब्दार्थः। पूर्व्ववदित्यभिमुखीकरणार्थं सम्बोधितवानित्यर्थः॥ बन्धध्वंसिज्ञानप्रश्नो नात्र प्रतिभाति किन्त्वनुवादमात्रमित्याशङ्क्याह। यं विदित्वेति। तं व्याचक्ष्वेति पूर्व्वेण सम्बन्धः। प्रश्नयोरवान्तरविशेषप्रदर्शनार्थं पराम्मृशति। किमुषस्तेति॥ तत्र पूर्व्वपक्षं गृह्णाति। भिन्नावितीति॥ उक्तमर्थं व्यतिरेकद्वारा विवृणोति। यदि ह्रीत्यादिना॥ अथैकं वाक्यं वस्तुपरं तस्यार्थवादो द्वितीयं वाक्यं नेत्याह। न चेति॥ द्वयोर्वाक्ययोस्तुल्यत्वत्वाले फलितमाह। तस्मादिति॥ तत्राद्यं वाक्यं क्षेत्रज्ञमधिकरोति। द्वितीयं परमात्मानमित्यभिप्रेत्याह। क्षेत्रज्ञेति॥ ब्राह्मणद्वयेनार्थद्वयं विवक्षितमिति भर्तृप्रपञ्चप्रस्थानं प्रत्याह। तन्नेति॥ प्रश्नप्रतिवचनयोरेकरूपत्वं नार्थभेदोऽस्तीत्युक्तमुपपादयति। एष त इति॥ तथाप्यर्थभेदे काऽनुपपत्ति-

उ० आत्मा सर्व्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्व्वान्तरः ।

---

भा० पृष्टे तस्मै । तवेति प्रतिज्ञानादेष त आत्मेति हि प्रतिवचने प्रतिज्ञातं । न चैकस्य कार्य्यकरणसङ्घातस्य द्वावात्मानावुपपद्येते । एको हि कार्य्यकरणसङ्घात एकेनात्मनात्मवान् चोषस्तस्यान्यः कहोलस्यान्यो जातितो भिन्न आत्मा भवति द्वयोरगौणात्मत्वसर्व्वान्तरत्वानुपपत्तेः । यद्येकमगौणं ब्रह्म द्वयोरितरेणावश्यं गौणेन भवितव्यं तथात्मत्वं सर्व्वान्तरत्वं च विरुद्धत्वात्पदार्थानां यद्येकं सर्व्वान्तरं ब्रह्मात्मा मुख्य इतरेणासर्व्वान्तरेणानात्मनाऽमुख्येनावश्यं भवितव्यं तस्मादेकस्यैव द्विःश्रवणं विशेषविवक्षायां ॥

---

आ० तत्राह । न चेति ॥ तदेवोपपादयति । एको हीति ॥ कार्य्यकरणसङ्घातभेदादात्मभेदमाशङ्क्याह । न चेति ॥ जातितः स्वभावतोऽहमहमित्येकाकारत्वादित्यर्थः ॥ इतश्च न तत्त्वभेद इत्याह । द्वयोरिति ॥ तदेव स्फुटयति । यदीति ॥ द्वयोर्मध्ये यद्येकं ब्रह्मागौणं तदेतरेण गौणेनावश्यं भवितव्यं तथात्मत्वादि यद्येकस्येष्टं तदेतरस्यानात्मत्वादि कुतः स्यादिति चेत्तत्राह । विरुद्धत्वादिति ॥ उक्तोपपादनपूर्व्वकं द्विःश्रवणस्याभिप्रायमाह । यदीत्यादिना । अनेकमुख्यत्वासम्भवाद्वस्तुतः परिच्छिन्नस्य घटवदब्रह्मत्वादनात्मत्वाच्चैकमेव मुख्यं प्रत्यग्भूतं ब्रह्मेत्यर्थः ॥ यदि जीवेश्वरभेदाभावात्प्रश्नयोर्नार्थभेदस्तर्हिं पुनरुक्तिरनर्थिकेत्याशङ्क्याह । तस्मादिति ॥

भा० यत्तु पूर्व्वोक्तेन समानं द्वितीये प्रश्नान्तरे उक्तं तावन्मात्रं पूर्व्वस्यैवानुवादस्तस्यैवानुक्तः कश्चिद्विशेषो वक्तव्य इति। कः पुनरसौ विशेष इत्युच्यते। पूर्व्वस्मिन्प्रश्ने अस्ति व्यतिरिक्त आत्मा यस्यायं सप्रयोजको बन्ध उक्त इति। द्वितीये तु तस्यैवात्मनोऽशनायादिसंसारधर्म्मातीतत्वं विशेष उच्यते। यद्विशेषपरिज्ञानात्सन्याससहितात्पूर्व्वोक्ताद्बन्धनाद्विमुच्यते तस्मात्प्रश्नप्रतिवचनयोरेष त आत्मेत्येवमन्तयोस्तुल्यार्थतैव। ननु कथमेकस्यैवात्मनोऽशनायाद्यतीतत्वं बद्धत्वञ्चेति विरुद्धधर्म्मसमवायित्वमिति न परिहृतत्वान्नामरूपविकारकार्य्यकरणलक्षणसङ्घातोपाधिभेदसम्पर्कजनितभ्रान्तिमात्रं

---

आ० तर्हि स एव विशेषो दर्शयितव्यो येन पुनरुक्तिरर्थवतीत्याशङ्क्याह। यत्त्विति। अनुक्तविशेषकथनार्थमुक्तपरिमाणं निर्द्देष्टुमुक्तानुवादश्चेदनुक्तो विशेषस्तर्हि प्रदर्श्यतामिति पृच्छति। कः पुनरिति। बुभुत्सितं विशेषं दर्शयति। उच्यत इति। इतिशब्दं क्रियापदेन सम्बध्यते। किमित्येष विशेषो निर्द्दिश्यते तत्राह। यद्विशेषेति। अर्थभेदासम्भवे फलितमाह। तस्मादिति। योऽशनायेत्यादिना तु विवक्षितविशेषोक्तिरिति शेषः। एकमेवात्मतत्त्वमधिकृत्य प्रश्नाविति चोदयति। नन्विति॥ विरुद्धधर्म्मवत्त्वान्मिथो भिन्नौ प्रश्नार्थावित्येतत् दूषयति। नेति। परिहृतत्वमेव प्रकटयति। नामरूपेति। तयोर्विकारः कार्य्यकरणलक्षणः सङ्घातः स एवोपाधिभेदस्तेन सम्पर्कस्तस्मिन्नहं ममाध्यासस्तेन जनिता भ्रान्तिरहं कर्त्तेत्याद्या तावन्मात्रसंसारित्वमित्यनेकशो व्युत्पादितं। तस्मान्नास्ति वस्तुतो विरुद्धधर्म्मवत्त्वमित्यर्थः। किञ्च सविशेषत्वनिर्विशेषत्वश्रुत्योर्विषयविभागोक्तिप्रसङ्गेन संसारित्वस्य मिथ्यात्वं मधुब्राह्मणान्तेऽवोचामेत्याह। विरुद्धेति। कथं तर्हि विरुद्धधर्म्मवत्त्वप्रतीतिरित्याशङ्क्याह। यथेति। मरेव पुरुषेणाज्ञानेन वाध्यारोपितैः सर्पत्वादिभिर्धर्म्मैर्विशिष्टा इति यावत्।

भा॰ हि संसारित्वमित्ययमदोषः। विरुद्धश्रुतिव्याख्यानप्रसङ्गेन च यथा रज्जुशुक्तिकागगनादयः सर्परजतमलिना भवन्ति पराध्यारोपितधर्मविशिष्टाः स्वतः केवला एव रज्जुशुक्तिकागगनादयः। न चैवं विरुद्धधर्म्मसमवायित्वे पदार्थानां कश्चन विरोधो नामरूपोपाध्यस्तित्वेनैकमेवाद्वितीयं। नेह नानास्ति किञ्चनेति श्रुतयोर्विरुद्धोरन्निति चेन्न। सलिलफेनदृष्टान्तेन परिहृतत्वान्मृदादिदृष्टान्तैश्च। यदा तु परमार्थदृष्ट्या परमात्मतत्त्वात् श्रुत्यनुसारिभिरन्यत्वेन निरूप्यमाणे नामरूपे मृदादिविकारवद्वस्त्वन्तरे तत्त्वतो न स्तः सलिलफेनघटादिविकारवदेव। तदा तदपेक्षयैकमेवाद्वितीयं नेह नानास्ति किञ्चनेत्यादिपरमार्थदर्शनगोचरत्वं प्रतिपद्यते॥

---

आ॰ स्वतश्चाध्यारोपेण विनेत्यर्थः। प्रतिभासतो विरुद्धधर्म्मवत्त्वेऽपि जीवेश्वरयोर्भिन्नत्वाद्भिन्नार्थावेव प्रश्नाविति चेन्नेत्याह। न चैवमिति। निरुपाधिकरूपेणासंसारित्वं सोपाधिकरूपेण संसारित्वमित्यविरोध उक्तः। इदानीमुपाध्यभ्युपगमे सद्वयत्वं एतस्यैव घटादेरुपाधित्वदृष्टेरिति शङ्कते। नामेति। सलिलातिरेकेण न सन्ति फेनादयो विकारा नापि मृदाद्यतिरेकेण तद्विकाराः शरावादयः सन्तीति दृष्टान्ताभ्यां युक्तिबलादविद्यानामरूपप्रपञ्चितकार्य्यकरणसङ्घातस्याविद्यामात्रत्वात्तस्याश्च विद्यया निरासान्नैवमिति परिहरति। नेत्यादिना। कार्य्यसत्त्वमभ्युपगम्योक्तिः इदानीं तदपि निरूप्यमाणे नास्तीत्याह। यदा त्विति॥ नेह नानास्ति किञ्चनेत्यादिश्रुत्यनुसारिभिर्वस्तुदृष्ट्या निरूप्यमाणे नामरूपे परमात्मतत्त्वादन्यत्वेनानन्यत्वेन चानिरूप्यमाणे तत्त्वतो वस्त्वन्तरे यदा तु न स्त इति सम्बन्धः। मृदादिविकारवदित्युक्तं प्रकटयति। सलिलेति। तदा तत्परमात्मतत्त्वमपेक्ष्येति योजनीयः॥

उ॰ कतमो याज्ञवल्क्य सर्वान्तरो योऽशनाया-
पिपासे शोकं मोहं जरां मृत्युमत्येति ॥

भा॰ यदा तु स्वाभाविक्याऽविद्यया ब्रह्मस्वरूप रज्जुशुक्तिकागगनस्वरूपवदेव स्वेन रूपेण वर्त्तमानं केनचिदस्पृष्टस्वभावमपि सन्नामरूपकृतकार्य्यकरणोपाधिभ्यो विवेकेन नावधार्य्यते नामरूपोपाधिदृष्टिरेव च भवति स्वाभाविकी तदा सर्व्वोऽयं वस्त्वन्तरास्तित्वव्यवहारोऽस्ति चायमेदकृतो मिथ्याव्यवहारो येषां ब्रह्मतत्त्वादन्यत्वेन वस्तु विद्यते येषां च नास्ति परमार्थवादिभिस्तु श्रुत्यनुसारेण निरूप्यमाणे वस्तुनि किं तत्त्वतोऽस्ति वस्तु किं वा नास्तीति ब्रह्मैकमेवाद्वितीयं सर्व्वसंव्यवहारशून्यमिति निर्धार्य्यते तेन न कश्चिद्विरोधः । न हि परमार्थावधारणनिष्ठायां वस्त्वन्तरास्तित्वं प्रतिपद्यामहे । एकमेवा-

आ॰ कदा तर्हि लौकिको व्यवहारस्तत्राह । यदा त्विति । अविद्यया स्वाभाविक्या ब्रह्म यदोपाधिभ्यो विवेकेन नावधार्य्यते तदा लौकिको व्यवहारश्चेत्तर्हि विवेकिनां नासौ स्यादित्याशङ्क्याह । अस्ति चेति । भेदभानप्रयुक्तो व्यवहारो विवेकिनामविवेकिनाञ्च तुल्य एवायं वस्त्वन्तरास्तित्वाभिनिवेशस्तु विवेकिनां नास्तीति विशेषः॥ ननु यथा प्रतिभासं वस्त्वन्तरं पारमार्थिकमेव किं न स्यात्तत्राह । परमार्थेति । किं द्वितीयं वस्तु तत्त्वतोऽस्ति किं वा नास्तीति वस्तुनि निरूप्यमाणे सति श्रुत्यनुसारेण तत्त्वदर्शिभिरेकमेवाद्वितीयं ब्रह्माव्यवहार्य्यमिति निर्धार्य्यते तेन व्यवहारदृष्ट्याश्रयणेन भेदकृतो मिथ्याव्यवहारस्तत्त्वदृष्ट्याश्रयणेन च तदभावविषयः शास्त्रीयो व्यवहार इत्युभयविधव्यवहारसिद्धिरित्यर्थः॥ तत्र शास्त्रीयव्यवहारोपपत्तिं प्रपञ्चयति । न

भा॰ द्वितीयमनन्तरमवाह्यमिति श्रुतेः । न च नामरूपव्यव
हारकाले त्वविवेकिनां क्रियाकारकफलादिसंव्यवहारो
नास्तीति प्रतिषिध्यते । तस्माद् ज्ञानाज्ञाने ऽपेक्ष्य सर्व्वः
संव्यवहारः शास्त्रीयो लौकिकश्च । अतो न काचन विरो-
धाशङ्का । सर्व्ववादिनामप्यपरिहार्य्यः परमार्थसंव्यवहार-
कृतो व्यवहारः । तत्र परमार्थात्मस्वरूपमपेक्ष्य प्रश्नः
पुनः कतमो याज्ञवल्क्य सर्व्वान्तर इति । प्रत्याहेतरो
योऽशनायापिपासे । अशितुमिच्छा अशनाया । पातु-
मिच्छा पिपासा । तेऽशनायापिपासे योऽत्येतीति वक्ष्य-
माणेन सम्बन्धः ॥

---

आ॰ ह्यीति । तथा च विद्यावस्थायां शास्त्रीयो भेदव्यवहारस्तदितर-
व्यवहारस्त्वाभासमात्रमिति शेषः ॥ अविद्यावस्थायां लौकिकव्य-
वहारोपपत्तिं विवृणोति । न च नामेति ॥ उभयविधव्यवहा-
रोपपत्तिमुपसंहरति । तस्मादिति ॥ उक्तरीत्या व्यवहारद्वयो-
पपत्तौ फलितमाह । अत इति । प्रत्यक्षादिषु वेदान्तेषु चेति शेषः।
ज्ञानाज्ञाने पुरस्कृत्य व्यवहारः शास्त्रीयो लौकिकश्चेति नास्मा-
भिरेवोच्यते किन्तु सर्व्वेषामपि परीक्षकाणामेतत्सम्मतं ॥ संसा-
रदशायां क्रियाकारकव्यवहारस्य मोक्षावस्थायाञ्च तदभावस्ये-
ष्टत्वादित्याह । सर्व्ववादिनामिति । निरुपाधिके परस्मिन्नात्मनि
चिज्ज्ञानावनाद्यविद्याकल्पितोपाधिकृतमशनायादिमत्त्वं वस्तु
तन्नास्त्येवमित्युपपाद्यानन्तरप्रश्नमुत्थाप्य प्रतिवक्ति । तत्रेत्या-
दिना । कल्पिताकल्पितयोरात्मरूपयोर्निर्द्धारणायां सप्तमी ।
योऽत्येति स सर्व्वान्तरत्वादिविशेषणवानात्मेति शेषः ॥

उ॰ एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय ।

---

भा॰ अविवेकिभिस्तलमलवदिव गगनं गम्यमानमेव तलमले अत्येति परमार्थतस्ताभ्यामसंस्पृष्टस्वभावत्वात्तथा मूढैरशनायापिपासादिमद्ब्रह्म गम्यमानमपि क्षुधितोऽहं पिपासितोऽहमिति ते अत्येत्येव । परमार्थतस्ताभ्यामसंस्पृष्टस्वभावत्वात् । न लिप्यते लोकदुःखेन बाह्य इति श्रुतेरविद्वल्लोकाध्यारोपितदुःखेनेत्यर्थः । प्राणैकधर्मत्वात्समासकरणं अशनायापिपासयोः शोकं मोहं । शोक इति काम इष्टं वस्तूद्दिश्य चिन्तयतो यदरमणं तत्तृष्णाभिभूतस्य कामबीजं तेन हि कामो दीप्यते । मोहस्तु विप-

---

आ॰ ननु परोऽशनायादिमान्प्रसिद्धेर्नापि जीववत्तथा तस्य परस्माद्व्यतिरेकादत आह । अविवेकिभिरिति । परमार्थत इति उभयतः सम्बध्यते ब्रह्मैवाखण्डं सच्चिदानन्दमनाद्यविद्यातत्कार्यंबुद्ध्यादिसम्बद्धमाभासद्वारा स्वानुभवादशनायादिमद्भाव्यते तत्त्वं वस्तुतो विद्याद्यसम्बन्धादशनायाद्यतीतं नित्यमुक्तं तिष्ठतीत्यर्थः । अशनायापिपासादिमद्ब्रह्म गम्यमानमिति वदन्नाचार्य्यो नाना जीववादस्यानिष्टत्वं सूचयति । परमार्थतो ब्रह्मणोऽशनायाद्यसम्बन्धे मानमाह । न लिप्यत इति ॥ बाह्यत्वमसङ्गत्वं लोकदुःखेनेत्ययुक्तं लोकस्यात्मनो दुःखसम्बन्धाभ्युपगमादित्याशङ्क्याह । अविद्वदिति । अशनायापिपासयोः समस्योपादाने हेतुमाह । प्राणेति ॥ अरतिवाची शोकशब्दो न कामविषय इत्याशङ्क्याह । इष्टमिति ॥ कामबीजत्वमरतेरनुभवेनाभिव्यनक्ति । तेन हीति । कामस्य शोको बीजमिति स कामतया व्याख्यातोऽनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिर्विपरीतप्रत्ययस्तस्मान्म-

उ॰ अथ भिक्षाचर्य्यं चरन्ति या ह्येव पुत्रैषणा सा

---

भा॰ रीतप्रत्ययप्रभवोऽविवेको भ्रमः । स चाविद्या सर्व्वस्यानर्थस्य प्रसववीजं भिन्नकार्य्यत्वात्तयोः शोकमोहयोरसमासकरणं । तौ मनोऽधिकरणौ । तथा शरीराधिकरणौ । जरां मृत्युं चात्येति । जरेति कार्य्यकरणसङ्घातविपरिणामो वलीपलितादिलिङ्गो मृत्युरिति तद्विच्छेदो विपरिणामावसानः । तौ जरामृत्यू शरीराधिकरणावत्येति । ये तेऽशनायादयः प्राणमनःशरीराधिकरणाः प्राणिष्वनवरतं वर्त्तमाना अहोरात्रादिवत्समुद्रोर्म्मिवच्च प्राणिषु संसार इत्युच्यते ॥

योऽसौ दृष्टेर्द्रष्टेत्यादिलक्षणः स साक्षादव्यवहितो परोक्षाद्गौणः सर्व्वान्तर आत्मा ब्रह्मादिस्तम्बपर्य्यन्तानां

---

आ॰ नहि प्रभवति कर्त्तव्याकर्त्तव्याविवेकः स लौकिकः सम्यग्ज्ञानविरोधी भ्रमोऽविद्येत्युच्यते ॥ तस्याः सर्व्वानर्थोत्पत्तौ निमित्तत्वं मूलाविद्याया इत्युपादानत्वं तदेतदाह । मोहस्त्विति । कामस्य शोको मोहो दुःखस्य हेतुरिति भिन्नकार्य्यत्वं तद्विच्छेद इत्यत्र कार्य्यकरणसङ्घातशब्दार्थः ॥ संसारादिरस्मास्य पारिशाव्यं यत्तमुत्तरं वाक्यमित्यभिप्रेत्य सङ्क्षेपतः संसारस्वरूपमाह । एत इत्यादिना ॥ तेषामात्मधर्म्मत्वं व्यावर्त्तयितुं विशिनष्टि । प्राणेति ॥ तेषां स्वरसतो विच्छेदशङ्कां वारयति । प्राणिष्विति ॥ प्रवाहरूपेण नैरन्तर्य्ये दृष्टान्तमाह । अहोरात्रादिवदिति ॥ तेषामति चपलत्वे दृष्टान्तः । समुद्रोर्म्मिवदिति ॥ तेषां हेयत्वं द्योतयति । प्राणिष्विति । ये यथोक्ताः प्राणिष्वशनायादयस्ते तेष्वसंसार इत्युच्यन्त इति योजना ॥

एतं वै तमित्यत्र तच्छब्दार्थं उषस्तप्रश्नोक्तं त्वंपदार्थं कथयति । योऽसाविति ॥ एतच्छब्दार्थं कहोलप्रश्नोक्तं तत्पदार्थं

उ॰ वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः ।

---

भा॰ भूतानां अशनायापिपासादिभिः संसारधर्म्मैः सदा न स्पृश्यते । आकाश इव घनादिमलैः । तमेतं वै आत्मानं स्वतत्त्वं विदित्वा ज्ञात्वाऽयमहमस्मि परं ब्रह्म सदा सर्व्वसंसारविनिर्मुक्तं नित्यतृप्तमिति ब्राह्मणाः । ब्राह्मणानामेवाधिकारो व्युत्थाने । अतो ब्राह्मणग्रहणं व्युत्थाय वैपरीत्येनोत्थानं कृत्वा कुत इत्याह । पुत्त्रैषणायाः पुत्त्रार्था एषणा पुत्त्रैषणा । पुत्त्रेणेमं लोकं जयेयमिति लोकजयसाधनं पुत्त्रप्रतीच्छा एषणा दारसंग्रहः । दारसंग्रहमकृत्वेत्यर्थः । वित्तैषणायाश्च कर्म्मसाधनस्य गवादेरुपादानं अनेन कर्म्म कृत्वा पितृलोकं जेष्यामीति विद्यासंयुक्तेन वा देवलोकं केवलया वा हिरण्यगर्भविद्यया दैवेन वित्तेन

---

आ॰ दर्शयति । अशनायेति ॥ तयोरैक्यं सामानाधिकरण्येन सूचितमित्याह । तमेतमिति ॥ ज्ञानमेव विशदयति । अयमित्यादिना । ज्ञात्वा ब्राह्मणा व्युत्थाय भिक्षाचर्य्यं चरन्तीति सम्बन्धः ॥ सन्न्यासविधायके वाक्ये किमित्यधिकारिविशेषं ब्राह्मणपदं तत्राह । ब्राह्मणानामिति ॥ पुत्त्रार्थमेषणामेव विवृणोति । पुत्त्रेणेति ॥ ततो व्युत्थानं सङ्गृह्णाति । दारसङ्ग्रहमिति ॥ वित्तैषणायाश्च व्युत्थानं कर्त्तव्यमित्याह । वित्तेति ॥ वित्तं द्विविधं मानुषं दैवं च । मानुषं गवादि । तस्य कर्म्मसाधनस्योपादानमुपार्ज्जनं । तेन कर्म्म कृत्वा केवलेन कर्म्मणा पितृलोकं जेष्यामि । दैवं वित्तं विद्या । तत्संयुक्तेन कर्म्मणा देवलोकं केवलया च विद्यया तमेव जेष्यामीतीच्छा वित्तैषणा ॥ ततश्च व्युत्थानं कर्त्तव्यमिति व्याचष्टे । कर्म्म-

भा॰ देवलोकं । दैवाद्वित्ताद् व्युत्थानमेव नास्तीति केचित् । यस्मात्तद्बलेन हि किल व्युत्थानमिति । तदसत् । एतावान्वै काम इति पठितत्वात् एषणामध्ये । दैवस्य वित्तस्य हिरण्यगर्भादिदेवताविषयैव विद्याऽविद्येत्युच्यते । देवलोकहेतुत्वात् । न हि निरुपाधिकप्रज्ञानघनविषया ब्रह्मविद्या देवलोकप्राप्तिहेतुः । तस्मात्तत्सर्व्वमभवत् । आत्मा ह्येषां स भवतीति श्रुतेः । तद्बलेन हि व्युत्थानं । एतं वै तमात्मानं विदित्वेति विशेषवचनात् ॥

तस्मात्त्रिभ्योऽप्येतेभ्योऽनात्मलोकप्राप्तिसाधनेभ्य एषणाविषयेभ्यो व्युत्थाय एषणाकाम एतावान्वै काम इति श्रुतेरेतस्मिंस्त्रिविधेऽनात्मलोकप्राप्तिसाधने तृष्णामकृत्वेत्यर्थः । सर्व्वा हि साधनेच्छा फलेच्छैव । अतो व्याचष्टे श्रुतिरेकैवैष-

---

टी॰ साधनस्येति ॥ एतेन लोकैषणायाश्च व्युत्थानमुक्तं वेदितव्यं दैवाद्वित्ताद्व्युत्थानमाक्षिपति । दैवादिति ॥ तस्यापि कामत्वात्ततो व्युत्थातव्यमिति परिहरति । तदसदिति ॥ तर्हि ब्रह्मविद्यायाः सकाशादपि व्युत्थानात्तन्मूलध्वंसे तद्व्याघातः स्यादित्याशङ्क्याह । हिरण्यगर्भादिति ॥ देवतोपासनाया वित्तशब्दोक्तविद्यात्वे हेतुमाह । देवलोकेति ॥ तत्प्राप्तिहेतुत्वं ब्रह्मविद्यायामपि तुल्यमिति चेन्नेत्याह । न हीति ॥ तत्र फलान्तरश्रवणं हेतूकरोति । तस्मादिति ॥ इतश्च ब्रह्मविद्या दैवाद्वित्तादतिरिक्तेत्याह । तद्बलेनेति ॥

प्रागेव वेदनं सिद्धञ्चेत्किं पुनर्व्युत्थानेनेत्याशङ्क्य प्रयोजकज्ञानं तत्प्रयोजकमुद्देश्यन्तु तत्त्वसाक्षात्करणमिति विवक्षित्वाह । तस्मादिति । प्रयोजकज्ञानं पञ्चम्यर्थः । व्युत्थाय भिक्षाचर्य्यं चरन्तीति सम्बन्धः ॥ व्युत्थानस्वरूपं प्रदर्शनार्थमेषणास्वरूपमाह । एषणेति । किमेतावत्त्वेत्याशङ्क्य व्युत्थानस्वरूपमाह । एतस्मिन्निति । सम्बन्धस्तु पूर्व्ववत् ॥ या ह्येवेत्यादिश्रुतेस्तात्पर्य्यमाह । सर्व्वा

भा॰ षेति। कथं या ह्येव पुत्रैषणा सा वित्तैषणाऽदृष्टफलसा-
धनत्वतुल्यत्वाद्या वित्तैषणा कर्म्मभूता सा लोकैषणा
फलार्थैव सा सर्व्वः फलार्थप्रयुक्त एव हि सर्व्वं साधन-
मुपादत्ते। अत एकैवैषणा लोकैषणा या सा साधनमन्त-
रेण सम्पादयितुं न शक्यत इति साध्यसाधनभेदेनोभे हि
यस्मादेते एषणे एव भवतस्तस्माद्ब्रह्मविदो नास्ति कर्म्म
कर्म्मसाधनं वा। अतो येऽतिक्रान्ताः ब्राह्मणाः सर्व्वं कर्म्म
कर्म्मसाधनञ्च सर्व्वं देवपितृमानुषनिमित्तं यज्ञोपवीतादि।
तेन हि दैवं पित्र्यं मानुषञ्च कर्म्म क्रियते। निवीतं मनुष्या-
णामित्यादिश्रुतेस्तस्मात्पूर्व्वे ब्राह्मणा ब्रह्मविदो व्युत्थाय
कर्म्मभ्यः कर्म्मसाधनेभ्यश्च यज्ञोपवीतादिभ्यः परमहंसपारि-
व्राज्यं प्रतिपद्य भिक्षाचर्य्यं चरन्तिः। भिक्षार्थं चरणं
भिक्षाचर्य्यं चरन्ति त्यक्त्वास्मार्त्तं लिङ्गं केवलाश्रम-
मात्रशरणानां जीवनसाधनं पारिव्राज्यव्यञ्जकं विद्वांलि-

---

आ॰ हीति। फलं नेच्छति साधनञ्च चिकीर्षतीति व्याघातात्फलेच्छान्त-
र्भूतैव साधनेच्छा तद्युक्तमेषणैक्यमित्यर्थः॥ श्रुतिस्तदैक्यमुत्पादकत्वं
प्रश्नपूर्व्वकं व्युत्पादयति॥ कथमित्यादिना॥ फलैषणान्तर्भावं
साधनैषणायाः समर्थयते। सर्व्व इति। उभे हीत्यादिश्रुतिमव-
तार्य्य व्याचष्टे। लोकैषणेति। प्रयोजकज्ञानवतः साध्यसाधनरू-
पात्संसाराद्विरक्तस्य कर्म्मतत्साधनयोरसम्भवे साक्षात्कारमुद्दिश्य
कथितं सन्न्यासं दर्शयति। अत इति। अतिक्रान्ता ब्राह्मणाः किं
प्रजयेत्यादिप्रकाशितास्तेषां कर्म्म कर्म्मसाधनञ्च यज्ञोपवीतादि
नास्तीति पूर्व्वेण सम्बन्धः॥ देवपितृमानुषनिमित्तमिति विशेषणं
विशदयति। तेन हीति। प्राचीनावीतं पितॄणामुपवीतं देवाना-
मित्यादिशब्दार्थः॥ यस्मात्पूर्व्वे विचारप्रयोजकज्ञानवतो ब्राह्मणा

भा॰ त्रवर्जितः। तस्मादलिङ्गो धर्मज्ञोऽव्यक्तलिङ्गोऽव्यक्ताचार इति स्मृतिभ्यः। अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रह इत्यादिश्रुतेः सशिखान्केशान्निकृत्य विसृज्य यज्ञोपवीतमिति च। ननु व्युत्थाय भिक्षाचर्य्यं चरतीति वर्त्तमानापदेशादर्थवादोऽयं न विधायकः प्रत्ययः कश्चिच्छ्रूयते लिङ्लोट्तव्यानामन्यतमोऽपि। तस्मादर्थवादमात्रेण श्रुतिस्मृतिविहितानां यज्ञोपवीतादीनां साधनानां न शक्यते परित्यागः कारयितुं। यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा॥

पारिव्राज्ये तावदध्ययनं विहितं वेदसन्न्यसनाच्छूद्रस्तस्माद्वेदं न संन्यसेदिति स्वाध्याय एवोत्सृजमानो वाचमिति चापस्तम्बः। ब्रह्मोज्झं वेदनिन्दा च कौटसाक्ष्यं सुहृद्वधः। गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षडिति वेदपरि-

---

आ॰ विरक्ताः सन्न्यस्य तत्प्रयुक्तं धर्म्ममन्वतिष्ठंस्तस्मादधुनातनोऽपि प्रयोजककामी विरक्तो ब्राह्मणस्तथा कुर्य्यादित्याह। तस्मादिति॥ चिह्नत्वेन यतिस्त्वेवेत्यादिस्मृतेर्न परमहंसपारिव्राज्यमर्चविवक्षितमित्याशङ्क्याह। तत्रेति॥ तस्य दृष्टार्थत्वान्मुमुक्षुभिस्त्याज्यत्वं सूचयति। केवलमिति॥ अमुख्यत्वाच्च तस्य त्यज्यतेत्याह। पारिव्राज्येति। तथापि त्वदिष्टः सन्न्यासो न स्मृतिकारैर्निबद्ध इति चेन्नेत्याह। विद्वानिति॥ प्रत्यक्षश्रुतिविरोधाच्च स्मार्तसन्न्यासो मुख्यो न भवतीत्याह। अथेति॥ एतं वै तमित्यादि वाक्यस्य विधायकत्वमुपेत्य सर्व्वकर्म्मतत्साधनपरित्यागपरत्वमुक्तमाक्षिपति। नन्विति॥ इतश्च यज्ञोपवीतमपरित्याज्यमित्याह। यज्ञोपवीत्येवेति॥

याजनादिसमभिव्याहारादसन्न्यासिविषयमेतदित्याशङ्क्याह। पारिव्राज्ये तावदिति॥ वेदत्यागे दोषश्रुतेस्तदत्यागेऽपि कथं परिव्राज्ये यज्ञोपवीतित्वमित्याशङ्क्याह। उपासन इति।

भा॰ त्यागे दोषश्रवणादुपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्म्मणि भोजने आचमने स्वाध्याये च यज्ञोपवीती स्यादिति परिव्राजकधर्म्मेषु च। गुरूपासनस्वाध्यायभोजनाचमनादीनां कर्म्मणां श्रुतिस्मृतिषु कर्त्तव्यतया चोदितत्वात्। गुर्व्वाद्युपासनाङ्गत्वेन यज्ञोपवीतस्य विहितत्वात्तत्परित्यागो नैवावगन्तुं शक्यते। यद्यप्येषणाभ्यो व्युत्थानं विधीयत एव तथापि पुत्राद्येषणाभ्यस्त्रिभ्य एव व्युत्थानं न तु सर्व्वस्मात्कर्म्मणः कर्म्मसाधनाच्च व्युत्थानं सर्व्वपरित्यागे चाश्रुतं कृतं स्यात्कृतञ्च यज्ञोपवीतादि हापितं स्यात्। तथा च महानपराधो विहिताकरणप्रतिषिद्धाचरणनिमित्तः कृतः स्यात्तस्माद्यज्ञोपवीतादिलिङ्गपरित्यागोऽन्धपरम्परैव। न यज्ञोपवीतं वेदांश्च सर्व्वं तद्वर्जयेद्यतिरिति श्रुतेरपि चात्मज्ञानपरत्वात्सर्व्वस्या उपनिषद आत्मा द्रष्टव्यः श्रोतव्यो मन्तव्य

---

आ॰ इत्यनेन वाक्येन गुर्व्वाद्युपासनाङ्गत्वेन यज्ञोपवीतस्य विहितत्वात्परिव्राजकधर्म्मेषु गुरूपासनादीनां कर्त्तव्यतया श्रुतिस्मृतिषु चोदितत्वाद्यज्ञोपवीतपरित्यागोऽवगन्तुं नैव शक्यत इत्यन्वयः। सम्प्रति प्रौढिमारूढो व्युत्थाने विधिमङ्गीकृत्यापि दूषयति। यद्यपीत्यादिना॥ एषणाभ्यो व्युत्थाने सति एषणात्वाविशेषात्कर्म्मतत्साधनाच्च व्युत्थानं सेत्स्यतीत्याशङ्क्य यज्ञोपवीतादेरेषणात्वमसिद्धमित्याशयेनाह। सर्व्वेति॥ अश्रुतकरणे श्रुतत्यागे चाकुर्व्वन् विहितं कर्म्मेत्यादिस्मृतिमाश्रित्य दूषणमाह। तथा चेति॥ ननु दृश्यते यज्ञोपवीतादिलिङ्गत्यागः स कस्मान्निराक्रियते तत्राह। तस्मादिति॥ नेयमन्धपरम्परेति परिहरति। नेत्यादिना॥ ब्रह्मचर्य्यादेव प्रव्रजेदित्यादि विध्युपलम्भेऽपि प्रौढवादेनात्मज्ञानविधिवादेव सन्न्यासं साधयितुमात्मज्ञानपरत्वं ताव-

भा॰ इति हि प्रस्तुतं। स चात्मैव साक्षादपरोक्षात्सर्व्वान्तरोऽशना-
यादिसंसारधर्म्मवर्जित इत्येवं विज्ञेय इति तावत्प्रसिद्धं।
सर्व्वा ह्येयमुपनिषदेवंपरेति विध्यन्तरशेषत्वं तावन्नास्त्यतो
नार्थवादः। आत्मज्ञानस्य कर्त्तव्यत्वादात्मा चाशनाया-
दिधर्म्मवान्न भवतीति साधनफलविलक्षणो ज्ञातव्यः। अतो
व्यतिरेकेणात्मनोऽज्ञानमविद्यान्योऽसावन्योऽहमस्मीति न
स वेद मृत्योः स मृत्युमाप्नोति। य इह नानेव पश्यत्येक-
धैवानुद्रष्टव्यमेकमेवाद्वितीयं तत्त्वमसीत्यादिश्रुतिभ्यः।

क्रियाफलं साधनञ्चाशनायादि संसारधर्म्मातीता-
दात्मनोऽन्यदविद्याविषयं। यत्र हि द्वैतमिव भवत्यन्यो
ऽसावन्योऽहमस्मि न स वेद। अथ येऽन्यथाऽतो विदुरि-
त्यादिवाक्यशतेभ्यः। न च विद्याविद्ये एकस्य पुरुषस्य सह
भवतो विरोधात्तमःप्रकाशाविव। तस्मादात्मविदो

---

आ॰ दुपनिषदामुपन्यस्यति। अपि चेति। इतश्चास्ति सन्न्यासे विधि-
रिति यावत्। तद्विधिबलादेव सन्न्याससिद्धिरिति शेषः।
कथं सर्व्वोपनिषदामात्मज्ञानपरत्वमिष्यते। कर्म्मस्तुतिद्वारा कर्म्मविधि-
शेषत्वेनार्थवादत्वादित्याशङ्क्याह। आत्मेत्यादिना। अस्तु यथोक्तं
वस्तु विज्ञेयं तथापि प्रस्तुते किमायातं तदाह। सर्व्वा हीति। ननु
तस्य कर्त्तव्यत्वेऽपि कथं कर्म्मतत्साधनत्यागसिद्धिरत आह।
आत्मा चेति। विपक्षे दोषमाह। न इति। साधनफलान्तर्भूत-
त्वेनात्मनो ज्ञानमविद्येत्यत्र प्रमाणमाह। अन्योऽसावित्यादिना।
क्रियाकारकफलविलक्षणस्यात्मनो ज्ञानं कर्त्तव्यं तत्साम-
र्थ्यात्साध्यसाधनत्यागः सिद्ध्यतीत्युक्तं। सम्प्रत्यविद्याविषयत्वाच्च
साध्यसाधनयोर्विद्यावता त्याज्यत इत्याह। क्रियेति। तस्या
विद्याविषयत्वे श्रुतीरुदाहरति। यत्रेति। अविद्याविषयत्वेऽपि

भा॰ऽविद्याविषयोऽधिकारो न द्रष्टव्यः क्रियाकारकफलभेद-रूपः। मृत्योः स मृत्युमाप्नोतीत्यादि निन्दितत्वात्। सर्व्व-क्रियासाधनफलानाञ्चाविद्याविषयाणां तद्विपरीतात्म-विद्यया हातव्यत्वेनेष्टत्वात्। यज्ञोपवीतादिसाधनानाञ्च तद्विषयत्वात्। तस्मात्साधनफलस्वभावात् आत्मनो ऽन्यविषया विलक्षणा एषणा। उभे ह्येते साधनफले एषणे एव भवतः। यज्ञोपवीतादेस्तत्साध्यकर्म्मणाञ्च साधनत्वात्। उभे ह्येते एषणे एवेति हेतुवचनेनावधा-रणात् यज्ञोपवीतादिसाधनात् तत्साध्येभ्यश्च कर्म्मभ्यो ऽविद्याविषयत्वात् एषणारूपत्वाच्च जिहासितव्यरूपत्वाच्च व्युत्थानं विधित्सितमेव। न ह्युपनिषदः। आत्मज्ञानपर-त्वात्। व्युत्थानश्रुतिस्तु स्तुत्यर्था। न विधिर्न विधित्सित-

---

आ॰ साधनादिविघात एव भविष्यति। विद्याविद्ययोरसदादिषु सा हित्योपलम्भादित्याशङ्क्याह। न चेति। विद्याविद्ययोः साहि-त्यासम्भवे फलितमाह। तस्मादिति। इतश्च प्रयोजकज्ञानवता साध्यसाधनभेदो न द्रष्टव्यो विवक्षितत्वसाक्षात्कारविरोधित्वा-दित्याह। सर्व्वेति। भवत्वविद्याविषयाणां विद्यावता त्यागस्त-थापि कुतो यज्ञोपवीतादीनां त्यागस्तत्राह। यज्ञोपवीतादीति। तद्विषयत्वादित्येव तच्छब्दो विद्याविषय एषणात्वाच्च यज्ञोपवी-तादीनां त्याज्यतेत्याह। तस्मादिति। ज्ञेयत्वेन प्रस्तुतादिति यावत्। साध्यसाधनविषया तदात्मिकैषणा त्याज्येति तत्र हेतु-माह। विलक्षणेति। पुरुषार्थरूपाद्विपरीता सा हेयेत्यर्थः। साध्य-साधनयोरेषणात्वं साधयति। उभे हीति। तथापि यज्ञोपवी-तादीनां कर्म्मणां च कथमेषणात्वमित्याशङ्क्य साधनान्तर्भावादि-त्याह। यज्ञोपवीतादीति। तयोरेषणात्वं कथं प्रतिज्ञामात्रेण सेत्स्यतीत्याशङ्क्याह। उभे हीति। तयोरेषणात्वे सिद्धे फलित-

भा॰ विज्ञानेन समानकर्तृत्वश्रवणात्। न ह्यकर्त्तव्येन कर्त्तव्यस्य समानकर्तृकत्वेन वेदे कदाचिदपि श्रवणं सम्भवति। कर्त्तव्यानामेव ह्यभिषवहोमभक्षाणां यथा श्रवणमभिषुत्य हुत्वा भक्षयन्तीति। तद्वदात्मज्ञानैषणाव्युत्थानभिक्षाचर्य्याणां कर्त्तव्यानामेव समानकर्तृकत्वश्रवणं भवेत्। अविद्याविषयत्वादेषणात्यागार्थप्राप्त एव आत्मज्ञानविधेरेव यज्ञोपवीतादिपरित्यागो न तु विधातव्य इति चेन्न॥

सुतरामात्मज्ञानविधिनैव विहितस्य समानकर्तृकत्वश्रवणेन दार्ढ्योत्पत्तिस्तथा भिक्षाचर्य्यस्य। यत्पुनरुक्तं वर्त्तमानापदेशादर्थवादमात्रमिति। औदुम्बरयूपादिविधिसमानत्वाददोषः। व्युत्थाय भिक्षाचर्य्यं चरन्तीत्यनेन पारिव्राज्यं विधीयते। पारिव्राज्याश्रमे च यज्ञोपवीतादि-

---

आ॰ माह। यज्ञोपवीतादीति॥ आत्मज्ञानविधिरेव सन्न्यासविधिरित्युक्तत्वाद्व्युत्थायेत्यस्य नास्ति विधित्वमिति शङ्कते। न त्विति॥ व्युत्थाय विदित्वेति पाठक्रममतिक्रम्य व्याख्याने भवत्येवायं विविदिषोर्विधिरिति परिहरति। न त्विधित्सितेति॥ पाठक्रमेऽपि प्रयोजकज्ञानवतो विरक्तस्य भवत्येवायं विधिरित्यभिप्रेत्याह। न चेति॥ उक्तमेवान्वयमुखेनोदाहरणद्वारा विवृणोति। कर्त्तव्यानामिति। अभिषुत्य सोमस्य कण्डनं कृत्वा रसमादायेत्यर्थः॥ पाठक्रममेवाश्रित्य शङ्कते। अविद्येति॥

प्रयोजकज्ञानवतो विरक्तस्यात्मज्ञानविधिसामर्थ्यलब्धस्य यज्ञोपवीतादित्यागस्य कर्त्तव्यात्मज्ञानेन समानकर्तृत्वश्रवणादतिशयेनावश्यकत्वसिद्धिरित्युत्तरमाह। न सुतरामिति॥ व्युत्थाने दर्शितन्यायं भिक्षाचर्य्येऽप्यतिदिशति। तथेति। भिक्षाचर्य्यस्य चात्मज्ञानविधिनैकवाक्यस्य तथैव दार्ढ्योपपत्तिरिति सम्बन्धः॥ व्युत्थानादिवाक्यस्यार्थवादत्वमुक्तमनूद्य दूषयति। यत्पु-

भा॰ साधनानि विहितानि लिङ्गञ्च श्रुतिभिः स्मृतिभिश्च अतस्तद्वर्जयित्वाऽन्यस्माद्व्युत्थानमेषणाभ्योऽपीति चेन्न। विज्ञानसमानकर्तृकात्पारिव्राज्यादेषणाव्युत्थानलक्षणात् पारिव्राज्यान्तरोपपत्तेः। यद्धि तदेषणाभ्यो व्युत्थानलक्षणं पारिव्राज्यं तदात्मज्ञानाङ्गमात्मज्ञानविरोध्येषणापरित्यागरूपत्वादविद्याविषयत्वाच्चैषणायास्तद्व्यतिरेकेण चाश्रमरूपं पारिव्राज्यं ब्रह्मलोकादिफलप्राप्तिसाधनं। यद्विषयं यज्ञोपवीतादिसाधनविधानं लिङ्गविधानञ्च। न चैषणारूपसाधनोपादानस्याश्रमधर्ममात्रे पारिव्राज्यान्तरविषये सम्भवति सति सर्वोपनिषद्विहितस्यात्मज्ञानस्य बाधनं युक्तं। यज्ञोपवीताद्यविद्याविषयैषणारूप-

---

आ॰ नरित्यादिना ॥ औदुम्बरो यूपो भवतीत्यादौ वेदपरिग्रहेण विधित्वीकारवदत्रापि पञ्चमलकारेण विधिसिद्धेनार्थवादत्वप्राप्तेरित्यर्थः ॥ सम्प्रति प्रकृते वाक्ये पारिव्राज्यविधिमङ्गीकृत्य स्वयूथ्यः शङ्कते। व्युत्थायेति ॥ का तर्हि विप्रतिपत्तिस्तत्राह। पारिव्राज्येति। लिङ्गं त्रिदण्डत्वादि। पुराणे यज्ञोपवीते विसृज्य नवमुपादायाश्रमं प्रविशेत्त्रिदण्डी कमण्डलुमानीत्याद्याः श्रुतयः ॥ स्मृतयश्चैवमात्माद्यज्ञोपवीतादीनामपि त्याज्यत्वमुक्तमित्याशङ्क्य श्रुतिस्मृतिवशाद्व्युत्थाने संकोचमभिप्रेत्याह। अत इति। उदाहृतश्रुतिस्मृतीनां विषयान्तरं दर्शयन्नुत्तरमाह। नेत्यादिना ॥ तदेव विवृणोति। यद्धीत्यादिना ॥ तस्यात्मज्ञानाङ्गत्वे हेतुमाह। आत्मज्ञानेति ॥ एषणायास्तद्विरोधित्वमेव कुतस्सिद्धं तत्राह। अविद्येति ॥ तर्हि यथोक्तानां श्रुतिस्मृतीनां किमालम्बनं तदाह। तद्व्यतिरेकेणेति। आश्रमत्वेन निरूप्यते यत्तुवस्तु नाश्रमस्तदाभास इति यावत् ॥ तस्यात्मज्ञानाङ्गत्वं साधयति। न चेति। अथ व्युत्थानवाक्योक्तमुख्यपारिव्राज्यविषयत्वमेव लिङ्गादिवि-

भा॰ साधनोपादित्सायां यावज्जन्मसाधनफलरूपस्याशनायादि-
संसारधर्म्मवर्जितस्याहं ब्रह्मास्मीति विज्ञानं बाध्यते। न च
तद्बाधनं सर्व्वोपनिषदां तदर्थपरत्वाद्भिक्षाचर्य्यं चरन्तीत्ये-
षणां ग्राहयन्ती श्रुतिः स्वयमेव बाधत इति चेत्। अथापि
स्यादेषणाभ्यो व्युत्थानं विधाय पुनरेषणैकदेशं भिक्षा-
चर्य्यं ग्राहयन्ती तत्सम्बद्धमन्यदपि ग्राहयन्तीति चेन्न।

भिक्षाचर्य्यस्याप्रयोजकत्वाद्धुतोत्तरकालभक्षणवच्छेषप्र-
तिपत्तिकर्म्मत्वादप्रयोजकं हि तत्। असंस्कारकत्वाच्च ।
भक्षणं पुरुषसंस्कारकमपि स्यान्न तु भिक्षाचर्य्यं। नियमा-

---

आ॰ धानस्य किं नस्यात्तत्राह। न चेति॥ एवमादिरूपाणि साधनानि
यज्ञोपवीतादीनि तेषामुपादानमनुष्ठानं। तस्याश्रमधर्म्ममात्रेणो-
क्तस्य यथोक्ते सन्न्यासाभासे विषये सति प्रधानबाधेन मुख्य-
पारिव्राज्यविषयमयत्नमयुक्तमित्यर्थः॥ कथं पुनर्मुख्ये पारिव्राज्य-
विषयत्वे यज्ञोपवीतादेरिष्टे प्रधानबाधनं तदाह। यज्ञोप-
वीतादीति॥ साध्यसाधनयोरासक्ते तद्विलक्षणस्यात्मनो ज्ञानं
बाध्यते चेत्का नो हानिरित्याशङ्क्याह। न चेति॥ भिक्षाचर्य्यं ताव-
द्विहितं विहितानुष्ठानञ्च यज्ञोपवीतादि विना न सम्भवतीति
श्रुत्यैवात्मज्ञानं यज्ञोपवीतादिविरोधितमिति शङ्क्यते। भिक्षा-
चर्य्यमिति॥ शङ्कामेव विशदयति। अथापीत्यादिना॥ यथा-
ऽऽतशेषस्य भक्षणं विहितमपि न अर्थाक्षेपं परिशिष्टद्रव्यो-
पादानेन प्रवृत्तेः। तथा सर्व्वस्त्यागे विहिते परिशिष्टभिक्षोपा-
दानेन विहितमपि भिक्षाचरणमुपवीताद्यनाक्षेपकमित्युत्तर-
माह। नेत्यादिना॥

दृष्टान्तमेव स्पष्टयति। शेषेति॥ तद्भक्षणमिति सम्बन्धः। अप्र-
योजकं अर्थविशेषस्यानाक्षेपकमिति यावत्॥ यद्वा दार्ष्टान्तिक-
मेव स्फुटयति। शेषेति। सर्व्वस्त्यागे विहिते शेषस्य कालस्य
शरीरपातान्तस्य प्रतिपत्तिकर्म्ममात्रं भिक्षाचर्य्यमतो न तदुपवी-

भा० दृष्टस्यापि ब्रह्मविदो ऽनिष्टत्वात्। नियमादृष्टस्यानिष्टत्वे किं भिक्षाचर्य्येणेति चेत्। न। अन्यसाधनाद्व्युत्थानस्य विहितत्वात्। तथापि किं तेनेति चेत्। यदि स्याद्बाढं। अभ्युपगम्यते हि तत्। यानि पारिव्राज्येऽभिहितानि वचनानि यज्ञोपवीत्ये-वाधीयीतेत्यादीनि तान्यविद्वत्पारिव्राज्यमात्रविषयाणीति परिहृतानि। इतरथात्मज्ञानबाधः स्यादिति ह्युक्तं। निराशिषमनारम्भं निर्नमस्कारमस्तुतिं। अक्षीणं क्षीण-कर्म्माणं तं देवा ब्राह्मणं विदुरिति सर्व्वकर्म्माभावं दर्शयति स्मृतिर्विदुषः। विद्वाल्लिङ्गविवर्जितस्तस्मादलिङ्गो धर्म्मज्ञ इति

---

आ० तादिप्रापकमित्यर्थः। किञ्च। भिक्षाचर्य्यस्य शरीरस्थित्यैवाक्षि-प्तत्वान्न तत्रापि विधिर्हरेत्। तदभावादुपवीतादिसिद्धिरित्याह। असंस्कारकत्वाच्चेति॥ तदेव स्फुट्यते। भक्षचर्मिति॥ एकाकाचरे-द्भैक्ष्यमित्यादि नियमवशादवृष्टं सिध्यदुपवीतादिकमप्याक्षिपतीति चेन्नेत्याह। नियमेति॥ विविदिषोस्तदिष्टमपि नोपवीताद्या-क्षेपकं ज्ञानोत्पादकश्रवणाद्युपयोगिदेहस्थित्यर्थत्वेनैव चरिता-र्थत्वादिति भावः। तर्हि यथाकथञ्चिदुपगतेनान्नेन शरीरस्थि-तिसम्भवाद्भिक्षाचर्य्यं चरन्तीति वाक्यं व्यर्थमिति शङ्कते। निय-मादृष्टस्येति॥ भिक्षाचर्य्यानुवादेन प्रतिग्रहादिनिवृत्त्यर्थत्वाद्वा-क्यस्य नानर्थक्यमित्युत्तरमाह। नान्येति॥ निवृत्त्युपदेशेन वाक्य-स्यार्थवत्त्वेऽपि तदुपदेशस्य नार्थवत्त्वं कूटस्थात्मज्ञानेनैव सर्व्व-निवृत्तेः सिद्धेरिति शङ्कते। तथापीति॥ यदि निष्क्रियात्मज्ञा-नादशेषनिवृत्तिः स्यात्तर्हि तदस्माभिरपि स्वीक्रियते॥ सत्य-मित्यङ्गीकरोति। यदीति॥ यदि तु क्षुदादिदोषप्राबल्यादा-त्मानं निष्क्रियमपि विस्मृत्य प्रार्थनादिपरो भवति। तदा निवृ-त्त्युपदेशोऽपि भवत्वर्थवानिति भावः। प्रागुक्तवाक्यविरोधान्नि-वृत्त्युपदेशः शक्य इति चेत्तत्राह। यानीति॥ मुख्यपरिव्राड्विष-यत्वे दोषं स्मारयति। इतरथेति॥ निवृत्त्युपदेशानुग्राहकत्वेन

उ॰ तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् ।

---

भा॰ च । तस्मात्परमहंसपारिव्राज्यमेव व्युत्थानलक्षणं प्रतिपद्येतात्मवित्सर्व्वकर्मसाधनपरित्यागरूपमिति ।

यस्मात्पूर्व्वे ब्राह्मणा एतमात्मानमसाधनफलस्वभावं विदित्वा सर्व्वस्मात्साधनस्वरूपादेषणालक्षणाद्व्युत्थाय भिक्षाचर्य्यं चरन्ति स्म। दृष्टादृष्टार्थं कर्म्म न तत्साधनं च हित्वा। तस्मादद्यत्वेऽपि ब्राह्मणः ब्रह्मवित्पाण्डित्यं पण्डितभावमेतदात्मविज्ञानं पाण्डित्यं तन्निर्विद्य निःशेषं विदित्वा आत्मविज्ञानं निरवशेषं कृत्वेत्यर्थः। आचार्य्यत आगमतश्च एषणाभ्यो व्युत्थाय। एषणा व्युत्थानावसानमेव हि

---

आ॰ कृतीवदाहरति। गिराश्चिवमित्यादिना॥ अमुख्यसन्न्यासविषयत्वासम्भवान्मुख्यपरिव्राजिमयं व्युत्थानवाक्यमित्युपसंहरति। तस्मादिति॥

इतिशब्दो व्युत्थानवाक्यव्याख्यानसमाप्त्यर्थः॥ तस्मादित्यादिवाक्यमवतार्य्य व्याचष्टे। यस्मादित्यादिना॥ उक्तमेव व्युत्थानं स्फुटयति। दृष्टेति॥ विवेकवैराग्याभ्यामेषणाभ्यो व्युत्थाय श्रुताचार्य्याभ्यां कर्त्तव्यं ज्ञानं निःशेषं कृत्वा बाल्येन तिष्ठासेदिति व्यवहितेन सम्बन्धः॥ पाण्डित्यं निर्विद्येत्यनेनैव व्युत्थानं विहितमित्याह। एषणेति॥ तद्धि पाण्डित्यमेषणाभ्यो व्युत्थाने सम्भवति तदत्र व्युत्थानविधिरित्यर्थः॥ तदेव स्फुटयति। एषणेत्यादिना॥ तासां तिरस्कारेण पाण्डित्यमुद्भवति तस्यैषणाया विरुद्धत्वादिति॥ तथा च पाण्डित्यं निर्विद्येत्यत्र ताभ्यो व्युत्थानविधानमुचितमित्यर्थः॥ विनापि व्युत्थानं पाण्डित्यमुद्भविष्यतीति चेन्नेत्याह। न हीति। पाण्डित्यं निर्विद्येत्यत्र व्युत्थानविधिमुक्तमुपसंहरति।

भा॰ तत्पाण्डित्यं। एषणातिरस्कारोद्भवत्वादेषणाया विरुद्धत्वात्। एषणामतिरस्कृत्य न ह्यात्मविषयस्य पाण्डित्यस्योद्भव इत्यात्मज्ञानेनैव विहितमेषणाव्युत्थानं। आत्मज्ञानसमानकर्तृकक्त्वाप्रत्ययोपादानलिङ्गश्रुत्या दृढीकृतं। तस्मादेषणाभ्यो व्युत्थाय ज्ञानबलभावेन बाल्येन तिष्ठासेत् स्थातुमिच्छेत्। साधनफलाश्रयणं हि बलमितरेषामनात्मविदां। तद्बलं हित्वा विद्वान्साधनफलस्वरूपात्मविज्ञानमेव बलं तद्भावमेव केवलमाश्रयेत्। तदाश्रयणे हि करणान्येषणाविषये एनं हृत्वा स्थापयितुमुत्सहन्ते*। ज्ञानबलहीनं हि मूढं दृष्टादृष्टविषयायामेषणायामेवैनं करणानि नियोजयन्ति। बलं नामात्म-

---

आ॰ इत्यात्मज्ञानेनेति॥ तर्हि किमिति विदित्वा व्युत्थायेत्यत्र व्युत्थाने विधिरभ्युपगतस्तत्राह। आत्मज्ञानेति॥ तेन व्युत्थानस्य समानकर्तृत्वे क्त्वाप्रत्ययस्योपादानमेव लिङ्गभूता श्रुतिस्तया दृढीकृतं नियमेन प्रापितं व्युत्थानमित्यर्थः॥ बाल्येनेत्यादि वाक्यमुत्थाप्य व्याकरोति। तस्मादिति॥ विवेकादिबलादेषणाभ्यो व्युत्थाय पाण्डित्यं सम्पाद्य तस्मात्पाण्डित्याज्ज्ञानबलभावेन स्थातुमिच्छेदिति योजना। केयं ज्ञानबलभावेन स्थितिरित्याशङ्क्य तां व्युत्पादयति। साधनेत्यादिना॥ विद्वानिति विवेकित्वोक्तिः। यथोक्तबलभावावष्टम्भे करणानां विषयपारवश्यनिवृत्त्या पुरुषस्यापि तत्पारवश्यनिवृत्तिः फलतीत्याह। तदाश्रये हीति॥ उक्तमेवार्थं व्यतिरेकमुखेन विशदयति। ज्ञानबलेनेति॥ नन्वद्यापि ज्ञानस्य बलं कीदृगिति न ज्ञायते तत्राह। बलं नामेति॥ बाल्यवाक्यार्थमुपसंहरति। अत इति॥ यथा ज्ञानबलेन विषयाभिमुखी

---

* नोत्सहन्ते इति पाठान्तरः।

उ॰ बाल्यञ्च पाण्डित्यञ्च निर्व्विद्याथ मुनिरमौनञ्च मौनञ्च निर्व्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्या-

---

भा॰ विद्यया अशेषविषयदृष्टितिरस्करणं। अतस्तद्भावेन बाल्येन तिष्ठासेत्। तथात्मना विन्दते वीर्य्यमिति श्रुत्यन्तरान्नायमात्मा बलहीनेन लभ्य इति च॥

बाल्यञ्च पाण्डित्यञ्च निर्व्विद्य निःशेषं कृत्वा अथ मननान्मुनिर्योगी भवत्येतावद्धि ब्राह्मणेन कर्त्तव्यं। यदुत सर्व्वानात्मप्रत्ययतिरस्कार एतत्कृत्वा कृतकृत्यो योगी भवति। अमौनञ्चात्मज्ञानानात्मप्रत्ययतिरस्कारौ पाण्डित्यबाल्यसञ्ज्ञकौ निःशेषं कृत्वा। मौनं नामानात्मप्रत्ययतिरस्करणस्य पर्य्यवसानं फलं। तच्च निर्व्विद्याथ ब्राह्मणः कृतकृत्यो भवति। ब्रह्मैव सर्व्वमिति प्रत्यय उपजायते। स ब्राह्मणः

---

आ॰ दृष्टिस्तिरस्क्रियते तयेति यावत्। आत्मना तद्विद्यानातिशयेनेत्यर्थः। वीर्य्यं विषयदृष्टितिरस्कारणसामर्थ्यमित्येतत्। बलहीनेनविषयदृष्टितिरस्कारणसामर्थ्यरहितेनायमात्मा न लभ्यो न शक्यः साक्षात्कर्त्तुमित्यर्थः॥

बाल्यञ्चेत्यादि वाक्यमादाय व्याचष्टे। बाल्यञ्चेति॥ पूर्व्वोक्तयोरुत्तरत्र हेतुद्योतनार्थोऽथशब्दः। तदेवोपपादयति। एतावद्धीति॥ वाक्यान्तरमुत्थाप्य व्याकरोति। अमौनञ्चेत्यादिना॥ मौनामौनयोर्ब्राह्मण्यं प्रति सामग्रीत्वद्योतकोऽथशब्दः ब्राह्मण्यमुपपादयति। ब्रह्मैवेति॥ आचार्य्यपरिचर्य्यापूर्व्वकं वेदान्तानां तात्पर्य्यावधारणं पाण्डित्यं। युक्तितोऽनात्मदृष्टितिरस्कारो बाल्यं। अहमात्मा परब्रह्म न मत्तोऽन्यदस्ति किञ्चनेति॥ मनसैवानुसन्धानं मौनं महावाक्यार्थावगतिर्ब्राह्मण्यमिति विभागः। प्रागपि प्रसिद्धं ब्राह्मण्यमिति चेत्तत्राह। निरुपचरितमिति॥ ब्रह्मविदः समा-

उ॰ द्येन स्यात्तेनेदृश एवातोऽन्यदार्तं ततो ह कहोलः कौषीतकेय उपरराम ॥ १ ॥ पञ्चमं ब्राह्मणं ॥ ५ ॥

---

भा॰ कृतकृत्योऽतो ब्राह्मणः । निरुपचरितं हि तदा तस्य ब्राह्मण्यं प्राप्तमत आह । स ब्राह्मणः केन स्यात्केन चरणेन भवेद्येन स्याद्येन चरणेन भवेत्तेनेदृश एवायं । येन केनचिच्चरणेन स्यात्तेनेदृश एव उक्तलक्षण एव ब्राह्मणो भवति । येन केनचिच्चरणेनेति स्तुत्यर्थं । येयं ब्राह्मण्यावस्था सेयं स्तूयते न तु चरणेऽनादरः । अत एतस्माद्ब्राह्मण्यावस्थानादशनायाद्यतीतात्मस्वरूपान्नित्यतृप्तादन्यदविद्याविषयमेषणालक्षणं वस्त्वन्तरमार्तं विनाशार्तिपरिगृहीतं स्वप्नमायामरीच्युदकसममसारमात्मैवैकः केवलो नित्यमुक्त इति । ततो ह कहोलः कौषीतकेय उपरराम ॥ १ ॥ पञ्चमस्य पञ्चमं ब्राह्मणं ॥ ५ ॥

---

आ॰ चारं पृच्छति । स इति ॥ अनियतं तस्य चरणमित्युत्तरमाह । येनेति । उक्तलक्षणत्वं कृतकृत्यत्वं । अव्यवस्थितं चरणमिच्छतो ब्रह्मविदो यथेष्टचेष्टाभीष्टा स्यात्तथा च यद्यदाचरति श्रेष्ठ इति स्मृतेरितरेषामप्याचारेऽनादरः स्यादित्याशङ्क्याह । येन केन चिदिति ॥ विहितमाचरतो निषिद्धं च त्यजतः शुद्धबुद्धेः श्रुताद्वाक्यात्सम्यग्धीरुत्पद्यते । तस्य च वासनावशाद्व्यवस्थितैव नाव्यवस्थितेति न यथेष्टचेष्टाचरणप्रयुक्तो दोष इत्यर्थः ॥ अतोऽन्यदित्यादि व्याकरोति । अत इति ॥ स्वप्नेत्यादि बहुदृष्टान्तोपादानं दार्ष्टान्तिकस्य बहुरूपत्वद्योतनार्थं अतोऽन्यदिति कुतो विशेषणमित्याशङ्क्याह । आत्मैवेति ॥ १ ॥ पञ्चमस्य पञ्चमं कहोलब्राह्मणं ॥ ५ ॥

उ॰ अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति

---

भा॰ यत्साक्षादपरोक्षाद्ब्रह्म सर्व्वान्तर आत्मेत्युक्तं। तस्य सर्व्वान्तरस्य स्वरूपाधिगमाय शाकल्यब्राह्मणाद्ब्रह्म आरभ्यते। पृथिव्यादीनि आकाशान्तानि भूतान्यन्तर्वहिर्भावेन व्यवस्थितानि। तेषां यद्वाह्यं वाह्यमधिगम्य निराकुर्वन्। द्रष्टुः साक्षात्सर्व्वान्तरो नैष आत्मा सर्व्वसंसारधर्म्मनिर्मुक्तो दर्शयितव्य इत्यारम्भः। अथ ह एनं गार्गी नामतो वाचक्नवी वचक्नोर्दुहिता पप्रच्छ। याज्ञवल्क्येति होवाच। यदिदं सर्व्वं पार्थिवं धातुजातमप्सूदके ओतञ्च दीर्घपटतन्तुवत्प्रोतञ्च तिर्य्यक्तन्तुवद्विपरीतं वा। अद्भिःसर्व्वतोऽन्तर्वहिर्भूताभिर्व्याप्तमित्यर्थः। अन्यथा सक्तुमुष्टिवद्विशीर्य्येत।

---

आ॰ पूर्व्वब्राह्मणयोरात्मनः सर्व्वान्तरत्वमुक्तं तन्निर्णयार्थमुत्तरं ब्राह्मणत्रयमिति सङ्गतिमाह। यत्साक्षादिति॥ उक्तमेव सम्बन्धं विवृणोति। पृथिव्यादीनीति॥ अन्तर्वहिर्भावेन सूक्ष्मस्थूलतारतम्यक्रमेणेत्यर्थः। वाह्यं वाह्यमिति वीप्सा। उपरिष्टात्तच्छब्दो द्रष्टव्यो यत्तदोर्नित्यसम्बन्धात्। निराकुर्वन् यथा मुमुक्षुः सर्व्वान्तरमात्मानं प्रतिपद्यते तथा स यथोक्तविशेषणो दर्शयितव्य इत्युत्तरग्रन्थारम्भ इति योजना। कहोलप्रश्ननिर्णयानन्तर्य्यमथशब्दार्थः। यत्पार्थिवं धातुजातं तदिदं सर्व्वमप्स्वित्यादि योजनीयं॥ पदार्थमुक्त्वा वाक्यार्थमाह। अद्भिरिति॥ पार्थिवस्य धातुजातस्याद्भिर्व्याप्त्यभावे दोषमाह। अन्यथेति॥ किमत्र गार्ग्या विवक्षितमिति तदाह। इदं तावदिति॥ तदेव दर्शयितुं व्याप्तिमाह। यत्कार्य्यमिति॥ कारणेन व्यापकेनेति शेषः। तत्कार्य्यं तत्कारणेन व्याप्तं यत्परिच्छिन्नं तद्व्यापकेन व्याप्तं यच्च स्थूलं तत्सूक्ष्मेण व्याप्तमिति त्रिप्रकारा व्याप्तिः। इतिशब्दस्तत्समाप्त्यर्थः॥ व्याप्तिभूमिमाह।

उ० होवाच यदिदꣳ सर्व्वमप्स्वोतञ्च प्रोतञ्च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति १

---

भा० इदं तावदनुमानमुपन्यस्तं। यत्कार्य्यं परिच्छिन्नं स्थूलं कारणेनापरिच्छिन्नेन सूक्ष्मेण व्याप्तमिति दृष्टं। यथा पृथिव्यद्भिस्तथा पूर्व्वं पूर्व्वमुत्तरेणोत्तरेण व्यापिना भवितव्यमित्येष आसर्व्वान्तरादात्मनः प्रश्नार्थः। तत्र भूतानि पञ्च संहतान्येवोत्तरोत्तरं सूक्ष्मभावेन व्यापकेन कारणरूपेण च व्यवतिष्ठन्ते। न च परमात्मनोऽर्वाक्तद्व्यतिरेकेण वस्त्वन्तरमस्ति। सत्यस्य सत्यमिति श्रुतेः। सत्यञ्च भूतपञ्चकं सत्यस्य सत्यं च पर आत्मा। कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति। तासामपि कार्य्यत्वात्स्थूलत्वात्परिच्छिन्नत्वाच्च क्वचिदोतप्रोत

---

आ० यथेति ॥ सम्भवदनुमानमाह । तथेति ॥ पूर्व्वं पूर्व्वमित्यवादेर्धर्म्मिणो निर्द्देशः। उत्तरेणोत्तरेण वाय्वादिकारणेनापरिच्छिन्नेन सूक्ष्मेण व्याप्तमिति शेषः। विमतं कारणेन व्यापकेन सूक्ष्मेण व्याप्तं कार्य्यत्वात्परिच्छिन्नत्वात्स्थूलत्वाच्च पृथिवीवदित्यर्थः ॥ सर्व्वान्तरादात्मनोऽर्वागुक्तन्यायं सर्व्वत्र सञ्चारयति। इत्येष इति ॥ ननु तथापि भूतपञ्चकव्यतिरिक्तानां गन्धर्वलोकादीनामप्यान्तरत्वेनापदेशात्कथं भूतपञ्चकमुदासेन सर्व्वान्तरप्रतिपत्तिर्विवक्षितेति तत्राह। तत्रेति ॥ उक्तनीत्या प्रश्नार्थे स्थिते सतीति यावत् ॥ भूतात्मस्थितिनिर्द्धारणे वा सप्तमी। अथ परमात्मानं भूतानि च हित्वा पृथगेव गन्धर्वलोकादीनि वस्त्वन्तराणि भविष्यन्ति नेत्याह। न चेति ॥ गन्धर्वलोकादीन्यपि भूतानामेवावस्थाविशेषास्ततः सत्यं भूतपञ्चकं तस्य सत्यं परं ब्रह्म नान्यदन्तरात्तत् प्रतिपत्तव्यमिति। अन्यप्रतिषेधार्थौ चशब्दौ ॥ तात्पर्य्यमुक्त्वा प्रश्नमु-

उ॰ वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोत-
श्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वन्तरिक्ष-
लोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति
कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्या-
दित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका
ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु
खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्र-

---

भा॰ भावेन भवितव्यं। क्व तासामोतप्रोतभाव इत्येवमुत्तरो-
त्तरं प्रश्नप्रसङ्गो योजयितव्यः।

वायौ गार्गीति। नन्वग्नाविति वक्तव्यं। नैष दोषोऽग्नेः
पार्थिवं वाप्यं वा धातुमनाश्रित्येतरभूतवत्स्वातन्त्र्येणात्म-
लाभो नास्तीति। तस्मिन्नोतप्रोतभावो नोपदिश्यते। कस्मिन्नु
खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति। तान्येव
भूतानि संहतान्यन्तरिक्षलोकास्तान्यपि गन्धर्वलोकेषु गन्ध-
र्वलोका आदित्यलोकेष्वादित्यलोकाश्चन्द्रलोकेषु चन्द्र-
लोका नक्षत्रलोकेषु नक्षत्रलोका देवलोकेषु देवलोका
इन्द्रलोकेष्विन्द्रलोका विराट्शरीरारम्भकेषु भूतेषु प्रजा-

---

आ॰ व्याप्य तदक्षराणि व्याकरोति। कस्मिन्नित्यादिना॥ कस्मिन्नु खलु
वायुरित्यादावुक्तन्यायमतिदिशति। एवमिति॥

वायावित्ययुक्ता प्रयुक्तिरपामग्निकार्यत्वादग्नाविति वक्तव्य-
त्वादिति शङ्कते। नन्विति॥ अग्नेरव्यापकत्वेऽपि काष्ठवि-
द्युदादि पारतन्त्र्यात्स्वतन्त्रेण केनचिदपां व्याप्तिर्वक्तव्येत्यग्निं हित्वा
तत्कारणे वायावित्युक्तं वायोश्च स्वकारणतन्त्रत्वेऽपि नोदकतन्त्र-

उ॰ लोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि मातिप्राक्षीर्मा ते मूर्द्धा व्यपप्तदनति-

---

भा॰ पतिलोकेषु प्रजापतिलोका ब्रह्मलोकेषु ब्रह्मलोका नामाण्डारम्भकाणि भूतानि। सर्व्वत्र हि सूक्ष्मतारतम्यक्रमेण प्राण्युपभोगाश्रयाकारपरिणतानि भूतानि संहतानि। तान्येवं पञ्चेति बहुवचनभाञ्जि। कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति। स होवाच याज्ञवल्क्यो हे गार्गि मातिप्राक्षीः स्वं प्रश्नं न्यायप्रकारमतीत्यागमेन प्रष्टव्यां देवतामनुमानेन मा प्राक्षीरित्यर्थः। पृच्छन्त्याश्च मा ते तव मूर्द्धा शिरो व्यपप्तद्विस्पष्टं मा पतेत्। देवतायाः स्वप्रश्न आगमविषयस्तं प्रश्नविषयमतिक्रान्तो गार्ग्याः प्रश्न आनुमानिक-

---

आ॰ तेति तद्व्यापकत्वसिद्धिरित्युत्तरमाह। नैष दोष इत्यादिना॥ अन्तरिक्षलोकशब्दार्थमाह। तान्येवेति॥ प्रजापतिलोकशब्दार्थं कथयति। विराडिति॥ अन्तरिक्षलोकादीनां प्रत्येकत्वात्कुतो बहुवचनमित्याशङ्क्याह॥ सर्व्वत्र हीति॥ पूर्व्ववदनुमानेन सूत्रं पृच्छन्तीं गार्गीं प्रतिषेधति। स होवाचेत्यादिना॥ उक्तमेव स्पष्ट-

उ॰ प्रश्न्यां वै देवतामतिपृच्छसि गार्गि माति प्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥

षष्ठब्राह्मणं ॥ ६ ॥

अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य

---

भा॰ त्वात्म यस्या देवतायाः प्रश्नः सातिप्रश्न्या नातिप्रश्न्या अनतिप्रश्न्या स्वप्रश्नाविषयैव केवलागमगम्येत्यर्थः। तामनतिप्रश्न्यां वै देवतामति पृच्छसि अतो गार्गि माति प्राक्षीर्मर्त्तुं चेदिच्छसि ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥

इति श्रीमद्बृहदारण्यकभाष्ये पञ्चमे प्रपाठके षष्ठं ब्राह्मणं ॥ ६ ॥

इदानीं ब्रह्मलोकानामन्तरतमं सूत्रं वक्तव्यमिति तदर्थं आरम्भः। तच्चागमेनैव प्रष्टव्यमितीतिहासेनागमोपन्यासः क्रियते। अथ हैनमुद्दालको नामतोऽरुणस्यापत्यमारुणिः पप्रच्छ। याज्ञवल्क्येति होवाच। मद्रेषु देशेष्वव-

---

आ॰ यथाव्याख्यार्थमाह । आगमेनेति ॥ प्रतिषेधातिक्रमे दोषमाह । पृच्छन्त्याश्चेति ॥ मूर्द्धपातप्रसङ्गं प्रकटयन्प्रतिषेधमुपसंहरति । देवताया इत्यादिना ॥ १ ॥ पञ्चमस्य षष्ठं गार्गिब्राह्मणं ॥ ६ ॥

पूर्वस्मिन्ब्राह्मणे सूत्रादर्वाक्तनं व्यापकमुक्तमिदानीं सूत्रं तदन्तर्गतमन्तर्यामिणं च निर्वक्तुमुत्तरब्राह्मणमिति सङ्गतिमाह। इदानीमिति ॥ ब्राह्मणतात्पर्य्यमुक्त्वाख्यायिकातात्पर्य्यमाह। तच्चागमेनैवेति ॥ आचार्य्योपदेशोऽागमशब्दार्थः। गार्ग्या मूर्द्धपातभयादुपरतेरनन्तरमित्यथशब्दार्थः। सोऽब्रवीदिति प्रतीकोपा-

उ॰ गृहेषु यज्ञमधीयानास्तस्यासीद्भार्य्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत् कबन्ध आथर्वण इति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकांᳪश्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि सन्दृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तद्भगवन्वेदेति १

---

भा॰ सामोषितवन्तः पतञ्चलस्य। पतञ्चलो नाम तस्यैव कपिगोत्रस्य काप्यस्य गृहेषु यज्ञमधीयाना यज्ञशास्त्राध्ययनं कुर्वाणाः। तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति। सोऽब्रवीत्कबन्धो नामतोऽथर्वणोऽपत्यमाथर्वण इति। सोऽब्रवीद्गन्धर्वः पतञ्चलं काप्यं याज्ञिकांश्च तच्छिष्यान्वेत्थ नु त्वं हे काप्य जानीषे तत्सूत्रं। किन्तद्येन सूत्रेणायं च लोक इदं च जन्म परश्च लोकः परञ्च प्रतिपत्तव्यं जन्म सर्व्वाणि च भूतानि ब्रह्मादिस्तम्बपर्य्यन्तानि सन्दृब्धानि सङ्ग्रथितानि स्रगिव सूत्रेण विष्टब्धानि भवन्ति येन। तत्किं सूत्रं वेत्थ। सोऽब्रवीदेवं पृष्टः काप्यो नाहं तद्भगवन्वेदेति। तत्सूत्रं नाहं जाने हे भगवन्निति संपूजयन्नाह।

---

आ॰ दानं तस्यार्थमाह। सूत्रमिति॥ इति शब्दार्थमाह। एवमिति॥ येनायमित्यादिरुक्तः प्रकारः स सर्व्वलोकांश्च वेत्तीति सम्बन्धः। विशेषेणोक्तिपूर्व्वकं तानेव लोकाननुवदति। भूरादीनिति॥ स ब्रह्मविदित्यादिनोक्तं सङ्क्षिपति। सर्व्वमिति॥ तथाभूतं सूत्रेण विधृतमन्तर्यामिणा च नियम्यमानमिति यावत्॥

उ॰ सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमञ्च लोकं परञ्च लोकꣳ सर्व्वाणि च भूतानि योऽन्तरो यमयतीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तं भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च यो वै तत्काप्यसूत्रं विद्यात्तञ्चान्तर्यामिणमिति स ब्रह्मवित्स

---

भा॰ सोऽब्रवीत्पुनर्गन्धर्व्व उपाध्यायमस्मांश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणमन्तर्यामीति विशेष्यते। य इमञ्च लोकं परञ्च लोकं सर्व्वाणि च भूतानि योऽन्तरोऽभ्यन्तरः सन्यमयति नियमयति दारुयन्त्रमिव भ्रामयति स्वं स्वमुचितव्यापारं कारयतीति । सोऽब्रवीदेवमुक्तः पतञ्चलः काप्यो नाहं तं जाने भगवन्निति संपूजयन्नाह। सोऽब्रवीत्पुनर्गन्धर्व्वः सूत्रतदन्तर्गतान्तर्यामिणोर्विज्ञानं स्तूयते । यः कश्चिद्वै तत्सूत्रं हे काप्य विद्याद्विजानीयात्तञ्चान्तर्यामिणं सूत्रान्तर्गतं तस्यैव सूत्रस्य नियन्तारं विद्याद्य इत्येवमुक्तेन प्रकारेण स हि ब्रह्मवित्परमात्मवित्स लोकांश्च भूरादीनन्तर्यामिणा नियम्यमानान् लोकान्वेत्ति स देवांश्चाग्न्यादीन् लोकिनो जानाति वेदांश्च सर्व्वप्रमाणभूतान्वेत्ति भूतानि च ब्रह्मादीनि सूत्रेण ध्रियमाणानि तदन्तर्गतेनान्तर्यामिणा नियम्यमानानि वेत्ति स आत्मानं च कर्तृत्वभोक्तृत्व-

---

चा॰ प्रस्तुतस्तुतिप्रयोजनमाह। इत्येवमिति ॥ भवत्वेवं तव सूत्रादि-

उ॰ लोकवित्स देववित्स वेदवित्स भूतवित्स आत्मवित्स सर्व्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वाꣳस्तञ्चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्द्धा ते विपतिष्यतीति वेद वा अहं गोतम तत्सूत्रं तञ्चान्तर्यामिणमिति यो वा इदं कश्चिद्ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति॥१॥

---

भा॰ विशिष्टं तेनैवान्तर्यामिणा नियम्यमानं वेत्ति सर्व्वं च जगत्तथाभूतं वेत्तीत्येवं स्तुते सूत्रान्तर्यामिविज्ञाने प्रलुब्धः काप्योऽभिमुखीभूतो वयं च तेभ्यस्तस्मभ्यमभिमुखीभूतेभ्यो ऽब्रवीद्गन्धर्वः सूत्रमन्तर्यामिणं च। तदहं सूत्रान्तर्यामिविज्ञानं वेद गन्धर्वाल्लब्धागमः सन्। तच्चेद्याज्ञवल्क्य सूत्रं तञ्चान्तर्यामिणमविद्वांस्त्वं ब्रह्मवित्सन्यदि ब्रह्मगवीरुदजसे ब्रह्मविदां स्वभूता गा उदजसे उन्नयसि त्वमन्यायेन ततो मच्छापदग्धस्य मूर्द्धा शिरस्ते तव विस्पष्टं पतिष्यति। एवमुक्तो याज्ञवल्क्य आह। वेद जानाम्यहं हे गौतमेति गोत्रतस्तत्सूत्रं यद्गन्धर्वस्तुभ्यमुक्तवान् यञ्चान्तर्यामिणं गन्धर्वाद्विदितवन्तो यूयं तञ्चान्तर्यामिणं वेदाहमित्येवमुक्ते प्रत्याह। गौतमो यः कश्चित्प्राकृत इदं यत्त्वयोक्तं ब्रूयात्कथं वेद वेदेत्यात्मानं श्लाघयन् किं तेन गर्जितेन कार्य्येण दर्शय यथा वेत्थ तथा ब्रूहीति॥१॥

---

आ॰ ज्ञानं मम किमायातमित्याशङ्क्याह। तच्चेदिति॥ किं तेनेत्यत्र तस्येत्यध्याहारः कार्य्येण दर्शयेत्युक्तं विवृणोति। यथेति॥१॥

उ॰ स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रꣳसिषतास्याङ्गानीति वायुना हि

---

भा॰ स होवाच याज्ञवल्क्यो। ब्रह्मलोका यस्मिन्नोताश्च प्रोताश्च वर्त्तमाने काले। यथा पृथिव्यप्सु तत्सूत्रमागममगम्यं वक्तव्यमिति तदर्थं प्रश्नान्तरमुत्थापितमिति। अतस्तन्निर्णयायाह। वायुर्वै गौतम तत्सूत्रं नान्यद्वायुरिति सूक्ष्ममाकाशवद्विष्टम्भकं पृथिव्यादीनां यदात्मकं सप्तदशविधं लिङ्गं कर्म्मवासनासमवायि प्राणिनां यत्तत्समष्टिव्यष्ट्यात्मकं यस्य वाह्या भेदाः सप्त सप्त मरुद्गणाः समुद्रस्येवोर्म्मयस्तदेतद्वायव्यं तत्त्वं सूत्रमित्यभिधीयते। वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि सन्दृब्धानि भवन्ति सङ्ग्रथितानि भवन्तीति प्रसिद्धमेतत्। अस्ति च लोके प्रसिद्धिः। कथं यस्माद्वायुः सूत्रं वायुना विधृतं

---

आ॰ याज्ञवल्क्योक्तेस्तात्पर्य्यमाह। ब्रह्मलोका इति॥ इत्यभीष्टमागमविदामित्यध्याहृत्याद्यस्येति शब्दस्य योजना। प्रश्नान्तरं सूत्रविषयं गौतमवाक्यं वैशब्दार्थमाह। नान्यदिति॥ सूक्ष्मत्वे दृष्टान्तमाह। आकाशवदिति॥ वायुमेव विशिनष्टि। यदात्मकमिति॥ पञ्चभूतानि दश बाह्यानीन्द्रियाणि पञ्चवृत्तिः प्राणश्चतुर्विधमन्तःकरणमिति सप्तदशविधत्वं॥ कर्म्मणां वासनानाञ्चोत्तरसृष्टिहेतूनां प्राणिभिरर्जितानामाश्रयत्वादपेक्षितमेव लिङ्गमित्याह। कर्म्मेति॥ तस्यैव सामान्यविशेषात्मनो बहुरूपत्वमाह।

उ॰ गौतम सूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ॥ २ ॥

यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी

---

भा॰ सर्व्वं तस्माद्वै गौतम पुरुषं प्रेतमाहुः कथयन्ति व्यस्रंसिषत विस्रस्तान्यस्य पुरुषस्याङ्गानीति। सूत्रापगमे हि मण्यादीनां प्रोतानामवस्रंसनं दृष्टं एवं वायुः सूत्रं। तस्मिन्मणिवत्प्रोतानि यद्यस्याङ्गानि स्युस्ततो युक्तमेतद्वाय्वपगमे विस्रंसनमङ्गानां। अतो वायुना हि गौतम सूत्रेण सन्दृब्धानि भवन्तीति निगमयति। एवमेवैतद्याज्ञवल्क्य सम्यगुक्तं सूत्रं तदन्तर्गतन्त्विदानीं तस्यैव सूत्रस्य नियन्तारमन्तर्यामिणं ब्रूहीत्युक्त आह ॥ २ ॥

यः पृथिव्यां तिष्ठन्भवति सोऽन्तर्यामी। सर्व्वः पृथिव्यां तिष्ठतीति सर्व्वत्र प्रसङ्गो माभूदिति विशिनष्टि। पृथिव्या अन्तरोऽभ्यन्तरस्तच्चैतत्स्यात्पृथिवी देवतैवान्तर्यामीत्यत आह। यमन्तर्यामिणं पृथिवी देवतापि न वेद मय्यन्यः

---

आ॰ यत्तदिति॥ तस्यैव लोकपरीक्षकप्रसिद्धत्वमाह। यस्येति॥ तस्य सूत्रत्वं साधयति। वायुनेति॥ प्रसिद्धमेतत्सूत्रविदामिति शेषः॥ लौकिकीं प्रसिद्धिमेव प्रश्नपूर्व्वकमनन्तरश्रुत्यवष्टम्भेन स्पष्टयति। कथमित्यादिना॥ उक्तमेव दृष्टान्तं व्यनक्ति। सूत्रेत्यादिना॥ वायोः सूत्रत्वे सिद्धे फलितमाह। अत इति॥ २॥

नियन्तुरीश्वरस्य लौकिकनियन्तृवत्कार्य्यकरत्वमाशङ्क्याह। यस्य चेति॥ पृथिव्याः शरीरत्वमेव न तु शरीरत्वमित्याशङ्क्याह। पृथिवीति॥ पृथिव्या यत्करणं तदेव तस्य करणं वेति योजना

उ॰ न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ३ ॥

---

भा॰ कश्चिद्वर्त्तत इति। यस्य पृथिवी शरीरं यस्य च पृथिव्येव शरीरं नान्यत्पृथिवीदेवताया यच्छरीरं तदेव शरीरं यस्य। शरीरग्रहणं चोपलक्षणार्थं करणञ्च पृथिव्यास्तस्याः। स्वकर्म्मप्रयुक्तं हि कार्य्यं करणञ्च पृथिवीदेवतायाः। तदस्य स्वकर्म्माभावादन्तर्यामिणो नित्यमुक्तत्वात्परार्थकर्त्तव्यतास्वभावत्वात्परस्य यत्कार्य्यं करणञ्च तदेवास्य न स्वतस्तदाह यस्य पृथिवीशरीरमिति। देवताकार्य्यकरणस्येश्वरसाक्षिमात्रसान्निध्येन हि नियमेन प्रवृत्तिनिवृत्ती स्यातां। य ईदृगीश्वरो नारायणाख्यः पृथिवीं पृथिवीदेवतां यमयति नियमयति। स्वव्यापारेऽन्तरोऽभ्यन्तरस्तिष्ठन्नेष त आत्मा ते तव मम च सर्व्वभूतानां चेत्युपलक्षणार्थं एतदन्तर्यामी यस्त्वया पृष्टोऽमृतः सर्व्वसंसारधर्म्मवर्जित इत्येतत्समानमन्यत् ॥ ३ ॥

---

आ॰ कथं पृथिव्याः शरीरेन्द्रियवत्त्वं तदाह। स्वकर्म्मेति॥ अन्तर्यामिणोऽपि तथा किं नस्यात्तत्राह। तदस्येति॥ अस्यान्तर्यामित्वादेव कार्य्यं करणञ्च नास्तीत्यत्र हेतुमाह। स्वकर्म्मेति॥ तदेव हेत्वन्तरेण स्फोरयति। परार्थेति॥ यः पृथिवीमित्यादिवाक्यस्य तात्पर्य्यमाह। देवतेति॥ तत्र वाक्यमवतार्य्य व्याचष्टे। य ईदृगिति॥ यस्य पृथिवीदेवताकार्य्यकरणाभ्यामेव कार्य्यकरणवत्त्वमीदृशत्वं॥ पृथिवीपर्य्याये दर्शितन्यायं पर्य्यायान्तरेऽतिदिशति। समानमिति॥ ३॥

उ॰ योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयत्येष त आत्मान्तर्य्याम्यमृतः ॥ ४ ॥ योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्मान्तर्यामम्यमृतः ॥ ५ ॥ योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षꣳ शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्मान्तर्य्याम्यमृतः ॥ ६ ॥ यो वायौ तिष्ठन्वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्मान्तर्य्याम्यमृतः ॥ ७ ॥ यो दिवि तिष्ठन्दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्मान्तर्य्याम्यमृतः ॥ ८ ॥ य आदित्ये तिष्ठन्नादित्याद-

---

भा॰ योऽप्सु तिष्ठन्नग्नावन्तरिक्षे वायौ दिव्यादित्ये दिक्षु चन्द्रतारके आकाशे तमसि आवरणात्मके बाह्ये तमसि तेजसि तद्विपरीते प्रकाशसामान्य इत्येवमधिदैवतमन्तर्यामिविषयं दर्शनं देवतासु। अथाधिभूतं भूतेषु ब्रह्मादिस्तम्बपर्य्यन्तेष्वन्तर्यामिदर्शनमधिभूतं। अथाध्यात्मं यः प्राणे प्राणवायुसहिते घ्राणे यो वाचि चक्षुषि श्रोत्रे मनसि त्वचि

---

आ॰ सर्व्वत्र प्राणादौ तिष्ठन्नन्तर्यामी तवात्मेति सम्बन्धः॥ वाक्यान्तरं प्रश्नपूर्व्वकमुत्थाप्य व्याचष्टे। कस्मादित्यादिना॥ यथा मनसि

उ॰ न्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्य्याम्यमृतः ॥ ९ ॥ यो दिक्षु तिष्ठन्दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १० ॥ यश्चन्द्रतारके तिष्ठꣳश्चन्द्रतारकादन्तरो यञ्चन्द्रतारकं न वेद यस्य चन्द्रतारकꣳ शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ११ ॥ य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः॥ १२॥ यस्तमसि तिष्ठꣳस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १३ ॥

---

भा॰ विज्ञाने बुद्धौ रेतसि प्रजनने। कस्मात्पुनः कारणात्पृथिव्यादिदेवता महाभागाः सत्यो मनुष्यादिवदात्मनि तिष्ठन्तमात्मनो नियन्तारमन्तर्यामिणं न विदुरित्यत आह। अदृष्टो न दृष्टो न विषयीभूतश्चक्षुर्दर्शनस्य कस्यचित्त्वयन्तु चक्षुषि सन्निहितत्वात् दृष्टिस्वरूप इति द्रष्टा। तथा अश्रुतः श्रोत्रगोचरत्वमनापन्नः कस्यचित्त्वयन्त्वलुप्तश्रवणशक्तिः सर्व्वश्रोत्रेषु सन्निहितत्वात् श्रोता। तथा अमतो मनः-

---

आ॰ तथा बुद्धावपि सन्निधानाउज्ज्वालतेति यावत्। तत्रेति पूर्व्वस-

उ॰ यस्तेजसि तिष्ठꣳस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिदैवतमथाधिभूतं ॥ १४ ॥ यः सर्व्वेषु भूतेषु तिष्ठन्सर्व्वेभ्यो भूतेभ्योऽन्तरो यꣳ सर्व्वाणि भूतानि न विदुर्यस्य सर्व्वाणि भूतानि शरीरं यः सर्व्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतमथाध्यात्मं ॥ १५ ॥ यः प्राणे तिष्ठन्प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १६ ॥ यो वाचि तिष्ठन्वाचोऽन्तरो यं वाङ्न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १७ ॥ यश्चक्षुषि तिष्ठꣳश्चक्षुषोऽ

---

भा॰ सङ्कल्पविषयमनापन्नः। दृष्टे श्रुते एव हि सर्व्वः सङ्कल्पयत्यदृष्टत्वादश्रुतत्वादेवामतोऽलुप्तमननशक्तित्वात्सर्व्वमनःसु सन्निहितत्वाच्च मन्ता। तथाऽविज्ञातो निश्चयगोचरमनापन्नो रूपादिवत्सुखादिवद्वा स्वयन्त्वलुप्तविज्ञानशक्तित्वात्सान्निध्याच्च विज्ञाता। तत्र यं पृथिवी न वेद यं सर्व्वाणि भूतानि न विदुरिति चान्ये नियन्तव्या विज्ञातारोऽन्यो नियन्तान्तर्यामीति प्राप्तं तदन्यत्वाशङ्कानिवृत्त्यर्थमुच्यते।

---

आ॰ न्द्रभोक्तिः। अन्वयमुपपादयितुमतोऽन्य इत्यस्मात् पदार्थान्व्या-

उ० न्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १८ ॥ यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यᳩं श्रोत्रं न वेद यस्य श्रोत्रᳩं शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्मा-न्तर्याम्यमृतः ॥ १९ ॥ यो मनसि तिष्ठन्मनसो ऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ २० ॥ यस्त्वचि तिष्ठᳩंस्त्वचोऽन्तरो यं त्वङ्न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयत्येष त आत्मा-न्तर्याम्यमृतः ॥ २१ ॥ यो विज्ञाने तिष्ठन्विज्ञाना-दन्तरो यं विज्ञानं न वेद यस्य विज्ञानᳩं शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मान्तर्याम्य-मृतः ॥ २२ ॥ यो रेतसि तिष्ठन्रेतसोऽन्तरो यᳩं

---

भा० नान्योऽतो न अन्य अतोऽस्मादन्तर्यामिणो नान्योऽतोऽस्ति द्रष्टा तथा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता यस्मात्परो नास्ति द्रष्टा श्रोता मन्ता विज्ञाता योऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ता अविज्ञातो विज्ञाताऽमृतः सर्व्वसंसारधर्म्मवर्जितः सर्व्वसंसा-रिणां कर्म्मफलविभागकर्त्तैष त आत्मान्तर्याम्यमृतोऽस्मा-

---

आ० करोति । अत इति । अन्यो द्रष्टा नास्तीति सम्बन्धः । एष त इत्यादिवाक्यस्यार्थमाह । यस्मादित्यादिना ॥ २ । ४ । ५ । ६ । ७ ।

उ॰ रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्यतोऽस्ति श्रोता नान्यतोऽस्ति मन्ता नान्यतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्त्तं ततो होद्दालक आरुणिरुपरराम ॥ २३ । सप्तमं ब्राह्मणं । ७ ।

अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न

---

भा॰ दीश्वरादात्मनोऽन्यदार्त्तं ततो होद्दालक आरुणिरुपरराम ॥ ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ ॥ इति बृहदारण्यके पञ्चमप्रपाठकभाष्ये सप्तमं ब्राह्मणं ॥

अतः परमशनायादिविनिर्म्मुक्तं निरुपाधिकं साक्षादपरोक्षात्सर्व्वान्तरं ब्रह्म वक्तव्यमित्यत आरम्भः। अथ ह वाचक्नव्युवाच पूर्व्वं याज्ञवल्क्येन निषिद्धा मूर्द्धपातभयादुपरता सती पुनः प्रष्टुं ब्राह्मणानुज्ञां प्रार्थयते। हे ब्राह्मणाः

---

आ॰ ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ ॥ इति पञ्चमस्य सप्तममन्तर्यामिब्राह्मणं ॥

पूर्व्वस्मिन्ब्राह्मणे सूत्रान्तर्यामिणौ प्रश्नप्रत्युक्तिभ्यां निर्द्धारितौ सम्प्रत्युत्तरब्राह्मणतात्पर्य्यमाह। अत इति परमिति ॥ सोपाधिकवस्तु-

उ॰ वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥ १ ॥

सा होवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपत्ति-

---

भा॰ भगवन्तः पूजावन्तः शृणुत मम वचो हन्ताहमिमं याज्ञवल्क्यं पुनर्द्वौ प्रश्नौ प्रक्ष्यामि यद्यनुमतिर्भवतामस्ति तौ प्रश्नौ चेद्यदि वक्ष्यति कथयिष्यति मे कथञ्चिन्न वै जातु कदाचिद्युष्माकं मध्ये इमं याज्ञवल्क्यं कश्चिद्ब्रह्मोद्यं ब्रह्मवदनं प्रति जेता न वै कश्चिद्भवेदित्येवमुक्ता ब्राह्मणा अनुज्ञां प्रददुः पृच्छ गार्गीति लब्धानुज्ञा ह याज्ञवल्क्यं ॥ १ ॥

सा होवाचाहं वै त्वा त्वां द्वौ प्रश्नौ प्रक्ष्यामीत्यनुवर्त्यते। कौ ताविति जिज्ञासायां तयोर्दुरुत्तरत्वं द्योतयितुं दृष्टान्तपूर्व्वकं तावाह। हे याज्ञवल्क्य यथा लोके काश्यः काशीषु भवः काश्यः प्रसिद्धं शौर्य्यं काश्ये वैदेहो वा विदेहानां वा राजा उग्रपुत्रः शूरान्वय इत्यर्थः। उज्ज्यमवतारितज्याकं धनुः पुनरधिज्यमारोपितज्याकं कृत्वा द्वौ बाण-

---

आ॰ निर्द्धारणानन्तर्य्यमथशब्दार्थः॥ ननु यस्माद्भयाद्गार्गी पूर्व्वमुपरता तस्यास्तदवस्थत्वात्कथं पुनः सा प्रष्टुं प्रवर्त्तते तत्राह। पूर्व्वमिति॥ हन्तेत्यस्यार्थमाह। यदीति॥ न वै जात्विति प्रतीकमादाय व्याचष्टे। कदाचिदित्यादिना ॥ १ ॥

आश्चर्यं दर्शयितुं कश्चिदिति पुनरुक्तिः सन्धीयते। स उच्यत इति॥ शेषप्रश्नयोरवश्यप्रष्टव्यतरणीयत्वे अप्रसिद्धत्वाङ्गीकारो हेतु-

उ० ष्ठेदेवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्थान्तौ मे ब्रूहीति पृच्छ गार्गीति ॥ २ ॥

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते कस्मिंꣳस्तदोतञ्च प्रोतञ्चेति

---

भा० वन्तौ बाणशब्देन शराग्रे यो वंशखण्डः सन्धीयते तेन विनापि शरो भवतीत्यतो विशिनष्टि। बाणवन्ताविति तौ द्वौ बाणवन्तौ शरौ तयोरेव विशेषणं सपत्नातिव्याधिनौ शत्रोः पीडाकरावतिशयेन हस्ते कृत्वा योत्तिष्ठेत्समीपत आत्मानं दर्शयेदेवमेवाहं त्वां शरस्थानीयाभ्यां प्रश्नाभ्यां द्वाभ्यामुपोदस्थामुत्थितवत्यस्मि त्वत्समीपे। तौ मे ब्रूहि ब्रह्मविच्चेदाहेतरः पृच्छ गार्गीति ॥ २ ॥

सा होवाच यदूर्ध्वमुपरि दिवोऽण्डकपालाद्यच्चावागधः पृथिव्या अधोऽण्डकपालाद्यच्चान्तरा मध्ये द्यावापृथिवी द्यावापृथिव्योरण्डकपालयोरिमे च द्यावापृथिवी यद्भूतं यच्चातीतं भवच्च वर्त्तमानं स्वव्यापारस्थं भविष्यच्च वर्त्तमानादूर्द्ध्वकालभाविलिङ्गगम्यं यत्सर्व्वमेतदाचक्षते कथयन्ति

---

आ० रित्याह। ब्रह्मविच्चेदिति॥ सूत्रस्याधारे प्रष्टव्ये किमिति सर्व्वं जगदनूद्यते तत्राह। तत्सर्व्वमिति। पूर्व्वोक्तं सर्व्वं जगदात्मकमिति यावत् ॥ २ ॥

यथा प्रश्नमनूद्य प्रत्युक्तिमादत्ते। स होवाचेति॥ तां व्याचष्टे। यदेतदिति। यज्जगद्व्याकृतं सूत्रात्मकमेतद्व्याकृताकाशे वर्त्तते

उ॰ ॥ ३ ॥ स होवाच यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतञ्च प्रोतञ्चेति ॥ ४ ॥ स होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति ॥ २ ॥

---

भा॰ त्यागमतस्तत्सर्वं द्वैतजातं यस्मिन्नेकीभवतीत्यर्थः। तत्सूत्रसञ्ज्ञं पूर्वोक्तं कस्मिन्नोतञ्च प्रोतञ्च पृथिवीधातुरिवाप्सु ॥ ३ ॥ स होवाचेतरो हे गार्गि यत्त्वयोक्तमूर्ध्वं दिव इत्यादि तत्सर्वं यत्सूत्रमाचक्षते तत्सूत्रमाकाशे तदोतञ्च प्रोतञ्च यदेतद्व्याकृतं सूत्रात्मकं जगदव्याकृताकाशेऽप्स्विव पृथिवीधातुस्त्रिष्वपि कालेषु वर्त्तते उत्पत्तौ स्थितौ लये च ॥ ४ ॥ पुनः सा होवाच नमस्तेऽस्त्वित्यादिप्रश्नस्य दुर्वचस्त्वप्रदर्शनार्थं यो मे ममैतं प्रश्नं व्यवचो विशेषेणोक्तवानसि। एतस्य दुर्वचस्त्वे कारणं सूत्रमेव तावदवगम्यमितरैर्दुर्वाच्यं किमुत तद्यस्मिन्नोतञ्च प्रोतञ्चेत्यतो नमोऽस्तु ते तुभ्यमपरस्मै द्वितीयाय प्रश्नाय धारयस्व दृढीकुर्वात्मानमित्यर्थः । पृच्छ गार्गीतीतर आह व्याख्यातमन्यत् ॥ ५ ॥

---

आ॰ इति सम्बन्धः। त्रिष्वपि कालेष्विति यदुक्तं तद्व्यनक्ति। उत्पत्ताविति। वक्ष्यमाणं वाक्यमन्यदित्युच्यते ॥ ३ । ४ । ५ ॥

उ० सा होवाच यदूर्द्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतञ्च प्रोतञ्चेति ॥ ६॥ स होवाच यदूर्द्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतञ्च प्रोतञ्चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ॥ ७ ॥

---

भा० सा होवाच यदूर्द्ध्वं याज्ञवल्क्येत्यादि प्रश्नः प्रतिवचनं चोक्तस्यैवार्थस्यावधारणार्थं पुनरुच्यते। न किञ्चिदपूर्व्वमर्थान्तरमुच्यते। सर्व्वं यथोक्तं गार्ग्या प्रत्युच्चार्य्य तमेव पूर्व्वोक्तमर्थमवधारितवानाकाश एवेति याज्ञवल्क्यः। गार्ग्याह कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति। आकाशमेव तावत्कालत्रयातीतत्वाद्दुर्वाच्यं। ततोऽपि कष्टतरमक्षरं यस्मिन्नाकाशमोतञ्च प्रोतञ्चातो वाच्यमिति कृत्वा न प्रतिपद्यते वा। प्रतिपत्तिर्नाम निग्रहस्थानं तार्किकसमयेऽथावाच्यमपि वदति। तथापि विप्रतिपत्तिर्नाम निग्रहस्थानं विरुद्धा प्रतिपत्तिर्हि सा यदवाच्यस्य वदनमतो दुर्वचनं प्रश्नं मन्यते गार्गी तद्दोषद्वयमपि परिजिहीर्षन्नाह॥ ६ ॥७॥

---

आ० तदेव प्रश्नप्रतिपत्तिवचनरूपमनुवदति। सा हेति। पुनरुक्तेरकिञ्चित्करत्वं व्यावर्त्तयति। उक्तस्यैवेति॥ प्रतिवचनानुवादतात्पर्य्यमाह। गार्गीति॥ प्रश्नाभिप्रायं प्रकटयति। आकाश एवेति॥ ६।७॥

उ॰ स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभि-
वदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहम-
च्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षु-
ष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्र-

---

भा॰ स होवाच याज्ञवल्क्य एतद्वै तद्यत्पृष्टवत्यसि कस्मिन्नु
खल्वाकाश ओतश्च प्रोतश्चेति। किन्तदक्षरं यन्न क्षीयते न
क्षरतीति वाक्षरं तदक्षरं हे गार्गि ब्राह्मणा ब्रह्मविदोऽभि-
वदन्ति। ब्राह्मणाभिवदनकथनेन नाहमवाच्यं वक्ष्यामि
न च न प्रतिपद्येयमित्येवं दोषद्वयं परिहरति। एवमपाकृते
प्रश्ने पुनर्गार्ग्याः प्रतिवचनं द्रष्टव्यं। ब्रूहि किं तदक्षरं
यद्ब्राह्मणा अभिवदन्तीत्युक्त आह। अस्थूलं तत्स्थूलाद-
न्यदेवं तर्हि अण्वनणु अस्तु तर्हि ह्रस्वमह्रस्वमेवं तर्हि दीर्घं
नापि दीर्घमदीर्घं एवमेतैश्चतुर्भिः परिमाणप्रतिषेधै-
र्द्रव्यधर्मः प्रतिषिद्धो न न द्रव्यं तदक्षरमित्यर्थः। अस्तु तर्हि
लोहितो गुणस्ततोऽप्यन्यदलोहितं। आग्नेयो गुणो लोहितो
भवतु तर्ह्यपां स्नेहनं नास्नेहमस्तु तर्हि छाया सर्वथाप्यनि-
र्देश्यत्वाच्छायाया अप्यन्यदच्छायमस्तु तर्हि तमोऽतमो भवतु
वायुस्तर्ह्यवायुर्भवेत्तर्ह्याकाशमनाकाशं भवतु तर्हि सङ्गात्मकं

---

आ॰ अप्रतिपत्तिर्विप्रतिपत्तिश्चेति दोषद्वयं सामान्येनोक्तं विशेषतो
ज्ञातुं पृच्छति। किन्तदिति ॥ अस्थूलादिवाक्यमवतार्य व्याक-
रोति। एवमित्यादिना ॥ यदग्नेर्लोहितं रूपमित्यादिश्रुतिमाश्रि-
त्याह। अग्नेर्य इति ॥ अवायुविशेषणानामाकाशविशेषणस्य पुन-

उ॰ मनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन ॥ ८ ॥

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्र-

भा॰ अतुवदचक्षुं रसोऽस्तु तर्ह्यरसं तथाऽगन्धमस्तु तर्हि चक्षुष्कम-चक्षुष्कं न हि चक्षुरस्य करणं विद्यतेऽतोऽचक्षुष्कं पश्यत्यचक्षु-रिति मन्त्रवर्णात्तथाऽश्रोत्रं स शृणोत्यकर्ण इति। भवतु तर्हि वागवाक्तथाऽमनस्तथा ऽतेजस्कमविद्यमानं तेजोऽस्य तदते-जस्कं। न हि तेजोऽग्न्यादि प्रकाशवदस्य विद्यते प्राणमाध्या-त्मिको वायुः प्रतिषिध्यतेऽप्राणमिति। मुखं तर्हि द्वारं तद-मुखममात्रं मीयते येन तन्मात्रममात्रं मात्रारूपं तन्न भवति न तेन किञ्चिन्मीयते। अस्तु तर्हि छिद्रवदन्तर-वदनन्तरं नास्यान्तरमस्ति। सम्भवेत्तर्हि बहिस्तस्या-बाह्यमस्तु तर्हि भक्षयितृ तन्न तदश्नाति किञ्च न भवेत्तर्हि भक्ष्यं कस्यचिन्न तदश्नाति कश्चन सर्व्वविशेषणरहित-मित्यर्थः। एकमेवाद्वितीयं हि तत्केन किं विशिष्यते॥ ८॥

अनेकविशेषणप्रतिषेधप्रयासादस्तित्वं तावदक्षरस्योपग-मितं श्रुत्या तथापि लोकबुद्धिमपेक्ष्याशङ्क्यते यतोऽतोऽ

आ॰ बहिर्माशङ्क्याह। आध्यात्मिक इति। अमात्रमिति। मानमे-यान्वयो निराक्रियते तस्येत्यात्मोक्तिः॥ सम्पिण्डितमर्थमाह। सर्व्वेति। तदुपपादयति एकमिति॥ ८॥

अथ यथोक्तया नीत्या श्रुत्यैवाक्षरास्तित्वे साधिते वक्तव्याभा-वात्किमुत्तरेण ग्रन्थेनेति तत्राह। अनेकेति॥ यदस्ति तत्सविशेष-मेवेति लौकिकी बुद्धिराशङ्क्यते। नेति। अक्षरं निर्विशेषमिति

उ॰ मसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशा-
सने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः ॥

---

भा॰ स्त्रिवायामनुमानं प्रमाणमुपन्यस्यति । एतस्य वाक्षरस्य
यदेतदधिगतमक्षरं सर्व्वान्तरं साक्षादपरोक्षाद्ब्रह्म य
आत्माऽशनायादिधर्म्मातीत एतस्य वै अक्षरस्य प्रशासने ।
यथा राज्ञः प्रशासने राज्यमस्फुटितं नियतं वर्त्तत एव-
मेतस्याक्षरस्य प्रशासने हे गार्गि सूर्य्याचन्द्रमसौ सूर्य्यश्च
चन्द्रमाश्च सूर्य्याचन्द्रमसौ अहोरात्रयोर्लोकप्रदीपौ ताद-
र्थ्येन प्रशासित्रा ताभ्यां निर्वर्त्त्यमानलोकप्रयोजनविज्ञा-
नवता निर्म्मितौ विधृतौ च स्यातां । साधारणसर्व्वप्राणि-
प्रकाशोपकारकत्वाल्लौकिकप्रदीपवत् । तस्मादस्ति तद्येन

---

आ॰ शेषः । अन्तर्यामिण्यपि जगत्कारणे परस्मिन्ननुमानसिद्धे विव-
क्षितं नियमाध्यक्षरं सेत्स्यति जगत्कारणत्वस्योपलक्षणतया
जन्मादिसूत्रे स्थितत्वादुपलक्षणद्वारा ब्रह्मणि स्वरूपलक्षणप्रवृत्ते-
रन्तर्यामिण्यनुमानप्रवृत्तताप्युक्तेति भावः ॥ अनुमानमत्यक्षराणि
व्याकरोति । यदेतदिति । प्रशासने सूर्य्याचन्द्रमसौ विधृता
स्यातामिति सम्बन्धः ॥ उक्तमर्थं दृष्टान्तेन स्फोरयति । यथेति ॥
अत्रापि पूर्व्ववदन्वयः । जगद्व्यवस्था प्रशासितृपूर्व्विका व्यवस्थात्वा-
द्राज्यव्यवस्थावदित्यर्थः ॥ सूर्य्याचन्द्रमसावित्यादौ विवक्षितमनु-
मानमाह । सूर्य्यश्चेत्यादिना । तादर्थ्येन लोकप्रकाशार्थत्वेन प्रशा-
सित्रा निर्म्मिताविति सम्बन्धः । निर्म्मातुर्विशिष्टविज्ञानवत्त्व-
माचष्टे । तन्निर्वर्त्त्यमानेति । सूर्य्याचन्द्रमसौ तच्छब्दवाच्यौ विमतौ
विशिष्टविज्ञानवता निर्म्मितौ प्रकाशत्वात्प्रदीपवदित्यर्थः । विमतौ
नियन्तृपूर्व्वकौ विशिष्टचेष्टावत्त्वाद्भृत्यादिवदित्यभिप्रेत्याह ।
विधृताविति । प्रकाशोपकारकत्वं तज्जनकत्वं निर्म्मातुर्विशिष्ट-

उ॰ एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा

---

भा॰ विधृतावीश्वरौ स्वतन्त्रौ सन्तौ निर्मितौ तिष्ठतो नियतदेशकालनिमित्तोदयास्तमनवृद्धिक्षयाभ्यां च वर्त्तेते। तदस्त्येवमेतयोः प्रकाशिचक्षरं प्रदीपकर्तृविधारयितृवदेतस्य वाक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ द्यौश्च पृथिवी च सावयवत्वात्स्फुटनस्वभावे अपि सत्यौ गुरुत्वात्पतनस्वभावे॥ संयुक्तत्वाद्वियोगस्वभावे चेतनावदभिमानिदेवताधिष्ठितत्वात्स्वतन्त्रे अप्येतस्याक्षरस्य प्रशासने वर्त्तेते विधृते तिष्ठतः॥

एतद्ध्यक्षरं सर्व्वव्यवस्थासेतुः सर्व्वमर्य्यादाविधरणमतो नास्याक्षरस्य प्रशासनं द्यावापृथिव्यौ अतिक्रामतस्तस्मा-

---

आ॰ विशासने सम्भावनार्थं विशेषणं साधारणः सर्व्वेषां प्राणिनां यः प्रकाशकस्तस्य जनकत्वादिति यावत्। दृष्टान्ते लौकिकविशेषणं प्रासादादिविशिष्टदेशनिविष्टत्वसिद्ध्यर्थं॥ आनुमानमक्षमुपसंहरति। तस्मादिति॥ विशिष्टं चेष्टावत्त्वादित्युपदिष्टं हेतुं स्पष्टयति। नियतेति। नियतौ देशकालौ नियतश्च निमित्तं प्राण्यदृष्टं तद्वन्तौ सूर्य्याचन्द्रमसावुदयास्तमयौ तौ च येन विधृतावुदयास्तमयाभ्यां वृद्धिक्षयाभ्यां च वर्त्तेते उदयश्चास्तमयश्चोदयास्तमयं। वृद्धिश्च क्षयश्च वृद्धिक्षयमिति द्वन्द्वं गृहीत्वा द्विवचनं। एवं कर्तृत्वेन विधारयितृत्वेन चेत्यर्थः। विमते प्रयत्नवता विधृते सावयवत्त्वेऽप्यस्फुटितत्वाद्गुरुत्वेऽपि अपतितत्वात्संयुक्तेऽप्यवियुक्तत्वाच्चेतनावत्त्वेऽस्वतन्त्रत्वाच्च हस्तन्यस्तपाषाणादिवदिति॥ द्वितीयपर्य्यायस्य तात्पर्य्यमाह। सावयवत्वादित्यादिना॥

किमित्येतस्य प्रशासने द्यावापृथिव्यौ वर्त्तेते तत्राह। एतद्धीति। पृथिव्यादिव्यवस्था नियन्तारं विनानुपपन्ना तस्यास्त्वेके-

उ॰ मुहूर्त्ता अहोरात्राण्यर्द्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्त्येतस्य वा अक्षरस्य प्रशा-

भा॰ लिङ्गमस्याखिलमक्षरस्य। अव्यभिचारि हि तल्लिङ्गं यद्द्यावापृथिव्यौ नियते वर्त्तेते चेतनावन्तं प्रशासितारमसंसारिणमन्तरेण नैतद्युक्तं येन द्यौरुग्रा पृथिवी च दृढेति मन्त्रवर्णात्। एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्त्ता इत्येते कालावयवाः सर्व्वस्यातीतानागतवर्त्तमानस्य जनिमतः कलयितारः। यथा लोके प्रभुणा नियतो गणकः सर्व्वमायं व्ययञ्चाप्रमत्तो गणयति तथा प्रभुस्थानीय एषां कालावयवानां नियन्ता। तथा प्राच्यः प्रागञ्चनाः पूर्व्वदिग्गमना नद्यः स्यन्दन्ते स्रवन्ति श्वेतेभ्यो हिमवदादिभ्यः पर्व्वतेभ्यो गिरिभ्यो गङ्गाद्या नद्यस्ताश्च यथा

आ॰ त्वर्थः। तथा निमित्तेनेत्येतेन विधृते द्यावापृथिव्याविति तत्राह। सर्व्वमर्य्यादेति। एष सेतुर्विधरण इति श्रुत्यन्तरमाश्रित्य वाक्यमाह। अतो नास्तीति। द्वितीयपर्य्यायार्थमुपसंहरति। तस्मादिति। तच्छब्दोपात्तमर्थं स्फोरयति। अव्यभिचारीति। अव्यभिचारित्वं प्रकटयति। चेतनावन्तमिति। पृथिव्यादेर्नियन्तृत्वमेतच्छब्दार्थः। नियन्तृत्वसिद्धावपि कथमीश्वरसिद्धिरित्याशङ्क्याह। येनेति। उग्रत्वं पृथिव्यादेश्चेतनावदभिमानिदेवतात्वेन स्वातन्त्र्यं। येन स्वस्तभितं येन नाको योऽन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम इत्यत्र हिरण्यगर्भाधिष्ठातेश्वरः पृथिव्यादेर्नियन्तोच्यते। न हि हिरण्यगर्भमात्रस्याखिलप्रकरणे पूर्व्वापरग्रन्थयोरुच्यमानं निरङ्कुशं सर्व्वनियन्तृत्वं सम्भवतीति भावः। इते कालावयवा विधृतास्तिष्ठन्तीति सम्बन्धः। तत्रानुमानं वक्तुं हेतुमाह। सर्व्वस्येति। यः कलयिता स निय-

उ॰ स वा एतदक्षरं गार्गि ... 

उ॰ सने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्व्वतेभ्यः प्रतीच्योऽन्यायां यांश्च दिशमन्वेति ॥

भा॰ प्रवर्त्तिता एव नियताः प्रवर्त्तन्ते नान्यथापि प्रवर्त्तितुमुत्सहन्त्यतस्तदेतल्लिङ्गं प्रशास्तुः प्रतीच्योऽन्याः प्रतीचीं दिशमन्वन्ति सिन्ध्वाद्या नद्य अन्याश्च यां यां दिशमनुप्रवृत्तास्तां तां न व्यभिचरन्ति तच्च लिङ्गं । किञ्च ददतो हिरण्यादीन् प्रयच्छतः स्वात्मपीडां कुर्व्वतोऽपि प्रमाणज्ञा अपि मनुष्याः प्रशंसन्ति । तत्र यच्च दीयते ये च ददति ये च प्रतिगृह्णन्ति तेषामिहैव समागमो विलयश्चाव्यक्तो दृश्यते । अदृष्टस्तु परः समागमः ॥

आ॰ तत्पूर्व्वक इति व्याप्तिभूमिमाह । यथेति ॥ दार्ष्टान्तिकन्दर्शयन्ननुमानमाह । तथेति । निमेषादयो नियन्तृपूर्व्वकावयविनित्वात्तत्प्रतिपन्नवदित्यर्थः ॥ कास्ता नद्य इत्यपेक्षायामाह । गङ्गाद्या इति । अन्यथा प्रवर्त्तितुमुत्सहमानत्वं तत्तद्देवतानां चेतनत्वेन स्वातन्त्र्यं । विमता नियन्तृपूर्व्विका नियन्तृप्रवृत्तित्वाद्भृत्यादिप्रवृत्तिवदिति चतुर्थपर्य्यायार्थः । नियतप्रवृत्तिमत्त्वन्तदेतदित्युच्यते । तच्चेतव्यभिचारितोक्तिः । विमतं विशिष्टज्ञानवदुष्टकं कर्म्मफलत्वात्सेवाफलवदित्यभिप्रेत्य पञ्चमं पर्य्यायमुत्थापयति । किञ्चेति । दाता प्रतिग्रहीता दानं देयं फले दास्यति किमीश्वरेणेत्याशङ्क्याह । तत्रेति । दात्रादीनामिहैव प्रलयो नाशो दृश्यते तेन तत्प्रयुक्तोऽदृष्टः पुरुषार्थो न कश्चिदस्तीत्यर्थः । अदृष्टं पुरुषार्थं प्रत्याह । अदृष्टस्त्विति । समागमः फलप्रतिलाभः स स्वर्ग्गैहिको न भवति किन्तु पारलौकिकस्तथा च नाशादिहैव नष्टदात्रादिप्रयुक्तः सम्भवतीत्यर्थः ॥

उ॰ एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो

भा॰ तथापि मनुष्या ददतां दानफलेन संयोगं पश्यन्तः प्रमाणज्ञतया प्रशंसन्ति । तच्च कर्म्मफलेन संयोजयितरि कर्त्तुः कर्म्मफलविभागज्ञे प्रशास्तर्य्यसति न स्यात् । दानक्रियायाः प्रत्यक्षविनाशित्वात् । तस्मादस्ति दानकर्त्तॄणां फलेन संयोजयिता । अपूर्व्वमिति चेन्न । तत्सद्भावे प्रमाणानुपपत्तेः । प्रशास्तुरपीति चेन्न । आगमतात्पर्य्यस्य सिद्धत्वात् । अवोचाम ह्यागमस्य वस्तुपरत्वं । किञ्चान्यदपूर्व्वकल्पनायामर्थापत्तेः । क्षयोऽन्यथैवोपपत्तेः । सेवाफलस्य सेव्यात्प्राप्तिदर्शनात् । सेवायाश्च क्रियात्वात्तत्सामान्याच्च । यागदानहोमादीनां सेव्यादीश्वरादेः फलप्राप्तिरुपपद्यते । दृष्टक्रिया-

---

आ॰ तर्हि फलदातुरभावात्स्वार्थभ्रंशो हि मूर्खतेति न्यायाद्दातृप्रशंसैव मा भूदित्याशङ्क्याह । तथापीति ॥ फलसंयोगदृष्टौ हेतुमाह । प्रमाणज्ञतयेति ॥ हिरण्यदा अमृतत्वं भजन्त इत्यादि प्रमाणं तथापि कथमीश्वरसिद्धिस्तत्राह । कर्त्तुरिति ॥ तद्धि दातृप्रशंसनं विशिष्टे नियन्तरि असत्यनुपपन्नं तत्कल्पकमित्यर्थः । दानक्रियावशादेव तत्फलसिद्धौ कृतं नियन्त्रेति चेन्नेत्याह । दानेति ॥ कर्म्मणः क्षणिकत्वात् फलस्य च कालान्तरभावित्वान्न साधनत्वोपपत्तिरित्यर्थः ॥ अनुमानार्थापत्तिभ्यां सिद्धमर्थमुपसंहरति । तस्मादिति ॥ अपूर्व्वस्यैव फलदातृत्वात्कृतमीश्वरेणेति शङ्कते । पूर्व्वमिति चेदिति ॥ स्वयमचेतनं चेतनानधिष्ठितं वा पूर्व्वं फलदातृ न कल्प्यमप्रामाणिकत्वादिति परिहरति । नेति ॥ ईश्वरद्वेषी शङ्कते । प्रशास्तुरिति ॥ सद्भावे प्रमाणानुपपत्तिरिति शेषं परिहरति । नागमेति ॥ कथं कार्य्यपरस्यागमस्य वस्तुपरत्वमित्याशङ्क्याह । अवोचामेति । कर्म्मविधिर्हि फलदातृत्वमिति रिक्तेश

उ॰ मनुष्याः प्रशꣳसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥ ६ ॥

---

भा॰ धर्म्मसामर्थ्यमपरित्यज्यैव फलप्राप्तिकल्पनोपपत्तौ दृष्टक्रियाधर्म्मसामर्थ्यपरित्यागो न न्याय्यः । कल्पनाधिक्याच्च ईश्वरः कल्प्योऽपूर्व्वं वा । तत्र क्रियायाश्च स्वभावः सेव्यात्फलप्राप्तिर्दृष्टा । न त्वपूर्व्वान्न चापूर्व्वं दृष्टं । तच्चापूर्व्वमदृष्टं कल्पयितव्यं । तस्य च फलदातृत्वे सामर्थ्यं । सामर्थ्ये च सति दानस्याभ्यधिकमिति । इह त्वीश्वरस्य सेव्यस्य सद्भावमात्रं कल्प्यं नतु फलदानसामर्थ्यं दातृत्वञ्च । सेव्यात्फलप्राप्तिदर्शनात् । अनुमानञ्च दर्शितं द्यावापृथिव्यौ विधृते तिष्ठत इत्यादि । तथा च यजमानं देवा ईश्वराः सन्तो जीवनार्थेऽनुगताश्चरुपुरोडाशाद्युपजीवनप्रयोजनेनान्यथापि जीवि-

---

आ॰ नोपपद्यते । न च कर्म्माशुतरविनाशित्वकालान्तरभाविफलानुकूलतदर्थापत्तिसिद्धेऽपूर्व्वे कथं मानासिद्धिरित्याशङ्क्याह । किञ्चेति । न केवलं सद्भावे प्रमाणासत्त्वमेवापूर्व्वदूषणं किमन्यत्किञ्चिदस्तीति यावत् ॥ स तदेव प्रकटयति । अपूर्व्वेति । अपूर्व्वस्य कल्पनायां या अर्थापत्तिः प्रवर्त्तते तस्याः कल्पितमपूर्व्वमन्तरेणाप्युपपत्तेः क्षयः स्यादिति योजना ॥ अन्यथाप्युपपत्तिं विवृणोति । सेवेति । यागादिफलमपीश्वरात्सम्भवतीति शेषः ॥ कथमीश्वराधीना यागादिफलप्राप्तिस्तत्राह । सेवायाश्चेति । आदिपदेनेन्द्रादिदेवता गृह्यन्ते । विमता विशिष्टज्ञानवता दीयमानफलवती विशिष्टक्रियात्वात्सम्प्रतिपन्नवदिति भावः ॥ इतश्चापूर्व्वकल्पना न युक्तेत्याह । दृष्टेति । दृष्टं सेवाया धर्म्मत्वेन सामर्थ्यं सेव्यात्फलप्रापकत्वं तदनुसृत्य दानादौ फलप्राप्तिसम्भवे तत्परित्यागेनापूर्व्वान्तरकल्पना न न्याय्या ॥ दृष्टानुसारिण्यां कल्पनायां

उ॰ यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिंल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसह-

---

भा॰ तुमुत्सवः कृपणां दीनां वृत्तिमाश्रित्य स्थितास्तत्र प्रशास्तुः प्रशासनात्स्यात्। तथा पितरोऽपि तदर्थं दर्वीं दर्विहोममन्वायत्ता अनुगता इत्यर्थः ॥ समानं सर्व्वमन्यत् ॥ ८ ॥

इतश्चास्ति तदक्षरं यस्मात्तदज्ञाने नियता संसारोपपत्तिर्भवितव्यं तु तेन यद्विज्ञानात्तद्विच्छेदो न्यायोपपत्तेः। ननु क्रियात एव तद्विच्छित्तिः स्यादिति चेन्न। यो वा

---

आ॰ तद्विरोधिकल्पनायोगादित्यर्थः ॥ अपूर्व्वस्य फलहेतुत्वे दोषान्तरमाह। कल्पनेति ॥ तदाधिक्यं वस्तु परामृशति। ईश्वर इति ॥ नापूर्व्वोऽवश्यक्लृप्तत्वात्तत्र कल्पनाधिक्यमित्याशङ्क्याह । तेनेति ॥ व्यवहारभूमिस्थमित्यर्थः ॥ भूमिकां कृत्वा कल्पनाधिक्यं स्फुटयति। तत्रेत्यादिना। अपूर्व्वस्यादृष्टत्वे सतीति यावत्। इति कल्पनाधिक्यमिति शेषः। न त्वन्यत्रापि तुल्यकल्पनेत्याशङ्क्याह। इहेति। स्वपक्षे धर्म्मिमात्रं कल्प्यं परपक्षे धर्म्मी धर्म्मश्चेत्याधिक्यं तस्मात्फलमत उपपत्तेरिति न्यायेन परस्यैव फलदातृतेति भावः॥ धर्म्मिणोऽपि प्रामाणिकत्वं कल्प्यत्वमित्यभिप्रेत्याह । अनुमानञ्चेति। ईश्वरास्तित्वे हेत्वन्तरमाह। तथा चेति। देवा यजमानमन्वायत्ता इति सम्बन्धः। जीवनार्थी जीवनं निमित्तीकृत्येति यावत्। देवानामीश्वराणामपि हव्यार्थित्वेन मनुष्याधीनात्वहीनवृत्तिभाक्त्वं नियन्तृकत्वमित्यर्थः। यो न कस्यचित्प्रकृतित्वेन विकृतित्वेन वा वर्त्तते स दर्विहोमः ॥ ९ ॥

ईश्वरास्तित्वे हेत्वन्तरमाह। इतश्चेति ॥ मोक्षहेतुज्ञानविषयत्वेनापि तदस्तीत्याह। भवितव्यमिति। यदज्ञानात्प्रवृत्तिर्या तज्ज्ञानात्सा निवर्त्तत इति न्यायः॥ कर्म्मवशादेव मोक्षसिद्धेस्तद्धेतु

उ० स्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः ॥ १० ॥

---

भा० एतदक्षरं हे गार्ग्यविदित्वाऽविज्ञायास्मिंल्लोके जुहोति यजते तपस्तप्यते यद्यपि बहूनि वर्षसहस्राण्यन्तवदेवास्य तत्फलं भवति तत्फलभोगान्ते क्षीयन्त एवास्य कर्म्माणि । अपि च यद्विज्ञानात्कार्पण्यात्ययः संसारविच्छेदो यद्विज्ञानाभावाच्च कर्म्मकृत्कृपणः कृतफलस्यैवोपभोक्ता जननमरणप्रबन्धारूढः संसरति । तदस्त्यक्षरं प्रशासितृ तदेतदुच्यते यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः पणक्रीत इव दासादिः । अथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः ॥ १० ॥

---

आ० ज्ञानविषयत्वेनाक्षरं नाभ्युपेयमिति प्राप्ते । नन्विति ॥ उत्तरवाक्येनोत्तरमाह । नेत्यादिना । यस्याज्ञानादसकृदनुष्ठितानि विशिष्टफलान्यपि सर्व्वाणि कर्म्माणि संसारमेव फलयन्ति तदज्ञातमक्षरं नास्तीत्ययुक्तं संसाराभावप्रसङ्गादिति भावः ॥ अक्षरास्तित्वे हेत्वन्तरमाह । अपि चेति ॥ पूर्व्ववाक्यं जीवदवस्थपुरुषविषयमिदं तु परलोकविषयमिति विशेषं मत्वोत्तरवाक्यमवतार्य्य व्याचष्टे । तदेतदित्यादिना ॥ १० ॥

उ॰ तद्वा एतदक्षरं गार्ग्यऽदृष्टं द्रष्ट्रश्रुतꣳ श्रोत्रमतं मन्त्रऽविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ॥ ११ ॥

---

भा॰ अग्नेर्दहनप्रकाशकत्ववत्स्वाभाविकमस्य प्रशास्तृत्वमचेतनस्यैवेत्यत आह। तद्वा एतदक्षरं गार्ग्यदृष्टं न केनचिद्दृष्टमविषयत्वात्स्वयं तु द्रष्टृ दृष्टिस्वरूपत्वात्। तथाऽश्रुतं श्रोत्राद्यविषयत्वात्स्वयं श्रोतृ श्रुतिस्वरूपत्वात्। तथाऽमतं मनसोऽविषयत्वात् स्वयं मन्तृ मतिस्वरूपत्वात्। तथाऽविज्ञातं बुद्धेरविषयत्वात् स्वयं विज्ञातृ विज्ञानस्वरूपत्वात्। किञ्च नान्यदतोऽस्मादक्षरादस्ति नास्ति किञ्चिद्द्रष्टृ दर्शनक्रियाकर्तृ एतदेवाक्षरं दर्शनक्रियाकर्तृ सर्व्वंच। तथा नान्यदतोऽस्ति श्रोतृ तदेवाक्षरं श्रोतृ सर्व्वंच। नान्यदतोऽस्ति मन्तृ तदेवाक्षरं मन्तृ सर्व्वंच सर्व्वमनोद्वारेण। नान्यदतोऽस्ति विज्ञातृ विज्ञानक्रियाकर्तृ। तदेवाक्षरं सर्व्वबुद्धिद्वारेण विज्ञानक्रियाकर्तृ। नाचेतनं प्रधानमन्यद्वा

---

आ॰ प्रधानवादिनः प्रश्नामनूद्योत्तरवाक्येन निराकरोति। अग्नेरित्यादिना॥ इतश्चाक्षरस्य नाचेतनत्वमित्याह। किञ्चेति॥ नास्तीत्यन्वयप्रदर्शनं अतोऽन्यदिति विशेषणसिद्धमर्थमाह। एतदिति॥ अन्यद्वा पूर्व्वोक्तमव्याकृतादिपृथिव्यन्तं निगमनवाक्यमुदाहृत्य तस्य तात्पर्य्यमाह। एतदस्मिन्निति। परा काष्ठा पर्य्यवसानं नास्मादुपरिष्टादधिष्ठानं किञ्चिदस्तीत्यर्थः॥ तस्यैव परम-

उ॰ सा होवाच ब्राह्मणा भगवन्तस्तदेव बहु मन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम ॥ १२ ॥ अष्टमं ब्राह्मणं ॥ ८ ॥

---

भा॰ एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति । यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरोऽशनायादिसंसारधर्मातीतो यस्मिन्नाकाश ओतश्च प्रोतश्चैषा परा काष्ठैषा परा गतिरेतत्परं ब्रह्मैतत्पृथिव्यादेराकाशान्तस्य सत्यस्य सत्यं ॥ ११ ॥

सा होवाच हे ब्राह्मणा भगवन्तः शृणुत मदीयं वचस्तदेव बहु मन्येध्वं मन्यध्वं । किन्तद्यदस्माद्याज्ञवल्क्यान्नमस्कारेण मुच्येध्वं मुच्यध्वमस्मै नमस्कारं कृत्वा तदेव बहु मन्यध्वमित्यर्थः । जयस्त्वस्य मनसापि नाशंसनीयः किमुत कार्य्यतः । कस्मान्न वै युष्माकं मध्ये जातु कदाचिदपीमं

---

आ॰ पुरुषार्थमाह । एषेति । पुरुषान्नपरं किञ्चित्सा काष्ठा सा परागतिरिति हि श्रुत्यन्तरं । ब्रह्माक्षरादक्षरादन्यदस्तीति चेन्नेत्याह । एतदिति । ननु चतुर्थे सत्यस्य सत्यं ब्रह्म व्याख्यातमक्षरन्तु नैवमिति चेत्तत्राह । एतत्पृथिव्यादेरिति ॥ ११ ॥

किन्तद्वचनं वदाह । तदेवेति ॥ बहुमानविषयभूतं वस्तु पृच्छति । किन्तदिति । यदादौ मदीयं वचनं तदेव बहुमानयोग्यमित्याह । यदिति । तद्व्याकरोति । यस्मादिति । नमस्कारं कृत्वाऽस्मदनुज्ञां प्राप्येति शेषः । तदेवेति प्राथमिकवचनोक्तिः । किमिति त्वदीयं पूर्व्वं वचो बहु मन्यामहे चेत्तुं पुनरिममाशास्महे चेत्याह । जयस्त्विति । तत्र प्रश्नपूर्व्वकं पूर्व्वोक्तमेव बहुमा-

भा॰ याज्ञवल्क्यं ब्रह्मोद्यं प्रति जेता। प्रश्नौ चेन्मह्यं वक्ष्यति न वै जेता भवितेति पूर्व्वमेव मया प्रतिज्ञातमद्यापि ममायमेव निश्चयो ब्रह्मोद्यं प्रत्येतत्तुल्यो न कश्चिद्विद्यत इति। ततो ह वाचक्नव्युपरराम ॥ १२ ॥

अथान्तर्यामिब्राह्मण एतदुक्तं। यं पृथिवी न वेद यं सर्व्वाणि भूतानि न विदुरिति च। यमन्तर्यामिणं न विदुर्ये च न विदुर्यश्च तदक्षरं दर्शनादिक्रियाकर्तृत्वेन सर्व्वेषां चेतनाधातुरित्युक्तं। कस्तेषां विशेषः किं वा सामान्यमिति। तत्र केचिदाचक्षते। परस्य महासमुद्रस्थानीयस्य ब्रह्मणोऽक्षरस्याप्रचलितस्वरूपस्येषत्प्रचलितावस्थाऽन्तर्यामी अत्यन्तप्रचलितावस्थाक्षेत्रज्ञो यस्तं न वेदान्तर्यामिणं।

---

व्या॰ नविषयभूतं वाक्यमवतार्य्य व्याचष्टे। ब्रह्मादित्यादिना॥ पराजिताया गार्ग्या वचो नोपादेयमित्याशङ्क्याह। प्रश्नौ चेदिति। ततश्च प्रश्ननिर्णयाद्याज्ञवल्क्यस्याप्रकम्प्यत्वं प्रतिपाद्य ब्राह्मणान्प्रति स्थितवत्योक्तेत्यर्थः॥ १२॥

अन्तर्यामी क्षेत्रज्ञोऽक्षरमित्येतेषामवान्तरविशेषप्रदर्शनार्थं प्रकृतत्वं दर्शयति। अन्तर्यामीति॥ तत्रान्तर्यामिणः प्रकृतत्वं प्रकटयति। यमिति॥ क्षेत्रज्ञस्य प्रकृतत्वं स्फुटयति। ये चेति॥ अक्षरस्य प्रस्तुतत्वं प्रत्याययति। यश्चेति। सर्व्वेषां विषयाणां दर्शनश्रवणादिक्रियाकर्तृत्वेन चेतनाधातुरिति यत्तदक्षरमुक्तमित्यन्वयः॥ तेषु विचारमवतारयति। कस्त्विति॥ तस्मिन्विचारे स्वयूथ्यमतमुत्थापयति। तत्रेति॥ क्षेत्रज्ञस्याप्रस्तुतत्वशङ्कां वारयति। तमिति॥ यथा परस्यात्मनोऽन्तर्यामी जीवश्चेत्यवस्थे द्वे कल्प्येते तथा तस्यैवान्याः पञ्चावस्थाः पिण्डो जातिर्विराट् सूत्रं दैवमित्येवंलक्षणमहाभूतसंस्थानभेदेन कल्पयन्तीत्याह। तथेति। उक्तरीत्या कल्पनायां पिण्डो जातिर्विराट् सूत्रं दैवम-

भा॰ तथान्याः पञ्चावस्थाः परिकल्पयन्ति । तथाष्टावस्था ब्रह्मणो भवन्तीति । वदन्त्यन्येऽक्षरस्य शक्तय एता इति । वदन्त्यनन्तशक्तिमक्षरमिति च । अन्येऽक्षरस्य विकारा इति वदन्ति । अवस्थाशक्ती तावन्नोपपद्येते । अक्षरस्याशनाया-दिसंसारधर्म्मातीतत्वश्रुतेः । न ह्यशनायादिधर्म्मवदवस्थावत्त्वं चैकस्य न युगपदुपपद्यते । तथा शक्तिमत्त्वञ्च । विकाराव-यवत्वे च दोषाः प्रदर्शितास्चतुर्थे । तस्मादेता असत्याः सर्व्वाः कल्पनाः । कस्तर्हि भेद एषामुपाधिकृत इति ब्रूमो न स्वत एषां भेदोऽभेदो वा सैन्धवघनवत्प्रज्ञानघनैकर-सस्वाभाव्यात् । अपूर्व्वमनपरमनन्तरमवाह्यमयमात्मा ब्रह्मेति च श्रुतेः ॥

---

आ॰ व्याकृतं साक्षी क्षेत्रज्ञेत्यष्टावस्था ब्रह्मणो भवन्तीति वदन्तः कल्पयन्तीति सम्बन्धः ॥ अवस्थामुक्त्वा शक्तिपक्षमाह । अन्य इति । तुशब्देनावयवपक्षं दर्शयन्विकारपक्षं निक्षिपति । अय-न्त्विति ॥ तत्र पक्षद्वयं प्रत्याह । अवस्थेति । अन्तर्यामिप्रभृतीना-मिति शेषः ॥ तस्य सांसारिकधर्म्मातीतत्वश्रुतावपि कथमवस्था-वत्त्वं शक्तिमत्त्वं वा न सिद्ध्यतीत्याशङ्क्याह । न हीति ॥ अवशिष्ट-पक्षद्वयनिराकरणं प्रागेव प्रवृत्तं स्मारयति । विकारेति ॥ पर-पक्षनिराकरणमुपसंहरति । तस्मादिति ॥ परकीयकल्पनास-म्भवे पृच्छति । कस्तर्हीति ॥ उत्तरमाह । उपाधीति ॥ आत्मनि स्वतो विशेषाभावे हेतुमाह । सैन्धवेति ॥ तत्रैव हेत्वन्तरमाह । अपूर्व्वमिति । वाह्यं कार्य्यमाभ्यन्तरं कारणं ताभ्यां कल्पिताभ्यां सत्ताधिष्ठानत्वेति न सत्ता स्फूर्त्तिप्रदत्तया वर्त्तते ब्रह्म स्वभावतस्तु जन्मादिसर्व्वविक्रियाशून्यं कूटस्थं तदित्यथर्वश्रुतेरर्थः ॥

भा॰ स बाह्याभ्यन्तरो ह्यज इति चाथर्वणे । तस्मान्निरुपाधिकस्यात्मनो निरुपाख्यत्वान्निर्विशेषत्वादेकत्वाच्च नेति नेतीति व्यपदेशो भवत्यविद्याकामकर्म्मविशिष्टकार्य्यकरणोपाधिरात्मा संसारी जीव उच्यते । नित्यनिरतिशयज्ञानशक्त्युपाधिरात्मान्तर्यामीश्वर उच्यते । स एव निरुपाधिः केवलः शुद्धः । स्वेन स्वभावेनाक्षरं पर उच्यते । तथा हिरण्यगर्भाव्याकृतदेवताजातिपिण्डमनुष्यतिर्य्यक्प्रेतादिकार्य्यकरणोपाधिभिर्विशिष्टस्तदाख्यस्तद्रूपो भवति । तथा तदेजति तन्नैजतीति व्याख्यातं । तथैव त आत्मैष सर्व्वभूतान्तरात्मैष सर्व्वेषु भूतेषु गूढः । तत्त्वमस्यहमेवेदं सर्व्वमात्मैवेदं सर्व्वं नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतयो न

---

आ॰ आत्मनः स्वतो विशेषानवगमे फलितमाह । तस्मादिति । निरुपाख्यत्वं वाचां मनसश्चागोचरत्वं । तत्र निर्विशेषत्वमेकत्वञ्च हेतुर्निरुपाधिकस्येति निर्विशेषत्वं साधयितुमुक्तं तत्र च वीप्सावाक्यं प्रमाणमुक्तं । कथं पुनरेवैतस्य वस्तुनः संसारित्वं तदाह । अविद्येति । तैर्विशिष्टं यत्कार्य्यकरणं तेनोपाधिनोपहितः परमात्मा जीवस्संसारीति च व्यपदेशभाग्भवतीत्यर्थः । तथापि कथं तस्यान्तर्यामित्वं तदाह । नित्येति । नित्यं निरतिशयं सर्व्वचाप्रतिबन्धज्ञानं तस्मिन्सत्त्वपरिणामे सत्त्वप्रधाना मायाशक्तिरुपाधिस्तेन विशिष्टः सन्नात्मेश्वरोऽन्तर्यामीति चोच्यत इत्यर्थः । कथं तर्हि तस्मिन्नक्षरशब्दप्रवृत्तिस्तत्राह । स एवेति । निरुपाधित्वं शुद्धत्वे हेतुः केवलत्वमद्वयत्वे । तथापि कथं तत्र हिरण्यगर्भादिशब्दप्रत्ययायित्वाशङ्क्याह । तथेति । यथैकस्मिन्नेव परस्मिन्नात्मनि कल्पितोपाधिप्रयुक्तं नानात्वं तथा तदेजति तन्नैजतीत्यादि वाक्यमाश्रित्य प्रागेवोक्तमित्याह । तथेति । कल्पनया परस्य नानात्वं । वस्तु तस्यैकरस्यमित्यत्र श्रुतीरुदाहरति । तथे-

उ॰ अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा

---

भा॰ विरुध्यन्ते। कल्पनान्तरेष्वेताः श्रुतयो न गच्छन्ति। तस्मा-दुपाधिभेदेनैवैषां भेदो नान्यथैकमेवाद्वितीयमित्यवधा-रणात् सर्व्वोपनिषत्सु॥ इति बृहदारण्यकभाष्ये पञ्चमा-ध्यायस्याष्टमं ब्राह्मणं॥

अथ हैनं विदग्धः शाकल्यः पप्रच्छ पृथिव्यादीनां सूक्ष्मतारतम्यक्रमेण पूर्व्वस्य पूर्व्वस्योत्तरस्मिन्नोतप्रोतभावं कथयन् सर्व्वान्तरं ब्रह्म प्रकाशितवान्। तस्य च ब्रह्मणो ऽव्याकृतविषये सूत्रभेदेषु नियन्तृत्वमुक्तं। व्याकृतविषये व्यक्त-तरं लिङ्गमिति तस्यैव ब्रह्मणः साक्षादपरोक्षत्वे नियन्त-व्यदेवताभेदसङ्कोचद्वारेणाधिगन्तव्ये इति तदर्थं शाकल्य-

---

आ॰ त्वादिना। अवस्थाशक्तिविकारावयवपक्षेऽपि यथोक्तश्रुतीना-मुपपत्तिमाशङ्क्याह। कल्पनान्तरेष्विति। औपाधिकोऽन्तर्याम्या-दिभेदो न स्वाभाविक इत्युपसंहरति। तस्मादिति। स्वतो वस्तुनि नास्ति भेदः किन्त्वैकरस्यमेवेत्यत्र हेतुमाह। एकमिति॥ पञ्चमस्याष्टमं ब्राह्मणं॥

ब्राह्मणान्तरमुत्थापयति। अथेति॥ गार्गिप्रश्ने निर्व्वृत्ते तया ब्रह्मवदनं प्रत्येतत्तुल्यो नास्तीति सर्व्वान् प्रति कथनानन्तरमथ-शब्दार्थः॥ सङ्गतिं वक्तुं वृत्तं कीर्त्तयति। पृथिव्यादीनामिति। यस्याप्स्वित्यादि प्रस्तुत्य सर्व्वान्तरत्वनिरूपणद्वारा साक्षित्वा-दिकमार्थिकं ब्राह्मणद्वये निर्द्धारितमित्यर्थः। अन्तर्यामिब्राह्मणे

उ॰ याज्ञवल्क्येति त्रयस्त्रिंशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्यो-मिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक

---

भा॰ ब्राह्मणमारभ्यते । विदग्ध इति नामतः शकलस्यापत्यं शाकल्यः पप्रच्छ । कतिसंख्याका देवा हे याज्ञवल्क्येति । स याज्ञवल्क्यो ह किल एतयैव वक्ष्यमाणया निविदा प्रतिपेदे संख्यां यां संख्यां पृष्टवान् शाकल्यो यावन्तो यावत्संख्याका देवा वैश्वदेवस्य शस्त्रस्य निविदि निविन्नामदेवतासंख्यावा-चकानि मन्त्रपदानि कानिचिद्वैश्वदेवे शस्त्रे शस्यन्ते । तानि निवित्संज्ञकानि तस्यां निविदि यावन्तो देवाः श्रूयन्ते तावन्तो देवा इति । का पुनः सा निविदिति । तानि निवि-त्पदानि प्रदर्श्यन्ते । त्रयश्च त्री च शता त्रयश्च देवा देवानां त्रीणि च शतानि पुनरप्येवं त्रयश्च त्री च सहस्राण्येतावन्तो

---

आ॰ पुरतो निर्दिष्टमर्थमनुवदति । तस्येति । नामरूपाभ्यां व्याकृतो विषयो द्वैतप्रपञ्चस्तत्र सूत्रस्य भेदा ये पृथिव्यादयस्तेषु नियम्येषु नियन्तृत्वं तस्योक्तमिति योजना ॥ किमिति व्याकृतवि-षये नियन्तृत्वमुक्तमिति तत्राह । व्याकृतेति ॥ तत्र हि परत-न्त्रस्य पृथिव्यादेरैश्वरं नियम्यत्वे स्पष्टतरलिङ्गमिति तत्रैव नियन्तृत्वमुक्तमित्यर्थः ॥ वृत्तमनूद्योत्तरस्य ब्राह्मणस्य तात्पर्यमाह । तस्यैवेति ॥ नियन्तव्यानां देवताभेदानां प्राणान्तः संक्षेपो

उ० इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ १ ॥

स होवाच महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति कतमे ते त्रयस्त्रिंशदित्यष्टौ

---

भा० देवा इति । शाकल्योऽप्योमिति होवाच । एवमेषां मध्यमा सङ्ख्या मध्यमया ज्ञाता । पुनस्तेषामेव देवानां सङ्कोच-विषयां सङ्ख्यां पृच्छति कत्येव देवा याज्ञवल्क्येति । त्रय-स्त्रिंशत् षट् त्रयो द्वावध्यर्द्ध एक इति । देवतासङ्कोचविका-शविषयां सङ्ख्यां पृष्ट्वा पुनः सङ्ख्येयस्वरूपं पृच्छति कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ १ ॥

स होवाचेतरो महिमानो विभूतय एषां त्रयस्त्रिंशतां देवानामेते त्रयश्च त्री च शतेत्यादयः । परमार्थतस्तु त्रय-

---

आ० विद्यासहायसंन्यासपर्यन्तकाण्डद्वारा प्रवृत्तस्यैव प्रपञ्चः शाखाप्रत्याप-रोप्यते स एष नेति नेत्यात्मेत्यादिनाधिगन्तव्य इति वक्तुं प्रथमं देवतासङ्कोचविकाशोक्तिरनन्तरं वस्तुनिर्देश इत्येतदर्थमेतद्ब्रा-ह्मणमित्यर्थः । ब्राह्मणारम्भमेवमुक्त्वा तदक्षराणि व्याकरोति । अथेत्यादिना ॥

निविदि श्रूयन्ते तावन्तो देवा इत्युत्तरत्र सम्बन्धः । केयं निवि-दिति पृच्छति । निविन्नामेति । उत्तरमाह । देवतेति । पदार्थमुक्त्वा वाक्यार्थं कथयति । तस्यामिति । यद्यपि भाष्ये निविद्व्याख्याता तथापि मन्त्रद्वारा श्रुत्वा तां व्याख्याति । का पुनरित्यादिना । अनुवादवाक्यं व्याकरोति । एवमिति । मध्यमा सङ्ख्या षडधिक-त्रिंशताधिकत्रिशताधिकत्रिसहस्रलक्षणा । कत्येवेत्यादिप्रश्नानां पूर्वप्रश्नेन पौनरुक्त्यमाशङ्क्य परिहरति । पुनरित्यादिना । कतमे

ॐ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंꣳशा इति ॥ २ ॥ कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं वसु सर्वꣳ हितमिति तस्माद्वसव इति ॥ ३ ॥ कतमे रुद्रा इति दशेमे पुरुषे

---

भा० त्रिंशत्त्वेव देवा इति। कतमे ते त्रयस्त्रिंशदित्युच्यन्ते। अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति त्रयस्त्रिंशतां पूरणौ ॥ २ ॥

कतमे वसव इति। तेषां स्वरूपं प्रत्येकं पृच्छ्यते। अग्निश्च पृथिवी चेत्यग्न्याद्या नक्षत्रान्ता एते वसवः प्राणिनां कर्म्मफलाश्रयत्वेन कार्य्यकरणसङ्घातरूपेण तन्निवासत्वेन विपरिणमन्तो जगदिदं सर्व्वं वासयन्ति वसन्ति च ते यस्माद्वासयन्ति तस्माद्वसव इति ॥ ३ ॥ कतमे रुद्रा इति।

---

आ० ते त्रयश्चेत्यादिप्रश्नस्य विषयभेदं दर्शयति। देवतेति ॥ कति तर्हि देवा भवन्ति तत्राह। परमार्थतस्त्विति ॥ १ ॥ त्रयस्त्रिंशतो देवानां स्वरूपं प्रश्नद्वारा निर्द्धारयति। कतमे त इति ॥ २ ॥

उत्तरप्रश्नप्रपञ्चप्रतीकं गृहीत्वा तस्य तात्पर्य्यमाह। कतम इति। तेषां वस्वादीनां प्रत्येकं वस्वादित्रये प्रतिगणमिन्द्रे प्रजापतौ चैकैकस्येत्यर्थः ॥ तेषां वसुत्वमेतेषु हीत्यादिवाक्यावष्टम्भेन स्फुटयति। प्राणिनामिति। तेषां कर्म्मतत्फलस्य चाश्रयत्वेन तेषामेव निवासत्वेन च शरीरेन्द्रियसमुदायाकारेण विपरिणमन्तोऽग्न्यादयो जगदेतद्वासयन्ति स्वयञ्च तत्र वसन्ति तस्माद्युक्तं तेषां वसुत्वमित्यर्थः ॥ वसुत्वं निगमयति। ते यस्मादिति ॥ ३ ॥

उ॰ प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्यी-
दुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा
इति ॥ ४ ॥ कतम आदित्या इति द्वादश वै
मासाः संवत्सरस्यैत आदित्या एते हीदꣳ
सर्व्वमाददाना यन्ति ते यदिदꣳ सर्व्वमाददाना
यन्ति तस्मादादित्या इति ॥ ५ ॥ कतम इन्द्रः
कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः

---

भा॰ दश इमे पुरुषे कर्म्मबुद्धीन्द्रियाणि प्राणा आत्मा मन
एकादश एकादशानां पूरणस्त एते प्राणा यदा अस्मा-
च्छरीरान्मर्त्यात्प्राणिनां कर्म्मफलोपभोगक्षये उत्क्रामन्ति
अथ तदा रोदयन्ति तत्तच यस्माद्रोदयन्ति ते सम्बन्धि-
नस्तस्माद्रुद्रा इति ॥ ४ ॥ कतम आदित्या इति। द्वादश वै
मासाः संवत्सरस्य कालस्यावयवाः प्रसिद्धा एते आदि-
त्याः । कथमे ते हि यस्मात्पुनः पुनः परिवर्त्तमानाः
प्राणिनामायूंषि कर्म्मफलञ्चाददानाः गृह्णन्त उपाददतो
यन्ति गच्छन्ति यस्मादेवमिदं सर्व्वमाददाना यन्ति तस्मा-
दादित्या इति ॥ ५ ॥ कतम इन्द्रः कतमः प्रजापतिरिति

---

व्या॰ प्राणशब्दार्थमाह। कर्म्मेति॥ एते यदा अस्मादित्यादि वाक्यमनु-
सृत्य तेषां रुद्रत्वमुपपादयति। त एते प्राणा इति। मरणकालः
समभ्यर्थः ॥ ४ ॥ तेषामादित्यत्वमप्रसिद्धमिति पृच्छते । कथ-
मिति ॥ ५ ॥ एते हीत्यादिवाक्येनोत्तरमाह । एते हीति॥
प्रसिद्धं वचं व्यावर्त्तयति । वीर्य्यमिति । तदेव सङ्घातनिष्ठ-

उ॰ प्रजापतिरिति कतमस्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति ॥ ६ ॥

कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्चादित्यश्च द्यौश्चैते षडेते हीदꣳ सर्वꣳ षडिति ॥ ७ ॥ कतमे ते त्रयो देवा इतीम एव त्रयो लोका

---

भा॰ स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति । कतमः स्तनयित्नुरित्यशनिरिति । अशनिर्वज्रं वीर्यं बलं यत्प्राणिनः प्रमापयति स इन्द्रः । इन्द्रस्य हि तत्कर्म । कतमो यज्ञ इति पशव इति । यज्ञस्य हि साधनानि पशवो यज्ञस्यारूपत्वात्पशुसाधनाश्रयत्वाच्च पशवो यज्ञ इत्युच्यते ॥ ६ ॥

कतमे षडिति । त एवाग्न्यादयो वसुत्वेन पठिताः । चन्द्रमसं नक्षत्राणि च वर्जयित्वा षट् भवन्ति षट्संख्याविशिष्टाः । एते हि यस्मात् त्रयस्त्रिंशदादि यदुक्तमिदं सर्व्वमेत एव षड्भवन्ति सर्व्वो हि वस्वादिविस्तर एतेष्वेव षट्स्वन्तर्भवतीत्यर्थः ॥ ७ ॥ कतमे ते त्रयो देवा इति । इम

---

आ॰ त्वेन स्फुटयति । बलमिति ॥ किन्तदिति चोत्तरमाह । यत्प्राणिन इति । प्रमापणं हिंसनं ॥ कथं तस्येन्द्रत्वमुपचारादित्याह । इन्द्रस्य हीति ॥ पशूनां यज्ञत्वमप्रसिद्धमित्याशङ्क्याह । यज्ञस्य हीति ॥ कारणे कार्य्योपचारं साधयति । यज्ञस्येति । अमूर्त्तत्वात्साधनव्यतिरिक्तरूपाभावाद्यज्ञस्य पश्वाश्रयत्वाच्च पशवो यज्ञा इत्युच्यत इत्यर्थः ॥ ६ ॥

एते हीति प्रतीकमादाय व्याचष्टे । यस्मादिति । यत्त्रयस्त्रिंशदाद्युक्तं तत्सर्व्वमेत एव यस्मादेते षड्भवन्तीति योजना ॥ अक्षरार्थमुक्त्वा वाक्यार्थमाह । सर्व्वो हीति ॥ ७ ॥ प्रतिज्ञासमाप्ता-

उ० एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवा-
वित्यन्नञ्चैव प्राणश्चेति कतमोऽध्यर्द्ध इति योऽयं
पवत इति ॥ ८ ॥ तदाहुर्यदयमेक इवैव पवतेऽथ
कथमध्यर्द्ध इति यदस्मिन्निदꣳ सर्वमध्यार्द्ध्नोत्ते-

---

भा० एव त्रयो लोका इति। पृथिवीमग्निञ्चैकीकृत्यैको देवोऽ
न्तरिक्षं वायुञ्चैकीकृत्य द्वितीयो दिवमादित्यञ्चैकीकृत्य
तृतीयस्त एव त्रयो देवा इति। एषु हि यस्मात् त्रिषु देवेषु
सर्व्वे देवा अन्तर्भवन्ति तेनैत एव देवास्त्रय इत्येष नैरु-
क्तानां केषांचित्पक्षः। कतमौ तौ द्वौ देवाविति। अन्नञ्चैव
प्राणश्चैतौ द्वौ देवावनयोः सर्व्वेषामुक्तानामन्तर्भावः।
कतमोऽध्यर्द्ध इति। योऽयं पवते वायुः ॥ ८ ॥ तत्राहुश्चोद-
यन्ति। यदयं वायुरेक इवैव एक एव पवते। अथ कथमध्यर्द्ध
इति। यदस्मिन्निदं सर्व्वमध्यार्द्ध्नोदस्मिन्वायौ सतीदं सर्व्व-
मधि आर्द्ध्नोदधि वृधिं प्राप्नोति तेनाध्यर्द्ध इति। कतम

---

आ० विति शब्दस्तत्र हेतुः। एषु हीति। देवत्रयस्योक्ततां केषाञ्चिदेव
पक्षो दर्शितोऽन्येषान्तु त्रयो लोका इत्यस्य यथा श्रुतोऽर्थ इत्याह।
इत्येष इति ॥ ८ ॥ एकस्याध्यर्द्धत्वमाक्षिपति। तत्रेति। इवशब्दस्तु
कथमित्यत्र सम्बध्यते। परिहरति। यदस्मिन्निति। प्राणस्य
महत्त्वं साधयति। सर्व्वेति। तेन महत्त्वेनेति यावत्। तस्य परो-
क्षत्वप्रतिपत्तौ प्रयत्नगौरवार्थं कथयति। त्वदितीति। उक्तमर्थं
प्रतिपत्तिसौकर्य्यार्थं सङ्गृह्णाति। देवानामिति। एकत्वं प्राणे पर्य्य-
वसानं नानात्वमानन्त्यं षडधिकत्रिंशताधिकत्रिसहस्रसङ्ख्याका-
नामेव देवानामथोक्तत्वात्कथं तदानन्त्यमित्याशङ्क्य शतसहस्र-
शब्दाभ्यामनन्तान्युक्तानीत्याशयेनाह। अनन्तानामिति। एकस्मिन्-

उ॰ नाध्यर्द्ध इति कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते ॥ ९ ॥

---

भा॰ एको देव इति। प्राण इति। स प्राणो ब्रह्म सर्व्वदेवात्मकत्वान्महद्ब्रह्म त्यदित्याचक्षते त्यदिति तद्ब्रह्माचक्षते परोक्षाभिधायकेन शब्देन। देवानामेतदेकत्वं नानात्वञ्चानन्तानां देवानां निविदसङ्ख्याविशिष्टेष्वन्तर्भावस्तेषामपि त्रयस्त्रिंशदादिषूत्तरोत्तरेषु यावदेकस्मिन्प्राणे प्राणस्यैव चैकस्य सर्व्वोऽनन्तसङ्ख्यातो विस्तर एवमेकश्चानन्तश्चावान्तरसङ्ख्याविशिष्टश्च प्राण एव। तत्र च देवस्यैकस्य नामरूपकर्म्मगुणशक्तिभेदोऽधिकारभेदात्॥ ९ ॥

---

आ॰ प्राणे पर्य्यवसानं यावद्भवति तावत्पर्य्यन्तमुत्तरेषु त्रयस्त्रिंशदादिषु तेषामप्यन्तर्भाव इत्याह। तेषामपीति॥ प्राणस्य कथमनन्तभावस्तत्राह। प्राणस्यैवेति॥ सङ्क्षेपोक्तमर्थमुपसंहरति। एवमिति॥ एकस्यानेकधाभावे किन्निमित्तमित्याशङ्क्याह। तत्रेति। उक्तरीत्या प्राणस्वरूपे स्थिते सतीति यावत्। देवस्यैकस्य प्रकृतस्य प्राणस्यैवेत्यर्थः॥ प्राणिनां ध्याने कर्म्मणि चाधिकारस्य स्वामित्वस्य भेदोऽधिकारभेदस्तन्निमित्तत्वेन देवस्यानेकसंख्यानपरिणामसिद्धिः। प्राणिनो हि ध्यानं कर्म्म चानुष्ठाय सूर्य्याग्न्यादिरूपमापद्यन्ते तद्युक्तो यथोक्तो भेद इत्यर्थः॥ सङ्कोचविकासाभ्यां प्राणस्वरूपोक्त्यनन्तरमवसरप्राप्तमिदानीमुच्यते। उपदिश्यते ध्यानार्थमिति शेषः॥ ९॥

उ॰ पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योति-
र्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ

---

भा॰ इदानीं तस्यैव प्राणस्य ब्रह्मणः पुनरष्टधा भेदमुपदिश्यते। पृथिवी एव यस्य देवस्यायतनमाश्रयोऽग्निर्लोको यस्य। लोकयत्यनेनेति लोकः। पश्यतीत्यग्निना पश्यतीत्यर्थः। मनोज्योतिर्मनसा ज्योतिषा सङ्कल्पविकल्पादिकार्य्यं करोति यः सोऽयं मनोज्योतिः। पृथिवीशरीरोऽग्निदर्शनो मनसा सङ्कल्पयिता पृथिव्यभिमानी कार्य्यकरणसङ्घातवान् देव इत्यर्थः। स एवंविशिष्टस्तं पुरुषं यो विद्याद्विजानीयात्सर्व्वस्यात्मन आध्यात्मिकस्य कार्य्यकरणसङ्घातस्यात्मनः परमयनं पर आश्रयस्तं परायणं। मातृजेन लङ्मांसरुधिररूपेण चेत्रस्थानीयेन वीजस्थानीयस्य पितृजस्यास्थिमज्जाशुक्ररूपस्य परमयनं करणात्मनश्च स वै वेदिता स्याद्य एतदेवं वेत्ति स वै वेदिता पण्डितः स्यादि-

---

आ॰ अवयवशो वाक्यं योजयति। पृथिवीति॥ संपिण्डितवाक्यार्थं कथयति। पृथिवीत्यादिना। वैशब्दोऽवधारणार्थः। तं परायणं य एव विजानीयात्स एव वेदिता स्यादिति सम्बन्धः॥ अथ केन रूपेण पृथिवीदेवस्य कार्य्यकरणसङ्घातं प्रत्ययाश्रयत्वं तदाह। मातृजेनेति। पृथिव्या मातृशब्दवाच्यत्वाद्य एव देवोऽहं पृथिव्यस्मीति मन्यते स एव शरीरारम्भकमातृजकोशत्रयाभिमानितया वर्त्तते। तथा च तस्य तेन रूपेण पितृजत्रितयं कार्य्यलिङ्गञ्च करणं प्रत्ययाश्रयत्वं सम्भवतीत्यर्थः॥ पृथिवीदेवस्य परायणत्वमुपपाद्यानन्तरं वाक्यमुत्थाप्य व्याचष्टे। स वै वेदितेति॥ तदा मम किमायातमित्याशङ्क्याह। याज्ञवल्क्येति। स

उ॰ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ शारीरः पुरुषः स एष वदेव शाकल्य तस्य का देवतेत्यमृतमिति होवाच ॥ १० ॥

---

भा॰ त्यभिप्रायः । याज्ञवल्क्य त्वं तमजानन्नेव पण्डिताभिमानी-त्यभिप्रायो यदि तद्विज्ञाने पाण्डित्यं लभ्यते वेद वा अहं तं पुरुषं सर्व्वस्यात्मनः परायणं यमात्थ यं कथयसि तमहं वेद तच्च शाकल्यस्य वचनस्य द्रष्टव्यं । यदि त्वं वेत्थ तं पुरुषं ब्रूहि किंविशेषणोऽसौ । शृणु यद्विशेषणः स एवायं शारीरः पार्थिवोंऽशः । शरीरे भवःशारीरो मातृजकोशत्रयरूप इत्यर्थः । स एष देवो यस्त्वया पृष्टो हे शाकल्य किन्त्वस्ति तत्र वक्तव्यं विशेषणान्तरं तदुदेव पृच्छेवेत्यर्थः । हे शाकल्य स एव प्रतोभि ऽमर्षवशग आह तोत्रार्दित इव गजस्तस्य देवस्य शारीरस्य का देवता यस्मान्निष्प-द्यते यः सा तस्य देवतेत्यस्मिन्प्रकरणे विवक्षितः । अमृत-

---

आ॰ पुरुषो येन विशेषणेन विशिष्टस्तद्विशेषणमुच्यमानं शृण्वित्युक्त्वा तदेवाह । य एवेति । शरीरं हि पञ्चभूतात्मकं तत्र पार्थिवांशेन जनकत्वेन स्थितः शारीर इति यावत् । तस्य जीवत्वं वारयति । मातृजेति । पृथिवीदेवस्य निर्णीतत्वशङ्कां वारयति । किन्त्विति । याज्ञवल्क्यो वक्ता सम्प्रष्टारं शाकल्यं प्रति कथं वदेवेति कथयति तत्राह । पृच्छेति । चोदितस्यामर्षवशगत्वे दृष्टान्तः । तोत्रेति । प्रकारान्तरं देवताशब्दार्थमाह । यस्मादिति । पुरुषो निष्पत्तिकारणं यतोऽस्य निष्पत्तिहेतुत्वमत्र रस-

उ॰ काम एव यस्यायतनꣳ हृदयं लोको मनोज्यो-
तिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ
स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं
तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवा-
यं काममयः पुरुषः स एष वदैव शाकल्य तस्य
का देवतेति स्त्रिय इति होवाच ॥ ११ ॥ रूपा-

---

भा॰ मिति होवाच अन्नमिति यो भुक्तस्यान्नस्य रसो मातृजस्य लोहितस्य निष्पत्तेर्हेतुस्तस्माद्धि अन्नरसाल्लोहितं निष्पद्यते स्त्रियाश्रितं ततश्च लोहितमयं शरीरं बीजाश्रयं। समानमन्यत् ॥ १० ॥

काम एव यस्यायतनं। स्त्रीव्यतिकराभिलाषः कामः कामशरीर इत्यर्थः। हृदयं लोको हृदयेन बुद्ध्या पश्यति। य एवायं काममयः पुरुषोऽध्यात्ममपि काममय एव तस्य का देवतेति स्त्रिय इति होवाच स्त्रीतो हि कामस्य

---

आ॰ स्यानुभवेन साधयति। तस्माद्धीति॥ तस्य कार्य्यमाह। ततश्चेति। लोहितादद्वितीयपदार्थनिष्ठात्तत्कार्य्यं त्वङ्मांसरुधिररूपं बीजस्याग्निमच्चाम्बुजात्मकस्याश्रयभूतं भवतीत्यर्थः। पर्य्यायसमाप्यपर्य्यायेण तुल्यार्थत्वान्न पृथग्व्याख्यानापेक्षमित्याह। समानमिति॥ १०॥

उत्तरपर्य्यायेषु येषां पदानामर्थभेदस्तेषां तल्लक्षणार्थं प्रतीकं गृह्णाति। काम इति॥ वाक्यार्थमाह। कामशरीर इत्यर्थ इति॥ स च हृदयदर्शनो मनसा संकल्पयितेति पूर्व्ववत्। तस्य विशेषणं दर्शयति। य एवेति। आध्यात्मिकस्य काममयस्य पुरुषस्य कारणं पृच्छति। तस्येति॥ तस्याविर्भावमनुभवेन गमनि।

उ॰ ण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य तस्य का देवतेति सत्यमिति होवाच ॥ १२ ॥ आकाश एव यस्यायतनꣳ श्रोत्रं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायꣳ श्रोत्रः प्रातिश्रुत्कः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति दिश इति होवाच ॥ १३ ॥

---

भा॰ दीप्तिर्जायते ॥ ११ ॥ रूपाण्येव यस्यायतनं। रूपाणि शुक्लकृष्णादीनि । य एवासावादित्ये पुरुषः सर्व्वेषां हि रूपाणां विशिष्टं कार्य्यमादित्ये पुरुषस्तस्य का देवतेति । सत्यमिति होवाच। सत्यमिति चक्षुरुच्यते चक्षुषाध्यात्मन आदित्यस्या-

---

आ॰ क्लीतो हीति ॥ ११ ॥ रूपशरीरस्य चक्षुर्दर्शनस्य मनसा सङ्कल्पयितुर्देवस्य कथमादित्ये पुरुषो विशेषणमित्याशङ्क्याह । सर्व्वेषां हीति । रूपमात्राभिमानिनो देवस्यादित्ये पुरुषो विशेषावच्छेदः । स च सर्व्वरूपप्रकाशकत्वात्सर्व्वैः रूपैः सम्प्रकाशमानायारब्धः । तस्माद्युक्तं यथोक्तं विशेषणमित्यर्थः ॥ कथं चक्षुषः सकाशादादित्यस्योत्पत्तिरित्याशङ्क्य चक्षोः सूर्यो अजायतेति श्रुतिमाश्रि-

उ॰ तम एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच ॥ १४ ॥ रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै

---

भा॰ धिदैवतस्य निष्पत्तिः ॥ १२ ॥ आकाश एव यस्यायतनं । य एवायं श्रोत्रे भवः श्रोत्रस्तत्रापि प्रतिश्रवणवेलायां विशेषतो भवतीति प्रातिश्रुत्कस्तस्य का देवतेति दिश इति होवाच दिग्भ्यो ह्यसावाध्यात्मिको निष्पद्यते ॥ १३ ॥

तम एव यस्यायतनं । तम इति शार्वराद्यन्धकारो गृह्यते । आध्यात्मं छायामयो ज्ञानमयः पुरुषस्तस्य का देवतेति मृत्युरिति होवाच । मृत्युरधिदैवतं तस्य निष्पत्तिकारणं ॥ १४ ॥ रूपाण्येव यस्यायतनं । पूर्वं साधारणानि रूपाणु-

---

आ॰ त्याह । चक्षुषो हीति ॥ १२ ॥ तत्रापीति श्रोतोक्तिः । प्रतिश्रवणं संवादः । प्रतिविषयं श्रवणं वा सर्व्वाणि श्रवणानि वा तद्वेलायामिति यावत् ॥ दिशस्तत्राधिदैवतमिति श्रुतिमाश्रित्याह । दिग्भ्यो हीति ॥ १३ ॥

अधिदैवतं मृत्युरीश्वरो मृत्युनैवेदमावृतमासीदिति श्रुतेः । स च तस्याज्ञानमयस्याध्यात्मिकस्य पुरुषस्योत्पत्तिकारणमविवेकिप्रवृत्तेरीश्वराधीनत्वादीश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वेति हि पठन्ति तदाह । मृत्युरिति ॥ १४ ॥ पुनरुक्तिं प्रत्याह । पूर्व्व-

उ॰ तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यसुरिति होवाच ॥ १५ ॥ आप एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष

---

भा॰ स्नानीह तु प्रकाशकानि विशिष्टानि रूपाणि गृह्यन्ते। रूपायतनस्य देवस्य विशेषायतनं प्रतिबिम्बाधारमादर्शादयसुरिति होवाच तस्य प्रतिबिम्बाख्यस्य रूपस्य निष्पत्तिरसोः प्राणात् ॥ १५ ॥ आप एव यस्यायतनं। साधारणाः सर्व्वा आप आयतनं वापीतडागाद्याश्रयासु विशेषावस्थानं। तस्य का देवतेति वरुण इति। वरुणा-

---

आ॰ मिति। आधारशब्दो भावप्रधानस्तथा च प्रतिबिम्बस्याधारत्वं यत्र तदित्युक्तं भवति। आदिशब्देन स्वच्छस्वभावखड्गादि गृह्यते। प्राणेन हि निघृष्यमाणे दर्पणादौ प्रतिबिम्बाभिव्यक्तियोग्यो रूपविशेषो निष्पद्यते। ततो युक्तं प्राणस्य प्रतिबिम्बकारणत्वमित्यभिप्रेत्याह। तस्येति ॥ १५ ॥ आप एव यस्यायतनं। य एवायमप्सु पुरुष इत्युभयत्र सामान्यविशेषभावो न प्रतिभातीति शङ्कमानं प्रत्याह। साधारणा इति। कथं पुनर्वापीकूपविशेषायतनस्य वरुणो देवता। न हि देवतात्मनो वरुणस्य तदधिष्ठातु-

उ॰ वदैव शाकल्य तस्य का देवतेति वरुण इति होवाच ॥ १६ ॥ रेत एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनःपरायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच ॥ १७ ॥

---

भा॰ संघातकर्त्र्योऽध्यात्ममाप एव वाप्याद्यपां निष्पत्तिकारणं ॥ १६ ॥ रेत एव यस्यायतनं । य एवायं पुत्रमयो विशेषायतनं रेत आयतनस्य पुत्रमय इति चास्थिमज्जाशुक्राणि पितुर्जातानि । तस्य का देवतेति । प्रजापतिरिति होवाच । प्रजापतिः पितोच्यते । पितृतो हि पुत्रस्योत्पत्तिः ॥ १७ ॥

---

आ॰ तत्कारणत्वं तत्राह । वरुणादिति ॥ आपो वापीकूपाद्याः पीताः सत्योऽध्यात्मं शरीरे मूत्रादिसङ्घातं कुर्वन्ति । ताश्च वरुणाद्भवन्ति । वरुणशब्देनाप एव रश्मिद्वारा भूमिं पतन्त्योऽभिधीयन्ते । तथा च ता एव वरुणात्मिका वाप्याद्यपां पीयमानानामुत्पत्तिकारणमिति युक्तं वरुणस्य वापीतडागाद्यायतनं पुरुषं प्रति कारणत्वमित्यर्थः ॥ १६ ॥ वाक्यद्वयं गृहीत्वा तात्पर्यमाह । विशेषेति ॥ पुत्रमयशब्दार्थं व्याचष्टे । पुत्रमय इति ॥ १७ ॥

उ॰ शाकल्येति होवाच याज्ञवल्क्यस्त्वाꣳ स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता३ इति ॥ १८ ॥ याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति

---

भा॰ अष्टधा देवलोकपुरुषभेदेन त्रिधा त्रिधात्मानं विभज्यावस्थित एकैको देवः प्राण एवोपासनार्थं व्यपदिष्टः। अधुना दिग्विभागेन पञ्चधा प्रविभक्तस्यात्मन्युपसंहारार्थमाह। तूष्णीभूतं शाकल्यं याज्ञवल्क्यो ग्रहेणेवावेशयन्नाह। शाकल्येति होवाच याज्ञवल्क्यस्त्वां स्विदिति वितर्के इमे नूनं ब्राह्मणा अङ्गारावक्षयणमङ्गारा अवक्षीयन्ते यस्मिन्सन्देशादौ तदङ्गावक्षयणं तन्नूनं त्वामक्रत कृतवन्तो ब्राह्मणास्त्वन्तु न बुध्यसे आत्मानं मया दह्यमानमित्यभिप्रायः ॥ १८ ॥ याज्ञवल्क्येति होवाच शाकल्यः। यदिदं कुरुपाञ्चालानां ब्राह्मणानत्यवादीरत्युक्तवानसि स्वयं भीतास्त्वामङ्गारावक्षयणं कृतवन्त इति। किं ब्रह्म विद्वान्सन्नेव-

---

आ॰ शाकल्येति होवाचेत्यादिग्रन्थस्य तात्पर्यं वक्तुं वृत्तं कीर्त्तयति। अष्टधेति। लोकः सामान्याकारः पुरुषो विशेषावच्छेदो देवः। तत्कारणमनेन प्रकारेण त्रिधा त्रिधात्मानं प्रतिपद्य स्थितो य एकैको देवस्तदुक्तः स प्राण एव सूत्रात्मा तद्भेदत्वात् पूर्व्वोक्तस्य सर्व्वस्य स चोपासनार्थमष्टधोपदिष्टोऽधस्तादित्यर्थः। उत्तरस्य तात्पर्यं दर्शयति। अधुनेति। प्रविभक्तस्य जगतः सर्व्वस्येति शेषः। आत्मशब्दो हृदयविशेषः। याज्ञवल्क्यवाक्यस्य शाकल्ये प्रवृत्तं बुद्धिपूर्व्वकारित्वापादकत्वं दर्शयति। ग्रहेणेति। सर्व्वेषामेव ब्राह्मणानां प्रायेण वक्तृत्वेन सम्मतो भवानिति मुनेर-

उ॰ दिशो वेद सदेवाः सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥ १९ ॥

किं देवतोऽस्यां प्राच्यां दिश्यसीत्यादित्यदेवत

---

भा॰ मधिचिक्षिपसि ब्राह्मणान्। याज्ञवल्क्य आह अस्मद्विज्ञानं तावदिदं मम किं तद्दिशो वेद दिग्विषयं विज्ञानं जाने तच्च न केवलं दिश एव सदेवा देवैः सह दिगधिष्ठातृभिः। किञ्च सप्रतिष्ठाः प्रतिष्ठाभिश्च सह। इतर आह। यद्यद्दिशो वेत्थ सदेवाः सप्रतिष्ठा इति। सफलं यदि विज्ञानं त्वया प्रतिज्ञातं ॥ १८ ॥

किं देवतः का देवता अस्य तव दिग्भूतस्य। असौ हि याज्ञवल्क्यो हृदयात्मानं दिक्षु पञ्चधाविभक्तं दिगात्मभूतं तद्द्वारेण सर्व्वं जगदात्मत्वेनोपगम्याहमस्मि दिगात्मेति व्यवस्थितः पूर्व्वाभिमुखः सप्रतिष्ठावचनाद्यथा याज्ञवल्क्यस्य प्रतिज्ञा तथैव पृच्छति। किं देवतस्त्वमस्यां

---

आ॰ भिसंहितं ॥ १८ ॥ शाकल्यस्तु काक्वचोदितत्वादनुरोधिनीमन्यथा प्रतिपत्तिमेवादाय चोदयतीत्याह। यदिदमिति। दिग्विषयं विज्ञानं जाने तन्ममास्तीत्यर्थः। तच्च विज्ञानं केवलं दिङ्मात्रस्य न भवति किन्तु देवैः सह प्रतिष्ठाभिश्च सहिता दिशो वेदेत्याह। तच्चेति ॥ १९ ॥

अवतारितस्य वाक्यस्यार्थं सङ्क्षिपति। सफलमिति। प्राच्यां दिशि का देवतेति वक्तव्ये कथमन्यथा पृच्छ्यते तत्राह। असौ हीति। आत्मानमात्मीयमिति यावत्। यथोक्तं हृदयमात्मत्वेनोपगम्येति सम्बन्धः। तथापि प्रथमं प्राचीं दिशमधिकृत्य प्रश्ने को हेतुरिति चेत्तत्राह। पूर्व्वाभिमुख इति। यद्यपि दिगात्मा-

उ॰ इति स आदित्यः कस्मिन्प्रतितिष्ठत इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति

---

भा॰ दिश्यस्मीति हि सर्व्वत्र वेदे यां यां देवतामुपास्त इहैव तद्भूतस्तां तां प्रतिपद्यत इति। तथा च वक्ष्यति। देवो भूत्वा देवानप्येतीत्यस्यां प्राच्यां का देवता दिगात्मनस्तवाधिष्ठात्री कया देवतया त्वं प्राचीदिग्रूपेण सम्पन्न इत्यर्थः। इतर आह आदित्यदेवत इति। प्राच्यां दिशि ममादित्यो देवता सोऽहमादित्यदेवतः। सदेवा इत्येतदुक्तं। सप्रतिष्ठा इति तु वक्तव्यमित्याह। स आदित्यः कस्मिन्प्रतिष्ठित इति। चक्षुषीति। अध्यात्मतश्चक्षुष आदित्यो निष्पन्न इति हि मन्त्रब्राह्मणवादाः। चन्द्रमा मनसो जातश्चक्षुषः सूर्य्य इत्यादयः। कार्य्यं हि कारणे प्रतिष्ठितं भवति। कस्मिन्नु चक्षुः प्रतिष्ठितमिति। रूपेष्विति रूपग-

---

आ॰ दिश्यस्मीति स्थितस्तथापि कथं सर्व्वं समदात्मत्वेनोपगम्य तिष्ठतीत्यवगम्यते तत्राह। सप्रतिष्ठेति। सप्रतिष्ठा दिशो वेदेति वचनात्सर्व्वमपि हृदयद्वारा समदात्मत्वेनोपगम्य स्थितो मुनिरिति प्रतिभातीत्यर्थः॥ प्रतिज्ञानुसारित्वाच्चायं प्रश्नो युक्तिमानित्याह। यथेति॥ अहमस्मि दिगात्मेति प्रतिज्ञानुसारिण्यपि प्रश्ने देहपातोत्तरभावी देवताभावः पृच्छ्यते सति देहे ध्यातुस्तद्भावायोगादित्यभिप्रेत्याह। सर्व्वत्र हीति। इति न भाविदेवताभावः प्रश्नगोचर इति शेषः॥ उक्तेऽर्थे वाक्यशेषमनुकूलयति। तथा चेति॥ प्रश्नार्थमुपसंहरति। अस्यामिति॥ आदित्यस्य चक्षुषि प्रतिष्ठितत्वं प्रकटयितुं कार्य्यकारणभावं तयोरादर्शयति। अध्यात्मतश्चक्षुष इति। चक्षोः सूर्य्योऽजायतेत्यादयो

उ॰ चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीति भवन्तीत्येवमेवैतद्याज्ञवल्क्य ॥ २० ॥

---

भा॰ ग्रहणाय हि रूपात्मकं चक्षुः रूपेण प्रयुक्तं। यैर्हि रूपैः प्रयुक्तं तैरात्मग्रहणायारब्धञ्चक्षुस्तस्मात्तादित्यं चक्षुः। सह प्राच्या दिशा सह तत्स्थैः सर्व्वैं रूपेषु प्रतिष्ठितं। चक्षुषा सह प्राची दिक्सर्व्वा रूपभूतानि च। कस्मिन्नु रूपाणि प्रतिष्ठानीति हृदय इति होवाच। हृदयारब्धानि रूपाणि रूपाकारेण हि हृदयं परिणतं। यस्माद्धृदयेन हि रूपाणि सर्व्वो लोको जानाति। हृदयमिति। बुद्धिमनसी एकीकृत्य निर्देशः। तस्माद्धृदये ह्येव रूपाणि प्रतिष्ठितानि हृदयेन हि स्मरणं भवति। रूपाणां वासनात्मनां हृदये रूपाणि प्रतिष्ठितानीत्यर्थः। एवमेवैतद्याज्ञवल्क्य ॥ २० ॥

---

आ॰ मन्त्रवादास्तदनुसारिणश्च ब्राह्मणवादाः॥ भवतु कार्य्यकारणभावस्तथापि कथं चक्षुष्यादित्यस्य प्रतिष्ठितत्वं तत्राह॥ कार्य्यं हीति॥ कथं चक्षुषोऽरूपेषु प्रतिष्ठितत्वं तत्राह। रूपग्रहणायेति॥ तथापि कथं यथोक्तमाधाराधेयत्वमत आह। यैर्हीति॥ चक्षुषो रूपाधारत्वे फलितमाह। तस्मादिति॥ उपसंहृतमर्थं संगृह्णाति। चक्षुषेति॥ हृदयारब्धत्वं रूपाणां स्फुटयति। रूपाकारेणेति॥ हृदये रूपाणां प्रतिष्ठितत्वे हेत्वन्तरमाह। यस्मादिति॥ हृदयशब्दस्य मांसखण्डविषयत्वं व्यावर्त्तयति। हृदयमिति॥ कथं पुनर्बहिर्मुखानि रूपाणि अन्तर्हृदये स्थातुं पारयन्ति तत्राह। हृदयेन हीति॥ तथापि कथं तेषां हृदयप्रतिष्ठितत्वं तत्राह। वासनात्मनामिति॥ २०॥

उ॰ किंदेवतोऽस्यां दक्षिणायां दिश्यसीति यमदेवत इति स यमः कस्मिन्प्रतिष्ठित इति यज्ञ इति कस्मिन्नु यज्ञः प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठितेति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायाꣳ ह्येव दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्ठितेति

---

भा॰ किंदेवतोऽस्यां दक्षिणायां दिश्यसीति पूर्ववत्। दक्षिणायां दिशि का देवता तव। यमदेवत इति। यमो देवता मम दक्षिणादिग्भूतस्य। स यमः कस्मिन्प्रतिष्ठित इति। यज्ञ इति। यज्ञे कारणे स प्रतिष्ठितो यमः सह दिशा। कथं पुनर्यज्ञस्य कार्य्यं यम इत्युच्यते। ऋत्विग्भिर्निष्पादितो यज्ञो दक्षिणया यजमानस्तेभ्यो यज्ञं निष्क्रीयते। न यज्ञेन दक्षिणां दिशं सह यमेनाभिजयति। तेन यज्ञे यमः कार्य्यत्वात्प्रतिष्ठितः सह दक्षिणया दिशा। कस्मिन्नु यज्ञः प्रतिष्ठित इति। दक्षिणायामिति। दक्षिणया स निष्क्रीयते। तेन दक्षिणाकार्य्यं यज्ञः। कस्मिन्नु दक्षिणा प्रतिष्ठितेति। श्रद्धायामिति। श्रद्धा नाम दित्सुत्वमास्तिक्यबुद्धिर्भक्तिसहिता। कथं तस्यां प्रतिष्ठिता

---

आ॰ पूर्ववदित्युक्तमेव व्यनक्ति। दक्षिणायामिति॥ यमस्य यज्ञकार्य्यत्वमप्रसिद्धमिति मत्वा व्युत्पादयति। कथमित्यादिना॥ तस्य यज्ञकार्य्यत्वे फलितमाह। तेनेति॥ यज्ञस्य दक्षिणायां प्रतिष्ठितत्वं साधयति। दक्षिणयेति॥ कार्य्यञ्च कारणे प्रतिष्ठित-

उ॰ हृदय इति होवाच हृदयेन हि श्रद्धा जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २१ ॥

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति वरुणदेवत इति स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति

---

भा॰ दक्षिणा। यस्माद्यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति नाश्रद्दधद्दक्षिणां ददाति। तस्माच्छ्रद्धायां ह्येव दक्षिणा प्रतिष्ठितेति। कस्मिन्नु श्रद्धा प्रतिष्ठितेति हृदय इति होवाच। हृदयस्य हि वृत्तिः श्रद्धा। यस्माद्धृदयेन हि श्रद्धां जानाति वृत्तिश्च वृत्तिमति प्रतिष्ठिता भवति। तस्माद्धृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य॥ २१॥

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति। तस्यां वरुणोऽधिदेवता मम। स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्वित्यपां हि वरुणः कार्यं श्रद्धा वा आपः। श्रद्धातो वरुणमसृजतेति श्रुतेः। कस्मिन्न्वापः प्रतिष्ठिता इति। रेतसीति

---

आ॰ मिति शेषः। दक्षिणायाः श्रद्धाप्रतिष्ठितत्वं प्रकटयति। यस्मादिति॥ हृदये सा प्रतिष्ठितेत्यत्र हेतुमाह। हृदयस्येति। हृदयकार्यत्वाच्च श्रद्धायास्तत्प्रतिष्ठितत्वमित्याह। हृदयेन हीति। हृदयस्य श्रद्धावृत्तिरस्तु तथापि प्रकृते किमायातं तदाह। वृत्तिश्चेति॥ २१॥

रेतसो हृदयकार्यत्वं साधयति। काम इति॥ तथापि कथं रेतो हृदयस्य कार्यं तदाह। कामिनो हीति॥ तत्रैव लोकप्रसिद्धिं प्रमाणयति। तस्मादिति। अपिशब्दः समुच्चयार्थः। अव-

उ॰ कस्मिन्न्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥ किंदेवतोऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि

---

भा॰ रेतसो ह्यापः सृष्टा इति श्रुतेः। कस्मिन्नु रेतः प्रतिष्ठितमिति। हृदय इति। यस्माद्धृदयस्य कार्यं रेतः कामो हृदयस्य वृत्तिः। कामिनो हि हृदयाद्रेतोऽधिस्कन्दति। तस्मादपि प्रतिरूपमनुरूपं पुत्रं जातमाहुर्लौकिका अस्य पितुर्हृदयादिवायं पुत्रः सृप्तो विनिःसृतो हृदयादिव निर्मितो यथा सुवर्णेन निर्मितः कुण्डलः। तस्माद्धृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २१ ॥ किंदेवतोऽस्यामुदीच्यां दिश्यसीति। सोमदेवत इति। लतां सोमं देवताञ्चैकीकृत्य निर्देशः। स सोमः कस्मिन्प्रतिष्ठित

---

आ॰ धारणार्थो वा। २१। दीक्षायां सोमस्य प्रतिष्ठितत्वं साधयति। दीक्षित इत्यादिना॥ दीक्षायास्सत्ये प्रतिष्ठितत्वमप्रसिद्धमिति मत्वा समाधत्ते। सत्यमित्यादिना। अपिशब्दोऽवधारणार्थः॥

उ॰ सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २३ ॥

किंदेवतोऽस्यां ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति

---

भा॰ इति। दीक्षायामिति। दीक्षितो हि यजमानः सोमं क्रीणाति। क्रीतेन सोमेनेष्ट्वा ज्ञानवानुत्तरां दिशं प्रतिपद्यते। सोमदेवताधिष्ठितां सौम्यां। कस्मिन्नु दीक्षा प्रतिष्ठितेति। सत्य इति। कथं। यस्मात्सत्ये दीक्षा प्रतिष्ठिता तस्मादपि दीक्षितमाहुः सत्यं वदेति। कारणभ्रेषे कार्य्यभ्रेषो माभूदिति सत्ये ह्येव दीक्षा प्रतिष्ठितेति। कस्मिन्नु सत्यं प्रतिष्ठितमिति। हृदय इति होवाच। हृदयेन हि सत्यं जानाति। तस्माद्धृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २३ ॥

किंदेवतोऽस्यां ध्रुवायां दिश्यसीति। मेरोः समन्ततो वसतामव्यभिचारादूर्द्ध्वा दिग् ध्रुवेत्युच्यते। अग्निदेवत इति। ऊर्द्ध्वायां हि प्रकाशभूयस्त्वं प्रकाशश्चाग्निः सोऽग्निः

---

आ॰ सत्यं वदेति वदतामभिप्रायमाह। कारणेति॥ भ्रेषो भ्रंशो नाश इति तेषामभिप्राय इति शेषः॥ प्रकृतोपसंहारः। सत्ये हीति॥२३॥

कथं पुनरूर्द्ध्वा दिगवस्थिता ध्रुवेत्युच्यते तत्राह। मेरोरिति॥ तत्राग्नेर्देवतात्वं प्रकटयति। ऊर्द्ध्वायां हीति॥ दिशो वेदेत्यादिश्रुत्या जगतो विभागेन पञ्चधात्वं ध्यानार्थमुक्तं इदानीं विभागवादिन्याः श्रुतेरभिप्रायमाह। तत्रेति। यथोक्ते विभागे सतीति यावत्॥ उक्तमर्थं सङ्क्षिपति। सदेवा इति। तत्रावान्तरवि-

उ० कस्मिन्नु वाक् प्रतिष्ठितेति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥ २४ ॥ अहल्लिकेति

---

भा० कस्मिन्प्रतिष्ठित इति वाणीति। कस्मिन्नु वाक् प्रतिष्ठितेति हृदय इति। तत्र याज्ञवल्क्यः सर्व्वासु दिक्षु विप्रसृतेन हृदयेन सर्व्वा दिश आत्मत्वेनाभिसम्पन्नः सदेवाः सप्रतिष्ठा दिशश्चात्मभूतास्तस्य नामरूपकर्म्मात्मभूतस्य याज्ञवल्क्यस्य। यद्रूपं तत्प्राच्या दिशा सह हृदयभूतं याज्ञवल्क्यस्य। यत्केवलं कर्म्म पुत्रोत्पादनलक्षणञ्च ज्ञानसहितं च सहफलेनाधिष्ठात्रीभिश्च देवताभिर्दक्षिणा प्रतीच्युदीच्यः कर्म्मफलात्मिका हृदयमेवापन्नास्तस्य। ध्रुवया दिशा सह नाम सर्व्वं वाग्द्वारेण हृदयमेवापन्नं। एतावद्धीदं सर्व्वं यद्रूपं वा कर्म्म वा नाम वेति सर्व्वं हृदयमेत-

---

आ० दात्ममात्र। यद्रूपमिति। आद्ये पर्य्याये हृदये रूपप्रपञ्चोपसंहारो दर्शितो हृदये ह्येव रूपाणीति श्रुतेरित्यर्थः॥ दक्षिणायामित्यादिपर्य्यायत्रयेण तत्रैव कर्म्मोपसंहार उक्त इत्याह। यत्केवलमिति। यद्धि केवलं कर्म्म तत्फलादिभिः सह दक्षिणादिगात्मकं हृद्युपसंक्रियते। यज्ञदक्षिणादिद्वारा हृदये प्रतिष्ठितत्वाच्छ्रद्धेर्दक्षिणस्या दिशस्तत्फलत्वात्पुत्रजन्माख्यं च कर्म्म प्रतीच्यात्मकं तत्रैवोपसंहृतं हृदये ह्येव रेतः प्रतिष्ठितमिति श्रुतेः। पुत्रजन्मनश्च तत्कार्य्यत्वाज्ज्ञानसहितमपि कर्म्मफलप्रतिष्ठा देवताभिस्सहोदीच्यात्मकं। तत्रैवोपसंहृतं सोमदेवताया दीक्षादिद्वारा तत्प्रतिष्ठत्वश्रुतेरेवं दिक्त्रये सर्व्वं कर्म्म हृदि संहृतमित्यर्थः॥ पञ्चमपर्य्यायस्य तात्पर्य्यमाह। ध्रुवयेति॥ नामरूपकर्म्मसूपसंहृतेष्वपि किञ्चिदुपसंहर्त्तव्यान्तरमवशिष्टमस्तीत्याशङ्कां निराकरोति।

उ॰ होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै-
यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वै न दद्युर्वयाꣳसि
वैनद्विमथ्नीरन्निति ॥ २५ ॥

---

भा॰ सर्वात्मकं हृदयं पृच्छ्यते कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥ २४ ॥ अहल्लिकेति होवाच याज्ञवल्क्यो नामान्तरेण सम्बोधनं कृतवान्। यत्र यस्मिन्काले एतद्धृदयमात्मनोऽस्य शरीरस्यान्यत्र क्वचिद्देशान्तरेऽस्मत्तो वर्त्तत इति मन्यासै मन्यसे। यद्धि यदि ह्येतद्धृदयमन्यत्रास्मत्स्याद्भवेच्छ्वानो वा एनच्छरीरं तदाद्युर्वयांसि वा पक्षिणो वा एनद्धि मथ्नीरन्विलोडयेयुर्विकर्षेरन्निति। तस्मान्ममापि शरीरे हृदयं प्रतिष्ठितमित्यर्थः। शरीरस्यापि नामरूपकर्मात्मकत्वाद्धृदये प्रतिष्ठितत्वं ॥ २५ ॥

---

आ॰ एतावद्धीति ॥ प्रश्नान्तरमुत्थापयति । तत्सर्वात्मकमिति ॥ २४ ॥ हृदयपदेन नामाद्याधारवदहल्लिकशब्देनापि हृदयाधिकरणं विवक्ष्यते वाक्यच्छायासाम्यादित्याशङ्क्याह । नामान्तरेणेति । अहनि लीयत इति विग्रहः प्रेतवाचिनेति शेषः ॥ देहे हृदयं प्रतिष्ठितमिति व्युत्पादयति । यत्रेत्यादिना । तस्मिन्काले शरीरं मृतं स्यादिति शेषः ॥ शरीरस्य हृदयाश्रयत्वं विशदयति । यद्धीत्यादिना ॥ देहादन्यत्र हृदयस्यावस्थाने यथोक्तदोषमिति शब्देन परामृश्य फलितमाह । इतीत्यादिना ॥ देहस्तर्हि क्व प्रतिष्ठित इत्यत आह । शरीरस्येति ॥ वृत्तमनूद्य प्रश्नान्तरमुपादत्ते । हृदयेति ॥ २५ ॥

उ॰ कस्मिन्नु त्वञ्चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु

---

भा॰ हृदयशरीरयोरेवमन्योऽन्यप्रतिष्ठोक्ता कार्य्यकरणयोरतस्त्वां पृच्छामि। कस्मिन्नु त्वं च शरीरमात्मा च तव हृदयं प्रतिष्ठितौ स्थ इति। प्राण इति। देहात्मानौ प्राणे प्रतिष्ठितौ स्यातां प्राणवृत्तौ। कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति। सापि प्राणवृत्तिः प्राक्केव प्रेयादपानवृत्त्या चेन्न निगृह्यते। कस्मिन् न्वपानः प्रतिष्ठित इति। व्यान इति। साप्यपानवृत्तिरध एव यायात्। प्राणवृत्तिश्च प्राक्केव मध्यस्थया चेद्व्यानवृत्त्या न निगृह्यते। कस्मिन्व्यानः प्रतिष्ठित इति। उदान इति। सर्व्वास्तिस्रोऽपि वृत्तय उदाने कीलस्थानीये चेन्न निबद्धा विष्वग्भवेयुः। कस्मिन्नुदानः प्रतिष्ठित इति समान इति। समानप्रतिष्ठा ह्येताः सर्व्वा वृत्तयः। एतदुक्तं भवति शरीरहृदयवायवोऽन्योन्यप्र-

---

आ॰ प्राणशब्दस्य सूत्रविषयत्वं व्यवच्छेत्तुं वृत्तिविशेषत्वं प्राणस्यापाने प्रतिष्ठितत्वं व्यतिरेकद्वारा स्फोरयति। सापीति॥ प्राणापानयोरुभयोरपि व्यानाधीनत्वं साधयति। साप्यपानेति॥ तिसृणां वृत्तीनामुक्तानामुदाने निबद्धत्वं दर्शयति। सर्व्वा इति। विष्वक्कृति नानागतित्वोक्तिः॥ कस्मिन्हृदयमित्यादेः समानान्तस्य तात्पर्य्यमाह। एतदिति॥ तेषां प्रवर्त्तकं दर्शयति। विज्ञानमयेति॥ स एष इत्यादेस्तात्पर्य्यमाह। सर्व्वमिति॥ यस्य कूटस्थदृष्टिमात्रस्यान्तर्यामित्वकल्पनाधिष्ठानस्याज्ञानवशात्प्रशासने

उ॰ व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नुदानः प्रतिष्ठित इति समान इति स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति ।

---

भा॰ निष्ठाः संघातेन नियता वर्त्तन्ते विज्ञानमयार्थप्रयुक्ता इति । सर्व्वमेतद्येन नियतं यस्मिन्प्रतिष्ठितमाकाशान्तमोतञ्च प्रोतञ्च तस्य निरुपाधिकस्य साक्षादपरोक्षाद्ब्रह्मणो निर्द्देशः कर्त्तव्य इत्ययमारम्भः । स एष । स यो नेति नेतीति निर्द्दिष्टो मधुकाण्डे एष सः । सोऽयमात्माऽगृह्यो न गृह्यः । कथं । यस्मात् सर्व्वकार्य्यधर्म्मातीतस्तस्मादगृह्यः । कुतो यस्मान्न हि गृह्यते । यद्धि करणगोचरं व्याकृतं वस्तु तद्ग्रहणगोचरमिदन्तु तद्विपरीतमात्मतत्त्वं । तथाऽशीर्य्यो यद्धि मूर्त्तं संहतं शरीरादि तच्छीर्य्यतेऽयन्तु तद्विपरीतोऽतो न हि शीर्य्यते । असङ्गोऽमूर्त्तो मूर्त्तान्तरेण यः सम्बध्यमानः सज्यतेऽयञ्च तद्विपरीतोऽतो न हि सज्यते । तथाऽसितः अबद्धो यद्धि मूर्त्तं तद्बध्यते । इदन्तु तद्वि-

---

आ॰ द्यावापृथिव्यादि स्थितं स परमात्मैव प्रत्यगात्मैवेति पदयोरर्थं विवक्षित्वाह । स एष इति ॥ निषेधद्वयं मूर्त्तामूर्त्तब्राह्मणे व्याख्यातमित्याह । स यो नेति । यो मधुकाण्डे चतुर्थे नेति नेतीति निषेधमुखेन निर्द्दिष्टः स एष कूर्पब्राह्मणे तन्मुखेनैव वक्ष्यत इति योजना ॥ निषेधद्वारा निर्द्दिष्टमेव स्पष्टयति । सोऽयमिति । कार्य्यधर्म्माः शब्दादयोऽशनादयश्च ॥ उक्तं हेतुमवतार्य्य व्याचष्टे । कुत इत्यादिना । तद्विपरीतत्वं करणगोचरत्वं न चक्षुषेत्यादिश्रुतेः

उ॰ एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान्पुरुषान्निरुह्य प्रत्युह्यात्य-

---

भा॰ परीतत्वादबहुत्वाच्च व्यथतेऽतो न रिष्यति। ग्रहणस्मरण-सङ्गबन्धकार्य्यधर्म्मरहितत्वाच्च रिष्यति। न हिंसामापद्यते न विनश्यतीत्यर्थः। क्रममतिक्रम्यौपनिषदस्य पुरुष-स्याख्यायिकातोऽपसृत्य श्रुत्या स्वेन रूपेण त्वरया निर्देशः कृतः॥

ततः पुनराख्यायिकामेवाश्रित्याह। एतानि यान्यु-क्तान्यष्टावायतनानि पृथिव्येव यस्यायतनमित्येवमादीनि अष्टौ लोका अग्निलोकादयोऽष्टौ देवा अमृतमिति होवाचेत्येवमादयोऽष्टौ पुरुषः शारीरः पुरुष इत्यादयः। स यः कश्चित्तान् पुरुषान् शारीरप्रभृतीन्निरुह्य निश्च-येनोह्य गमयित्वाष्टचतुष्कभेदेन लोकस्थितिमुपपाद्य पुनः प्राचीदिग्द्वारेण प्रत्यूह्य स्वात्मनि हृदयेऽत्यक्रामदतिक्रा-न्तवानुपाधिधर्म्मं हृदयाद्यात्मत्वं स्वेनैवात्मना व्यवस्थितो

---

आ॰ तद्विपरीतत्वादमूर्त्तत्वादिति यावत्। पूर्व्वत्राप्युभयत्र तद्वैपरी-त्यमेतदेवातःशब्दार्थं स्फुटमुक्तमुपपादयति। ग्रहणेति। कार्य्य-धर्म्माः शब्दादयोऽशनादयश्च प्रागुक्ताः॥ ननु शाकल्ययाज्ञ-वल्क्ययोः संवादात्मिकेयमाख्यायिका तत्र कथं शाकल्येनापृष्ट-मात्मानं याज्ञवल्क्यो व्याचष्टे तत्राह। क्रममिति॥

विज्ञानादिवाक्ये वक्ष्यमाणत्वात्किमित्यत्र निर्देश इत्याशङ्क्याह। त्वरयेति॥ एतान्यष्टावित्यादिवाक्यस्य पूर्व्वेणासङ्गतिमाशङ्क्याह। ततः पुनरिति॥ निश्चयेन गमयित्वेत्येतदेव स्पष्टयति। अष्टा-विति॥ प्रत्यूह्योपसंहृत्येति यावत्॥ औपनिषदत्वं पुरुषस्य

उ॰ क्षामत्वन्त्वौपनिषदं पुरुषं पृच्छामि तञ्चेन्मे न विवक्ष्यसि मूर्द्धा ते विपतिष्यतीति। तꣳह न मेने शाकल्यस्तस्य ह मूर्द्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥ २६ ॥

---

भा॰ य औपनिषदः पुरुषोऽशनायादिवर्जित उपनिषत्स्वेव विज्ञेयो नान्यप्रमाणगम्यस्तं त्वा त्वां विद्याभिमानिनं पुरुषं पृच्छामि। तञ्चेद्यदि मे न विवक्ष्यसि विस्पष्टं न कथयिष्यसि मूर्द्धा ते विपतिष्यतीति। तन्त्वौपनिषदं पुरुषं शाकल्यो न मेने ह न विज्ञातवान् किल। तस्य ह मूर्द्धा विपपात विपतितः। समाप्ताख्यायिका। श्रुतेर्वचनं तं ह न मेने इत्यादि। किञ्चापि हास्य परिमोषिणस्तस्करा अस्थीन्यपि संस्कारार्थं शिष्यैर्नीयमानानि गृहान्प्रत्यपजह्रुरपहृतवन्तः। किं निमित्तमन्यद्धनं नीयमानं मन्यमानाः। पूर्व्ववृत्ता ह्याख्यायिकेह सूचिताष्टाध्याय्यां किल शाकल्येन। याज्ञवल्क्यस्य समागान्त एव संवादो निर्वृत्तः। तत्र

---

आ॰ व्युत्पादयति। उपनिषत्स्वेवेति॥ तं हेत्यादिना याज्ञवल्क्यस्य वा मध्यमस्य वा वाक्यमिति शङ्कां वारयति। समाप्तेति॥ ब्रह्मविद्द्वेषे परलोकविरोधोऽपि स्यादित्याह। किञ्चेति॥ मूर्द्धा ते विपतिष्यतीति मूर्ध्नि पतिते शापेन निमित्तमिहाग्निसंस्कारमपि शाकल्यो न प्राप्तवानित्याशयेनाह। पूर्व्ववृत्तेति॥ तामेवाख्यायिकामनुक्रामति। अष्टाध्याय्यामिति। अष्टाध्यायी बृहदारण्यकात्प्राचीना कर्म्मविषया। पुरे पुण्यक्षेत्रातिरिक्ते देशेऽतिथ्ये पण्यतिथिशून्ये कालेऽस्थीनि च। नेति च न शब्दोऽप्यर्थः। उप-

उ॰ अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते
स मा पृच्छतु सर्वे वा मा पृच्छत यो वः कामयते

---

भा॰ याज्ञवल्क्येन शापो दत्तः। पुरेऽतिथ्ये मरिष्यसि। न तेऽस्थीनि च गृहान्प्राप्स्यन्तीति स तथैव ममार। तस्य ह्यप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः। तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवतीति। सैषाख्यायिकाऽऽचारार्थं सूचिता। विद्या स्तुता ॥ २६ ॥

यस्त्वेह। यस्य नेति नेत्यन्यप्रतिषेधद्वारेण ब्रह्मणो निर्देशः कृतस्तस्य विधिमुखेन कथं निर्देशः कर्त्तव्य इति पुनराख्यायिकामेवमित्याश्रित्याह मूलञ्च जगतो वक्तव्यमिति। आख्यायिकासम्बन्धस्त्वब्रह्मविदो ब्राह्मणान् जित्वा गोधनं हर्तव्यमिति न्यायं मत्वाह॥ अथ होवाच। अथाऽनन्तरं तूष्णींभूतेषु ब्राह्मणेषु ह उवाच। हे ब्राह्मणाः भगवन्त इत्येवं सम्बोध्य यो वो युष्माकं मध्ये कामयते

---

आ॰ वादी परिभवकर्त्ता॥ तच्छब्दार्थमाह। उत हीति। किमितीयमाख्यायिकात्र विद्याप्रकरणे सूचितेत्याशङ्क्याह। सैषेति॥ ब्रह्मविदि विनीतेन भवितव्यमित्याचारः। महती हीयं ब्रह्मविद्या। यत्तन्निष्ठावज्ञायामैहिकामुष्मिकविरोधः स्यादिति विद्यास्तुतिः॥ २६॥

अथ हेत्याद्युत्तरग्रन्थमवतारयति। यस्येत्यादिना॥ जगतो मूलञ्च वक्तव्यमित्याख्यायिकामेवाश्रित्याहेति सम्बन्धः॥ आख्यायिका किमर्थेत्यत आह। आख्यायिकेति॥ इतिशब्दः सम्बन्धसमाप्त्यर्थः॥ ननु ब्राह्मणेषु तुष्णीम्भूतेषु प्रतिषेद्धुरभावाद्गोधनं हर्तव्यं किमिति तान्प्रति याज्ञवल्क्योऽवदीदित्यत आह। न्यायं

उ॰ तं वः पृच्छामि सर्वान्वा वः पृच्छामीति ते ह ब्राह्मणा न दधृषुः ॥ २७ ॥

तान् हैतैः श्लोकैः पप्रच्छ । यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा । तस्य लोमानि पर्णानि

---

भा॰ इच्छति याज्ञवल्क्यं पृच्छामीति स मा मामागत्य पृच्छतु । सर्व्वे वा मा पृच्छत । सर्व्वे वा यूयं मा मां पृच्छत । यो वः कामयते याज्ञवल्क्यो मां पृच्छत्विति तं वः पृच्छामि । सर्व्वान्वा वो युष्मानहं पृच्छामि । ते ह ब्राह्मणा न दधृषुस्ते ब्राह्मणा एवमुक्ता अपि न प्रगल्भाः संवृत्ताः किञ्चिदपि प्रत्युत्तरं वक्तुं ॥ २७ ॥

तेष्वप्रगल्भभूतेषु ब्राह्मणेषु तान् ह एतैर्वक्ष्यमाणैः श्लोकैः पप्रच्छ पृष्टवान् । यथा लोके वृक्षो वनस्पतिः । वृक्षस्य विशेषणं वनस्पतिरिति । तथैव पुरुषोऽमृषा । अमृषा सत्यमेतत् । तस्य लोमानि । तस्य पुरुषस्य लोमानीतरस्य वनस्पतेः पर्णानि । त्वगस्योत्पाटिका । बहिस्त्वक् अस्य पुरुषस्येतर-

---

आ॰ मत्वेति । अप्रश्नं हि ब्राह्मणानुमतिमनापाद्य नीयमानमनर्थाय स्यादित्यभिप्रायः । सम्बोध्योवाचेति सम्बन्धः ॥ यो व इति प्रतीकमादाय व्याचष्टे । युष्माकमिति । व्याख्यातभागमनूद्य व्याख्येयमादाय व्याकरोति । यो व इत्यादिना ॥ यथोक्तप्रश्नानन्तरं ब्राह्मणानामप्रतिभां दर्शयति । ते हेति ॥ २७ ॥

स्वकीयज्ञानप्रकर्षप्रकटनार्थमेव प्रश्नान्तरमवतारयति । तेष्विति ॥ वृक्षो वनस्पतिरिति पर्य्यायत्वात्पुनरुक्तिरित्याशङ्क्याह । वृक्षस्येति । तत्र तस्य महत्त्वमाहेत्यपौनरुक्तिः । पुरुषस्य

उ॰ त्वगस्योत्पाटिका बहिः ॥ त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः। तस्मात्तदातृण्णात्प्रैति रसो वृक्षादिवाहतात् ॥ मांसान्यस्य शकराणि किनाटं स्नावतत्स्थिरं। अस्थीन्यन्तरतो दारूणि

---

भा॰ त्वगोत्पाटिका वनस्पतेस्त्वच एव सकाशादस्य पुरुषस्य रुधिरं प्रस्यन्दि वनस्पतेः। त्वच उत्पटस्त्वच एवोत्स्फुटति। यस्मादेवं सर्व्वं समानमेव वनस्पतेः पुरुषस्य च तस्मात्तदाहृण्णाद्धिंसितात्प्रैति तद्रुधिरं निर्गच्छति वृक्षादिवाहताच्छिन्नाद्रसः। एवं मांसान्यस्य पुरुषस्य वनस्पतेस्तानि शकराणि शकलानीत्यर्थः। किनाटं। वृक्षस्य किनाटं नाम शकलेभ्योऽभ्यन्तरं वल्कलरूपं काष्ठसंलग्नं तत्स्नाववत्पुरुषस्य तत्स्थिरं तत्किनाटं स्नाववद्दृढं हि तत्। अस्थीनि। पुरुषस्य स्नाम्नोऽभ्यन्तरतोऽस्थीनि भवन्ति। तथा किनाटस्याभ्यन्तरतो दारूणि काष्ठानि। मज्जा। मज्जैव वनस्पतेः पुरुषस्य च मज्जोपमा कृता। मज्जाया उपमा मज्जोपमा

---

आ॰ वृक्षसाधर्म्म्यमेतदित्युच्यते॥ साधर्म्म्यमेव स्पष्टयति। तस्येत्यादिना। नीरसा त्वगुत्पाटिकेत्युच्यते। उत्पटो वृक्षनिर्यासः॥ विशेषाभावमेवाभिनयति। यथेति॥ साधर्म्म्ये सति वैधर्म्म्यं वक्तुमशक्यमित्याशयेनाह। यद्यदीति॥ इदमपि साधर्म्म्यमेव किं न स्यादित्याशङ्क्याह। यदेति॥ तस्मादिति। एतस्माद्विशेषणात्प्राग्यद्विशेषणमुक्तं तत्सर्व्वमुभयोः सामान्यमवगतमिति सम्बन्धः॥ वृक्षस्याङ्कुरस्येति शेषः। मा भूत्तस्य प्ररोहणमिति चेन्नेत्याह। भवितव्यवेति। ध्रुवं जन्म मृतस्य चेतीत्यर्थः॥ जीवतो हि रेतो जायते स एव

उ॰ मज्जामज्जोपमा कृता ॥ यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः । मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ रेतस इति मा वोचत जीवतस्तत्प्रजायते । धानारुह इव वै वृक्षोऽञ्जसा

---

भा॰ नान्यो विशेषोऽस्तीत्यर्थः ॥ यथा वनस्पतेर्मज्जा तथा पुरुषस्य यथा पुरुषस्य तथा वनस्पतेः । यद्यदि वृक्षो वृक्णश्छिन्नो रोहति पुनः प्ररोहति प्रादुर्भवति मूलात्पुनर्नवतरः पूर्व्वस्मादभिनवतरो यदेतस्माद्विशेषणात्प्राग्वनस्पतेः पुरुषस्य च सर्व्वं सामान्यमवगतं । अयन्तु वनस्पतौ विशेषो दृश्यते यच्छिन्नस्य प्ररोहणं । न तु पुरुषे मृत्युना वृक्णे पुनः प्ररोहणं दृश्यते । भवितव्यञ्च कुतश्चित्प्ररोहणेन । तस्माद्वः पृच्छामि मर्त्त्यो मनुष्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति मृतस्य पुरुषस्य कुतः प्ररोहणमित्यर्थः । यदि चेदेवं वदथ रेतसः प्ररोहतीति मा वोचत मैवं वक्तुमर्हत । कस्माद्यस्माज्जीवतः पुरुषात्तद्रेतः प्रजायते न मृतात् ।

---

आ॰ कुतो भवतीति विचार्य्यते । न चासिद्धेन सिद्धस्य साधनं न च पुरुषान्तरादिति वाच्यं तस्यासिद्धावन्यतरप्रयोगानुपपत्तेरिति मन्वानो हेतुमाह । यस्मादिति ॥ वैधर्म्म्यान्तरमाह । यदि चेति ॥ कार्त्स्न्येनोऽपीतयेर्य्यः । वैशब्दः प्रसिद्धिद्योतक इत्यभिप्रेत्याह । वै वस्य इति ॥ अञ्जसेत्यादेरर्थमुक्त्वा वाक्यार्थमाह । धानातोऽपीति ॥ तथापि कथं वैधर्म्म्यमित्याशङ्क्याह । यद्यपीति ॥ पुरुषस्यापि पुनरुत्पत्तिर्मा भूदित्याशङ्क्य पूर्व्वोक्तं निगमयति तस्मादिति ॥ स्वभाववादमुत्थापयति । जात इति ॥ अब्रुवोच

उ० प्रेत्यसम्भवः ॥ यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत् । मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ जात एव न जायते कोऽन्वेनं जनयेत्पुनः । विज्ञानमानन्दं ब्रह्म रातिर्दातुः

---

भा० अपि च धानारुहो धानाबीजं बीजरुहोऽपि वृक्षो भवति न केवलं काण्डरुह एव । इवशब्दोऽनर्थकः । वै वृक्षोऽञ्जसा साक्षात्प्रेत्य मृत्वा सम्भवो धानातोऽपि प्रेत्य सम्भवो भवेदञ्जसा पुनरन्यस्मात् । यद्यदि सह मूलेन धानया वा वृक्षमुद्वृहेयुरुत्पाटयेयुर्वृक्षं न पुनराभवेत्पुनरागत्य न भवेत्तस्माद्वः पृच्छामि । सर्वस्यैव जगतो मूलं मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति जात एवेति मन्यध्वं यदि किमत्र प्रष्टव्यमिति । अजनिष्यत हि सम्भवः प्रष्टव्यो न जातस्यायं तु जात एवातोऽस्मिन्विषये प्रश्न एव नोपपद्यत इति चेत् । न । किन्तर्हि मृतः पुनरपि जायत एवान्यथाऽकृताभ्यागमकृतनाशप्रसङ्गात् । अतो वः पृच्छामि कोऽन्वेनं

---

आ० समानार्थः । तदेव स्फुटयति । अनिष्यतो हीति । न जायत इति भ्रमेणोत्तरमाह । नेत्यादिना । स्वभाववादे दोषमाह । अन्यथेति । स्वभावासम्भवे फलितमाह । अत इति । उक्तमेव स्फुटयति । जगत इति । ब्रह्मविदां श्रेष्ठत्वे याज्ञवल्क्यस्य सिद्धे फलितमाह । अत इति । समाप्ताख्यायिकेति । ब्राह्मणाश्च सर्वे यथायथं जग्मुरित्यर्थः । विज्ञानादिवाक्यमुत्थापयति । यज्जगत इत्यादिना । विज्ञानमित्यस्य करणादिविषयत्वं वारयति । विज्ञ-

उ॰ परायणं । तिष्ठमानस्य तद्विद इति ॥ २८ ॥ नवमं ब्राह्मणं ॥ ९ ॥ इति बृहदारण्यके पञ्चमोऽध्यायः । उपनिषत्सु तृतीयोऽध्यायः ॥ ५ ॥

---

भा॰ मृतं पुनर्जनयेत्। तन्न विजज्ञुर्ब्राह्मणा यतो मृतः पुनः प्ररोहति जगतो मूलं न विज्ञातं ब्राह्मणैः। अतो ब्रह्मिष्ठत्वात् हृता गावो याज्ञवल्क्येन जिता ब्राह्मणाः। समाप्ताख्यायिका॥ यज्जगतो मूलं येन च शब्देन साक्षाद्व्यपदिश्यते ब्रह्म। यद्याज्ञवल्क्यो ब्राह्मणान्पृष्टवान् ततः स्वेन रूपेण श्रुतिरस्मभ्यमाह। विज्ञानं विज्ञप्तिर्विज्ञानं तच्चानन्दं न विषयविज्ञानवद्दुःखानुविद्धं। किन्तर्हि प्रसन्नं शिवमतुलमनायासं नित्यतृप्तमेकरसमित्यर्थः। किन्तद्ब्रह्मोभयविशेषणवद्रातिः रातेः षष्ठ्यर्थे प्रथमा धनस्येत्यर्थो धनस्य दातुः कर्मकृतो यजमानस्य परमयनं परागतिः कर्मफलस्य प्रदातृत्वात्। किञ्च व्युत्थायैषणाभ्यस्तस्मिन्नेव ब्रह्मणि तिष्ठत्यकर्मकृत्त-

---

आ॰ शिवमिति। आनन्दविशेषणत्वं दर्शयति। नेत्यादिना। प्रसन्नं दुःखहेतुकामक्रोधादिना सम्बन्धरहितं शिवं कामादिकारणेनाज्ञानेनापि सम्बन्धशून्यं सातिशयत्वप्रयुक्तदुःखराहित्यमाह। अतुलमिति। साधनसाध्यत्वाधीनदुःखवैधुर्यमाह। अनायासमिति। दुःखनिवृत्तिमात्रं सुखमिति पक्षं प्रतिक्षिपति। नित्यतृप्तमिति। आनन्दो ज्ञानमिति ब्रह्मण्याकारभेदमाशङ्क्याह। एकरसमिति। पञ्चमत उपपत्तेरिति न्यायेन ब्रह्मणो जगन्मूलत्वमाह। रातेरित्यादिना। ब्रह्मसंस्थोऽमृतत्वमेतीति श्रुत्यन्तर-

भा० ह्मा वेत्तीति तद्विच तस्य तिष्ठमानस्य च तद्विदो ब्रह्म-
विद इत्यर्थः परायणमिति ॥ २८ ॥

अथेदं विचार्यते । आनन्दशब्दो लोके सुखवाची प्रसिद्धः । अत्र च ब्रह्मणो विशेषणत्वेन आनन्दशब्दः । श्रूयते आनन्दं ब्रह्मेति । श्रुत्यन्तरे चानन्दो ब्रह्मेति व्यजानात् । आनन्दं ब्रह्मणो विद्वान् । यदेष आकाश आनन्दः । यो वै भूमा तत्सुखमिति च । एवं परमानन्द इत्येवमाद्याः संवेद्ये च सुखे आनन्दशब्दः प्रसिद्धः । ब्रह्मानन्दश्च यदि संवेद्यः स्यादुक्ता एते ब्रह्मण्यानन्दशब्दाः । ननु च श्रुतिप्रामाण्यात्संवेद्यानन्दस्वरूपमेव ब्रह्म किं तत्र विचार्यमिति । न । विरुद्धश्रुतिवाक्यदर्शनात् । सत्यमानन्दशब्दो ब्रह्मणि श्रूयते विज्ञानप्रतिषेधश्चैकत्वे । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्विजानीयात्तं केन विजानीयाद्यत्र नान्यत्पश्यति नान्यद्विजानाति । प्राज्ञेनात्मना सम्परिष्वक्तो न

---

आ० मात्मत्व तस्यैव मुक्तात्मिनिष्ठत्वमनुपदिशति । तिष्ठेति । चरमस्या-
त्मानसमाप्तिरितिशब्दः ॥ २८ ॥

सच्चिदानन्दात्मकं ब्रह्म विद्याविद्याभ्यां बन्धमोक्षास्पदमित्युक्तं । इदानीं ब्रह्मानन्दविचारमवतारयन्नविशेतमर्थमाह । अथेति ॥ तथापि प्रकृते वाक्ये किमायातमिति तदाह । अत्रेति ॥ न च केवलमत्रैवानन्दशब्दो ब्रह्मविशेषणार्थत्वेन श्रुतः । किन्तु तैत्तिरीयकादावपीत्याह । श्रुत्यन्तरे चेति ॥ ब्रह्मविशेषणत्वेना-नन्दशब्दः श्रूयत इति सम्बन्धः ॥ अन्याः श्रुतीरेवोदाहरति । आनन्द इत्यादिना ॥ एवमाद्याः श्रुतय इति शेषः । तथापि कथं विचारसिद्धिरित्याह । संवेद्य इति ॥ लोकप्रसिद्धेरद्वैतश्रुतेश्च

भा॰ वाच्यं किं च न वेदेत्यादिविरुद्धश्रुतिवाक्यदर्शनाच्च कर्त्तव्यो विचारः ॥

तस्माद्युक्तं वेदवाक्यार्थनिर्णयाय विचारयितुं । मोक्षवादिविप्रतिपत्तेश्च । सांख्या वैशेषिकाश्च मोक्षवादिनो नास्ति मोक्षे सुखं संवेद्यमित्येवं प्रतिपन्नाः । अन्ये निरतिशयसुखं स्वसंवेद्यमिति । किन्तावद्युक्तमानन्दादिश्रवणाद् जक्षन्क्रीडन्नममाणः स यदि पितृलोककामो भवति । स सर्व्वज्ञः सर्व्ववित् । सर्व्वान् कामान्त्समश्नुत इत्यादिश्रुतिभ्यो मोक्षे सुखं संवेद्यमिति । नन्वेकत्वे कारकविभागाभावा-

---

व्या॰ ब्रह्मण्यानन्दः संवेद्योऽसंवेद्यो वेति विचारः कर्त्तव्य इत्यर्थः ॥ उभयत्र फलं दर्शयति । ब्रह्मानन्दश्चेति ॥

अन्यथा लोकवेदयोः शब्दार्थभेदादविशिष्टस्तु वाक्यार्थ इति न्यायविरोधोऽसंवेद्यत्वं पुनरद्वैतश्रुतिरविरुद्धेति भावः ॥ विचारमाक्षिपति । नन्विति ॥ विरुद्धश्रुत्यर्थनिर्णयार्थं विचारकर्त्तव्यतां दर्शयति नेति ॥ सकृच्चवाक्यं विरुणद्धीति । सर्व्वमित्यादिना ॥ एकत्वे सति विज्ञानप्रतिषेधश्रुतिमेवोदाहरति । यत्रेत्यादिना । इत्यादिश्रवणमिति शेषः ॥ फलितमाह । विरुद्धश्रुतीति ॥ श्रुतिविप्रतिपत्तेर्विचारकर्त्तव्यतामुपसंहरति । तस्मादिति ॥ तत्रैव हेत्वन्तरमाह । मोक्षेति ॥ तामेव विप्रतिपत्तिं विवृणोति । सांख्या इति ॥ विमर्शपूर्व्वकं पूर्व्वपक्षं गृह्णाति । किन्तावदित्यादिना ॥ आनन्दादिश्रवणादिज्ञानमानन्दं ब्रह्मेति श्रुतेर्मोक्षे सुखं संवेद्यमिति युक्तमिति सम्बन्धः ॥ तत्रैव वाक्यान्तराण्युदाहरति । जक्षन्नित्यादिना ॥ पूर्व्वपक्षमाक्षिपति । नन्विति ॥ मोक्षे चेदिष्यते सुखज्ञानं तर्हि तदानेककारकसाध्यं वाच्यं क्रियात्वात्पाकादिवत्सर्व्वैकत्वे च मोक्षे कारकविभागाभावान्न सुखसंवेदनं भवतीत्यर्थः ॥ अन्यस्य कारकापेक्षत्वेऽपि सुखज्ञानस्यानन्यत्वान्न तदपेक्षेत्याशङ्क्याह । क्रियायाश्चेति ॥ या क्रिया

भा० द्विज्ञानानुपपत्तिः । क्रियायाश्चानेककारकसाध्यत्वाद्विज्ञानस्य च क्रियात्वात् । नैष दोषः । शब्दप्रामाण्याद्वेदविज्ञानमानन्दविषये । विज्ञानमानन्दमित्यादीन्यानन्दस्वरूपस्यासंवेद्यत्वेऽनुपपन्नानि वचनानीत्यवोचाम । ननु वचनेनाप्यग्नेः शैत्यमुदकस्य चौष्ण्यं न क्रियत एव ज्ञापकत्वाद्वचनानाम् । न च देशान्तरेऽग्निः शीत इति शक्यते ज्ञापयितुमगम्ये वा देशान्तर उष्णमुदकमिति । न प्रत्यगात्मन्यानन्दविज्ञानदर्शनात् विज्ञानमानन्दमित्येवमादीनां वचनानाम् । शीतोऽग्निरित्यादिवाक्यवत् प्रत्यक्षा-

---

आ० सानेककारकसाध्येति व्याप्तेर्गमनादाववगतत्वाज्ज्ञानस्यापि धात्वर्थेन क्रियात्वादनेककारकसाध्यतासिद्धेरित्यर्थः ॥ श्रुतिप्रामाण्यमाश्रित्य पूर्ववादी परिहरति । नैष दोष इति ॥ तदेव स्फुटयति । विज्ञानमिति ॥ अद्वये ब्रह्मणि श्रुतिप्रामाण्यादानन्दज्ञानमुक्तमाक्षिपति । नन्विति ॥ अद्वैतश्रुतिविरोधाद्ब्रह्मणि विज्ञानक्रियाकारकविभागापेक्षा नोपपद्यते । न हि विज्ञानमानन्दमित्यादिवचनानि मानान्तरविरोधेन विज्ञानक्रियां ब्रह्मण्युत्पादयन्ति । तेषां ज्ञापकत्वाज्ज्ञापकस्य चाविरोधापेक्षत्वादन्यथातिप्रसङ्गादित्यर्थः । लौकिकज्ञानस्य क्रियात्वेऽपि मोक्षे सुखज्ञानं क्रियैव न भवति ॥ तत्र विज्ञानादिवाक्यस्याद्वैतश्रुतिविरोधोऽस्तीत्याशङ्क्याह । न चेति ॥ पयःपावकयोस्सार्व्वत्रैकरूप्यवद्विज्ञानस्यापि लोकवेदयोरेकरूपत्वमेवेति भावः ॥ मानान्तरविरोधात्प्रत्यगात्मन्यानन्दज्ञानस्य सत्त्वमेव वा निषिध्यते । तस्य क्रियात्वं वा निराक्रियते । तत्राद्यं दूषयति । नेत्यादिना ॥ तदेव स्फुटयति । न विज्ञानमिति ॥ सुखज्ञानस्य गुणत्वाङ्गीकारात् क्रियात्वनिराकरणमिष्टमेवेति मत्वाह । अनुभूयते त्विति ॥ अनुभवमेवाभिनयति । सुख्यहमिति ॥ तथापि श्रुतिविरोधः स्यादित्याशङ्क्य प्रत्यक्षानुसारेण सापि नेतव्येत्याशयेनाह । तस्मादिति ॥ आत्म-

भा॰ द्विविरुद्धार्थप्रतिपादकत्वं । अनुभूयते त्वविरुद्धार्थता । सुखमहमिति सुखात्मकमात्मानं स्वयमेव वेदयते । तस्मा-त्सुतरां प्रत्यक्षा विरुद्धार्थता । तस्मादानन्दं ब्रह्मविज्ञाना-त्मकं सत्स्वयमेव वेदयते ॥

तथानन्दप्रतिपादकाः श्रुतयः समञ्जसाः स्युर्जक्षन्क्री-डयममाण इत्येवमाद्याः पूर्व्वोक्ताः । न । कार्य्यकारणा-भावेऽनुपपत्तेर्विज्ञानस्य । शरीरवियोगो हि मोक्ष आत्य-न्तिकः । शरीराभावे च करणानुपपत्तिराश्रयाभावात् । ततश्च विज्ञानानुपपत्तिरकार्य्यकरणत्वात् । देहाद्यभावे च विज्ञानोत्पत्तौ सर्व्वेषां कार्य्यकरणोपादानानर्थक्यप्रसङ्गः । एकत्वविरोधाच्च । परश्चेत् ब्रह्मानन्दात्मकमात्मानं नित्य-

---

आ॰ आनन्दज्ञानस्य क्रियात्वात्कर्तृकारककर्मकारकभेदापेक्षाभावादि-त्यर्थः । गुणत्वपक्षे च प्रत्यक्षस्यागुणत्वादागमस्य विरोधिनस्तदनु-सारेण नेयत्वादविरुद्धत्वादस्य भूयस्त्वादित्यतिशयः । अविरुद्धा-र्थता विज्ञानादिश्रुतेरिति शेषः । गुणगुणिभावेऽपि नाद्वैतश्रुतिः शक्या नेतुमित्याशयः स्ववेद्यत्वपक्षमाश्रित्याह । तस्मादानन्दमिति । यथा कथञ्चिद्ब्रह्मज्ञानन्दस्य वेद्यत्वे श्रुतीनामानुगुण्यमस्ती-त्याह । तथेति । आनन्दो वेद्यो ब्रह्मणेति चोदिते सिद्धान्तमाह । नेति । आगन्तुकमनागन्तुकं वा ज्ञानं मुक्तावानन्दं गोचरयति नाद्य इत्याह । कार्य्येति । अनुपपत्तिमेव स्फोरयति । शरी-रेति । कार्य्यकरणयोरभावेऽपि मोक्षे ब्रह्मानन्दज्ञानं जनिष्यते संसारे हि हेत्वपेक्षेत्याशङ्क्याह । देहादीति । द्वितीयं दूषयति । एकत्वेति । न हि ब्रह्मस्वरूपज्ञानेनैव वेद्यानन्दरूपं भवितुमल-मते । विषयविषयिणोरेकत्वविरोधात्तथानागन्तुकमपि ज्ञानं मुक्तौ नानन्दमधिकरोतीत्यर्थः । किञ्च ब्रह्म वा मुक्तो वा संसारी वा ब्रह्मानन्दं गोचरयेत्तत्राद्यमनुवदति । परश्चेदिति । तस्मि-

भा॰ विज्ञानत्वान्नित्यमेव विजानीयात्। न च संसार्य्यपि संसार-
विनिर्मुक्तः स्वाभाव्यं प्रतिपद्येत। जलार्णव इवोदका-
ञ्जलिः क्षिप्तो न पृथक्त्वेन व्यवतिष्ठते। आनन्दात्मकब्रह्म-
विज्ञानाय। तदा मुक्त आनन्दात्मकमात्मानं वेदयत
इत्येतदनर्थकं वाक्यं। अथ ब्रह्मानन्दमन्यः सन्मुक्तो वेदयते
प्रत्यगात्मानन्दं वा स्वमस्यानन्दस्वरूप इति। तदैकत्ववि-
रोधः। तथा च सति सर्व्वश्रुतिविरोधः। तृतीया च कल्पना
नोपपद्यते। किञ्चान्यद्ब्रह्मणश्च निरन्तरात्मानन्दविज्ञाने
विज्ञानाविज्ञानकल्पनानर्थक्यं निरन्तरञ्चेदात्मानन्दवि-
षयं ब्रह्मणो विज्ञानं तदेव तस्य स्वभाव इत्यात्मानन्दं
विजानातीति कल्पनानुपपन्ना। अतद्विज्ञानप्रसङ्गे हि

---

टी॰ मुक्तो वा ब्रह्मस्वरूपानन्दं वेत्ति। तेनैक्यादेकत्र विषयविषयित्वा-
नुपपत्तेरसत्त्वादिति दूषयति। तन्नेति। नापि संसारी ब्रह्मानन्दं
गोचरयति। स खल्वनिवृत्ते संसारे संसारित्वमात्मानमभिम-
न्यमानो न ब्रह्मानन्दमाकलयितुमलं। संसारे निवृत्ते तु ततो
विनिर्मुक्तो ब्रह्मस्वाभाव्यं प्रतिपद्यमानस्तदानन्दं तद्वदेव विषयी-
कर्तुं नार्हतीति तृतीयं प्रत्याह। संसार्य्यपीति। मुक्तोऽपि ब्रह्मणो
भिन्नोऽभिन्नो वेति विकल्प्याभेदपक्षमनुभाषते। जलेति।
ब्रह्माभिन्नस्य मुक्तस्य तदानन्दविषयीकरणमुक्तन्यायेन निरस्यति।
तदेति। भेदपक्षमनुवदति। अथेति। ब्रह्मानन्दं प्रत्यगात्मानमिति
सम्बन्धः। वेदनप्रकारमभिनयति। स्वरूपमिति। तत्त्वमस्यादि-
श्रुतिविरोधेन निराकरोति। तदेति। मुक्तो ब्रह्मणः सकाशा-
द्भिन्नोऽभिन्नो वा मा भूद्भिन्नाभिन्नस्तु स्यादित्याशङ्क्याह। तृती-
येति। सर्व्वत्र भेदाभेदवादस्य दूषितत्वादित्यर्थः। ब्रह्मणः स्वान-
न्दस्वावेद्यत्वे हेत्वन्तरमाह। किञ्चान्यदिति। तदेवोपपादयति।
निरन्तरञ्चेदिति। व्याख्यातप्रयोगस्य तर्हि कथं यथार्थत्वं तत्राह।

भा॰ कल्पनाया अर्थवत्त्वं । यथात्मानं परञ्च वेत्तीति । न हि द्रष्टव्याद्यासक्तमनसो नैरन्तर्य्येण ज्ञानाज्ञानकल्पनाया अर्थवत्त्वं ॥

अथ विच्छिन्नमात्मानं विजानातीति । विज्ञानस्यात्मविज्ञानच्छिद्रेऽन्यविषयत्वप्रसङ्गे आत्मनश्च क्रियावत्त्वं । ततश्चानित्यत्वप्रसङ्गः । तस्माद्विज्ञानमानन्दमिति स्वरूपाख्यानपरैव श्रुतिर्नात्मानन्दसंवेद्यत्वार्था । जक्षत्क्रीडन्नित्यादिश्रुतिविरोधोऽसंवेद्यत्व इति चेन्न । सर्व्वात्मैकत्वे यथा प्राप्तानुवादित्वात् । मुक्तस्य सर्व्वात्मभावे सति यत्र क्वचिद्योगिषु देवेषु वा जक्षणादिप्राप्तं तद्यथा प्राप्तमेवा-

---

आ॰ ज्ञातविज्ञानेति । देवदत्तो बुद्धिपूर्व्वकारित्वावस्थायां स्वात्मानमन्यञ्च विविच्य न जानाति नान्यदित्युभयथात्वदर्शनात्तथाख्यातप्रयोगो युज्यते नैवं ब्रह्मण्यज्ञानप्रसङ्गोऽस्ति नित्यज्ञानस्वभावत्वात् । तथा च तत्राख्यातप्रयोगो नार्थवानित्यर्थः ॥ ब्रह्मण्याख्यातप्रयोगानर्थक्यं दृष्टान्तेन स्फुटयति । न हीति ॥

प्रत्यगात्मनि नित्यज्ञानत्वासिद्धिं शङ्कयति । अथेति ॥ विच्छिन्नमिति ॥ क्रियाविशेषत्वं परिहरति । विज्ञानस्येति ॥ आत्मनो विज्ञानस्य छिद्रमन्तरालमसत्त्वावस्था तदापि विज्ञानमस्ति चेत्तस्यान्यविषयत्वप्रसङ्गस्तथा च यत्रान्यत्पश्यतीत्यादिश्रुतेरात्मनो मर्त्यत्वापत्तिर्न चेत्तदा विज्ञानं तदा पाषाणवदचेतनत्वं विज्ञप्तिरूपत्वानङ्गीकारादित्यर्थः ॥ आत्मनो नित्यज्ञानवत्त्वे दोषान्तरमाह । आत्मनश्चेति ॥ आनन्दज्ञाने ब्रह्मणि विषयविषयित्वायोगश्चेत्कथं विज्ञानादिवाक्यमित्याशङ्क्योपसंहरति । तस्मादिति ॥ ब्रह्मण्यानन्दस्यावेद्यत्वे श्रुतिविरोधमुक्तं स्मारयति । जक्षदिति ॥ सर्व्वात्मनो मुक्तस्यैक्ये सति योग्यादिषु यथा जक्षणादि प्राप्तं तथैव तदनुवादित्वादस्याः श्रुतेर्न विरोधोऽस्तीति परिहरति । नेत्यादिना ॥ तदेव प्रपञ्चयति । मुक्तस्येति ॥ क्षिमनुवा-

भा॰नूद्यते। तत्तस्यैव सर्व्वात्मभावादिति। सर्व्वात्मभावमोक्षस्तुतये यथा प्राप्तानुवादित्वे दुःखित्वमपीति चेद्योगिषु यथा प्राप्तजक्षणादिवत्। स्थावरादिषु यथा प्राप्तदुःखित्वमपीति चेन्न। नामरूपकृतकार्य्यकरणोपाधिसम्पर्कजनितभ्रान्त्यध्यारोपितत्वात्सुखित्व दुःखित्वादिविशेषस्येति परिहृतमेतत्। सर्व्वविरुद्धश्रुतीनाञ्च विषयमवोचाम। तस्मादेषोऽस्य परम आनन्द इति वत् सर्व्वाण्यानन्दवाक्यानि द्रष्टव्यानि॥ इति नवमं ब्राह्मणं॥ इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ बृहदारण्यकवृत्तौ पञ्चमोऽध्यायः

---

आ॰ इष्टत्वमिति चेत्तदाह। तत्तस्येति। मुक्तस्य योग्यादिषु सर्व्वात्मभावादेव तत्र प्राप्तं जक्षणाद्यत्रभुक्तिस्तुतयेऽनूद्यते। तत्रानुवादवैयर्थ्यमित्यर्थः। विदुषस्सार्व्वात्म्येन योग्यादिषु प्राप्तजक्षणाद्यनुवादे स्यादतिप्रसक्तिरिति शङ्कते। यथा प्राप्तेति। अतिप्रसङ्गमेव प्रकटयति। योग्यादिष्विति। अविद्यात्मकनामरूपविरचितोपाधिद्वयसम्बन्धनिबन्धनमिथ्याज्ञानाधीनत्वादात्मनि दुःखित्वादिप्रतीतेर्न तत्र वस्तुतो दुःखित्वं न च जक्षणाद्यपि वास्तवमाविद्यस्यैव मुक्तिस्तुतयेऽनुवादात्। दुःखित्वस्य हि नानुवाद इति हीनत्वप्राप्तेरिति परिहरति। नेत्यादिना। यत्तु विरुद्धश्रुतिदृष्टेर्नागमार्थो निर्णीतो भवतीति तत्राह। विरुद्धेति। वेद्यत्वादिश्रुतीनां सोपाधिकनिरुपाधिकविषयत्वेन मधुकाण्डे व्यवस्थोक्तेरित्यर्थः। ब्राह्मणार्थमुपसंहरति। तस्मादिति। ब्रह्मण्यानन्दस्य वेद्यताया दुर्निरूपत्वं तच्छब्दार्थः। यद्येषोऽस्येत्यत्र भेदो न विवक्षितः सर्व्वात्मभावस्य प्रकृतत्वात्। तथा विज्ञानादिवाक्येष्वानन्दस्य वेद्यता न विवक्षिता। उक्तरीत्या तद्वेद्यताया दुष्प्रतिपादकत्वात्तस्मादनतिशयानन्दं चिदेकतानन्दं वस्तुसिद्धमित्यर्थः॥॥ इति श्रीमदानन्दज्ञानविरचितायां बृहदारण्यक-

उ॰ जनको ह वैदेह आसाञ्चक्रेऽथ ह याज्ञवल्क्य आवव्राज १ तꣳ होवाच याज्ञवल्क्य किमर्थ-

---

भा॰ समाप्तः ॥ ॥ इत्युपनिषद्भाष्ये तृतीयोऽध्यायः ॥ ॥

ॐ तत्सत् ॥ ॥ * * ॥ ॥

ॐ नमः परमात्मने ॥ जनको ह वैदेह आसाञ्चक्रे ऽस्य सम्बन्धः । शारीराद्यानष्टौ पुरुषान्निरुह्य प्रत्यूह्य पुनर्हृदये दिग्भेदेन च पुनः पञ्चधा व्यूह्य हृदये प्रत्यूह्य हृदयं शरीरञ्च पुनरन्योऽन्यप्रतिष्ठं प्राणादिपञ्चवृत्त्यात्मके समानाख्ये जगदात्मनि सूत्र उपसंहृत्य जगदात्मानं शरीरहृदयसूत्रावस्थमतिक्रान्तवान् य उपनिषदः पुरुषो नेति नेतीति व्यपदिष्टः स साक्षाच्चोपादानकारणस्वरूपेण च निर्द्दिष्टो विज्ञानमानन्दमिति । तस्यैव वागादिदेवताद्वारेण पुनरधिगमः कर्त्तव्य इत्यधिगमोपायान्तरार्थोऽयमारम्भो ब्राह्मणद्वयस्य ॥ आख्यायिका त्वाचारप्रदर्शनार्था ॥ जनको ह वैदेह आसाञ्चक्रे आसनं कृतवान्

---

आ॰ भाष्यटीकायां पञ्चमोऽध्यायः समाप्तः ॥ ॥ उपनिषद्भाष्यटीकायां तृतीयोऽध्यायः ॥ ॥

श्रीसद्गुरुः पातु ॥ पूर्व्वस्मिन्नध्याये जल्पन्यायेन सच्चिदानन्दं ब्रह्म निर्द्धारितं । इदानीं वादन्यायेन तदेव निर्द्धारयितुमध्यायान्तरमवतारयति ॥ जनक इति ॥ तत्र ब्राह्मणद्वयस्यावान्तरसम्बन्धं प्रतिजानीते । अस्येति ॥ तमेव वक्तुं वृत्तं कीर्त्तयति । शारीराद्यानिति ॥ निरुह्य प्रत्यूह्येति विस्तार्य्य व्यवहारमापाद्येत्यर्थः । प्रत्यूह्य हृदये पुनरुपसंहृत्येति यावत् । जगदात्मनीत्यध्यात्माधिदैवयोरैक्यं सूत्रशब्देन तत्कारणं गृह्यते । अतिक्रमणं तद्गुणदोषा-

उ० मचारीः पशूनिच्छन्नण्वन्तानिति । उभयमेव सम्राडिति होवाच ॥ १ ॥

यत्ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान्पितृमा-

---

भा० आख्यायिकां दृष्टवानित्यर्थः। दर्शनकामेभ्यो राजा। अथ ह तस्मिन्नवसरे याज्ञवल्क्य आवव्राजागतवानात्मनो योगक्षेमार्थं राज्ञो वा विविदिषां दृष्ट्वानुग्रहार्थं। तमागतं याज्ञवल्क्यं यथावत्पूजां कृत्वोवाच होक्तवान् जनकः। हे याज्ञवल्क्य किमर्थमचारीरागतोऽसि किं पशूनिच्छन्पुनरपि आहोस्विदण्वन्तान्सूक्ष्मान्तान्सूक्ष्मवस्तुनिर्णयान्तान् प्रश्नान्मत्तः श्रोतुमिच्छन्निति। उभयमेव पशून्प्रश्नांश्च हे सम्राट्। सम्राडिति वाजपेययाजिनो लिङ्गं। समस्तस्य वा भारतस्य वर्षस्य राजा ॥ १ ॥

किन्तु यत्ते तुभ्यं कश्चिदब्रवीत् आचार्योऽनेकाचार्यसेवी हि भवांस्तच्छृणवामेति। इतर आह। अब्रवीदुक्तवान्मे ममाचार्यो जित्वा नामतः शिलिनस्यापत्यं शैलिनिः।

---

आ० संवक्तत्वं। अनन्तरग्रन्थस्य तात्पर्य्यमाह। तस्यैवेति। वागाद्यधिष्ठात्रीष्वग्न्यादिदेवतासु ब्रह्मदृष्टिद्वारेत्यर्थः। पूर्व्वोक्तान्वयव्यतिरेकादिसाधनापेक्षयाऽन्तरशब्दः। आचार्य्यवता श्रद्धादिसम्पन्नेन विद्या लब्धव्येत्याचारः। अप्राप्तप्राप्तिर्योगः। प्राप्तस्य रक्षणं क्षेम इति विभागः। भारतस्य वर्षस्य हिमवत्सेतु पर्य्यन्तस्येति यावत् ॥ १ ॥

तत्र राजानं प्रति प्रश्नमुत्थापयति। किन्त्विति। कश्चिदिति विशेषणस्य तात्पर्य्यमाह। अनेकेति। प्रामाण्यं आप्तत्वं। यथोक्ता-

उ॰ नाचार्य्यवान्ब्रूयात्तथा तच्छैलिनोऽब्रवीद्वाग्वै ब्रह्मेत्यवदतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य ॥

---

भा॰ वाग्वै ब्रह्मेति। वाग्देवता ब्रह्मेत्याहेतरो यथा मातृमानाता यस्य विद्यते पुत्रस्य सम्यगनुशास्त्री अनुशासकर्त्री स मातृमान्। अत ऊर्ध्वं पिता यस्यानुशास्ता स पितृमान्। उपनयनादूर्ध्वमासमावर्त्तनादाचार्य्यो यस्याऽनुशास्ता स आचार्य्यवान्। एवं शुद्धित्रयहेतुसंयुक्तबुद्धिराचार्य्यः स्वयं न कदाचिदपि प्रामाण्याद्व्यभिचरतीति। स यथा ब्रूयाच्छिष्याय तथाऽसौ जित्वा शैलिनिरुक्तवान्। वाग्वै ब्रह्मेति। अवदतो हि किं स्यादिति। न हि मूकस्येहार्थममुत्रार्थं वा किं च न स्यात्। किन्त्वब्रवीदुक्तवान्। ते तुभ्यं तस्य ब्रह्मण आयतनं प्रतिष्ठाञ्च। आयतनं नाम शरीरं। प्रतिष्ठा त्रिष्वपि कालेषु य आश्रयः। आहेतरो न मेऽब्रवीदिति। इतर आह। यद्येवमेकपाद्वा एतदेकः पादो यस्य ब्रह्मणस्तदिदमेकपाद्ब्रह्म त्रिभिः पादैः शून्यमुपास्यमानमपि न फलाय भवतीत्यर्थः। यद्येवं स त्वं विद्वान् सन्नोऽस्मभ्यं ब्रूहि हे याज्ञवल्क्येति ॥

---

आ॰ येऽनुमोदने युक्तिमाह। न हीति। यथोक्तब्रह्मविद्यया कृतकृत्यत्वमन्यानं राजानं प्रत्याह। किन्त्विति। आयतनप्रतिष्ठयोरेकत्वात्पुनरुक्तिमाशङ्क्य विभजते। आयतनं नामेति। एकपादत्वेऽपि ब्रह्मवदुपासनादिष्टसिद्धिरिति चेन्नेत्याह। त्रिभिरिति।

उ॰ वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत। का प्रज्ञता याज्ञवल्क्य। वागेव सम्राडिति होवाच। वाचा वै सम्राड्बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणविद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टꣳ हुतमाशितं पायितमयञ्च लोकः परश्च

---

भा॰ स चाह वागेवायतनं वाग्देवस्य ब्रह्मणो वागेव करणमायतनं शरीरमाकाशोऽव्याकृताख्यः प्रतिष्ठोत्पत्तिस्थितिलयकालेषु प्रज्ञेत्येतदुपासीत। प्रज्ञेतीयमुपनिषद्ब्रह्मणश्चतुर्थः पादः प्रज्ञेति कृत्वा एतद्ब्रह्मोपासीत। का प्रज्ञता याज्ञवल्क्य किं स्वयमेव प्रज्ञात प्रज्ञानिमित्तं। यथायतनं प्रतिष्ठे ब्रह्मणो व्यतिरिक्ते तद्वत्किं न कथं तर्हि वागेव सम्राडिति होवाच। वागेव प्रज्ञेति ह उवाचोक्तवान्न व्यतिरिक्ता प्रज्ञेति। कथं पुनर्वागेव प्रज्ञेत्युच्यते। वाचा वै सम्राड्बन्धुः प्रज्ञायतेऽस्माकं बन्धुरित्युक्ते प्रज्ञायते बन्धुस्तथर्ग्वेदादीष्टं यागनिमित्तं धर्म्मजातं हुतं होमनिमित्तमाशितमन्नदाननिमित्तं पायितं पानदाननिमित्तमयञ्च लोक इदञ्च जन्म परश्च लोकः प्रतिपत्तव्यश्च जन्म।

---

आ॰ ब्रूहि प्रतिष्ठामायतनञ्चेति शेषः। प्रश्नमेव विवृणोति। किं स्वयमेवेति। प्रज्ञानिमित्तं यस्या वाचः सा तथा। द्वितीयपक्षं विशदयति। यथेति। व्यतिरेकपक्षं निषेधति। नेति। आकाङ्क्षापूर्व्वकं पक्षान्तरं प्रकाशति। कथं तर्हीति। बलिदानमुपक्षा-

IV 1 2.



उ॰ लोकः सर्वाणि च भूतानि वाचैव सम्राड् ब्रह्म ज्ञायते वाग्वै सम्राट् परमं ब्रह्म । नैनं वाग्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते । हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ २ ॥

---

भा॰ सर्वाणि च भूतानि वाचा वै सम्राट् प्रज्ञायन्तेऽतो वाग्वै सम्राट् परमं ब्रह्म । नैनं यथोक्तं ब्रह्मविदं वाग्जहाति । सर्वाण्येनं भूतान्यभिक्षरन्ति बलिदानादिभिरिह । देवो भूत्वा पुनः शरीरपातोत्तरकालं देवानप्येति अपि गच्छति य एवं विद्वानेतदुपास्ते । विद्यानिष्क्रियार्थं हस्तितुल्य ऋषभो हस्त्यृषभो यस्मिन् । गोसहस्रे तद्धस्त्यृषभं सहस्रं ददामीति होवाच जनको ह वैदेहः । स होवाच याज्ञवल्क्यः अननुशिष्य शिष्यं कृतार्थमकृत्वा शिष्याद्धनं न हरेतेति मम पिताऽमन्यत ममाप्ययमेवाभिप्रायः ॥ २ ॥

---

आ॰ रससमर्पणं । आदिशब्देन स्रक्चन्दनवस्त्रालङ्कारादिग्रहः । विद्यानिष्क्रियार्थमुवाचेति सम्बन्धः । पितुरेतन्मतमस्तु तव किमायातं तदाह । ममापीति । २ ॥

उ॰ यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्म उदङ्कः शौल्बायनः प्राणो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तच्छौल्बायनोऽब्रवीत्प्राणो वै ब्रह्मेत्यप्राणतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत का प्रियता याज्ञवल्क्य प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राट् कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राट् कामाय प्राणो वै सम्राट् परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं-

---

भा॰ यदेव ते कश्चिदब्रवीदुदङ्को नामतः शुल्बस्यापत्यं शौल्बायनोऽब्रवीत्प्राणो वै ब्रह्मेति प्राणो वा वायुर्देवता। पूर्व्ववत्प्राण एवायतनमाकाशः प्रतिष्ठा उपनिषत्प्रियमित्येतदुपासीत। कथं पुनः प्रियत्वं प्राणस्य वै। हे सम्राट् कामाय प्राणस्यार्थायायाज्यं याजयति पतितादिकमप्यप्रतिगृह्यस्याप्युग्रादेः प्रतिगृह्णात्यपि तत्र तस्यां दिशि वधनिमित्तमाशङ्का वधाशङ्का इत्यर्थो यां दिशमेति तस्करा-

---

आ॰ यथा वागग्निर्देवता तद्वदित्याह। पूर्व्ववदिति॥ प्राण एवा-

उ॰ विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ३ ॥ यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे बर्कु-र्वार्ष्णश्चक्षुर्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्य-वान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यपश्यतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रति-ष्ठान्न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत का सत्यता याज्ञ-वल्क्य चक्षुरेव सम्राडिति होवाच चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्ष-मिति तत्सत्यं भवति चक्षुर्वै सम्राट् परमं ब्रह्म

---

भा॰ याकीर्णाश्च तस्यां दिशि यथाप्रज्ञा । तच्चैतत्सर्वं प्राणस्य प्रियत्वे भवति प्राणस्यैव सम्राट् कामाय । तस्मात्प्राणो वै सम्राट् परमं ब्रह्म नैनं प्राणो जहाति । समानमन्यत् ॥ ३ ॥ यदेव ते कश्चिद्बर्कुरिति नामतः वृष्णस्यापत्यं वार्ष्णोऽब्रवी-च्चक्षुर्वै ब्रह्मेत्यादित्यो देवता चक्षुषि उपनिषत्सत्यं । यस्माच्छ्रोत्रेण श्रुतमनृतमपि स्यान्न तु चक्षुषा दृष्टं । तस्माद्वै सम्राट् पश्यन्तमाहुरद्राक्षीस्त्वं हस्तिनमिति स चेदद्राक्ष-

---

आ॰ यतनमित्यत्र प्राणशब्दः करणविषयः । पविसादिकमित्यादि-

उ० नैनं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवंविद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ४ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे गर्दभीविपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यशृण्वतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि

---

भा० मित्याह । तत्सत्यमेव भवति । यद्यन्यो ब्रूयादहमश्रौषमिति । तद्व्यभिचरति । यत्तु चक्षुषा दृष्टं तदव्यभिचारात्सत्यमेव भवति ॥ ४ ॥

यदेव ते गर्दभीविपीत इति नामतो भारद्वाजो गोत्रतः श्रोत्रं वै ब्रह्मेति । श्रोत्रे दिग्देवताऽनन्त इत्येतदुपासीत । कानन्तता श्रोत्रस्य । दिश एव श्रोत्रस्यानन्त्यं । यस्मात्तस्मादै सम्राट् प्राचीमुदीचीं वा यां काञ्चिदपि दिशं गच्छति

---

आ० पदमकुलीनग्रहणार्थं । उग्रो जातिविशेषः । आदिशब्देन म्लेच्छगणो गृह्यते ॥ २ ॥ चक्षुर्ग्रहणः सत्यत्वं साधयति । यस्मादिति ॥ ४ ॥

अन्तमेवोपपादयति । वक्ष्यतीति । दिशामानन्त्येऽपि श्रोत्रस्य

उ० याज्ञवल्क्य श्रोत्रमेवायतनमाकाशः प्रतिष्ठाऽनन्त
इत्येनदुपासीत काऽनन्तता याज्ञवल्क्य दिश एव
सम्राडिति होवाच तस्माद्वै सम्राडपि यां काञ्च
दिशं गच्छति नैवास्या अन्तं गच्छत्यनन्ता हि
दिशो दिशो वै सम्राट् श्रोत्रꣳ श्रोत्रं वै सम्राट् परमं
ब्रह्म नैनꣳ श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिक्ष-
रन्ति देवो भूत्वा देवानप्येति य एवंविद्वाने-
तदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच
जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽ-
मन्यत नाननुशिष्य हरेतेति ॥ ५ ॥ यदेव ते कश्चि-
दब्रवीत्तच्छृणवामेत्यब्रवीन्मे सत्यकामो जाबालो
मनो वै ब्रह्मेति यथा मातृमान् पितृमाना-
चार्य्यवान् ब्रूयात्तथा तज्जाबालोऽब्रवीन्मनो

---

भा० नैवास्या अन्तं गच्छति कश्चिदपि। अतोऽनन्ता हि दिशो
वै सम्राट् श्रोत्रं। तस्माद्दिगानन्त्यमेव श्रोत्रस्यानन्त्यं ॥ ५ ॥
सत्यकाम इति नामतो जबालाया अपत्यं जाबालः। चन्द्रमा
मनसि देवता। आनन्द इत्युपनिषत्। यद्यस्मान्मन एवानन्द-
स्तस्मान्मनसा वै सम्राट् स्त्रियमभिकामयमानोऽविहार्य्यते
प्रार्थयत इत्यर्थः। तस्मात्तां स्त्रियमभिकामयमानोऽभिहार्य्यते

---

आ० किमायातं तदाह । दिशो वेति ॥ ५ ॥ तथापि कथमानन्दत्वं
मनसः सम्भवति तदाह। स येनेति । ६ । कथं हृदयस्य सर्व्व-

उ० वै ब्रह्मेत्यमनसो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य मन एवायतनमाकाशः प्रतिष्ठाऽऽनन्द इत्येनदुपासीत का आनन्दता याज्ञवल्क्य मन एव सम्राडिति होवाच मनसा वै सम्राट् स्त्रियमभिहार्य्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट् परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ६ ॥ यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्य-

---

भा० तस्यां प्रतिरूपोऽनुरूपः पुत्रो जायते। स आनन्दहेतुः पुत्रः स येन मनसा निर्वर्त्त्यते तस्मान्मन आनन्दः ॥ ६ ॥ विदग्धः शाकल्यो हृदयं वै ब्रह्मेति। हृदयं वै सम्राट् सर्व्वेषां भूतानामायतनं। नामरूपकर्म्मात्मकानि हि भूतानि हृदयाश्रयाणीत्यवोचाम। शाकल्यब्राह्मणे हृदय-

---

आ० भूतायतनत्वं तत्प्रतिष्ठात्वं च तदाह। नामरूपेति। तस्मादिति

उ॰ हृदयस्य हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदयं वै सम्राट् सर्वेषां भूतानामायतनꣳ हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठा हृदये ह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट् परमं ब्रह्म नैनꣳ हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवंविद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ७ ॥ बृहदारण्यके षष्ठे प्रथमं ब्राह्मणं १ । १ ।

---

भा॰ प्रतिष्ठानि चेति। तस्माद्धृदये ह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति । तस्माद्धृदयं स्थितिरित्युपासीत हृदये च प्रजापतिर्देवता ॥ ७ ॥ इति श्रीबृहदारण्यकभाष्ये षष्ठाध्यायस्य प्रथमं ब्राह्मणं ॥ १ ॥

---

वा॰ प्राकव्यन्यायपरामर्शः । भूतानां हृदयप्रतिष्ठत्वे प्रतिष्ठमाह । तस्माद्धृदयमिति ॥ ७ ॥ प्रथमं ब्राह्मणं ॥ १ ॥

उ॰ जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीतैव मे वै ताभिरूपनिषद्भिः समाहितात्माऽस्येवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क

---

भा॰ जनको ह वैदेहः। यस्मात्सविशेषणानि सर्व्वाणि ब्रह्माणि विजानाति याज्ञवल्क्यस्तस्मादाचार्य्यकत्वं हित्वा जनकः कूर्चादासनविशेषादुत्थायोप समीपमवसर्पन्पादयोर्निपतन्नित्यर्थः। उवाचोक्तवान्नमस्ते तुभ्यमस्तु हे याज्ञवल्क्यानु मा शाधि अनुशाधि मामित्यर्थः। इतिशब्दो वाक्यपरिसमाप्त्यर्थः। स होवाच याज्ञवल्क्यो यथा वै लोके हे सम्राड् महान्तं दीर्घमध्वानमेष्यन्गमिष्यन् रथं वा स्थलेन गमिष्यन् नावं वा जलेन गमिष्यन् समाददीत एवमेवैतानि ब्रह्माण्येताभिरुपनिषद्भिर्युक्तान्युपासीनः समाहितात्मासि अत्यन्तमेताभिरुपनिषद्भिः संयुक्तात्मासि। न केवलमुपनिषत्समाहित एवं वृन्दारकः पूज्यश्चाढ्यश्चेश्वरो न

---

आ॰ पूर्व्वस्मिन्ब्राह्मणे कानिचिदुपासनानि ज्ञानसाधनानीत्युक्तानि। इदानीं [illegible] जनकादिद्वारा ज्ञानार्थं ब्राह्मणान्तरमवतारयति। जनको हेति। राज्ञो ज्ञानित्वाभिमाने शिष्यत्वविरोधिन्यपनीते मुनिं प्रति तस्य शिष्यत्वेनोपसत्तिं दर्शयति। यस्मादिति। नमस्कारोक्तेर्हेतुमुपन्यस्यति। अनुमेति। अभीष्टमनुशासनं कर्तुं प्राचीनज्ञानस्य फलाभावहेतुत्वोक्ति-

उ॰ इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवन्वेद यत्र गमिष्यामीत्यथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥ १ ॥

---

भा॰ दरिद्र इत्यर्थः । अधीत वेद अधीतोवेदो यस्य सोऽयमधीतवेदः उक्ताश्चोपनिषद आचार्यैस्तुभ्यं । स त्वमुक्तोपनिषत्क एवं सर्व्वविभूतिसम्पन्नोऽपि सन् भयमध्यस्थ एव परमात्मज्ञानेन विनाऽकृतार्थ एव तावदित्यर्थः । यावत्परं ब्रह्म न वेत्सि । इतोऽस्माद्देहाद्विमुच्यमान एताभिर्नौस्थानीयाभिः समाहितः क्व कस्मिन्गमिष्यसि किं वस्तु प्राप्स्यसीति । नाहं तद्वस्तु भगवन्पूजावन्वेद जाने यत्र गमिष्यामीति । अथ यद्येवं न जानीषे यत्र गतः कृतार्थः स्यामहं वै ते तुभ्यं तद्वक्ष्यामि यत्र गमिष्यसीति । ब्रवीतु भगवानिति । यदि प्रसन्नो मां प्रति । शृणु ॥ १ ॥

---

आ॰ द्वारा परमफलहेतुरात्मज्ञानमेवेति विवक्षित्वा तत्र राज्ञो जिज्ञासामापादयति । स हेत्यादिना ॥ यथोक्तगुणसम्पन्नश्चेदहं तर्हि कृतार्थत्वान्न मे कर्त्तव्यमस्तीत्याशङ्क्याह । एवमिति ॥ याज्ञवल्क्यो राज्ञो जिज्ञासामापाद्य पृच्छति । इत इति ॥ परवस्तुविषये गतेरयोगात्प्रश्नविषयं विवक्षितं संक्षिपति । किं वस्त्विति ॥ राज्ञा स्वकीयमज्ञत्वमुपेत्य शिष्यत्वे स्वीकृते प्रत्युक्तिमवतारयति । अथेति ॥ तत्रापेक्षितमथशब्दसूचितं पूरयति । यद्येवमिति ॥ आज्ञापनमनुचितमिति प्रश्नं वारयति । यदीति ॥ प्रसादाभिमुख्यमात्मनः सूचयति ॥ शृण्विति ॥ १ ॥

उ० इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥

अथैतद्वामेऽक्षिणि पुरुषरूपमेषास्य पत्नी

---

भा० इन्धो ह वै नाम । इन्ध इत्येवंनामायं चक्षुर्वै ब्रह्मेति । पुरोक्त आदित्यान्तर्गतः पुरुष एष योऽयं दक्षिणेऽक्षन्नक्षिणि विशेषेण व्यवस्थितः । स च सत्यनामा तं वै तं पुरुषं दीप्तिगुणत्वात्प्रत्यक्षं नामास्येन्ध इति । तमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण । यस्मात्परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः । प्रत्यक्षनामग्रहणं द्विषन्ति । एष त्वं वैश्वानरमात्मानं सम्पन्नोऽसि ॥ २ ॥

अथैतद्वामेऽक्षिणि पुरुषरूपमेषास्य पत्नी यं त्वं वैश्वानरमात्मानं सम्पन्नोऽसि तस्यास्येन्द्रस्य भोक्तुर्भोग्यैषास्य पत्नी विराडन्नं भोग्यत्वादेव । तदेतदन्नं चात्ता चैकं मिथुनं स्वप्ने ।

---

आ० विश्वतैजसप्राज्ञानुवादेन तुरीयं ब्रह्म दर्शयितुमादौ विश्वमनुवदति । इन्ध इति । कोऽसाविन्धनामेति चेत्तमाह । यश्चक्षुरिति । आधिदैवतं पुरुषमुक्त्वाध्यात्मं तं दर्शयति । योऽयमिति । तस्य पूर्वस्मिन्नपि ब्राह्मणे प्रस्तुतत्वमाह । स चेति । प्रकृते पुरुषे विदुषां सम्मतिमाह । तं वै तमिति । इन्धत्वं साधयति । दीप्तीति । प्रत्यक्षस्य परोक्षेणाख्याने हेतुमाह । यस्मादिति ॥ २ ॥

एतस्यैव वैश्वानरस्योपासनार्थं प्रासङ्गिकमिन्द्रश्चेन्द्राणी चेति मिथुनं कथयति । अथेत्यादिना । प्रासङ्गिकध्यानाधिकारार्थोऽयमारम्भः । यदेतन्मिथुनं जागरिते विश्वशब्दितं तदेवैकं स्वप्ने

उ॰ विराट् तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये

---

भा॰ कथं। तयोरेष इन्द्राण्या इन्द्रस्य चैष संस्तावः संभूय यत्र संस्तवं कुर्व्वाते अन्योऽन्यं स एष संस्तावः। कोऽसौ स एषोऽन्तर्हृदय आकाशोऽन्तर्हृदये हृदयस्य मांसपिण्डस्य मध्ये। अथैनयोरेतद्वक्ष्यमाणमन्नं भोज्यं स्थितिहेतुः। किञ्च य एषोऽन्तर्हृदये लोहितपिण्डो लोहित एव पिण्डाकारापन्नो लोहितपिण्डोऽन्नं जग्धं द्वेधा परिणमते यत्स्थूलं तदधो गच्छति। यदन्यत्तत्पुनरग्निना पच्यमानं द्वेधा परिणमते। यो मध्यमो रसः स रसो लोहितादिक्रमेण पाञ्चभौतिकं पिण्डशरीरमुपचिनोति। योऽणिष्ठो रसः स एष लोहितपिण्ड इन्द्रस्य लिङ्गात्मनो हृदये मिथुनीभूतस्य यं तैजसमाचक्षते स तयोरिन्द्रेन्द्राण्योर्हृदये मिथुनीभूतयोः सूक्ष्मासु नाडीष्वनुप्रविष्टः स्थितिहेतु-

---

आ॰ वैकृतशब्दवाच्यमित्याह। तदेतदिति। तच्छब्देन तैजसमभिहितमेवेति। कथमिति। किं तस्य स्थानं एष्टव्यं तेऽन्नं वा प्रावरणं वा मार्गो वेति विकल्प्याद्यं प्रत्याह। तयोरिति। संस्तावं सङ्गतिमिति यावत्। द्वितीयं प्रत्याह। अथेति। अन्नातिरेकेण स्थितेरसम्भवात्तस्य वक्ष्यमाणत्वादित्यथशब्दार्थः। लोहितपिण्डं सूक्ष्मान्नरसं व्याख्यातुं भक्षितस्यान्नस्य तावद्विभागमाह। अन्नमिति। यदन्यत्तत्पुनरिति योजनीयं। तत्रत्यमाहारस्य योऽयं मध्यम रसस्तदादयप्रक्रियां व्यक्त्यः। उपचिनोतेरेकतमामाह। यस्तै-

उ॰ जालकमिवाथैनयोरेषा सृतिः सञ्चरणीयैषा हृदयादूर्द्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये

---

भा॰ र्भवति । तदेतदुच्यतेऽथैनयोरेतदन्नमित्यादि । किञ्चान्यदथैनयोरेतत्प्रावरणं । भुक्तवतोः स्वपतोश्च प्रावरणं भवति । लोके तत्सामान्यं हि कल्पयति श्रुतिः । किन्तदिह प्रावरणं । यदेतदन्तर्हृदये जालकमिवानेकनाडीछिद्रबहुलत्वाज्जालकमिवाथैनयोरेषा सृतिर्मार्गः । सञ्चरतोऽनयेति सञ्चरणी स्वप्नाजागरितदेशागमनमार्गः । का सा सृतिर्या एषा हृदयदेशादूर्द्ध्वाभिमुखा सत्युच्चरति नाडी । तस्याः पारिमाण्यमिदमुच्यते । यथा लोके केशः सहस्रधा भिन्नोऽत्यन्तसूक्ष्मो भवत्येवं सूक्ष्मा अस्य देहस्य सम्बन्धिन्यो हिता नाम हिता इत्येवं व्याख्याता नाड्यस्ताश्चान्तर्हृदये मांसपिण्डे प्रतिष्ठिता भवन्ति । हृदयाद्विप्ररूढास्ताः । सर्व्वत्र कदम्बकेसरवदेताभिर्नाडीभिरत्यन्तसूक्ष्मा-

---

आ॰ न्नसमिति । तस्यान्नत्वमुपपादयति । स तयोरिति । व्याख्याते ऽर्थे वाक्यस्यान्वितावयवत्वमाह । तदेतदिति । प्रावरणं पृच्छ्यते तत्राह । किञ्चान्यदिति । भोगस्यापानन्तर्य्यमथशब्दार्थः । प्रावरणप्रदर्शनस्य प्रयोजनमाह । भुक्तवतोरिति । इहेति भोक्तृभोग्ययोरिन्द्रेन्द्राण्योर्वसतिः । हृदयजालकयोराधाराधेयत्वमविवक्षितं तस्यैव तद्भावान्मार्गश्चेत्पृच्छ्यते तत्राह । अयेति । नाडीभिः शरीरव्याप्तस्यान्नस्य प्रयोजनमाह । तदेवदिति । तस्माद्धितादिवाक्यमादाय व्याचष्टे । यस्मादिति । यद्यपि प्रवि-

उ प्रतिष्ठिता भवन्त्येताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः ॥ ३ ॥

तस्य प्राची दिक् प्राञ्चः प्राणा दक्षिणा दिग्द-

भा॰ भिरेव तदन्नमास्रवद्गच्छदास्रवति गच्छति । तदेतद्देवताशरीरमनेनान्नेन दामभूतेनोपचीयमानं तिष्ठति । तस्मात्स्थूलेनान्नेनोपचितः पिण्डः । इदन्तु देवताशरीरं लिङ्गं सूक्ष्मेणान्नेनोपचितं । पिण्डोपचयकरमन्नं प्रविविक्तमेव मूत्रपुरीषादि स्थूलमपेक्ष्य लिङ्गस्थितिकरन्त्वन्नं ततोऽपि सूक्ष्मतरमतः प्रविविक्ताहारः पिण्डः । तस्मात्प्रविविक्ताहारादपि प्रविविक्ताहारतर एव लिङ्गात्मा इव एव भवति । अस्माच्छारीराच्छरीरमेव शारीरं । तस्माच्छारीरादात्मनो वैश्वानरात्तैजसः सूक्ष्मान्नोपचितो भवति ॥ ३ ॥

स एष हृदयभूतस्तैजसः सूक्ष्मभूतेन प्राणेन विध्रियमाणः प्राण एव भवति । तस्यास्य विदुषः क्रमेण वैश्वान-

आ॰ विक्ताहार इत्येव वक्तव्ये प्रविविक्ताहारतर इति कस्मादुच्यते तत्राह । पिण्डेति ॥ यस्मादित्यस्यापेक्षितं कथयति । अत इति ॥ शारीरादिति श्रूयते कथं शारीरादित्युच्यते तत्राह । शरीरमेवेति ॥ उक्तमर्थं सङ्क्षिप्योपसंहरति । आत्मन इति ॥ ३ ॥

तस्य प्राची दिगित्याद्यवतारयितुं भूमिकां करोति । स एष इति ॥ प्राणशब्देनात्रातः प्रत्यगात्मा प्राणो गृह्यते ॥ एवं भूमिकां कृत्वा वाक्यमादाय व्याकरोति । तस्येत्यादिना ॥ तैजसं प्राप्तस्येत्यस्य

उ० क्षिणे प्राणाः प्रतीची दिक् प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्द्ध्वा दिगूर्द्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्व्वा दिशः सर्व्वे प्राणाः स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न

---

भा० रात्तैजसं प्राप्तस्य हृदयात्मानमापन्नस्य हृदयात्मनश्च प्राणात्मानमापन्नस्य प्राची दिक् प्राञ्चः प्राग्गताः प्राणाः। तथा दक्षिणा दिग्दक्षिणे प्राणाः। तथा प्रतीची दिक् प्रत्यञ्चः प्राणाः । उदीची दिगुदञ्चः प्राणाः । ऊर्द्ध्वा दिगूर्द्ध्वाः प्राणाः । अवाचीदिगवाञ्चः प्राणाः । सर्व्वा दिशः सर्व्वे प्राणाः। एवं विद्वान् क्रमेण सर्व्वात्मकं प्राणमात्मत्वेनोपगतो भवति। तं सर्व्वात्मानं प्रत्यगात्मन्युपसंहृत्य द्रष्टुर्हि द्रष्टृभावं नेति नेत्यात्मानं तुरीयं प्रतिपद्यते । यमेष विद्वाननेन क्रमेण प्रतिपद्यते । स एष नेति नेत्यात्मेत्यादि न रिष्यन्तीत्यन्तं व्याख्यातमेतदभयं वै जनकम-

---

आ० व्याख्यानं । हृदयात्मानमापन्नस्येति ॥ उक्तमर्थं सङ्क्षिप्याह । एवं विद्वानिति । विश्वस्य जागरिताभिमानिनस्तैजसे तस्य च स्वप्नाभिमानिनः सुषुप्त्यभिमानिनि प्राज्ञे क्रमेणान्तर्भावं जानन्नित्यर्थः ॥ स एष नेति नेत्यात्मेत्यादेर्भूमिकां करोति । तं सर्व्वात्मानमिति ॥ तत्र वाक्यमवतार्य्य पूर्व्वोक्तं व्याख्यानं स्मारयति । यमेष इति ॥ तुरीयादपि प्राप्तव्यमन्यदभयमस्तीत्याशङ्क्याह । अभयमिति । गन्तव्यं वक्ष्यामीत्युपक्रम्यावस्थात्रयातीतं तुरीयमुपदिशन्नाचार्य्यः कोविदारामाचष्ट इति न्यायविषयतां नाति-

उ॰ रिथत्यभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः। स होवाच जनको वैदेहोऽभयन्त्वागच्छताद्याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मी३ति ॥ ४ ॥ इति वृहदारण्यके षष्ठे द्वितीयं ब्राह्मणं ॥ २ ॥

---

भा॰ रणादिनिमित्तभयशून्यं हे जनक प्राप्तोऽसीति। ह एवं किल उवाचोक्तवान्याज्ञवल्क्यस्तदेतदुक्तमथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति। स होवाच जनको ह वैदेहोऽभयमेव त्वा त्वामपि गच्छताद्गच्छतु यस्त्वं नोऽस्मान् हे भगवन्पूजावन्नभयं ब्रह्म वेदयसे ज्ञापयसि प्रापितवानुपाधिकृताज्ञानाव्यवधानापनयनेनेत्यर्थः। किमन्यदहं विद्यानिष्क्रियार्थं प्रयच्छामि। साक्षादात्मानमेव दत्तवते ऽस्मो नमस्तेऽस्त्विमे विदेहास्तव यथेष्टं भुज्यतामयञ्चाहमस्मि दासभावे स्थितो यथेष्टं मां राज्यञ्च प्रतिपद्यस्वेत्यर्थः ॥ ४ ॥ इति वृहदारण्यकभाष्ये षष्ठाध्यायस्य द्वितीयं ब्राह्मणं ॥ २ ॥

---

आ॰ वर्त्तेत्याद्यवतार्य। तदेतदिति। विद्याया दक्षिणान्तराभावमभिप्रेत्याह। स होवाचेति। कथं पुनरन्यस्य स्थितस्य गतस्य वाऽन्यप्रापयमित्याशङ्क्याह। उपाधीति। पश्वादिकं दक्षिणान्तरं सम्भवतीत्याशङ्क्य तस्योक्तविद्यानुरूपत्वं नास्तीत्याह। किमन्यदिति। वस्तुतो दक्षिणान्तराभावमुक्त्वा प्रतीतिमाश्रित्याह। अत इति। अक्षरार्थमुक्त्वा वाक्यार्थमाह। यथेष्टमिति ॥ ४ ॥ षष्ठे द्वितीयं ब्राह्मणं ॥ २ ॥

भा॰ जनकं ह वैदेहं याज्ञवल्क्यो जगामेत्यस्याभिसम्बन्धो विज्ञानमय आत्मा साक्षादपरोक्षाद्ब्रह्म सर्व्वान्तरः पर एव नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्ति द्रष्टृ इत्यादि श्रुतिभ्यः। स एष इह प्रविष्टो वदनादिलिङ्गोऽस्ति विविक्त इति मधुकाण्डेऽजातशत्रुसंवादे प्राणादिकर्त्तृत्वभोक्तृत्वप्रत्याख्यानेनाधिगतोऽपि सन्पुनः प्राणादिपञ्चमुपन्यस्योषस्ते प्रश्ने प्राणनादिलिङ्गाद्यः सामान्येनाधिगतः प्राणेन प्राणितीत्यादिना दृष्टेर्द्रष्टेत्यादिनाऽलुप्तशक्तिस्वभावोऽधि-

---

आ॰ पूर्व्वस्मिन् ब्राह्मणे जागरादिद्वारा तत्त्वं निर्द्धारितं। सम्प्रति ब्राह्मणान्तरमवतार्य्य तस्य पूर्व्वेण सम्बन्धं प्रतिजानीते। जनकमिति॥ तमेव वक्तुं तृतीये वृत्तं कीर्त्तयति। विज्ञानमय इति॥ यद्ब्रह्म साक्षादपरोक्षात्सर्व्वान्तर आत्मा स पर एव विज्ञानमय आत्मेत्यत्र हेतुमाह। नान्य इति॥ विज्ञानमयः पर एवेत्यत्र वाक्यान्तरं पठति। स एष इति॥ वदन्नागत्यादावुक्तमनुवदति। वदनादीति॥ तार्त्तीयमर्थमनूद्य चातुर्थिकमर्थमनुवदति। अस्तीति॥ यदि मधुकाण्डे गार्ग्यब्राह्मसंवादे प्राणादीनां कर्त्तृत्वादिनिराकरणेन तेभ्यो व्यतिरेकोऽस्ति विज्ञानात्मेति सोऽधिगतस्तर्हि किमिति पञ्चमे तत्सद्भावो व्युत्पाद्यते तत्राह। पुनरिति॥ यद्यपि विज्ञानमयसद्भावश्चतुर्थे स्थितस्तथापि पुनरोषस्ते प्रश्ने यः प्राणेन प्राणितीत्यादिना प्राणनादिलिङ्गमुपन्यस्य तल्लिङ्गगम्यः सामान्येनाधिगतः स दृष्टेर्द्रष्टेत्यादिना कूटस्थदृष्टिस्वभावो विशेषतो निश्चितस्तथा च पञ्चमेऽपि तद्व्युत्पादनमुचितमित्यर्थः॥ आत्मा कूटस्थदृष्टिस्वभावश्चेत्कथं तस्य संसारस्तत्राह। तस्य चेति॥ अज्ञानतत्कार्य्यान्तःकरणादिपरोपाधिशब्दार्थः॥ संसारस्य तन्मात्रोपाधिकत्वे दृष्टान्तमाह। यथेति॥ दार्ष्टान्तिकस्यानेकरूपत्वादनेकदृष्टान्तोपादानमित्यभिप्रेत्य दार्ष्टान्तमाह। तथेति॥ तथोक्तदृष्टान्तानुसारेणात्मन्यपि परोपाधिः

भा० गतस्तस्य च परोपाधिनिमित्तः संसारो यथा रज्जूष-रस्थूक्तिकागगनादिषु सर्पोदकरजतमलिनत्वादिपराध्या-रोपणनिमित्तमेव न स्वतस्तथा निरुपाधिको निरु-पाख्यो नेति नेतीति व्यपदेश्यः साक्षादपरोक्षात्सर्वान्तर आत्मा ब्रह्माक्षरमन्तर्यामी प्रशास्तौपनिषदः पुरुषो विज्ञा-नमानन्दं ब्रह्मेत्यधिगतं। तदेव पुनरिन्धसञ्ज्ञः प्रवि-विक्ताहारतरस्ततोऽन्तर्हृदये लिङ्गात्मना प्रविविक्ताहा-रतरस्ततः परेण जगदात्मप्राणोपाधिस्ततोऽपि प्रवि-

---

आ० संसार इति यावत्॥ सोपाधिकस्यात्मनः संसारित्वमुक्त्वा निरु-पाधिकस्य नित्यमुक्तत्वमाह। निरुपाधिक इति॥ निरुपाख्यत्वं वाचां मनसां चागोचरत्वं॥ कथं तर्हि तत्रागमप्रामाण्यं तत्राह। नेति नेतीति व्यपदेश्य इति॥ कहोलप्रश्नोक्तमनुवर्तति। साक्षा-दिति॥ अक्षरब्राह्मणोक्तं स्मारयति। अक्षरमिति॥ अन्त-र्यामिब्राह्मणोक्तं स्मारयति। अन्तर्यामीति॥ शाकल्यब्राह्म-णोक्तमनुसन्दधाति। औपनिषद इति॥ पाञ्चमिकमर्थमत्यम-नूद्यातीते ब्राह्मणद्वये वृत्तमनुभाषते। तदेवेति॥ यत्साक्षाद-परोक्षात्सर्वान्तरं ब्रह्म तदेवाधिगमनोपायविशेषोपदर्शनपुरः-सरं पुनरधिगतमिति सम्बन्धः॥ षडाचार्यब्राह्मणार्थं सङ्क्षिप्य कूर्चब्राह्मणार्थं सङ्क्षिपति। इन्ध इत्यादिना॥ इन्धस्य विशेषणं प्रविविक्ताहार इति॥ हृदयान्तर्गो लिङ्गात्मा स ततो वैश्वान-रादिन्धात्प्रविविक्ताहारतर इति योजना॥ विश्वतैजसावुक्त्वा प्राज्ञतुरीये प्रदर्शयति। ततः परेणेति॥ ततस्तस्मादिन्धात्तैजसाच्च परेण व्यवस्थितो यो जगदात्मा प्राणोपाधिरव्याकृताख्यः प्राज्ञ-स्ततोऽपि तमप्युपाभिभूतं जगदात्मानं केवले प्रतीचिविद्यया प्रविलाप्य स एव नेति नेतीति यस्तुरीयं ब्रह्म तदधिगतमिति सम्बन्धः॥ विद्ययोपाधिविलापने दृष्टान्तमाह। रज्ज्वादाविति॥ अभयं वै जनकेत्यादावुक्तमनुवदति। एवमिति॥ कूर्चब्राह्मणो-

उ॰ जनकꣳ ह वैदेहं याज्ञवल्क्यो जगाम स मेने

---

भा॰ त्याज्य जगदात्मानमुपाधिभूतं रज्ज्वादाविव सर्पादिकं विद्यया स एष नेति नेतीति साक्षात्सर्वान्तरं ब्रह्माधिगतमेवमभयं परिप्रापितो जनकः ।

याज्ञवल्क्येनागमतः सङ्क्षेपतः। अत्र च जाग्रत्स्वप्नसुषुप्ततुरीयाण्युपन्यस्तान्यन्यप्रसङ्गेन। इन्धः प्रविविक्ताहारतरः सर्व्वे प्राणाः स एष नेति नेतीति। इदानीं जाग्रत्स्वप्नादिद्वारेणैव महता तर्केण विस्तरतोऽधिगमः कर्त्तव्यः। अभयं प्रापयितव्यं। सद्भावस्यात्मनो विप्रतिपत्त्याशङ्कानिराकरणद्वारेण व्यतिरिक्तत्वं शुद्धत्वं। स्वयंज्योतिष्ट्वमलुप्तशक्तिस्वरूपत्वं

---

आ॰ उक्तमर्थमनुभाषितं सङ्क्षिप्याह। अत्र चेति॥ अन्यप्रसङ्गेनोपासनानां क्रममुक्तिफलत्वप्रदर्शनप्रसङ्गेनेति यावत्॥ तेषामुपन्यासमेवाभिनयति। इन्ध इत्यादिना॥ वृत्तमनूद्योत्तरब्राह्मणस्य तात्पर्य्यमाह। इदानीमिति॥ आदिशब्दः सुषुप्तितुरीयसङ्ग्रहार्थः। तर्कस्य महत्त्वं चतुर्विधदोषराहित्येनाबाधितत्वं। अधिगमस्तस्यैव प्रस्तुतस्य ब्रह्मण इति शेषः॥ कर्त्तव्य इतीदमिदानीमारभ्यत इति सम्बन्धः॥ किमिदं ब्रह्मणोऽधिगमस्य कर्त्तव्यत्वं नाम तदाह। अभयमिति॥

अधिगन्तव्यमर्थान्तरमाह। सद्भावस्येति॥ प्रागपि सद्भावस्यागमेनाधिगतत्वात्किमर्थं पुनस्तादर्थ्येन प्रयत्यते तत्राह। विप्रतिपत्तीति॥ बाह्यानां विप्रतिपत्त्या नास्ति च शङ्कायां तन्निरासद्वारा आत्मनः सद्भावोऽधिगन्तव्य इत्यर्थः॥ आत्मनोऽस्तित्वेऽपि केचिद्देहादौ तदन्तर्भावमभ्युपयन्ति॥ तान्प्रत्याह। व्यतिरिक्तमिति॥ देहादिव्यतिरिक्तोऽप्यात्मा कर्त्ता भोक्ता चेत्येके। भोक्तैव केवलमित्यपरे। तान्प्रत्युक्तं। शुद्धत्वमिति॥ तस्य जडत्वपक्षं प्रत्याचष्टे। स्वयंज्योतिष्ट्वमिति॥ तत्र कूटस्थदृष्टिस्वभावत्वं हेतुमाह।

उ॰ न वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समुदाते तस्मै ह याज्ञवल्क्यो वरं ददौ

भा॰ निरतिशयानन्दस्वाभाव्यमद्वैतत्त्वस्याधिगन्तव्यमितीदमारभ्यते। आख्यायिका तु विद्यासम्प्रदानग्रहणविधिप्रकाशनार्था। विद्यास्तुतये च विशेषतो वरदानादिसूचना। जनकं ह वैदेहं याज्ञवल्क्यो जगाम। स च गच्छन्नेवं मेने चिन्तितवान्। न वदिष्ये किञ्चिदपि राज्ञे। गमनप्रयोजनं तु योगक्षेमार्थं। न वदिष्य इत्येवंसङ्कल्पोऽपि याज्ञवल्क्यो यद्यज्जनकः पृष्टवांस्तत्प्रतिपेदे। तत्र को हेतुः। सङ्कल्पितस्यान्यथाकरण इत्यत्राख्यायिकामाचष्टे। पूर्वत्र किल जनकयाज्ञवल्क्ययोः संवाद आसीदग्निहोत्रे निमित्ते। तत्र जनकस्याग्निहोत्रविषयं विज्ञानमुपलभ्य परितुष्टो याज्ञ-

आ॰ अनुमेति। एतेन विज्ञानस्य गुणत्वपक्षोऽपि वेदितव्यः। येत्वानन्दमात्मगुणमाहुस्तान्प्रत्याह। निरतिशयेति। आत्मनः सप्रपञ्चत्वपक्षं प्रत्यादिशति। अद्वैतत्वेति। शास्त्रतात्पर्य्यमभिधायाख्यायिकातात्पर्य्यमाह। आख्यायिका त्विति। विद्यायाः सम्प्रदानं शिष्यस्तस्य ग्रहणविधिं श्रद्धादिप्रकारस्तस्य प्रकाशनार्थेयमाख्यायिकेति यावत्। प्रयोजनान्तरं तस्या दर्शयति। विद्येति। कथं कर्म्मभ्यो विशेषतो विद्यायास्तुतिरत्र लभ्यते तत्राह। वरेति। कामप्रश्नाख्यस्य वरस्य याज्ञवल्क्येन राज्ञे दत्तत्वात्। तेन चावसरे ब्रह्मज्ञानस्यैव एतत्प्रसादेन विधिना विद्यास्तुतेः सूचना। साप्यत्र विवक्षितेत्यर्थः। तात्पर्य्यमेवमुक्त्वा व्याख्यामक्षराणामारभते। जनकमित्यादिना। सं वादं न करोमीति मत्वेत्थमिति गच्छतीत्याशङ्क्यते। गमनेति। उत्तरमाह। योगेति। अथ

उं॰ स ह कामप्रश्नमेव वव्रे तꣳ हास्मै ददौ तꣳ सम्राडेव पूर्व्वं पप्रच्छ ॥ १ ॥
याज्ञवल्क्य किं ज्योतिरयं पुरुष इति ।

---

भा॰ वल्क्यस्तस्मै जनकाय ह किल वरं ददौ । स च जनको ह कामप्रश्नमेव वरं वव्रे वृतवांस्तञ्च वरं हास्मै ददौ याज्ञवल्क्यः। तेन वरप्रदानसामर्थ्येनाव्याचिख्यासुमपि याज्ञवल्क्यं तूष्णीं स्थितमपि सम्राडेव जनकः पूर्व्वं पप्रच्छ । तत्रैवानुक्तिर्ब्रह्मविद्यायाः कर्म्मणा विरुद्धत्वात् । विद्यायाश्च स्वातन्त्र्यात् । स्वतन्त्रा हि ब्रह्मविद्या । सहकारिसाधनान्तरनिरपेक्षा पुरुषार्थसाधनेति च ॥ १ ॥

हे याज्ञवल्क्येत्येवं सम्बोध्याभिमुखीकरणार्थं किं ज्योतिरयं पुरुष इति । किमस्य पुरुषस्य ज्योतिर्येन

---

आ॰ हेत्याद्यवतारयति । नेत्यादिना ॥ अत्रोत्तरत्वेनेति शेषः । पूर्व्वत्रेति कर्म्मकाण्डोक्तिः ॥ नन्वग्निप्रकरणे कामप्रश्नो वरो दत्तस्तेत्किमिति तत्रैवात्मयाथात्म्यप्रश्नप्रतिवचनेनासूचितातां तत्राह । तत्रैवेति ॥ कर्म्मनिरपेक्षाया ब्रह्मविद्याया मोक्षहेतुत्वादपि कर्म्मप्रकरणे तदनुक्तिरित्याह । विद्यायाश्चेति ॥ सर्व्वापेक्षाधिकरणन्यायान्न तस्याः स्वातन्त्र्यमित्याशङ्क्याह । स्वतन्त्रा हीति ॥ सा हि स्वोत्पत्तौ स्वफले वा कर्म्मण्यपेक्षते । नाद्योऽभ्युपगमात् । न द्वितीयः । त एव चाग्नीन्धनाद्यनपेक्षेति न्यायविरोधादित्यभिप्रेत्याह । सहकारीति । इत्यस्माच्च हेतोस्तत्रैवानुक्तिरिति सम्बन्धः ॥ १ ॥

याज्ञवल्क्यव्रतभङ्गे हेतुमुक्त्वा जनकस्य प्रश्नमुत्थापयति । हे याज्ञवल्क्येति ॥ अक्षरार्थमुक्त्वा प्रश्नवाक्ये विवक्षितमर्थमाह । किमयमित्यादिना ॥ स्वशब्दो यथोक्तपुरुषविषयः ॥ ज्योतिःकार्य्यमित्यासनादिव्यवहारोक्तिः ॥ इत्येतदिति कल्पद्वयं परास्त-

भा॰ ज्योतिषा व्यवहरति। सोऽयं किं ज्योतिरयं प्राकृतः कार्य्य-
करणसङ्घातरूपः शिरःपाण्यादिमान् पुरुषः पृच्छ्यते।
किमयं स्वावयवसङ्घातवाह्येन ज्योतिरन्तरेण व्यवहरति।
आहोस्वित्स्वावयवसङ्घातमध्यपातिना ज्योतिःकार्य्यमयं
पुरुषो निर्वर्त्तयतीत्येतदभिप्रेत्य पृच्छति। किञ्चातो यदि
व्यतिरिक्तेन यदि वाऽव्यतिरिक्तेन ज्योतिषा ज्योतिःकार्य्यं
निर्वर्त्तयति। शृणु तत्र कारणं। यदि व्यतिरिक्तेनैव ज्योतिः-
कार्य्यनिर्वर्त्तकत्वमस्य स्वभावो निर्द्धारितो भवति। ततो
दृष्टज्योतिःकार्य्यविषयेऽप्यनुमास्यामहे। व्यतिरिक्तज्योति-
र्निमित्तमेवेदं कार्य्यमिति। अथाऽव्यतिरिक्तेनैव स्वात्मना
ज्योतिषा व्यवहरति। ततः प्रत्यक्षेऽपि ज्योतिषि ज्योतिः-
कार्य्यदर्शने व्यतिरिक्तमेव ज्योतिरनुमेयं। अथानियम
एव व्यतिरिक्तमव्यतिरिक्तं वा ज्योतिःपुरुषस्य व्यवहा-
रहेतुस्ततोऽनध्यवसाय एव ज्योतिर्विषय इत्येवं मन्वानः

---

आ॰ पृच्छते॥ पक्षद्वयेऽपि फलं पृच्छति। किञ्चेति॥ सप्तम्यर्थे तसिः॥ उत्त-
रमाह। शृणिवति॥ तत्रेति पक्षद्वयोक्तिः॥ कारणं फलमिति
यावत्॥ प्रथमपक्षमनूद्य स्वपक्षसिद्धिफलमाह। यदीत्यादिना॥
षष्ठी पुरुषमधिकरोति। कारणभूतं ज्योतिर्न दृश्यते। तत्कार्य्य-
न्त्वासनाद्युपलभ्यते। तत्रापि विषये स्वप्नादाविति यावत्॥ अनु-
मानमेवाभिनयति। व्यतिरिक्तेति॥ विमतमतिरिक्तज्योतिर-
धीनं व्यवहारत्वात्सम्मतवदित्यर्थः॥ पक्षान्तरमनूद्य लोकायत-
पक्षसिद्धिफलमाह। अथेत्यादिना॥ अप्रत्यक्षोऽपीत्यव्यतिरिक्त-
मिति छेदः॥ कल्पान्तरमाह। अथेति॥ अनियमं व्याकरोति।
व्यतिरिक्तमिति॥ तस्मिन्पक्षे व्यवहारहेतौ ज्योतिष्यनिश्चयात्त-
द्विकारो व्यवहारोऽपि न स्थैर्य्यमालम्बेतेत्याह। तत इति॥

उ॰ आदित्यज्योतिः सम्राडिति होवाच आदित्ये-

---

भा॰ पृच्छति जनको याज्ञवल्क्यं किंज्योतिरयं पुरुष इति। नन्वेवमनुमानकौशले जनकस्य किं प्रश्नेन स्वयमेव कस्मान्न प्रतिपद्यत इति। सत्यमेवमेतत्।

तथापि लिङ्गलिङ्गिसम्बन्धविशेषाणामत्यन्तसौक्ष्म्याद्दुरवबोध्यतां मन्यते बहूनामपि पण्डितानां किमुतैकस्य। अत एव हि धर्मसूक्ष्मनिर्णये परिषद्व्यापार इष्यते। पुरुषविशेषश्चापेक्ष्यते। दशावरा परिषत्त्रयो वैको वेति। तस्माद्यद्यप्यनुमानकौशलं राज्ञस्तथाप्यत्र युक्तो याज्ञवल्क्यः

---

आ॰ व्याख्यातं प्रश्नमुपसंहरति। इत्येवमिति॥ प्रश्नमाक्षिपति। नन्विति॥ व्यतिरिक्तज्योतिर्बुभुत्सया प्रश्नो भविष्यतीति चेत्तत्राह। स्वयमेवेति॥

राज्ञोऽनुमानकौशलमङ्गीकरोति। सत्यमिति॥ किमिति तर्हि पृच्छतीत्याशङ्क्याह। तथापीति॥ व्याप्यव्यापकयोस्तत्सम्बन्धस्य चातिसूक्ष्मत्वादेकेन दुर्ज्ञानत्वात्तज्ज्ञाने याज्ञवल्क्योऽप्यपेक्षित इत्यर्थः॥ कथं तेषामतिसूक्ष्मत्वं तत्राह। बहूनामपीति॥ लिङ्गादिष्वनेकेषामपि विवेकिनां दुर्बोधताऽस्ति। किमुतैकस्य तेषु दुर्बोधता वाच्येत्यर्थः॥ तेषामत्यन्तसौक्ष्म्ये मानवीं स्मृतिं प्रमाणयति। अत एवेति॥ कुशलस्यापि पुरुषार्थत्वनिर्णये पुरुषान्तरापेक्षायाः सत्त्वादेवेति यावत्॥ पुरुषविशेषो वेदविदध्यात्मविदित्यादिः॥ तत्र स्मृत्यर्थं सङ्क्षिपति। दशेति॥ उक्तं हि। धर्म्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः॥ दशावरा वा परिषद्यं धर्म्मं परिकल्पयेत्। त्र्यवरा वापि वृत्तस्था तं धर्म्मं न विचारयेत्*॥ त्रैविद्यो हैतुक-

---

* विचालयेत् इति पाठान्तरः।

उ॰ नैव ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ २ ॥

---

भा॰ प्रष्टुं । विज्ञानकौशलतारतम्योपपत्तेः पुरुषाणां । अथ वा श्रुतिः स्वयमेव आख्यायिकाव्याजेनानुमानमार्गमुपन्यस्यास्मान्बोधयति पुरुषमतिमनुसरन्ती । याज्ञवल्क्योऽपि जनकाभिप्रायाभिज्ञतया व्यतिरिक्तमात्मज्योतिर्बोधयिष्यन् जनकं व्यतिरिक्तप्रतिपादकमेव लिङ्गं प्रतिपेदे यथा प्रसिद्धं । आदित्यज्योतिः सम्राडिति होवाच । कथमादित्येनैव स्वावयवसङ्घातव्यतिरिक्तेन चक्षुषोऽनु-

---

आ॰ स्मर्त्ता नैरुक्तो धर्म्मपाठकः । त्रयश्चाश्रमिणः पूर्व्वे परिषदेषा दशावरा ॥ ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च । त्र्यवरा परिषज्ज्ञेया धर्म्मसंशयनिर्णय इति ॥ एको वेत्यध्यात्मविदुच्यते । कुशलस्यापि राज्ञो याज्ञवल्क्यं प्रति प्रश्नोपपत्तिमुपसंहरति । तस्मादिति ॥ सूक्ष्मार्थनिर्णये पुरुषान्तरापेक्षाया वृद्धसम्मतत्वादिति यावत् ॥ तत्रैव हेत्वन्तरमाह । विज्ञानेति ॥ राज्ञो याज्ञवल्क्यापेक्षामुपपाद्य पक्षान्तरमाह । अथ वेति ॥ तथा चात्र राज्ञो मुनेर्वा विवक्षितत्वाभावात् किमिति राजा मुनिमनुसरतीति चोद्यं निरवकाशमिति शेषः ॥ प्रश्नोपपत्तौ प्रतिवचनमुपपन्नमेवेति मन्वानस्तदुत्थापयति । याज्ञवल्क्योऽपीति ॥ अतिरिक्ते ज्योतिषि प्रष्टू राज्ञोऽभिप्रायस्तदभिप्रायः । तदभिज्ञतया तथाविधं ज्योती राजानं बोधयिष्यन् यथातिरिक्तज्योतिरावेदकं वक्ष्यमाणलिङ्गं गृहीतव्याप्तिकं प्रसिद्धं भवति । तथा तद्व्याप्तिग्रहणक्षममादित्यज्योतिरित्यादिना मुनिरपि प्रतिपन्नवानित्यर्थः ॥ व्याप्तिं बुभुत्समानः पृच्छति । कथमिति ॥ यो व्यवहारः सोऽतिरिक्तज्योतिरधीनो यथा सवित्रधीनो जाग्रद्व्यवहार इति व्याप्तिं व्याकरोति । आदित्येनेति ॥ एवकारं

उ० अस्तमित आदित्ये याज्ञवल्क्य किं ज्योति-
रेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भव-
तीति चन्द्रमसैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म्म

---

भा० ग्राहकेण ज्योतिषाऽयं प्राकृतः पुरुष आस्त उपविशति। पल्ययते पर्य्येति क्षेत्रमरण्यं वा तत्र गत्वा कर्म्म कुरुते विपल्येति विपर्य्येति च यथागतं। अत्यन्तव्यतिरिक्तज्योतिष्ट्वप्रसिद्ध-ताप्रदर्शनार्थमनेकविशेषणं। बाह्यानेकज्योतिःप्रदर्शनञ्च। लिङ्गस्याव्यभिचारित्वप्रदर्शनार्थमेवमेवैतद्याज्ञवल्क्य ॥ २ ॥

तथास्तमित आदित्ये याज्ञवल्क्य किं ज्योतिरेवायं पुरुष इति। चन्द्रमा एवास्य ज्योतिरस्तमित आदित्ये चन्द्रमस्य-स्तमितेऽग्निर्ज्योतिः। शान्तेऽग्नौ वाग्ज्योतिर्वागिति शब्दः परिगृह्यते। शब्देन विषयेण श्रोत्रमिन्द्रियं दीप्यते।

---

आ० व्याचष्टे। स्वावयवेति॥ आदित्यापेक्षामन्तरेण चक्षुर्वशादेवायं व्यवहारः सेत्स्यतीत्याशङ्क्याह। चक्षुष इति॥ आसनाद्यन्यतम-व्यापारदेशे व्याप्तिसिद्धेर्वृथा विशेषणबहुत्वमित्याशङ्क्याह। अत्यन्तेति॥ आसनादीनामेकैकव्यभिचारे देहस्यान्यथाभावेऽपि नानुग्राहकं ज्योतिरन्यथा भवति। अतस्तदनुग्राह्यादत्यन्तविल-क्षणमिति विवक्षित्वा व्यापारचतुष्टयमुपदिष्टमित्यर्थः तथापि किमर्थमादित्याद्यनेकपर्यायोपादानं॥ एकेनैव व्याप्तिग्रह-सम्भवादित्याशङ्क्याह। बाह्येति॥ देहेन्द्रियमनोव्यापाररूपं कर्म्म लिङ्गं। तस्य व्यतिरिक्तज्योतिरव्यभिचारसाधनार्थमनेक-पर्यायोपन्यासो बहवो हि दृष्टान्ता व्याप्तिं दृढयन्तीत्यर्थः ॥ २ ॥

इन्द्रियं व्यावर्त्तयति। वागितीति॥ शब्दस्य ज्योतिष्ट्वं स्पष्टयितुं पातनिकां करोति। शब्देनेति॥ तद्दीपनकार्य्यमाह। श्रोत्रेति॥ मनसि विषयाकारे परिणामे सति किं स्यात्तदाह। तेनेति॥

उ॰ कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ३ ॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किं ज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ४ ॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किं ज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योति-

---

भा॰ श्रोत्रेन्द्रिये सम्प्रदीप्ते मनसि विवेक उपजायते। तेन मनसा बाह्यां चेष्टां प्रतिपद्यते। मनसा ह्येव पश्यति मनसा शृणोतीति ब्राह्मणं। कथं पुनर्वाग्ज्योतिरिति। वाचो ज्योतिष्टमप्रसिद्धमित्यत आह। तस्माद्वै सम्राट् यस्माद्वाचा ज्योतिषाऽनुगृहीतोऽयं पुरुषो व्यवहरति। तस्मात्प्रसिद्धमेतद्वाचो ज्योतिष्ट्वं। कथमपि यत्र यस्मिन् काले प्रावृषि प्रायेण मेघान्धकारे सर्व्वज्योतिःप्रत्यस्तमये स्वोऽपि पाणिर्हस्तो न विस्पष्टं निर्ज्ञायते। अथ तस्मिन् काले सर्व्वचेष्टानिरोधे प्राप्ते बाह्यज्योतिषोऽभावाद्यत्र वागुच्चरति श्वा वा

---

आ॰ तत्र प्रमाणमाह। मनसा हीति॥ एवं पातनिकां कृत्वा वाचो ज्योतिष्ट्वसाधनार्थं पृच्छति। कथमिति॥ का पुनरत्रानुपपत्तिस्तत्राह। वाच इति॥ तत्रानन्तरवाक्यमुत्तरत्वेनोत्थाप्य व्याकरोति। अत आहेत्यादिना॥ प्रसिद्धमेवाकाङ्क्षापूर्व्वकं स्फुटयति। कथमित्यादिना॥ उपैवेत्यादि व्याचष्टे। तेन शब्देनेति॥ ज्योतिः

उ॰ षाऽऽस्ते पल्ययते कर्म्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न्न विनिर्ज्ञायते ऽथ यत्र वागुच्चरयत्युपैव तत्र न्येतीत्येवमेवै-तद्याज्ञवल्क्य ॥ ५ ॥

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्त-

---

भा॰ भवति गर्द्दभो वा रौति उपैव तत्र न्येति तेन शब्देन ज्योतिषा श्रोत्रमनसोर्न्नैरन्तर्य्यं भवति । तेन ज्योतिः-कार्य्यत्वं वाक्प्रतिपद्यते। तेन वाचा ज्योतिषा उपन्येत्येव। तत्र च कर्म्म कुरुते विपल्येति । तत्र वाग्ज्योतिषो ग्रहणं गन्धा-दीनामुपलक्षणार्थं। गन्धादिभिरपि हि घ्राणादिष्वनुगृही-तेषु प्रवृत्तिनिवृत्त्यादयो भवन्ति। तेन तैरप्यनुग्रहो भवति कार्य्यकरणसङ्घातस्यैवमेवैतद्याज्ञवल्क्य ॥ ३ ॥ ४ ॥ ५ ॥

शान्तायां पुनर्वाचि गन्धादिष्वपि च शान्तेषु वाह्येष्व-नुग्राहकेषु सर्व्वप्रवृत्तिनिरोधः प्राप्तोऽस्य पुरुषस्यैतदुक्तं भवति। जाग्रद्विषये वहिर्मुखानि करणानि चक्षुरादीन्या-

---

आ॰ कार्य्यवत्त्वं तज्जन्यव्यवहाररूपकार्य्यवत्त्वमिति यावत् । तत्र वाग्ज्योतिष इत्यत्र चतुर्थपर्य्यायः सप्तम्यर्थः ॥ किमिति गन्धादयः शब्देनोपलक्ष्यन्ते तत्राह। गन्धादिभिरिति ॥ प्रश्नान्तरमुत्था-पयति। एवमेवेति ॥ तथापि स्वप्नादौ तस्य प्रवृत्तिदर्शनात्त-त्कारणीभूतं ज्योतिर्वक्तव्यमिति शेषः ॥ ३ ॥ ४ ॥ ५ ॥

कथं पुनरत्र पृच्छ्यते ज्योतिरन्तरमित्याशङ्क्य प्रष्टुरभिप्रायमाह। एतदुक्तं भवतीति। यो व्यवहारः सोऽतिरिक्तज्योतिर्न्निमित्तो यथा आदित्यादिनिमित्तो जाग्रद्व्यवहार इति व्याप्तिमुक्तां निगमयति।

उ॰ मिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं

---

भा॰ दित्यादिज्योतिर्भिरनुगृह्यमाणानि यदा तदा स्फुटतरः संव्यवहारोऽस्य पुरुषस्य भवतीति। एवं तावज्जागरिते स्वावयवसङ्घातव्यतिरिक्तेनैव ज्योतिषा ज्योतिःकार्य्यसिद्धिरस्य पुरुषस्य दृष्टा। तस्मात्ते वयं मन्यामहे सर्व्वबाह्यज्योतिःप्रत्यस्तमयेऽपि स्वप्नसुषुप्तिकाले जागरिते च तादृगवस्थायां स्वावयवसङ्घातव्यतिरिक्तेनैव ज्योतिषा ज्योतिःकार्य्यसिद्धिरस्येति। दृश्यते च स्वप्ने ज्योतिःकार्य्यसिद्धिर्बन्धुसङ्गमनवियोगदर्शनं देशान्तरगमनागमनादिकं सुषुप्ताचोत्थानं सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति। तस्मादस्ति व्यतिरिक्तं किमपि ज्योतिः। किं पुनस्तच्छान्तायां वाचि ज्योतिर्भवतीति। उच्यते। आत्मैवास्य ज्योतिर्भवतीत्यात्मेति। कार्य्यकरणस्वावयवसङ्घातव्यतिरिक्तं कार्य्यकर-

---

आ॰ एवं तावदिति। व्याप्तिज्ञानकार्य्यमनुमानमाह। तस्मादिति। तादृगवस्थायां सर्व्वज्योतिःप्रत्यस्तमयदशायामिति यावत्। विमतो व्यवहारोऽतिरिक्तज्योतिरधीनो व्यवहारत्वात्सम्प्रतिपन्नवदित्यधस्तादेवानुमानमावेदितमिति भावः। हेतोराश्रयासिद्धिमाशङ्क्य परिहरति। दृश्यते चेति। आदिशब्देन देशान्तरादौ कर्म्मकरणं गृह्यते। आश्रयैकदेशासिद्धिमाशङ्क्याह। सुषुप्ताचेति। ध्यानदेवतादशायामिष्टदेवतादर्शनं चकारार्थः। अनुमानफलं निगमयति। तस्मादिति। यथोक्तानुमानाज्ज्योतिः सिद्धं चेत्किं प्रश्नेनेत्याशङ्क्याह। किं पुनरिति। सर्व्वज्योतिरुपरमे दृश्यमानस्य व्यवहारस्य कारणतयानुमानतो ज्योतिर्मात्रसिद्धावपि तद्वि-

उ॰ ज्योतिषाऽऽस्ते पल्ययते कर्म्म कुरुते वि-
पल्येतीति ॥ ६ ॥

---

भा॰ स्वावभासकमादित्यादि बाह्यज्योतिर्वत्स्वयमन्येनानवभास्यमानमभिधीयते। ज्योतिरन्तरस्थं च तत्पारिशेष्यात्कार्य्यकरणव्यतिरिक्तं तदिति तावत्सिद्धं। यच्च कार्य्यकरणव्यतिरिक्तं कार्य्यकरणसङ्घातानुग्राहकं च ज्योतिस्तद्बाह्यं चक्षुरादिकरणैरुपलभ्यमानं दृष्टं। न तु तथा तच्चक्षुरादिभिरुपलभ्यते आदित्यादिज्योतिःषूपरतेषु। कार्य्यन्तु ज्योतिषो दृश्यते। यस्मादात्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म्म कुरुते विपल्येतीति। तस्मान्नूनमन्तःस्थं ज्योतिरित्यवगम्यते।

किञ्चादित्यादिज्योतिर्विलक्षणं तदभौतिकं च। स एव हेतुर्यच्चक्षुराद्यग्राह्यत्वमादित्यादिवत्। न समानजातीयेनैवोपकारदर्शनात्। यदादित्यादिवैलक्षण्यं ज्योतिरन्तर-

---

आ॰ शेषमनुभाषायां प्रश्नोपपत्तिरित्यर्थः। प्रतिवचनमवतार्य्य व्याकरोति। उच्यत इत्यादिना। अवभासकत्वे दृष्टान्तमाह। आदित्यादीति। तस्य व्यतिरिक्तत्वं साधयति। कार्य्येति। अनुग्राहकत्वादादित्यादिवदिति शेषः। तस्यान्तःस्थं पारिशेष्यादित्युक्तमुपपादयति। यच्चेति। उपरतेष्वात्मज्योतिरिति शेषः। तदेव तर्हि माभूदिति चेन्नेत्याह। कार्य्यन्त्विति। स्वप्नादौ दृश्यमानं व्यवहारं हेतुत्वेन पक्षितमाह। यस्मादित्यादिना। विमतमन्तःस्थमतीन्द्रियत्वादादित्यवदिति व्यतिरेकीत्यर्थः।

व्यतिरेकान्तरमाह। किञ्चेति। सम्प्रति लोकायतश्चोदयति। नेत्यादिना। तत्र नञर्थमाचष्टे। यदिति। उक्तं हेतुं प्रत्य-

भा° सिद्धमित्येतदसत्। कस्मादुपक्रियमाणसमानजातीयेनैवा-
दित्यादिज्योतिषा कार्य्यकरणसङ्घातस्य भौतिकस्य भौति-
केनैवोपकारः क्रियमाणो दृश्यते। यथा दृष्टञ्चेत्तदनुमेयं।
यदि नाम कार्य्यकारणादर्थान्तरं तदुपकारकं आदि-
त्यादिवज्ज्योतिस्तथापि कार्य्यकरणसङ्घातसजातीयमेवा-
नुमेयं कार्य्यकरणसङ्घातोपकारकत्वादादित्यादिज्योति-
र्वत्। यत्पुनरन्तःस्थत्वादप्रत्यक्षत्वाच्च वैलक्षण्यमुच्यते
तच्चक्षुरादिज्योतिर्भिरनैकान्तिकं। यतोऽप्रत्यक्षाण्यन्तः-
स्थानि चक्षुरादिज्योतींषि। तस्मात्तव मनोरथमात्रं विल-
क्षणमात्मज्योतिः सिद्धमिति। कार्य्यकरणसङ्घातभाव-
भावित्वाच्च सङ्घातधर्म्मत्वमनुमीयते ज्योतिषः। सामान्यतो
दृष्टस्य चानुमानस्य व्यभिचारित्वादप्रामाण्यं। सामा-
न्यतो दृष्टबलेन हि भवानादित्यादिवद्व्यतिरिक्तं ज्योतिः

---

आ° पूर्व्वोक्तं विभजते। कस्मादित्यादिना॥ यद्यपि देहादेरुपकार्य्यादुप-
कारकमादित्यादि सजातीयं दृष्टं तथापि नात्मज्योतिरुपकार्य्यस-
जातीयमनुमेयमित्याशङ्क्याह। यथा दृष्टञ्चेति॥ तदेव स्पष्टयति।
यदि नामेति॥ विमतमन्तःस्थमतिरिक्तञ्चातीन्द्रियत्वादादित्यव-
दिति परोक्तं व्यतिरेक्यनुमानमनूद्य दूषयति। यत्पुनरित्यादिना॥
अनैकान्तिकत्वं व्यनक्ति। यत इति॥ अन्तःस्थान्यव्यतिरिक्तानि च
सङ्घातादिति द्रष्टव्यं॥ व्यभिचारफलमाह। तस्मादिति॥ विल-
क्षणमन्तःस्थञ्चेति मन्तव्यं॥ किञ्च चैतन्यं शरीरधर्म्मस्तद्भावभा-
वित्वाद्रूपादिवदित्याह। कार्य्यकरणेति॥ विमतं सङ्घाताद्भिन्नं
तद्भासकत्वादादित्यवदित्यनुमानान्न सङ्घातधर्म्मत्वं चैतन्यस्येत्या-
शङ्क्याह। सामान्यतो दृष्टस्येति॥ लोकायतस्य देहावभासक-
मपि चक्षुस्ततो न भिद्यते। तथा च व्यभिचारान्न तदनुमान-

भा॰ साधयति कार्य्यकरणेभ्यः। न च प्रत्यक्षमनुमानेन बाधितुं शक्यते। अयमेव तु कार्य्यकरणसङ्घातः प्रत्यक्षं पश्यति शृणोति मनुते विजानाति च। यदि नाम ज्योतिरन्तरमस्योपकारकं स्यादादित्यादिवत्त्र तदात्मा स्याज्ज्योतिरन्तरमादित्यादिवदेव। य एव तु प्रत्यक्षं दर्शनादिक्रियां करोति स एवात्मा स्यात्कार्य्यकरणसङ्घातो नान्यः। प्रत्यक्षविरोधेऽनुमानस्याप्रामाण्यात्। नन्वयमेव चेद्दर्शनादिक्रियाकर्त्तात्मा सङ्घातः कथमविकलस्यैवास्य दर्शनादिक्रियाकर्त्तृत्वं कदाचिद्भवति कदाचिन्नेति।

नैष दोषोऽदृष्टत्वात्। न हि दृष्टेऽनुपपन्नं नाम। न हि खद्योतप्रकाशाप्रकाशकत्वेन दृश्यमाने कारणान्तरमनुमेयं। अनुमेयत्वे च केनचित्सामान्यात्सर्व्वं सर्व्वत्रानुमेयं स्यात्।

---

आ॰ प्रामाण्यमित्यर्थः॥ मनुष्योऽहं जानामीति प्रत्यक्षविरोधाच्च तदनुमानममानमित्याह। सामान्यतो दृष्टेति॥ ननु तेन प्रत्यक्षमुत्सार्य्यतामिति चेन्नेत्याह। न चेति॥ इतश्च देहस्यैव चैतन्यमित्याह॥ अयमेवेति॥ ज्योतिषो देहव्यतिरेकमङ्गीकृत्यापि दूषयति। यदि नामेति॥ विमतं ज्योतिरनात्मा देहोपकारत्वादादित्यवदित्यर्थः॥ आत्मत्वं तर्हि कस्येत्याशङ्क्याह। य एव त्विति॥ अनुमानादात्मनो देहव्यतिरिक्तत्वमुक्तमित्याशङ्क्याह। प्रत्यक्षेति। नान्य आत्मेति पूर्व्वेण सम्बन्धः॥ देहस्यात्मत्वे कादाचित्कं द्रष्टृत्वश्रोतृत्वाद्ययुक्तमिति शङ्कते। नन्विति॥ स्वभाववादी परिहरति। नैष दोष इति॥ कादाचित्के दर्शनादर्शने सम्भवतो देहस्वाभाव्यादित्यत्र दृष्टान्तमाह। न हीति॥

विमतं कारणान्तरपूर्व्वकं कादाचित्कत्वाद्घटवदित्यनुमानदृष्टान्ते भविष्यतीत्याशङ्क्याभिवक्ष्य इति वदुष्णमुदकमित्यपि अग्न्यादिनानुमीयेतेत्यतिप्रसङ्गमाह। अनुमेयत्वे चेति॥ ननु यद्द-

भा० तथानिष्टं । न च पदार्थस्वभावो नास्ति । न ह्यग्नेरौष्ण्यस्वा-
भाव्यमन्यनिमित्तमुदकस्य वा शैत्यं प्राणिधर्माधर्माद्यपे-
क्षमिति चेत् । धर्माधर्मादेर्निमित्तान्तरापेक्षस्वभावप्रसङ्गो
ऽस्तीति चेन्न । तदनवस्थाप्रसङ्गः । स चानिष्टः । न स्वप्न-
स्मृत्योर्दृष्टस्यैव दर्शनात् । यदुक्तं स्वभाववादिना देहस्यैव
दर्शनादिक्रिया न व्यतिरिक्तस्येति तन्न । यदि हि देहस्यैव
दर्शनक्रिया स्वप्ने दृष्टस्यैव दर्शनं न स्यात् । अन्धः स्वप्नं
पश्यन्दृष्टपूर्व्वमेव पश्यति । न शाकद्वीपादिगतमदृष्टपूर्व्वं ।
ततश्चैतत्सिद्धं भवति । यः स्वप्ने पश्यति दृष्टपूर्व्वं वस्तु स
एव पूर्व्वं विद्यमाने चक्षुष्यद्राक्षीन्न देह इति । देहश्चेद्द्रष्टा
येनाद्राक्षीत्तस्मिन्नुद्धृते चक्षुषि । स्वप्ने तदेव दृष्टपूर्व्वं न

---

आ० वति तन्निमित्तमेव न स्वभावात्कश्चित्किञ्चिदस्माकं प्रसिद्धं तत्राह ।
न चेति । अग्नेरौष्ण्यमुदकस्य शैत्यमित्याद्यपि न निर्निमित्तं
किन्तु प्राण्यदृष्टापेक्षमिति शङ्कते । प्राणीति । आदिशब्देनेश्वरादि
गृह्यते । गूढाभिसन्धिः स्वभाववाद्याह । धर्मेति । प्रसङ्गस्ये-
ष्टत्वं शङ्कित्वा स्वाभिप्रायमाह । अस्तीत्यादिना । सिद्धान्ती
स्वप्नादिसिद्ध्यनुपपत्त्या देहातिरिक्तमात्मानमभ्युपगमयन्नुत्तर-
माह । नेत्यादिना । तत्र नञर्थं विभजते । यदुक्तमिति । स्वप्ने
दृष्टस्यैव दर्शनादिति हेतुभागं व्यतिरेकद्वारा विवृणोति । यदि
हीति । आद्यदेहस्य द्रष्टुः स्वप्ने नष्टत्वादतीन्द्रियस्य संस्कारस्य
चानिष्टत्वादन्यदृष्टे चान्यस्य स्वप्नायोगान्न स्वप्ने दृष्टस्यैव दर्शनं
देहात्मवादे सम्भवतीत्यर्थः । मा भूद्दृष्टस्यैव स्वप्ने दृष्टिरन्यस्यापि
स्वप्ने दृष्टेरित्याशङ्क्याह । अन्ध इति । अपिशब्दोऽध्याहर्त्तव्यः ।
पूर्व्वदृष्टस्यैव स्वप्ने दृष्टत्वेऽपि कुतो देहव्यतिरिक्तो द्रष्टा सिध्यती-
त्याशङ्क्याह । ततश्चेति । अथोभयत्र देहस्यैव द्रष्टृत्वे का हानिरिति
चेत्तत्राह । देहश्चेदिति । तत्र सहकारिचक्षुरभावाच्चक्षु-

भा॰ पश्येत्। अस्ति च लोके प्रसिद्धिः। पूर्वं दृष्टं मया हिमवतः शृङ्गमद्याहं स्वप्नेऽद्राक्षमित्युद्धृतचक्षुषामन्धानामपि। तस्मादनुद्धृतेऽपि चक्षुषि यः स्वप्नदृक् स एव द्रष्टा। न देह इत्यवगम्यते। तथा स्मृतौ द्रष्टृस्मर्त्रोरेकत्वे सति य एव द्रष्टा स एव स्मर्त्ता। यदा चैवं तदा निमीलिताक्षोऽपि स्मरन्दृष्टपूर्वं यद्रूपं तद्दृष्टवदेव पश्यतीति। तस्माद्यन्निमीलितं तन्न द्रष्टृ यन्निमीलिते चक्षुषि स्मरद्रूपं पश्यति तदेवानिमीलितेऽपि चक्षुषि द्रष्टासीदित्यवगम्यते। मृते च देहेऽविकलस्यैव च रूपादिदर्शनाभावात्॥

देहस्यैव द्रष्टृत्वे मृतेऽपि दर्शनादिक्रिया स्यात्। तस्माद्यदपाये देहे दर्शनं न भवति। यद्भावे च भवति। तद्दर्शनादिक्रियाकर्तृ न देह इत्यवगम्यते। चक्षुरादीन्येव दर्शनादि

---

आ॰ रन्तरस्यैवोत्पत्तौ देहान्तरस्यापि समुत्पत्तिसम्भवादन्यदृष्टेऽन्यस्य न स्वप्नः स्यादित्यर्थः॥ मा भूत्पूर्वदृष्टे स्वप्नो देहत्वभावादित्याशङ्क्याह। अस्ति चेति॥ कथं ते जात्यन्धानामीदृग्दर्शनमिति चेज्जन्मान्तरानुभववशादिति ब्रूमः॥ अन्धस्य देहस्याद्रष्टृत्वेऽपि चक्षुष्मतस्तस्य स्यादेव द्रष्टृत्वमित्याशङ्क्याह। तस्मादिति॥ स्वप्ने दृष्टस्यैव दर्शनादिति हेतुं व्याख्याय स्मृतौ दृष्टस्यैव दर्शनादिति हेतुं व्याचष्टे। तथेति॥ द्रष्टृस्मर्त्रोरेकत्वेऽपि कुतो देहातिरिक्तो द्रष्टेत्याशङ्क्याह। यदा चेति॥ देहातिरिक्तस्य स्मर्तृत्वेऽपि कुतो द्रष्टृत्वमित्याशङ्क्याह। तस्मादिति॥ द्रष्टृस्मर्त्रोरेकत्वस्योक्तत्वाद्देहातिरिक्तः स्मर्ता चेद्द्रष्टापि तथा सिध्यतीति भावः॥ देहस्याद्रष्टृत्वे हेत्वन्तरमाह। मृते चेति॥ न तस्य द्रष्टृतेति शेषः॥

तदेवोपपादयति। देहस्यैवेति॥ देहव्यतिरिक्तमात्मानमुपपादितमुपसंहरति। तस्मादिति॥ चैतन्यं यत्तदोरर्थः॥ माभूद्देहस्यात्मत्वं इन्द्रियाणां तु स्यादिति शङ्कते। चक्षुरादीनीति॥

भा॰ क्रियाकर्तृणीति चेत्। न यदहमद्राक्षं तत्स्पृशामीति। भिन्नकर्तृकत्वे प्रतिसन्धानानुपपत्तेः। मनस्तर्हीति चेत्। न मनसोऽपि विषयत्वाद्रूपादिवद्द्रष्टृत्वाद्यनुपपत्तिः। तस्मादन्तःस्थं व्यतिरिक्तमादित्यादिवदिति सिद्धं। यदुक्तं कार्य्यकरणसङ्घातसमानजातीयमेव ज्योतिरन्तरमनुमेयं। आदित्यादिभिस्तत्समानजातीयैरेवोपक्रियमाणत्वादिति। तदसत्। उपकार्य्योपकारकभावस्यानियमदर्शनात्। कथं पार्थिवैरिन्धनैः पार्थिवत्वसमानजातीयैस्तृणोलपादिभिरग्नेः प्रज्वलनोपकारः क्रियमाणो दृश्यते। न च तावता तत्समानजातीयैरेवाग्नेः प्रज्वलनोपकारः सर्व्वत्रानुमेयः स्यात्। येनोदकेनापि प्रज्वलनोपकारो भिन्नजातीयेन वैद्युतस्याग्नेर्ज-

---

आ॰ अन्यदृष्टस्येतरेणाप्रत्यभिज्ञानादिति न्यायेन परिहरति। नेत्यादिना॥ आत्मप्रतिपत्तिहेतूनां मनसि सम्भवादिति न्यायेन शङ्कते। मन इति॥ ज्ञातुर्ज्ञानसाधनोपपत्तेः सञ्ज्ञाभेदमात्रमिति न्यायेन परिहरति। न मनसोऽपीति॥ देहादेरनात्मत्वे फलितमाह। तस्मादिति॥ आत्मज्योतिःसङ्घातादिति शेषः॥ परोक्तमनुवदति। यदुक्तमिति॥ अनुग्राह्यसजातीयमनुग्राहकमित्यत्र हेतुमाह। आदित्यादिभिरिति॥ उपकार्य्योपकारकत्वस्य साजात्यनियमं दूषयति। तदसदिति॥ अनियमदर्शनमाकाङ्क्षापूर्व्वकमुदाहरति। कथं पार्थिवैरिति॥ उभयं वाक्यं। पार्थिवस्याग्निं प्रत्युपकारकत्वनियमं वारयति। न चेति॥ तावता पार्थिवेनाग्नेरुपक्रियमाणत्वदर्शनेनेति यावत्। तत्समानजातीयैरिति तच्छब्दः पार्थिवविषयः॥ तत्र हेतुमाह। येनेति॥ दर्शनफलं निगमयति। तस्मादिति॥ उपकार्य्योपकारकभावे साजात्यानियमवदुपकार्य्योपकारकभावेऽपि वैजात्यनियमो नास्तीत्यर्थः। तयोरुपकार्य्योपकारकत्वे साजात्यनियमाभावं उदाहार-

भा॰ ठरस्य च क्रियमाणो दृश्यते । तस्मादुपकार्य्योपकारकभावे समानजातीयासमानजातीयनियमो नास्ति । कदाचित्समानजातीया मनुष्या मनुष्यैरेवोपक्रियन्ते । कदाचित्स्थावरपश्वादिभिश्च भिन्नजातीयैः । तस्मादहेतुः । कार्य्यकरणसङ्घातसमानजातीयैरेवादित्यादिज्योतिर्भिरुपक्रियमाणत्वादिति ॥

यत्पुनरात्थ चक्षुरादिभिरादित्यादिज्योतिर्वद्दृश्यत्वादिति । अयं हेतुर्ज्योतिरन्तरस्यान्तःस्थत्वं वैलक्षण्यञ्च न साधयति । चक्षुरादिभिरनैकान्तिकत्वादिति । तदसत् । चक्षुरादिकरणेभ्योऽन्यत्वे सतीति हेतोर्विशेषणत्वोपपत्तेः । कार्य्यकरणसङ्घातधर्म्मत्वं ज्योतिष इति यदुक्तं तन्न । अनुमानविरोधात् । आदित्यादिज्योतिर्वत्कार्य्यकरणसङ्घातादर्थान्तरं ज्योतिरिति ह्यनुमानमुक्तं तेन विरुध्यते । इयं प्रतिज्ञा कार्य्यकरणसङ्घातधर्म्मत्वं ज्योतिष इति । तद्भाव-

---

आ॰ न्तरेण दर्शयति । कदाचिदिति ॥ अस्मत्स्वामिना वामेतरपशान्युपजम्भादुपकार्य्योपकारकत्वे वैजात्यनियमो नास्तीति मत्वोपसंहरति । तस्मादिति ॥ उक्तानियमदर्शनं तच्छब्दार्थः । अहेतुरात्मज्योतिषः सङ्घातेन समानजातीयतायामिति शेषः । अनुग्राहकमनुग्राह्यसजातीयमनुग्राहकत्वादादित्यवदित्ययुक्तं ॥

सम्प्रत्यतीन्द्रियत्वहेतोरनैकान्त्यं परोक्तमनुभाष्य दूषयति । यत्पुनरित्यादिना ॥ विमतं ज्योतिःसङ्घातधर्म्मस्तद्भावभावित्वाद्रूपादिवदित्युक्तमनूद्य निराकरोति । कार्य्येति ॥ अनुमानविरोधमेव साधयति । आदित्यादीति ॥ कालात्ययापदेशमुक्त्वा हेत्वसिद्धिं दोषान्तरमाह । तद्भावेति ॥ अदर्शनादिति छेदः । यत्पुनर्विशेषे ऽनुगमाभावः सामान्ये सिद्धसाध्यतेत्यनुमानदूषण-

भा॰ भावित्वं त्वसिद्धं । मृते देहे ज्योतिषोऽदर्शनात् । सामान्यतो
दृष्टस्यानुमानस्याप्रामाण्ये सति पानभोजनादिसर्व्वव्यव-
हारलोपप्रसङ्गः । स चानिष्टः । पानभोजनादिषु हि क्षुत्पि-
पासादिनिवृत्तिमुपलब्धवतस्तत्सामान्यात्पानभोजनाद्युपा-
दानं दृश्यमानं लोके न प्राप्नोति । दृश्यन्ते ह्युपलब्ध-
पानभोजनाः सामान्यतः पुनः पानभोजनान्तरैः क्षुत्पि-
पासादिनिवृत्तिमनुमिन्वन्तस्तादर्थ्ये न प्रवर्त्तमानाः । यत्तु-
क्तमयमेव तु देहो दर्शनादिक्रियाकर्त्तेति तत्प्रथममेव
परिहृतं । स्वप्नस्थयोर्देहादर्थान्तरभूतो द्रष्टेति । अनेनैव
ज्योतिरन्तरस्यात्मत्वमपि प्रत्युक्तं । यत्पुनः खद्योतादेः
कादाचित्कं प्रकाशाप्रकाशकत्वं तद्वत् । पक्षाद्यवयव-
संयोगविभागनिमित्तत्वात्प्रकाशाप्रकाशकत्वस्य । यत्पुनरुक्तं
धर्म्माधर्म्मयोरवश्यं फलदातृत्वस्वभावोऽभ्युपगन्तव्य इति ।

---

आ॰ मभिप्रेत्य सामान्यतो दृष्टस्य चेत्याद्युक्तं तद्दूषयति । सामान्यतो
दृष्टस्येति ॥ विशेषतोऽदृष्टस्येत्यपि द्रष्टव्यं । किमित्यनुमानाप्रामाण्ये
सर्व्वव्यवहारहानिरित्याशङ्क्याह । पानेति ॥ तत्सामान्यात्पानत्व-
भोजनत्वादिसादृश्यादिति यावत् । पानभोजनाद्युपादानं दृश्य-
मानमित्युक्तं विशदयति । दृश्यन्ते हीति ॥ तादर्थ्येन क्षुत्पिपासा-
दिनिवृत्त्युपायभोजनपानाद्यर्थत्वेनेति यावत् ॥ देहस्यैव द्रष्टृत्व-
मित्युक्तमनूद्य पूर्व्वोक्तं परिहारं स्मारयति । यदुक्तमित्यादिना ॥
ज्योतिरन्तरमादित्यादिवदनात्मेत्युक्तं प्रत्याह । अनेनेति ॥
स्वप्नादेर्द्रष्टृत्वनिराकरणेनेति यावत् ॥ देहस्य कादाचित्कं दर्श-
नादिमत्त्वं स्वाभाविकमित्यत्र परोक्तं दृष्टान्तमनुभाष्य निराचष्टे ।
यत्पुनरित्यादिना ॥ सिद्धान्तिनापि स्वभाववादस्य क्वचिदिष्ट-
त्वमुपदिष्टमनूद्य दूषयति । यत्पुनरिति ॥ धर्म्मादेर्यदि हेत्वन्त-
राधीनं फलदातृत्वं तदा हेत्वन्तरस्यापि हेत्वन्तराधीनफलदातृ-

उ॰ कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ।

---

भा॰ तदभ्युपगमे भवतः सिद्धान्तहानात् । एतेनानवस्थादोषः प्रत्युक्तः । तस्मादस्ति व्यतिरिक्तं स्वान्तःस्थं ज्योतिरात्मेति ॥ ६ ॥

यद्यपि व्यतिरिक्तत्वादि सिद्धं तथापि समानजातीयानुग्राहकत्वदर्शननिमित्तभ्रान्त्या करणानामेवान्यतमो व्यतिरिक्तो वेत्यविवेकतः पृच्छति कतम इति । न्यायसूक्ष्मताया दुर्विज्ञेयत्वादुपपद्यते भ्रान्तिः । अथवा शरीरव्यतिरिक्ते सिद्धेऽपि करणानि सर्व्वाणि विज्ञानवन्ति च विवेकत आत्मनोऽनुपलब्धत्वात् । अतोऽहं पृच्छामि कतम आत्मेति । कतमोऽसौ देहेन्द्रियप्राणमनःसु यस्त्वयोक्त आत्मा । येन ज्योतिषाऽऽस्त इत्युक्तः । अथवा योऽयमात्मा त्वयाभिप्रेतो विज्ञानमयः । सर्व्वे इमे प्राणा विज्ञानमया

---

आ॰ त्वमित्यनवस्थोक्तं प्रत्याह । एतेनेति ॥ सिद्धान्तविरोधप्रसङ्गेनेति यावत् ॥ नैरात्म्यमतासम्भवे स्वपक्षमुपसंहरति । तस्मादिति ॥ ६ ॥

न त्वात्मज्योतिःसङ्घाताद्व्यतिरिक्तमन्तःस्थमेति साधितं । तथा च कथं कतम आत्मेति पृच्छ्यते तत्राह । यद्यपीति ॥ अनुग्राह्येण देहादिना समानजातीयस्यादित्यादेरनुग्राहकत्वदर्शनान्निमित्तादनुग्राहकत्वाविशेषादात्मज्योतिरपि समानजातीयं देहादिनेति भ्रान्तिर्भवति तयेति यावत् ॥ अविवेकिनो निष्कृष्टस्वभावादित्यर्थः ॥ व्यतिरेकसाधकस्य न्यायस्य दर्शितत्वात्कुतो भ्रान्तिरित्याशङ्क्याह । न्यायेति ॥ भ्रान्तिनिमित्ताविवेककृतं प्रश्नमुक्त्वा प्रकारान्तरेण प्रश्नमुत्थापयति । अथवेति ॥ प्रश्नाक्षराणि व्याचष्टे । कतमोऽसाविति ॥ ज्योतिर्निमित्तो व्यवहारो मयोक्तो

भा॰ इवेषु प्राणेषु कतमः । यथा समुदितेषु आत्मणेषु सर्व्वे इमे तेजस्विनः कतम एतेषु बलवद्विदिति । पूर्व्वस्मिन्व्याख्याने कतम आत्मेत्येतावदेव प्रश्नवाक्यं । योऽयं विज्ञानमय इति प्रतिवचनं । द्वितीये तु व्याख्याने प्राणेष्वित्येवमन्तं प्रश्नवाक्यं । अथवा सर्व्वमेव प्रश्नवाक्यं विज्ञानमयो हृद्यन्तर्ज्योतिःपुरुषः कतम इत्येतदन्तं । योऽयं विज्ञानमय इत्येतस्य शब्दस्य निर्धारितार्थविशेषविषयत्वं । कतम आत्मेतीति शब्दस्य प्रश्नवाक्यपरिसमाप्त्यर्थत्वं व्यवहित सम्बन्धमन्तरेण युक्तमिति कृत्वा कतम आत्मेत्येवमन्तमेव प्रश्नवाक्यं । योऽयमित्यादिपरं सर्व्वमेव प्रतिवचनमिति निश्चीयते । योऽयमित्यात्मनः प्रत्यक्षत्वान्निर्द्देशः । विज्ञानमयो विज्ञानप्रायो बुद्धिविज्ञानोपाधिसम्पर्काविवेकाद्विज्ञानमय इत्युच्यते ॥

---

आ॰ न त्वात्मेत्याशङ्क्याह । येनेति ॥ आत्मनैवायं ज्योतिषेत्युक्तत्वादासनादिनिमित्तं ज्योतिरात्मेत्यर्थः । प्रकारान्तरेण प्रश्नं व्याकरोति ॥ अथवेति । सप्तम्यर्थं कथयति । सर्व्व इति ॥ योऽयं त्वयाभिप्रेतो विज्ञानमयः स प्राणेषु मध्ये कतमः स्यात्सेऽपि हि विज्ञानमया इव भान्तीति योजना । उक्तमर्थं दृष्टान्तेन बुद्धावारोपयति । यथेति ॥ व्याख्यानयोरवान्तरविभागमाह । पूर्व्वस्मिन्नित्यादिना ॥ इदीत्यादिप्रतिवचनमिति शेषः ॥ द्वितीयतृतीयपक्षयोररुचिं सूचयन्नाद्यं पक्षमङ्गीकरोति । योऽयमिति ॥ यस्त्वया पृष्टः सोऽयमित्यात्मनश्चिद्रूपत्वेन प्रत्यक्षत्वादयमिति निर्द्देश इति पदद्वयस्यार्थः ॥ देहव्यवच्छेदार्थं विशिनष्टि । विज्ञानमय इति ॥ विज्ञानशब्दार्थमाचक्षाणस्तत्प्रायत्वं प्रकटयति । बुद्धीति ॥ बुद्धिरेव विज्ञानं विज्ञायतेऽनेनेति व्युत्पत्तेस्तेनोपाधिना सम्पर्क एवाविवेकस्तस्मादिति यावत् ॥

भा॰ बुद्धिविज्ञानसंयुक्त एव हि यस्मादुपलभ्यते राजेव चन्द्रादित्यसंयुक्तः। बुद्धिर्हि सर्व्वार्थकरणं। तमसीव प्रदीपः पुरोऽवस्थितः। मनसा ह्येव पश्यति मनसा शृणोतीत्युक्तं। बुद्धिविज्ञानालोकविशिष्टमेवं हि सर्व्वं विषयजातमुपलभ्यते पुरोऽवस्थितप्रदीपालोकविशिष्टमिव तमसि। द्वारमात्राणि त्वन्यानि करणानि बुद्धेः। तस्मात्तेनैव विशेष्यते विज्ञानमय इति। येषां परमात्मविज्ञप्तिविकार इति व्याख्यानं तेषां विज्ञानमयो मनोमय इत्यादौ विज्ञानमयस्य शब्दस्यान्यार्थदर्शनादश्रौतार्थतावसीयते। सन्दिग्धश्च पदार्थोऽन्यत्र निश्चितप्रयोगदर्शनान्निर्द्धारयितुं शक्यो वाक्यशेषान्निश्चितन्यायबलाद्वा सा धीरिति

---

आ॰ तत्सम्पर्के प्रमाणमाह। बुद्धिविज्ञानेति॥ तस्माद्विज्ञानमय इति शेषः॥ ननु चक्षुर्मयः श्रोत्रमय इत्यादि हित्वा विज्ञानमय इत्येव कस्मादुपदिश्यते तत्राह। बुद्धिर्हीति॥ तस्याः साधारणकरणत्वे प्रमाणमाह। मनसा हीति॥ मनसः सर्व्वार्थत्वं समर्थ्यते। बुद्धीति॥ किमर्थानि तर्हि चक्षुरादीनि करणानीत्याशङ्क्याह। द्वारमात्राणीति॥ बुद्धेः सति प्राधान्ये फलितमाह। तस्मादिति॥ विज्ञानं परम्ब्रह्म तत्प्रकृतिको जीवो विज्ञानमय इति भर्तृप्रपञ्चैरुक्तमनुवदति। येषामिति॥ विज्ञानमयादिशब्दे मयटो न विकारार्थतेति तैरेवोच्यते। तत्र मनः समभिव्याहाराद्विज्ञानं बुद्धिर्न चात्मा तद्विकारस्तस्मादस्मिन्प्रयोगे मयटो विकारार्थत्वं वदतां स्वोक्तिविरोधः स्यादिति दूषयति। तेषामिति॥ कथं विज्ञानमयपदार्थनिर्णयार्थं प्रयोगान्तरमनुस्त्रीयते तत्राह। सन्दिग्धश्चेति॥ यथा पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोतीति पुरोडाशमात्रचतुर्द्धाकरणवाक्यमेकार्थं सम्बन्धिना शाखान्तरीयेणाग्नेयं चतुर्द्धा करोतीत्यनेन विशेषविषयतया

भा॰ चोत्तरत्र पाठात् हृद्यन्तरिति वचनाद्युक्तं विज्ञानप्राय-
त्वमेव। प्राणेष्विति व्यतिरेकप्रदर्शनार्था सप्तमी। यथा
वृक्षेषु पाषाण इति सामीप्यलक्षणा। प्राणेषु हि व्यति-
रेकाव्यतिरेकता सन्दिह्यत आत्मनः। प्राणेषु प्राणेभ्यो
व्यतिरिक्त इत्यर्थः। यो हि येषु भवति स तद्व्यतिरिक्तो
भवत्येव। यथा पाषाणेषु वृक्षः। हृदि तर्ह्येतस्मात्प्राणेषु
प्राणजातीयैव बुद्धिः स्यादित्यत आह। हृद्यन्तरिति।
हृच्छब्देन पुण्डरीकाकारो मांसपिण्डस्तात्स्थ्याद्बुद्धिर्हृ-
त्तस्यां हृदि बुद्धौ। अन्तरिति बुद्धिवृत्तिव्यतिरेकप्रद-
र्शनार्थं। ज्योतिरवभासात्मकत्वादात्मोच्यते॥

तेन ह्यवभासकेनात्मना ज्योतिषाऽऽस्ते पल्ययते कर्म
कुरुते चेतनावानिव ह्ययं कार्यकरणपिण्डो यथादित्य-

---

आ॰ निश्चितार्थेनाग्नेय एव पुरोडाशे व्यवस्थाप्यते। यथा चोक्ताः शर्करा
उपदधातीत्यत्र केनोक्ता इत्यपेक्षायां तेजो वै घृतमिति वाक्यशे-
षान्निर्णयस्तथेहापीत्यर्थः॥ आत्मविकारत्वे मोक्षानुपपत्त्याद्यबा-
धितन्यायाद्वा विज्ञानमयपदार्थनिश्चय इत्याह। निश्चितेति॥
यदुक्तं निर्णयो वाक्यशेषादिति तदेव व्यनक्ति। साधीरिति चेति॥
आधाराद्यर्था सप्तमी दृष्टा सा कथं व्यतिरेकप्रदर्शनार्थेत्याश-
ङ्क्याह। यथेति॥ भवतु नाम सामीप्यलक्षणा सप्तमी तथापि
कथं व्यतिरेकप्रदर्शनमित्याशङ्क्याह। प्राणेषु हीति॥ फलितं
सप्तम्यर्थमभिनयति। प्राणेभ्य इति॥ तेषु समीपस्थोऽपि कथं तेभ्यो
व्यतिरिच्यते तत्राह। यो हीति॥ विशेषणान्तरमादाय व्याव-
र्त्यमाशङ्क्यानुक्त्वा पुनरवतार्य व्याकरोति। हृदीत्यादिना॥ विशेष-
णान्तरस्य तात्पर्यमाह। अन्तरितीति॥

ज्योतिःशब्दार्थमाह। ज्योतिरिति॥ ज्योतिष्ट्वं स्पष्टयति।
तेनेति॥ आत्मज्योतिषा आसनस्य कार्यकरणसङ्घातस्य व्यवहार-

भा॰ प्रकाशको घटो यथा वा मरकतादिर्मणिः क्षीरादिद्रव्ये प्रक्षिप्तः । परीक्षणायात्मच्छायमेव तत्क्षीरादिद्रव्यं करोति । तादृगेतदात्मज्योतिर्बुद्धेरपि हृदयात्सूक्ष्मत्वा-द्धृदयान्तःस्थमपि हृदयादिकं कार्य्यकरणसङ्घातं चैकीकृत्या-त्मज्योतिश्छायं करोति । पारम्पर्य्येण सूक्ष्मस्थूलतारतम्या-त्सर्व्वान्तरतमत्वात् । बुद्धिस्तावत्स्वच्छत्वादानन्तर्य्याच्चात्मचै-तन्यज्योतिःप्रतिच्छाया भवति । तेन हि विवेकिनामपि तत्रात्माभिमानबुद्धिः प्रथमा । ततोऽप्यानन्तर्य्यान्मनसि चैतन्यावभासता । बुद्धिसम्पर्कात् । तत इन्द्रियेषु मनः संयो-गात् । ततोऽनन्तरं शरीरेन्द्रियसम्पर्कात् । एवं पारम्पर्य्येण कृत्स्नं कार्य्यकरणसङ्घातमात्मा चैतन्यस्वरूपज्योतिषाव-भासयति । तेन हि सर्व्वस्य लोकस्य कार्य्यकरणसङ्घाते

---

आ॰ उक्तेऽर्थे दृष्टान्तमाह । यथेति । चेतनावानिवेत्युक्तं दृष्टान्तेनोप-पादयति । यथावेति । हृदयं बुद्धिस्ततोऽपि सूक्ष्मत्वादात्मज्यो-तिस्तदन्तःस्थमपि हृदयादिकं सङ्घातं च सर्व्वमेकीकृत्य स्वच्छायं करोतीति कृत्वा यथोक्तमविशादृश्यमुचितमिति दार्ष्टान्तिके योजना । कथमिदमात्मज्योतिः सर्व्वमात्मच्छायं करोति तत्राह । पारम्पर्य्येणेति । विषयादिप्रत्यगात्मा तेषु उत्तरोत्तरं सूक्ष्मता-रतम्यात्तेष्वेवात्मादिविषयान्तेषु स्थूलतारतम्याच्च प्रतीचः सर्व्व-स्मादन्तरतमत्वात्तत्र तत्र स्वाकारहेतुत्वमस्तीत्यर्थः । बुद्धेरात्म-च्छायत्वं समर्थयते । बुद्धिस्तावदिति । लौकिकपरीक्षकाणां बुद्धावात्माभिमानभ्रान्तिमुक्तेऽर्थे प्रमाणयति । तेन हीति । बुद्धेः पश्चान्मनस्यपि चिच्छायतेत्यत्र हेतुमाह । बुद्धीति । आत्मनः सर्व्वावभासकत्वमुक्तमुपसंहरति । एवमिति । आत्मनः सर्व्वा-वभासकत्वे चिह्नमिति कस्यचित्कापि देवात्मधीरित्याशङ्क्याह । तेन हीति । बुद्ध्यादेर्वक्ष्यमाणमेवात्मच्छायत्वं तच्छब्दार्थः । आत्मज्योतिष-

भा० स्वद्वृत्तिषु चानियतात्माभिमानबुद्धिर्यथा विवेकं जायः तथा च भगवतोक्तं गीतासु। यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत। यदादित्यगतं तेजो जगद्भासयतेऽखिलमित्यादि च। नित्यानित्यानाञ्चेतनाचेतनानामिति च। काठके। तमेव भान्तमनुभाति सर्व्वं। तस्य भासा सर्व्वमिदं विभातीति च। येन सूर्य्यस्तपति तेजसेद्ध इति च मन्त्रवर्णः। तेनायं हृद्यन्तर्ज्योतिःपुरुष आकाशवत्सर्व्वगतत्वात्पूर्ण इति पुरुषः॥

निरतिशयश्चास्य स्वयं ज्योतिष्ट्वं सर्व्वावभासात्मकत्वात्स्वयमन्यानवभास्यत्वाच्च। स एष पुरुषः स्वयमेव ज्योतिःस्वभावो यं त्वं पृच्छसि कतम आत्मेति। बाह्यानां ज्योतिषां सर्व्वकरणानुग्राहकाणां प्रत्यस्तमयेऽन्तःकरण-

---

आ० सर्व्वावभासकत्वे लोकप्रसिद्धिरेव न प्रमाणं किन्तु भगवद्वाक्यमपीत्याह। तथा चेति॥ अनाद्यनिर्वाच्याविद्यावन्तो चेतनाचेतयितारो ब्रह्मादयस्तेषामयमेव चेतनो यथोदकादीनां चन्द्रीनामग्निर्निमित्तं दाहकत्वं तथात्मनिमित्तमेव चेतयितृत्वमन्येषामित्याह। नित्य इति॥ अनुगमनवदनुमानं स्वगतया भासा स्यादिति शङ्कां प्रत्याह। तस्येति॥ येनेति॥ तत्र नावेदविन्मनुते तं बृहन्तमित्युत्तरत्र सम्बन्धः॥ ज्योतिःशब्दव्याख्यानमुपसंहरति। तेनेति॥ हृद्यन्तःस्थितोऽयमात्मा सर्व्वावभासकत्वेन ज्योतिर्भवतीति योजना॥ पदान्तरमादाय व्याचष्टे। पुरुष इति॥

आदित्यादिज्योतिषः सकाशादात्मज्योतिषि विशेषमाह। निरतिशयश्चेति॥ प्रतिवचनवाक्यार्थमुपसंहरति। स एष इति॥ स समानः सन्नित्याद्यवतारयितुं कीर्त्तयति। बाह्यानामिति॥

भा॰ द्वारेण पृथग्ज्योतिः पुरुष आत्मा ऽनुग्राहकः करणाना-मित्युक्तं । यदा तु बाह्यकरणानुग्राहकाणामादित्यादि-ज्योतिषा भावस्तदाप्यादित्यादि ज्योतिषां परार्थत्वात्का-र्य्यकरणसङ्घातस्याचैतन्ये स्वार्थानुपपत्तेः । स्वार्थज्योतिष आत्मनो ऽनुग्रहाभावे यं कार्य्यकरणसङ्घातो न व्यवहाराय कल्पते । आत्मज्योतिरनुग्रहेणैव हि सर्व्वदा सर्व्वः संव्यव-हारः। यदेतद्धृदयं मनश्चैतत्संज्ञानमित्यादि श्रुत्यन्तरात्। साभिमानो हि सर्व्वः प्राणिसंव्यवहारः । अभिमानहेतुं च मरकतमणिदृष्टान्तेनावोचाम । यद्यप्येवमेतत्तथापि जाग्र-द्विषये सर्व्वकरणागोचरत्वादात्मज्योतिषो बुद्ध्यादि बाह्या-भ्यन्तर कार्य्यकरणव्यापारसन्निपातव्याकुलत्वान्न शक्यते । तज्ज्योतिरात्माख्यं मुञ्जेषीकावन्निष्कृष्य दर्शयितुमित्यतः स्वप्ने दिदर्शयिषुः प्रकुरुते । स समानः सन्नुभौ लोकाव-

---

आ॰ तर्हि बाह्यज्योतिः सद्भावावस्थायामकिञ्चित्करमात्मज्योतिरि-त्याशङ्क्याह । यदा त्विति । व्यतिरेकमुखेनोक्तमर्थमन्वयमुखेन कथयति । आत्मज्योतिरिति । आत्मज्योतिषः सर्व्वानुग्राहकत्वे प्रमाणमाह । यदेतदिति । सर्व्वमन्तःकरणादि प्रज्ञानेत्रमित्यैत-रेयके श्रवणादुक्तमात्मज्योतिषः सर्व्वानुग्राहकत्वमित्यर्थः । किञ्चा-चेतनानां कार्य्यकरणानाञ्चेतनत्वप्रसिद्ध्यनुपपत्त्या सदा चिदा-त्मव्याप्तिरेष्टव्येत्याह । साभिमानो हीति । कथमसङ्गस्य प्रतीचः सर्व्वत्र बुद्ध्यादावहं मान इत्याशङ्क्याह । अभिमानेति । वृत्त-मनूद्योत्तरवाक्यमवतारयति । यद्यपीति । यथोक्तमपि प्रत्य-ग्ज्योतिर्जागरिते दर्शयितुमशक्यमिति श्रुतिः स्वप्नं प्रस्तौतीत्यर्थः । अशक्यत्वे हेतुद्वयमाह । सर्व्वेति । स्वप्ने निष्कृष्टं ज्योतिरिति शेषः । सद्दृष्टः सन्ननुसञ्चरतीति सम्बन्धः । सादृश्यस्य प्रतियोगि

उ॰ स समानः सन्नुभौ लोकावनु सञ्चरति ध्यायतीव, लेलायतीव ।

---

भा॰ नुसञ्चरति । यः स पुरुषः स्वयमेव ज्योतिरात्मा स समानः सदृशः सन् केन प्रकृतत्वात्सन्निहितत्वाच्च । हृदयेन हृदीति च । हृच्छब्दवाच्या बुद्धिः प्रकृता सा सन्निहिता च । तस्मा-त्तयैव सामान्यं । किं पुनः सामान्यमश्वमहिषवद्विवेकतो ऽनुपलब्धिः । अवभास्या बुद्धिरवभासकं तदात्मज्योतिरा-लोकवदवभास्यावभासकयोर्विवेकतो ऽनुपलब्धिः प्रसिद्धा । विशुद्धत्वाद्ध्यालोकोऽवभास्येन सदृशो भवति ॥

यथा रक्तमेव भासयन् आलोकरक्तसदृशो रक्ताकारो भवति । यथा हरितं नीलं लोहितं वा ऽवभासयन्नालो-कस्तत्सदृशस्तत्समानो भवति । तथा बुद्धिमवभासयन् बुद्धिद्वारेण कृत्स्नं चेत्रमवभासयतीत्युक्तं । मरकतमणि-

---

आ॰ सायेद्दत्वमवेक्ष्य पृच्छति । केनेति ॥ उत्तरं । प्रकृतत्वादिति ॥ प्राणानामपि तुल्यं तदिति चेत्तत्राह । सन्निहितत्वाच्चेति ॥ हेतु-द्वयं साधयति । हृदीत्यादिना ॥ प्रकृतत्वादिप्रक्रमाह । तस्मा-दिति ॥ सामान्यप्रश्नपूर्व्वकं विशदयति । किं पुनरित्यादिना ॥ विवेकतोऽनुपलब्धिं व्यक्तीकर्त्तुं बुद्धिज्योतिषोः स्वरूपमाह । अवभास्येति ॥ अवभासकत्वे दृष्टान्तमाह । आलोकवदिति ॥ तथापि कथं विवेकतोऽनुपलब्धिस्तत्राह । अवभास्येति ॥ प्रसि-द्धिमेव प्रकटयति । विशुद्धत्वाद्धीति ॥

उक्तमर्थं दृष्टान्तेन बुद्धावारोपयति । यथेत्यादिना ॥ दृष्टा-न्तगतमर्थं दार्ष्टान्तिके योजयति । तथेति ॥ पुनरुक्तिं परिह-रति । इत्युक्तमिति ॥ सर्व्वावभासकत्वे कथं बुद्ध्यैव साम्यमित्या-शङ्क्याह । तेनेति ॥ सर्व्वावभासकत्वं तच्छब्दार्थः ॥ किमर्थं तर्हि

भा॰ निदर्शनेन। तेन सर्व्वेण समानो बुद्धिसामान्यद्वारेण सर्व्वमय इति च। अतएव वक्ष्यति। तेनासौ कुतश्चित्प्रतिभज्य मुञ्जेषीकावत्त्वेन ज्योतीरूपेण दर्शयितुं न शक्यत इति सर्व्वव्यापारं सचाध्यारोप्य नामरूपगतं ज्योतिर्धर्म्मश्च नामरूपयोर्नामरूपे चात्मज्योतिषि सर्व्वो लोको मोमुह्यते। अयमात्मा नायमात्मेत्येवं धर्म्मी नैवं धर्म्मी कर्त्ताऽकर्त्ता शुद्धो ऽशुद्धो बद्धो मुक्तः स्थितो गत आगतो ऽस्ति नास्तीत्यादिविकल्पैः। अतः समानः सन्नुभौ लोकौ प्रतिपन्नप्रतिपत्तव्याविह लोकपरलोकावुपात्ते। देहेन्द्रियादिसङ्घातत्यागान्योपादानसन्तानप्रबन्धशतसन्निपातैरनुक्रमेण सञ्चरति। धीसादृश्यमेवोभयलोकसञ्चरणहेतुर्न स्वत इति। तत्र नामरूपोपाधिसादृश्यं भ्रान्तिनिमित्तं यत्तदेव हेतुर्न स्वत इत्येतदुच्यते। यस्मात्स समानः सन्नुभौ लोकावनुक्रमेण सञ्चरति तदेतत्प्रत्यक्षमित्येतद्दर्शयति। यतो ध्यायतीव ध्यानव्यापारं करोतीव

---

आ॰ बुद्ध्या सामान्यमुक्तमित्याशङ्क्य द्वारत्वेनेत्याह। बुद्धीति॥ आत्मनः सर्व्वेण समानत्वे वाक्यशेषमनुकूलयति। सर्व्वमय इति चेति॥ वाक्यशेषसिद्धेऽर्थे लोकभ्रान्तेर्गमकत्वमाह। तेनेति॥ सर्व्वमयत्वेनेति यावत्। आत्मानात्मनोर्विवेकदर्शनस्याशक्यत्वे परस्पराध्यासस्तद्धर्म्माध्यासश्च स्यात्तत्र लोकानां मोहो भवेदित्याह। इति सर्व्वेति। धर्म्मिविषयं मोहमभिनयति। अयमिति॥ धर्म्मविषयं मोहं दर्शयति। एवं धर्म्मीति॥ तदेव स्फुटयति। कर्त्तेत्यादिना॥ विकल्पैः सर्व्वो लोको मोमुह्यत इति सम्बन्धः॥ स समानः सन्नित्यस्यार्थमुक्त्वाऽवशिष्टभागं व्याकरोति। अत इत्यादिना॥ आत्मनः स्वाभाविकमुभयलोकसञ्चरणमित्याशङ्क्यानन्त-

उ॰ स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ॥ ७ ॥

---

भा॰ चिन्तयतीव ध्यानव्यापारवतीं बुद्धिं स तत्स्थेन चित्स्वभावज्योतीरूपेणावभासयंस्तत्सदृशस्तत्समानः सन् ध्यायतीवाऽऽलोकवदेव। अतो भवति चिन्तयतीति भ्रान्तिर्लोकस्य। न तु परमार्थतो ध्यायति तथा लेलायतीवात्यर्थं चलतीव। तेष्वेव करणेषु बुद्ध्यादिषु वायुषु च चलत्सु। तदवभासकत्वात्तत्सदृशं तदिति लेलायतीव। न तु परमार्थतश्चलनधर्म्मकं तदात्मज्योतिः ॥

कथं पुनरेतदवगम्यते। तत्समानत्वभ्रान्तिरेवोभयलोकसञ्चरणादिहेतुर्न स्वत इत्यस्यार्थस्य प्रदर्शनाय हेतुरुपदिश्यते। स आत्मा हि यस्मात्स्वप्नो भूत्वा स यया धिया

---

आ॰ रवाक्यमादत्ते। तत्रेति॥ आत्मा सप्तम्यर्थः। यतः शब्दो वक्ष्यमाणोऽतः शब्देन सम्बध्यते। अक्षरोत्थमर्थमुक्त्वा वाक्यार्थमाह। ध्यानेति॥ ध्यानवतीं बुद्धिं व्याप्य चिदात्मा ध्यायतीवेत्यत्र दृष्टान्तमाह। आलोकवदिति॥ यथा खल्वालोको नीलं पीतं वा विषयं व्याप्नुवानस्तदाकारो दृश्यते तथा यमपि ध्यानवतीं बुद्धिं भासयन्ध्यानवानिव भवतीत्यर्थः॥ यथोक्तबुद्ध्यवभासकत्वमुक्तं हेतुमनूद्य फलितमाह। अत इति॥ इवशब्दार्थं कथयति। न त्विति॥ बुद्धिधर्म्माणामात्मन्यौपाधिकत्वं साधयति। तेष्विति॥ इवशब्दसामर्थ्यसिद्धमर्थमाह। न त्विति॥

स चेत्याद्यनन्तरवाक्यमाकाङ्क्षाद्वारोत्थापयति। कथमित्यादिना॥ तच्छब्दो बुद्धिविषयः। सञ्चरणादीत्यादिशब्दो ध्यानादिव्यापारसङ्ग्रहार्थः। स्वप्नो भूत्वा लोकमतिक्रामतीति सम्बन्धः॥ कथमात्मा स्वप्नो भवति तत्राह। स यथेति॥ उक्तोऽर्थे वाक्य-

भा॰ समानः सन्धीर्यद्भवति तत्तद्भावपि भवतीवात उच्यते । तस्माद्यदासौ स्वप्नो भवति स्वापवृत्तिं प्रतिपद्यते धीस्तदा सोऽपि स्वप्नवृत्तिं प्रतिपद्यते । यदा धीर्जिजागरिषति तदाऽसावपीत्यत आह । स्वप्नो भूत्वा स्वप्नवृत्तिमवभासयन् धियः स्वापवृत्त्याकारो भूत्वा इमं लोकं जागरितव्यवहारलक्षणं कार्यकरणसङ्घातात्मकं लौकिकशास्त्रीयव्यवहारास्पदमतिक्रामति अतीत्य क्रामति । विविक्तेन स्वेनात्मज्योतिषा स्वप्नात्मिकां धीवृत्तिमवभासयन्नवतिष्ठते । यस्मात्तस्मात्स्वयं ज्योतिःस्वभाव एवासौ विशुद्धः सन् कर्तृक्रियाकारकफलशून्यः परमार्थतो धीसादृश्यमेवोभयलोकसञ्चारादिसंव्यवहारभ्रान्तिहेतुर्मृत्यो रूपाणि मृत्युः कर्माविद्यादिर्न तस्यान्यद्रूपं स्वतः कार्यकरणान्येवास्य रूपाणि । अतस्तानि मृत्यो रूपाण्यतिक्रामति क्रियाफलाश्रयाणि । ननु नास्त्येव धियाऽसमानं । अन्यद्धियोऽवभासकमात्मज्योतिर्धीव्यतिरेकेण प्रत्यक्षेण वाऽनुमानेन वाऽनु-

---

आ॰ भवतात्यं व्याकरोति । साहेति । उक्तं हेतुमनूद्य फलितमाह । यस्मादित्यादिना । कार्यकरणातीतत्वात्स्वयमात्मनो न स्वतः संसारित्वमित्यत आह । मृत्योरिति । रूपाण्यतिक्रामतीति पूर्वेण सम्बन्धः । क्रियास्तत्फलानि चाश्रयो येषां तानि वा क्रियाश्रयाणि तत्फलानामाश्रयत्वानीति यावत् । बुद्ध्यवभासकं ज्योतिरात्मेत्युक्तं श्रुत्वा शाक्यः शङ्कते । नन्विति । प्रमाणादतिरिक्तात्मोपलब्धिरित्याशङ्क्य प्रत्यक्षमनुमानं चेति प्रमाणद्वैविध्यनियममभिप्रेत्य ताभ्यामतिरिक्तात्मानुपलम्भान्नासावस्तीत्याह । धीव्यतिरेकेणेति । तत्र दृष्टान्तमाह । यथेति । घटादिरालोकश्चेत्युभयो

भा॰ पलम्भात्। यथान्या तत्काल एव द्वितीया धीः। यत्त्वव
भास्यावभासकयोरन्यत्वेऽपि विवेकानुपलम्भात्सादृश्यमिति
घटाद्यालोकयोः तत्र भवत्यन्यत्वेनालोकस्योपलम्भाद्घटादेः
संश्लिष्टयोः सादृश्यं भिन्नयोरेव। न च तथेह घटादि-
रिव धियोऽवभासकं ज्योतिरन्तरं प्रत्यक्षेण चानुमानेन
वोपलभामहे। धीरेव हि चित्स्वरूपावभासकत्वेन हि
स्वाकारविषयाकारा च। तस्मान्नानुमानतो नापि प्रत्य-
क्षतो धियोऽवभासकं ज्योतिः शक्यते प्रतिपादयितुं
व्यतिरिक्तम्। यदपि दृष्टान्तरूपमभिहितमवभास्याव-
भासकयोर्भिन्नयोरेव घटाद्यालोकयोः संयुक्तयोः सादृश्य-
मिति। तत्राभ्युपगममात्रमस्माभिरुक्तं। न तु तत्र घटाद्यव
भास्यावभासकौ भिन्नौ। परमार्थतस्तु घटादिरेवावभासा-
त्मकः सालोकोऽन्योन्यो हि घटादिरुत्पद्यते। विज्ञानमात्र-

---

आ॰ मिथः संश्लिष्टयोर्विवेकेनानुपलम्भवदवभास्यावभासकयोर्बुद्ध्या-
त्मनोर्भेदेऽपि पृथगनुपलम्भादैक्यमवभासते। वस्तुतस्तु तयोरन्य-
त्वमेवेति प्रश्नमनुवदति। यत्त्विति। वैषम्यप्रदर्शनेनोत्तरमाह।
तत्रेति। दृष्टान्तः सप्तम्यर्थः। घटादेरन्यत्वेनेति सम्बन्धः।
ज्योतिरन्तरं नास्ति चेत्कुतो ग्राह्यग्राहकसंवित्तिरित्याशङ्क्याह।
धीरेवेति। बाह्यार्थवादिनोः सौत्रान्तिकवैभाषिकयोरभिप्राय-
मुपसंहरति। तस्मान्नेति। इदानीं विज्ञानवादी बाह्यार्थवादि-
भ्यामभ्युपगतं दृष्टान्तमनुवदति। यदपीति।

बाह्यार्थवादप्रक्रिया न सुगताभिप्रेतेति दूषयति। तत्रेति।
उभयदृष्टान्तस्वरूपं सप्तम्यर्थः। ननु घटादेरवभास्यादालोकोऽ
वभासको भिन्नो लक्ष्यते नेत्याह। परमार्थतस्त्विति। तस्य स्थायित्वं
व्यावर्तयति। अन्योऽन्य इति। प्रतीतं विषयप्राधान्यं व्यावर्त-

भा॰ मेव वा सालोकघटादिविषयाकारमवभासते । यदैवं तदा न बाह्यो दृष्टान्तोऽस्ति विज्ञानस्वरूपमात्रत्वात्सर्व्वस्य। एवं तस्यैव विज्ञानस्य ग्राह्यग्राहकाकारतामसत्यं परिकल्प्य तस्यैव पुनर्विशुद्धिं परिकल्पयन्ति । तद्ग्राह्यग्राहकविनिर्मुक्तं विज्ञानं स्वच्छीभूतं क्षणिकं व्यवतिष्ठत इति केचित्। तस्यापि शान्तिं केचिदिच्छन्ति । अन्ये तदपि विज्ञानं सावृतं ग्राह्यग्राहकांशविनिर्मुक्तं शून्यमेव । घटादिबाह्यवस्तुवदित्यपरे माध्यमिका आचक्षते। सर्व्वा एताः कल्पना बुद्धिविज्ञानावभासकस्य व्यतिरिक्तस्यात्मज्योतिषोऽपह्नवाद्दस्याश्रयो मार्गस्य प्रतिपक्षभूतावैदिकस्य। तत्र येषां बाह्योर्थोऽस्ति तान्प्रत्युच्यते। तावत्स्वात्मानवभासकत्वाद्घटादेस्तमस्यवस्थितो घटादिस्तावत्र कदाचिदपि स्वात्मनावभास्यते।

---

आ॰ यदुक्तमेव व्यनक्ति । विज्ञानमात्रमिति ॥ विज्ञानवादे यथोक्तदृष्टान्तराहित्यं फलतीत्याह । यदेति ॥ शिष्यबुद्ध्यनुसारेण त्रिविधं बुद्धाभिप्रायमुपसंहरति । एवमित्यादिना ॥ परिकल्प्येत्यन्तेन बाह्यार्थवादमुपसंहृत्य तस्यैवेत्यादिना विज्ञानवादमुपसंजहार ॥ तत्र विज्ञानवादोपसंहारं विवृणोति । तद्ग्राह्येति ॥ शून्यवादिमतमाह । तस्यापीति ॥ तदेव स्फुटयति । तदपीति ॥ पक्षत्रयेऽपि दोषं सम्भावयति । सर्व्वा इति ॥ कथममूषां कल्पनानां दूषणमित्याशङ्क्य प्रथमं बाह्यार्थवादिनं प्रत्याह । तत्रेति ॥ निर्द्धारणे सप्तमी । यत्तु धीरेवावभासकत्वेन स्वाकारेति तत्राह । नेति ॥ यदवभास्यं तद्व्यतिरिक्तावभास्यं अवभास्यत्वात् यथा घटादि । अवभास्या चेयं बुद्धिरित्यनुमानाद्बुद्ध्यतिरिक्तः साक्षी सिद्ध्यतीत्यर्थः ॥ दृष्टान्तं साधयति । तमसीति ॥ तस्यावभासकापेक्षां दर्शयितुं विशेषणं । सालोको घट इति ॥ संश्लेषावगमामात्ति घटस्य व्यतिरिक्तावभास्यत्वमित्याश-

भा॰ प्रदीपाद्यालोकसंयोगेन तु नियमेनैवावभास्यमानो दृष्टः। संश्लिष्टयोरपि घटालोकयोरन्यत्वमेव। पुनः पुनः संश्लेषे विश्लेषे च विशेषदर्शनाद्रज्जुघटयोरिव। अन्यत्वे च व्यतिरिक्तावभासकत्वं न स्वात्मनैव स्वमात्मानमवभासयति। ननु प्रदीपः स्वात्मानमेवावभासयन्दृष्ट इति। न हि घटादिवत् प्रदीपदर्शनाय प्रकाशान्तरमुपपादयते लौकिकाः। तस्मात्प्रदीपः स्वात्मानं प्रकाशयति नावभास्यत्वादिशेषात्।

यद्यपि प्रदीपोऽन्यस्यावभासकः स्वयमवभासात्मकत्वात्तथापि व्यतिरिक्तचैतन्यावभास्यत्वं न व्यभिचरति घटादिवदेव। यदा चैवं तदा व्यतिरिक्तावभास्यत्वं तावदवश्यम्भावि। ननु यथा घटश्चैतन्यावभास्यत्वेऽपि व्यतिरिक्तमालोकान्तरमपेक्षते नत्वेवं प्रदीपोऽन्यमालोकान्तरमपे-

---

आ॰ स्यादाह। संश्लिष्टयोरपीति॥ भवत्वन्यत्वं किं तावतेत्याशङ्क्याह। अन्यत्वे चेति॥ व्यतिरिक्तावभासकत्वं तादृशावभासकसापेक्षत्वमिति यावत्॥ अवभासयति घटादिरिति शेषः॥ दृष्टान्तस्य साध्यविकलत्वे परिहृते व्यभिचारमाशङ्कते। नन्विति॥ तदेव व्यतिरेकमुखेनाह। न हीति॥ अनैकान्तिकत्वं निगमयति। तस्मादिति॥ प्रदीपस्य पक्षतुल्यत्वान्न व्यभिचारोऽस्तीति परिहरति। नावभास्यत्वेति॥

अथान्यावभासकत्वात्तस्य नान्याभास्यत्वमिति चेत्तत्राह। यद्यपीति॥ अवभास्यत्वहेतोरव्यभिचारे फलितमाह। यदा चेति॥ व्यतिरिक्तावभास्यत्वं बुद्धेरिति शेषः॥ अवभास्यत्वे सत्यपि प्रदीपे स्वातिरिक्तेनैवावभास्यत्वमिति नियमासिद्धेर्व्यभिचारतादवस्थ्यमिति शङ्कते। नन्विति॥ यदि प्रदीपस्य स्वावभास-

भा॰ च्यते । तस्मात्प्रदीपोऽन्यावभास्योऽपि सन्नात्मानमवभास-
यति । न स्वतः परतो वा विशेषाभावात् । यथा चैतन्याव-
भास्यत्वं घटस्य तथा प्रदीपस्यापि चैतन्यावभास्यत्वमवि-
शिष्टं । यत्तूच्यते प्रदीप आत्मानं घटस्येवावभासयतीति तद-
सत् । कस्माद्यदात्मानं नावभासयति तदा कीदृशः स्यात् ।
न हि तदा प्रदीपस्य स्वतो वा परतो वा विशेषः कश्चिदुप-
लभ्यते । स नाम स्वावभास्यो भवति । यदाऽन्यावभासकः
सन्निधावसन्निधौ च विशेष उपलभ्यते । न हि प्रदीपस्य
स्वात्मसन्निधिरसन्निधिर्वा शक्यः कल्पयितुं । असति च
कादाचित्के विशेष आत्मानं प्रदीपः प्रकाशयतीति मृषै-
वोच्यते । चैतन्यग्राह्यकत्वन्तु घटादिभिरविशिष्टं प्रदीपस्य ।
तस्माद्विज्ञानस्यात्मग्राह्यग्राहकत्वेन प्रदीपो दृष्टान्तश्चैतन्य-

---

आ॰ नात् पूर्व्वमसन्विशेषः समनन्तरकाले स्यात् । तदा स्वात्मानं
भासयतीति वक्तुं युक्तं न च सोऽस्तीति दूषयति । नेत्यादिना ॥
तदेव विवृणोति । यथेति ॥ अवभास्यत्वाविशेषादित्यर्थः ॥ प्रदीपे
परोक्तं विशेषमनुभाष्य दूषयति । यत्त्वित्यादिना ॥ यदा दीपो
न स्वात्मानं भासयति तदानवभासमानः स्यादित्याशङ्क्याह ।
न हीति ॥ विशेषाभावेऽपि दीपस्य स्वेनैवावभास्यत्वं किं न
स्यादिति चेत्तत्राह । स नाम हीति ॥ दीपस्य विशेषान्तराभावेऽपि
स्वात्मसन्निध्यसन्निधौ विशेषावित्याशङ्क्याह । न हीति ॥ दीपस्य
स्वेनान्येन वा सन्निधिविशेषाभावे फलितमाह । असतीति ॥
व्यभिचारनिरासपूर्व्वकं भास्यत्वानुमानमुपपाद्यानुमानान्तर-
माह । चैतन्येति ॥ यद्ग्राह्यकं तत्स्वविजातीयग्राह्यं यथा सूर्य्यादि ।
ग्राह्यकञ्च विज्ञानं तस्माद्विज्ञानव्यतिरिक्तश्चिदात्मा सिद्ध्यतीत्यर्थः ॥
प्रदीपस्य न स्वावभास्यत्वं किन्तु विजातीयचैतन्यावभास्यत्व-
मिति स्थिते फलितमाह । तस्मादिति ॥ यद्ग्राह्यं तद्ग्राहकान्तर-

भा॰ ग्राह्यत्वं च विज्ञानस्य बाह्यविषयैरविशिष्टं । चैतन्यग्राह्यत्वे च विज्ञानस्य किं ग्राह्यविज्ञानग्राह्यतैव किं वा ग्राहकविज्ञानग्राह्यतेति तत्र सन्दिह्यमाने वस्तुनि यथान्यत्र दृष्टो न्यायः कल्पयितुं युक्तो न तु दृष्टविपरीतः । तथा च सति यथा व्यतिरिक्तेनैव ग्राहकेण बाह्यानां प्रदीपादीनां ग्राह्यत्वं दृष्टं तथा विज्ञानस्यापि चैतन्यग्राह्यत्वात् । प्रकाशकत्वे सत्यपि प्रदीपवद्व्यतिरिक्तचैतन्यग्राह्यत्वं युक्तं कल्पयितुं न त्वनन्यग्राह्यत्वं । यस्मान्यो विज्ञानस्य ग्रहीता स आत्मा ज्योतिरन्तरं विज्ञानात्तदाऽनवस्थेति चेन्न ॥

ग्राह्यग्राह्यत्वमात्रं हि तद्ग्राहकस्य वस्त्वन्तरत्वे लिङ्गमुक्तं न्यायतः । न त्वेकात्मग्राहकत्वे तद्ग्राहकान्तरास्तित्वे वा कदाचिदपि लिङ्गं सम्भवति । तस्मान्न तदनवस्थाप्रसङ्गः । विज्ञानस्य व्यतिरिक्तग्राह्यत्वे करणान्तरापेक्षायामनवस्थेति चेत् । न नियमाभावात् । न हि सर्व्वत्रायं नियमो भवति । यत्र वस्त्वन्तरेण गृह्यते वस्त्वन्तरं तत्र ग्राह्यग्राहकव्यतिरिक्तं

---

आ॰ ग्राह्यं यथा दीपः ॥ ग्राह्यं चेद्विज्ञानमित्यनुमानान्तरमाह । चैतन्येति ॥ तथापि कथं त्वदिष्टग्राहकसिद्धिरित्याशङ्क्य विशदयति । चैतन्यग्राह्यत्वे चेति ॥ कथं तर्हि निर्णयस्तत्राह । इति सन्दिह्यमान इति ॥ अस्तु लोकानुसारी निश्चयो लोकस्तु कथमित्याशङ्क्याह । तथा चेति ॥ तथापि कुतो विवक्षितात्मज्योतिस्तत्राह । यस्येति ॥

विज्ञानस्य ग्राहकान्तरग्राह्यत्वे तस्यापि ग्राहकान्तरापेक्षायामनवस्थाप्रसक्तिरिति शङ्कते । अनवस्थेति चेदिति ॥ कूटस्थबोधस्य विज्ञानसाक्षिणोऽविषयत्वान्नानवस्थेति परिहरति । नेति ॥ यद्ग्राह्यं तद्व्यतिरिक्तग्राह्यं यथा घटादीति ग्राह्यत्वमात्रं

भा॰ करणान्तरं स्यादिति नैकान्तेन नियन्तुं शक्यते। वैचित्र्य-
दर्शनात्। कथं घटस्तावत्स्वात्मव्यतिरिक्तेनात्मना गृह्यते
तत्र प्रदीपादिरालोको ग्राह्यग्राहकव्यतिरिक्तं करणं। न
हि प्रदीपाद्यालोके घटांशश्चक्षुरंशो वा। घटवच्चक्षुर्ग्राह्यत्वे-
ऽपि प्रदीपस्य चक्षुः प्रदीपव्यतिरिक्तेण बाह्यमालोकस्थानीयं
किञ्चित्करणान्तरमपेक्षते। तस्मान्नैव नियन्तुं शक्यते। यत्र
यत्र व्यतिरिक्तं ग्राह्यत्वं तत्र तत्र करणान्तरं स्यादेवेति।
तस्माद्विज्ञानस्य व्यतिरिक्तग्राहकग्राह्यत्वेन करणद्वारा-
नवस्था नापि ग्राहकद्वारा कदाचिदप्युपादयितुं शक्यते
तस्मात्सिद्धं विज्ञानव्यतिरिक्तमात्मज्योतिरन्तरमिति। ननु
नास्त्येव बाह्योऽर्थो घटादिः प्रदीपो वा विज्ञानव्यति-
रिक्तः। यद्धि यद्व्यतिरेकेण नोपलभ्यते तत्तावन्मात्रं वस्तु
दृष्टं। यथा स्वप्नविज्ञानग्राह्यं घटपटादिवस्तु स्वप्नविज्ञान-

---

आ॰ बुद्धिग्राहकस्य ततो वस्त्वन्तरत्वे प्रदीपस्य स्वानवभास्यत्वन्यायेन
सिद्धमुक्तं। न च बुद्धिसाक्षिणो ग्राह्यत्वमस्ति कूटस्थदृष्टिस्वाभाव्या-
त्तत्कुतोऽनवस्थेत्युपपादयति। ग्राह्यत्वमात्रं हीति॥ साक्षी व्यति-
रिक्तग्राह्यो ग्राहकत्वाद्बुद्धिवदित्याशङ्क्याह। न त्विति॥ ग्राहकत्वं
हि ग्रहणकर्तृत्वं वा साक्षित्वं वा आद्ये बुद्धिसाक्षिणो मुख्य-
स्याग्रहणकर्तृत्वेन किञ्चिल्लिङ्गं सम्भवति॥ द्वितीये तस्य ग्राह-
कान्तरासिद्धत्वेन कदाचिदपि प्रमाणमस्ति तत्कुतोऽनवस्थेत्यर्थः॥
ग्राहकानवस्थां परिहृत्य करणानवस्थामाशङ्कते। विज्ञानस्येति॥
तस्य ग्राह्यत्वे चक्षुरादिस्थानीयेन करणेन भवितव्यं॥ तस्यापि
ग्राह्यत्वेऽन्यत्करणमित्यनवस्थां दूषयति। न नियमाभावादिति॥
नियमाभावं साधयति। न हीत्यादिना॥ वैचित्र्यदर्शनमाकाङ्क्षा-
पूर्वकं स्फुटयति। कथमित्यादिना॥ उभयव्यतिरेकं दर्शयति।

भा॰ व्यतिरेकेणानुपलम्भात्स्वप्नघटप्रदीपादेः स्वप्नविज्ञानमात्र-
तावगम्यते। तथा जागरितेऽपि घटप्रदीपादेर्जाग्रद्विज्ञान-
व्यतिरेकेणानुपलम्भाज्जाग्रद्विज्ञानमात्रतैव युक्ता भवितुं।
तस्मान्नास्ति बाह्योऽर्थो घटप्रदीपादिर्विज्ञानमात्रमेव तु
सर्व्वं। तत्र यदुक्तं विज्ञानस्य व्यतिरिक्तावभासत्वाद्विज्ञान-
व्यतिरिक्तमस्ति। ज्योतिरन्तरं घटादिरिवेति तन्मिथ्या।
सर्व्वस्य विज्ञानमात्रत्वे दृष्टान्ताभावात्।

न यावत्तावदभ्युपगमात्। न तु बाह्योऽर्थो भवतैकान्ते-
नैव नाभ्युपगम्यते। ननु मया नाभ्युपगम्यत एव। न विज्ञानं
घटः प्रदीप इति च शब्दार्थपृथक्त्वाद्यावत्तावदपि बाह्य-
मर्थान्तरमवश्यमभ्युपगन्तव्यं। विज्ञानादर्थान्तरं वस्तु न
चेदभ्युपगम्यते विज्ञानं घटः पट इत्येवमादीनां शब्दा-

---

आ॰ न हीति॥ तथापि कथं वैचित्र्यं तत्राह। घटवदिति॥ नियमाभावमुपसंहरति। तस्मादिति॥ अनवस्थाद्वयंनिराकरणं निगमयति। तस्माद्विज्ञानस्येति॥ बाह्यार्थवादिमतनिराकरणमुपसंहरति। तस्मात्सिद्धमिति॥ बाह्यार्थवादिनि ध्वस्ते विज्ञानवादी चोदयति। नन्विति॥ बाह्यार्थो विज्ञानातिरिक्तो नास्तीत्यत्र प्रमाणमाह। यद्धीति॥ नोपलभ्यते च जाग्रद्वस्तु जाग्रद्विज्ञानव्यतिरेकेणेति शेषः॥ दृष्टान्तं समर्थयते। स्वप्नेति॥ दार्ष्टान्तिकं विवृणोति। तथेति॥ उक्तमनुमानमुपसंहरति। तस्मादिति॥ सर्व्वंविज्ञानमात्रमिति स्थिते फलितमाह। तत्रेति॥ किमिति तस्य मिथ्यात्वं तत्राह। सर्व्वस्येति॥ बाह्यार्थापलापवादिनं दूषयति॥

नेत्यादिना॥ हेतुं विशदयति। नत्विति॥ विज्ञानमात्रवादित्वादेकान्तेन बाह्यार्थानभ्युपगतिरिति शङ्कते। नन्विति॥ बाह्यार्थं हठादङ्गीकारयति। नेत्यादिना॥ अन्वयमुखेनोक्तमर्थं व्यतिरेक-

भा॰ नामेकार्थत्वे पर्य्यायशब्दत्वं प्राप्नोति । तथा साधनानां
फलस्य चैकत्वे साध्यसाधनभेदोपदेशशास्त्रानर्थक्यप्रसङ्गः ।
तत्कर्त्तुरज्ञानप्रसङ्गो वा । किञ्चान्यद्विज्ञानव्यतिरेकेण
वादिप्रतिवादिवाददोषाभ्युपगमात् । न ह्यात्मविज्ञानमात्र-
मेव वादी प्रतिवादी प्रतिवादिवादस्तद्दोषो वाभ्युपगम्यते ।
निराकर्त्तव्यत्वात्प्रतिवाद्यादीनां । न ह्यात्मीयविज्ञानं नि-
राकर्त्तव्यमभ्युपगम्यते स्वयं वात्मा कस्यचित् । तथा च सति
सर्व्वसंव्यवहारलोपप्रसङ्गः । न च प्रतिवाद्यादयः स्वात्मनैव
गृह्यन्त इत्यभ्युपगमः । व्यतिरिक्ता ग्राह्याश्चेत अभ्युपगम्यन्ते ।
तस्मात्तत्सर्व्वमेव व्यतिरिक्तग्राह्यं वस्तु ज्ञानविषयत्वाज्ज्ञा-
यवस्तु प्रतिवाद्यादिवदिति सुलभो दृष्टान्तः । सन्तत्य-
न्तरवद्विज्ञानान्तरवच्चेति । तस्माद्विज्ञानवादिनापि न

---

आ॰ मुखेन विघटयति । विज्ञानादिति ॥ ज्ञानज्ञेययोरैक्ये दोषान्तर-
माह । तथेति ॥ अनर्थकं शास्त्रमुपदिशतो बुद्धस्य सर्व्वज्ञत्वं न
स्यादित्याह । तत्कर्त्तुरिति ॥ वा शब्दश्चार्थः ॥ इतश्च सर्व्वस्य नास्ति
विज्ञानमात्रत्वमित्याह । किञ्चान्यदिति ॥ न केवलं पूर्व्वोक्तोप-
पत्तिबलादेव बाह्यार्थोऽभ्युपेयः किन्तु तवैवान्यदपि कारणमुच्यत
इति यावत् ॥ तदेव स्फुटयति । विज्ञानेति ॥ यद्ग्राह्यं तत्स्वव्यति-
रिक्तग्राह्यं यथा प्रतिवाद्यादि ज्ञायवस्तु चेदं ग्राह्यमित्यनुमानान्न
बाह्यार्थापलापसिद्धिरित्यर्थः ॥ दृष्टान्ते विप्रतिपत्तिं प्रत्याह । न
हीति ॥ निराकर्त्तव्यत्वेऽपि तेषां ज्ञानमात्रत्वं किं न स्यादित्या-
शङ्क्यात्मीयज्ञानत्वं वा तेषामिति विकल्प्य क्रमेण दूषयति । न
हीत्यादिना ॥ स्वकीयनिषेधे चानिष्टापत्तिमाचष्टे । तथा चेति ॥
त्वदङ्गीकारालोचनायामपि प्रतिवाद्यादीनां विज्ञानातिरेकः
सेत्स्यतीत्याह । न चेति । अन्यथा विवादाभावापातादिति भावः ॥
कथं तर्हि तेषामङ्गीकारस्तत्राह । व्यतिरिक्तेति ॥ सिद्धे दृष्टान्ते

भा० शक्यं विज्ञानव्यतिरिक्तं ज्योतिरन्तरं निराकर्त्तुं। स्वप्ने विज्ञानव्यतिरेकाभावादयुक्तमिति चेत्। नाभावादपि भावस्य वस्त्वन्तरत्वोपपत्तेः। भवतैव तावत्स्वप्ने घटादिविज्ञानस्य भूतभावत्वमभ्युपगतं। तदभ्युपगम्य तद्व्यतिरेकेण घटाद्यभाव उच्यते॥

स विज्ञानविषयो घटादिः। यद्यभावो यदि वा भावः स्यादुभयथापि घटादिविज्ञानस्य भावभूतत्वमभ्युपगतमेव। न तु तन्निवर्त्तयितुं शक्यते। तन्निवर्त्तकन्यायाभावात्। एतेन सर्व्वस्य शून्यता प्रत्युक्ता। प्रत्यगात्मग्राह्यता चात्मनोऽह-मिति मीमांसकपक्षः प्रत्युक्तः। यत्तूक्तं सालोकोऽन्यस्यान्यस्य

---

आ० फलितमनुमानं निगमयति। तस्मादिति। किञ्च चैत्रसन्तानेन मैत्रसन्तानो व्यवहारादनुमीयते सर्व्वज्ञज्ञानेन वासर्व्वज्ञज्ञानानि ज्ञायन्ते। तत्र भेदस्य तेऽपि सिद्धेस्तद्दृष्टान्तान्नीलादेस्तद्धि यत्र भेदः शक्योऽनुमातुमित्याह। सन्तानान्तरवदिति॥ न बाह्यार्था-पलापसिद्धिरिति शेषः॥ तदपलापासम्भवे फलितमाह। तस्मादिति॥ विज्ञानार्थभेदोक्त्या प्रत्यगात्मा विज्ञानातिरिक्त उक्तः॥ सम्प्रति विमतं न ज्ञानाभिन्नं ग्राह्यत्वात्स्वप्नग्राह्यवदित्यु-क्तमनुवदति। स्वप्न इति॥ अयुक्तं विज्ञानातिरिक्तत्वमर्थस्येति शेषः॥ दृष्टान्तस्य साध्यविकलतामभिप्रेत्य परिहरति। नाभावा-दपीति॥ सङ्ग्रहवाक्यं विवृणोति। भवतैवेति॥ बाह्यार्थवादिभ्यो विशेषमाह। तदभ्युपगम्येति॥

तथापि कथं दृष्टान्तस्य साध्यविकलतेत्याशङ्क्याह। स इति॥ घटादिविज्ञानस्य भावभूतस्याभ्युपगतस्य घटादेर्भावादभावाद्वा विषयादर्थान्तरत्वाद्यस्य कस्यचिद्बाह्यार्थस्योपगमाद्दृष्टान्तस्य सा-ध्यविकलता सुप्रसिद्धेत्यर्थः॥ माध्यमिकमतमतिदेशेन निरा-करोति। एतेनेति॥ ज्ञानज्ञेययोर्निराकर्त्तुमशक्यत्ववचनेनेति यावत्॥ आत्मनो ग्राह्यत्वाद्यमिति प्रत्यगात्मनैव ग्राह्यतेति

भा॰ घटो जायत इति तद्वत्। कालान्तरे स एवायं घट इति प्रत्यभिज्ञानात्। सादृश्यात्प्रत्यभिज्ञानं लूनोत्थितकेशनखादिष्विवेति चेत्। न तत्रापि क्षणिकत्वस्यासिद्धत्वात्। जात्येकत्वाच्च। लूनेषु पुनरुत्थितेषु च केशनखादिषु केशनखत्वजातेरेकत्वात्केशनखत्वप्रत्ययस्तन्निमित्तोऽभ्रान्त एव। न हि दृश्यमानलूनोत्थितकेशनखादिषु व्यक्तिनिमित्तः स एवेति प्रत्ययो भवति। कस्यचिद्दीर्घकालव्यवहितदृष्टेषु च तुल्यपरिमाणेषु तत्कालीनबालादिषु तुल्या इति प्रत्ययो भवति न तु त एवेति। घटादिषु पुनर्भवति स एवेति प्रत्ययः। तस्मान्न समो दृष्टान्तः। प्रत्यक्षेण हि प्रत्यभिज्ञायमाने वस्तुनि तदेवेति। न चान्यत्वमनुमातुं युक्तं प्रत्यक्षविरोधे लिङ्गस्याभासोपपत्तेः। सादृश्यप्रत्ययानुपपत्तेश्च।

---

व्या॰ मीमांसकमतमपि प्रत्युक्तमेकस्यैव ग्राह्यग्राहकताया निरस्तत्वादित्याह। प्रत्यगात्मेति॥ क्षणभङ्गवादिनोक्तमनूद्य प्रत्यभिज्ञाविरोधेन निराकरोति। यदुक्तमित्यादिना॥ सपक्षोऽपि प्रत्यभिज्ञोपपत्तिं शङ्कते। सादृश्यादिति॥ दृष्टान्तं विघटयन्नुत्तरमाह। न तत्रापीति॥ तथापि कथं तत्र प्रत्यभिज्ञेत्याशङ्क्याह। जातीति॥ तन्निमित्ता तेषु प्रत्यभिज्ञेति शेषः॥ तदेव प्रपञ्चयति। लूनेष्विति॥ अभ्रान्त इति छेदः॥ किमिति जातिनिमित्तैषा धीर्व्यक्तिनिमित्ता किं न स्यादत आह। न हीति॥ ननु सादृश्यवशाद्व्यक्तिमेव विषयीकृत्य प्रत्यभिज्ञानं केशादिषु किं न स्यात्तत्राह। कस्यचिदिति॥ अभ्रान्तस्येति यावत्॥ दार्ष्टान्तिकवैषम्यमाह। घटादिष्विति॥ वैषम्यमुपसंहरति। तस्मादिति॥ यत्सत्तत्क्षणिकं यथा प्रदीपादि। सन्तश्चामी भावा इत्यनुमानविरोधाद्भ्रान्तं प्रत्यभिज्ञानमित्याशङ्क्याह। प्रत्यक्षेणेति॥ अनुष्णतानुमानवत्प्रत्यक्षविरोधे क्षणिकत्वानुमानं नोदेत्वबाधितविषयत्व-

भा॰ ज्ञानस्य क्षणिकत्वात्। एकस्य हि वस्तुदर्शिनो वस्त्वन्तरदर्शने सादृश्यप्रत्ययः स्यात्। न तु वस्तुदर्शको वस्त्वन्तरदर्शनाय क्षणान्तरमवतिष्ठते। विज्ञानस्य क्षणिकत्वात्सकृद्वस्तुदर्शनेनैव क्षयोपपत्तेः। तेनेदं सदृशमिति हि सादृश्यप्रत्ययो भवति। तेनेति दृष्टस्मरणमिदमिति वर्त्तमानप्रत्ययस्तेनेति दृष्टं स्मृत्वा यावदिदमिति वर्त्तमानं क्षणकालमवतिष्ठेत्। ततः क्षणवादहानिः।

अथ तेनेत्येवोपक्षीणः स्मार्त्तः प्रत्यय इदमिति चान्य एव वार्त्तमानिकः प्रत्ययः। क्षीयते ततः सादृश्यप्रत्ययानुपपत्तिस्तेनेदं सदृशमिति। अनेकदर्शिन एकस्याभावात्। व्यपदेशानुपपत्तिश्च द्रष्टृव्यदर्शनेनैवोपक्षया-दिज्ञानस्येदं दृष्ट*मदोऽद्राक्षमिति व्यपदेशानुपपत्तिर्दृष्ट-

---

व्या॰ स्याप्यनुमित्यङ्गत्वादिति भावः। इतश्च प्रत्यभिज्ञानं सादृश्यनिबन्धनो भ्रमो न भवतीत्याह। सादृश्येति॥ तदनुपपत्तौ हेतुमाह। ज्ञानस्येति॥ तस्य क्षणिकत्वेऽपि किमिति सादृश्यप्रत्ययो न सिध्यतीत्याशङ्क्याह। एकस्येति॥ अस्तु तर्हि वस्तुद्वयदर्शित्वमेकस्येति चेन्नेत्याह। न त्विति॥ उक्तमेवार्थं प्रपञ्चयति। तेनेत्यादिना॥

भवतु किन्तावतेति तत्राह। तेनेति॥ दृष्टमित्यवतिष्ठेत यदीति शेषः॥ क्षणिकत्वहानिपरिहारं शङ्कित्वा परिहरति। अथेत्यादिना॥ तत्र हेतुमाह। अनेकेति॥ परपक्षे दोषान्तरमाह। व्यपदेशेति॥ तदेव विवृणोति। इदमिति॥ व्यपदेशस्येऽनवस्थानासिद्धिं शङ्कित्वा दूषयति। अथेत्यादिना॥ अन्यो द्रष्टान्यश्च व्यपदेष्टेत्याशङ्क्य परिहरति। अथेत्यादिना॥ ज्ञास्य-

---

* पश्यामीति पाठान्तरः।

भा॰ वतो व्यपदेशस्य क्षणानवस्थानात्। अथावतिष्ठेत क्षणवादहा-
निः। अथादृष्टवतो व्यपदेशः सादृश्यप्रत्ययस्य तदानीं
जात्यन्धस्येव रूपविशेषव्यपदेशस्तथा सादृश्यप्रत्ययस्य सर्व्वमन्ध-
परम्परेति प्रसज्येत सर्व्वज्ञशास्त्रप्रणयनादि। न चैतदिष्यते।
अकृताभ्यागमकृतविप्रनाशदोषौ तु प्रसिद्धतरौ क्षणवादे।
दृष्टव्यपदेशहेतुः पूर्व्वोत्तरघटित एक एव हि शृङ्खलावत्प्र-
त्ययो जायत इति चेत्। तेनेदं सदृशमिति च। न वर्त्तमाना-
तीतयोर्भिन्नकालत्वात्तत्र वर्त्तमानप्रत्यय एकः शृङ्खलाव-
यवस्थानीयोऽतीतस्थापरस्तौ प्रत्ययौ भिन्नकालौ तदुभय-
प्रत्ययविषयस्पृक्चेच्छृङ्खलाप्रत्ययः। ततः क्षणद्वयव्यापित्वा-
देकस्य विज्ञानस्य पुनः क्षणवादे हानिः। ममतवतादिविशे-
षानुपपत्तेश्च सर्व्वसंव्यवहारालोपप्रसङ्गः। सर्व्वस्य च स्वसंवेद्य-
विज्ञानमात्रत्वे विज्ञानस्य च स्वच्छावबोधावभासमात्र-

---

आ॰ प्रणयनादीत्यादिशब्देन शास्त्रीयं साध्यसाधनादि गृह्यते। क्षणि-
कत्वपक्षे दूषणान्तरमाह। अकृतेति॥ व्यपदेशानुपपत्तिमुक्तां
समादधानः शङ्कते। दृष्टेति॥ सादृश्यप्रत्ययश्च शृङ्खलास्थानीयेन
प्रत्ययेनैव सेत्स्यतीत्याह। तेनेदमिति॥ अपसिद्धान्तप्रसक्त्या प्रत्या-
चष्टे। नेत्यादिना॥ तावेवोभौ प्रत्ययौ विषयौ तदवगाही चेन्मध्य-
वर्त्ती शृङ्खलावयवस्थानीयः प्रत्यय इति यावत्॥ क्षणानां मिथः
सम्बन्धस्तर्हि माभूदिति चेत्तत्राह। ममेति॥ व्यपदेशसादृश्यप्र-
त्ययानुपपत्तिस्तु स्थितैवेति चकारार्थः॥ यत्तु विज्ञानस्य दुःखा-
द्युपप्लुतत्वं तद्दूषयति। सर्व्वस्य चेति॥ शुद्धत्वात्तत्संसर्गासङ्गभा-
वाच्च न ज्ञानस्य दुःखादिसंभवः स्वसंवेद्यत्वाङ्गीकारादित्यर्थः॥
ज्ञानस्य शुद्धबोधैकस्वाभाव्यमसिद्धं दाडिमादिवन्नानाविधदुःखा-
द्यंशशबलत्वावभासादित्याशङ्क्याह। न चेति॥ तत्रैव हेत्वन्तरमाह।

भा॰ स्वाभाव्याभ्युपगमात्तद्धर्म्मिणस्तान्यस्याभावेऽनित्यदुःखशून्यानामात्मत्वाद्यनेककल्पनानुपपत्तिः। न च दाडिमादेरिव विरुद्धानेकांशवत्त्वं विज्ञानस्य स्वच्छावभासस्वाभाव्याद्विज्ञानस्य। अनित्यदुःखादीनां विज्ञानांशत्वे च सत्यनुभूयमानत्वाद्व्यतिरिक्तविषयत्वप्रसङ्गः। अथानित्यदुःखाद्यात्मैकत्वमेव विज्ञानस्य तदा तद्वियोगाद्विशुद्धिकल्पनानुपपत्तिः॥

संयोगिमलवियोगाद्धि विशुद्धिर्भवति। यथादर्शप्रभृतीनां। न तु स्वाभाविकेन धर्म्मेण कस्यचिद्वियोगो दृष्टः। न ह्यग्नेः स्वाभाविकेन प्रकाशेनौष्ण्येन वा वियोगो दृष्टः। यदपि पुष्पगुणानां रक्तत्वादीनां द्रव्यान्तरयोगेन वियोजनं दृश्यते तत्रापि संयोगपूर्व्वत्वमनुमीयते। वीजभावनया पुष्पफलादीनां गुणान्तरोत्पत्तिदर्शनात्। अतो विज्ञानस्य विशुद्धिकल्पनानुपपत्तिः। विषयविषय्याभासत्वञ्च

---

आ॰ अनित्येति॥ तेषां तद्धर्म्मत्वे सत्यनुभूयमानत्वात्ततोऽतिरिक्तत्वं स्यात्तद्धर्म्माणां धर्म्मिमात्रत्वाभावान्मेयानाञ्च मानादर्थान्तरत्वादतो यन्मेयं तज्ज्ञानांशा यथा घटादिमेयं च दुःखादीत्यर्थः। ज्ञानस्य दुःखादिधर्म्मा न भवति किन्तु स्वरूपमेवेति शङ्कामनुभाष्य दोषमाह। अथेत्यादिना॥

अनुपपत्तिमेव प्रकटयति। संयोगीत्यादिना॥ स्वाभाविकस्यापि वियोगोऽस्ति पुष्परक्तत्वादीनां तथोपलम्भादित्याशङ्क्याह। यदपीति॥ द्रव्यान्तरशब्देन पुष्पसम्बन्धिनोऽवयवास्तद्गतरक्तत्वाद्यारम्भका विवक्षिताः। विमतं संयोगपूर्व्वकं विभागवत्त्वान्मेषादिवदित्यनुमानाश्च स्वाभाविकस्य सति वस्तुनि नाशोऽस्तीत्यर्थः॥ अनुमानानुगुणं प्रत्यक्षं दर्शयति। वीजेति॥ कार्पासादिवीजे द्रव्यविशेषसम्पर्काद्रक्तादिवासनया पुष्पादीनां रक्तादि-

भा॰ यच्चमलत्वं परिकल्प्यते विज्ञानस्य तदप्यन्यसंसर्गाभावाद-
नुपपन्नं। न ह्यविद्यमानेन विद्यमानस्य संसर्गः स्यात्। असति
चान्यसंसर्गे यो धर्मो यस्य दृष्टः स तत्स्वभावत्वान्न तेन
वियोगमर्हति। यथाग्नेरौष्ण्यं सवितुर्वा प्रभा। तस्मा-
दन्यसंसर्गेण मलिनत्वं तद्विशुद्धिश्च विज्ञानस्येतीयं कल्प-
नान्धपरंपरेव प्रमाणशून्येत्यवगम्यते। यदपि तस्य विज्ञा-
नस्य निर्वाणं पुरुषार्थं कल्पयन्ति तत्रापि फलाश्र-
यानुपपत्तिः। कण्टकविद्धस्य हि कण्टकवेधजनितदुःख-
निवृत्तिफलं न तु कण्टकविद्धमरणे तद्दुःखनिवृत्तिफल-
स्याश्रय उपपद्यते। तद्वत्सर्व्वनिर्वाणेऽसति फलाश्रये
पुरुषार्थकल्पना व्यर्थैव। यस्य पुरुषशब्दवाच्यस्य हि सत्त्व-

---

आ॰ गुणोदयोपजन्मात्तत्संयोगिद्रव्यापगमादेव तत्पुष्पादिषु रक्तत्वा-
द्यपगतिरित्यर्थः॥ विशुद्ध्यनुपपत्तिमुपसंहरति। यत इति॥
कल्पनान्तरमनूद्य दूषयति। विषयविषयीति॥ कथं पुनर्ज्ञान-
स्यान्येन संसर्गाभावस्तस्य विषयेण संसर्गादित्याशङ्क्याह। न
हीति॥ यथान्यसंसर्गमन्तरेणापि ज्ञानस्य विषयविषय्याभास-
त्वमेवं स्यादिति चेत्तत्राह। असति चेति॥ कल्पनाद्वयमप्रामा-
णिकमनादेयमित्युपसंहरति। तस्मादिति॥ कल्पनान्तरमुत्था-
पयति। यदपीति॥ उपशान्तिर्निर्वाणशब्दार्थः॥ दूषयति।
तत्रापीति॥ फल्यभावेऽपि फलं स्यादिति चेन्नेत्याह। कण्टकेति॥
दार्ष्टान्तिकं विवृणोति। यस्य हीति॥ ननु त्वन्मतेऽपि वस्तुनो
ऽद्वयत्वात्तस्यासङ्गस्य केनचिदपि संयोगवियोगयोरयोगात्स्व-
त्वासम्भवे मोक्षासम्भवादितुल्यमित्याशङ्क्याह। यस्य पुन-
रिति॥ यद्यपि पूर्व्वं वस्तु वस्तुतो सङ्गमङ्गीक्रियते। तथापि
क्रियाकारकफलभेदस्याविद्यामात्रकृतत्वादभ्युपगते सर्व्वव्यवहार-
सम्भवान्न साम्यमिति भावः। ननु बाह्यार्थवादो विज्ञानवादश्च

उ॰ स वाऽयं पुरुषो जायमानः शरीरमभिसम्पद्य-

---

भा॰ स्यात्मनो विज्ञानस्य चार्थः परिकल्प्यते तस्य पुनः पुरुषस्य निर्वाणे कस्यार्थः पुरुषार्थ इति स्यात्। यस्य पुनरस्त्यनेकार्थदर्शी विज्ञानव्यतिरिक्त आत्मा तस्य दृष्टस्मरणदुःखसंयोगवियोगादि सर्व्वमेवोपपन्नमन्यसंयोगनिमित्तं कालुष्यं तद्वियोगनिमित्ता च विशुद्धिरिति । शून्यवादिपक्षस्तु सर्व्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते ॥ ७ ॥

यथैवैकस्मिन्देहे स्वप्नो भूत्वा मृत्यो रूपाणि कार्य्यकरणसङ्घातान्यतिक्रम्य स्वप्न आत्मज्योतिषास्त एवं स वै प्रकृतः पुरुषोऽयं जायमानः। कथं जायमान इत्युच्यते। शरीरं देहेन्द्रियसङ्घातमभिसम्पद्यमानः शरीर आत्म-

---

आ॰ निराकृतो शून्यवादो निराकर्त्तव्योऽपि कस्मान्न निराक्रियते तत्राह। शून्यवादीति॥ समस्तस्य वस्तुनः सत्त्वेन भानाभानाभ्यां सर्व्वेषां सविषयत्वाच्छून्यस्य चाविषयतया प्राप्त्यभावेन निराकरणानर्हत्वात्तद्विषयत्वे च शून्यवादिनैव विषयनिराकरणोक्त्या शून्यस्यापह्नवात्तस्य च स्फुरणास्फुरणयोः सर्व्वशून्यत्वायोगात्तद्वादिनश्च सत्त्वासत्त्वयोस्तदनुपपत्तेः सम्वृतेश्चाश्रयाभावादसम्भवात्तदाश्रयत्वे च शून्यस्य स्वरूपहानान्निराश्रयत्वे चासम्वृतित्वात्प्रामाणिकत्वादनिरासान्नादरः क्रियते तस्मिद्धं बुद्ध्याद्यतिरिक्तं नित्यसिद्धमनन्तशुद्धं कूटस्थमद्वयमात्मज्योतिरिति भावः॥७॥

प्रसङ्गागतं परपक्षं निराकृत्य श्रुतिव्याख्यानमेवानुवर्त्तयन्नुत्तरवाक्यतात्पर्य्यमाह । यथेति॥ एवमात्मदेहभेदेऽपि वर्त्तमानं जन्म तज्जन्मान्तरं चोपाददानः कार्य्यकरणान्यतिक्रामतीति शेषः । यतः स्वप्नजागरितसञ्चाराद्देहाद्यतिरेकवदिह लोक-

उ॰ मानः पाप्मभिः सꣳसृज्यते स उत्क्रामन्म्रियमाणः पाप्मनो विजहाति ॥ ८ ॥

---

भा॰ भावमापद्यमान इत्यर्थः । पाप्मभिः पाप्मसमवायिभिर्धर्माधर्माश्रयैः कार्य्यकरणैरित्यर्थः । संसृज्यते संयुज्यते स एवोत्क्रामञ्छरीरान्तरमूर्द्धं क्रामन् गच्छन् म्रियमाण इत्येतस्य व्याख्यानमुत्क्रामन्निति । तान्येव संश्लिष्टान् पाप्मरूपान् कार्य्यकरणलक्षणान् विजहाति तैर्वियुज्यते तान्परित्यजति । यथायं स्वप्नजागरितयोर्वर्त्तमान एवैकस्मिन्देहे पाप्मरूपकार्य्यकरणोपादानपरित्यागाभ्यामनवरतं सञ्चरति धिया समानः सन् । तथा सोऽयम्पुरुष उभाविहलोकपरलोकौ जन्ममरणाभ्यां कार्य्यकरणोपादानपरित्यागावनवरतं प्रतिपद्य आसंसारमोक्षात् सञ्चरति । तस्मात् सिद्धमस्यात्मज्योतिषो ऽन्यत्वं कार्य्यकरणरूपेभ्यः पाप्मभ्यः

---

आ॰ परलोकसञ्चारोऽप्यपि तदतिरेकस्तस्योच्यतेऽनन्तरवाक्येनेत्यर्थः । तस्मादुत्तरं वाक्यं गृहीत्वा व्याकरोति । स वा इत्यादिना ॥ पाप्मशब्दस्य लक्षणया तत्कार्य्यविषयत्वं दर्शयति । पाप्मसमवायिभिरिति॥ पाप्मशब्दस्य पापवाचित्वेऽपि कार्य्यसाम्याद्धर्मेऽपि वृत्तिं सूचयति । धर्माधर्मेति ॥ उक्तमर्थं दृष्टान्तत्वेनानुवदति । यथेति ॥ अवस्थाद्वयसञ्चारस्य लोकद्वयसञ्चारं दार्ष्टान्तिकमाह । तथेति ॥ इहलोकपरलोकावनवरतं सञ्चरतीति सम्बन्धः । सञ्चरणप्रकारं प्रकटयति । जन्मेति ॥ जन्मना कार्य्यकरणयोरुपादानमरणेन च तयोस्त्यागमविच्छेदेन लभमानो मोक्षादर्वागनवरतं सञ्चरं दुःखीभवतीत्यर्थः ॥ स वा इत्यादिवाक्यतात्पर्य्यमुपसंहरति । तस्मादिति॥ तच्छब्दार्थमेव स्फुटयति । संयोगेति॥

उ० तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदञ्च परलोकस्थानञ्च सन्ध्यं तृतीयꣳ स्वप्न-

---

भा० संयोगवियोगाभ्यां। न हि तद्धर्म्मत्वे सति तैरेव संयोगो वियोगो वा युक्तः ॥ ८ ॥

ननु नस्तो ऽस्तोभौ लोकौ यौ जन्ममरणाभ्यामनुक्रमेण सञ्चरति स्वप्नजागरिते एव। स्वप्नजागरिते तु प्रत्यक्षमवगम्येते न त्विहलोक परलोकौ केनचित्प्रमाणेन। तस्मादेते एव स्वप्नजागरिते इहलोकपरलोकाविति। उच्यते। तस्यैतस्य पुरुषस्य वै द्वे एव स्थाने भवतो न तृतीयं चतुर्थं वा। के ते इदं च यत्प्रतिपन्नं वर्त्तमानं जन्मशरीरेन्द्रियविषयवेदनाविशिष्टं स्थानं प्रत्यक्षतो ऽनुभूयमानं। परलोक एव स्थानं परलोकस्थानं। तच्च शरीरादिवियोगोत्तरकालानुभाव्यं। ननु स्वप्नोऽपि परलोकस्तथा च सति द्वे

---

आ० कथमेतावता तेभ्योऽन्यत्वं तत्राह। न हीति। स्वाभाविकस्य हि धर्म्मस्य सति स्वभावे कुतः संयोगवियोगौ वन्ह्यौष्ण्यादिष्वदर्शनात्कार्यकारणयोश्च संयोगविभागवशादस्वाभाविकत्वे सिद्धमात्मनस्तदन्यत्वमित्यर्थः ॥ ८ ॥

तस्येत्यादिवाक्यस्य व्यावर्त्त्यामाशङ्कामाह। नन्विति॥ अवस्थाद्वयमल्लोकद्वयसिद्धिरित्याशङ्क्याह। स्वप्नेति॥ कथं तर्हि लोकद्वयप्रसिद्धिरत आह। तस्मादिति॥ तत्रोत्तरत्वेनोत्तरवाक्यमुत्थाप्य व्याकरोति। उच्यत इति॥ स्थानद्वयप्रसिद्धिद्योतनार्थो वै शब्दः। अवधारणं विवृणोति। नेति॥ वेदना सुखदुःखादिलक्षणा आगमस्य परलोकसाधकत्वमभिप्रेत्याह। तच्चेति॥ अवधारणमाक्षिपति। नन्विति॥ तस्य स्थानान्तरत्वं दूषयति। नेति॥

उ॰ स्थानं तस्मिन्सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च ।

---

भा॰ एवेत्यवधारणमयुक्तं। न। कथं तर्हि। सन्ध्यं तत्। इहलोकपरलोकयोर्यः सन्धिस्तस्मिन्भवं सन्ध्यं यत्तृतीयं तत्स्वप्नस्थानं। तेन स्थानद्वित्वावधारणं। न हि ग्रामयोः सन्धिस्तावेव ग्रामावपेक्ष्य तृतीयत्वपरिगणनत्वमर्हति। कथं तर्हि पुनस्तस्य परलोकस्थानस्यास्तित्वमवगम्यते यदपेक्ष्य स्वप्नस्थानं सन्ध्यं भवेत्। यतस्तस्मिन्सन्ध्ये स्वप्नस्थाने तिष्ठन्भवन् वर्त्तमान एते उभे स्थाने पश्यति। के ते उभे। इदञ्च परलोकस्थानं च। तस्मात्सः स्वप्नजागरितव्यतिरेकेणोभौ लोकौ यौ धिया समानः सन्ननुसञ्चरति जन्ममरणसन्तानप्रबन्धेन। कथं पुनः स्वप्ने स्थितः सन्नुभौ लोकौ पश्यति। किमाश्रयः केन विधिनेत्युच्यते॥

---

आ॰ स्वप्नस्य लोकद्वयातिरिक्तस्थानत्वाभावे कथं तृतीयत्वप्रसिद्धिरित्याह। कथमिति॥ तस्य सन्ध्यत्वान्न स्थानान्तरत्वमित्युत्तरमाह। सन्ध्यं तदिति॥ सन्ध्यत्वं व्युत्पादयति। इहेति॥ यत्तत्स्वप्नस्थानं तृतीयं मन्यसे तदिहलोकपरलोकयोः सन्ध्यमिति सम्बन्धः॥ अस्य सन्ध्यत्वे फलितमाह। तेनेति॥ पूरणप्रत्ययश्रुत्या स्थानान्तरत्वमेव स्वप्नस्य किं न स्यादित्याशङ्क्य प्रथमश्रुतसन्ध्यशब्दविरोधान्मैवमित्याह। न हीति॥ परलोकास्तित्वे प्रमाणान्तरजिज्ञासया पृच्छति। कथमिति॥ प्रत्यक्षं प्रमाणमित्युत्तरमाह। यत इत्यादिना॥ स्वप्नप्रत्यक्षं परलोकास्तित्वे प्रमाणमित्युक्तं तदेवोत्तरवाक्येन स्फुटयितुं पृच्छति। कथमिति॥ कथं शब्दार्थमेव प्रकटयति। किमित्यादिना॥ उत्तरवाक्यमुत्तरत्वेनोत्थापयति। उच्यत इति।

उ॰ अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान्पाप्मन आनन्दाꣳश्च पश्यति ॥

---

भा॰ अथ कथं पश्यतीति । शृणु । यथाक्रम आक्रामत्यनेनेत्याक्रम आश्रयोऽवष्टम्भ इत्यर्थो यादृश आक्रमोऽस्य सोऽयं यथाक्रमः । अयं पुरुषः परलोकस्थाने प्रतिपत्तव्ये निमित्ते यथाक्रमो भवति यादृशेन परलोकप्रतिपत्तिसाधनेन विद्याकर्मपूर्वप्रज्ञालक्षणेन युक्तो भवतीत्यर्थः । तमाक्रमं परलोकस्थानायोन्मुखीभूतं प्राप्ताङ्कुरीभावमिव बीजं तमाक्रममाक्रम्यावष्टभ्याश्रित्योभयान्पश्यति बहुवचनं धर्माधर्मफलानेकत्वादुभयप्रकारानित्यर्थः । कांस्तान् पाप्मनः पापफलानि । न तु पुनः साक्षादेव पाप्मनां दर्शनं सम्भवति तस्मात्पापफलानि दुःखानीत्यर्थः । आनन्दांश्च

---

आ॰ तत्राथशब्दमुक्तप्रश्नार्थतया व्याकरोति । अथेति ॥ उत्तरभागमुत्तरत्वेन व्याचष्टे । शृण्विति ॥ यदुक्तं किमाश्रय इति तत्राह । यथाक्रम इति ॥ यदुक्तं केन विधिनेति तत्राह । तमाक्रममिति ॥ पाप्मशब्दस्य यथार्थत्वे सम्भवति किमिति फलविषयत्वं तत्राह । नत्विति ॥ साक्षादागमादृते प्रत्यक्षेणेति यावत् । पाप्मनामेव साक्षाद्दर्शनासम्भवस्तच्छब्दार्थः ॥ कथं पुनराद्ये वयसि पाप्मनामानन्दानाञ्च स्वप्ने दर्शनं तत्राह । जन्मान्तरेति ॥ यद्यपि मध्यमेव वयसि करणपाटवादैहिकवासनया स्वप्नो दृश्यते तथापि कथमन्तिमे वयसि स्वप्नदर्शनं तत्राह । बाभियेति ॥ फलानां छुन्नत्वमनपेक्ष्यतो मुक्तत्वं । यानीत्युपक्रमात्तानीत्युपसंस्थातव्यं । ऐहिकवासनावशादैहिकानामेव पाप्मनामानन्दानाञ्च स्वप्ने दर्शनसम्भवान्न स्वप्नप्रत्यक्षं परलोकसाधकमिति शङ्कते । तत्कथमिति ॥ परिहरति । उच्यत इति ॥ यद्यपि स्वप्ने

आ॰ धर्म्मफलानि सुखानीत्येतत्तानुभयान्याश्रनन्त्यान्द्रांश्च पश्यति जन्मान्तरदृष्ट वासनामयान् । यानि च प्रतिपन्न-व्यजन्मविषयाणि क्षुद्रधर्म्माधर्म्मफलानि धर्म्माधर्म्मप्रयुक्तो देवतानुग्रहाद्वा पश्यति । तत्कथमवगम्यते परलोकस्थान-भावि तत्पाश्चानं दर्शनं स्वप्न इत्युच्यते । यस्मादिह जन्मन्य-ननुभाव्यमपि पश्यति वस्तु । न च स्वप्नो नाम पूर्व्वं दर्शनं । पूर्व्वदृष्टस्मृतिर्हि स्वप्नः प्रायेण । तेन स्वप्नजागरितस्थान-व्यतिरेकेण स उभौ लोकौ । यदुक्तमादित्यादि वाह्यज्योतिषामभावे ऽयं कार्य्यकरणसङ्घातः पुरुषो येन ज्योतिषा व्यतिरिक्तेनात्मना ज्योतिषा व्यवहरतीत्युक्तं । तदेव नास्ति । यदादित्यादि ज्योतिषामभावगमनं । यत्रेदं विविक्तं स्वयं ज्योतिरुपलभ्येत ॥

---

आ॰ मनुष्यास्यामिन्द्रादिभावोऽननुभूतोऽपि भाति । तथापि तदपूर्व्व-मेव दर्शनमित्याशङ्क्याह । न चेति ॥ स्वप्नधिया भाविजन्मभा-विनोऽपि स्वप्ने दर्शनात्प्रायेणेत्युक्तं ॥ न च तदपूर्व्वदर्शनमपि सम्यग्ज्ञानमुत्थानप्रत्ययबाधात् । न चैवं स्वप्नधिया भाविजन्मासि-द्धिर्यथा ज्ञानमर्थाङ्गीकारादिति भावः ॥ प्रमाणफलमुपसंहरति । तेनेति ॥ स यत्रेत्यादिवाक्यस्य व्यवहितेन सम्बन्धं वक्तुं वृत्तम-नूद्याक्षिपति । यदित्यादिना ॥ वाह्यज्योतिरभावे सत्ययं पुरुषः कार्य्यकरणसङ्घातो येन सङ्घातातिरिक्तेनात्मज्योतिषा-गमनादिनिर्वर्त्तयति । तदात्मज्योतिरस्तीति ॥ यदुक्तमित्यनु-वादार्थः । विविक्तस्थानाभावं वक्तुं विशेषणाभावं तावद्दर्श-यति । तदेवेति ॥ आदित्यादिज्योतिरभावविशिष्टस्थानं यत्रे-त्युक्तं । तदेव स्थानं नास्ति विशेषणाभावादिति शेषः ॥

उ॰ स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्म्माय स्वेन भासा

---

भा॰ येन सर्व्वदैवायं कार्य्यकरणसङ्घातः संसृष्ट एवोपलभ्यते। तस्मादसत्समो ऽसन्नेव वा स्वेन विविक्तस्वभावेन ज्योतीरूपेणात्मेति। अथ क्वचिद्विविक्तः स्वेन ज्योतीरूपेणोपलभ्यते। बाह्याध्यात्मिकभूतभौतिकसंसर्गशून्यः। ततो यथोक्तं सर्व्वं भविष्यतीत्येतदर्थमाह। स यः प्रकृत आत्मा यत्र यस्मिन्काले प्रस्वपिति प्रकर्षेण स्वापमनुभवति। तदा किमुपादानः केन विधिना स्वपिति सन्ध्यं स्थानं प्रतिपद्यत इत्युच्यते। दृष्टस्य लोकस्य जागरितलक्षणस्य सर्व्वावतः सर्व्वमवतीति सर्व्वावान्। नायं लोकः कार्य्यकरणसङ्घातो विषयवेदनासंयुक्तः। सर्व्वावत्त्वमस्य व्याख्यातमन्नत्रयप्रकरणे। अथो ऽयं वा आत्मेत्यादिना। सर्व्वा वा भूतभौतिकमात्रा अस्य संसर्गकारणभूता विद्यन्त इति सर्व्वावान्सर्व्ववानेव सर्व्वावांस्तस्य सर्व्वावतो मात्रामेकदेशमवय-

---

आ॰ यथोक्तस्यागमाभावे हेतुमाह। येनेति। संसृष्टो बाह्यैर्ज्योतिर्भिरिति शेषः। व्यवहारभूमौ बाह्यज्योतिरभावाभावे फलितमाह। तस्मादिति। उत्तरग्रन्थमुत्तरत्वेनावतारयति। अथेत्यादिना। यथोक्तं सर्व्वं व्यतिरिक्तत्वं स्वयं ज्योतिष्ट्वमित्यादि। आह स्वप्नं प्रत्येतीति यावत्। उपादानशब्दः परिग्रहविषयः। कथमस्य सर्व्वावत्त्वं तदाह। सर्व्वावत्त्वमिति। संसर्गकारणभूताः सबाह्याध्यात्मादिविभागेनेति शेषः। किमुपादानमित्यस्योत्तरमुक्त्वा केन विधिनेत्यस्योत्तरमाह। स्वयमित्यादिना। आपाद्य

उ॰ स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति ॥ ९ ॥

---

भा॰ वमपादायापच्छिद्यादाय गृहीत्वा दृष्टजन्मवासनावासितः सन्नित्यर्थः । स्वयमात्मनैव विहत्य देहं पातयित्वा निःसम्बोधमापाद्य जागरिते ह्यादित्यादीनां चक्षुरादिष्वनुग्रहो देहव्यवहारार्थः । देहव्यवहारश्चात्मनो धर्म्माधर्म्मफलोपभोगप्रयुक्तः । धर्म्माधर्म्मफलोपभोगोपरमणमस्मिन्देहे आत्मकर्म्मोपरमकृतमित्यात्मास्य विहन्तेत्युच्यते । स्वयं निर्म्माय निर्म्माणं कृत्वा वासनामयं स्वप्नदेहं मायामयमिव निर्म्माणमपि तत्कर्म्मापेक्षत्वात्स्वयं कर्तृकमुच्यते । स्वेनात्मीयेन भासामात्रोपादानलक्षणेन । भासा दीप्त्या प्रकाशेन सर्व्ववासनात्मकेनान्तःकरणवृत्तिप्रकाशेनेत्यर्थः ॥

सा हि तत्र विषयभूता सर्व्ववासनामयी प्रकाशते । सा तत्र स्वयं भा उच्यते । तेन स्वेन भासाविषयभूतेन स्वेन

---

आ॰ प्रस्वपितीत्युत्तरत्रसम्बन्धः । कथं पुनरात्मनो देहविहन्तृत्वं आत्म-हेतुकर्म्मफलोपभोगोपरमाद्धि स विहन्यते तत्राह । जागरिते हीत्यादिना ॥ निर्म्माणविषयं दर्शयति । वासनामयमिति ॥ यथा मायावी मायामयं देहं निर्मिमीते तद्वदित्याह । माया-मयमिवेति ॥ कथं पुनरात्मनो यथोक्तं देहनिर्म्माणकर्तृत्वं कर्म्मकृतत्वात्तन्निर्म्माणस्येत्याशङ्क्याह । निर्म्माणमपीति ॥ स्वेन भासेत्यत्रेत्थं भावे तृतीया । करणे तृतीयां व्यावर्त्तयति । सा हीति ॥

तत्रेति स्वप्नोक्तिः । यथोक्तान्तःकरणवृत्तेर्विषयत्वेन प्रकाश-मानत्वेऽपि स्वभासो भवतु करणत्वमित्याशङ्क्याह । सा तत्रेति ॥

भा॰ च ज्योतिषा तद्विषयिणा विविक्तरूपेणालुप्तदृक् स्वभावेन तद्भारूपं वासनात्मकं विषयीकुर्व्वन् प्रस्वपिति। यदेवं वर्त्तनं तत्प्रस्वपितीत्युच्यते। अत्रैतस्यामवस्थायामेतस्मिन्काले यं पुरुष आत्मा स्वयमेव विविक्तज्योतिर्भवति बाह्याध्यात्मिकभूतभौतिकसंसर्गरहितं ज्योतिर्भवति। नन्वस्य लोकस्य मात्रोपादानं कृतं। कथं तस्मिन् सत्यत्रायं पुरुषः स्वयं ज्योतिर्भवतीत्युच्यते। नैष दोषो विषयभूतमेव हि तत्। तेनैव चात्रायं पुरुषः स्वयं ज्योतिर्दर्शयितुं शक्यः। न त्वन्यथा सति विषये कस्मिंश्चित्सुषुप्तकाल इव। यदा पुनः सा भाः वासनात्मिका विषयभूतोपलभ्यमाना भवति तदासिः कोशादिव निष्कृष्टः सर्व्वसंसर्गरहितं चक्षुरादिकार्य्यकरणव्यावृत्तस्वरूपमलुप्तदृगात्मज्योतिः स्वेन

---

आ॰ स्वेन ज्योतिषेति कर्त्तरि तृतीया। स्वशब्दोऽत्रात्मविषयः। कोऽयं प्रस्वापो नाम तत्राह। यदेवमिति॥ विविक्तविशेषणं विवृणोति। बाह्येति॥ स्वप्ने स्वयं ज्योतिरात्मेत्युक्तमाक्षिपति। नन्वस्येति॥ वासनापरिग्रहस्य मनोवृत्तिरूपस्य विषयतया विषयत्वाभावादविवक्षमात्मनः स्वप्ने स्वयं ज्योतिष्ट्वमिति समाधत्ते। नैष दोष इति॥ कुतो वासनोपादानस्य विषयत्वमित्याशङ्क्य स्वयं ज्योतिष्ट्वश्रुतिसामर्थ्यादित्याह। तेनेति॥ मात्रादानस्य विषयत्वेनेति यावत्। तदेव व्यतिरेकमुखेनाह। नत्विति॥ यथा सुषुप्तिकाले व्यक्तस्य विषयस्याभावे स्वयं ज्योतिरात्मा दर्शयितुं न शक्यते तथा स्वप्नेऽपि॥ तस्मात्तत्र स्वयं ज्योतिष्ट्वश्रुत्या मात्रादानस्य विषयत्वं प्रकाशितमित्यर्थः। भवतु स्वप्ने वासनादानस्य विषयत्वं तथापि कथं स्वयं ज्योतिरात्मा शक्यते विविच्य दर्शयितुमित्याशङ्क्याह। यदा पुनरिति॥ अवभासयदवभास्यं वासनात्मक-

उ॰ न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान्पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते न तत्र

---

भा॰ रूपेणावभासयद्दृश्यते। तेनात्रायं पुरुषः स्वयं ज्योतिर्भवतीति सिद्धं ॥ ९ ॥

नन्वत्र कथं पुरुषः स्वयं ज्योतिर्येन जागरित इव ग्राह्यग्राहकादिलक्षणः सर्व्वो व्यवहारो दृश्यते। चक्षुराद्यनुग्राहकाश्चादित्याद्या लोकास्तथैव दृश्यन्ते यथा जागरिते। तत्र कथं विशेषोऽवधारणं क्रियते। अत्रायं पुरुषः स्वयं ज्योतिर्भवतीत्युच्यते वैलक्षण्यात्स्वप्नदर्शनस्य। जागरिते हीन्द्रियबुद्धि मनआलोकादिव्यापारसंकीर्णमात्मज्योतिः। इहतु स्वप्नइन्द्रियाभावात्तदनुग्राहकादित्याद्यालोकाभावाच्च विविक्तं केवलं भवति। तस्माद्विलक्षणं। ननु तथैव विषया उपलभ्यन्ते स्वप्नेऽपि। यथा जागरिते तत्र कथमिन्द्रियाभावाद्वैलक्षण्यमुच्यत इति।

---

आ॰ मन्तःकरणमिति शेषः॥ स्वप्नावस्थायामात्मनोऽवभासकान्तराभावे फलितमाह। तेनेति॥ ९॥

यदुक्तं स्वप्ने स्वयं ज्योतिरात्मेति तत्प्रकारान्तरेणाक्षिपति। नन्विति॥ अवस्थाद्वये विशेषाभावकृतं चोद्यं दूषयति। उच्यत इति॥ वैलक्षण्यं स्फुटयति। जागरिते हीति॥ मनस्तु स्वप्ने सदपि विषयत्वान्न स्वयं ज्योतिष्ट्वविघातीति भावः। उक्तं वैलक्षण्यं प्रतीतिमाश्रित्याक्षिपति। नन्विति॥ न तत्रेत्यादिवाक्यं व्याकुर्वन्नुत्तरमाह। उच्यत इति॥ प्रतीतिं घटयति। कथमिति॥ रथादि-

उ॰ वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्त्ता ॥ १० ॥

---

भा॰ शृणु । न तत्र विषयाः स्वप्ने रथादिलक्षणाः । तथा न रथयोगा रथे युज्यन्त इति रथयोगा अश्वादयस्तत्र न विद्यन्ते । न च पन्थानो रथमार्गा भवन्ति । अथ च रथान् रथयोगान्पथस्च सृजते स्वयं । कथं पुनः सृजते रथादिसाधनानां वृक्षादीनामभावे । नन्वुक्तमस्य लोकस्य सर्व्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्म्मायेत्यन्तःकरणवृत्तिरस्य लोकस्य वासनामात्रा तामपादाय रथादिवासनारूपान्तःकरणवृत्तिस्तदुपलब्धिनिमित्तेन कर्म्मणा चोद्यमाना दृश्यत्वेन व्यवतिष्ठते तदुच्यते । स्वयं निर्म्मायेति । तदेवाह रथादीन्सृजत इति । ननु तत्र करणं वा करणानुग्राहकाणि वादित्यादिज्योतींषि तदवभास्या वा रथादयो विषया विद्यन्ते तद्वासनामात्रन्तु केवलं तदुपलब्धिकर्म्मनिमित्तचोदितोद्भूतान्तःकरणवृत्त्या-

---

आ॰ वृत्तिमाक्षिपति । कथं पुनरिति ॥ वासनामयीवृत्तिरित्युत्तरमाह । उच्यत इति ॥ तदुपलब्धिनिमित्तेनेत्यत्र तच्छब्देन वासनात्मिका मनोवृत्तिरेवोक्ता । उक्तमेव प्रपञ्चयति । नन्वित्यादिना ॥ तदुपलब्धिर्वासनोपलब्धिस्तत्र यत्कर्म्मनिमित्तं तेन चोदिततया योद्भूतान्तःकरणवृत्तिस्तयाश्रयावस्था तदाश्रयं तदात्मकं तद्वासनारूपं दृश्यत इति योजना ॥ तथापि कथमात्मज्योतिः स्वप्ने केवलं सिध्यति तत्राह । तद्यस्येति ॥ तथा कोशादसिर्विविक्तो भवति तथा दृश्यायाः बुद्धेर्विविक्तमात्मज्योतिरिति केवल्यं साधयति । असिरिवेति ॥ तथा रथाद्यभाववदिति यावत् ॥ सुखान्येव

भा॰ अयं दृश्यते। तथाच ज्योतिषो दृश्यन्ते सुप्तदृश्यसदात्म-
ज्योतिरत्र केवलमसिरिव कोशादिविक्तं। तथा न तत्रा-
नन्दाः सुखविशेषाः मुदो हर्षाः पुत्रादिलाभनिमित्ताः
प्रमुदस्त एव प्रकर्षोपेताः॥

अथ चानन्दादीन् सृजते। तथा न तत्र वेशान्ताः
पल्वलाः पुष्करिण्यस्तडागा स्रवन्त्यो नद्यो भवन्ति। अथ
वेशान्तादीन् सृजते वासनामात्ररूपान्। यस्मात् स हि
कर्त्ता। तद्वासनाश्रयचित्तवृत्त्युद्भवनिमित्तकर्म्म हेतुत्वेनेत्य-
वोचाम तस्य कर्त्तृत्वं न तु साक्षादेव तत्र क्रिया सम्भवति
तत्र साधनाभावात्। न हि कारकमन्तरेण क्रिया सम्भवति।
न च तत्र हस्तपादादीनि क्रियाकारकाणि सम्भवन्ति।
यत्र तु तानि विद्यन्ते जागरिते तत्रात्मज्योतिरवभा-
सितैः कार्य्यकरणैर्यादिवासनाश्रयान्तःकरणवृत्त्युद्भवनि-
मित्तं कर्म्म निर्वर्त्त्यते तेनोच्यते स हि कर्त्तेति। तदुक्तमा-

---

आ॰ विशिष्यन्त इति विशेषाः सुखसामान्यानीत्यर्थः॥ तथेत्यानन्दाद्य-
भावो दृष्टान्तितः। अल्पीयांसि सरांसि पल्वलशब्देनोच्यते।
स हि कर्त्तेत्यत्र हि शब्दो यस्मादित्युक्तस्तस्मात्सृजतीति शेषः॥
कुतोऽस्य कर्तृत्वं सहकार्य्याभावादित्याशङ्क्याह। तद्वासनेति॥
तच्छब्देन वेशान्तादिग्रहणं। तदीयवासनाधारचित्तपरिणाम-
त्वेनोद्भवति यत्कर्म्म तस्य हृज्यमाननिदानत्वेनेति यावत्॥ मुख्यं
कर्तृत्वं वारयति। नत्विति॥ तत्रेति स्वप्नोक्तिः। साधनाभावे
ऽपि स्वप्ने क्रिया किं न स्यादित्याशङ्क्याह। न हीति॥ तर्हि
स्वप्ने तान्यपि भविष्यन्ति नेत्याह। न चेति। तर्हि पूर्व्वोक्तमपि
कर्तृत्वं कथमिति चेत्तत्राह। यत्रत्विति॥ उक्तेऽर्थे वाक्योपक्र-
ममनुकूलयति। तदुक्तमिति॥ उपक्रमे मुख्यं कर्तृत्वं इष्टलोप·

उ० तदेते श्लोका भवन्ति ॥ स्वप्नेन शारीरमभि प्रहत्यासुप्तः सुप्तानभिचाकशीति । शुक्रमादाय

भा० त्मनैवायं ज्योतिषास्ते पल्ययते कर्म्म कुरुत इति । तच्चापि न परमार्थतः स्वतः कर्तृत्वं चैतन्यज्योतिषावभासकत्व-व्यतिरेकेण । यच्चैतन्यात्मज्योतिषान्तःकरणद्वारेणावभास-यति । कार्य्यकरणानि तदवभासितानि कर्म्मसु व्याप्रियन्ते कार्य्यकरणानि । तत्र कर्तृत्वमुपचर्य्यत आत्मनः । तदुक्तं ध्यायतीव लेलायतीवेति तदेवानूद्यते स हि कर्त्तेतीव हेत्वर्थं ॥ १० ॥

तदेतस्मिन्नुक्तेऽर्थे एते श्लोका मन्त्रा भवन्ति । स्वप्नेन स्वप्नभावेन शारीरं शरीरमभिप्रहत्य निश्चेष्टमापाद्या-सुप्तः स्वयमलुप्तदृगादिशक्तिस्वाभाव्यात्सुप्तान्वासनाकारो-द्भूतानन्तःकरणवृत्त्याश्रयान् बाह्याध्यात्मिकान् सर्व्वानेव भावान् स्वेन रूपेण प्रत्यस्तमितान् सुप्तानभिचाकशीत्य-

आ० चारिकमिति विशेषमाशङ्क्याह । तच्चापीति ॥ परमार्थतश्चैत-न्यज्योतिषो व्यापारवदुपाध्यवभासकत्वव्यतिरेकेण स्वतो न कर्तृत्वं वाक्योपक्रमेऽपि विवक्षितमित्यर्थः ॥ आत्मनो वाक्योपक्रमे कर्तृ-त्वमौपचारिकमित्युपसंहरति । यदिति ॥ स हि कर्त्तेत्यौपचा-रिकं कर्तृत्वमित्युच्यते चेत्तस्य ध्यायतीवेत्यादिनोक्तत्वात्पुनरुक्ति-रित्याशङ्क्याह । तदुक्तमिति ॥ अनुवादे प्रयोजनमाह । हेत्वर्थ-मिति ॥ स्वप्ने रथादिकर्त्ताविति शेषः ॥ १० ॥

तदेते श्लोका भवन्तीत्येतत्प्रतीकं गृहीत्वा व्याचष्टे ॥ एते इति ॥ उक्तोऽर्थः स्वयं ज्योतिष्ट्वादिः । शरीरमिति स्वार्थे तद्धितः । स्वयमसुप्तत्वे हेतुमाह । अलुप्तेति ॥ व्याख्येयं पदमादाय व्याचष्टे ।

उ॰ पुनरेति स्थानꣳ हिरण्मयः पुरुष एकहꣳसः ॥ ११ ॥ प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा । स ईयतेऽमृतो यत्र कामꣳ हिरण्मयः पुरुष एकहꣳसः ॥ १२ ॥ स्वप्नान्त

---

भा॰ शुक्रमादाय इत्यादि ... पश्यत्यवभासयतीत्यर्थः । शुक्रं शुद्धं ज्योतिष्मदिन्द्रियमात्रारूपमादाय गृहीत्वा पुनः कर्मणा जागरितस्थानमेत्यागच्छति हिरण्मयो हिरण्मय इव चैतन्यज्योतिःस्वभावः पौरुषः पुरुष एकहंसः एक एव हन्तीत्येकहंसः । एको जाग्रत्स्वप्नेहलोकपरलोकादीन् गच्छतीत्येकहंसः ॥ ११ ॥ तथा प्राणेन पञ्चवृत्तिना रक्षन्परिपालयन्नन्यथा मृतभ्रान्तिः स्यादवरं निकृष्टमनेकाशुचिसङ्घातत्वादत्यन्तबीभत्सं कुलायं नीडं शरीरं स्वयं तु बहिस्तस्मात्कुलायाच्चरित्वा । यद्यपि शरीरस्थ एव स्वप्नं पश्यति तथापि तत्सम्बन्धाभावात्तत्स्थ इवाकाशो बहिश्चरित्वेत्युच्यते । अमृतः स्वयममरणधर्मा ईयते गच्छति । यत्र कामं यत्र यत्र कामो विषयेषूद्भूतवृत्तिर्भवति तं तं कामं वासनारूपेणोद्भूतं गच्छति ॥ १२ ॥ किञ्च स्वप्नान्ते

---

व्या॰ शुक्रमित्यादिना ॥ उक्तमनूद्य पदान्तरमवतार्य व्याकरोति । शुक्रमभिचाकशीतीति ॥ तथाशब्दः स्वप्नगतविशेषसमुच्चयार्थः । किमिति स्वप्ने प्राणेन शरीरमात्मा पालयति तत्राह । अन्यथेति ॥ बहिश्चरित्वेत्ययुक्तं शरीरस्थस्य स्वप्नोपलम्भादित्याशङ्क्याह । यद्यपीति ॥ तत्सम्बन्धाभावाद्बहिश्चरित्वेत्युच्यते इति सम्बन्धः ॥ देहस्थस्यैव तदसम्बन्धे दृष्टान्तमाह । तत्स्थ इति ॥

उ० उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि । उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥ १३ ॥

आराममस्य पश्यन्ति न तं पश्यति कश्चनेति । तन्नायतं बोधयेदित्याहुः ॥

---

भा० स्वप्नान्ते उच्चावचमुच्चं देवादिभावमवचं तिर्यगादिभावं निकृष्टं तदुच्चावचमीयमानो गम्यमानः प्राप्नुवन्रूपाणि देवो द्योतनावान् कुरुते निर्वर्तयतीति वासनारूपाणि बहून्यसंख्येयानि । उत अपि स्त्रीभिः सह मोदमान इव जक्षदिव हसन्निव वयस्यैः । उत इव अपि भयानि बिभेत्येभ्य इति भयानि सिंहव्याघ्रादीनि पश्यन्निव ॥ १३ ॥

आराममारमणमाक्रीडामनेन निर्मितां वासनारूपामस्यात्मनः पश्यन्ति सर्वे जनाः । ग्रामं नगरं स्त्रियमन्नाद्यमित्यादिवासनानिर्मितमाक्रीडनरूपं न तं पश्यति । तं न पश्यति कश्चन । कष्टं भो वर्तते अत्यन्तविविक्तं दृष्टिगोचरमापन्नमप्यहो भाग्यहीनता लोकस्य यच्छक्यदर्शनमप्यात्मानं तं न पश्यति । लोकं प्रत्यनुक्रोशं दर्शयति श्रुतिः ।

---

आ० स्वप्नस्थं विशेषान्तरमाह । किञ्चेति ॥ उच्चावचं विषयीकृत्य तेन तेनात्मना स्वेनैव स्वयं गम्यमान इति यावत् ॥ ११ ॥ १२ ॥ १३ ॥

आरामं विवृणोति । ग्राममित्यादिना ॥ न तमित्यादेस्तात्पर्यमाह । कष्टमिति ॥ दृष्टिगोचरापन्नमपि न पश्यतीति सम्बन्धः । कष्टमित्यादिनोक्तं प्रपञ्चयति । अहो इति ॥ श्लोकानां तात्पर्यमुपसंहरति । अतश्चेति ॥ वाक्यान्तरमादाय तात्पर्यमु-

उ० दुर्भिषज्यꣳ हास्मै भवति यमेष न प्रतिपद्यते ।

---

भा० अत्यन्तविविक्तः स्वयंज्योतिरात्मा स्वप्ने भवतीत्यभिप्रायः। तं नायतं बोधयेदित्याहुः । प्रसिद्धिरपि लोके विद्यते स्वप्न आत्मज्योतिषो व्यतिरिक्तत्वे । काऽसौ । तमात्मानं सुप्तमायतं सहसा भृशं न बोधयेदित्याहुरेवं कथयन्ति चिकित्सकादयो जना लोके । नूनं ते पश्यन्ति जाग्रद्देहादिन्द्रियद्वारतोऽपसृत्य केवलो बहिर्वर्त्तत इति यत आहुः ॥

तं नायतं बोधयेदिति । तत्र च दोषं पश्यन्ति । भृशं ह्यसौ बोध्यमानः। तानीन्द्रियद्वाराणि सहसा प्रतिबोध्यमानो न प्रतिपद्यत इति । तदेतदाह दुर्भिषज्यं हास्मै भवति यमेव न प्रतिपद्यत इति । तमिन्द्रियद्वारदेशं यस्माद्देशाच्छुक्लमादाद्यापसृतस्तमिन्द्रियदेशमेष आत्मा पुनर्न प्रतिपद्यते । कदाचिद्व्यत्यासेनेन्द्रियमात्राः प्रवेशयति । तत

---

आ० आकाङ्क्षापूर्वकमक्षराणि व्याकरोति । तमित्यादिना ॥ तेषामभिप्रायमाह । नूनमिति ॥ इन्द्रियाण्येव द्वाराण्यस्येतीन्द्रियद्वारो जाग्रद्देहस्तस्मादिति यावत् ॥

तथापि सहसासौ बोध्यतां का हानिरित्याशङ्क्याह । तत्रेति ॥ सहसा बोध्यमानत्वं सप्तम्यर्थः । किमत्र प्रमाणमित्याशङ्क्यानन्तरवाक्यमवतार्य व्याचष्टे । तदेतदाहेत्यादिना ॥ पुनरप्रतिपत्तौ दोषप्रसङ्गं दर्शयति । कदाचिदिति ॥ व्यत्यासप्रवेशस्य कार्यं दर्शयन्दुर्भिषज्यमित्यादि व्याचष्टे । तत इति ॥ उक्तां प्रसिद्धिमुपसंहरति । तस्मादिति ॥ इत्थमनूद्य मतान्तरमुत्थापयति । अथो खल्वित्यादिना ॥ इतिशब्दो यस्मादर्थे । तदेव मतान्तरं स्फोरयति । नेत्यादिना ॥ उक्तमङ्गीकृत्य फलं पृच्छति । यद्येव

उ॰ अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायं पुरुषः

---

भा॰ आन्ध्यबाधिर्य्यादिदोषप्राप्तो दुर्भिषज्यं दुःखभिषक्कर्मता ह्यस्मै देहाय भवति दुःखेन चिकित्सनीयोऽसौ देहो भवतीत्यर्थः। तस्मात्प्रसिद्धापि स्वप्ने स्वयं ज्योतिष्ट्वमस्य गम्यते। स्वप्नो भूत्वातिक्रान्तो मृत्यो रूपाणीति। तस्मात् स्वप्ने स्वयं ज्योतिरात्मा अथो अपि खल्वन्य आहुर्जागरितदेश एवास्यैष यः स्वप्नः। न सन्ध्यं स्थानान्तरमिहलोकपरलोकाभ्यां व्यतिरिक्तं। किं तर्हि इहलोक एव जागरितदेशः। यद्येवं किं स्यात: शृणु ततो यद्भवति यदा जागरितदेश एवायं स्वप्नस्तदायमात्मा कार्य्यकरणेभ्यो न व्यावृत्तस्तैर्मिश्रीभूतः। अतो न स्वयं ज्योतिरात्मेत्यतः स्वयं ज्योतिष्ट्वबाधनायान्य आहुर्जागरितदेश एवास्यैष इति। तत्र च हेतुमाचक्षते। जागरितदेशत्वे यानि हि यस्माद्धस्त्या-

---

आ॰ मिति॥ स्वप्नो जागरितदेश इत्येवं यदीष्टमतश्च किं स्यादिति प्रश्नार्थः॥ फलं प्रतिज्ञाय प्रकटयति। शृण्विति॥ मतान्तरोपन्यासस्य स्वमतविरोधित्वमाह। इत्यत इति॥ स्वप्नस्य जाग्रद्देशत्वं दूषयति। तदसदिति॥ तस्य जाग्रद्देशत्वाभावे फलितमाह। तस्मादिति॥ स्वप्ने बाह्यज्योतिषः सम्भवो नास्तीत्यत्र प्रमाणमाह। तदुक्तमिति॥ बाह्यज्योतिरभावेऽपि स्वप्ने व्यवहारदर्शनात्तत्र स्वयं ज्योतिष्ट्वमात्मनोऽनुमन्तव्यमित्युपसंहरति। तस्मादिति॥ कथं पुनर्विद्यायामनुक्तायां सहस्रदानवचनमित्याशङ्क्य वृत्तं कीर्त्तयति। स्वयं ज्योतिरिति॥ मृत्यो रूपाण्यतिक्रामतीत्यत्र च कार्य्यकरणव्यतिरिक्तत्वमात्मनो दर्शितमित्याह। अति-

उ॰ स्वयं ज्योतिर्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्द्ध्वं विमोक्षाय ब्रूहीति ॥ १४ ॥

---

भा॰ दीनि पदार्थजातानि जाग्रज्जागरितदेशे पश्यति लौकिकस्तान्येव सुप्तोऽपि पश्यतीति। तदसत्। इन्द्रियोपरमात्। उपरतेषु हीन्द्रियेषु स्वप्नान् पश्यति। तस्मान्नान्यस्य ज्योतिषस्तत्र सम्भवोऽस्ति। तदुक्तं न तत्र रथा न रथयोगा इत्यादि। तस्मादस्त्ययं पुरुषः स्वयं ज्योतिर्भवतीत्येव स्वयं ज्योतिरात्मास्तीति स्वप्ननिदर्शनेन प्रदर्शितं। अतिक्रामति मृत्यो रूपाणीति च। क्रमेण सञ्चरन्निहलोकपरलोकादीनिहलोकपरलोकादिव्यतिरिक्तः। तथा जाग्रत्स्वप्नकुलायाभ्यां व्यतिरिक्तः। तत्र च क्रमसञ्चारान्नित्यश्चेत्येतत्प्रतिपादितं याज्ञवल्क्येन। अतो विद्यानिष्क्रियार्थं सहस्रं ददामीत्याह जनकः। सोऽहमेवं बोधितस्त्वया भगवते तुभ्यं सहस्रं

---

आ॰ क्रामतीति॥ लोकद्वयसञ्चारवशादुक्तमर्थमनुद्रवति। क्रमेणेति॥ आदिशब्दस्तत्तद्देहादिविषयः॥ स्थानद्वयसञ्चारवशादुक्तमनुभाषते। तथेति॥ इहलोकपरलोकाभ्यामिवेति यावत्। लोकद्वये स्थानद्वये च क्रमसञ्चारप्रयुक्तमर्थान्तरमाह। तत्र चेति॥ आत्मनः स्वयं ज्योतिषो देहादिव्यतिरिक्तस्य नित्यस्य ज्ञापितत्वादित्यतः शब्दार्थः॥ कामप्रश्नस्य निर्णीतत्वान्निराकाङ्क्षत्वमिति शङ्कां वारयति। विमोक्षायेति॥ सम्यग्बोधस्तद्धेतुरिति यावत्॥ ननु स एव प्रागुक्तो नासौ वक्तव्योऽस्ति तत्राह। तदुपयोगीति॥ अयमित्युक्तात्मप्रत्ययोक्तिः। तादर्थ्यात्पदार्थज्ञानस्य वाक्यार्थज्ञानशेषत्वादिति यावत्॥ पदार्थस्य वाक्यार्थवहिर्भावं दूषयति। तदेकदेश एवेति॥ कामप्रश्नो नाद्यापि निर्णीत इत्यतो-

उ॰ स वा एष एतस्मिन्सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च ।

---

भा॰ ददामि । विमोक्षस्य कामप्रश्नो मयाभिप्रेतः । तदुपयोग्योऽयं तादर्थ्यात्तदेकदेश एव । अतस्त्वां नियोक्ष्यामि समस्तकामप्रश्ननिर्णयश्रवणेन विमोक्षायात ऊर्द्ध्वं ब्रूहि । येन संसाराद्विप्रमुच्येयं । तत्प्रसादाद्विमोक्षपदार्थैकदेशनिर्णयहेतोः सहस्रदानं ॥ १४ ॥

यत्प्रस्तुतमात्मनैवायं ज्योतिषाऽऽस्त इति तत्प्रत्यक्षतः प्रतिपादितं । अत्रायं पुरुषः स्वयं ज्योतिर्भवतीति । स्वप्ने यत्तूक्तं स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणीति । तत्रैतदाशङ्क्यते । मृत्यो रूपाण्येवातिक्रामति न मृत्युं । प्रत्यक्षं ह्येतत् । स्वप्ने कार्य्यकरणव्यावृत्तस्यापि मोदत्रासादिदर्शनं । तस्मान्नूनं नैवायं मृत्युमतिक्रामति । कर्म्मणो हि मृत्योः

---

आ॰ तदवाक्यं गमकमित्याह । यत इति ॥ कामप्रश्नस्यानिर्णीतत्वादिति यावत् । तेनापेक्षितेन हेतुनेत्यर्थः ॥ विमोक्षशब्दस्य सम्यग्ज्ञानविषयत्वं सूचयति । येनेति ॥ सम्यग्ज्ञानप्राप्तौ गुरुप्रसादस्य प्राधान्यं दर्शयति । तत्प्रसादादिति ॥ ननु विमोक्षपदार्थो निर्णीतोऽन्यथा सहस्रदानस्याकिञ्चित्करत्वप्रसङ्गादत आह । विमोक्षेति ॥ १४ ॥

उत्तरकण्डिकामवतारयितुं वृत्तं कीर्त्तयति । यत्प्रस्तुतमिति ॥ आत्मनैवेत्यादिना यदात्मनः स्वयं ज्योतिष्ट्वं ब्राह्मणादौ प्रस्तुतं तदत्रायमित्यादिना प्रत्यक्षतः स्वप्ने प्रतिपादितमिति सम्बन्धः । उक्तमर्थमाक्षरमनूद्य चोद्यमुत्थापयति । यत्तूक्तमिति ॥ मृत्युं नातिक्रामतीत्यत्र हेतुमाह । प्रत्यक्षं हीति ॥ इच्छाद्वेषादिदर्शिवि-

भा॰कार्य्यं मोहचौर्य्यादि दृश्यते। यदि च मृत्युना बद्ध एवायं स्वभावतस्ततो विमोक्षो नोपपद्यते। न हि स्वभावात्कश्चिद्विमुच्यते। अथ स्वभावो न भवति मृत्युस्ततस्तस्मान्मोक्ष उपपत्स्यते। यथासौ मृत्युरात्मीयो धर्म्मो न भवति ततः प्रदर्शनाबात ऊर्द्धं विमोक्षाय ब्रूहीत्येवं जनकेन पर्य्यनुयुक्तो याज्ञवल्क्यस्तद्दिदर्शयिषया प्रववृते। स वै प्रकृतः स्वयं ज्योतिः पुरुषः। एष यः स्वप्ने दर्शित एतस्मिन् संप्रसादे सम्यक् प्रसीदत्यस्मिन्निति सम्प्रसादः। जागरिते देहेन्द्रियव्यापारशतसन्निपातजं हित्वा कालुष्यं तेभ्यो विप्रमुक्त ईषत्प्रसीदति स्वप्ने। इह तु सुषुप्ते सम्यक् प्रसीदतीत्यतः सुषुप्तं सम्प्रसाद उच्यते। तीर्णो हि तदा सर्व्वान् शोकान् भवति।

---

आ॰ म्द्दार्थः॥ तथापि कुतो मृत्युमतिक्रामति तत्राह। तस्मादिति॥ कार्य्यस्य कारणादन्यत्र प्रसक्त्ययोगादिति यावत्॥ उक्तमुपपादयति। कर्म्मणो हीति॥ अतः स्वप्नं गतो मृत्युं कर्म्माख्यं नातिक्रामतीति शेषः॥ मा तर्हि मृत्योरतिक्रमोऽभून्नो दोषस्तत्राह। यदि चेति॥ स्वभावादपि मृत्योर्विमुक्तिमाशङ्क्याह। न हीति॥ उक्तं हि न हि स्वभावो भावानां व्यावर्त्ततौष्ण्यवदग्नेरिति॥ कथं तर्हि मोक्षोपायसिद्धिरित्याशङ्क्याह। यथेति॥ एवं च प्रश्न प्रागेव राज्ञा कृतेति दर्शयन्नुत्तरमुत्थापयति। यथेत्यादिना॥ तद्दिदर्शयिषयेत्यत्र तच्छब्देन मृत्योरतिक्रमणं गृह्यते॥ वैशब्दस्य प्रसिद्धार्थत्वमुपेत्य सशब्दार्थमाह। स वै प्रकृत इति॥ एषशब्दमनूद्य व्याकरोति। एष इति॥ सम्यक्प्रसादे स्थित्वा मृत्युमतिक्रामतीति शेषः॥ सुषुप्तस्य सम्प्रसादत्वं साधयति। जागरित इत्यादिना॥ तत्र वाक्यशेषमनुकूलयति। तीर्णो हीति॥ भवतु सम्यक् प्रसादः सुषुप्तं स्थानं तथापि किमायातमित्यत आह। स वा इति॥ पूर्व्वोक्तेन क्रमेण सम्यक्प्रसादे सुषुप्ते स्थित्वा सम्यक्-

भा॰ सलिल एको द्रष्टेति हि वक्ष्यति। सुषुप्तस्थमात्मानं स वा
एष एतस्मिन् सम्प्रसादे क्रमेण सम्प्रसन्नः सन् सुषुप्ते स्थित्वा
कथं सम्प्रसन्नः। स्वप्नात्सुषुप्तं प्रविविक्षुः स्वप्नावस्थ एव रत्वा
रतिमनुभूय मित्रबन्धुजनदर्शनादिना चरित्वा विहृत्या-
नेकधा चरणफलं श्रममुपलभ्येत्यर्थः। दृष्ट्वैव न कृत्वेत्यर्थः।
पुण्यञ्च पुण्यफलं पापञ्च पापफलं। न तु पुण्यपापयोः साक्षा-
द्दर्शनमस्तीत्यवोचाम। तस्मान्न पुण्यपापाभ्यामनुबद्धः। यो
हि करोति पुण्यपापे स ताभ्यामनुबध्यते। न हि दर्शनमा-
त्रेणैतदनुबद्धः स्यात्। तस्मात् स्वप्नो भूत्वा मृत्युमतिक्राम-
त्येव न मृत्युरूपाण्येव केवलं। अतो न मृत्योरात्मस्वभाव-
त्वाशङ्का। मृत्युश्चेत्स्वभावोऽस्य स्वप्नेऽपि कुर्य्यात्। न तु करो-

---

आ॰ प्रसन्नः सन् मृत्युमतिक्रामतीत्यर्थः॥ उक्तमर्थमुपपादयितुमा-
काङ्क्षामाह। कथमिति॥ रत्वेत्यादि व्याकुर्व्वन्परिहरति। स्वप्ना-
दिति॥ पुण्यपापशब्दयोर्यथाश्रुतार्थत्वमाशङ्क्याह। न त्विति।
अवोचामो भयान्पाप्मन आनन्दांश्च पश्यतीत्यत्रेति शेषः॥ पुण्य-
पापयोर्दर्शनमेव न करणमित्यत्र फलितमाह। तस्मादिति॥
तद्द्रष्टुरपि तदनुबन्धः स्यादित्याशङ्क्यातिप्रसङ्गान्मैवमित्याह।
यो हीत्यादिना॥ पुण्यपापाभ्यामात्मनोऽसंस्पर्शे फलितमाह।
तस्मादिति॥ मृत्योरतिक्रमणे किं स्यादित्याशङ्क्याह। अतो नेति॥
मृत्योरस्वभावत्वमुपपादयति। मृत्युश्चेदिति॥ इष्टापत्तिमाशङ्क्-
याह। न त्विति॥ अनन्वागतवाक्यादसङ्गवाक्याच्चेत्यर्थः॥ मोक्ष-
शास्त्रप्रामाण्यादपि मृत्योरस्वभावत्वमित्याह। स्वभावश्चेदिति॥
इतश्च मृत्युः स्वभावो न भवतीत्याह। न त्विति॥ स्वभावा-
दिति छेदः॥ तस्याः स्वभावत्वे बाध्यमर्थं कथयति। अत इति॥
मृत्युमेव व्याचष्टे। पुण्यपापाभ्यामिति॥ स्वप्ने मृत्योः स्वभावत्वा-
भावेऽपि जाग्रदवस्थायां कर्तृत्वमात्मनः स्वभावः। तथा च निय-

उ॰ पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नायैव

भा॰ ति स्वभावश्चेत्क्रियाऽस्य निर्मोक्षतैव स्यात्। न तु स्वभावः स्वप्नेऽभावात्। अतो विमोक्षोऽस्योपपद्यते मृत्योः पुण्यपापाभ्यां न तु जागरितेऽस्य स्वभाव एव। न हि बुद्ध्याद्युपाधिकृतं हि तत्। तच्च प्रतिपादितं सादृश्यात्। ध्यायतीव लेलायतीवेति॥

तस्मादेकान्तेनैव स्वप्ने मृत्युरूपातिक्रमणाच्च स्वाभाविकत्वाशङ्काऽनिर्मोक्षता वा। तच्च चरित्वेऽपि चरणफलं श्रममुपलभ्येत्यर्थः। सम्प्रसादानुभवोत्तरकालं पुनः प्रतिन्यायं यथान्यायं यथागतं नि आयो न्यायः। अयनमायो निगमनं पुनः पूर्वगमनवैपरीत्येन यदागमनं स प्रतिन्यायः यथागतं पुनरागच्छतीत्यर्थः। प्रतियोनि यथास्थानं स्वप्नस्थानं। स्वप्नस्थानाद्धि सुषुप्तिं प्रतिपन्नः। स यथा स्थानमेव पुनरागच्छतीति। प्रतियोन्या द्रवति स्वप्नायैव

आ॰ मेन तस्य मृत्योरतिक्रमो न सिध्यतीति शङ्क्यते। न त्विति। औपाधिकत्वात्कर्तृत्वस्य स्वाभाविकत्वाभावादात्मनो मृत्योरतिक्रमः सम्भवतीति परिहरति। नेति॥ कथमौपाधिकत्वं कर्तृत्वस्य सिद्धवदुच्यते तत्राह। तच्चेति॥ ध्यायतीवेत्यादौ सादृश्यवाचकादिव शब्दादौपाधिकत्वं कर्तृत्वस्य प्रागेव दर्शितमित्यर्थः॥ जागरितेऽपि कर्तृत्वस्य स्वभाविकत्वाभावे फलितमाह॥ तस्मादिति॥ मृत्योः स्वाभाविकत्वाशङ्काभावकृतं फलमाह। अनिर्मोक्षता वेति॥ वाशब्दो नञर्थकार्थः॥ पुण्यञ्च पापञ्चेत्येतदन्तं वाक्यं व्याख्याय पुनरित्यादि व्याचष्टे। तच्च इति॥ सम्प्रसादमित्याय सुषुप्तिमनुभूयोत्तरकालमिति यावत्॥ स्थानात् स्थानान्तरप्राप्ता-

उ॰ स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो
ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भग-

---

भा॰ स्वप्नस्थानायैव। ननु स्वप्ने न करोति पुण्यपापे तयोः फल-
मेव पश्यतीति कथमवगम्यते। यथा जागरिते तथा करो-
त्येवं स्वप्नेऽपि तुल्यत्वाद्दर्शनस्येति। न। यत आह स आत्मा
यत्किञ्चित्तत्र स्वप्ने पश्यति पुण्यपापफलं। अनन्वागतोऽ
ननुबद्धस्तेन दृष्टेन भवति। नैवानुबद्धो भवतीति। यदि हि
स्वप्ने कृतमेव तेन स्यात्तेनानुबध्येत। स्वप्नादुत्थितोऽपि सम-
न्वागतः स्यात्। न च तल्लोके स्वप्नकृतकर्म्मणाऽनन्वागतत्व-
प्रसिद्धिः। न हि स्वप्नकृतेनागसागस्कारिणमात्मानं मन्यते
कश्चित्। न च स्वप्नदृष्टं श्रुत्वा लोकस्तं गर्हयति परिहरति

---

आ॰ वध्यासं वक्तुं पुनःशब्दः॥ प्रतिन्यायमित्यस्यावयवार्थमुक्त्वा विव-
क्षितमर्थमाह। पुनरिति॥ सम्प्रसादादूर्द्ध्वमिति यावत्॥ जाग-
रितात् स्वप्नं ततः सुषुप्तं गच्छतीति पूर्व्वंगमनं ततो वैपरीत्येन सुषु-
प्तात् स्वप्नं जागरितं वा गच्छतीति यदागमनं स प्रतिन्यायक्रमेव
सङ्क्षिपति। यथेति॥ यथा स्थानमाद्रवतीत्येतद्विवृणोति। स्वप्न-
स्थानादिति॥ उक्तेऽर्थे वाक्यं पातयति। प्रतियोनीति॥ किमर्थं
यथा स्थानमागमनं तदाह। स्वप्नस्थानायैवेति॥ स यदित्या-
दिवाक्यस्य व्यावर्त्यामाशङ्कामाह। नन्विति॥ तत्र वाक्यमुत्तर-
त्वेनावतार्य्य व्याकरोति। यत आहेति॥ अननुबद्ध इत्यस्यार्थं
स्फुटयति। नैवेति॥ स यदित्यादिवाक्यस्याक्षरार्थमुक्त्वा तात्प-
र्य्यमाह। यदि हीति॥ तेनात्मनेति यावत्। स्वप्ने कृतं कर्म्म
पुनस्तेनेत्युक्तं॥ अनुबन्धे दोषमाह। स्वप्नादिति॥ इष्टापत्तिमा-
शङ्क्याह। न चेति॥ स्वप्नकृतेन कर्म्मणा जाग्रदवस्थस्य पुरुषस्या-
न्वागतत्वप्रसिद्धिरिति यदुच्यते तत्र व्यवहारभूमौ सम्मतिपत्र-
मित्यर्थः॥ स्वप्नदृष्टेन जाग्रद्भूतस्य न सम्मतिरित्यत्र स्वानुभवं

उ॰ वते सहस्रं ददाम्यत ऊर्द्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥

---

भा॰ वा। अतोऽनन्वागत एव तेन भवति। तस्मात्स्वप्ने कुर्वन्निवोपलभ्यते न तु क्रियाऽस्ति परमार्थतः। उतेव स्त्रीभिः सह मोदमान इवेति। श्लोक उक्तः। आख्यातारश्च स्वप्नस्य सहैव सङ्गेनाचक्षते। हस्तिनोऽद्य घटीकता धावन्तीव मया दृष्टा इति। अतो न तस्य कर्तृत्वमिति। कथं पुनरस्याऽ कर्तृत्वमिति। कार्य्यकरणैर्मूर्त्तैः संश्लेषो मूर्त्तस्य स तु क्रियाहेतुर्दृष्टः। न ह्यमूर्त्तः कश्चित्क्रियावान्दृष्टोऽतोऽमूर्त्तश्चात्मातोऽसङ्गो यस्माच्चासङ्गो ह्ययं पुरुषस्तस्मादन्वागतस्तेन स्वप्नदृष्टेन। अत एव न क्रियाकर्तृत्वमस्य कथञ्चिदुपपद्यते। कार्य्यकरणसंश्लेषेण हि कर्तृत्वं स्यात्स च संश्लेषः संयोगोऽस्य

---

आ॰ दर्शयति। न हीति॥ यथोक्तेऽनुभवे लोकस्यापि सम्मतिं दर्शयति। न चेति॥ तत्र फलितमाह। अत इति॥ कथं तर्हि स्वप्ने कर्तृत्वप्रतीतिस्तत्राह। तस्मादिति॥ स्वप्नस्याभासत्वाच्च न तत्र वस्तुतोऽस्ति क्रियेत्याह। उतेवेति॥ तदाभासत्वे लोकप्रसिद्धिमनुकूलयति। आख्यातारश्चेति॥ स्वप्नस्याभासत्वे फलितमाह। अत इति॥ अनन्वागतवाक्यं प्रतिज्ञारूपं व्याख्यायासङ्गवाक्यं हेतुरूपमवतारयितुमाकाङ्क्षामाह। कथमिति॥ मूर्त्तस्य मूर्त्तान्तरेण संयोगे क्रियोपलम्भादमूर्त्तस्य तदभावादात्मनश्चामूर्त्तत्वेनासंयोगो क्रियायोगादकर्तृत्वसिद्धिरित्युत्तरं हेतुवाक्यार्थकथनपूर्व्वकं कथयति। कार्य्यकरणैरित्यादिना॥ आत्मनोऽसङ्गत्वेनाकर्तृत्वमुक्तं समर्थयते। अत एवेति॥ अतःशब्दार्थं विशदयति। कार्य्येति॥ क्रियावत्त्वाभावे जन्ममरणादिराहित्यं कौटस्थ्यं फलतीत्याह। तस्मादिति॥ कर्म्मप्रविवेकमुक्तमङ्गीक-

उ॰ स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञ-

---

भा॰ नास्ति यतोऽसङ्गो ह्ययं पुरुषः। तस्मादमृत एवमेवैतद्याज्ञवल्क्य। सोऽहं भगवते सहस्रं ददाम्यत ऊर्द्ध्वं विमोक्षायैव ब्रूहि। मोक्षपदार्थैकदेशस्य कर्म्मप्रविवेकस्य सम्यग्दर्शितत्वादत ऊर्द्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥

तत्रासङ्गो ह्ययं पुरुष इत्यसङ्गताकर्तृत्वे हेतुरुक्तः। उक्तञ्च पूर्व्वं कामवशात् स ईयते यत्र काममिति। कामस्य सङ्गोऽतोऽसिद्धो हेतुरुक्तः। असङ्गो ह्ययं पुरुष इति। न त्वेतदस्ति। कथं तर्ह्यसङ्ग एवेत्येतदुच्यते। स वा एष एतस्मिन् स्वप्ने स वै एष पुरुषः संप्रसादात्प्रत्यागतः स्वप्ने रत्वा

---

आ॰ हेति। एवमिति। तत्त्वविविक्तात्मज्ञाने दार्ढ्यं सूचयति। सोऽहमिति। नैराकाङ्क्ष्यं व्यावर्त्तयति। अत इति। कथं तर्हि सहस्रदानमित्याशङ्क्याह। मोक्षेति। कामप्रविवेकविषयनियोगमभिप्रेत्य पुनरनुक्रामति। अत ऊर्द्धमिति॥१५॥

उत्तरकण्डिकाया व्यावर्त्यां शङ्कामाह। तत्रेति। पूर्व्वकण्डिका सम्बन्धार्थः। भवत्वकर्तृत्वहेतुरसङ्गत्वं किन्तावतेत्याशङ्क्याह। उक्तञ्चेति। पूर्व्वश्लोकोपन्यासदशायामिति यावत्। कर्म्मवशात् स्वप्नहेतुकर्म्मसामर्थ्यादित्यर्थः। आत्मनः स्वप्ने कामकर्म्मसम्बन्धेऽपि किमिति नासङ्गत्वं तत्राह। कामस्येति। हेत्वसिद्धिं परिहरति। न त्विति। न चेद्धेतोरसिद्धत्वं किं तर्हि कथं तत्सिद्धिरिति पृच्छति। कथमिति। हेतुसमर्थनार्थमुत्तरग्रन्थमुत्थापयति।

उ० वल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥

स वा एष एतस्मिन्बुद्धान्ते रत्वा चरित्वा

---

भा० चरित्वा यथा कामं दृष्ट्वैव पुण्यं च पापं चेति सर्वं पूर्ववद्बुद्धान्तायैव जागरितस्थानाय। तस्मादसङ्ग एवायं पुरुषः। यदि स्वप्ने सङ्गवान् स्यात्कामी ततस्तत्सङ्गजैर्दोषैर्बुद्धान्ताय प्रत्यागतो लिप्येत ॥ १६ ॥

यथासौ स्वप्नेऽसङ्गत्वात्स्वप्नसङ्गजैर्दोषैर्जागरिते प्रत्यागतो न लिप्यते। एवं जागरितसङ्गजैरपि दोषैर्न लिप्यत एव बुद्धान्ते। तदेतदुच्यते। स वा एष एतस्मिन् बुद्धान्ते जागरिते रत्वा चरित्वेत्यादि पूर्ववत्। यच्चात्र बुद्धान्ते किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इति। ननु दृष्ट्वैवेति कथमवधार्य्यते करोति च तत्र पुण्यपापे तत्फलञ्च

---

आ० असङ्ग इति। प्रतियोन्याद्रवतीत्येतदन्तं सर्व्वमित्युक्तं। स्वप्ने कर्तृत्वाभावस्तच्छब्दार्थः। उक्तमसङ्गत्वं व्यतिरेकमुखेन विशदयति। यदीति। सङ्गवानित्यस्य व्याख्यानं। कामीति। तत्सङ्गजैस्तत्र स्वप्नविषयविशेषेषु कामाख्यसङ्गवशादुत्पन्नैरपराधैरिति यावत्। न तु लिप्यते प्रायश्चित्तविधानस्यापि स्वप्नसूचिताशुभाख्यानिबर्हणार्थत्वादनुष्ठातानुसारित्वाभावादिति शेषः। १६ ॥

उक्तमर्थं दृष्टान्तीकृत्य जागरितेऽपि निर्लेपत्वमात्मनो दर्शयति। यथेत्यादिना। तत्र प्रमाणमाह। तदेतदिति। जाग्रदवस्थायामुक्तमकर्तृत्वमाक्षिपति। नन्विति। तत्र कल्पितं कर्तृत्वमित्युत्तरमाह। नेत्यादिना। तदेव विवृणोति। आत्मनैवेति। स्वतोऽकर्तृत्वे वाक्योपक्रमं संवादयति। तथा चेति। वाक्यार्थं सङ्क्षिपति। बुद्ध्यादीति। कर्तृत्वमिति शेषः। नन्वौपा-

उ॰ दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नान्तायैव ॥ १७ ॥

---

भा॰ पश्यति। न कारकावभासकत्वेन कर्तृत्वोपपत्तेः। आत्मनैवायं ज्योतिषाऽऽस्त इत्यादिनात्मज्योतिषावभासितः कार्य्यकरणसङ्घातो व्यवहरति। तेनास्य कर्तृत्वमुपचर्य्यते न स्वतः कर्तृत्वं। तथाचोक्तं ध्यायतीव लेलायतीवेति। बुद्ध्याद्युपाधिकृतमेव न स्वतः। इह तु परमार्थापेक्षयोपाधिनिरपेक्षमुच्यते। दृष्ट्वैव पुण्यञ्च पापञ्च न कृत्वेति तेन न पूर्व्वापरव्याघाताशङ्का। यस्मान्निरुपाधिकः परमार्थतो न करोति न लिप्यते क्रियाफलेन। तथा च व्यासेन भगवतोक्तं। अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः। शरीरस्थोऽपि कौन्तेय न करोति न लिप्यत इति। तथा सहस्रदानन्तु कामप्रश्नविवेकस्यादर्शितत्वात्। तथा स वा एष एतस्मिन् स्वप्ने स वा एष एतस्मिन् बुद्धान्त इत्येताभ्यां कण्डिकाभ्यामसङ्गतैव प्रतिपादिता। यस्माद्बुद्धान्ते कृते न

---

आ॰ धिकं कर्तृत्वं पूर्व्वमुक्तमिदानीं तन्निराकरणे पूर्व्वोत्तरविरोधः स्यादित्याह। इह त्विति। उपाधिनिरपेक्षः कर्तृत्वाभाव इति शेषः। तेनेत्युक्तं हेतुं स्फुटयति। यस्मादिति। आत्मनो लेपाभावे भगवद्वाक्यमपि प्रमाणमित्याह। तथा चेति। अवस्थात्रयेऽपि असङ्गत्वमनन्वागतत्वं चात्मनः सिद्धमेवेदिमोक्षपदार्थस्य निर्णीतत्वाज्जनकस्य नैराकाङ्क्षमित्याशङ्क्याह। तथेति। यथा मोक्षैकदेशस्य कर्म्मविवेकस्य दर्शितत्वात्पूर्व्वेन सहस्रदानमुक्तं तथाचापि तदेकदेशस्य कामविवेकस्य दर्शितत्वात्तद्दानं न तु कामप्रश्नस्य निर्णीतत्वादित्यर्थः। द्वितीयतृतीयकण्डिकयोक्ता-

भा॰ * स्वप्नान्तगतः सम्प्रसन्नोऽसम्बद्धो भवति स्त्र्यादिकार्थादर्शनात् तस्मात्स्वप्नपि स्थानेषु स्वतोऽसङ्ग एवायं। अतोऽमृतः स्थानत्रयधर्मविलक्षणः प्रतियोन्याद्रवति स्वप्नान्तायैव सम्प्रसादायेत्यर्थः। दर्शनवृत्तेः स्वप्नस्य स्वप्नशब्देनाभिधानदर्शनादन्तशब्देन च विशेषणोपपत्तेः। एतस्मा अन्ताय धावतीति च सुषुप्तं दर्शयिष्यति। यदि पुनरेवमुच्यते स्वप्नान्ते रत्वा चरित्वा एतावुभावन्तावनुसञ्चरति। स्वप्नान्तञ्च बुद्धान्तञ्चेति दर्शनात् स्वप्नान्तायैवेत्यत्रापि दर्शनवृत्तिरेव स्वप्नदर्शन इति। तथापि न किञ्चिद्दुष्यति असङ्गता हि सिषाधयिषिता सिध्यत्येव। यस्माज्जागरिते दृष्ट्वैव पुण्यञ्च पापञ्च रत्वा चरित्वा च स्वप्नान्तमागतो न जागरितदोषेणानुगतो भवति॥ १७ ॥

---

आ॰ तमर्थं सङ्गृह्णाति। तथेत्यादिना॥ यथा प्रथमकण्डिकया कर्म्मविवेकः प्रतिपादितस्तथेति यावत्॥ कण्डिकान्तिमतयार्थं सङ्क्षिप्योपसंहरति। यस्मादिति॥ अवस्थात्रयेऽप्यसङ्गत्वे किं सिद्ध्यति तदाह। अत इति॥ प्रतीकमादाय स्वप्नान्तशब्दार्थमाह॥ प्रतियोन्येति॥ कथं पुनस्तस्य सुषुप्तविषयत्वमत आह। दर्शनवृत्तेरिति॥ दर्शनं वासनामयं तस्य वृत्तिर्यस्मिन्निति व्युत्पत्त्या स्वप्नो दर्शनवृत्तिस्तस्य स्वप्नशब्देनैव सिद्धत्वादन्तशब्दवैयर्थ्यात्स्वप्नान्तो लयो यस्मिन्निति व्युत्पत्त्या स्वप्नान्तशब्देन सुषुप्तग्रहे सत्यन्तशब्देन स्वप्नव्यावृत्त्युपपत्तेरत्र सुषुप्तस्थानमेव स्वप्नान्तशब्दितमित्यर्थः॥ तत्रैव वाक्यशेषानुगुण्यमाह। एतस्मा इति। स्वप्नान्तशब्दस्य स्वप्ने प्रयोगदर्शनादिहापि तस्यैव तेन ग्रहणमिति पक्षान्तरमुत्थाप्याङ्गीकरोति। यदीत्यादिना॥ सिषाधयिषितार्थसिद्धौ हेतुमाह। यस्मादिति॥ १७॥

---

* चीर्यादिनेति पुस्तकान्तरपाठः।

उ॰ तद्यथा महामत्स्य उभे कूलेऽनुसञ्चरति पूर्वञ्चापरञ्चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तञ्च बुद्धान्तञ्च ॥ १८ ॥

---

भा॰ एवमयं पुरुष आत्मा स्वयंज्योतिः कार्य्यकरणविलक्षणस्तत्प्रयोजकाभ्यां कामकर्म्मभ्यां विलक्षणो यस्मादसङ्गो ह्ययं पुरुषोऽसङ्गत्वादित्ययमर्थः । स वा एष एतस्मिन् सम्प्रसाद इत्याद्याभिस्तिसृभिः कण्डिकाभिः प्रतिपादितः । तत्रासङ्गतैवात्मनः कुतो यस्माज्जागरितात् स्वप्नं स्वप्नाच्च सम्प्रसादः सम्प्रसादाच्च पुनः स्वप्नं क्रमेण बुद्धान्तं जागरितं बुद्धान्ताच्च पुनः स्वप्नान्तमित्येवमनुक्रमसञ्चारेण स्थानत्रयस्य व्यतिरेकः साधितः पूर्व्वश्चोपन्यस्तोऽयमर्थः । स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणीति । तं विस्तरेण प्रतिपाद्य केवलं दृष्टान्तमात्रमवशिष्टं तद्वक्ष्यामीत्यारभ्यते । तत्रैतस्मिन्यथा प्रदर्शितोऽर्थे दृष्टान्तोऽयमुपादीयते यथा लोके महामत्स्यो महांश्चासौ मत्स्यश्च नादेयेन स्रोतसाऽहार्य्य इत्यर्थः । स्रोतश्च विष्टम्भयति । स्वच्छन्दचारी उभे कूले नद्याः

---

आ॰ कण्डिकात्रयेण सिद्धमर्थमनुवदति । एवमिति ॥ आत्मनः स्थानत्रयसञ्चारादसिद्धोऽसङ्गत्वहेतुरित्याशङ्कते । तत्रेति । प्रतिज्ञाहेत्वोर्हेतुनिर्द्धारणं सप्तम्यर्थः ॥ सप्रयोजकत्वाद्देहद्वयाद्वैलक्षण्यन्तु दूरनिरस्तमित्येवशब्दार्थः । एवमुदितहेतुसमर्थनार्थं महामत्स्यवाक्यमिति सङ्गतिमभिप्रेत्य सङ्गत्यन्तरमाह । पूर्व्वश्चेति ॥ यथा प्रदर्शितोऽर्थोऽसङ्गत्वं कार्य्यकरणविनिर्म्मुक्तत्वञ्च

उ० तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विप-

भा० पूर्व्वस्थापरस्थानुक्रमेण सञ्चरति । स सञ्चरन्नपि कूलद्वयं तन्मध्यवर्त्तिनोदकस्रोतोवेगेन न परवशीक्रियते । एवमेवायं पुरुष एतावुभा अन्ता अनुसञ्चरति । कौ तौ । स्वप्नान्तञ्च बुद्धान्तञ्च । दृष्टान्तप्रदर्शनफलं तु मृत्युरूपः कार्य्यकरणसङ्घातः । स च तत्प्रयोजकाभ्यामनात्मधर्मो ऽयञ्चात्मैतस्माद्विलक्षण इति विस्तरतो व्याख्यातं ॥ १८ ॥

अत्र च स्वप्नजागरितानुसञ्चारेण स्वयं ज्योतिष आत्मनः कार्य्यकरणसङ्घातव्यतिरिक्तस्य कामकर्म्मभ्यां विविक्तताक्ता । अतो नायं संसारधर्म्मवानुपाधिनिमित्तमेव तस्य संसारित्वमविद्याध्यारोपितमित्येष समुदायार्थ उक्तः । तत्र च जागरित्स्वप्नसुषुप्तस्थानानां चयाणां विप्रकीर्णरूप उक्तो न पुञ्जीकृत्यैकत्वदर्शितः । यस्माज्जागरिते संवृत्तः स मृत्युः स कार्य्यकरणसङ्घात उपलभ्यतेऽविद्यया । स्वप्ने तु कामसंयुक्तो

आ० असङ्गत्वमप्रकम्प्यत्वं स्वच्छन्दचारित्वं प्रकटयति । सञ्चरन्नपीति ॥ किं पुनर्दृष्टान्तेन दार्ष्टान्तिके लभ्यते तदाह । दृष्टान्तेति ॥ १८ ॥

श्लोकवाक्यमवतारयितुं वृत्तं कीर्त्तयति । अत्र चेति ॥ पूर्व्वसन्दर्भः सप्तम्यर्थः । देहद्वयेन सम्प्रयोजकेन वस्तुतोऽसम्बन्धे फलितमाह । अत इति ॥ कथं तर्हि तत्र संसारित्वधीरित्याशङ्क्याह । उपाधीति ॥ औपाधिकस्यापि वस्तुत्वमाशङ्क्याह । अविद्येति ॥ उत्तरग्रन्थमवतारयन्भूमिकामाह । तत्रेति ॥ जागरणस्वप्नान्विते विप्रकीर्णं विभिन्नं रूपमस्येत्यात्मा तथा पुञ्जीकृत्य विनिश्चितं सर्व्वविशेषसमादायेति यावत् । एकत्वेति वाक्योक्तिः । तत्र हेतुं वदन् जाग्रद्दृष्टान्तेन विवक्षि-

उ॰ रिपत्य श्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र

---

भा॰ मृत्युरूपविनिर्मुक्त उपलभ्यते पुनर्बुद्धान्तमागतो बुद्धान्ताय । सुषुप्ते चासङ्गोऽसङ्गो भवतीत्यसङ्गतापि दृश्यते । एकवाक्यतया तूपसंह्रियमाणं फलं नित्यमुक्तबुद्धशुद्धस्वभावतास्य नैकत्र पुञ्जीकृत्य प्रदर्शितेति तत्प्रदर्शनाय कण्डिकाऽऽरभ्यते । सुषुप्ते ह्येवंरूपतास्य वक्ष्यमाणा इति । तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माभयं रूपमिति । यस्मादेवं रूपं विलक्षणं सुषुप्ते प्रविविच्यतमिति तत्कथमित्याह दृष्टान्तेनास्यार्थस्य प्रकटीभावो भवतीति । तत्र दृष्टान्त उपादीयते । तद्यथास्मिन्नाकाशे भौतिके श्येनो वा सुपर्णो वा । सुपर्णशब्देन क्षिप्रः श्येन उच्यते । यथाकाशेऽस्मिन् विहृत्य विपरिपत्य श्रान्तो नानापरिपतनकृ-

---

आ॰ नात्मसिद्धिरित्याह । यस्मादिति । ससङ्गत्वादेर्दृश्यमानरूपस्य मिथ्यात्वं सूचयति । अविद्ययेति । स्वप्नवाक्योऽविवक्षितत्वात्म-सिद्धिमाशङ्क्याह । स्वप्नेति । तर्हि सुषुप्तवाक्ये तत्सिद्धिर्नेत्याह । सुषुप्ते पुनरिति । तत्राप्यविद्यानिर्मोकेन प्रतिभातीति भावः । एवं पातनिकां कृत्वा श्येनवाक्यमादत्ते । एकवाक्यतयेति । पूर्व-वाक्यानामिति शेषः । कुत्र तर्हि यथोक्तमात्मरूपं पुञ्जीकृत्य प्रदर्श्यते तत्राह । सुषुप्ते हीति । तत्राभयमित्यविद्याराहित्य-मुच्यते सा च सुषुप्ते स्वरूपेण सत्यपि नाभिव्यक्ताऽऽभातीति द्रष्टव्यं । यस्मात्सुषुप्तेर्यथोक्तमात्मरूपं वक्ष्यते तस्मादिति यावत् । एवं रूप-मित्येतदेव प्रकटयति । विलक्षणमिति । कार्य्यकरणविनिर्मुक्तं कामकर्म्माविद्यारहितमित्यर्थः । स्थानद्वयं हित्वा कथं सुषुप्तं

उ॰ सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥ १९ ॥

---

भा॰ पक्षेण कर्म्मणा परिखिन्नः संहत्य पक्षौ सङ्गमय्य सम्प्रसार्य्य पक्षौ सम्यग्लीयतेऽस्मिन्निति संलायो नीडो नीडायैव ध्रियते स्वात्मनैव धार्य्यते स्वयमेव यथायं दृष्टान्त एवमेवायं पुरुष एतस्मा एतस्मै अन्ताय धावति अन्तशब्दवाच्यस्य विशेषणं। यत्र यत्र यस्मिन्नन्ते सुप्तो न कञ्चन न कञ्चिदपि कामं कामयते। तथा न कञ्चन स्वप्नं पश्यति न कञ्चन काममिति। स्वप्नबुद्धान्तयोरविशेषेण सर्व्वः कामः प्रतिषिध्यते कञ्चनेत्यविशेषिताभिधानात्। तथा न कञ्चन स्वप्नमिति। जागरितेऽपि यद्दर्शनं तदपि स्वप्नं मन्यन्ते। श्रुतिरत आह न कञ्चन स्वप्नं पश्यतीति। तथा च श्रुत्यन्तरं तस्य त्रय आवसथास्त्रयः स्वप्ना इति यथा दृष्टान्ते पक्षिणः परिपतनजश्रमापनुत्तये स्वनीडोपसर्पणमेवं जाग्र-

---

आ॰ प्रवेष्टुमिच्छतीति पृच्छति। तत्कथमिति। स्वप्नादौ दुःखानुभवात्तत्त्यागेन सुषुप्तं प्राप्नोतीत्याह। आहेति। यथोक्ता श्रुतिः स्थानात्स्थानान्तरप्राप्तिमभिधत्ते तथापि किं दृष्टान्तवचनेनेत्याशङ्क्याह। दृष्टान्तेनेति। अस्यार्थस्य सुषुप्तिप्राप्तिरूपस्येत्येतत्। स एवार्थस्तस्येति समन्वयः। परमात्माकाशं व्यावर्त्तयितुं भौतिकविशेषणं। महाकाशो मन्दवेगः श्येनः सुपर्णस्तु वेगवानस्य विग्रह इति भेदः। धारणे सौकर्य्यं वक्तुं स्वयमेवेत्युक्तं। स्वप्नजागरितयोरवसानमन्तमज्ञातं ब्रह्म। तथा न कञ्चन स्वप्नमिति स्वप्नजागरितयोरविशेषेण सर्व्वं दर्शनं निषिध्यत इति शेषः। स्वप्नविशेषणात् स्वाप्नदर्शननिषेधेऽपि कुतो जाग्रद्दर्शनं निषिध्यते

उ॰ ता वा अस्यैता हिता नाम नाड्यो यथा केशः

---

भा॰ त्वनयोः कार्य्यकरणसंयोगजक्रियाफलैः संयुज्यमानस्य पक्षिणः परिपतनज इव श्रमो भवति तच्छ्रमापनुत्तये स्वात्मनो नीडमायतनं सर्व्वसंसारधर्म्मविलक्षणं सर्व्वक्रियाकारकफलायासशून्यं स्वयमात्मानं प्रविशति ॥ १९ ॥

यद्यस्यायं स्वभावः सर्व्वसंसारधर्म्मशून्यतापरोपाधिनिमित्तत्वाच्चास्य संसारधर्म्मित्वं । यन्निमित्तञ्चास्य परोपाधिकृतं संसारधर्म्मित्वं सा चाविद्या । तस्या अविद्यायाः किं स्वाभाविकत्वमाहोस्वित्कामकर्म्मादिवदागन्तुकत्वं । यदि चागन्तुकत्वं ततो विमोक्ष उपपद्यते तस्याश्चागन्तुकत्वे कोपपत्तिः कथं वानात्मधर्म्मोऽविद्येति । सर्व्वानर्थबीजभूताया अविद्यायाः सतत्त्वावधारणार्थं परा कण्डिकाऽऽरभ्यते । ता

---

आ॰ तत्राह । जागरितेऽपीति ॥ कथमयमभिप्रायः श्रुतेरवगत इत्याशङ्क्याविशेषणसामर्थ्यादित्याह । अत आहेति ॥ जागरितस्यापि स्वप्नत्वे श्रुत्यन्तरं संवादयति । तथा चेति ॥ दृष्टान्तदार्ष्टान्तिकयोर्विवक्षितमंशं दर्शयति । यथेत्यादिना ॥ संयुज्यमानस्य श्येनस्येति शेषः ॥ सर्व्वसंसारधर्म्मविलक्षणमिति विशेषणं व्याचष्टे । सर्व्वेति ॥ १९ ॥

श्येनवाक्येनात्मनः सौषुप्तं रूपमुक्तमिदानीं नाडीखण्डस्य सम्बन्धं वक्तुं चोदयति । यद्यस्येति ॥ परः सत्त्वपाधिर्बुद्ध्यादिरसङ्गत्वतः स्वतो बुद्ध्यादिसम्बन्धासम्भवमुपेत्याह । यन्निमित्तञ्चेति ॥ सिद्धान्ताभिप्रायमगृह्य पूर्व्ववादी विकल्पयति । तस्या इति ॥ आगन्तुकत्वमस्वाभाविकत्वं ॥ आद्ये मोक्षानुपपत्तिं विवक्षित्वाह । यदि चेति ॥ अस्तु तर्हि द्वितीयोऽत्र मोक्षोपपत्तेरित्याशङ्क्याह । तस्याश्चेति ॥ माभूदविद्यात्मस्वभावस्तद्धर्म्मस्तु स्याद-

उ॰ सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा

---

भा॰ वा अस्य शिरःपाण्यादिलक्षणस्य पुरुषस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावता तावत्परिमाणेनाणिम्नाणुत्वेन तिष्ठन्ति तासु शुक्लस्य रसस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा एतैः शुक्लादिभी रसविशेषैः पूर्णा इत्यर्थः । एते च रसानां वर्णविशेषा वातपित्तश्लेष्मणामितरेतरसंयोगवैषम्यविशेषाद्विचित्रा बहवश्च भवन्ति । तास्वेवंविधासु नाडीषु सूक्ष्मासु बालाग्रसहस्रभेदपरिमाणासु शुक्लादिरसपूर्णासु सकलदेहव्यापिनीषु सप्तदशकं लिङ्गं वर्त्तते । तदाश्रिताः सर्व्वा वासना उच्चावचसंसारधर्म्मानुभवजनितास्तल्लिङ्गं वासनाश्रयं सूक्ष्मत्वात्स्वच्छं स्फटिकमणिकल्पं नाडीगतरसोपाधिसंसर्गवशाद्धर्म्माधर्म्मप्रेरितोद्भूतवृत्तिविशेषं स्त्रीरथहस्त्याद्याकार-

---

आ॰ स्वप्नान्तराभावादित्याह । कथं चेति । तयोरुत्तरत्वेनोत्तरग्रन्थमुत्थापयति । सर्व्वांगव्येति । तासां परमसूक्ष्मत्वं दृष्टान्तेन दर्शयति । यथेति । कथमन्नरसस्य वर्णविशेषप्राप्तिरित्याशङ्क्याह । वातेति । शुक्लस्यान्नस्य परिणामविशेषो वाताधिक्ये नीलो भवति पित्ताधिक्ये पिङ्गलो जायते श्लेष्मातिशये शुक्लो भवति पित्ताल्पत्वे हरितः साम्ये च धातूनां लोहित इति तेषां मिथः संयोगवैषम्यात्तारतम्याच्च विचित्रा बहवश्चान्नरसा भवन्ति तद्व्याप्तानां नाडीनामपि तादृशो वर्णो जायते । यदाहुः सिरा वातवहा नीलाः पित्तवहाः सिरा असृग्वहास्तु रोहिण्यो गौर्य्यः श्लेष्मवहाः सिरा इति सौश्रुते दर्शनादित्यर्थः । नाडीस्वरूपं

उ॰ अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्त्तमिव पतति ॥

---

भा॰ विशेषैर्वासनादिभिः प्रत्यवभासते । अथैवं सति यत्र यस्मिन् काले केचन शत्रवोऽन्ये वा तस्करा मामागत्य घ्नन्तीति मृषैव वासनानिमित्तः प्रत्ययोऽविद्याख्यो जायते तदेतदुच्यते । एनं स्वप्नदृशं घ्नन्तीवेति । तथा जिनन्तीव वशं कुर्व्वन्तीव । न केचन घ्नन्ति नापि वशीकुर्व्वन्ति केवलमविद्यावासनोद्भवनिमित्तं भ्रान्तिमात्रं । तथा हस्ती चैनं विच्छाययति विच्छादयति विद्रावयति धावतीवेत्यर्थो गर्त्तमिव पतति गर्त्तं जीर्णकूपादिकमिव पतन्तमात्मानमुपलक्षयति । तादृशी ह्यस्य मृषा वासनोद्भवति । अत्यन्तनिकृष्टा धर्म्मोद्भासितान्तःकरणवृत्त्याश्रया दुःखरूपत्वात् । किं बहुना यदेव जाग्रद्भयं पश्यति हस्त्यादिलक्षणं तदेव

---

आ॰ निरूप्य तत्र जागरिते लिङ्गशरीरस्य वृत्तिं दर्शयति । वासितेति । सर्वाभिधानस्यैव विवरणं । स्थूलानित्यादि । पञ्चभूतानि दशेन्द्रियाणि प्राणोऽन्तःकरणमिति सप्तदशकं । जागरिते लिङ्गशरीरस्य स्थितिमुक्त्वा स्वप्ने तत्स्थितिमाह । तल्लिङ्गमिति । विवक्षितां स्वप्ने स्थितिमुक्त्वा श्रुत्यक्षराणि योजयति । अथेत्यादिना । स्वप्ने धर्म्मादिनिमित्तवशान्मिथ्यैव लिङ्गं नानाकारमवभासते तन्मिथ्यात्वं लिङ्गानुगतमूलाविद्याकार्य्यत्वादविद्येति स्थिते सत्यथशब्दार्थमाह । एवं सतीति । तस्मिन्काले स्वप्नदर्शनं विशेषणमिति शेषः । इवशब्दार्थमाह । नेत्यादिना । उक्तोदाहरणेन समुचितोदाहरणान्तरमाह । तथेति । गर्त्तादिपतनप्रतिपत्तौ हेतुमाह ।

उ० यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यते

भा० भयरूपमत्यास्मिन् स्वप्ने विनैव हस्त्यादिरूपं भयमविद्या-
वासनया स्वपैवोद्भूतया मन्यते।

अथ पुनर्यत्राविद्यापकृष्यमाणा विद्या चोत्कृष्यमाणा किंविषया किंलक्षणा वेत्युच्यतेऽथ पुनर्यत्र यस्मिन् काले देव इव स्वयं भवति देवताविषया विद्या यदोद्भूता जागरितकाले तदोद्भूतया वासनया देवमिवात्मानं मन्यते स्वप्नेऽपि तदुच्यते। देव इव राजेव राज्यस्थोऽभिषिक्तः स्वप्नेऽपि राजाहमिति मन्यते। राजवासनावासित एवमत्यन्तप्रक्षीयमाणा विद्योद्भूता च विद्या सर्व्वात्मविषया। तदा स्वप्नेऽपि तद्भावभावितोऽहमेवेदं सर्व्वमस्मीति मन्यते। स यः सर्व्वात्मभावः सोऽस्यात्मनः परमो लोकः परम आत्मभावः स्वाभाविकः। यत्तु सर्व्वात्मभा-

---

आ० ताहशी स्त्रीति। ताहशत्वं विशदयति। अत्यन्तेति। यथोक्तवासनाप्रभवत्वं कथं मन्त्यपतनादेरवगतिमित्याशङ्क्याह। दुःखेति॥
यदेवेत्यादिश्रुतेरर्थमाह। किं बहुनेति॥ भयमित्यस्य भयरूपमिति व्याख्यानं। भयं रूप्यते येन तत्कारणं तथा हस्त्यादि नास्ति चेत्कथं स्वप्ने भातीत्याशङ्क्याह। अविद्येति॥ अथ यत्र देव इवेत्यादेस्तात्पर्य्यमाह। अथेति॥ तत्र तस्याः फलमुच्यत इति शेषः॥ तात्पर्य्यमुक्त्वा यथाशब्दार्थमुक्त्वा विद्याया विषयस्वरूपे प्रश्नपूर्व्वकं वदन्यत्रेत्यादेरर्थमाह। किं विषयेति॥ इवशब्दप्रयोगात्स्वप्न एवोक्त इति भ्रान्तिं वारयति। देवतेति॥ विद्येत्युपासितवस्तुक्ता। अभिषिक्तो राज्यस्थो जाग्रदवस्थायामिति शेषः॥ अहमेवेदमित्याद्यवतारयति। एवमिति॥ यथा विद्यायामपक-

उ॰ ऽथ यत्र देव इव राजेवाहमेवेदꣳ सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥ २० ॥

भा॰ वाह्वीयमावासमाजमपञ्चलेन दृश्यते नाहमसीति । तद्वस्थाऽविद्या तयाऽविद्यया ये प्रत्युपस्थापिता अनात्मभावा लोकास्तेऽपरमाः स्थावरान्तास्तान् संव्यवहारविषयांल्लोकाननपेक्ष्य अयं सर्वात्मभावः समस्तोऽनन्तरो वाह्यः सोऽस्य परमो लोकस्तस्मादपकृष्यमाणायामविद्यायां विद्यायाञ्च काष्ठां गतायां सर्वात्मभावो मोक्षः । यथा स्वयं ज्योतिष्ट्वं स्वप्ने प्रत्यक्षत उपलभ्यते तद्वद्विद्याफलमुपलभ्यत इत्यर्थः । तथाऽविद्यायामप्युत्कृष्यमाणायां तिरोधीयमानायाञ्च विद्यायामविद्यायाः फलं प्रत्यक्षत उपलभ्यते । अथ यत्रैनं घ्नन्तीव जिनन्तीवेति । त एते विद्याविद्ये कार्ये सर्वात्मभावः परिच्छिन्नात्मभावश्च । विद्यया शुद्धया सर्वात्मा भवति । अविद्यया चासर्वो भवति । अन्यतः कुतश्चित्प्रविभक्तो भवति ।

आ॰ अमावास्यां कार्यमुक्तं तदादित्यर्थः । यदेति कामरितोक्तिः । इदं चैतन्मयं चिन्मात्रमेव न तु मदतिरस्त्रेवास्ति तस्मादहं पूर्णोऽस्मीति जानातीत्यर्थः । सर्वात्मभावस्य परमत्वमुपपादयति । यत्रेत्यादिना । तत्र तेनाकारेणाविद्यावस्थितेत्याह । तदवस्थेति । तस्याः कार्यमाह । तयेति । समस्तत्वं पूर्णत्वमनन्तरत्वमेकरसत्वं । अवाह्यत्वं प्रत्युक्तं । योऽयं यथोक्तो लोकः सोऽस्यात्मनो लोकान्तरेभ्योऽन्यानपेक्ष्य परम इति सम्बन्धः । वाक्यार्थमुपसंहरति । तस्मादिति । मोक्षो विद्याफलमित्युत्तरत्र सम्बन्धः । तस्य प्रत्यक्षत्वं दृष्टान्तेन स्फुटयति । यथेति । विद्याफलवदविद्याफलमपि स्वप्ने प्रत्यक्षमित्युक्तमनुवदति । तथेति । विद्याफलमविद्याफल-

भा॰ यतो विभक्तो भवति तेन विरुध्यते । विरुद्धत्वाद्धन्यते जीयते विच्छाद्यते चासर्व्वविषयत्वे च भिन्नत्वादेतद्भवति समस्तस्य सन् कुतो भिद्यते केन विरुध्यते येन विरुध्येत विरोधाभावात् केन हन्यते जीयते विच्छाद्यते च ।

अत इदमविद्यायाः सतत्त्वमुक्तं भवति । सर्व्वात्मानं सन्तमसर्व्वात्मत्वेन ग्राहयत्यात्मनोऽन्यद्वस्त्वन्तरमविद्यमानं प्रत्युपस्थापयति । आत्मनः सर्व्वमापादयति । ततस्तद्विषयः कामो भवति । यतो भिद्यते कामतः क्रियामुपादत्ते ततः फलं । तदेतदुक्तं वक्ष्यमाणं च यत्र हि द्वैतमिव भवति तदि-तर इतरं पश्यतीत्यादि। इदमविद्यायाः सतत्त्वं सह कार्य्येण प्रदर्शितं । विद्यायाश्च कार्य्यं सर्व्वात्मभावः प्रदर्शितोऽ

---

आ॰ चेत्युक्तमुपसंहरति । ते एते इति । उक्तं फलद्वयं विभजते । विद्ययेति । असर्व्वो भवतीत्येतत्प्रकटयति । अन्यत इति । प्रविभागे फलमाह । यत इति । विरोधफलं कथयति । विरुद्धत्वादिति ।

अविद्याकार्य्यं निगमयति । असर्व्वेति । अविद्यायाश्चेत्परिच्छिन्नफलत्वं तदा तस्य भिन्नत्वादेव यथोक्तं विरोधादि दुर्व्वारमित्यर्थः । विद्याफलं निगमयति । समस्तस्त्विति । नन्वविद्यायाः सतत्त्वं निरूपयितुमारब्धं न च तदद्यापि दर्शितं तथा च किं कृतं स्यादत आह । अत इति । कार्य्यवशादिति यावत् । इदं शब्दार्थमेव स्फुटयति । सर्व्वात्मानमिति । ग्राहकत्वमेव व्यनक्ति । आत्मन इति । वस्त्वन्तरोपस्थितिफलमाह । तत इति । कामस्य कार्य्यमाह । कामत इति । क्रियातः फलं लभते तद्भोगकाले च रागादिना क्रियामादधातीत्यविच्छिन्नः संसारस्तावन्न सम्यग्ज्ञानं तावन्मिथ्याज्ञाननिदानमविद्या दुर्व्वारेत्याह । तत इति । भेददर्शननिदानमविद्येति अविद्यासूत्रे वृत्तमि-

उ॰ तद्वा अस्यैतदतिच्छन्दा अपहतपाप्मा ऽभयᳫं रूपं।

---

भा॰ विद्याविपर्य्ययेण। सा चाविद्या नात्मनः स्वाभाविको धर्म्मो यस्माद्विद्यायामुत्कृष्यमाणायां स्वयमपचीयमाना सती काष्ठां गतायां विद्यायां परितिष्ठते सर्व्वात्मभावे सर्व्वात्मना निवर्त्तते रज्ज्वामिव सर्पज्ञानं रज्जुनिश्चये। तच्चोक्तं। यत्र त्वस्य सर्व्वमात्मैवाभूत्तत्केन कं पश्येदित्यादि। तस्मान्नात्मधर्म्मोऽविद्या। न हि स्वाभाविकस्योच्छित्तिः कदाचिदप्युपपद्यते सवितुरिवौष्ण्यप्रकाशयोः। तस्मात्तस्य मोक्ष उपपद्यते॥ २०॥

इदानीं योऽसौ सर्व्वात्मभावो मोक्षो विद्याफलं क्रियाकारकफलशून्यं स प्रत्यक्षतो निर्दिश्यते। यत्राविद्याकाम-

---

आ॰ त्याह। तदेतदिति। तच्चैव वाक्यशेषमनुकूलयति। वक्ष्यमाणञ्चेति। अविद्यात्मनः स्वभावो न वेति विचारे किं निर्णीतं भवतीत्याशङ्क्य वृत्तं कीर्त्तयति। इदमिति। अविद्यायाः परिच्छिन्नफलत्वमस्ति ततो वैपरीत्येन विद्यायाः कार्य्यमुक्तं स च सर्व्वात्मभावो दर्शित इति योजना। सम्प्रति निर्णीतमर्थं दर्शयति। सा चेति। ज्ञाने सत्यविद्यानिवृत्तिरित्यत्र वाक्यशेषं प्रमाणयति। तच्चेति। अविद्या नात्मनः स्वभावो निवर्त्त्यत्वाद्रज्जुसर्पवदित्याह। तस्मादिति। निवर्त्त्यत्वेऽप्यात्मस्वभावत्वे का हानिरित्याशङ्क्याह। न हीति। अविद्यायाः स्वाभाविकत्वाभावे फलितमाह। तस्मादिति। २०।

तद्वा अस्यैतदित्यनन्तरवाक्यतात्पर्य्यमाह। इदानीमिति। विद्याविद्ययोस्तत्फलयोश्च प्रदर्शनानन्तरमिति यावत्। मोक्षमेव विशिनष्टि। यत्रेति। पदद्वयस्यान्वयं दर्शयन्विवक्षितमर्थं-

भा० कर्माणि च न सन्ति। तदेतत्प्रस्तुतं यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यतीति। तद्वा अस्य रूपं। यः सर्वात्मभावः सोऽस्य परमो लोक इत्युक्तस्तदतिच्छन्दा अतिच्छन्दमित्यर्थः। रूपपरत्वाच्छन्दः कामोऽतिगतश्छन्दोऽस्मिन् * रूपे तदतिच्छन्दं रूपं। अन्योऽसौ असन्तः छन्दःशब्दो गायत्र्यादिच्छन्दोवाची। अयन्तु कामवचनोऽतः स्वरान्त एव। तथाप्यतिच्छन्दा इति पाठः स्वाध्यायधर्मो द्रष्टव्यः। अस्ति च लोके कामवचनप्रयुक्तः छन्दःशब्दः स्वच्छन्दः परच्छन्द इत्यादौ अतोऽतिच्छन्दमित्येवमुपनेयं कामवर्जितमेतद्रूपमित्यस्मिन्नर्थे। तथापहतपाप्मा। पाप्मशब्देन धर्माधर्मावुच्येते। पाप्मभिः संयुज्यते। पाप्मनो

---

आ० माह। तदेतदिति। यत्रेत्यन्तशब्दितं प्रत्याय्यते॥ व्याख्यातं पदद्वयमनूद्य वैशब्दस्य प्रसिद्धार्थत्वं मन्वानो रूपशब्देन यथाः सम्बन्धं दर्शयति। तदिति। अतिच्छन्दमिति प्रयोगे हेतुमाह। रूपपरत्वादिति। कथमतिच्छन्दमित्यात्मरूपं विवक्ष्यते तत्राह। छन्द इति। छन्दःशब्दस्य गायत्र्यादिच्छन्दोविषयस्य कथं कामविषयत्वमित्याशङ्क्याह। अन्योऽसाविति॥ गायत्र्यादिविषयत्वं त्यक्त्वा छन्दःशब्दस्य कामविषयत्वमतःशब्दार्थः। यद्यात्मरूपं कामवर्जितमित्येतदत्र विवक्षितं किमिति तर्हि दैर्घ्यं प्रयुज्यते तत्राह। तथापीति। स्वाध्यायधर्म्मत्वं छान्दसत्वं। वृद्धव्यवहारमन्तरेण कामवाचित्वं छन्दःशब्दस्य कथमित्याशङ्क्याह। अस्ति चेति॥ तस्य कामवचनत्वे सति सिद्धं पदरूपमनूद्य तस्यार्थमुपसंहरति॥ अत इति॥ तथा कामवर्जितत्ववदित्येतत्। नन्वत्राधर्म्मवर्जितत्वमेव प्रतीयते न धर्म्मवर्जितत्वं पाप्मशब्दस्य अधर्म्म-

---

* यस्माद्रूपादित्यर्थः।

भा॰ विजहातीत्युक्तत्वात्। अपहतपाप्मा धर्म्माधर्म्मवर्जितमित्येतत्किञ्चाभयं। भयं हि नामाविद्याकार्य्यं। अविद्यया भयं मन्यत इति ह्युक्तं। तत्कार्य्यद्वारेण कारणप्रतिषेधोऽयमभयं रूपमित्यविद्यावर्जितमित्येतत्। यदेतद्विद्याफलं सर्व्वात्मभावस्तदेतदतिच्छन्दापहतपाप्मा भयं रूपं सर्व्वसंसारधर्म्मवर्जितमतो भयं रूपमेतत्। इदञ्च पूर्व्वमेवोपन्यस्तमतीतानन्तरब्राह्मणसमाप्तौ। अभयं वै जनक प्राप्तोऽसीत्यागमतः। इह तु तर्कतः प्रपञ्चितं। दर्शितागमार्थप्रत्ययदार्ढ्याय। अयमात्मा स्वयं चैतन्यज्योतिःस्वभावः सर्व्वं स्वेन चैतन्यज्योतिषावभासयति। स यत्तत्र किञ्चित्पश्यति रमते चरति जानाति चेत्युक्तं। अतः स्थितञ्चैतन्न्यायतो नित्यं स्वरूपं चैतन्यज्योतिष्ट्वमात्मनः॥

---

आ॰ मात्रवचनत्वादत आह। पाप्मशब्देनेति। उपक्रमानुसारेण पाप्मशब्दयोर्भयविषयत्वे विशेषणमनूद्य विवक्षितमर्थं कथयति। अपहतेति। तर्हि कार्य्यमेवाविद्याया निषिध्यते नेत्याह। तत्कार्य्येति। तस्मादर्थे तच्छब्दः। वाक्यार्थमुपसंहरति। यदे तदिति। कूर्च्चब्राह्मणान्तेऽपीदमुक्तमित्याह। इदञ्चेति। आगमवशात्तच्चोक्तं चेत्किमित्यत्र पुनरुच्यते तत्राह। इह त्विति। सविशेषत्वं चेदात्मत्वानुपपत्तिरित्यादिस्तर्कः। आगमसिद्धे किं तर्कोपन्यासेनेत्याशङ्क्याह। दर्शितेति। ज्योतिर्वाक्यस्य सङ्गतिं वक्तुं वृत्तमनुद्रवति। अयमिति। अनन्वागतवाक्ये चात्मनश्चैतन्यत्वमुक्तमित्याह। स यदिति। आत्मनः सदा चैतन्यज्योतिष्ट्वं स्वरूपं न केवलमुक्तादागमादेव सिद्धं किन्तु पूर्व्वोक्तादनुमानाच्च स्थितमित्याह। अतः स्थितञ्चेति॥

उ॰ तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं

---

भा॰ स यथात्मा चाविनष्टः स्वेनैव रूपेण वर्त्तते कस्मादयमहमस्मीत्यात्मानं वा बहिर्वेमानि भूतानीति जाग्रत्स्वप्नयोरिव न जानातीत्यत्रोच्यते । शृणु चाज्ञानहेतुमेकत्वमेवाज्ञानहेतुस्तत्कथमित्युच्यते । दृष्टान्तेन हि प्रत्यक्षीभवति विवक्षितोऽर्थ इत्याह । तत्तत्र यथा लोके प्रिययेष्टया स्त्रिया सम्परिष्वक्तः सम्यक् परिष्वक्तः कामयन्त्या कामुकः सन्न बाह्यमात्मनः किञ्चन किञ्चिदपि न वेद मत्तोऽन्यद्वस्त्विति । न चान्तरमयमहमस्मि सुखी दुःखी चेति अपरिष्वक्तस्तु तया प्रविभक्तो जानाति । सर्व्वमेव बाह्यमभ्यन्तरञ्च । परिष्वङ्गोत्तरकालन्त्वेकत्वापत्तेर्न जानाति । एवमेव यथादृष्टान्तोऽयं पुरुषः क्षेत्रज्ञो भूतमात्रासंसर्गतः

---

आ॰ वृत्तमनूद्य सम्बन्धं वक्तुं कामश्चोदयति । स यदीति । अत्रेति सुषुप्तिवक्ता । चैतन्यस्वभावस्यैव सुषुप्ते विशेषज्ञानाभावं साधयति । उच्यत इति । सुषुप्तिः सप्तम्यर्थः । अज्ञानं विशेषज्ञानाभावः । कोऽसावज्ञानहेतुस्तमाह । एकत्वमिति । जीवस्य परेणात्मना यदेकत्वं तत्कथं सुषुप्ते विशेषज्ञानाभावे कारणं तस्मिन्सत्यपि चैतन्यस्वभावानिवृत्तेरिति शङ्कते । तत्कथमिति । तत्र स्त्रीवाक्यमुत्तरत्वेनोत्थापयति । उच्यत इति । तत्र दृष्टान्तभागमाचष्टे । दृष्टान्तेनेति । एकत्वकृतो विशेषज्ञानाभावो विवक्षितोऽर्थः । परिष्वङ्गप्रयुक्तसुखाभिनिवेशादज्ञानं किमिति कल्प्यते स्वाभाविकमेव तत्किं न स्यादित्याशङ्क्याह । अपरिष्वक्तस्त्विति । तर्हि परिष्वङ्गवतोऽपि स्वभावविपरिलोपासम्भवाद्विशेषविज्ञानं स्यादिति चेन्नेत्याह । परिष्वङ्गेति । स्त्रीपुंसय-

उ॰ किञ्चन वेद नान्तरमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं ॥

---

भा॰ सैन्धवखिल्यवत्प्रविभक्तो जलादौ चन्द्रादिप्रतिबिम्बवत्कार्य्यकरण इह प्रविष्टः सोऽयं पुरुषः प्राज्ञेन परमार्थेन स्वाभाविकेन स्वेनात्मना परेण ज्योतिषा सम्परिष्वक्तः सम्यक् परिष्वक्त एकीभूतो निरन्तरः सर्व्वात्मा न बाह्यं किञ्चन वस्त्वन्तरं नाप्यान्तरमात्मन्ययमहमस्मि सुखी दुःखी वेति वेद तत्र चैतन्यज्योतिःस्वभावत्वे कस्मादिह न जानातीति यदप्राक्षीस्तत्रायं हेतुर्मयोक्तः । एकत्वं यथा स्त्रीपुंसयोः सम्परिष्वक्तयोः । तत्रार्थादनानात्वं विशेषविज्ञान-हेतुरित्युक्तं भवति ॥

---

आ॰ द्वयोर्व्यामिश्रत्वं परिष्वङ्गस्तदुत्तरकालं सम्भोगफलप्राप्तिरेकत्वापत्तिस्तदा बाह्यादिविशेषाज्ञानमित्यर्थः । दार्ष्टान्तिकं व्याचष्टे । एवमेवेति । भूतमात्राः शरीरेन्द्रियलक्षणास्ताभिः खिल्यादात्मनस्तादात्म्याध्यासात्तत्प्रतिविम्बो जीवस्ततो विभक्तवज्ज्ञातीत्यत्र दृष्टान्तमाह । सैन्धवेति । तस्य देहादौ प्रवेशं दृष्टान्तेन दर्शयति । जलादाविति । उपसर्गवशलभ्यमर्थं कथयति । एकीभूत इति । तादात्म्यं व्यावर्त्तयितुं निरन्तर इत्युक्तं । परमात्माभेदप्रयुक्तमनवच्छिन्नत्वमाह । सर्व्वात्मेति । एवं श्रुतिवाक्याक्षराणि व्याख्याय चोद्यपरिहारं प्रकटयति । तत्रेति । प्रत्यगात्मनीति यावत् । इहेति सुषुप्तिरुच्यते । यथा परिष्वक्तयोः स्त्रीपुंसयोरेकत्वं पुंसो विशेषविज्ञानाभावे तस्य तत्र कारणमुक्तमित्यर्थः । श्रुतिवाक्ये श्रौतमर्थमभिधायार्थिकमर्थमाह । तत्रेति ॥

उ॰ तद्वा अस्यैतदाप्तकाममात्मकाममकामꣳ रूपꣳ शोकान्तरं ॥ २१ ॥

---

भा॰ नानात्वे च कारणमात्मनो वस्त्वन्तरस्य प्रत्युपस्थापिकाविद्येत्युक्तं तत्र चाविद्याया यदा प्रविविक्तो भवति तदा सर्व्वैकत्वमेवास्य भवति । ततश्च ज्ञानज्ञेयादिकारकविभागेऽसति कुतो विशेषविज्ञानप्रादुर्भावः कामो वा सम्भवति स्वाभाविके स्वरूपस्थ आत्मज्योतिषि । यस्मादेवं सर्व्वैकत्वमेवास्य रूपमतस्तद्वै अस्यात्मनः स्वयं ज्योतिः स्वभावस्यैतद्रूपमाप्तकामं यस्मात्समस्तमेतत्तस्मादाप्ताः कामा अस्मिन्रूपे तदिदमाप्तकामं यस्य ह्यन्यत्वेन प्रविभक्तः कामस्तदनाप्तकामं भवति । यथा जागरितावस्थायां देवदत्तादिरूपं । न त्विदं तथा कुतश्चित्प्रविभज्यतेऽतस्तदाप्त-

---

आ॰ किं पुनर्नानात्वे कारणमिति तदाह । नानात्वे चेति ॥ उक्तमथ योऽन्यामित्यादावित्यर्थः ॥ किमेतावता सुषुप्ते विशेषविज्ञानाभावस्यायातं तत्राह । तत्रेति ॥ विशेषविज्ञाने नानात्वं तत्र चाविद्याकारणमिति स्थिते सतीति यावत् ॥ यदा तदेति सुषुप्तिर्विवक्षिता । प्रविविक्तत्वं कार्य्यकरणाविद्याविरहित्वं । सर्व्वेण पूर्ण्णेन परमात्मना सहेत्यर्थः । विज्ञानात्मा षष्ठ्योच्यते ॥ एकत्वफलमाह । ततश्चेति ॥ उक्तमुपजीव्याप्तकामवाक्यमवतार्य्य व्याचष्टे । यस्मादिति ॥ आप्तकामत्वं समर्थयते । यस्मात्समस्तमिति ॥ तदेव व्यतिरेकमुखेन विशदयति । यस्य हीत्यादिना ॥ विशेषणान्तरमाकाङ्क्षापूर्व्वकमादाय व्याचष्टे । किमन्यस्मादित्यादिना ॥ सुषुप्तेरन्यत्रात्मनः सकाशादन्यत्वेन प्रविभक्ता इव काम्यमानाः सुषुप्तावात्मैव कामास्तस्मादात्मकाममात्मरूपमित्येत-

उ॰ अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदाः ॥

---

भा॰ कामं भवति। किमन्यस्मादन्यत्वेनान्तराणि प्रविभज्यते आहो-स्विदात्मैव तदस्यान्तरमत आह। नान्यदन्यात्मनः कथ-यत आत्मकाममात्मैव कामा यस्मिन्रूपे येऽन्ये प्रविभक्ता इवान्यत्वेन काम्यमाना यथा जाग्रत्स्वप्नयोस्तेऽस्यात्मैवान्यत्व-प्रत्युपस्थापकहेतोरविद्याया अभावादात्मकाममत एवा-काममेतद्रूपं काम्यविषयाभावाच्छोकान्तरं शोकच्छिद्रं शोकशून्यमित्येतच्छोकमध्यमिति वा सर्व्वथाप्यशोकमे-तद्रूपं शोकवर्जितमित्यर्थः ॥ २१ ॥

प्रकृतः स्वयंज्योतिरात्मा अविद्याकामकर्म्मविनिर्मुक्त इत्युक्तं। असङ्गत्वादात्मन आगन्तुकत्वाच्च तेषां तच्चैवा

---

आ॰ दृष्टान्तेनाह। यथेति। अवस्थाद्वये स्वस्यात्मनः सकाशादन्यत्वेन प्रविभक्ता इव काम्याः काम्यन्त इति कामाः। नैवं सुषुप्त्यवस्था-यामात्मनस्ते भिद्यन्ते किन्तु सुषुप्तस्यात्मैव कामा इत्यात्मकामं तद्रूपमित्यर्थः। तस्यात्मैवेत्यत्र हेतुमाह। अन्यत्वेनेति। यद्यपि सुषुप्तेऽविद्या विद्यते तथापि न साभिव्यक्तास्तीत्यनर्थपरिहारोप-पत्तिरित्यर्थः। कामानामात्मात्मत्वपक्षं प्रतिज्ञाय तृतीयं विशे-षणं। शोकमध्यं शोकस्यान्तरं प्रत्यग्भूतमिति यावत्। तर्हि शोकवत्त्वं प्राप्तं नेत्याह। सर्व्वथेति। पक्षद्वयेऽपि शोकशून्यमा-त्मरूपं। न हि शोको येनात्मवांस्तस्य शोकवत्त्वं शोकस्यात्मा-धीनसत्त्वास्फुर्त्तेरात्मातिरेकेणाभावादित्यर्थः। २१।

अत्र पितेत्यादि वाक्यमवतारयितुं वृत्तमनुद्रवति। प्रकृत इति। अविद्यादिनिर्मोके हेतुद्वयमाह। असङ्गत्वादिति। यद्यपि

भा॰ मस्त्रा जायते। चैतन्यस्वभावत्वे सत्येकीभावान्न जानाति स्त्रीपुंसयोरिव सम्परिष्वक्तयोरित्युक्तं। तच्च प्रासङ्गिकमेतदुक्तं कामकर्म्मादिवत् स्वयं ज्योतिष्ट्वमप्यस्यात्मनो न स्वभावः। यस्मात् सम्प्रसादेनोपलभ्यत इत्याशङ्कायां प्राप्तायां तन्निराकरणाय स्त्रीपुंसयोर्दृष्टान्तोपादानेन विद्यमानस्यैवं स्वयं ज्योतिष्ट्वस्य सुषुप्तेऽग्रहणमेकीभावाद्धेतोर्न तु कामकर्म्मादिवदागन्तुकं। इत्येतत्प्रासङ्गिकमभिधाय यत्प्रकृतं तदेवानुप्रवर्त्तयति। अत्र चैतत्प्रकृतमविद्याकामकर्म्मविनिर्म्मुक्तमेव तद्रूपं। यत्सुषुप्त आत्मनो गृह्यते प्रत्यक्षत इति तदेतद्यथाभूतमेवाभिहितं सर्व्वसम्बन्धाधीनमेतद्रूपमिति। यस्मान्नैतस्मिन् सुषुप्तस्थानेऽतिच्छन्दापहतपाप्माभयमेतद्रूपं तस्मादत्र पिता जनकः। तस्य च जनयितृत्वाद्यत्पितृत्वं पुत्रं प्रति तत्कर्म्मनिमित्तं तेन च

---

आ॰ नागन्तुकत्वमविद्याया युक्तं तथाप्यभिव्यक्ता सामर्थ्यहेतुरागन्तुकेति द्रष्टव्यं। स्त्रीवाक्यनिरस्याशङ्कामनुवदति। तच्चेति॥ कामादिविमोक्षे दर्शिते सतीति यावत्॥ स्वभावस्यापायो न सम्भवतीत्यभिप्रेत्य हेतुमाह। यस्मादिति॥ प्रश्नोत्तरत्वेन स्त्रीवाक्यमवतार्य्य तत्तात्पर्य्यं पूर्व्वोक्तमनुकीर्त्तयति। एवं स्वयमिति॥ विद्यमानस्येति वृत्तमनूद्योत्तरग्रन्थमुत्थापयति। इत्येतदिति॥ स्वयं ज्योतिष्ट्वस्य स्वाभाविकत्वमेतच्छब्दार्थः। प्रासङ्गिकं कामादेरागन्तुकत्वोक्तिः। प्रसङ्गादागतमिति यावत्॥ प्रकृतमेव दर्शयति। अत्र चेति॥ अतिच्छन्दादिवाक्यं सप्तम्यर्थः। प्रत्यक्षतः स्वरूपचैतन्यवशाद्योक्तात्मरूपस्य सुषुप्ते ग्रहणमायामुत्थितस्य परामर्शमवधेयं॥ कामादिसम्बन्धवदात्मनस्तत्सहितमपि रूपं कल्पितमेवेत्याशङ्क्याह। तदेतदिति॥ प्रकृतमर्थमुक्त्वोत्तरवाक्यस्य-

भा॰ कर्म्मणाऽयमसम्बद्धोऽस्मिन् काले। तस्मात्पिता पुत्रसम्बन्ध-निमित्तस्य कर्म्मणो विनिर्मुक्तत्वात् पिताप्यपिता भवति। तथा पुत्रोऽपि पितुरपुत्रो भवतीति सामर्थ्याद्गम्यते। उभयोर्हि सम्बन्धनिमित्तं कर्म्म। तदयमतिक्रान्तो वर्त्ते-तेऽपहतपाप्मेति युक्तं। तथा माताऽमाता। लोकाः कर्म्मणा जेतव्या जिताश्च। तत्कर्म्मसम्बन्धाभावाल्लोका अलोकाः। तथा देवाः कर्म्माङ्गभूतास्तत्कर्म्मसम्बन्धात्यया देवा अदेवाः। तथा वेदाः साध्यसाधनसम्बन्धविधायकाः ब्राह्मणलक्षणा मन्त्रलक्षणाश्चाभिधायकत्वेन कर्म्माङ्ग-भूता अधीता अध्येतव्याश्च। कर्म्मनिमित्तमेव सम्बध्यन्ते पुरुषेण। तत्कर्म्मातिक्रमणादेतस्मिन्काले वेदा अप्यवेदाः सम्पद्यन्ते॥

---

आ॰ सतन्त्यर्थमाह। अत्रैतस्मिन्निति। जनकोऽप्यजाप्यपिता भवतीति सम्बन्धः। पिताप्यनापिता भवतीत्युपपादयति। तस्येत्या-दिना। यथा यस्मिन्काले तत्पिता पुत्रस्यापिता भवति तद्वदि-त्याह। तथेति। नास्यार्थस्य प्रतिपादकः शब्दोऽस्तीत्याशङ्क्याह। सामर्थ्यादिति। तदेव सामर्थ्यं दर्शयति। उभयोरिति। सुषुप्ते कर्म्मातिक्रमे प्रमाणमाह। अपहतेति॥ पुनर्लोकवेदशब्दावनु-वादार्थौ। वाक्यान्तरमादाय व्याचष्टे। तथेत्यादिना। साध्य-साधनसम्बन्धाभिधायका ब्राह्मणलक्षणा इति शेषः। अभिधा-यकत्वेन प्रमाणत्वेन प्रमेयत्वेन चेत्यर्थः॥

उ॰ अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसो नन्वागतं पुण्येनानन्वागतं

---

भा॰ न केवलं शुभकर्मसम्बन्धातीतः । किन्तर्हि अशुभैरप्यत्यन्तघोरैः कर्मभिरसम्बद्ध एवायं वर्त्तत इत्येतमर्थमाहाच स्तेनो ब्राह्मणसुवर्णहर्त्ता भ्रूणहासहपाठादवगम्यते । स तेन घोरेण कर्मणैतस्मिन्काले विनिर्मुक्तो भवति । येनायं कर्मणा महापातकी स्तेन उच्यते तथा भ्रूणहाऽभ्रूणहा तथा चाण्डालो न केवलं प्रत्युत्पन्नेनैव कर्मणा विनिर्मुक्तः । किं तर्हि सहजेनाप्यत्यन्तनिकृष्टजातिप्रापकेणापि विनिर्मुक्त एवायं । चाण्डालो नाम शूद्रेण ब्राह्मण्यामुत्पन्नः चाण्डाल एव चाण्डालः स जातिनिमित्तेन कर्मणा सम्बद्धत्वादचाण्डालो भवति । पौल्कसः पुल्कस एव पौल्कसः शूद्रेणैव क्षत्रियायामुत्पन्नः । तथा सोऽप्यपुल्कसो

---

आ॰ अत्र स्तेनोऽस्तेनो भवतीत्यादेस्तात्पर्य्यमाह । न केवलमिति ॥ स्तेनशब्दोऽत्र चोरमात्रे भाति कथं विशेषणमित्याशङ्क्याह । भ्रूणहेति ॥ भ्रूणहा च वरिष्ठब्रह्महन्तोच्यते ॥ तदेव घोरं कर्म्म विशिनष्टि । येनेति ॥ महत्पातकमस्येति व्युत्पत्त्या महापातकस्तेनः ॥ स्तेनादिवाक्येन चाण्डालादिवाक्यस्य गतार्थत्वमाशङ्क्याह । नेत्यादिना । प्रत्युत्पन्नमागन्तुकं ॥ ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा । शूद्राज्जातस्तु चाण्डालः सर्व्वधर्म्मबहिष्कृत इति स्मृतिमाश्रित्याह । चाण्डालो नामेति ॥ जातो निषादाच्छूद्रायां जात्या पुल्कस इति स्मृतेः । शूद्रायां ब्राह्मणाज्जातो निषादः । स च जात्या शूद्रः । तस्मात्क्षत्रियायां जातः पुल्कसो भवतीति व्याख्या-

उ॰ पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ॥ २२ ॥

---

भा॰ भवति। तथा श्रमणश्च कर्मभिरसम्बद्धो भवतीत्युच्यते। श्रमणः परिव्राट् यत्कर्मनिमित्तो भवति स तेन विनिर्मुक्तत्वादश्रमणः। तथा तापसो वानप्रस्थोऽतापसः। सर्वेषां वर्णाश्रमादीनामुपलक्षणार्थमुभयोर्ग्रहणं किं बहुना। नन्वागतं न अन्वागतमनन्वागतमसम्बद्धमित्येतत्पुण्येन शास्त्रविहितेन कर्मणा। तथा पापेन विहिताकरणप्रतिषिद्धक्रियालक्षणेन रूपपरत्वान्नपुंसकलिङ्गं। अभयं रूपमिति ह्यनुवर्त्तते। किं पुनरसम्बद्धत्वे कारणमिति तद्धेतुरुच्यते। तीर्णोऽतिक्रान्तो हि यस्मादेवंरूपस्तदा तस्मिन् काले सर्वाञ्छोकान् शोकाः कामा इष्टविषयप्रार्थनाः। ते हि तद्विषयवियोगे शोकत्वमापद्यन्ते। इष्टं

---

आ॰ समुपेत्याह। सूक्ष्मैवेति॥ तथा चाण्डालवदिति यावत्॥ श्रमणादिवाक्यस्य तात्पर्य्यमाह। तथेति॥ परिव्राड्तापसयोरेव ग्रहणात्तत्कर्मायोगेऽपि सौषुप्तस्य वर्णाश्रमान्तरकर्म्मयोगं शङ्कित्वाह। सर्व्वेषामिति॥ आदिशब्देन वयोऽवस्थादि गृह्यते॥ सौषुप्ते पुरुषे प्रकृते कथमनन्वागतमिति नपुंसकप्रयोगस्तत्राह। रूपपरत्वादिति॥ तमरत्वे हेतुमनुपक्रं दर्शयति। अभयमिति॥ हेतुवाक्यमाकाङ्क्षापूर्व्वकमुत्थाप्य व्याचष्टे। किं पुनरित्यादिना॥ यस्मादतिच्छन्दादिवाक्योक्तस्वभावोऽयमात्मा सुषुप्ते काले हृदयनिष्ठान्सर्व्वाञ्छोकानतिक्रामति तस्मादेवदात्मरूपं पुण्यपापाभ्यामनन्वागतं युक्तमित्यर्थः॥ शोकशब्दस्य कामविषयत्वं साध-

भा॰ हि विषयमप्राप्तं वियुक्तं चोद्दिश्य चिन्तयानस्तद्गुणान्
सन्तप्यते पुरुषोऽतः शोको रतिः काम इति पर्य्यायाः ॥

यस्मात् सर्व्वकामातीतो ह्ययं भवति । न कञ्चन कामं कामयते भति छन्दा इति युक्तं तत्प्रक्रियापतितोऽयं शोकशब्दः कामवचन एव भवितुमर्हति । कामस्य कर्म्म-हेतुर्वक्ष्यति हि । स यथाकामो भवति तत्क्रतुर्भवति यत् क्रतुर्भवति तत्कर्म्म कुरुत इति । अतः सर्व्वकामातितीर्णत्वा-द्युक्तमुक्तमनन्वागतं पुण्येनेत्यादि । हृदयस्य हृदयमिति पुण्डरीकाकारो मांसपिण्डस्तत्स्थमन्तःकरणं बुद्धिर्हृदय-मित्युच्यते । तात्स्थ्यान्मञ्चाक्रोशनवद्धृदयस्य बुद्धेर्ये शोका बुद्धिसंश्रया हि ते । कामः संकल्पो विचिकित्सेत्यादि । सर्व्वं मन एवेत्युक्तत्वात् । वक्ष्यति च कामा येऽस्य हृदि श्रिता

---

आ॰ यति । इष्टेति ॥ कथं तस्याः शोकत्वापत्तिरित्याशङ्क्याह । इष्टं हीति ॥

तेषां पर्य्यायत्वेऽपि प्रकृते किमायातं तदाह । यस्मादिति ॥ अत्रेति सुषुप्तिरुच्यते । अतः सर्व्वकामातितीर्णत्वादित्युत्तरत्र सम्बन्धः ॥ न केवलं शोकशब्दस्य कामविषयत्वमुपपन्नमेव किन्तु सन्निधेरपि सिद्धमित्याह । न कञ्चनेति ॥ शोकशब्दस्य काम-विषयत्वेऽपि तद्व्ययमात्रात्कथं कर्म्मात्ययः स्यादित्याशङ्क्याह । कामस्येति ॥ तत्र वाक्यं प्रमाणयति । वक्ष्यति हीति ॥ कामस्य कर्म्महेतुत्वे सिद्धे फलितमाह । अत इति ॥ हृदयस्य शोकानति-क्रान्तमतीत्यत्र हृदयशब्दार्थमाह । हृदयमितीति ॥ मांसपिण्डवि-शेषविषयं हृदयपदं कथं बुद्धिमाहेत्याशङ्क्याह । तात्स्थ्या-दिति ॥ यथा मञ्चाः क्रोशन्तीति मञ्चक्रोशनमुच्यमानं मञ्चस्था-न्पुरुषानुपचारादाह तथा हृदयस्थत्वाद्बुद्धेरुपचाराद्बुद्धिं हृद-यशब्दो दर्शयतीत्यर्थः ॥ हृदयशब्दार्थमुक्त्वा तस्य सम्बन्धं दर्शयति ।

भा॰ इति । आत्मसंश्रयभ्रान्त्यपनोदाय हीदं वचनं । हृदि श्रिता हृदयशोका इति च । हृदयकरणसम्बन्धातीतश्चायमस्मिन् कालेऽतिक्रामति मृत्यो रूपाणीति श्रुतं । हृदयसम्बन्धातीतत्वात्तत्संश्रयकामसम्बन्धातीतो भवतीति युक्ततरं वचनं । ये तु वादिनो हृदि श्रिताः कामा वासनाश्च हृदयसम्बन्धिनमात्मानमुपसर्प्योपश्लिष्यन्ते । हृदयवियोगेऽपि चात्मन्यवतिष्ठन्ते । पुटतैलस्य इव पुष्पादिगन्ध इत्याचक्षते । तेषां कामः संकल्पः । हृदये ह्येव रूपाणि हृदयस्य शोका इत्यादीनां वचनानामानर्थक्यमेव । हृदयकरणोत्पाद्यत्वादिति चेत् । न । हृदि श्रिता इति विशेषणात् । न हि हृदयस्य करणमात्रत्वे हृदि श्रिता इति वचनं समञ्जसं । हृदये ह्येव रूपाणि प्रतिष्ठितानीति च ।

---

आ॰ हृदयस्येति । तानतिक्रान्तो भवतीति शेषः । आत्माश्रयास्ते न बुद्धिमाश्रयन्तीत्याशङ्क्याह । बुद्धीति । कथं तर्हि केचिदात्माश्रयत्वं तेषां वदन्तीत्याशङ्क्य भ्रान्तिवशादित्याह । आत्मेति । भवतु कामादीनां हृदयाश्रितत्वं तथापि तत्सम्बन्धद्वारा तदाश्रयत्वसम्भवात् कथमात्मा सुषुप्ते कामानतिवर्त्तते तत्राह । हृदयकरणेति । तत्सम्बन्धातीतत्वे श्रुतिसिद्धे फलितमाह । हृदयेति । भर्तृप्रपञ्चप्रस्थानमुत्थापयति । ये त्विति । सत्येव हृदये तन्निष्ठानां कामादीनामात्मन्युपश्लेषो न तन्निवृत्तावित्याशङ्क्याह । हृदयवियोगेऽपीति । तन्मते श्रुतिविरोधमाह । तेषामिति । करणेन हृदयेनोत्पाद्यत्वादात्मविकाराणामपि कामादीनां हृदयसम्बन्धसम्भवान्नानर्थक्यं श्रुतीनामिति शङ्कते । हृदयेति । न कामादिसम्बन्धमात्रं हृदयस्य श्रुत्यर्थः । किन्त्वाश्रयाश्रयित्वं तच्च करणत्वे न स्यात् । न हि चक्षुराद्याश्रयं रूपादिज्ञानं दृष्टमिति परिहरति । न हृदीति । चकाराद्वचनं न समञ्जसमिति सम्बध्यते ।

भा॰ आत्मविशुद्धेश्च विवक्षितत्वाद्बुद्ध्युपाधिवचनं यथार्थमेव युक्तं । ध्यायतीव लेलायतीवेति च श्रुतेरन्यार्थासम्भवात् । कामा येऽस्य हृदि श्रिता इति विशेषणादात्माश्रया अपि सन्तीति चेत् । न अनाश्रितापेक्षत्वात् । न चाश्रयान्तरमपेक्ष्य ये हृदीति विशेषणं किन्तर्हि ये हृदयानाश्रिताः कामास्तान-पेक्ष्य विशेषणं । ये त्वप्ररूढा भविष्या भूताः सम्प्रतिपक्षतो निवृत्तास्तेनैव हृदि श्रिताः सम्भाव्यन्ते च ते । अतो युक्तं तानपेक्ष्य विशेषणं । ये प्ररूढा वर्त्तमानादिविषये ते सर्व्वे प्रमुच्यन्त इति । तथापि विशेषणानर्थक्यमिति चेत् । न । तेषु यत्नाधिक्याङ्गेयार्थत्वात् । इतरथाऽश्रुतमनिष्टञ्च कल्पितं स्यादात्माश्रयत्वञ्च कामानां । न कञ्चन कामं कामयत इति

---

आ॰ प्रदीपायत्तं घटज्ञानमिति वदन्तः करणायत्तमात्मार्श्रितं कामादीति तस्य तदाश्रयत्ववचनमौपचारिकमित्याशङ्क्याह । आत्म-विशुद्धेश्चेति ॥ इतश्चेदं यथार्थमेवेत्याह । ध्यायतीवेति ॥ अन्या-र्थासम्भवाद्बुद्ध्याश्रयत्ववचनस्येति शेषः ॥ दक्षिणेनाक्ष्णा पश्यती-त्युक्ते वामेन न पश्यतीतिवत्प्रमुच्यन्ते हृदि श्रिता इति विशेष-णमाश्रित्याशङ्कते । कामा ये इति ॥ प्रकारान्तरेण विशेषणस्या-र्थवत्त्वं दर्शयति । नेत्यादिना । चशब्देति प्रकृतश्रुत्युक्तिः । आश्र-यान्तरं बुद्ध्यतिरिक्तमात्माख्यं ॥ बुद्ध्यनाश्रिताः कामा एव न सन्ति यदपेक्षया हृदयाश्रयत्वविशेषणमित्याशङ्क्याह । ये त्विति ॥ प्रतिपक्षतो विषयदोषदर्शनादिति यावत् ॥ कामानां वर्त्तमा-नत्वनियमाभावाद्भूतभविष्यतामपि सम्भवे फलितमाह । ये इति ॥ हृदयानाश्रितभूतभविष्यत्कामसम्भवेऽपि सर्व्वकामनिवृ-त्तेर्विवक्षितत्वाद्वर्त्तमानविशेषणमनर्थकमिति शङ्कते । तथापीति ॥ अतीतानागतकामाभावः सम्भवति स्वतः सिद्धो न तस्मिन्यत्नो यत्नोऽपेक्ष्यते मुक्तात्मदिदृक्षुणा वर्त्तमानकामनिरासे यत्नाधिक्य-

भा॰ प्राप्तप्रतिषेधादात्माश्रयत्वं कामानां श्रुतमेवेति चेत् । न । सुधीः स्वप्नो भूत्वेति परनिमित्तत्वात् कामाश्रयत्वप्राप्ते रसङ्गवचनाच्च । न हि कामाश्रयत्वेऽसङ्गवचनमुपपद्यते । सङ्गश्च काम इत्यवोचाम । आत्मकाम इति श्रुतेरात्मविषयोऽस्य कामो भवतीति चेत् । न । व्यतिरिक्तकामाभावार्थत्वात्तस्याः । वैशेषिकादितन्त्रन्यायोपपन्नमात्मनः कामाद्याश्रयत्वमिति चेत् । न । हृदि श्रिता इत्यादि विशेषश्रुतिविरोधादनपेक्ष्यास्ता वैशेषिकादितन्त्रोपपत्तयः । श्रुतिविरोधे न्यायभासत्वोपगमात् । स्वयं ज्योतिष्ट्वबाधनाच्च । कामादीनाञ्च स्वप्ने केवलदृश्यमात्रविषयत्वात् स्वयं ज्योतिष्टं सिद्धं । स्थितञ्च बाध्येतात्म समवायित्वे । दृश्यत्वानुपपत्तेश्चक्षुर्गतविशेषवत् ।

---

आ॰ माश्रेयमिति व्यापयितुं वर्त्तमानग्रन्थमिति परिहरति । न तेष्विति । यदि यथोक्तं व्याख्यानमनादृत्यात्माश्रयत्वमेव कामनामाश्रीयते तदाऽश्रुतं मोक्षासम्भवेनानिष्टञ्च कल्पितं स्यादित्याह । इतरथेति । अश्रुतत्वमसिद्धमिति शङ्कते । न वचनेति । यथादात्माश्रयत्वं श्रुतमेव कामानामित्येतद्दूषयति । नेत्यादिना । निषेधो हि प्राप्तिमपेक्षते न वास्तवं कामानामात्मधर्मत्वं प्राप्तिस्तु भ्रान्त्यापि सम्भवति । तस्मादात्मनो वस्तुतो न कामाद्याश्रयत्वमित्यर्थः ॥ इतश्चात्मनो न कामाद्याश्रयत्वमित्याह । असङ्गेति । नन्वसङ्गवचनमात्मनः सङ्गाभावं साधयति तस्य कामित्वे न विरुध्यते तत्राह । सङ्गश्चेति । कामस्य सङ्गत्वतोऽसिद्धो हेतुरन्वेति शेषः । वाक्यान्तरमाश्रित्यात्मनि कामाश्रयत्वं शङ्कित्वा दूषयति । आत्मेत्यादिना । इच्छादयः क्वचिदाश्रिताः गुणत्वाद्रूपादिवदित्यनुमानात्परिशेषात् कामाद्याश्रयत्वमात्मनः सेत्स्यतीति शङ्कते । वैशेषिकादीति । श्रुत्यवष्टम्भेन निराचष्टे । नेत्यादिना । स्वयं ज्योतिष्ट्वबाधनाच्च नात्माश्रयत्वं कामादीनामिति शेषः । तदेव

भा॰ द्रष्टुर्हि दृश्यमर्थान्तरभूतमिति । द्रष्टुः स्वयं ज्योतिष्ट्वं सिद्धं । तद्बाधितं स्याद्यदि कामाद्याश्रयत्वं परिकल्प्येत । सर्व्वशास्त्रप्रतिषेधाच्च । परस्यैकदेशकल्पनायाः कामाद्याश्रयत्वे च सर्व्वशास्त्रार्थजातं कुप्येत । एतच्च विस्तरेण चतुर्थेऽवोचाम । महता हि प्रयत्नेन कामाद्याश्रयकल्पनाः प्रतिषेद्धव्याः । आत्मनः परेणैकत्वशास्त्रार्थसिद्धेः । तत्कल्पनायां पुनः क्रियमाणायां शास्त्रार्थ एव बाधितः स्यात् । यथेच्छादीनामात्मधर्म्मत्वं कल्पयन्तो वैशेषिका नैयायिकाश्चोपनिषच्छास्त्रार्थेन न सङ्गच्छन्ते । तथेयमपि कल्पनोपनिषच्छास्त्रार्थबाधनान्नादरणीया ॥ २२ ॥

---

आ॰ विरुद्धेति । कामादीनामिति । स्थितत्वानुमानादिति शेषः । यद्यत्र समवेतं तत्तेन न दृश्यते । यथा चक्षुर्गतं काष्र्ण्यं तेनैव चक्षुषा न दृश्यते तथा कामादीनामात्मसमवायित्वे दृश्यत्वं न स्यात् । दृश्यत्ववचनेनैव स्वयं ज्योतिष्ट्वं साधितं । तथा च तद्बाधे पूर्व्वोक्तमनुमानमपि बाध्येतेत्यर्थः । कथं कामादीनामात्मदृश्यत्वमाश्रित्य स्वप्ने स्वयं ज्योतिष्ट्वमुपदिष्टत्वं तत्राह । द्रष्टुरिति । तथापि तेषामात्माश्रयत्वे कानुपपत्तिस्तत्राह । तद्बाधितमिति । यत्तु परमात्मैकदेशं जीवमाश्रित्य तदाश्रितं कामादीति तत्राह । सर्व्वशास्त्रेति । तदेव स्फुटयति । परस्येति । शास्त्रार्थजातं निरवयवत्वप्रत्यगेकत्वादि । तस्य कथं कोपः स्यादित्याशङ्क्याह । एतच्चेति । चतुर्थे चेद्धृष्टप्रपञ्चमतं निरस्तं तर्हि पुनर्निराकरणमकिञ्चित्करमित्याशङ्क्याह । महतेति ॥ परेण सह प्रत्यगात्मनो यदेकत्वं तस्य शास्त्रार्थस्य सिद्ध्यर्थमिति यावत् ॥ अंशत्वकल्पनायामपि शास्त्रार्थसिद्धिमाशङ्क्याह । तत्कल्पनायामिति ॥ भर्तृप्रपञ्चकल्पनाया हेयत्वमुपसंहरति । यथेत्यादिना ॥ २२ ॥

उ॰ यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति ॥

भा॰ स्त्रीपुंसयोरिवैकत्वान्न पश्यतीत्युक्तं स्वयं ज्योतिरिति च। स्वयं ज्योतिष्ट्वं नाम चैतन्यात्मस्वभावता। यदि ह्यग्न्युष्णत्वादिवच्चैतन्यात्मस्वभाव आत्मा स कथमेकत्वेऽपि हि स्वभावं जह्यान्न जानीयात्। अथ न जहाति कथमिह सुषुप्ते न पश्यति। विप्रतिषिद्धमेतच्चैतन्यमात्मस्वभावो न जानाति चेति। न विप्रतिषिद्धमुभयमप्येतदुपपद्यत एव। कथं यद्वै सुषुप्ते तन्न पश्यति पश्यन्वै तत्तत्र पश्यन्नेव न पश्यति। यत्तत्र सुषुप्ते न पश्यतीति जानीषे तन्न। तथा मृषीयाः। कस्मात्पश्यन्नेव भवति तत्र। नन्वेवं न पश्यतीति सुषुप्ते जानीमो यतो न चक्षुर्वा मनो वा दर्शने करणं व्यापृतमस्ति। व्यापृतेषु हि दर्शनश्रवणादिषु पश्यतीति व्यवहारो भवति शृणोतीति वा। न च व्यापृतानि करणानि पश्यामः। तस्मान्न पश्यत्येवायं न हि किन्तर्हि पश्यन्नेव भवति। कथं

आ॰ यद्वै तन्न पश्यतीत्यादेः सम्बन्धं वक्तुं वृत्तं कीर्तयति। स्त्रीपुंसयोरिति॥ चकारादुक्तं स्वयं ज्योतिष्ट्वमिति सम्बध्यते॥ किमिदं स्वयं ज्योतिष्ट्वमिति तदाह। स्वयं ज्योतिष्ट्वं नामेति॥ एवं वृत्तमनूद्योत्तरवाक्यव्यावर्त्यामाशङ्कामाह। यदीत्यादिना॥ स्वभावत्वागमेवाभिनयति। न जानीयादिति॥ तस्यागमाभावे सुषुप्ते विशेषविज्ञानराहित्यमयुक्तमित्याह। अथेत्यादिना॥ आत्मा चिद्रूपोऽपि सुषुप्ते विशेषं न जानाति किं दुष्यतीत्याशङ्क्याह। विप्रतिषिद्धमिति॥ परिहरति। नेति॥ उभयं चैतन्यस्वभावत्वं विशेषविज्ञानराहित्यञ्चेत्यर्थः॥ उभयस्वीकारे शङ्कितं विप्रतिषेधमाकाङ्क्षापूर्वकं श्रुत्या निराकरोति। कथमित्यादिना॥ यद्वै तदि-

उ॰ न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्॥

---

भा॰ न हि। यस्माद्द्रष्टुर्दृष्टिकर्त्तुर्या दृष्टिस्तस्या दृष्टेर्विपरिलोपो विनाशः स न विद्यते यथाग्नेरौष्ण्यं यावदग्निभावि तथायमात्माऽविनाश्यतोऽविनाशित्वादात्मनो दृष्टिरप्यविनाशिनी यावद्द्रष्टृभाविनी हि सा। ननु विप्रतिषिद्धमिदमभिधीयते द्रष्टुः सा दृष्टिर्न विपरिलुप्यत इति च। दृष्टिश्च द्रष्ट्रा क्रियते। दृष्टिकर्त्तृत्वाद्धि द्रष्टेत्युच्यते। क्रियमाणा च द्रष्ट्रा दृष्टिर्न विपरिलुप्यत इति चाशक्यं वक्तुं। ननु न विपरिलुप्यत इति वचनादविनाशिनी स्यात्। न वचनस्य ज्ञापकत्वात्। न हि न्यायप्राप्तो विनाशः। कृतकस्य वचनशतेनापि वारयितुं शक्यते वचनस्य यथा प्राप्तार्थज्ञापकत्वात्। नैष दोषः। आदित्यादि-

---

आ॰ त्यादिवाक्यं चोदितार्थानुवादस्तत्परिहारस्तु पश्यन्नित्यादिवाक्यमिति विभजते। यत्तदिति। न हीत्यादिवाक्यनिरस्यामाशङ्कामाह। नन्विति। चक्षुरादिव्यापाराभावेऽपि सुप्ते दर्शनादि किं न स्यादित्याशङ्क्याह। व्यापृतेष्विति। अस्तु तर्हि तत्रापि करणव्यापारो नेत्याह। न चेति॥ अयमिति सुषुप्तपुरुषोक्तिः॥

न पश्यत्येवेति नियमं निषेधति। नेति। तत्र हेतुं वक्तुं प्रश्नपूर्व्वकं प्रतिज्ञां प्रस्तौति। किं तर्हीति। तत्राकाङ्क्षापूर्व्वकं हेतुवाक्यमुत्थाप्य व्याचष्टे। कथमित्यादिना। अविनाशित्वादित्येतद्व्याकुर्वन्दृष्टेर्विनाशाभावं स्पष्टयति। यथेत्यादिना। द्रष्टुर्दृष्टिर्नश्यतीत्यत्र विरोधं चोदयति। नन्विति। विप्रतिषेधमेव साधयति। दृष्टिश्चेति। कार्य्यस्यापि वचनादविनाशः स्यादिति

भा॰ प्रकाशकत्ववद्दर्शनोपपत्तेः। यथादित्यादयो नित्यप्रकाश-
स्वभावा एव सन्तः स्वाभाविकेन नित्येनैव प्रकाशेन प्रका-
शयन्ति। न ह्यप्रकाशात्मनः सन्तः प्रकाशं कुर्व्वन्तः प्रकाश-
यन्तीत्युच्यन्ते। किं तर्हि स्वभावेनैव नित्येनैव प्रकाशेन।
तथायमथात्मा विपरिलुप्तस्वभावया दृष्ट्या नित्यया
द्रष्टेत्युच्यते। गौणं तर्हि द्रष्टृत्वं। नैवमेव मुख्यत्वोपपत्तेः।
यदि ह्यन्यथाप्यात्मनो द्रष्टृत्वं दृष्टं तदास्य द्रष्टृत्वस्य गौणत्वं
न त्वात्मनोऽन्यो दर्शनप्रकारोऽस्ति। तदेवमेव मुख्यं द्रष्टृत्व-
मुपपद्यते नान्यथा। यथादित्यादीनां प्रकाशयितृत्वं नित्ये-
नैव स्वाभाविकेनाक्रियमाणेन प्रकाशेन। तदेव च प्रकाश-

---

आ॰ शङ्कते। नन्विति॥ तस्या कारकत्वान्नैवमिति परिहरति। न
वचनस्येति॥ तदेव स्फुटयति। न हीति॥ यत्कृतकं तदनित्य-
मिति व्याप्त्यनुगृहीतानुमानविरोधाद्वचो न कार्य्यनित्यत्वबोधक-
मित्यर्थः॥ कूटस्थदृष्टिरेवात्र द्रष्टृशब्दार्थो न दृष्टिकर्त्ता यत्र
विप्रतिषेधोऽस्तीति सिद्धान्तयति। नैष दोष इति॥ आदित्या-
दिप्रकाशवत्त्ववदित्युक्तं दृष्टान्तं व्याचष्टे। यथेति॥ दृष्टान्तेऽपि
विप्रतिपन्नं प्रत्याह। न हीति॥ दर्शनोपपत्तेरित्युक्तं दार्ष्टान्तिकं
विभजते। तथेति॥ आत्मनो नित्यदृष्टित्वे दोषमाशङ्कते। गौण-
मिति॥ गौणस्य मुख्यापेक्षत्वान्मुख्यस्य चान्यस्य द्रष्टृत्वस्याभावा-
न्नैवमित्युत्तरमाह। नेत्यादिना॥ तामेवोपपत्तिमुपदर्शयति।
यदि हीत्यादिना॥ अन्यथा कूटस्थदृष्टिमन्तरेणेति यावत्॥ दर्श-
नप्रकारस्यान्यत्वं क्रियात्मत्वं तस्य निष्क्रियत्वश्रुतिस्मृतिविरोधा-
दिति शेषः॥ द्रष्टृत्वान्तरानुपपत्तौ फलितमाह। तदेवमेवेति॥
नित्यदृष्टित्वेनैवेत्यर्थः॥ उक्तेऽर्थे दृष्टान्तमाह। यथेत्यादिना॥
तथात्मनोऽपि द्रष्टृत्वं नित्येनैव स्वाभाविकेन चैतन्यज्योतिषा
सिद्ध्यति तदेव च द्रष्टृत्वं मुख्यं द्रष्टृत्वान्तरानुपपत्तेरिति शेषः॥
आत्मनो नित्यदृष्टिस्वभावत्वे फलितमाह। तस्मादिति॥ हजन्तं

उ॰ न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्॥ २३॥

---

भा॰ यितृत्वं मुख्यं प्रकाशयितृत्वान्तरानुपपत्तेः। तस्मान्न द्रष्टुर्दृष्टेर्विपरिलुप्यत इति न विप्रतिषेधगन्धोऽप्यस्ति॥ नन्वनित्यक्रियाकर्तृविषय एव तृच्प्रत्ययान्तस्य शब्दस्य प्रयोगो दृष्टो यथा छेत्ता भेत्ता गन्तेति तथा द्रष्टेत्यत्रापीति चेन्न। प्रकाशयितेति दृष्टत्वात्। भवतु प्रकाशकेष्वन्यथा सम्भवान्न त्वात्मनीति चेत्। न। दृष्ट्यविपरिलोपश्रुतेः। पश्यामि न पश्यामीत्यनुभवदर्शनान्नेति चेत्। न। करणव्यापारविशेषापेक्षत्वात्। उद्धृतचक्षुषाञ्च स्वप्न आत्मदृष्टेरविपरिलोपदर्शनात्। तस्मादविपरिलुप्तस्वभावैवात्मनो दृष्टिः। अतस्तयाऽविपरिलुप्तया दृष्ट्या स्वयंज्योतिःस्वभावया

---

आ॰ दृष्टिशब्दमाश्रित्य शङ्कते। नन्विति॥ तत्राप्यनित्यक्रियाकर्तृविषयतृजन्तशब्दप्रयोग इति शेषः॥ तृजन्तशब्दप्रयोगस्यानित्यक्रियाकर्तृविषयत्वं व्यभिचारयन्नुत्तरमाह। नेति॥ वैषम्यमाशङ्कते। भवत्विति॥ आदित्यादिषु स्वाभाविकप्रकाशेन प्रकाशयितृत्वमस्तु कादाचित्कप्रकाशेन प्रकाशयितृत्वस्य तेष्वसम्भवान्न त्वात्मनि नित्यादृष्टिरस्ति तत्प्रमाणाभावात्। तथा च कादाचित्कदृष्ट्यैव तस्य द्रष्टृतेत्यर्थः। प्रतीचश्चिद्रूपस्य श्रौतत्वात्कर्तृत्वं विना प्रकाशयितृत्वमविशिष्टमित्युत्तरमाह। नेति॥ कूटस्थदृष्टिरात्मेत्युक्ते प्रत्यक्षविरोधं शङ्कते। पश्यामीति॥ द्विविधोऽनुभवस्तस्य कूटस्थदृष्टित्वमनुप्रकाति। चक्षुरादिव्यापारभावाभावापेक्षया पश्यामि न पश्यामीति धियोरात्मसाक्षिकत्वादित्युत्तरमाह। न करणेति॥ आत्मदृष्टेर्नित्यत्वे हेत्वन्तरमाह। उद्धृतेति॥ आत्मदृष्टेर्नित्यत्वमुपसंहरति। तस्मा-

भा॰ पश्यन्नेव भवति सुषुप्ते। कथं तर्हि न पश्यतीत्युच्यते। न तु तदस्ति किञ्चिद्द्वितीयं विषयभूतं किं विशिष्टं ततो द्रष्टुरन्यदन्यत्वेन विभक्तं यत्पश्येद्यदुपलभ्येत। यद्धि तद्विशेषदर्शनकारणमन्तःकरणं चक्षूरूपं च तदविद्ययान्यत्वेन प्रत्युपस्थापितमासीत्। तदेतस्मिन् काले एकीभूतं। आत्मनः परेण परिष्वङ्गात्। द्रष्टुर्हि परिच्छिन्नस्य विशेषदर्शनाय करणमन्यत्वेन व्यतिष्ठते। यस्तु स्वेन सर्व्वात्मना सम्परिष्वक्तः स्वेन परेण प्राज्ञेनात्मना प्रिययेव पुरुषस्तेन न पृथक्त्वेन व्यवस्थितानि करणानि विषयाश्च। तदभावाद्विशेषदर्शनं नास्ति। करणादिकृतं हि तन्नात्मकृतं। आत्मकृतमिव प्रत्यवभासते।

---

आ॰ दिति। तन्नित्यत्वोक्तिफलमाह। अत इति। वाक्यान्तरमाकाङ्क्षापूर्व्वकमुत्थाप्य व्याचष्टे। कथमित्यादिना। द्वितीयादिपदानां पौनरुक्त्यमाशङ्क्यार्थभेदं दर्शयति। यद्धीत्यादिना। साभासमन्तःकरणं यत्पश्येदिति विशेषदर्शनकारणं प्रमातृद्वितीयं। तस्मादन्यच्चक्षुरादिप्रमाणं रूपादि च प्रमेयं विभक्तं तत्सर्व्वं जाग्रत्स्वप्नयोरविद्याप्रतिपन्नं सुषुप्तिकाले कारणमात्रतां गतमभिव्यक्तं नासीत्यर्थः। सुषुप्ते द्वितीयं प्रमातृरूपं नास्तीत्येतदुपपादयति। आत्मन इति॥ प्रमातृरूपं पृथङ्नास्तीति शेषः। तथापि करणव्यापारकृतं विषयदर्शनमात्मनः स्यादित्याशङ्क्याह। द्रष्टुरिति। सुषुप्तस्यापि परिच्छिन्नत्वमाशङ्क्याह। यस्त्विति॥ तस्य परेणैकीभावफलमाह। तेनेति। विषयेन्द्रियाभावकृतं फलमाह। तदभावादिति। किमिति विषयाद्यभावाद्विशेषदर्शनं निषिध्यते। तत्त्वमेव तस्यात्मसत्त्वाधीनं किं न स्यादित्याशङ्क्याह। करणादीति। नन्ववस्थात्रये विशेषदर्शनमात्मकृतं प्रतिभाति तस्य प्रधानत्वादत आह। आत्मकृतमिति। न त्वित्यादेस्तात्पर्य्यमुपसंहरति। तस्मादिति। प्रमातृकरणविषयकृतत्वाद्विशेषदृष्टेस्तेषाञ्च सुषुप्तावभावात्तत्कार्य्याया विशेषदृष्टेरपि तत्राभावादिति

उ॰ यद्वै तन्न जिघ्रति जिघ्रन्वै तन्न जिघ्रति न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥ २४ ॥ यद्वै तन्न रसयते रसयन्वै तन्न रसयते न हि रसयितूरसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥ २५ ॥ यद्वै तन्न वदति वदन्वै तन्न वदति न हि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽवि-

---

भा॰ तस्मात्तत्कृतेयं भ्रान्तिरात्मनो दृष्टिः परिलुप्यत इति समानमन्यत् ॥ २३ ॥

यद्वै तन्न जिघ्रति । यद्वै तन्न रसयते । यद्वै तन्न वदति । यद्वै तन्न शृणोति । यद्वै तन्न मनुते । यद्वै तन्न स्पृशति । यद्वै तन्न विजानाति । मननविज्ञानयोर्दृष्ट्यादिसहकारित्वेऽपि सति चक्षुरादिनिरपेक्षो भूतभविष्यद्वर्त्तमानविषयव्यापारो विद्यत इति पृथग्ग्रहणं । किं

---

आ॰ यावत् । तत्कृता जागरादावात्मकृतत्वेन भ्रान्तिप्रतिपन्नविशेषदर्शनाभावप्रयुक्तेत्यर्थः समानमन्यदिति ॥ २३ ॥

यद्वै तन्न पश्यतीत्यादावुक्तन्यायमुत्तरवाक्येष्वतिदिशति । मनोबुद्ध्योः साधारणकरणत्वात् पृथग्व्यापाराभावे कथं पृथङ्निर्देशः स्यादित्याशङ्क्याह । मननेति । वाक्यानि व्याख्याय स्वसिद्धान्तस्फुरणार्थं विचारयति । किं पुनरिति ॥ धर्म्मभेदो धर्म्माणां सतां मिथो धर्म्मिणश्च भेदो नास्तीति यावत् ॥ धर्म्मस्य दृष्ट्यादिपदार्थस्येत्यर्थः । परोपाधिनिमित्तं चक्षुराद्यु-

उ० नाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥ २६ ॥ यद्वै तन्न शृणोति शृण्वन्वै तन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥ यद्वै तन्न मनुते मन्वानो वै तन्न मनुते न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥ २८ ॥ यद्वै तन्न स्पृशति स्पृशन्वै तन्न स्पृशति न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति

---

भा० पुनर्दृष्ट्यादीनामग्नेरौष्ण्यप्रकाशनज्वलनादिवद्धर्मभेद आहोस्विदभिन्नस्यैव धर्मस्य परोपाधिनिमित्तकं धर्मान्यत्वमित्यत्र केचिद्व्याचक्षते । आत्मवस्तुनः स्वत एवैकत्वं नानात्वञ्च । यथा गोर्गोद्रव्यतयैकत्वं सास्नादीनां धर्माणां परस्परतो भेदो यथा स्थूलेष्वेवमेकत्वं नानात्वं तथा निरवयवेष्वमूर्त्तवस्तुष्वेकत्वं नानात्वञ्चानुमेयं । सर्व्वत्राव्यभिचार-

---

आ० पाधिकृतमित्येतत् । धर्म्मान्यत्वं धर्म्मत्वं धर्म्मिणो मिथोऽन्यत्वं चेत्यर्थः । भर्तृप्रपञ्चमतेन पूर्व्वपक्षं प्रकटयति । यथेति ॥ गवादीनां सावयवत्वाद्रूपभेदसम्भवादेकेन रूपेणाभिन्नत्वं रूपान्तरेण भिन्नत्वमित्युभयथात्वेऽपि निरवयवेष्वात्मादिषु कथमनेकरूपत्वसिद्धिरित्याशङ्क्याह । यथा स्थूलेष्विति ॥ एकरूपत्वे वस्तुनो दृष्टान्तादृष्टेर्नानारूपत्वे गवादिदृष्टान्तदर्शनात्तदेवानुमेयं ।

उ॰ ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥ २९ ॥ यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥ ३० ॥

---

भा॰ दर्शनादात्मनोऽपि तद्वदेव दृष्ट्यादीनां परस्परं नानात्वमात्मना चैकत्वमिति नान्यपरत्वात् । न हि दृष्ट्यादिधर्मभेदप्रदर्शनपरमिदं वाक्यं यद्वै तदित्यादि । किं तर्हि यदि चैतन्यात्मज्योतिः कथं न जानाति सुषुप्ते नूनमतो न चैतन्यात्मज्योतिरित्येवमाशङ्काप्राप्तौ तन्निराकरणायैतदारब्धं यद्वै तदित्यादि ॥

यदस्य जाग्रत्स्वप्नयोश्चक्षुराद्यनेकोपाधिद्वारा चैतन्यात्मज्योतिःस्वाभाव्यमुपलक्षितं दृष्ट्याद्यभिधेयव्यवहारापन्नं सुषुप्त उपाधिभेदव्यापारनिवृत्तावनुद्भास्यमान-

---

आ॰ विमतं भिन्नाभिन्नं वस्तुत्वाद्घटादिवदित्यर्थः । यद्यपि गगनादिषु भिन्नाभिन्नत्वमनुमीयते तथापि कथमात्मनि तदनुमानमित्याशङ्क्य वस्तुत्वस्य नानारूपत्वेनाव्यभिचारादात्मन्यपि यथोक्तमनुमानं निरङ्कुशप्रसरमित्याह । सर्व्वत्रेति । यथोक्तानुमानानुग्राहकं द्वैतमित्यादिभिन्नाभिन्नत्ववस्तुनि तात्पर्य्यमिति भावः ॥ भर्तृप्रपञ्चोक्तं वाक्यतात्पर्य्यं निराकरोति । नेत्यादिना ॥

चैतन्याविनाशे वाक्यतात्पर्य्यं चेत्कथं तर्हि दृष्ट्यादिभिदा वचनमित्याशङ्क्याह । यदस्येति । तद्धि सुषुप्त्यवस्थायामुपाधेरन्तःकरणस्य चक्षुरादिभेदाधीनपरिणामव्यापारनिवृत्तौ सत्यामु-

भा॰ त्वादनुपलक्ष्यमाणस्वभावमप्युपाधिभेदेन भिन्नमिव यथा
प्राप्तानुवादेनैव विद्यमानत्वमुच्यते । तत्र दृष्ट्यादिधर्म्म-
भेदकल्पना विवक्षितार्थानभिज्ञतया सैन्धवघनवत्प्रज्ञाने-
करसघनश्रुतिविरोधाच्च विज्ञानमानन्दं सत्यं ज्ञानं प्रज्ञानं
ब्रह्मेत्यादिश्रुतिभ्यश्च । शब्दप्रवृत्तेश्च लौकिकी च शब्द-
प्रवृत्तिश्चक्षुषा रूपं विजानाति । श्रोत्रेण शब्दं विजानाति ।
वाचाजस्य रसं विजानातीति च सर्व्वत्रैव च दृष्ट्यादि-
शब्दाभिधेयानां विज्ञानशब्दवाच्यतामेव दर्शयति ।
शब्दप्रवृत्तिश्च प्रमाणं । दृष्टान्तोपपत्तेश्च । यथा हि लोके
स्वच्छस्वाभाव्ययुक्तः स्फटिकस्तन्निमित्तमेव केवलं हरि-

---

आ॰ पाधिभेदस्यानुद्भास्यमानत्वात्तेन भिन्नमिवानुपलक्ष्यमाणस्वभावं
यद्यपि तथापि चक्षुर्द्वारेण जायमानायां बुद्धिवृत्तौ व्यक्तं चैतन्यं
दृष्टिः । श्रोत्रद्वारेण जातायां तस्यां व्यक्तं श्रुतिरित्युपाधिभेदात्प्रा-
प्तभेदानुवादेन चैतन्यस्याविनाशित्वे वाक्यतात्पर्य्यमित्यर्थः ॥ उक्ते
वाक्यतात्पर्य्ये स्थिते फलितमाह । तत्रेति ॥ इतश्च दृष्ट्यादिभेद-
कल्पना न श्लिष्टेत्याह । सैन्धवेति ॥ तदेव स्पष्टयति । विज्ञान-
मिति । न दृष्ट्यादिभेदकल्पनेति शेषः ॥ यथा घटाकाशो महा-
काश इत्येकशब्दविषयत्वादुपाधिभेदेऽप्याकाशस्यैकत्वमिष्टं तथै-
कशब्दप्रवृत्तेरेकत्वं चितोऽपि स्वीकर्त्तव्यं तत्कुतो दृष्ट्यादिभेद-
सिद्धिरित्याह । शब्दप्रवृत्तेश्चेति ॥ तामेव विवृणोति । लौकिकी
चेति ॥ यत्तु सिद्धान्ते दृष्टान्तो नास्तीति तत्राह । दृष्टान्तेति ।
किमेकरूपत्वे वस्तुनो दृष्टान्तो नास्ति किं वा मिथ्यात्वे तन्नाना-
रूपस्येति वक्तव्यं । नाद्यः । नानारूपवस्तुवादिभिरप्येकैकरूपस्या-
नवस्थापरिहारार्थमनानारूपत्वाङ्गीकारादस्माकं दृष्टान्तसिद्धेर्व-
स्तुत्वहेतोश्च तत्रैवानैकान्तिकत्वात्तस्मादेकरूपमेव वस्तु स्वीकर्त्त-
व्यमिति भावः ॥ द्वितीयं दूषयति । यथा हीति । तन्निमित्तमेवेत्यत्र
तच्छब्देन स्वच्छस्वाभाव्यं परामृश्यते । स्फटिके हरितादिधर्म्माणां

भा॰ तन्नीललोहिताद्युपाधिभेदसंयोगात्तदाकारत्वं भजते। न च स्वच्छस्वाभाव्यव्यतिरेकेण हरितनीललोहितादिलक्षणा धर्म्मभेदाः स्फटिकस्य कल्पयितुं शक्यन्ते। तथा चक्षुराद्युपाधिभेदसंयोगात् प्रज्ञानघनस्वभावस्यैवात्मज्योतिषो दृष्ट्यादिशक्तिभेद उपलक्ष्यते। प्रज्ञानघनस्य स्वच्छस्वाभाव्यात्। स्फटिकस्वच्छस्वाभाव्यवज्ज्योतिषश्च॥

यथा चादित्यज्योतिरवभास्य भेदैः संयुज्यमानं हरितनीलपीतलोहितादिभेदैरविभाज्यं तदाकाराभासं भवति। तथा च कृत्स्नं जगदवभासयच्चक्षुरादीनि च तदाकारं भवति। तथा चोक्तमात्मनैवायं ज्योतिषाऽऽस्त इत्यादि। न

---

आ॰ स्वाभाविकत्वं किं न स्यादित्याशङ्क्याह। न चेति। तस्य हि स्वच्छं स्वाभाव्यं तदयोगेन हरिताद्युपाधिभेदसम्बन्धव्यतिरेकेणेति यावत्॥ एकस्य नानारूपत्वं मिथ्येत्यत्र दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह। तथेति। आत्मा मिथ्यानानानिर्भास उपहितत्वात्स्फटिकवदित्यर्थः॥ किञ्चात्मा मिथ्यानानात्वाधारः स्वच्छत्वात्स्फटिकवदित्याह। प्रज्ञानेति। किञ्चात्मा कल्पितनानात्वाधारो ज्योतिष्ट्वादादित्यादिज्योतिर्वदित्याह। स्वयमिति।

आदित्यायनकल्पितोऽपि भेदोऽस्तीत्याशङ्क्य विवक्षितं साम्यमाह। यथा चेत्यादिना। अविभाज्यं वस्तुतो विभागायोग्यमिति यावत्॥ चक्षुरादीनि चावभासयदिति सम्बन्धः॥ आत्मनः सर्व्वावभासकत्वे वाक्योपक्रमं प्रमाणयति। तथेति॥ यत्तु निरवयवेष्वपि नानारूपत्वमनुमेयमिति तत्राह। न चेति॥ आकाशादीनां दृष्टान्तत्वमाशङ्क्य निराचष्टे। यदपीत्यादिना॥ कथमाकाशस्यानेकधर्म्मवत्त्वमौपाधिकमित्याशङ्क्य तस्य सर्व्वगतत्वं तावदौपाधिकमिति साधयति। आकाशस्येति॥ कथं तर्हि सर्व्वगतत्वव्यवहारस्तत्राह। सर्व्वोपाधीति॥ नन्वाकाशस्य सर्व्वत्र

भा॰ च निरवयवेष्वनेकात्मता शक्यते कल्पयितुं। दृष्टान्ता-भावात्। यदप्याकाशस्य सर्व्वगतत्वादिधर्म्मभेदः परिकल्प्यते परमाण्वादीनाञ्च गन्धरसाद्यनेकगुणवत्त्वं तदपि निरूप्य-माणं परोपाधिनिमित्तमेव च भवत्याकाशस्य तावत् सर्व्वगतत्वं नामतः स्वतो धर्म्मोऽस्ति। सर्व्वोपाधिसंश्रयाद्धि सर्व्वत्र स्वेन रूपेण सत्त्वमपेक्ष्य सर्व्वगतत्वव्यवहारो न त्वा-काशः क्वचिद्गतो वाऽगतो वा। स्वतो गमनं हि नाम देशा-न्तरस्थस्य देशान्तरेण संयोगकारणं। सा च क्रिया नैवा-विशेषे सम्भवति। एवं धर्म्मभेदा नैव सन्त्याकाशे। तथा परमाण्वादावपि। परमाणुर्नाम पृथिव्या गन्धघनायाः परमः सूक्ष्मोऽवयवो गन्धात्मक एक एव न तस्य पुनर्गन्ध-

---

आ॰ गमनमपेक्ष्य सर्व्वगतत्वं किमिति न व्यवह्रियते तत्राह। न त्विति॥ आकाशे गमनायोगं वक्तुं तत्स्वरूपमाह। गमनं हीति॥ ननु कुतश्चिद्विभागे संयोगे च केनचिद्देशे न तत्कारणीभूता क्रियापि श्येनादाविवाकाशे भविष्यति नेत्याह। सा चेति। सावयवे हि श्येनादौ क्रिया दृश्यते आकाशत्वविशेषं निरवयवं कुतस्तत्र क्रियेत्यर्थः॥ तथापि धर्म्मान्तराण्याकाशे भविष्यन्तीत्याशङ्क्य तेषा-मपि क्रियापूर्व्वकाणामुक्तन्यायेनावक्तीकृतत्वमाह। एवमिति। भेदाभेदाभ्यां दुर्वचत्वाच्च तत्र धर्म्मधर्म्मिभावो न सम्भवतीति भावः॥ आकाशे दर्शितन्यायमन्यत्रापि सञ्चारयति। तथेति॥ पार्थिवत्वं परमाणोरेकं रूपं गन्धवत्त्वं चापरमित्यनेकरूपत्वमि-त्याशङ्क्याह। परमाणुर्नामेति। न हि पार्थिवत्वातिरेकि गन्धवत्त्वं प्रामाणिकमिति भावः॥ वैशेषिकपरिभाषामाश्रित्य शङ्कयति। यथेति॥ पार्थिवपरमाणौ रसादिमत्त्वमनौपाधिकं न भवति जलादिसंसर्गकृतत्वात्तथा च निरुपाधिकभेदेनेदमुदाहरण-मिति परिहरति। न तत्रापीति॥ उक्तन्यायस्य दिगादावपि

उ॰ यत्र वाऽन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्य-

---

भा॰ वत्त्वं नाम शक्यते कल्पयितुं। अथ तस्यैव रसादिमत्त्वं स्यादिति चेन्न। तस्याप्यबादिसंसर्गनिमित्तत्वात्। तस्मान्न निरवयवस्यानेकधर्मवत्त्वे दृष्टान्तोऽस्ति। एतेन दृगादिशक्तिभेदानां पृथक्चक्षूरूपादिभेदेन परिणामभेदकल्पना परमात्मनि प्रत्युक्ता ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

जाग्रत्स्वप्नयोरिव यद्विजानीयात्तद्वितीयं प्रविभक्तमन्यत्वेन नासीत्युक्तमतः सुषुप्ते न विजानाति विशेषं। ननु यद्यस्यायमेवास्य स्वभावः किं निमित्तमस्य विशेषविज्ञानं स्वभावपरित्यागेन। अथ विशेषविज्ञानमेवास्य स्वभावः कस्मादेष विशेषं न विजानातीत्युच्यते। शृणु। यत्र यस्मिन् जागरिते स्वप्ने वान्यदिवात्मनो वस्त्वन्तरमिवाविद्यया प्रत्यु-

---

आ॰ समत्वं मत्वोपसंहरति। तस्मादिति। सन्ति परस्मिन्नात्मनि दृगादिशक्तिभेदास्तेषां मध्ये दृक्छक्तिश्चक्षुरात्मना रूपात्मना च पृथगेव परिणमते। घ्रातिशक्तिश्च घ्राणात्मना गन्धात्मना चेत्यनेन क्रमेण परस्मिन्परिणामकल्पना भर्तृप्रपञ्चैर्या कृता सापि परस्यैकरूपत्वोपपादनेन निरस्तेत्याह। एतेनेति ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

औपाधिको दृष्ट्यादिभेदो न वास्तवोऽस्तीत्युपपाद्य वृत्तमनुवदति। जाग्रदिति ॥ यत्रेत्युत्तरवाक्यव्यावर्त्यामाशङ्कां दर्शयति। नन्विति। किमस्य विशेषविज्ञानराहित्यं स्वरूपं किं वा विशेषविज्ञानवत्त्वं। आद्ये जाग्रत्स्वप्नयोरनुपपत्तिः। द्वितीये सुषुप्तेरसि-

उ० च्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ॥ ३१ ॥
सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः

---

भा० प्रत्युपस्थापितं भवति तत्र तस्मादविद्याप्रत्युपस्थापितादन्योऽन्यमिवात्मानं मन्यमानोऽसत्यात्मनः प्रविभक्ते वस्त्वन्तरेऽसति चात्मनि ततः प्रविभक्तोऽन्योऽन्यत्पश्येदुपलभेत। तच्च दर्शितं स्वप्ने प्रत्यक्षतो घ्नन्तीव जिनन्तीवेति। तथान्योऽन्यज्जिघ्रेद्रसयेद्वदेच्छृणुयान्मन्वीत स्पृशेद्विजानीयादिति ॥ ३१ ॥

यत्र पुनः साविद्या सुषुप्ते वस्त्वन्तरप्रत्युपस्थापिका शान्ता तेनान्यत्वेनाविद्याप्रविभक्तस्य वस्तुनोऽभावात्तत्केन कं पश्येज्जिघ्रेद्विजानीयाद्वातः स्वेनैव हि प्राज्ञेनात्मना स्वयंज्योतिःस्वभावेन सम्परिष्वक्तः समस्तः सम्प्रसन्न आप्तकाम आत्मकामः सलिलवत्स्वच्छीभूतः सलिल इव सलिल एको द्वितीयस्याभावात्। अविद्यया हि द्वितीयः प्रविभज्यते।

---

आ० ज्ञिरिति भावः। प्रतीचश्चिन्मात्रज्योतिषो विशेषविज्ञानराहित्यमेव स्वरूपं तथापि साविद्याकल्पितविशेषविज्ञानवत्त्वमाश्रित्यावस्थाद्वयं सिध्यतीत्युत्तरं वाक्यमवलम्ब्योत्तरमाह। उच्यत इत्यादिना। तच्चेत्याविद्यं दर्शनमित्यर्थः ॥ ३१ ॥

पूर्वोक्तवस्तूपसंहारार्थं सलिलवाक्यमुत्थापयति। यत्रेत्यादिना। तेनाविद्यायाः शान्तत्वेनेति यावत्। वस्तुनोऽभावात्तत्केनेति शेषः। सुषुप्ते विशेषविज्ञानाभावप्रयुक्तं फलमाह। अत इति। पूर्वमेवास्यार्थस्योक्तत्वं द्योतयितुं हिशब्दः। सम्परिष्वक्तत्वं समस्तत्वमपरिच्छिन्नत्वं तत्फलं सम्प्रसन्नत्वं। प्रसन्न-

उ॰ सम्राडिति हैनमनुशशास याज्ञवल्क्य एषास्य परमा गतिरेषास्य परमा सम्पदेषोऽस्य परमो

---

भा॰ सा च शान्ताचात्र एको द्रष्टा दृष्टेरविपरिलुप्तत्वात्मज्योतिःस्वभावा या। अद्वैतो द्रष्टव्यस्य द्वितीयस्याभावादेतदमृतमभयमेष ब्रह्मलोको ब्रह्मैव लोको ब्रह्मलोकः पर एवायमस्मिन् काले व्यावृत्तकार्य्यकरणोपाधिभेदः स्व आत्मज्योतिषि शान्तसर्व्वसम्बन्धो वर्त्तते। हे सम्राडिति ह एवं हैनं जनकमनुशशासानुशिष्टवान् याज्ञवल्क्य इति। श्रुतेर्वचनमेतत्कथं वानुशशास एषास्य विज्ञानमयस्य परमा गतिः। यास्त्वन्या देहग्रहणलक्षणा ब्रह्मादिस्तम्बपर्य्यन्ता अविद्या कल्पितास्ता गतयातोऽपरमा अविद्याविषयत्वात्। इयन्तु देवतादिगतीनां कर्म्मविद्यासाध्यानां परमोत्तमा। यः समस्तात्मभावो यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानातीत्येषैव च परमा सम्पत्सर्व्वासां सम्पदां विभूतीनां इयं परमा स्वाभाविकत्वादस्याः कृतका ह्यन्याः सम्पदः।

---

आ॰ वादो हि परिच्छेदाभिमानकृतः॥ सम्प्रसन्नत्वे हेत्वन्तरमाह। आप्तकाम इति॥ तदेव सम्प्रसन्नत्वं दृष्टान्तेन स्पष्टयति। सलिलवदिति॥ उक्तेऽर्थे वाक्याक्षराणि योजयति। सलिल इवेति॥ द्वितीयस्याभावं सुषुप्ते व्यक्तीकरोति। अविद्ययेति। अद्रष्टा द्रष्टेति वाच्छेदः। एकोऽद्वैतश्चेत्यभ्यासस्तात्पर्य्यलिङ्गं॥ तस्य परमपुरुषार्थत्वं दर्शयन्कूटस्थत्वमाह। एतदिति॥ किमिति षष्ठीसमासमुपेक्ष्य कर्म्मधारयो गृह्यते तत्राह। पर एवेति। अस्मिन्काले सुषुप्त्यवस्थायामित्येतत्। परमत्वं साधयति॥ यास्त्विति॥ प्रकृतं समस्तात्मभावं विशेषविज्ञानराहित्येन विशिनष्टि।

उ॰ लोक एषोऽस्य परम आनन्द एतस्यैवानन्द-
स्यान्यानि भूतानि मात्रामुपजीवन्ति ॥ ३२ ॥

---

भा॰ तथैषोऽस्य परमो लोकः। येऽन्ये कर्मफलाश्रया लोका-
स्तेऽस्यापरमाः। अयन्तु न केन च कर्मणा मीयते स्वाभा-
विकत्वादेषोऽस्य परमो लोकः। तथैषोऽस्य परम आनन्दः।
यान्यन्यानि विषयेन्द्रियसम्बन्धजनितानि आनन्दजातानि
तान्यपेक्ष्यैषोऽस्य परम आनन्दो नित्यत्वाद्यो वै भूमा तत्सु-
खमिति श्रुत्यन्तरात्। यत्रान्यत्पश्यत्यन्यद्विजानाति तदल्पं
मर्त्त्यममुख्यं सुखमिदं तु तद्विपरीतं। अत एव एषोऽस्य
परम आनन्दः। एतस्यैवानन्दस्य मात्रां कलामविद्याप्रत्युप-
स्थापितां विषयेन्द्रियसम्बन्धकालविभाव्यामन्यानि भूतानि
उपजीवन्ति। तत एवानन्दादविद्यया प्रविभज्यमानस्वरूपा-
दन्यत्वेन तानि ब्रह्मणः परिकल्प्यमानान्यन्यानि सन्त्युपजी-
वन्ति भूतानि विषयेन्द्रियसम्पर्कद्वारेण विभाव्यमानां॥३२॥

---

आ॰ यत्रेति ॥ सर्व्वात्मभावाख्यस्य लोकस्य परमत्वमुपपादयति। येऽन्य
इति। मीयते परिच्छिद्यते साध्यत इति यावत्॥ तेषुत्तस्य
सर्व्वात्मभावस्य परमानन्दत्वं विशदयति। यानीति॥ आत्मनो
ऽनवच्छिन्नानन्दत्वे छान्दोग्यश्रुतिं संवादयति। यो वै भूमेति॥
ननु वैषयिकमेकं सुखमात्मरूपं चापरमिति सुखभेदाङ्गीकारा-
दपसिद्धान्तः स्यादित्याशङ्क्य मुख्यामुख्यभेदेन तदुपपत्तेर्मैवमि-
त्याह। यत्रेत्यादिना॥ किञ्च वस्तुतो नास्त्येवात्मसुखातिरिक्तं
वैषयिकं सुखमित्याह। एतस्येति॥ ब्रह्मातिरिक्तचेतनाभावे
कान्युपजीवकानि स्युरित्याशङ्क्य परिहरति। कानीत्यादिना।
विभाव्यमानामानन्दस्य मात्रामिति पूर्व्वेण सम्बन्धः॥ ३२॥

उ॰ स यो मनुष्याणाꣳ राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स

---

भा॰ यस्य परमानन्दस्य मात्रा अवयवाः ब्रह्मादिभिर्मनुष्यपर्य्यन्तैर्भूतैरुपजीव्यन्ते तदानन्दमात्रावयवद्वारेण मात्रिणं परमानन्दमधिजिगमिषन्नाह । सैन्धवलवणशकलैरिव लवणशैलं। स यः कश्चिन्मनुष्याणां मध्ये राद्धः संसिद्धोऽविकलः समग्रावयव इत्यर्थः समृद्ध उपभोगोपकरणसम्पन्नो भवति। किञ्चान्येषां समानजातीयानामधिपतिः स्वतन्त्रः पतिर्न माण्डलिकः सर्वैः समस्तैर्मानुष्यकैरिति दिव्यभोगोपकरणनिवृत्त्यर्थं मनुष्याणामेव यानि भोगोपकरणानि तैः सम्पन्नानामप्यतिशयेन सम्पन्नः सम्पन्नतमः स मनुष्याणां परम आनन्दः। तत्रानन्दानन्दिनोरभेदनिर्द्देशात्रार्थान्तरभूतत्वमित्येतत्। परमानन्दस्यैवेयं विषयविषय्याकारेण

---

आ॰ स यो मनुष्याणामित्यादिवाक्यतात्पर्य्यमाह। यस्येति॥ यथा सैन्धवावयवैः सैन्धवाचलं लोको बोधयति तथा तस्यानन्दस्य मात्रा नाम अवयवास्तत्प्रदर्शनद्वारेणावयविनं परमानन्दमधिगमयितुमिच्छन्ननन्तरो ग्रन्थः प्रवृत्त इत्यर्थः॥ तात्पर्य्यमुक्त्वाक्षराणि व्याचष्टे। स यः कश्चिदित्यादिना॥ राद्धत्वमविकलत्वञ्चेत्समृद्धत्वेन पुनरुक्तिरित्याशङ्क्याह। समग्रेति॥ तदेव समृद्धत्वमपीत्याशङ्क्य व्याकरोति। उपभोगेति॥ अन्तर्बहिःसम्पत्तिभेदादपुनरुक्तिरिति भावः। न केवलमुक्तमेव तस्य विशेषणं किन्तु विशेषणान्तरञ्चास्तीत्याह। किञ्चेति॥ विशेषणतात्पर्य्यमाह। दिव्येति॥ तदनिवर्त्तनत्वे तस्य वक्ष्यमाणगन्धर्वादिष्वन्तर्भावः

उ॰ एकः पितृणां जितलोकानामानन्दोऽथ ये शतं पितृणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धर्वलोक आनन्दाः

---

भा॰ मात्रा प्रसृतेति युक्तं यत्र वा अन्यदिव स्यादित्यादिवाक्येन। तस्माद्युक्तोऽयं स परम आनन्द इत्यभेदनिर्देशः युधिष्ठिरादितुल्यो राजाचोदाहरणं दृष्टं। मनुष्यानन्दमादिं कृत्वा शतगुणोत्तरोत्तरक्रमेणोन्नीय परमानन्दं यत्र भेदो निवर्त्तते तमधिगमयति। अत्रायमानन्दः शतगुणोत्तरोत्तरक्रमेण वर्द्धमानो यत्र वृद्धिकाष्ठामनुभवति। यत्र गणितभेदो निवर्त्ततेऽन्यदर्शनश्रवणमननभावात्तं परमानन्दं विवक्षन्नाह। अथ ये मानुष्या एवंप्रकाराः शतमानन्दभेदाः स एकः पितॄणां। तेषां विशेषणं जितलोकानामिति। श्राद्धादिकर्म्मभिः पितॄंस्तोषयित्वा तेन कर्म्मणा जितो लोको येषां ते जितलोकाः पितर-

---

आ॰ स्यादिति भावः। अतिशयेन सम्पन्न इति शेषः॥ अभेदनिर्देशस्याभिप्रायमाह। तत्रेति॥ प्रकृतं वाक्यं सप्तम्यर्थः। आत्मनः सकाशादानन्दस्येति शेषः॥ औपचारिकत्वं भेदनिर्देशस्य भविष्यतीत्याशङ्क्याह। परमानन्दस्येति॥ तस्यैव विषयित्वं विषयत्वमिति स्थिते फलितमाह। तस्मादिति। यथोक्तो मनुष्यो न दृष्टिपथमवतरतीत्याशङ्क्याह। युधिष्ठिरादीति॥ अथ ये शतं मनुष्याणामित्यादेस्तात्पर्य्यमाह। दृष्टमिति॥ शतगुणेनोत्तरोत्तरआनन्दस्योत्कर्षप्रदर्शनक्रमेण परमानन्दमुन्नीय तमधिगमयत्युत्तरेण ग्रन्थेनेति सम्बन्धः॥ परमानन्दमेव विशिनष्टि। यत्रेति॥ भेदः सङ्ख्याव्यवहारः॥ उक्तमेव प्रपञ्चयति। यत्रेत्यादिना॥ पर-

उ० स एकः कर्म्मदेवानामानन्दो ये कर्म्मणा देवत्वमभिसम्पद्यन्ते । अथ ये शतं कर्म्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ते शतमा-

---

भा० लोकानां पितॄणां जितलोकानां मनुष्यानन्दशतगुणीकृतपरिमाण एक आनन्दो भवति । सोऽपि शतगुणीकृतो गन्धर्व्वलोक एक आनन्दो भवति । स च शतगुणीकृतः कर्म्मदेवानामेक आनन्दः । अग्निहोत्रादिश्रौतकर्म्मणा ये देवत्वं प्राप्नुवन्ति ते कर्म्मदेवाः ।

तथैवाजानदेवानामेक आनन्दः । आजानत एवोत्पत्तित एव ये देवास्ते आजानदेवाः । यश्च श्रोत्रियोऽधीतवेदोऽवृजिनो वृजिनं पापं तद्रहितो यथोक्तकारीत्यर्थः । अकामहतो वीततृष्णः । आजानदेवेभ्योऽर्वाक् यावन्तो

---

आ० मानन्दे विवक्षितकाष्ठायां हेतुमाह । अन्येति ॥ यद्यपि यस्येत्यादिनोक्तमेतत्तथापीहाक्षरव्याख्यानावसरे तदेव विवृतमित्यविरोधः । तत्तदानन्दप्रदर्शनानन्तर्य्यं तत्र तत्राप्यथशब्दार्थः । तत्तद्वाक्योपक्रमो वा । एवं प्रकारत्वसम्पन्नत्वादि पितॄणामानन्द इति सम्बन्धः ॥ श्राद्धादिकर्म्मभिरित्यादिशब्देन पिण्डपितृयज्ञादि गृह्यते ॥ के ते कर्म्मदेवा नाम तत्राह । अग्निहोत्रादीति ॥

यथा गन्धर्वानन्दः शतगुणीकृतः कर्म्मदेवानामेक आनन्दस्तथा कर्म्मदेवानन्दः शतगुणीकृतः सन्नाजानदेवानामेक आनन्दो भवतीत्याह । तथैवेति ॥ कुत्र वीततृष्णत्वं तत्राह । आजानदेवेभ्य इति ॥ श्रोत्रियादिवाक्यस्य प्रकृतासङ्गतिमाशङ्क्याह । तस्य चेति ॥ एवम्भूतस्य विशेषणत्रयविशिष्टस्येति यावत् । प्रजापति-

उ॰ जानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको

---

भा॰ विषयास्तेषु तस्य चैवंभूतस्याजानदेवैः समान आनन्द इत्येतदप्याख्यायते। यथान्यास्तच्छतगुणीकृतपरिमाणः प्रजापतिलोक एक आनन्दो विराट्शरीरे। तथा तद्विज्ञानवान् श्रोत्रियोऽधीतवेदस्त्वावृजिन इत्यादि पूर्ववत्। तच्छतगुणीकृतपरिमाणो ब्रह्मलोक एक आनन्दो हिरण्यगर्भात्मनि। यस्येत्यादि पूर्ववदेव। अतःपरं गणितनिवृत्तिः। एष परम आनन्द इत्युक्तो यस्य च परमानन्दस्य ब्रह्मलोकाद्यानन्दा मात्रा उदधेरिव विप्रुषः। एवं शतगुणोत्तरोत्तरवृद्ध्युपेतानन्दा यत्रैकतां यान्ति। यस्य श्रोत्रियप्रत्यक्षोऽथैष

---

आ॰ लोकशब्दस्य ब्रह्मलोकशब्दादर्थभेदमाह। विराडिति॥ यथा विराडात्मन्याजानदेवानन्दः शतगुणीकृतः सन्नेक आनन्दो भवति तथा विराडात्मोपासिता श्रोत्रियत्वादिविशेषणो विराजा तुल्यानन्दः स्यादित्याह। तथेति॥ तच्छतगुणीकृत इति तच्छब्दो विराडानन्दविषयः। श्रोत्रियत्वादिविशेषणवानपि हिरण्यगर्भोपासकस्तेन तुल्यानन्दो भवतीत्याह। यस्येति॥ हिरण्यगर्भानन्दादुपरिष्टादपि ब्रह्मानन्दे गणितभेदे प्राकरणिके प्राप्ते प्रत्याह। अतः परमिति॥ एषोऽस्य परमानन्द इत्युपक्रम्य किमित्यानन्दान्तरमुपदर्शितमित्याशङ्क्याह। एष इति॥ तथापि सौषुप्तसर्वात्मत्वमुपेक्षितमिति चेन्नेत्याह। यस्य चेति॥ प्रकृतस्य ब्रह्मानन्दस्यापरिच्छिन्नत्वमाह। तत्र हीति॥ अनवच्छिन्नत्वफलमाह। भूमत्वादिति॥ ब्रह्मानन्दादितरे परिच्छिन्ना मर्त्याश्चेत्याह। इतर इति॥ अथ या चान्यत्पश्यतीत्यादिश्रुते-

उ॰ ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतो ऽथैष एव परम आनन्दः।

---

भा॰ एव सम्प्रसादलक्षणः परम आनन्दस्तत्र हि नान्यत्पश्यति नान्यच्छृणोति अतो भूमा भूमत्वादमृतः। इतरे तद्विपरीता आनन्दाः। अत्र च श्रोत्रियत्वावृजिनत्वे तुल्ये। अकामहतत्वकृतो विशेष आनन्दशतगुणवृद्धिहेतुः। अत्रैतानि साधनानि श्रोत्रियत्वावृजिनत्वाकामहतत्वानि तस्य तस्यानन्दस्य प्राप्तावर्थादभिहितानि। यथा कर्म्माण्यग्निहोत्रादीनि देवानां देवत्वप्राप्तौ। तत्र च श्रोत्रियत्वावृजिनत्वलक्षणे कर्म्मणी अधरभूमिष्वपि समाने इति नोत्तरानन्दप्राप्तिसाधने अभ्युपेयेते॥

---

आ॰ रिति भावः॥ श्रोत्रियादिपदानि व्याख्याय तात्पर्य्यं दर्शयति। अत्र चेति॥ मध्ये विशेषणेषु त्रिष्विति यावत्। तुल्ये सर्व्वपर्य्यायेष्विति शेषः। विशेषणान्तरे विशेषमाह। अकामहतत्वेति॥ तथोक्तविभागमुपपादयितुं सिद्धमर्थमाह। अत्रैतानीति॥ यश्चेत्यादिवाक्यं सप्तम्यर्थः। तस्य तस्यानन्दस्येति देवप्राजापत्यादिनिर्देशः॥ अर्थादभिहितत्वे दृष्टान्तमाह। यथेति॥ ये कर्म्मणा देवत्वमित्यादिश्रुतिसामर्थ्याद्देवानन्दाप्तौ यथा कर्म्माणि साधनान्युक्तानि तथा यश्चेत्यादिश्रुतिसामर्थ्यादेव तान्यपि श्रोत्रियत्वादीनि तत्तदानन्दप्राप्तौ साधनानि विवक्षितानीत्यर्थः॥ ननु यथाकामविशेषश्रुतौ कथं श्रोत्रियत्वावृजिनत्वयोः सर्व्वत्र तुल्यत्वं। न हि ते पूर्व्वभूमिषु श्रुते तथा चाकामहतत्ववदानन्दोत्कर्षे तयोरपि हेतुतेति तत्राह। तत्र चेति॥ निर्द्धारणार्था सप्तमी। न हि श्रोत्रियत्वादिशून्यः सार्व्वभौमादिसुखमनुभवितुमुत्सहते। तथा च सर्व्वत्र श्रोत्रियत्वादेस्तुल्यत्वान्न तदानन्दातिरेकप्राप्तावसाधारणं साधनमित्यर्थः॥

उ॰ एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्द्ध्वं विमोक्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो विभयाञ्चकार मेधावी राजा सर्व्वेभ्यो माऽन्तेभ्य उदरौत्सीदिति ॥ ३३ ॥

---

भा॰ अकामहतत्वं तु वैराग्यतारतम्योपपत्तेरुत्तरोत्तरभूम्यानन्दप्राप्तिसाधनमित्यवगम्यते। स एष परम आनन्दो विद्वच्छ्रोत्रियप्रत्यक्षोऽधिगतः। तथा च वेदव्यासः। यच्च कामसुखं लोके यच्च दिव्यं महत्सुखं। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलामिति। एष ब्रह्मलोको हे सम्राडिति होवाच याज्ञवल्क्यः सोऽहमेवमनुशिष्टो भगवते तुभ्यं सहस्रं ददामि गवां। अत ऊर्द्ध्वं विमोक्षायैव ब्रूहीति व्याख्यातमेतत्। अत्र ह विमोक्षायेत्यस्मिन्वाक्ये याज्ञवल्क्यो विभयाञ्चकार भीतवान्। याज्ञवल्क्यस्य कारणमाह श्रुतिर्न याज्ञवल्क्यो वक्तृत्वसामर्थ्याभावाद्भीतवान् ज्ञानाद्वा किन्तर्हि मेधावी राजा सर्व्वेभ्यो मा मामन्तेभ्यः प्रश्ननिर्णयावसानेभ्य उत अरौत्सीत् आवृणोत् अवरोधं

---

आ॰ यदुक्तमानन्दशतगुणवृद्धिहेतुरकामहतत्वमतो विशेष इति तदुपपादयति। अकामहतत्वन्त्विति॥ पूर्व्वपूर्व्वभूमिषु वैराग्यमुत्तरोत्तरभूम्यानन्दप्राप्तिसाधनं वैराग्यस्य तरतमभावेन परमकाष्ठोपपत्तेर्निरतिशयस्य तस्य परमानन्दप्राप्तिसाधनत्वसम्भवादित्यर्थः। यश्चेत्यादिवाक्यस्येत्थं तात्पर्य्यमुक्त्वा प्रकृते परमानन्दे विद्वदनुभवं प्रमाणयति। स एष इति॥ निरतिशयमकामहतत्वं परमानन्दप्राप्तिहेतुरित्यत्र प्रमाणमाह। तथा चेति॥

उ० स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा

भा० कृतवानित्यर्थः । यद्यन्मया निर्णीतं प्रश्नरूपं विमोक्षार्थं तत्तदेकदेशत्वेनैव कामप्रश्नस्य गृहीत्वा पुनः पुनर्मां पर्य्यनुयुङ्क्ते एव मेधावित्वादित्येतद्भयकारणं सर्व्वं मदीयं विज्ञानं कामप्रश्नव्याजेनोपादित्सतीति ॥ ३३ ॥

अत्र विज्ञानमयः स्वयं ज्योतिरात्मा स्वप्ने प्रदर्शितः । स्वप्नान्तबुद्धान्तसञ्चारेण कार्य्यकरणव्यतिरिक्तताकामकर्म्मप्रविवेकस्यासङ्गतया महामत्स्यदृष्टान्तेन प्रदर्शितः । पुनश्चाविद्याकार्य्यं स्वप्न एव घ्नन्तीवेत्यादिना प्रदर्शितं । अर्थादविद्यायाः सतत्त्वं निर्द्धारितमतद्धर्म्माध्यारोपणरूपत्वमनात्मधर्म्मत्वञ्च । तथा विद्यायाश्च कार्य्यं प्रदर्शितं सर्व्वात्मभावः स्वप्न एव प्रत्यक्षतः सर्व्वोऽस्मीति मन्यते । सोऽस्य

आ० प्रकृतं प्रत्यग्भूतं परमानन्दमेष इति परामृशति श्रुतिर्मेधावी-त्याद्या व्याचष्टे । नेत्यादिना ॥ तथापि किन्तद्भयकारणं तदाह । यद्यदिति ॥ मेधावित्वात्प्रश्नातिशयप्राप्तिमत्त्वादिति यावत् ॥ तदेव भयकारणं प्रकटयति । सर्व्वमिति ॥ ३३ ॥

स वा एष एतस्मिन्नित्याद्युत्तरग्रन्थसम्बन्धं वक्तुं वृत्तं कीर्त्तयति । अत्रेति ॥ अत्रायं पुरुषः स्वयं ज्योतिर्भवतीति वाक्यं सप्तम्यर्थः ॥ वृत्तमर्थान्तरमनुवदति । स्वप्नान्तेति ॥ कार्य्यकरणव्यतिरिक्तत्वं प्रदर्शितमिति सम्बन्धः ॥ उक्तमर्थान्तरमाह । कामेति ॥ अथ यत्रैनं घ्नन्तीवेत्यादावुक्तमनुभाषते । पुनश्चेति ॥ किं तत्कार्य्यप्रदर्शनसामर्थ्यान्निर्द्धारितमविद्यायाः सतत्त्वं तदाह । अतद्धर्म्मेति ॥ अनात्मधर्म्मत्वमात्मनि चैतन्यवदस्वाभाविकत्वं । अविद्याकार्य्यवद्विद्याकार्य्यञ्च स्वप्ने सर्व्वात्मभावलक्षणं प्रत्यक्षत एव प्रदर्शितमित्याह । तथेति ॥ सुषुप्ते स्वप्नवदेतद्दर्शितमित्याह ।

उ॰ इत्येव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव ॥ ३४ ॥

---

भा॰ परमो लोक इति। तत्र च सर्वात्मभावः स्वभावोऽस्याविद्याकामकर्मादिसर्व्वसंसारधर्म्मसम्बन्धातीतं रूपमस्य साक्षात्सुषुप्ते गृह्यत इत्येतद्विज्ञापितं स्वयं ज्योतिरात्मा एष परम आनन्द एष विद्याया विषयः। स एष परमः सम्प्रसादः सुखस्य च परा काष्ठेत्येतदेवमन्तेन ग्रन्थेन व्याख्यातं। तस्यैतत्सर्व्वं विमोक्षपदार्थस्य दृष्टान्तभूतं बन्धनस्य च। ते च एते मोक्षबन्धने सहेतुके सप्रपञ्चे निर्दिष्टेऽविद्याकार्य्ये तत्सर्व्वं दृष्टान्तभूतमेवेति तद्दार्ष्टान्तिकस्थानीये मोक्षबन्धने सहेतुके कामप्रश्नार्थभूते त्वया वक्तव्ये इति पुनः पर्य्यनुयुङ्क्ते जनकोऽत ऊर्द्धं विमोक्षायैव ब्रूहीति। तत्र महामत्स्यवत्स्वप्रबुद्धान्तावसङ्गः सञ्चरत्येक आत्मा स्वयं

---

आ॰ एवमिति। साक्षात्स्वरूपचैतन्यबलादित्येतत्। अन्यथोत्थितस्य सुखपरामर्शो न स्यादिति भावः। उक्तं विद्याकार्य्यं निगमयति। एष इति। तमेव विद्याविषयं विशदयति। स एष इति। वृत्तानुवादमुपसंहरति। इत्येतदिति। एवमन्तेन ग्रन्थेन ब्रह्मलोकान्तवाक्येनेति यावत्। सोऽहमित्यादेस्तात्पर्य्यमनुवदति। तच्चेति। यतो राजेत्थं मन्यतेऽतस्तस्य सहस्रदाने युक्ता प्रवृत्तिरित्यर्थः। अत ऊर्द्धमित्यादेरभिप्रायमनुद्रवति। ते चेति। यद्यपि यथोक्तलक्षणे मोक्षबन्धने प्रागेवोपदिष्टे तथापि पूर्व्वोक्तं सर्व्वं दृष्टान्तभूतमेव तयोरिति यतो राजा मन्यते अतो मोक्षबन्धने दार्ष्टान्तिकभूते वक्तव्ये याज्ञवल्क्येनेति मन्यमानस्तं प्रेरयतीत्यर्थः। बन्धमोक्षयोर्वक्तव्यत्वेन प्राप्तयोरपि प्रथमं बन्धो

भा॰ ज्योतिरित्युक्तं। यथा चासौ कार्य्यकरणानि मृत्युरूपाणि परित्यजन्नुपाददानश्च महामत्स्यवत्स्वप्नबुद्धान्तावनुसञ्च-रति। तथा जायमानो म्रियमाणश्च तैरेव मृत्युरूपैः संयुज्यते वियुज्यते चोभौ लोकावनुसञ्चरतीति। सञ्चरणं स्वप्नबुद्धान्तावनुसञ्चारस्य दार्ष्टान्तिकत्वेन सूचितं। तदिह विस्तरेण सनिमित्तं सञ्चरणं वर्णयितव्यमिति तदर्थोऽय-मारम्भः। तत्र च बुद्धान्तात्स्वप्नान्तमयमात्मानुप्रवेशितः। तस्मात्सम्प्रसादस्थानं मोक्षदृष्टान्तभूतं। ततः प्रच्याव्य बुद्धान्ते संसारव्यवहारः प्रदर्शयितव्य इति। तेनास्य सम्बन्धः स वै बुद्धान्तात्स्वप्नान्तक्रमेण सम्प्रसन्न एषः। तस्मि-न्सम्प्रसादे स्थित्वा ततः पुनरीषत्प्रच्युतः स्वप्ने रत्वा चरित्वे-त्यादि पूर्व्ववद्बुद्धान्तायैवाद्रवति ॥ ३४ ॥

---

आ॰ वर्ण्यत इति वक्तुं दृष्टान्तं स्मारयति। तत्रेति॥ दृष्टान्तमनूद्य दार्ष्टान्तिकस्य बन्धस्य सूचितत्वं दर्शयति। यथा चेत्यादिना॥ उभौ लोकावित्यत्र प्रथममेवंशब्दो द्रष्टव्यः॥ वृत्तमनूद्यानन्तर-प्रकरणमुत्थापयति। तदिहेति॥ अयः संसारी तत्सम्यर्थः। सनि-मित्तं कामादिना निमित्तेन सहितमित्येतत्॥ प्रकरणारम्भ-मुक्त्वा समनन्तरवाक्यस्य व्यवहितेन सम्बन्धमाह। तत्र चेति॥ स वा एष एतस्मिन्बुद्धान्ते रत्वेत्युपक्रम्य स्वप्नान्तायैवेति वाक्यं सप्तम्या परामृश्यते॥ स्वप्नान्तशब्दस्य स्वप्नविषयत्वाद्यत्ययं विशि-नष्टि। सम्प्रसादेति॥ कथं पुनः सम्प्रसन्नस्य संसारोपवर्णनमि-त्याशङ्क्याह। तत इति॥ प्रागुक्तः सप्तम्यर्थो व्यवहितो ग्रन्थस्ते-नेति परामृश्यते। समनन्तरग्रन्थः सप्रोच्यते॥ वाक्यस्य व्यवहितेन सम्बन्धमुक्त्वा तदक्षराणि योजयति। स वै बुद्धान्तादिति॥ स्वप्नान्ते रत्वा चरित्वेत्यादि बुद्धान्तायैवाद्रवतीत्येतदन्तं पूर्ववदिति योजना॥ ३४॥

उ॰ तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवा-

---

भा॰ इत आरभ्यास्य संसारो वर्ण्यते। यथायमात्मा स्वप्ना-न्ताद्बुद्धान्तमागत एवमयमस्माद्देहाद्देहान्तरं प्रतिपत्स्यत इत्यत्राह दृष्टान्तः। तत्तत्र यथा लोके अनः शकटं सुसमाहितं सुष्ठु भृशं वा समाहितं भाण्डोपस्करणेनोलू-खलमुसलशूर्पपिठरादिनान्नाद्येन च सम्पन्नं संभारेणा-क्रान्तमित्यर्थः। तथा भाराक्रान्तं सदुत्सर्जच्छब्दं कुर्व-द्यथा यायाद्गच्छेच्छाकटिकेनाधिष्ठितं सत्। एवमेव यथोक्तो दृष्टान्तोऽयं शारीरः शरीरे भवः। कोऽसौ आत्मा लिङ्गोपाधिर्यः स्वप्नबुद्धान्ताविव जन्ममरणाभ्यां पाप्मसंसर्गवियोगलक्षणाभ्यामिहलोकपरलोकावनुसञ्चरति यस्योत्क्रमणमनु प्राणाद्युत्क्रमणं स प्राज्ञेन परेणात्मना स्वयं ज्योतिःस्वभावेनान्वारूढोऽधिष्ठितोऽवभास्यमानस्तथा

---

आ॰ तद्यथेत्यादेरिति तु कामयमान इत्युत्तरस्य सन्दर्भस्य तात्पर्यं सदिहेत्यथोक्तमनुवदति। इत आरभ्येत इति॥ तद्यथेत्यस्मादा-रभ्यादेतत् दृष्टान्तवाक्यमुत्थाप्य व्याकरोति। यथेत्यादिना। इव इत्यत्र दृष्टान्तमाहेति योजना। भाण्डोपस्करणेन भाण्डप्रमुखेन गृहोपस्करणेनेति यावत्॥ तदेवोपस्करणं विशिनष्टि। उलूख-लेति। पिठरं पाकार्थं स्थूलं भाण्डं॥ अन्वयं दर्शयितुं यथा शब्दोऽ-नूद्यते॥ लिङ्गविशिष्टमात्मानं विशिनष्टि। यः स्वप्नेति॥ जन्मम-रणे विशदयति। पाप्मेति॥ कार्यकरणानि पाप्मशब्देनोच्यन्ते। शारीरस्य प्राधान्यं द्योतयति। यस्येति॥ उत्सर्जन्यातीत्येतदा-लोचितमात्मनो गमनमित्याशङ्क्याह। तथेति॥ लिङ्गोपाधेरा-त्मनो गमनप्रतीतिरित्याथर्वणश्रुतिं प्रमाणयति। तथा चेति॥

उ॰ यत्रैष शारीर आत्मा प्राज्ञेनात्मनान्वारूढमुत्सर्जं-
याति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३५ ॥

---

भा॰ योऽयमात्मनैवायं ज्योतिषाऽऽस्ते पल्ययते इति उत्सर्जन्याति तच्चैतन्यात्मज्योतिषा भास्ये लिङ्गे प्राणप्रधाने गच्छति सति तदुपाधिरप्यात्मा गच्छतीव। तथा च श्रुत्यन्तरं कस्मिन्नहमित्यादि ध्यायतीवेति च। अत एवोक्तं प्राज्ञेना-त्मनान्वारूढ इत्यन्यथा प्राज्ञेनैकीभूतः शकटवत्कथमुत्सर्जं-याति तेन लिङ्गोपाधिरात्मा उत्सर्जन्मर्मसु निःकृत्यमा-नेषु दुःखवेदनयार्त्तः शब्दं कुर्व्वन्याति गच्छति। तत्कस्मि-न्काल इत्युच्यते। यत्रैतद्भवत्येतदिति क्रियाविशेषणमूर्द्ध्वो-च्छ्वासी यत्रोर्द्ध्वोच्छ्वासित्वमस्य भवतीत्यर्थः। दृश्यमान-स्याप्यनुवदनं वैराग्यहेतोरीदृशः कष्टः खल्वयं संसारो येनोत्क्रान्तिकाले मर्मसूत्कृत्यमानेषु स्मृतिलोपो दुःख-वेदनार्त्तस्य पुरुषार्थसाधनप्रतिपत्तौ चासामर्थ्यं परवशी-कृतचित्तस्य। तस्माद्यावदियमवस्था नागमिष्यति तावदेव

---

आ॰ उत्सर्जंयातीति श्रुतेर्मुख्यार्थत्वादात्मनो वस्तुतो गमनं किं न स्यादित्याशङ्क्याह। ध्यायतीवेति। औपाधिकमात्मनो गमन-मित्यत्र लिङ्गान्तरमाह। अत एवेति। कथमेतावता लिङ्गोपा-धेरात्मनो गमनं नेष्यते तत्राह। अन्यथेति। प्रमाणफलं निग-मयति। तेनेति। तत्कस्मिन्नित्यत्र तच्छब्देनार्त्तस्य शब्दविशेष-करणपूर्व्वकं गमनं गृह्यते। एतदूर्द्ध्वोच्छ्वासित्वमस्य यथा स्यात्तथा-ऽवस्था यस्मिन्काले भवति तस्मिन्गमनमित्युपपादयति। उच्यत इत्यादिना। किमिति प्रत्यक्षमर्थं श्रुतिरनुवदति तत्राह।

उ० स यत्रायमणिमानं न्येति जरया वोपतपता

भा० पुरुषार्थसाधनकर्त्तव्यतायामप्रमत्ता भवतेत्याह कारुण्या-च्छ्रुतिः ॥ ३५ ॥

तदस्योर्द्ध्वोच्छ्वासित्वं कस्मिन्काले किं निमित्तं कथं किमर्थं वा स्यादित्येतदुच्यते। सोऽयं प्राकृतः शिरःपाण्या-दिमान्पिण्डो यत्र यस्मिन्काले यमणिमानमणोर्भावम-णुत्वं कार्श्यमित्यर्थः नि एति निगच्छति। किं निमित्तं जरया वा स्वयमेव कालपक्वफलवज्जीर्णः कार्श्यं गच्छति उपतपतीत्युपतपत् ज्वरादिरोगस्तेनोपतपता वा उप-तप्यमानो हि रोगेण विषमाग्नितयान्नं भुक्तं न जरयति ततोऽन्नरसेनानुपचीयमानः पिण्डः कार्श्यमापद्यते तदु-

आ० दृश्यमानेति। कथं संसारस्वरूपानुवादमात्रेण वैराग्यसिद्धि-स्तत्राह। इंदृशा इति॥ ईदृशत्वमेव विशदयति। येनेत्यादिना॥ अनुवादश्रुतेरभिप्रायमुपसंहरति। तस्मादिति॥ ३५॥

प्रश्नचतुष्टयमनूद्य तदुत्तरत्वेन स यत्रेत्यादि वाक्यमादाय व्याकरोति। तदस्येत्यादिना॥ प्रश्नपूर्वकं कार्श्यनिमित्तं स्वाभा-विकमागन्तुकं चैतद्दर्शयति। किंनिमित्तमित्यादिना॥ कथं ज्वरा-दिना कार्श्यप्राप्तिरित्याशङ्क्याह। उपतप्यमानो हीति॥ यथोक्त-निमित्तद्वयवशात्कार्श्यप्राप्तिं निगमयति। अणिमानमिति॥ कस्मि-न्काले तदूर्द्ध्वोच्छ्वासित्वमस्येति प्रश्नस्योत्तरमुक्तविधया सिद्धमि-त्याह। यदेति॥ अवशिष्टप्रश्नस्योत्तरमाह। यदोर्द्ध्वोच्छ्वासीति। तत्र हि कार्श्यं निमित्तं सम्भृतशकटवच्छब्दकरणं स्वरूपं। शरीरविमोक्षणाय प्रयोजनमित्यर्थः॥ स यत्रेत्यादिवाक्यादर्थ-सिद्धमर्थमाह। जरेति॥ तद्यथेत्यादिवाक्यं प्रश्नपूर्वकमादाय व्याचष्टे। यदेत्यादिना॥ फलं बन्धनात्प्रमुच्यत इति सम्बन्धः।

उ॰ वाणिमानं निगच्छति यद्यथाम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यत एवमेवायं पुरुष

---

भा॰ च्यते उपतपता वेत्यणिमानं निगच्छति। यदात्यन्तकार्श्यं प्रतिपन्नो ज्वरादिनिमित्तैस्तदार्द्धोच्छ्वासी भवति। यदोर्द्धोच्छ्वासी तदा भृशाहितसम्भारशकटवदुत्सर्जन्याति जराभिभवो रोगादिपीडनं कार्श्यापत्तिश्च शरीरवतोऽवश्यं भाविन एतेऽनर्था इति वैराग्यायेदमुच्यते। यदाऽसावुत्सर्जन्याति तदा कथं शरीरं विमुञ्चतीति दृष्टान्त उच्यते। तत्तत्र यथाम्रं वा फलमुदुम्बरं वा फलं पिप्पलं वा फलं विषमानेकदृष्टान्तोपादानं मरणस्यानियतनिमित्तत्वाख्यापनार्थं। अनियतानि हि मरणस्य निमित्तान्यसङ्ख्यातानि च। एतदपि वैराग्यार्थमेव। यस्मादयमनेकमरणनिमित्तवांस्तस्मात्सर्व्वदा मृत्योरास्ये वर्त्तत इति। बन्ध-

---

आ॰ न्तमिति विषमानेकदृष्टान्तोपादानमेकेनापि विवक्षितसिद्धेरित्याशङ्क्याह। विषमेति॥ कथं मरणस्यानियतानि अनेकानि निमित्तानि सम्भवन्तीत्याशङ्क्यानुभवमनुसृत्याह। अनियतानीति॥ अथ मरणस्यानेकानियतनिमित्तवत्त्वसङ्कीर्त्तनं कुत्रोपयुज्यते तत्राह। एतदपीति॥ तदर्थवत्त्वमेव समर्थयते। यस्मादिति॥ इत्थमप्रमत्तैर्भवितव्यमिति शेषः। वृन्तेन सह फलं येन रसेन सम्बध्यते स रसो बन्धनकारणभूतो बन्धनं वृन्तमेव वा बन्धनं यस्मिन् फलं सम्बध्यते रसेनेति व्युत्पत्तेस्तस्माद्बन्धनादनेकानिमित्तवशात्पूर्व्वोक्तस्य फलस्य भवति प्रमोचनमित्याह। बन्धनादित्यादिना॥ लिङ्गात्मोपाधिरस्येति तद्विशिष्टः शारीरस्तथोच्यते। सम्प्रमुच्यान्भवतीति सम्बन्धः॥ समित्युपसर्गस्य तात्पर्यमाह। नेत्रादिना॥ यदि स्वप्नावस्थायामिव मरणावस्थायां

उ॰ एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्या-द्रवति प्राणायैव ॥ ३६ ॥

---

भा॰ नाद्बध्यते येन वृन्तेन सह बन्धनकारणो रसो यस्मिन्वा बध्यत इति वृन्तमेवोच्यते बन्धनं। तस्माद्रसाद्वृन्ताद्वा बन्धनात्प्रमुच्यते वाताद्यनेकनिमित्तमेवायं पुरुषो लिङ्गात्मा लिङ्गोपाधिरेभ्योऽङ्गेभ्यश्चक्षुरादिदेहावयवेभ्यः सम्प्रमुच्यते सम्यङ्निर्लेपेन प्रमुच्यते न सुषुप्तगमनकाल इव प्राणेन रक्षन्। किन्तर्हि सह वायुनोपसंहृत्य पुनः प्रतिन्यायं पुनः शब्दात्पूर्व्वमप्ययं देहाद्देहान्तरमसकृद्गतवान्यथा स्वप्नबुद्धान्तौ पुनः पुनर्गच्छति तथा पुनः प्रतिन्यायं प्रतिगमनं यथागतमित्यर्थः। प्रति योनि योनिं योनिं प्रति कर्म्मश्रुतादिवशादाद्रवति। किमर्थं। प्राणायैव प्राणव्यूहायैवेत्यर्थः। स प्राण एव गच्छति। ततः प्राणायैवेति विशेषणमन-

---

आ॰ प्राणेन देहं रक्षन्नाद्रवतीति नाद्रियते केन प्रकारेण तर्हि तदा देहान्तरं प्रति गमनमित्याशङ्क्याह। किं तर्हीति। वायुना प्राणेन सह करणजातमुपसंहृत्याद्रवतीति पूर्व्ववत्सम्बन्धः। पुनः प्रतिन्यायमिति प्रतीकमादाय पुनःशब्दस्य तात्पर्य्यमाह। पुनरित्यादिना। तथा पुनराद्रवतीति सम्बन्धः। यथा पूर्व्वमिमं देहं प्राप्तवान्पुनरपि तथैव देहान्तरं गच्छतीत्याह। प्रतिन्यायमिति। देहान्तरगमने कारणमाह। कर्म्मेति। आदिशब्देन पूर्व्वप्रज्ञा गृह्यते। प्राणव्यूहाय प्राणानां विशेषाभिव्यक्तिलाभायेति यावत्। प्राणायेति श्रुतिः किमर्थमित्थं व्याख्यायते तत्राह। स प्राण इति। एतच्च तदन्तरप्रतिपत्त्यधिकरणे निर्द्धारितं। प्राणायेति विशेषणस्यानर्थक्यादुक्तं प्राणव्यूहायेति विशेषणमित्याह। प्राणेति। नन्वस्य प्राणः सह वर्त्तते यत्तावतैव भोगसि-

उ॰ तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूत-
ग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्प्यन्तेऽयमाया-

---

भा॰ र्थकं प्राणव्यूहाय हि गमनं देहाद्देहान्तरं प्रति । तेन
ह्यस्य कर्म्मफलभोगार्थसिद्धिः । न प्राणसत्तामात्रेण तस्मा-
त्तादर्थ्यार्थं युक्तं विशेषणं प्राणव्यूहायेति ॥ ३६ ॥

तत्रास्येदं शरीरं परित्यज्य गच्छतो नान्यस्य देहान्त-
रस्योपादाने सामर्थ्यमस्ति देहेन्द्रियवियोगात् । न चान्येऽस्य
भृत्यस्थानीया गृहमिव राज्ञे शरीरान्तरं कृत्वा प्रतीक्ष-
माणा विद्यन्ते । अथैवं सति कथमस्य शरीरान्तरोपादान-
मित्युच्यते । सर्वं ह्यस्य जगत्स्वकर्म्मफलोपभोगसाधनत्वायो-
पात्तं स्वकर्म्मफलोपभोगाय चायं प्रवृत्तो देहाद्देहान्तरं
प्रतिपित्सुः । तस्मात्सर्व्वमेव जगत्स्वकर्म्मप्रयुक्तं तत्कर्म्मफलो-
पभोगयोग्यं साधनं कृत्वा प्रतीक्षत एव । कृतं लोकं

---

आ॰ उक्तं प्राणव्यूहेनेत्याशङ्क्याह । तेन हीति ॥ अन्यथा सुषुप्तिमू-
र्च्छयोरपि भोगप्रसक्तेरित्यर्थः । तादर्थ्यार्थं प्राणस्य भोगशेषत्व-
सिद्ध्यर्थमिति यावत् ॥ ३६ ॥

तद्यथा राजानमित्यादिवाक्यव्यावर्त्यामाशङ्कामाह । तत्रेति ॥
मुमूर्षावस्था सप्तम्यर्थः । अथास्य स्वयमसामर्थ्येऽपि शरीरान्तर-
कर्त्तारोऽन्ये भविष्यन्ति यथा राज्ञो भृत्या गृहनिर्म्मातारस्तत्राह ।
न चेति ॥ स्वयमसामर्थ्यमन्येषां चासत्त्वमिति स्थिते फलितमाह ।
अथेति ॥ तद्यथेत्यादिवाक्यस्य तात्पर्य्यं दर्शयन्नुत्तरमाह । उच्यत
इति ॥ भवत्वस्य स्वकर्म्मफलोपभोगे साधनत्वसिद्ध्यर्थं सर्व्वं
जगदुपात्तं तथापि देहाद्देहान्तरं प्रतिपित्समानस्य किमाया-
तमित्याशङ्क्याह । स्वकर्म्मेति ॥ स्वकर्म्मणेत्यत्र स्वशब्दस्तत्कर्म्मप-

उ॰ त्ययमागच्छतीत्येवꣳ हैवं विदꣳ सर्वाणि भूतानि प्रतिकल्प्यन्त इदं ब्रह्मायातीदमागच्छतीति ॥ ३७ ॥

---

भा॰ पुरुषोऽभिजायत इति श्रुतेः । यथा स्वप्नजागरितं प्रतिपित्सोस्तत् कथमिति लोकप्रसिद्धो दृष्टान्त उच्यते । तत्र यथा राजानं राज्याभिषिक्तमायातं स्वराष्ट्रे उग्रा जातिविशेषाः क्रूरकर्म्माणो वा प्रत्येनसः प्रति प्रत्येनसि पापकर्म्मणि नियुक्ताः प्रत्येनसस्तस्करादिदण्डनादौ नियुक्ताः सूताश्च ग्रामण्यश्च सूतग्रामण्यः सूता वर्णसङ्करजा जातिविशेषा ग्रामण्यो ग्रामनेतारस्ते पूर्व्वमेव राज्ञ आगमनं बुद्ध्वाऽन्नैर्भोज्यभक्ष्यादिप्रकारैः पानैर्मदिरादिभिरावसथैश्च प्रासादादिभिः प्रतिकल्पन्ते निष्पन्नैरेव प्रतीक्षन्ते ऽयं राजा आयात्ययमागच्छतीत्येवं वदन्तः । एवं ह एवं विदं कर्म्मफ-

---

आ॰ लोपभोगयोग्यमित्यत्र तच्छब्दस्य प्रकृतभोक्तृविषयो । तत्र प्रमाणमाह । कृतमिति । पुरुषो हि वर्त्तमानदेहो भूतपञ्चकादिना निर्म्मितमेव देहान्तरमभिव्याप्य जायत इति श्रुतेरर्थः । उक्तमेवार्थं दृष्टान्तेन स्पष्टयति । यथेति । स्वप्नस्थानाज्जागरितस्थानं प्रतिपत्तुमिच्छतः शरीरं पूर्व्वमेव कृतं नापूर्व्वं क्रियते तथा देहाद्देहान्तरं प्रतिपित्समानस्य पञ्चभूतादिना कृतमेव देहान्तरमित्यर्थः । सर्व्वेषां भूतानां देहान्तरं कृत्वा संसारिणि परलोकाय प्रस्थिते प्रतीक्षणं केन प्रकारेणेति प्रश्नपूर्व्वकं दृष्टान्तवाक्यमुत्थाप्य व्याचष्टे । तत्रेत्यादिना । तत्र पापकर्म्मणि नियुक्तत्वमेव व्यनक्ति । तस्करादीति । आदिपदेनान्येऽपि निग्राह्या गृह्यन्ते । दण्डनादीत्यादिशब्दो हिंसाप्रभेदसङ्ग्रहार्थः ।

उ॰ तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्त्येवमेवेममात्मानमन्तकाले

भा॰ तस्य वेदितारं संसारिणमित्यर्थः । कर्म्मफलं हि प्रस्तुतं तदेवंशब्देन परामृश्यते । सर्व्वाणि भूतानि शरीरकर्तॄणि करणानुग्राहकाणि चादित्यादीनि तत्कर्म्मप्रयुक्तानि सन्तीरेव कर्म्मफलोपभोगसाधनैः प्रतीक्षन्ते । इदं ब्रह्म भोक्तृ कर्त्तृ चास्माकमायाति । तथेदमागच्छतीत्येवमेव ह्वाला प्रतीक्षन्त इत्यर्थः ॥ ३७ ॥

तमेवं जिगमिषुं के सह गच्छन्ति । ये वा गच्छन्ति ते किं तत्क्रियाप्रयुक्ता आहोस्वित्तत्कर्म्मवशात्स्वयमेव गच्छन्ति पारलोकशरीरकर्तॄणीव भूतानीत्यत्रोच्यते दृष्टान्तः । तद्यथा राजानं प्रयियासन्तं प्रकर्षेण यातुमिच्छन्त-

आ॰ ग्रामण्यां क्षत्रियात्सूत इति स्मृतिमाश्रित्य सूतशब्दार्थमाह । वर्णसङ्करेति ॥ भोज्यभक्ष्यादिप्रकारैरित्यादिशब्देन लेह्यचोष्ययोः सङ्ग्रहः । मदिरादिभिरित्यादिपदेन क्षीरादि गृह्यते । प्रासादादिभिरित्यादिशब्दो गोपुरतोरणादिग्रहणार्थः । विदन्मात्र प्रतीयमाने किमिति कर्म्मफलस्य वेदितारमिति विशेषोपादानमित्याशङ्क्याह । कर्म्मफलं हीति ॥ तत्कर्म्मप्रयुक्तानीत्यत्र तच्छब्दः संसारिविषयः संसारिणो वस्तुतो ब्रह्माभिन्नत्वात्तस्मिन्ब्रह्मशब्दः । अभ्यासस्तूभयत्रादरार्थः ॥ ३७ ॥

तद्यथा राजानं प्रयियासन्तमित्यादिवाक्यव्यावर्त्त्यचोद्यमुत्थापयति । तमेवमिति । ग्रामादयस्तमनुगच्छन्तीत्याशङ्क्याह । ये चेति ॥ तत्क्रियाप्रयुक्तास्तस्य गन्तुर्वागादिव्यापारैव प्रेरिताः समाहूता इति यावत् । यानि च भूतानि परलोकप्रख्यितं शरीरं कुर्व्वन्ति यानि वा करणानुग्राहकाणि चादित्यादीनि

उ॰ सर्व्वे प्राणा अभिसमायन्ति यत्रैतदूर्द्ध्वोच्छ्वासी भवति ॥ ३८ ॥ तृतीयं ब्राह्मणं ॥ ३ ॥

स यत्रायमात्माऽबल्यं न्येत्य सम्मोहमिव न्येत्यथै-

---

भा॰ मुखाः प्रत्येनसः सूतग्रामण्यस्त एवाभिसमायन्त्याभिमुख्येन समायान्त्येकीभावेन तमभिमुखा आयान्त्यनाज्ञप्ता एव राज्ञा केवलतज्जिगमिषाभिज्ञाः । एवमेवेममात्मानं भोक्तारमन्तकाले मरणकाले सर्व्वे प्राणा वागादयोऽभिसमायन्ति यत्रैतदूर्द्ध्वोच्छ्वासी भवतीति व्याख्यातं॥ ३८॥ ०॥

इति बृहदारण्यकभाष्ये षष्ठस्याध्यायस्य तृतीयं ब्राह्मणं॥३॥

स यत्रायमात्मा । संसारोपवर्णनं प्रस्तुतं । तत्रायं पुरुष एभ्योऽङ्गेभ्यः सम्प्रमुच्यत्युक्तं । तत् सम्प्रमोक्षणं कस्मिन् काले कथं वेति सविस्तरं संसरणं वर्णयितव्यमित्यारभ्यते । सो

---

आ॰ तेष्वपि यथोक्तप्रश्नप्रवृत्तिं दर्शयति । परलोकेति ॥ नाद्यः परलोकार्थं प्रस्थितस्य वागादिव्यापाराभावादाज्ञानानुपपत्तेः। न द्वितीयो भोक्तृकर्म्मणापि वागादिष्वचेतनेषु स्वयं प्रवृत्तेरनुपपत्तेरिति चोदयितुरभिमानः ॥ उत्तरवाक्येनोत्तरमाह । अन्नेत्यादिना ॥ मरणकालमेव विशिनष्टि । यत्रेति ॥ अचेतनानामपि रथादीनां चेतनप्रेरितानां प्रवृत्तिदर्शनाद्वागादीनामपि भोक्तृकर्म्मवशात्तदाकूतमन्तरेण प्रवृत्तिः सम्भवतीति भावः ॥ ३८ ॥ इति षष्ठे प्रपाठके ज्योतिर्ब्राह्मणं तृतीयं विवृतं । ३ ॥

ब्राह्मणान्तरमुत्थापयति । स यत्रेति ॥ सम्बन्धं वक्तुमुक्तं कीर्त्तयति । संसारेति ॥ वक्ष्यमाणोपयोगित्वेनोक्तमर्थान्तरमनुवदति । तत्रेति ॥ संसारप्रकरणं सप्तम्यर्थः ॥ सम्प्रत्याकाङ्क्षापूर्वकमुत्तरब्राह्मणमादत्ते । तत्सम्प्रमोक्षणमिति ॥ एवं ब्राह्मणमवतार्य तदक्षराणि व्याकरोति । सोऽयमित्यादिना ॥ गत्वा सम्मोहमिव न्येतीत्युक्त-

उ॰ नमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः

---

भा॰ ऽयमात्मा प्रस्तुतो यत्र यस्मिन् काले ऽबल्यमबलभावं नि एत्य गत्वा यद्देहस्य दौर्बल्यं तदात्मन एव दौर्बल्यमित्युपचर्य्यते ऽबल्यं न्येत्येति। न ह्यसौ स्वतो मूर्त्तत्वादबलभावं गच्छति तथा सम्मोहमिव संमूढता सम्मोहो विवेकाभावः सम्मोहतामिव नि एति निगच्छति। न चास्य स्वतः सम्मोहोऽसम्मोहो वास्ति नित्यचैतन्यज्योतिःस्वभावत्वात्। तेनेव शब्दः सम्मोहमिव न्येतीति। उत्क्रान्तिकाले हि करणोपसंहारनिमित्तो व्याकुलीभाव आत्मन इति लक्ष्यते लौकिकैः। तथा च वक्तारो भवन्ति संमूढः संमूढोऽयमिति। अथ वोभयत्रेवशब्दप्रयोगो योज्योऽबल्यमिव न्येतीत्यसम्मोहमिव न्येतीति। उभयस्य परोपाधिनिमित्तत्वाविशेषात्।

---

आ॰ अत्र सम्बन्धः। कथमात्मनो दौर्बल्यं तदाह। यद्देहस्येति॥ किमित्युपचारो मुख्यमेवात्मनो दौर्बल्यं किं न स्यादित्याशङ्क्याह। न हीति॥ यथायमबलभावं निगच्छति तथा सम्मोहं संमूढतामिव प्रतिपद्यते। विवेकाभावो हि सम्मोहः॥ तथा च मूढतामिव निगच्छतीति युक्तमित्याह। तथेति॥ इवशब्दार्थमाह। न चेति॥ कथं पुनरात्मनः समारोपितोऽपि सम्मोहः स्यान्नित्यचैतन्यज्योतिष्ट्वादित्याशङ्क्याह। उत्क्रान्तीति॥ व्याकुलीभावो लिङ्गस्येति शेषः। तत्र लौकिकीं वार्त्तामनुकूलयति। तथेति॥ यथाश्रुतमिवशब्दं गृहीत्वा वाक्यं व्याख्याय पक्षान्तरमाह। अथवेति॥ इवशब्दप्रयोगस्योभयत्र योजनामेवाभिनयति। अबल्यमिति॥ उभयत्र तद्योजने हेतुमाह। उभयस्येति॥ तुल्यप्रत्ययेनाबल्यसम्मोहयोरेकवाक्यत्वनिर्देशादप्युभयत्रेवकारो द्रष्टव्य इत्याह। समा-

उ॰ समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष

---

भा॰ समागमकर्तृकर्मनिर्देशार्थ। अथास्मिन् काले एते प्राणा वागा-
दय एनमात्मानमभिसमायन्ति तदास्य शारीरस्यात्मनो
ऽङ्गेभ्यः सम्प्रमोक्षणं। कथं पुनः सम्प्रमोक्षणं केन वा प्रकारेणा-
त्मानमभिसमायन्तीत्युच्यते। स आत्मा एतास्तेजोमात्रास्ते-
जसो मात्रास्तेजोमात्रास्तेजोऽवयवा रूपादिप्रकाशकत्वाच्च-
क्षुरादीनि करणानीत्यर्थः। ता एताः समभ्याददानः सम्य-
ङ्निर्लेपेनाभ्याददानः आभिमुख्येनाददानः संहरमाण-
स्तत्स्वप्नापेक्षया विशेषणं सममिति। ननु स्वप्ने निर्लेपेन
सम्यगादानमस्त्यादानमात्रं। गृहीता वाक् गृहीतं च-
क्षुरस्य लोकस्य सर्व्वावतो मात्रामुपादाय शुक्रमादाये-
त्यादिवाक्येभ्यो हृदयमेव पुण्डरीकाकाशमन्ववक्रामत्यन्वव-

---

आ॰ नेति॥ अथेत्यादि वाक्यमवतार्य्य व्याकुर्व्वन्नस्मिन्काले तत्सम्प्रमो-
क्षणमित्यस्योत्तरमाह। अथेत्यादिना॥ कथं वेत्युक्तं प्रश्नमनूद्य
प्रश्नान्तरं प्रस्तौति। कथमिति॥ अथोत्तरत्वेनोत्तरं वाक्यमादाय
व्याकरोति। उच्यत इत्यादिना॥ रूपादिप्रकाशनशक्तिमत्त्वस्य-
प्रधानभूतकार्य्यत्वात्तेजोमात्राश्चक्षुरादीन्युक्तं। सम्प्रति समभ्या-
ददान इत्यस्यार्थमाह। ता एता इति॥ संहरमाणो हृदयमन्व-
वक्रामतीत्यन्वयः॥ तत्समिति विशेषणं स्वप्नापेक्षयेति सम्बन्धः॥ कथं
स्वप्नापेक्षया विशेषणं तदाह। न त्विति॥ आदानमात्रमपि स्वप्ने
नास्तीति कुतस्तत्रात्यर्थं विशेषणमित्याशङ्क्याह। अस्तीति॥
स एतास्तेजोमात्राः समभ्याददान इत्येतद्व्याख्याय हृदयमेवेत्यादि
व्याचष्टे। हृदयमित्यादिना॥ सविज्ञानो भवतीति वाक्यशेष-
माश्रित्य वाक्यार्थमाह। हृदय इति॥ यदात्मनो लिङ्गस्य

उ॰ चाक्षुषः पुरुषः पराङ्पर्य्यावर्त्तते तथा रूपज्ञो भवति ॥ १ ॥

---

भा॰ गच्छति हृदयेऽभिव्यक्तविज्ञानो भवतीत्यर्थो बुद्ध्यादिविक्षेपोपसंहारे सति। न हि तस्य स्वतश्चलनं विक्षेपोपसंहारादिविक्रिया वा। ध्यायतीव लेलायतीवेत्युक्तत्वात्। बुद्ध्याद्युपाधिद्वारैव हि सर्व्वविक्रियाध्यारोप्यते तस्मिन्। कदा पुनस्तस्य तेजोमात्राभ्यादानमित्युच्यते। स यत्रैष चक्षुषि भवश्चाक्षुषः आदित्यांशो भोक्तुः कर्म्मणा प्रयुक्तो यावद्देहधारणं तावच्चक्षुषोऽनुग्रहं कुर्वन्वर्त्तते। मरणकाले त्वस्य चक्षुषोऽनुग्रहं परित्यजति स्वमादित्यात्मानं प्रतिपद्यते। तदेतदुक्तं। यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यमित्यादि। पुनर्देहग्रहणकाले संश्रयिष्यन्ति तथा

---

आ॰ तेजोमात्रादानकर्तृत्वमित्याशङ्क्याह । बुद्ध्यादीति ॥ तेषां तद्विक्षेपस्य चोपसंहारे तत्त्वात्मनस्तदादानकर्तृत्वमौपचारिकमित्यर्थः । तर्हि तद्विक्षेपोपसंहर्तृत्ववत्तदादानकर्तृत्वमपि मुख्यमेव भविष्यतीत्याशङ्क्याह । न हीति ॥ आदिशब्देन क्रियाविशेषः सर्व्वो गृह्यते। कथं तर्हि प्रतीचि कर्तृत्वादिप्रथेत्याशङ्क्याह। बुद्ध्यादीति ॥ स यत्रेत्यादि वाक्यमाकाङ्क्षापूर्वकमवतार्य व्याकरोति। कदा पुनरित्यादिना ॥ तस्य पुरुषशब्दाद्भोक्तृत्वे प्राप्ते विशिनष्टि । आदित्यांश इति ॥ तस्य चाक्षुषत्वं साधयति । भोक्तुरित्यादिना ॥ यावद्देहधारणमिति कुतो विशेषणं तत्राह । मरणकाले त्विति ॥ आदित्यांशस्य चक्षुरनुग्रहमकुर्वतः स्वातन्त्र्यं वारयति। स्वमिति ॥ मरणावस्थायां चक्षुराद्यनुग्राहकदेवतांशानामधिदेवतात्मनोपसंहारे श्रुत्यन्तरं संवादयति । तदेतदिति ॥ तर्हि देहान्तरे वागादिराहित्यं स्यादित्याशङ्क्याह । पुनरिति ॥ संश्रयि-

उ॰ एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकी-

---

भा॰ स्वप्नतः प्रबुद्धतश्च। तदेतदाह। चाक्षुषः पुरुषो यत्र यस्मिन् काले पराक् पर्य्यावर्त्तते परि समन्तात् पराङ् व्यावर्त्तत इति यथाऽन्तास्मिन् कालेऽरूपज्ञो भवति मुमूर्षुरूपं न जानाति तदायमात्मा चक्षुरादितेजोमात्राः समभ्याददानो भवति स्वप्नकाल इव ॥ १ ॥

एकीभवति करणजातं स्वेन लिङ्गात्मना। तदैनं पार्श्वस्था आहुर्न पश्यतीति। तथा घ्राणदेवतानिवृत्तौ घ्राण-मेकीभवति लिङ्गात्मना। तदा न जिघ्रतीत्याहुः। समान-मन्यत्। जिह्वायां सोमो वरुणो वा देवता तन्निवृत्त्यपेक्षया न रसयत इत्याहुः। तथा न वदति न शृणोति न मनुते

---

आ॰ सन्ति वागादयस्तत्तद्देवताधिष्ठिता यथास्थानमिति शेषः। मुमूर्षोरिव स्वप्नतः सर्व्वाणि करणानि लिङ्गात्मनोपक्रियन्ते प्रबुध्यमानस्य चोत्थितस्येरिव तानि यथास्थानं प्रादुर्भवन्तीत्याह। तथेति॥ उक्तेऽर्थे वाक्यं पातयति। तदेवदाहेति॥ पराङ्पर्य्या-वर्त्तत इति रूपवैमुख्यं चाक्षुषस्य विवक्षितमिति शेषः॥ १॥

तर्हि श्रोत्रोपसंहृतं चक्षुरत्यन्ताभावीभूतमित्याशङ्क्याह। एकी-ति॥ उक्तेऽर्थे लोकप्रसिद्धिं दर्शयति। तदेति॥ चक्षुषि दर्शित-न्यायं घ्राणेऽतिदिशति। तथेति॥ यथा चक्षुर्देवताया निवृत्तौ लिङ्गात्मना चक्षुरेकीभवति तथा घ्राणदेवतांशस्य घ्राणानुग्राह-निवृत्तिद्वारेणाश्विदेवतयैक्ये लिङ्गात्मना घ्राणमेकीभवतीत्यर्थः। तन्निवृत्त्यपेक्षया वरुणादिदेवताया जिह्वायामनुग्राहनिवृत्तौ जिह्वाया लिङ्गात्मनैक्यमपेक्ष्येत्यर्थः। तदनुग्राहकदेवतांशस्य

उ॰ भवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति ॥

---

भा॰ न स्पृशति न विजानातीत्याहुस्तदोपलक्ष्यते देवतानिवृत्तिः करणानाञ्च हृदय एकीभावः । तत्र हृदय उपसंहृत्य तेषु करणेषु योऽन्तर्व्यापारः स कथ्यते। तस्य ह एतस्य प्रकृतस्य हृदयस्य हृदयच्छिद्रस्येत्येतत् । अग्रं नाडीमुखं निर्गमनद्वारं प्रद्योतते स्वप्नकाल इव स्वेन भासा तेजोमात्रादानकृतेन स्वेनैव ज्योतिषाऽऽत्मनैव च तेनात्मज्योतिःप्रद्योतेन हृदयाग्रेण एष आत्मा विज्ञानमयो लिङ्गोपाधिर्निर्गच्छति निष्क्रामति ।तथाऽऽथर्वणे कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि। कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति

---

आ॰ तत्र तत्रानुग्रहनिवृत्त्या तत्तदंशिदेवताप्राप्तौ तत्तत्करणस्य लिङ्गात्मनैक्यं भवतीत्यभिप्रेत्याह। तदेति॥ मरणदशायां रूपादिदर्शनराहित्यमर्थद्वयसाधकमित्याह। तदेति॥ तस्य हैतस्येत्यादि वाक्यमुपादत्ते । तस्येति ॥ मुमूर्षावस्था सप्तम्यर्थः ॥ केनायं प्रद्योतो भवतीत्यपेक्षायामाह । स्वप्नेति ॥ यथा स्वप्नकाले स्वेन भासा स्वेन ज्योतिषा प्रस्वपितीति व्याख्यातं तथात्रापि तेजोमात्राणां यदादानं तत्कृतेन वासनारूपेण प्राप्यफलविषयबुद्धिवृत्तिरूपेण स्वेन भासा स्वेन चात्मचैतन्यज्योतिषा हृदयाग्रप्रद्योतनमित्यर्थः ॥ तस्यार्थक्रियां दर्शयति। तेनेति॥ किमिति लिङ्गद्वाराऽऽत्मनो निर्गमनं प्रतिज्ञायते तत्राह। तथेति ॥ यदि मरणकाले तेजोमात्रा-

उ॰ चक्षुषो वा मूर्द्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्य-

---

भा॰ स प्राणमन्वजतेति तच्चात्मचैतन्यज्योतिः सर्व्वदाभिव्य-क्ततरं तदुपाधिद्वारा ह्यात्मनि जन्ममरणगमनागमनादि सर्व्वविक्रियालक्षणः संव्यवहारस्तदात्मकं हि द्वादशविधं करणं ॥

बुद्ध्यादि तत्सूत्रं तज्जीवनं सोऽन्तरात्मा जगतस्तस्थुषश्च तेन प्रद्योतेन हृदयाग्रप्रकाशेन निःक्रममाणः। केन मार्गेण निष्क्रामतीत्युच्यते। चक्षुषो वाऽऽदित्यलोकप्राप्तिनिमित्तं ज्ञानं कर्म्म वा यदि स्यात्। मूर्द्ध्नो वा ब्रह्मलोकप्राप्तिनिमित्तं चेत्। अन्येभ्यो वा शरीरदेशेभ्यः शरीरावयवेभ्यो यथा कर्म्म यथा श्रुतमिति तं विज्ञानात्मानमुत्क्रामन्तं परलोकाय प्रस्थितं परलोकायोद्भूताकूतमित्यर्थः। प्राणः सर्व्वाधिका-

---

व्या॰ द्वारं न तर्हि सदा लिङ्गोपाधिरात्मेत्याशङ्क्याह। तच्चेति॥ तस्मा-ल्लिङ्गमुच्यते। सर्व्वदेति। लिङ्गसत्तादशायामिति॥ आत्मोपाधिभूते लिङ्गे किं प्रमाणमित्याशङ्क्यात्मनि कूटस्थे संव्यवहारदर्शनमित्याह। तदु-पाधीति॥ चक्षुरादिप्रसिद्धिरपि प्रमाणमित्याह। तदात्मकं हीति॥

एकादशविधं करणमित्यभ्युपगमात्कुतो द्वादशविधत्वमित्या-शङ्क्य विशिनष्टि। बुद्ध्यादीति॥ वायुर्वै गौतम तत्सूत्रमित्यादि-श्रुतिरपि यथोक्ते लिङ्गे प्रमाणमित्याह। तत्सूत्रमिति॥ अमतो जीवनमपि तत्र मानमित्याह। तज्जीवनमिति॥ एष सर्व्वभू-तान्तरात्मेति श्रुतिरपि यथोक्तं लिङ्गं साधयतीत्याह। सोऽन्त-रात्मेति॥ लिङ्गोपाधेरात्मनो यथोक्तप्रकाशेन मरणकाले हृद-याभिनिष्क्रमणे मार्गं प्रश्नपूर्व्वकमुत्तरवाक्येनोपदिशति। केनेत्या-दिना॥ चक्षुषो वेति विकल्पे निमित्तं सूचयति। आदित्येति॥

उ॰ सर्व्वे प्राणा अनुत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति ।

---

भा॰ त्यर्थः । तस्मात्तत्काले स्वातन्त्र्यार्थं योगधर्म्मानुसेवनं परिसङ्ख्यानाभ्यासश्च विशिष्टपुण्योपचयश्च श्रद्दधानैः परलोकार्थिभिरप्रमत्तैः कर्त्तव्य इति सर्व्वशास्त्राणां यत्नतो विधेयो ऽर्थो दुश्चरिताच्चोपरमणं । न हि तत्काले शक्यते किञ्चित् सम्पादयितुं । कर्म्मणा नीयमानस्य स्वातन्त्र्याभावात् । पुण्यो वै पुण्येन कर्म्मणा भवति पापः पापेनेत्युक्तः । एतस्य ह्यनर्थस्योपशमोपायविधानाय सर्व्वशास्त्रोपनिषदः प्रवृत्ता न तद्विहितोपायानुसेवनमुक्त्वाऽऽत्यन्तिकस्यानर्थस्योपशमोपायोऽस्ति । तस्मादत्रैवोपनिषद्विहितोपाये यत्न परैर्भवितव्यमित्येष प्रकरणार्थः ॥

---

आ॰ शेषो भाविदेहविषयस्तदाश्रितं तद्रूपं वासनात्मकं विशेषविज्ञानं तेनेति यावत् । म्रियमाणस्य सविज्ञानत्वे सत्यर्थसिद्धमर्थमाह । सविज्ञानमेवेति । गन्तव्यस्य विज्ञानत्वं विज्ञानाश्रयत्वमित्याशङ्क्य विशिनष्टि । विशेषेति । प्रागेवोत्क्रान्तेः सविज्ञानत्ववादिश्रुतेस्तात्पर्य्यमाह । तस्मादिति । पुरुषस्य कर्म्मानुसारित्वं तच्छब्दार्थः । योगश्चित्तवृत्तिनिरोधः । तस्य धर्म्मा यमनियमप्रभृतयः । तेषामनुसेवनं पुनः पुनरावर्त्तनं परिसङ्ख्यानाभ्यासो योगानुष्ठानं । कर्त्तव्य इति प्रकृतश्रुतेर्विधेयोऽर्थ इति शेषः ॥ किञ्च पुण्योपचयकर्त्तव्यतारूपेऽर्थे सर्व्वमेव विधिकाण्डं पर्य्यवसितमित्याह । सर्व्वशास्त्राणामिति ॥ सर्व्वस्मादारामादिदुश्चरितादुपरमणं कर्त्तव्यमित्यस्मिन्नर्थे निषेधशास्त्रमपि पर्य्यवसितमित्याह । दुश्चरिताच्चेति । ननु पूर्व्वं यथेष्टचेष्टां कृत्वा मरणकाले सर्व्वमेतत्सम्पादयिष्यते नेत्याह । न हीति ॥

उ॰ तं विद्याकर्म्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ ३ ॥

भा॰ शकटवत्सम्भृतसंभार उत्सर्जन्यातीत्युक्तं किं पुनस्तस्य परलोकाय प्रवृत्तस्य पथ्यदनं शाकटिकसम्भारस्थानीयं गत्वा वा परलोकं यद्भुङ्क्ते शरीराद्यारम्भकं च यत्तत्किमित्युच्यते। तं परलोकाय गच्छन्तमात्मानं विद्याकर्म्मणी विद्या च कर्म्म च विद्याकर्म्मणी विद्या सर्व्वप्रकारविहिता प्रतिषिद्धा अविहिताऽप्रतिषिद्धा च। तथा कर्म्म विहितं प्रतिषिद्धञ्चाविहितमप्रतिषिद्धञ्च समन्वारभेते सम्यगन्वारभेते अन्वालभेतेऽनुगच्छतः। पूर्व्वप्रज्ञा च। पूर्व्वानुभूतविषया प्रज्ञा पूर्व्वप्रज्ञाऽतीतकर्म्मफलानुभववासनेत्यर्थः। सा च वासनाऽपूर्व्वकर्म्मारम्भे कर्म्मविपाके चाङ्गं भवति। तेन ताऽप्यन्वारभते। न हि तया वासनया विना केन केषाञ्चित् कर्म्म कर्त्तुं फलञ्चोपभोक्तुं शक्यते। न ह्यनभ्यस्ते विषये

आ॰ कम्पता 'मीयमानत्वे मानमाह। पुण्य इति। तर्हि पुण्योपचयादेव यथोक्तानर्थनिवृत्तेर्व्यर्थं तत्त्वज्ञानमित्याशङ्क्याह। एतस्येति। उपशमोपायतत्त्वज्ञानं तस्य विधानं प्रकाशनं तदर्थमिति यावत्। देवताध्यानादनर्थो निवर्त्स्यति किं तत्त्वज्ञानेनेत्याशङ्क्याह। न हीति। तद्विहितेति तच्छब्देन प्रकृताः सर्व्वशाखोपनिषदो गृह्यन्ते। विभागान्तरेणानर्थध्वंसासिद्धौ फलितमाह। तस्मादिति। ज्ञापितं सविज्ञानवाक्येनेति शेषः। वृत्तमनूद्य प्रश्नपूर्व्वकमुत्तरवाक्यमवतार्य्य व्याचष्टे। शकटवदित्यादिना। विहिता विद्याऽऽध्यात्मिका। प्रतिषिद्धा नग्नस्त्रीदर्शनादिरूपा। अविहिता घटादिविषया। अप्रतिषिद्धा पथि पतिततृणादिविषया। विहितं कर्म्म यागादि। प्रतिषिद्धं ब्रह्महननादि। अविहितं गमनादि। अप्रतिषिद्धं नेत्रपक्ष्मविक्षेपादि।

भा॰ कौशलमिन्द्रियाणां भवति । पूर्व्वानुभववासनाप्रवृत्तानामिन्द्रियाणामिहाभ्यासमन्तरेण कौशलमुपपद्यते। दृश्यते च केषाञ्चित्कासुचित्क्रियासु चित्रकर्म्मादिलक्षणासु विनैवेहाभ्यासेन जन्मत एव कौशलं । कासुचिदत्यन्तसौकर्य्ययुक्तास्वप्यकौशलं केषाञ्चित्। तथा विषयोपभोगेषु स्वभावत एव केषाञ्चित् कौशलाकौशले दृश्येते। तच्चैतत्सर्व्वं पूर्व्वप्रयोगाद्भवानुद्भवनिमित्तं। तेन पूर्व्वप्रज्ञया विना कर्म्मणि वा फलोपभोगे वा न कस्यचित् प्रवृत्तिरुपपद्यते। तस्मादेतत्त्रयं शाकटिकसम्भारस्थानीयं परलोकपथ्यदनं विद्याकर्म्मपूर्व्वप्रज्ञाख्यं। यस्माद्विद्याकर्म्मणी पूर्व्वप्रज्ञा च देहान्तरप्रतिपत्त्युपभोगसाधनं तस्माद्विद्याकर्म्मादिशुभमेव समाचरेत्। यथेष्टदेहसंयोगभोगोपभोगौ स्यातामिति प्रकरणार्थः ॥ २ ॥

---

आ॰ विद्याकर्म्मणोरुपभोगसाधनत्वप्रसिद्धेरन्वारम्भोऽपि किमित्यारभ्यते वासनेत्याशङ्क्याह। सा चेति। अपूर्व्वकर्म्मारम्भादावङ्ग पूर्व्ववासनेत्यत्र हेतुमाह। न हीति। उक्तमेव हेतुमुपपादयति। न हीत्यादिना। इन्द्रियाणां विषयेषु कौशलमनुष्ठाने प्रयोजकं तच्च फलभोगे हेतुः। न चान्तरेणाभ्यासमिन्द्रियाणां विषयेषु कौशलं सम्भवति। तस्मादनुष्ठानाद्यभ्यासाधीनमित्यर्थः। तथापि कथं पूर्व्ववासनादावङ्गमित्याशङ्क्याह। पूर्व्वानुभवेति। तत्र लोकानुभवं प्रमाणयति। दृश्यते चेति। चित्रकर्म्मादीत्यादिशब्देन प्रासादनिर्म्माणादि गृह्यते। पूर्व्ववासनोद्भवकृतं कार्य्यमुक्त्वा तदभावकृतं कार्य्यमाह। कासुचिदिति। रज्जुनिर्म्माणादिष्विति यावत्। तत्रैवोदाहरणान्तरमाह। तथेति। तत्र हेत्वन्तरमाशङ्क्य परिहरति। तच्चेति। कर्म्मानुष्ठानादौ पूर्व्वप्रज्ञाया हेतुत्वमुपसंहरति। तेनेति। समन्वारम्भवचनार्थं निगमयति। तस्मादिति। तस्यैव तात्पर्य्यार्थमाह। यस्मादिति। २।

उ॰ तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमा-

---

भा॰ एवं विद्यादिसंभारसंभृतो देहान्तरं प्रतिपद्यमानो मुक्त्वा पूर्वं देहं पक्षीव वृक्षान्तरं देहान्तरं प्रतिपद्यते। अथ वाऽऽतिवाहिकेन शरीरान्तरेण कर्मफलजन्मदेशं नीयते। किं वाऽत्रस्थस्यैव सर्व्वगतानां करणानां वृत्तिलाभो भवत्याहोस्विच्छरीरस्थस्य संकुचितानि करणानि मृतस्य भिन्नघटप्रदीपप्रकाशवत्सर्व्वतो व्याप्य पुनर्देहान्तरारम्भे सङ्कोचमुपगच्छन्ति किं वा मनोमात्रं वैशेषिकसमय इव देहान्तरारम्भदेशं प्रति गच्छति किं वा कल्पनान्तरमेव वेदान्तसमय इत्युच्यते। त एते सर्व्व एव समाः सर्व्वेऽनन्ता इति श्रुतेः। सर्व्वात्मकानि तावत् करणानि सर्व्वात्मकप्राणसंश्रयाच्च तेषामाध्यात्मिकाधिभौतिकपरिच्छेदः प्राणिकर्म्मज्ञानभावनानिमित्तः। अतस्तद्वशात् स्वभावतः सर्व्वगता-

---

आ॰ तृणजलायुकावाक्यमवतारयितुं वृत्तमनूद्य वादिविवादान्दर्शयन्नादौ दिगम्बरमतमाह। एवमित्यादिना॥ देवतावादिमतमाह। अथ वेति॥ देवता येन शरीरेण विशिष्टं जीवं परलोकं नयति तदातिवाहिकं शरीरान्तरं तेनेति यावत्॥ साङ्ख्यादिमतमाह। किं वेति॥ सिद्धान्तं सूचयति। आहोस्विदिति॥ वैशेषिकादिपक्षमाह। किं वेति॥ न्यूनत्वनिरूपणार्थमाह। किंवा कल्पनान्तरमिति॥ तत्र सिद्धान्तस्य प्रामाणिकत्वेनोपादेयत्वं परस्परपक्षान्तराणामप्रामाणिकत्वेन त्याज्यत्वमभिप्रेत्याह। उच्यत इति॥ तेषां सर्व्वात्मकत्वे हेत्वन्तरमाह। सर्व्वात्मकेति॥ कथं तर्हि करणानां परिच्छिन्नत्वधीरित्याशङ्क्याह। तेषामिति॥ आधिदैविकेन रूपेणापरिच्छिन्नानामपि करणानामाध्यात्मि-

उ॰ क्रममाक्रम्यात्मानमुपसꣳहरत्येवमेवायमात्मेदꣳ

---

भा॰ नामनन्तानामपि प्राणानां कर्म्मज्ञानवासनानुरूप्येणैव देहान्तरारम्भवशात् प्राणानां वृत्तिः सङ्कुचति विकसति च । तथा चोक्तं । समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्व्वेणेति । तथा चेदं वचनमनुकूलं । स यो हैताननन्तानुपास्त इत्यादि तं यथा यथोपासत इति च । तत्र वासनापूर्व्वप्रज्ञाख्या विद्या कर्म्म तन्त्रा जलूकावत्सन्ततैव स्वप्नकाल इव कर्म्मकृतं देहाद्देहान्तरमारभते हृदयस्थैव पुनर्देहान्तरं पूर्व्वाश्रयं विमुञ्चतीत्येतस्मिन्नर्थे दृष्टान्त उपादीयते तत्तत्र देहान्तरसञ्चार इदं निदर्शनं । यथा येन प्रकारेण तृणजलायुका तृणजलूका तृणस्यान्तमवसानं गत्वा प्राप्यान्यत्तृणं तृणान्तरमाक्रममाक्रम्यत इत्याक्रमस्तमाक्रममाक्रम्याश्रित्यात्मा-

---

आ॰ आदिरूपेण परिच्छिन्नतेति स्थिते फलितमाह । अत इति । तद्वशादुदाहृतश्रुतिवशादित्येतत् । स्वभावतो देवतात्मरूपानुसारेणेति यावत् । कर्म्मज्ञानवासनानुरूप्येणेत्यत्र भोक्तुरिति शेषः । उभयत्र संवादार्थं प्राणानामिति विवक्तं तेषां वृत्तिसङ्कोचादौ प्रमाणमाह । तथा चेति । परिच्छिन्नापरिच्छिन्नप्राणोपासने गुणदोषसङ्कीर्त्तनमपि प्राणसङ्कोचविकासयोः सूचकमित्याह । तथा चेदमिति । आधिदैविकेन रूपेण सर्व्वगतानामपि करणानामाध्यात्मिकाधिभौतिकरूपेण परिच्छिन्नत्वात्तत्परिच्छिन्नस्य गमनं सिध्यतीति सिद्धान्तो दर्शितः । इदानीं तृणजलायुकादृष्टान्ताद्देहान्तरं गृहीत्वा पूर्व्वदेहं मुञ्चत्यात्मेति स्थूलदेहविशिष्टस्यैव परलोकगमनमिति पौराणिकप्रक्रियां प्रत्याख्यातुं दृष्टान्ता-

उ॰ शरीरं निहत्याऽविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसꣳहरति ॥ ३ ॥

---

भा॰ नमात्मनः पूर्व्वावयवमुपसंहरत्यन्त्यावयवस्थाने। एवमेवायमात्मा यः प्रकृतो यः संसारी इदं शरीरं पूर्व्वोपात्तं निहत्य स्वप्नं प्रतिपित्सुरिव पातयित्वा विद्यां गमयित्वा चेतनं कृत्वा स्वात्मोपसंहारेणान्यमाक्रमं तृणान्तरमिव तृणजलूकामिव शरीरान्तरं गृहीत्वा प्रसारितया वासनयाऽऽत्मानमुपसंहरति । तत्रात्मभावमारभते। यथा स्वप्ने देहान्तरमारभते। स्वप्नदेहान्तरस्थ इव शरीरारब्धदेशे आरभ्यमाणे देहे जङ्गमे स्थावरे वा। तत्र च कर्म्मवशात्कारणानि लब्धवृत्तीनि संहन्यन्ते बाह्याश्च कुशमृत्तिकास्थानीयं शरीरमारभ्यते। तत्र च करणव्यूहमपेक्ष्य वागाद्यनु-

---

आ॰ अस्य तात्पर्य्यमाह । तथेत्यादिना ॥ देहनिर्गमनात्प्रागवस्था सप्तम्यर्थः। तदैव यथोक्ता वासना हृदयस्था विद्याकर्म्मनिमित्तं भावि देहं स्पृशति जीवोऽपि तत्राभिमानं करोति पुनश्च पूर्व्वदेहं त्यजति यथा स्वप्ने देवोऽहमित्यभिमन्यमानो देहान्तरस्थ एव भवति तथोत्क्रान्तावपि। तस्मान्न पूर्व्वदेहविशिष्टस्यैव परलोकगमनमित्यर्थः। स्वात्मोपसंहारो देहे पूर्व्वस्मिन्नात्माभिमानत्यागः प्रसारितया वासनया शरीरान्तरं गृहीत्वेति सम्बन्धः॥ उपसंहारस्य स्वरूपमाह। तथेति॥ सप्तम्यर्थं विवृणोति। आरभ्यमाण इति॥ आरब्धे देहान्तरे तद्देहस्याभिव्यक्तिमाह । तत्र चेति॥ कर्म्मग्रहणं विद्यापूर्व्वप्रज्ञयोरुपलक्षणं। ननु लिङ्गदेहवशादेवार्थक्रियासिद्धौ कृतं स्थूलशरीरेणेत्याशङ्क्य तद्व्यतिरेकेणैतस्यार्थक्रियाकारित्वं नास्तीति मत्वाह। बाह्याश्चेति॥

उ० तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरꣳ रूपं तनुत एवमेवायमात्मेदꣳ शरीरं निहत्याऽविद्यां गमयित्वाऽन्यन्नवतरं क-

---

भा० पद्यः। या अग्न्यादिदेवताः संश्रयन्त एष देहान्तरारम्भविधिः ॥ ३ ॥

तत्र देहान्तरारम्भे नित्योपात्तमेवोपादानमुपमृद्योपमृद्य देहान्तरमारभते आहोस्विदपूर्व्वमेव पुनः पुनरादत्त इत्यत्रोच्यते। दृष्टान्तस्त्वत्रास्मिन्नर्थे। यथा पेशस्कारी। पेशः सुवर्णं तत् करोतीति पेशस्कारी सुवर्णकारः पेशसः सुवर्णस्य मात्रामपादायापच्छिद्य गृहीत्वाऽन्यत् पूर्व्वस्माद्रचनाविशेषान्नवतरमभिनवतरं कल्याणात् कल्याणतरं रूपं तनुते निर्म्मिमीते एवमेवायमात्मेत्यादि पूर्व्ववत्।

---

आ० आरब्धे देहद्वये करणेषु देवतानामनुग्राहकत्वेनावस्थानं दर्शयति। तत्रेति। स्थूलो देहः सप्तम्यर्थः। करणव्यूहस्तेषामभिव्यक्तिः ॥ ३ ॥

पेशस्कारिवाक्यव्यावर्त्त्यामाशङ्कामाह। तत्रेति। संसारिणो हि प्रकृते देहान्तरारम्भे किमुपादानं नास्ति किं वाऽस्ति नास्ति चेत् अभावरूपं कार्य्यं सिद्ध्येत्। अस्ति चेत्तत्किम्भूतपञ्चकमुतान्यत्। आद्ये ऽपि तन्नित्योपात्तमेव पूर्व्वंपूर्व्वदेहोपमर्द्देनान्यमन्यं देहमारभते किंवान्यदन्यद्भूतपञ्चकमन्यं अन्यदेहं जनयति। नाद्यः। भूतपञ्चकस्य तत्तद्देहोपादानत्वे मायायाः सर्व्वकारणत्वस्वीकारविरोधात्। न द्वितीयो भूतपञ्चकोत्पत्तावपि कारणान्तरस्य मृग्यत्वात्तस्यैव देहान्तरकारणत्वसम्भवान्नेतरो देहस्य पाञ्चभौतिकत्वप्रसिद्धिविरोधादिति भावः। उत्तरं वाक्यमुत्तरत्वेनादत्ते। यथेति। तच्छब्दार्थमपेक्षितं पूरयन्नाह। दृष्टान्त इति। अवशिष्टं भागमादाय व्याचष्टे। यथेत्यादिना। किं

उ॰ ल्याणतरꣳ रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानां॥ ४॥ स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः

---

भा॰ नित्योपात्तान्येव पृथिव्यादीन्याकाशान्तानि पञ्च भूतानि यानि द्वे वाव ब्रह्मणो रूपे इति चतुर्थे व्याख्यातानि पेशः-स्थानीयानि तान्येवोपमृद्योपमृद्यान्यदन्यच्च देहान्तरं नव-तरं कल्याणतरं रूपं संस्थानविशेषं देहान्तरमित्यर्थः । कुरुते पित्र्यं वा । पितृभ्यो हितं पितृलोकोपभोगयोग्यमि-त्यर्थः । गान्धर्वं गन्धर्वाणामुपभोगयोग्यं। तथा देवानां दैवं। प्रजापतेः प्राजापत्यं। ब्रह्मण इदं ब्राह्मं वा। यथा कर्म्म यथा श्रुतमन्येषां वा भूतानां सम्बन्धि शरीरान्तरं कुरुत इत्यभिसम्बध्यते ॥ ४ ॥

यस्य बन्धनसञ्ज्ञका उपाधिभूता यैः संयुक्तस्तन्मयो ऽयमिति विभाव्यते ते पदार्थाः पुञ्जीकृत्येहैकत्र प्रतिनिर्द्दि-श्यन्ते । स वा अयं य एवं संसरत्यात्मा ब्रह्मैव पर एव

---

आ॰ पुनरुपादानमेतावता देहान्तरारम्भेऽभ्युपगतं भवति तदाह । नित्योपात्तानीति ॥ शरीरद्वयारम्भकाणीति शेषः ॥ तेषामुभया-रम्भकत्वेन मूर्त्तामूर्त्तब्राह्मणे प्रस्तुतत्वं दर्शयति । यानीति ॥ देहविकल्पे नियामकमाह । यथा कर्म्मेति ॥ शरीरारम्भे भावा-त्मकभूतपञ्चकमुपादानमिति वदता भूतावयवानामपि सहैव गमनमित्युक्तः ॥ ४ ॥

इदानीं स वा अयमात्मेत्यादेस्तात्पर्यमाह । येऽस्येति ॥ तान्ये-वोपाधिभूतान्पदार्थान्निर्दिशति । यैरिति ॥ ननु पूर्व्वमप्येते-

उ॰ प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो

---

भा॰ योऽशनायाद्यतीतो विज्ञानमयो विज्ञानं बुद्धिस्तेनोपलक्ष्यमाणस्तन्मयः । कतम आत्मेति । योऽयं विज्ञानमयः । प्राणेष्विति ह्युक्तं विज्ञानमयो विज्ञानप्रायो यस्मात्तद्धर्मत्वमस्य विभाव्यते ध्यायतीव लेलायतीवेति । तथा मनोमयो मनःसन्निकर्षान्मनोमयः । तथा प्राणमयः प्राणः पञ्चवृत्तिस्तन्मयो येन चेतनश्चलतीव लक्ष्यते । तथा चक्षुर्मयो रूपदर्शनकाले । एवं श्रोत्रमयः शब्दश्रवणकाले । एवं तस्य तस्येन्द्रियस्य व्यापारोद्भवे तत्तन्मयो भवति । एवं बुद्धिप्राणद्वारेण चक्षुरादिकरणमयः सञ्शरीरारम्भकपृथिव्यादिभूतमयो भवति । तत्र पार्थिवादिशरीरारम्भे पृथिवीमयो भवति । तथा वरुणादिलोकेष्वाप्यशरीरारम्भ आपोमयो भवति । तथा वायव्यशरीरारम्भे वायुमयो भवति । तथाकाशशरीरारम्भ आकाशमयो भवति । एवमेतानि तैजसानि देवशरीराणि । तेष्वारभ्यमाणेषु तत्तन्मयस्तेजोमयो भवति । अतो व्यतिरिक्तानि पश्वादिशरीराणि

---

आ॰ यद्यर्था दर्शिताः किं पुनस्तत्प्रदर्शनेनेत्याशङ्क्याह । पुनरीत्येति ॥ स वा अयमात्मा ब्रह्मेति भागं व्याकुर्वन्नात्मनो ब्रह्मैक्यं वास्तवं वृत्तं दर्शयति । स वा इति ॥ तस्यैवावास्तवं रूपमुपन्यस्यति । विज्ञानमय इत्यादिना ॥ ज्योतिर्ब्राह्मणेऽपि व्याख्यातं विज्ञानमयत्वमित्याह । कतम इति ॥ कस्मिन्नर्थे मयट् प्रयुज्यते तत्राह । विज्ञानेति ॥ उक्ते मयडर्थे हेतुमाह । यस्मादिति ॥ बुद्धिध्यानाध्यायधर्मांस्तु वर्तत्वादेरात्मनि प्रतीतिरित्यत्र मानमाह ।

उ॰ वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काम-
मयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्म्ममयो

---

भा॰ नरकप्रेतादिशरीराणि चातेजोमयानि। तान्यपेक्ष्याऽ-
तेजोमय इति। एवं कार्य्यकरणसङ्घातमयः सन्नात्मा प्राप्त
वस्त्वन्तरं पश्यन्निदम्मयोऽदोमय इत्यप्रत्यक्षमिति। एवं
विपरीतप्रत्ययस्तदभिलाषः काममयो भवति। तस्मि-
न्कामे दोषं पश्यतस्तद्विषयाभिलाषप्रशमे चित्तं प्रस-
न्नमकलुषं शान्तं भवति तन्मयोऽकाममयः। एवं तस्मि-
न्विहते कामे केनचित्स कामः क्रोधत्वेन परिणमते तेन
तन्मयो भवन्क्रोधमयः। स क्रोधः केनचिदुपायेन निव-
र्त्तितो यदा भवति तदा प्रसन्नमनाकुलं चित्तं सद-
क्रोध उच्यते। एवं तेन तन्मयः। एवं कामक्रोधाभ्याम-
कामक्रोधाभ्याञ्च तन्मयो भूत्वा धर्म्ममयोऽधर्म्ममयश्च
भवति। न हि कामक्रोधादिभिर्विना धर्म्मादिप्रवृत्तिरुपप-
द्यते। यद्यद्धि कुरुते कर्म्म तत्तत्कामस्य चेष्टितमिति स्मर-
णात्। धर्म्ममयोऽधर्म्ममयश्च भूत्वा सर्व्वमयो भवति।
समस्तं धर्म्माधर्म्मयोश्च कार्य्यं यावत्किञ्चिद्व्याकृतं तत्सर्व्वं

---

आ॰ ध्यायतीवेति। मनःसन्निकर्षोक्तेन प्रकृष्यतया सम्बन्धादिति
यावत्। यद्यप्येवमादेर्वयमन्वयत्वमङ्गीकृतम्। एवमिति।
अन्यमनूद्य सामान्येन भूतमयत्वमाह। एवं पृथ्वीति। भूतमयत्व
तत्रयान्तरविशेषमाह। तपेत्यादिना। न चाकाशपरमाणु-

उ॰ ऽधर्म्ममयः सर्व्वमयस्तद्यदेतदिदम्मयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधु-

---

भा॰ धर्म्माधर्म्मयोः फलं। तत्प्रतिपद्यमानस्तन्मयो भवति। किं बहुना ॥

तदेतत् सिद्धमस्य यदयमिदम्मयो गृह्यमाणविषया-दिमयस्तस्मादयमदोमयः अद इति परोक्षं कार्य्येण गृह्य-माणेन निर्द्दिश्यते। अनन्ता ह्यन्तःकरणे भावना विशेषाः। नैव ते विशेषतो निर्द्देष्टुं शक्यन्ते। तस्मिंस्तस्मिन्क्षणे कार्य्यतो ऽवगम्यन्ते। इदमस्य हृदि वर्त्ततेऽदो ऽस्येति। तेन गृह्यमाण-कार्य्येणेदम्मयतया निर्द्दिश्यते। परोक्षोऽन्तःस्थो व्यवहा-रोऽयमिदानीमदोमय इति। सङ्क्षेपतस्तु यथा कर्त्तुं यथा वाचरितुं शीलमस्य सोऽयं यथाकारी यथाचारी स तथा भवति। करणं नाम नियताक्रियाविधिप्रतिषेधादिग-

---

आ॰ भावादाकाशस्य शरीरानारम्भकत्वं श्रुतिविरुद्धारम्भप्रक्रिया-नभ्युपगमादित्यभिप्रेत्याह। तथाकाशेति ॥

कथं पुनर्धर्म्मादिमयत्वे कामादिमयत्वमुपयुज्यते तत्राह। न हीति ॥ कथं धर्म्मादिमयत्वं सर्व्वमयत्वे कारणमित्याशङ्क्याह। समस्तमिति ॥ तद्यदेतदित्यादेरर्थमाह। किं बहुनेति ॥ विषयः शब्दादिस्ततोऽन्यदपि प्रत्यक्षतो गृह्यमाणमादिशब्दार्थः। इदंम-यत्वमदोमयत्वगमकमित्याह। तस्मादिति ॥ विशेषतस्तन्मयत्वोक्तिं विना किमिति सामान्योक्तिरित्याशङ्क्याह। अनन्ता हीति ॥ तदस्तित्वे मानमाह। तस्मिन्निति ॥ अवगतिप्रकारमभिनयति इदमस्येति ॥ इदंमयत्वमदोमयत्वेनोपसंहरति। तेनेत्यादिना ॥ परोक्षत्वं व्याकरोति। अन्तःस्थ इति ॥ अवस्थितविषयव्यवहार-

उ॰ कारी साधुर्भवति पापकारी पापो भवति पुण्यः
पुण्येन कर्म्मणा भवति पापः पापेन ॥

---

भा॰ आचरणं नाम । अनियतमिति विशेषः । साधुकारी
साधुर्भवति । यथाकारीत्यस्य विशेषणं । पापकारी पापो
भवति च । यथाचारीत्यस्य ताच्छील्यप्रत्ययोपादानात् ।
अत्यन्ततात्पर्य्यतैव तन्मयत्वं न तु तत्कर्म्ममात्रेणेत्याश-
ङ्क्याह । पुण्यः पुण्येन कर्म्मणा भवति पापः पापेनेति ।
पुण्यपापकर्म्ममात्रेणैव तन्मयता स्यान्न तु ताच्छील्यमपे-
क्ष्यते । ताच्छील्ये तु तन्मयत्वातिशय इत्ययं विशेषः । तत्र
कामक्रोधादिपूर्व्वकपुण्यापुण्यकारिता सर्व्वमयत्वे हेतुः
संसारस्य कारणं देहाद्देहान्तरसञ्चारस्य च । एतत्प्रयुक्तो
ह्यन्यदन्यद्देहान्तरमुपादत्ते । तस्मात्पुण्यापुण्ये संसारस्य
कारणमेतत् । विषयौ हि विधिप्रतिषेधावत्र शास्त्रस्य
साफल्यमिति । अथोऽप्यन्ये बन्धमोक्षकुशलाः खल्वाहुः ।

---

आ॰ वानिति यावत् । इदानीमित्यस्मादुपरिष्टादपि तेनेति सम्ब-
ध्यते । परोक्षत्वावस्थेदानीमित्युक्ता तृतीययात्र प्रकृतो व्यव-
हारो निर्दिश्यते । इतिशब्दः सर्व्वमयत्वोपसंहारार्थः ॥ विज्ञान-
मयादिवाक्यार्थं सङ्क्षिपति । सङ्क्षेपतस्त्विति ॥ करणचरणयो-
रैक्येन पौनरुक्त्यमाशङ्क्याह । चरणं नामेति ॥ आदिशब्दः शिष्टा-
चारसङ्ग्रहार्थः ॥ वाक्यान्तरं शङ्कोत्तरत्वेनोत्थाप्य व्याचष्टे ।
ताच्छील्येत्यादिना ॥ कुत्र तर्हि ताच्छील्यमुपयुज्यते तत्राह ।
ताच्छील्ये त्विति ॥ पूर्व्वपक्षमुपसंहरति । तत्रेत्यादिना ॥ कर्म्मणः
संसारकारणत्वमुपसंहरति । एतत्प्रयुक्तो हीति ॥ संसारप्रयो-
जके कर्म्मणि प्रमाणमाह । एतद्विषया हीति ॥ कथं यथोक्त-

उ॰ अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म्म कुरुते यत्कर्म्म कुरुते तदभिसम्पद्यते ॥ ५ ॥

---

भा॰ सत्यं कामादिपूर्व्वके पुण्यापुण्ये शरीरग्रहणकारणं । तथापि कामप्रयुक्तो हि पुरुषः पुण्यापुण्यकर्म्मण्युपचिनोति ॥

कामप्रहाणे तु कर्म्म विद्यमानमपि पुण्यापुण्योपचयकरं न भवति। उपचिते अपि पुण्यापुण्ये कर्म्मणी कामशून्ये फलारम्भके न भवतः। तस्मात्काम एव संसारस्य मूलं। तथा चोक्तमाथर्व्वणे। कामान् यः कामयते मन्यमानः स कर्म्मभिर्जायते तत्र तत्रेति ॥ तस्मात्काममय एवायं पुरुषो यदन्यमयत्वं तदकारणं विद्यमानमपीत्यतोऽवधारयति काममय एवेति। स च काममयः सन् यादृशेन कामेन यथाकामो भवति तत्क्रतुर्भवति सकाम ईषदभिलाषमात्रेणाभिव्यक्तो यस्मिन्विषये भवति सो विहन्यमानः स्फुटीभवन् क्रतुत्वमापद्यते। क्रतुर्नामाध्यवसायो निश्चयो यदनन्तरा क्रिया

---

आ॰ कर्म्मविषयत्वं विधिनिषेधयोरित्याशङ्क्याह। तथेति॥ इतिशब्दः पूर्व्वपक्षसमाप्त्यर्थः॥ सिद्धान्तमवतारयति। अथो इति॥ संसारकारणस्याज्ञानस्य प्राधान्येन कामः सहकारीति सिद्धान्तं समर्थयते। सत्यमित्यादिना॥

कामाभावेऽपि कर्म्मणः सत्त्वं दृष्टमित्याशङ्क्याह। कामप्रहाणे त्विति॥ ननु कामाभावेऽपि नित्याद्यनुष्ठानात्पुण्यापुण्ये सञ्चीयेते तत्राह। उपचितेति॥ यो हि पशुपुत्रस्वर्गादीनभिलषितपुरुषार्थान्मन्यमानस्तानेव कामयते स तत्तद्भोगभूमौ तत्तत्कामसंयुक्तो

उ॰ तदेष श्लोको भवति तदेव सक्तः सह कर्म्म-णैति लिङ्गं मनो यत्र निषक्तमस्य प्राप्यान्तं कर्म्म-

---

भा॰ प्रवर्त्तते यत्क्रतुर्भवति यादृक्कामकार्य्येण क्रतुना यथा-स्वरूपः क्रतुरस्य सोऽयं यत्क्रतुर्भवति तत्कर्म्म कुरुते। यद्वि-षयः क्रतुस्तत्फलनिर्वृत्तये यद्योग्यं कर्म्म तत्कुरुते निर्वर्त्तयति। यत्कर्म्म कुरुते तदभिसम्पद्यते। तदीयं फलमभिसम्पद्यते। तस्मात्सर्व्वमयत्वेऽस्य संसारित्वे च काम एव हेतुरिति ॥ ५ ॥

तत्तस्मिन्नर्थ एष श्लोको मन्त्रोऽपि भवति। तदेवेति तदेव गच्छति। सक्त आसक्तस्तत्रोद्भूताभिलाषः सन्नित्यर्थः। कथमेति सह कर्म्मणा। यत्कर्म्मफलासक्तः सन्नकरोत्तेन कर्म्मणा सहैव तदेति तत्फलमेति। किन्तल्लिङ्गं। मनः। मनः-प्रधानत्वाल्लिङ्गस्य मनो लिङ्गमित्युच्यते। अथ वा लिङ्ग्यते ऽवगम्यतेऽवगच्छति येन तल्लिङ्गं। तन्मनो यत्र यस्मिन्निषक्तं निश्चयेन सक्तमुद्भूताभिलाषमस्य संसारिणस्तदभिलाषो हि

---

व्या॰ भवतीत्याद्यायाः श्रुतेरर्थः । श्रुतियुक्तिसिद्धमर्थं निगमयति । तस्मादिति । धर्म्मादिमयत्वस्यापि सत्त्वावधारणानुपपत्तिमा-शङ्क्याह । यदिति । स यथाकामो भवतीत्यादि व्याचष्टे। यस्मा-दित्यादिना । यस्मादित्यस्य तस्मादिति व्यवहितेन सम्बन्धः । इतिशब्दो ब्राह्मणसमाप्त्यर्थः ॥ ५ ॥

तत्रेति गन्तव्यपरामर्शः। तदेव गन्तव्यं फलं विशेषतो वक्तुं पृच्छति । किन्तदिति । प्रतीकमादाय व्याचष्टे । लिङ्गमिति । योऽवगच्छति स प्रमात्रादिसाक्षी येन साक्ष्येण मनसावगम्यते तन्मनो लिङ्गमिति पक्षान्तरमाह । अथवेति । यस्मिन्निश्चयेन संसारिणो मनः संसक्तं तत्फलप्राप्तिरस्येति सम्बन्धः । तदेवोप-

उ॰ णस्तस्य यत्किञ्चेह करोत्ययं । तस्माल्लोकात्पुन-
रैत्यस्मै लोकाय कर्म्मण इति नु कामयमानोऽथा-

---

भा॰ तत्कर्म्म कृतवान् । तस्मात्तन्मनोऽभिषङ्गवशादेवास्य तेन
कर्म्मणा तत्फलप्राप्तिः । तेनैतत्सिद्धं भवति कामो मूलं संसा-
रस्येति । अत उच्छिन्नकामस्य विद्यमानान्यपि कर्म्माणि ब्रह्म-
विदो वन्ध्यप्रसवानि भवन्ति । पर्य्याप्तकामस्य कृतात्मनस्त्विहैव
सर्व्वे प्रलीयन्ति कामा इति श्रुतेः । किञ्च प्राप्यान्तं कर्म्मणः
प्राप्य भुक्त्वाऽन्तमवसानं यावत्कर्म्मणः फलं । परिसमाप्तिं
कृत्वेत्यर्थः । कस्य कर्म्मणोऽन्तं प्राप्येत्युच्यते । तस्य यत्किञ्चन
कर्म्म इहास्मिँल्लोके करोति निर्वर्त्तयत्ययं तस्य कर्म्मणः फलं
भुक्त्वान्तं प्राप्य तस्माल्लोकात्पुनरैत्यागच्छत्यस्मै लोकाय
कर्म्मणेऽयं हि लोकः कर्म्मप्रधानस्तेनाह कर्म्मण इति । पुनः
कर्म्मकरणाय पुनः कर्म्म कृत्वा फलासङ्गवशात्पुनरमुं लोकं
यातीत्येवं । इति नु एवं नु कामयमानः संसरति यस्मात्

---

आ॰ पादयति तदभिलाषो हीति ॥ पूर्व्वार्द्धार्थमुपसंहरति । तेनेति ॥
कामस्य संसारमूलत्वे सत्यर्थसिद्धमर्थमाह । अत इति ॥ वन्ध्य-
प्रसवत्वं निष्फलत्वं । पर्य्याप्तकामस्य प्राप्तपरमपुरुषार्थस्येति
यावत् । कृतात्मनः शुद्धबुद्धेर्विदिततत्त्वस्येत्यर्थः । इहेति जीव-
दवस्थोक्तिः । कामप्रधानः संसरति चेत्कर्म्मफलभोगानन्तरं
कामाभावान्मुक्तिः स्यादित्याशङ्क्याह । किञ्चेति ॥ इतश्च संसारस्य
कामप्रधानत्वमास्थेयमित्यर्थः । यावदवसानं तावद्भुक्त्वेति सम्बन्धः ॥
उक्तमेव सङ्क्षिपति । कर्म्मण इति ॥ इत्येवं पारम्पर्य्येण संसरणा-
दृते ज्ञानान्न मुक्तिरिति शेषः ॥ संसारप्रकरणमुपसंहरति ।
इति न्विति ॥ अवक्ष्यमाणस्य दार्ष्टान्तिकं बन्धं प्रबन्धेन दर्शयित्वा

उ॰ कामयमानो योऽकामो निष्काम आप्तकाम आत्म-

---

भा॰ कामयमान एवैवं संसरत्यथ तस्मादकामयमानो न क्वचित् संसरति फलासक्तस्य हि गतिरुक्ता। अकामस्य हि क्रियानुपपत्तेः। अकामयमानो मुच्यते। एवं कथं पुनरकामयमानो भवति। योऽकामो भवत्यसावकामयमानः। कथमकामतेत्युच्यते। यो निःकामो यस्मान्निर्गताः कामाः सोऽयं निःकामः। कथं कामा निर्गच्छन्ति। य आप्तकामो भवति। आप्ताः कामा येन स आप्तकामः। कथमाप्यन्ते कामाः। आत्मकामत्वेन यस्यात्मैव नान्यः कामयितव्यो वस्त्वन्तरभूतः पदार्थो भवति। आत्मैवान्तरो बाह्यः कृत्स्नः प्रज्ञानघन एकरसो नोर्द्ध्वं न तिर्य्यङ्नाधः। आत्मनोऽन्यत्कामयितुं वस्त्वन्तरं यस्य सर्व्वमात्मैवाभूत्तत्केन किं पश्येत्

---

आ॰ सुषुप्तस्य दार्ष्टान्तिकं मोक्षं वक्तुमथेत्यादि वाक्यं॥ तत्राथशब्दार्थमाह। यस्मादिति॥ कामरहितस्य संसाराभावं साधयति। फलासक्तस्येति॥ विदुषो निष्कामस्य क्रियाराहित्ये नैष्कर्म्यमयत्नसिद्धमिति भावः॥ अकामयमानत्वे प्रश्नपूर्व्वकं हेतुमाह। कथमित्यादिना॥ बाह्येषु शब्दादिषु विषयेष्वासङ्गराहित्यादकामयमानतेत्यर्थः॥ अकामत्वे हेतुमाकाङ्क्षापूर्व्वकमाह। कथमिति॥ वासनारूपकामाभावादकामतेत्यर्थः॥ निष्कामत्वे प्रश्नपूर्व्वकं हेतुमुत्थाप्य व्याचष्टे। कथमिति॥ प्राप्तपरमानन्दत्वान्निष्कामतेत्यर्थः॥ आप्तकामत्वे हेतुमाकाङ्क्षापूर्व्वकमाह। कथमित्यादिना॥ हेतुमेव साधयति। यस्येति॥ तस्य युक्तमाप्तकामत्वमिति शेषः॥ उक्तमर्थं प्रमाणतः प्रदर्शनार्थं प्रपञ्चयति। आत्मैवेति॥ कामयितव्याभावं ब्रह्मविदः श्रुत्यवष्टम्भेन साधयति। यस्येति॥ इति विद्यावस्था

उ॰ कामः न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति ॥ ६ ॥

---

भा॰ शृणुयान्मन्वीत विजानीयाद्वा। एवं विजानन् किङ्कामयेत। ज्ञायमानो ह्यन्यत्वेन पदार्थः कामयितव्यो भवति॥

न चासावन्यो ब्रह्मविद आप्तकामस्यास्ति। य एवात्मकामतयाऽऽप्तकामः स निष्कामोऽकामोऽकामयमानश्चेति मुच्यते। न हि यस्यात्मैव सर्व्वं भवति तस्यानात्मा कामयितव्योऽस्ति। अनात्मा चान्यः कामयितव्यः। सर्व्वञ्चात्मैवाभूदिति प्रतिषिद्धं। सर्व्वात्मदर्शिनः कामयितव्याभावात् कर्म्मानुपपत्तिः। ये तु प्रत्यवायपरिहारार्थं कर्म्म कल्पयन्ति ब्रह्मविदोऽपि तेषां नात्मैव सर्व्वं भवति। प्रत्यवायस्य जिहासितव्यस्यात्मनोऽन्यस्याभिप्रेतत्वात्। येन चाशनाया-

---

आ॰ यस्य विदुषोऽस्ति ह्यन्यमविजानन्न किञ्चिदपि कामयेतेति योजना॥

पदार्थोऽन्यत्वेनाविज्ञातोऽपि कामयितव्यः स्यादिति चेन्नेत्याह। ज्ञायमानो हीति॥ अनुभूते स्मरणविपरिवर्त्तिनि कामनियमादित्यर्थः॥ अन्यत्वेन ज्ञायमानस्तर्हि पदार्थो विदुषोऽपि कामयितव्यः स्यादित्याशङ्क्याह। न चेति॥ आप्तकामस्य ब्रह्मविदो दर्शितरीत्या कामयितव्याभावे मुक्तिः सिद्धेत्युपसंहरति। य एवेति॥ कथं कामयितव्याभावो नात्मनस्तथात्वादित्याशङ्क्याह। न हीति॥ सर्व्वात्मत्वमनात्मकामयितृत्वञ्च स्यादित्याशङ्क्याह। अनात्मा चेति॥ यथेत्यादिवाक्ये श्रौतमर्थमुक्तार्थसिद्धमर्थं कथयति सर्व्वात्मदर्शिन इति॥ कर्म्मजडानां मतमुत्थाप्य श्रुतिविरोधेन प्रत्याचष्टे। ये त्विति॥ ब्रह्मविदि प्रत्यवायप्राप्तिमङ्गीकृत्योक्तं इदानीं तत्प्राप्तिरेव तस्मिन्नास्तीत्याशङ्क्याह। येन चेति॥ यथोक्त-

भा॰ यतीतो नित्यं प्रत्यवायासम्बद्धो विदित आत्मा तं वयं ब्रह्मविदं ब्रूमः। नित्यमेवाशनायाद्यतीतमात्मानं पश्यति। यस्माच्च जिहासितव्यमन्यमुपादेयं वा यो न पश्यति तस्य कर्म्म न शक्यत एव सम्बद्धुं। यस्त्वब्रह्मवित्तस्य भवत्येव प्रत्यवायपरिहारार्थं कर्म्मेति न विरोधः। अतः कामाभावादकामयमानो न जायते मुच्यत एव। तस्यैवमकामयमानस्य कर्म्माभावे गमनकारणाभावात्प्राणा वागादयो नोत्क्रामन्ति नोर्द्ध्वं क्रामन्ति देहात्। स च विद्वानाप्तकाम आत्मकामतया इहैव ब्रह्मभूतः। सर्व्वात्मनो हि ब्रह्मणो दृष्टान्तत्वेन प्रदर्शितमेतद्रूपं। तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपमिति। तस्य हि दार्ष्टान्तिकभूतोऽयमर्थ उपसंह्रियते। अथाकामयमान इत्यादिना। स कथमेवम्भूतो मुच्यत इत्युच्यते। यो हि सुषुप्तावस्थमिव निर्विशेषमद्वैतमलुप्त-

---

आ॰ स्यापि ब्रह्मविदो विहितत्वादेव नित्यानुष्ठानं स्यादिति चेन्नेत्याह। नित्यमेवेति॥ यो हि सदैवासंसारिणमात्मानमनुभवति न च हेयमादेयं वात्मनोऽन्यत्पश्यति। यस्मादेवं तस्मात्तस्य कर्म्म संस्प्रष्टुमयोग्यं। यथोक्तब्रह्मविद्यया कर्म्माधिकारहेतूनामुपमर्दितत्वादित्यर्थः॥ कर्म्मसम्बन्धस्तर्हि कस्येत्याशङ्क्याह। यस्त्विति। न विरोधो विधिशास्त्रस्येति शेषः॥ श्रुत्यर्थाभ्यां सिद्धमर्थमुपसंहरति। अत इति॥ विद्यावशादित्येतत्। कामाभावात्कर्म्माभावाच्चेति द्रष्टव्यं। अकामयमानोऽकुर्व्वाणश्चेति शेषः॥ देशान्तरप्राप्त्यायत्ता मुक्तिरित्येतन्निराकर्त्तुं न तस्येत्यादि व्याचष्टे। तस्येत्यादिना॥ अत्रैव सन्निवेतदवतारयति। स चेति॥ कथं वर्त्तमाने देहे तिष्ठन्नेव ब्रह्मभूतो भवति तत्राह। सर्व्वात्मनो हीति॥ दृष्टान्तालोचनया दार्ष्टान्तिकेऽपि सदा ब्रह्मत्वं भातीवि

भा॰ चिद्रूपज्योतिःस्वभावमात्मानं पश्यति तस्यैवाकामयमानस्य कर्म्माभावे गमनकारणाभावात्प्राणा वागादयो नोत्क्रामन्ति। किन्तु विद्वान् स इहैव ब्रह्म भवति यद्यपि देहवानिव लक्ष्यते। स ब्रह्मैव सन्ब्रह्माप्येति। यस्मान्नहि तस्याब्रह्मत्वपरिच्छेदहेतवः कामाः सन्ति। तस्मादिहैव ब्रह्मैव सन्ब्रह्माप्येति न शरीरपातोत्तरकालं। न हि विदुषो मृतस्य भावान्तरापत्तिर्जीवतोऽन्यो भावो देहान्तरप्रतिसन्धानाभावमात्रेणैव तु ब्रह्माप्येतीत्युच्यते। भावान्तरापत्तौ हि मोक्षस्य सर्व्वोपनिषद्विवक्षितोऽर्थ आत्मैकत्वाख्यः स बाधितो भवेत्। कर्म्महेतुकश्च मोक्षः प्राप्नोति न ज्ञाननिमित्त इति। स चानिष्टोऽनित्यत्वञ्च मोक्षस्य प्राप्नोति। न हि क्रियानिर्वृत्तोऽर्थो नित्यो दृष्टः। नित्यश्च मोक्षोऽभ्युपगम्यते। एष नित्यो महिमेति मन्त्रवर्णात्। न च स्वाभाविकात्

---

आ॰ भावः॥ सदा ब्रह्मीभूतस्य मुक्तिर्नाम नास्तीति शङ्कित्वा परिहरति। स कथमिति॥ परिहारमेव स्फोरयितुं तस्येत्यादिवाक्यार्थमनुद्रवति। तस्यैवेति॥ ब्रह्मैव सन्नित्यस्यार्थमनुवदति। किन्त्विति॥ विद्वानिहैव ब्रह्म चेत्कथं तस्य ब्रह्मप्राप्तिरित्याशङ्क्याह। ब्रह्मैवेति॥ यदुक्तं ब्रह्मैव सन्नित्यादि तदुपपादयति। यस्मादिति॥ प्रागपि ब्रह्मभूतस्यैव पुनर्देहपाते ब्रह्मप्राप्तिरित्ययुक्तं विदुषो मृतस्य भावान्तरापत्तिस्वीकारादित्याशङ्क्याह॥ न हीति॥ कथं तर्हि ब्रह्माप्येतीत्युच्यते तत्राह। देहान्तरेति॥ विदुषो भावान्तरापत्तिर्मुक्तिरिति पक्षेऽपि किं दूषणमिति चेत्तत्राह। भावान्तरापत्तौ हीति॥ तथा चोपनिषदामप्रामाण्यं विना हेतुना स्यादिति भावः॥ भावान्तरापत्तिर्मुक्तिरित्यत्र दोषान्तरमाह। कर्म्मेति॥ इति पदादुपरिष्टात् क्रियापदस्य सम्बन्धः॥ यत्तु कर्म्मनिमित्तो

भा० स्वभावादन्यथित्वं कल्पयितुं शक्यं । स्वाभाविकश्चेदन्यु-
ष्णवदात्मनः स्वभावः स न शक्यते पुरुष व्यापारानुभावीति
वक्तुं । न ह्यग्नेरौष्ण्यं प्रकाशो वाऽग्निव्यापारानन्तरानुभावी ।
अग्निव्यापारानुभावी स्वाभाविकश्चेति विप्रतिषिद्धं । ज्वल-
नव्यापारानुभावित्वमुष्णप्रकाशयोरिति चेत् । न । अन्योप-
लब्धिव्यवधानापगमाभिव्यक्त्यपेक्षत्वात् । ज्वलनादिपूर्व्वक-
मग्निरुष्णप्रकाशगुणाभ्यामभिव्यज्यते नान्यपेक्षया । किन्त-
र्ह्यन्यदृष्टेरग्नेरौष्ण्यप्रकाशौ धर्म्मौ व्यवस्थितौ कस्यचिद्दृष्ट्या
सम्बध्यमानौ ज्वलनापेक्षया व्यवधानापगमने दृष्टेरभि-

---

आ० मोक्षो ज्ञाननिमित्तस्तु माभूत्तत्राह । स चेति ॥ प्रसङ्गः सर्व्वनाम्ना
परामृश्यते । प्रतिषेधशास्त्रविरोधादिति भावः ॥ मोक्षस्य
कर्म्मसाध्यत्वे दोषान्तरमाह । अनित्यत्वञ्चेति ॥ तत्रोपयुक्तां
व्याप्तिमाह । न हीति ॥ अस्तु तर्हि प्रासादादिवत् क्रियासाध्यस्य
मोक्षस्याप्यनित्यत्वं नेत्याह नित्यश्चेति ॥ कृतकोऽपि ब्रह्मभावे
ध्वंसवन्नित्यः स्यादित्याशङ्क्याह । न चेति ॥ अकृत्रिमस्वभावव्याह-
त्यर्थं स्वाभाविकं पदं । अतोऽन्यदार्त्तमिति हि श्रुतिः । ध्वंसस्य तु
विकल्पमात्रत्वान्नित्यत्वमसम्मतमिति भावः ॥ मोक्षोऽकृत्रिमस्वभा-
वोऽपि कर्म्मोत्थः स्यादित्याशङ्क्याह । स्वाभाविकश्चेदिति ॥ अग्ने-
रौष्ण्यवदात्मनो मोक्षश्च स्वाभाविकस्वभावश्चेन्न स क्रिया-
साध्यो व्याघातादित्यर्थः ॥ दृष्टान्तं समर्थयते । न हीति ॥ अरणि-
गतस्याग्नेरौष्ण्यप्रकाशौ नोपलभ्येते । सति च ज्वलने दृश्येते तेन
स्वाभाविकावपि तावागन्तुकौ कादाचित्कोपलब्धिमत्त्वादिति
शङ्कते । ज्वलनेति ॥ न हि सतोऽग्नेरौष्ण्यादिकादाचित्कं युक्तं । तद्-
दृष्टेर्व्यवधानस्य दार्व्वादेर्ध्वंसे ज्वलनमथनादिना वह्निरभिव्यक्ति-
मपेक्ष्य तत्स्वभावस्यौष्ण्यादेर्व्यक्त्यभ्युपगमादिति परिहरति ।
नान्येति ॥ तदेव प्रपञ्चयति । ज्वलनादीति ॥ मन्थनादिव्यापार-
वशात् प्रकाशादिना व्यज्यतेऽग्निरिति यदुच्यते तदसौ सत्येव तद्द-

भा॰ व्यज्यते तदपेक्षया भ्रान्तिरुपजायते। ज्वलनपूर्व्वकावेतावुष्ण-
प्रकाशौ धर्म्मौ जाताविति। यद्युष्णप्रकाशयोरपि स्वाभावि-
कत्वं न स्यात्। यः स्वाभाविकोऽग्नेर्धर्म्मस्तमुदाहरिष्यामः। न
च स्वाभाविको धर्म्म एव नास्ति पदार्थानामिति शक्यं वक्तुं॥

न च निगडभङ्ग इवाभावभूतो मोक्षो बन्धननिवृत्ति-
रूप उपपद्यते। परमात्मैकत्वाभ्युपगमादेकमेवाद्वितीयमिति
श्रुतेः। न चान्यो बद्धोऽस्ति। यस्य निगडनिवृत्तिवद्बन्धन-
निवृत्तिर्मोक्षः स्यात्। परमात्मव्यतिरेकेणान्यस्याभावं विस्त-
रेणावादिषं। तस्मादविद्यानिवृत्तिमात्रे मोक्षव्यवहार इति

---

आ॰ तद्व्यापारापेक्षया तदौष्ण्याद्यभिव्यक्तिर्यथा न भवति। किन्तु
देवदत्तदृष्टेरग्निधर्म्मौ व्यवस्थितौ न तु तौ कस्यचिद्दृष्ट्या सम्बध्येते।
ज्वलनादिव्यापारात्तु दृष्टेर्व्यवधानभङ्गे तयोरभिव्यक्तिरित्यर्थः॥
कथं तर्हि ज्वलनव्यापारादग्नेरौष्ण्यप्रकाशौ जाताविति बुद्धिरत
आह। तदपेक्षयेति॥ ज्वलनादिव्यापाराद्दृष्टिव्यवधानभङ्गे वह्ने-
रौष्ण्यप्रकाशाभिव्यक्त्यपेक्षयेति यावत्। यथा वह्नेरौष्ण्यादि
स्वाभाविकं न क्रियासाध्यं तथात्मनो मुक्तिः स्वाभाविकी न
क्रियासाध्येत्युक्तं॥

इदानीमग्नेरौष्ण्यादि न स्वाभाविकमित्याशङ्क्याह। यदीति॥
उदाहरिष्यामो मोक्षस्यात्मस्वभावस्याकर्म्मसाध्यत्वायेति शेषः॥
नाग्नेः स्वाभाविको न कश्चिद्धर्म्मोऽस्ति यो मोक्षस्य दृष्टान्तः
स्यादत आह। न चेति॥ सत्त्वात्मकं हि वस्तु वस्त्वन्तरेण सम्बध्यते।
यस्ति निम्बादौ तिक्तत्वादि धर्मरित्यर्थः॥ भावान्तरापत्तिपक्षं
प्रतिक्षिप्य पक्षान्तरं प्रत्याह। न चेति॥ न हि बन्धस्य तथाभूतस्य
निवृत्तिविरोधान्नाप्यन्यथाभूतस्यानवस्थानात्। न च प्रसिद्धिवि-
रोधो दुर्निरूपध्वस्तिविषयत्वादिति भावः॥ किञ्च परस्मादन्यस्य
बन्धनिवृत्तिस्तस्यैव वा नाद्य इत्याह। न चेति। तत्र हेतुत्वेन
परमात्मैकत्वाभ्युपगमादित्यादिभाष्यं व्याख्येयं। न द्वितीयस्तस्य

भा॰ चावोचाम । यथा रज्ज्वादौ सर्पादिज्ञाननिवृत्त्या सर्पादिनिवृत्तिवदिति । येऽप्याचक्षते मोक्षे विज्ञानान्तरमानन्दान्तरं वाभिव्यज्यत इति तैर्वक्तव्योऽभिव्यक्तिशब्दार्थः । यदि तावल्लौकिक्येवोपलब्धिविषयव्याप्तिरभिव्यक्तिशब्दार्थः । ततो वक्तव्यं किं विद्यमानमभिव्यज्यतेऽविद्यमानमिति वा । विद्यमानञ्चेद्यस्य मुक्तस्य तदभिव्यज्यते तस्यात्मभूतमेव तदित्युपलब्धिव्यवधानानुपपत्तेर्नित्याभिव्यक्तत्वान्मुक्तस्याभिव्यज्यत इति । विशेषवचनमनर्थकं एवमथ कदाचिदेवाभिव्यज्यते उपलब्धिव्यवधानादनात्मभूतं तदित्यन्यतोऽभिव्यक्तिप्रसङ्गः । तथा चाभिव्यक्तिसाधनापेक्षिता ।

---

चा॰ नित्यमुक्तस्य त्वया बद्धत्वानभ्युपगमादिति द्रष्टव्यं । कथं परस्मादन्यो बद्धो नास्तीत्याशङ्क्य प्रवेशविचारादावुक्तं स्मारयति । परमात्मेति । न चेदन्यो बद्धोऽस्ति कथं मोक्षव्यवहारः स्यादित्याशङ्क्याह । तस्मादिति । अन्यस्य बद्धस्याभावात्परस्य च नित्यमुक्तत्वादिति यावत् । यथा रज्ज्वादावधिष्ठाने सर्पादिहेतोरज्ञानस्य निवृत्तौ सत्यां सर्पादेरपि निवृत्तिस्तथाऽविद्याया बन्धहेतोर्निवृत्तिमात्रेण तत्कार्यस्य बन्धस्यापि निवृत्तिव्यवहारो भवतीति चावादिष्मेति योजना । मतान्तरमुद्भावयति । येऽप्याचक्षत इति । वैषयिकज्ञानानन्दापेक्षयान्तरशब्दः । केयमभिव्यक्तिरुत्पत्तिर्वा प्रकाशो वा । नाद्यो मोक्षे सुखाद्युत्पत्तौ तदनित्यत्वापत्तेरित्यभिप्रेत्याह । तैरिति । द्वितीयमालम्बते । यदीति । तत्र दोषं वक्तुं विकल्पयति । तत इति । द्वितीये खरविषाणवदपरोक्षाभिव्यक्तिर्न स्यादित्यभिप्रेत्याद्यमनुभाष्य दूषयति । विद्यमानञ्चेदिति । उपलब्धिस्वभावस्तावदात्मा तस्य विद्यमानं सुखादि व्यज्यते चेत् । ज्ञानानन्दयोर्देशादिव्यवधानाभावादानन्दः सदैव व्यज्यत इति मुक्तिविशेषणमनर्थकमित्यर्थः । चक्षुर्घटयोर्विषयविषयित्वप्रतिबन्धककुड्यादिवद्धर्म्मादिप्रतिबन्धादा-

भा॰ समानाश्रयत्वाद्युगपदवधानकल्पनानुपपत्तेः । सर्व्वदाभिव्यक्ति-रनभिव्यक्तिर्वा नलन्तराल्लकल्पनायां प्रमाणमस्ति । न च समानाश्रयाणामेकस्यात्मभूतानां धर्म्माणामितरेतरवि-षयविषयित्वं सम्भवति । विज्ञानसुखयोश्च प्रागभिव्यक्तेः संसारित्वमभिव्यक्त्युत्तरकालञ्च मुक्तत्वं यस्य सोऽन्यः पर-स्मानित्याभिव्यक्तज्ञानस्वरूपादत्यन्तवैलक्षण्याद्वैत्यमिवा-ख्यात्परमात्मभेदकल्पनायाञ्च वैदिकःकृतान्तः परित्यक्तः स्यात् । मोक्षस्येदानीमिव निर्विशेषत्वे तदर्थाधिकयत्नानु-पपत्तिः शास्त्रवैयर्थ्यं च प्राप्नोतीति चेन्न । अविद्याश्रमा-पोहार्थत्वात् । न हि वस्तुनो मुक्तामुक्तत्वविशेषोऽस्ति ।

---

आ॰ नन्दो ज्ञानञ्च संसारदशायां न व्यज्यते । मोक्षे तु व्यज्यते तद-भावादिति शङ्कते । यथेति ॥ उपलब्धिदेशाद्भिन्नदेशस्यैव घटादेरु-पलब्धिप्रतिबन्धदर्शनादनात्मभूतं सुखं न स्वभावभूतयोपलब्ध्या प्रकाश्येत किन्तु विषयेन्द्रियसम्पर्कादितुत्तरमाह । उपलब्धीति ॥ अन्यतोऽभिव्यक्त्या किं स्यादिति चेत्तदाह । तथा चेति ॥ तत्सा-धनानि चेन्मुक्तौ स्युः संसारादविशेषः स्यादिति भावः ॥ उपल-ब्ध्यवधानमानन्दस्याङ्गीकृत्योक्तं इदानीं तदेव नास्तीत्याह । उप-लब्धीति ॥ कदाचिदभिव्यक्तिरनभिव्यक्तिश्च कदाचित्येवं काल-भेदेनोभयं किं न स्यादित्याशङ्क्याह । न त्विति ॥ आनन्दज्ञानयो-र्विषयविषयित्वमभ्युपेत्य कादाचित्की तावदभिव्यक्तिर्निरस्ता सम्प्रति तदपि न सम्भवतीत्याह । न चेति ॥ आत्मभूतत्वं स्वाभा-विकत्वं विमतं न समानाश्रयविषयं धर्म्मत्वात्प्रदीपप्रकाश-वदिति भावः ॥ मुक्तावानन्दज्ञानाभिव्यक्तिपक्षे दोषान्तरं वक्तुं भूमिकां करोति । विज्ञानसुखयोश्चेति ॥ तद्भेदापादनमिष्टमेवे-त्याशङ्क्य विवक्षितं दोषमाह । परमात्मेति ॥ परमते निराकृते सिद्धान्ते दोषद्वयमाशङ्कते । मोक्षस्येति ॥ मोक्षार्थोऽधिको यत्नः शमदमादिः । शास्त्रं मोक्षविषयं ॥ मोक्षस्य निर्विशेषत्वेऽप

भा० आत्मनो नित्यैकरूपत्वात्। किन्तु तद्विषया अविद्यापोह्यते। शास्त्रोपदेशजनितविज्ञानेन प्राक् तदुपदेशप्राप्तेः। तदर्थश्च प्रयत्न उपपद्यत एव। अविद्यावतोऽविद्यानिवृत्त्यनिवृत्तितो विशेष आत्मनः स्यादिति चेत्। न। अविद्याकल्पनाविषयत्वाभ्युपगमात्। रज्जूषरशुक्तिकागगनानां सर्पोदकरजतमलिनत्वादिवददोष इत्यवोचाम। तिमिरातिमिरदृष्टिवदविद्याकर्तृत्वाकर्तृत्वकृत आत्मनो विशेषःस्यादिति चेत्। न ध्यायतीव लेलायतीवेति स्वतोऽविद्याकर्तृत्वस्य प्रतिषिद्धत्वात्। अनेकव्यापारसन्निपातजनितत्वाच्च। अविद्याभ्रमस्य विषयत्वोपपत्तेश्च। यस्य चाविद्याभ्रमो घटादिवद्विविक्तो

---

आ० प्रत्यगविद्यातदुत्थानर्थध्वंसित्वेनोभयमर्थवदिति परिहरति। नाविद्येति॥ तत्र नञर्थं विवृणोति। नह्वीति॥ कथं तर्हि शास्त्रार्थवत्त्वमित्याशङ्क्याह। किन्त्विति॥ तत्र शास्त्रार्थवत्त्वं समर्थयते। तद्विषयेति॥ प्रकृतात्मविषयस्तच्छब्दः॥ सम्प्रति प्रयत्नस्यार्थवत्त्वं प्रकटयति। प्रागिति॥ प्रथमस्तच्छब्दः शास्त्रविषयः। द्वितीयो मोक्षविषयः॥ आत्मनः सदैकरूपत्वं प्रागुक्तमाक्षिपति। अविद्येति॥ आविद्यः सोऽपीति समाधत्ते। नेति॥ यथा रज्ज्वाद्यविद्योत्थसर्पादेस्तद्विषया ध्वंसाध्वंसयो रज्ज्वादेर्न वास्तवो विशेषस्तथात्मनोऽपि स्वाविद्यामात्रोत्थविशेषवत्त्वेऽपि तद्ध्वंसाध्वंसयोर्न वास्तवो विशेषोऽस्तीत्यर्थः॥ अदोषः सविशेषत्वराहित्यं॥ प्रकारान्तरेण सविशेषत्वं शङ्कते। तिमिरेति॥ किमिदमविद्याकर्तृत्वं तज्जनकत्वं वा तदाश्रयत्वमिति विकल्प्याद्यं दूषयति। न ध्यायतीवेति॥ आत्मनः स्वतोऽविद्याकर्तृत्वाभावे हेत्वन्तरमाह। अनेकेति॥ विषयविषय्याकारान्तःकरणस्य तत्र चिदाभासोदयस्यात्मनो व्यापारस्तथाचानेकव्यापारसन्निपाते सत्यहं संसारीत्यविद्यात्मको भ्रमो जायते तस्मान्न तस्यात्मकार्यतेत्यर्थः॥ कल्पान्तरं प्रत्याह। विषयत्वेति। अविद्यादेरात्मदृश्यत्वान्न

भा॰ गृह्यते स नाविद्याभ्रमवान्। अहं न जाने मुग्धोऽस्मीति प्रत्ययदर्शनात्। अविद्याभ्रमवत्त्वमेवेति चेन्न। तस्यापि विवेकग्रहणात्॥

न हि यो यस्य विवेकेन ग्रहीता स तस्मिन्भ्रान्तोऽज्ञान इत्युच्यते। तस्य च विवेकग्रहणं तस्मिन्नेव च भ्रम इति विप्रतिषिद्धं। न जाने मुग्धोऽस्मीति। दृश्यत इति ब्रवीषि। तद्दर्शिनस्त्वज्ञानं मुग्धरूपता दृश्यत इति च तद्दर्शनस्य विषयं भवति कर्मतामापद्यत इति। तत्कथं कर्मभूतं सत्कर्तृस्वरूपं दृशिविशेषणमज्ञानमुग्धते स्यातां। अथ दृशिविशेषणत्वं तयोः कथं कर्म स्यातां दृशिना व्याप्येते। कर्म हि कर्तृक्रियाव्याप्यमानं भवति। अन्यच्च व्याप्यमन्यद्व्या-

---

आ॰ तदाश्रयत्वं। न हि तद्गतस्य तद्ग्राह्यत्वमंशतः स्वग्रहापत्तेरित्यर्थः॥ तदेव स्फोरयति॥ यस्य चेति॥ अनुभवमनुसृत्य शङ्कते। अहं नेत्यादिना॥ साक्षिसाक्ष्यभावेन भेदाभ्युपगमादात्मनो विद्याश्रयत्वमित्युत्तरमाह। न तस्यापीति॥ तदेव स्पष्टयति। न हीति॥ अविद्यादेर्विवेकेन ग्रहीतर्य्यपि तद्विषये भ्रान्तत्वे का हानिरित्याशङ्क्याह। तस्य चेति॥ अज्ञानं मुग्धत्वं चात्मनो न विशेषणमिति विधान्तरेण दर्शयितुं चोद्यं वाक्यमनुवदति। न जान इति॥ तद्व्याचष्टे। त्वद्दर्शिनश्चेति॥ अज्ञानादिरत्र शब्दार्थः॥ दृश्यमानत्वमेव विशदयति। कर्म्मतामिति॥ इति ब्रवीषीति सम्बन्धः॥ एवं परकीयवाक्यं व्याख्याय फलितमाह। तत्कथमिति॥ तत्र चोद्यवाक्यार्थे दर्शितरीत्या स्थिते सति कर्तृविशेषणे नाज्ञानमुग्धते स्यातां। तयोः प्रत्येकं कर्म्मभूतत्वादित्यर्थः॥ विपक्षे दोषमाह। अथेति॥ कथं कर्म्म स्यातामित्येतदेव व्याचष्टे। दृशिनेति॥ तथापि कथं शब्दः सम्बध्यते॥ एतदेव स्फुटयति। कर्म्म हीति॥ एवं सति व्याप्यव्यापकभावस्य भेदनिष्ठत्वे सती-

भा॰ पकं न तेनैव तद्गृह्यते च । तद् कथमेवं सत्यज्ञानमुग्धते दृशिविशेषणे स्यातां । न चाज्ञानविवेकदर्शी अज्ञानमात्मन: कर्म्मभूतमुपलभमान उपलब्धृधर्म्मत्वेन गृह्णाति शरीरे कार्श्यरूपादिवत् । तथा सुखदु:खेच्छाप्रयत्नादीन् सर्व्वो लोको गृह्णातीति चेत्तथापि गृहीतुर्लोकस्य विविक्ततैवाभ्युपगता स्यात् । न जानेऽहं त्वदुक्तं मुग्ध एवेति चेद्भव त्वमज्ञो मुग्धो यस्त्वेवं दर्शी तं ज्ञममुग्धं प्रतिजानीमहे वयं । तथा व्यासेनोक्तं । इच्छादिक्षेत्रं चेतं चेत्री प्रकाशयतीति । समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरं । विनश्यत्स्वविनश्यन्तं य: पश्यति स पश्यतीत्यादि शतश उक्तं । तस्मादात्मन: स्वतो बन्धमुक्तज्ञानाज्ञानकृतो विशेषोऽस्ति । सर्व्वदा सर्व्वश: समैकरसस्वाभाव्याभ्युपगमात् । ये त्वतोऽन्यथाऽऽत्मवस्तु

---

आ॰ त्वेतत् । किञ्चाज्ञानमुपलब्धृधर्म्मो न भवत्युपलभ्यमानत्वाद्देहगतकार्श्यादिवदित्याह । न चेति ॥ अज्ञानवत्कार्श्यमपि नात्मधर्म्मः स्यादित्यतिदिशति । तथेति ॥ अज्ञानेत्यस्येच्छादेरात्मधर्म्मत्वनिराकरणे प्रतीतिविरोधः स्यादिति शङ्कते । सुखेति ॥ तेषां ग्राह्यत्वमङ्गीकृत्य परिहरति । तथापीति ॥ आत्मनिष्ठत्वे सुखादीनां चैतन्यवदात्मग्राह्यत्वायोगात्तद्ग्राह्याणां तेषां न तद्धर्म्मतेति भावः ॥ प्रकारान्तरेण निराकर्त्तुं निराकृतमेव चोद्यमनुभवति । न जान इति ॥ किं प्रमातुरज्ञानाद्याश्रयत्वमनुभवादभिदधासि तत्साक्षिणो वा । तत्राद्यं प्रत्याह । भवत्वमिति ॥ कल्पान्तरं निराकरोति । यस्त्विति ॥ न हि योऽयं साक्षी स तत्राज्ञो मूढो वेति । तथा च सर्व्वसाक्षी नाज्ञानादिमान्भवतीत्यर्थः ॥ आत्मनो मोहादिराहित्ये भगवद्वाक्यं प्रमाणयति । तथेति ॥ तस्य सर्व्वविशेषशून्यत्वे वाक्यान्तरमुदाहरति । सममिति ॥ आदिपदेन समं पश्यन्हि सर्व्वत्र । ज्योतिषामपि तज्ज्योतिरित्यादि

भा० परिकल्प्य बन्धमोक्षादिशास्त्रं स्वार्थवादमापादयन्ति त उत्सहन्ते खेऽपि शाकुनं पदं द्रष्टुं। खं वा मुष्टिनाऽऽकष्टुं चर्म्मवद्वेष्टयितुं। वयन्तु तत्कर्त्तुमशक्ताः। सर्व्वदा समैकरसमद्वैतमविक्रियमजमजरममरममृतमभयमात्मतत्त्वं ब्रह्मैव स्म इत्येष सर्व्ववेदान्तनिश्चितोऽर्थः ॥ ६ ॥

इत्येवं प्रतिपद्यामहे। तस्माद्ब्रह्माप्येतीत्युपचारमात्रमेतद्विपरीतग्रहवद्देहसन्ततेर्विच्छेदमात्रं विद्याफलमपेक्ष्य स्वप्नबुद्धान्तगमनदृष्टान्तस्य दार्ष्टान्तिकः संसारो वर्णितः। संसारहेतुश्चाविद्याकर्म्मपूर्व्वप्रज्ञा वर्णिता। यैश्चोपाधिभूतैः कार्य्यकरणलक्षणैर्भूतैः परिवेष्टितः संसारित्वमनुभवति तानि चोक्तानि। तेषां साक्षात्प्रयोजकौ धर्म्माधर्म्माविति

---

आ० प्रकृते। आत्मनो निर्विशेषत्वे प्रमाणिते वृत्तमुपसंहरति। तस्मादिति। प्रश्नान्तरमनुभाषते। ये त्विति। अतो निर्विशेषत्वाभावादिति यावत्। अज्ञानाद्बन्धो ज्ञानान्मुक्तिरिति शास्त्रमर्थवादः। आदिशब्देन स्वरोदनाद्यर्थवादं दृष्टान्तं सूचयति। सोपहासं दूषयति। उत्सहन्त इति। न हि विशेषवत्त्वं प्रत्यगात्मनः प्रतिपत्तुं निर्विशेषत्वप्रमाणवाक्यसमविरोधादिति भावः। कथं तर्हि भवद्भिरात्मतत्त्वमभ्युपगम्यते तत्राह। वयन्त्विति।

प्रमाणविरुद्धार्थदर्शनं खशब्देन परामृश्यते। सत्त्वादीनामिव साम्यं सूचयति। सर्व्वदेति। भेदाभेदमपवदति। एकरसमिति। तत्र हेतुमाह। अद्वैतमिति। अद्वैताभावोपलक्षितत्वादित्यर्थः। ऐकरस्यैव कौटस्थ्यं हेत्वन्तरमाह। अविक्रियमिति। तदुपपादयति। अजमित्यादिना। अमरं मरणायोग्यं। तत्र सर्व्वथाविद्यासम्बन्धराहित्ये हेतुमाह। अभयमिति। ननु ब्रह्मैवंविधं न त्वात्मतत्त्वमित्याशङ्क्याह। ब्रह्मैवेति। यथोक्तं प्रत्यग्भूतं ब्रह्मेत्यत्र प्रमाणमाह। इत्येष इति। तत्रैव विद्वदनुभवं प्रमाणयति।

उ० तदेष श्लोको भवति यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ॥

---

भा० पूर्व्वपक्षं कृत्वा काम एवेत्यवधारितं । यथा च ब्राह्मणेनायमर्थोऽवधारित एवं मन्त्रेणापीति बन्धकारणं चोक्तोपसंहृतं प्रकरणमिति नु कामयमान इति । अथाकामयमान इत्यारभ्य सुषुप्तदृष्टान्तस्य दार्ष्टान्तिकभूतः सर्व्वात्मभावो मोक्ष उक्तः । मोक्षकारणञ्चात्मकामतया यदाप्तकामत्वमुक्तं । तच्च सामर्थ्यादात्मज्ञानमन्तरेणात्मकामतयाप्तकामत्वमिति सामर्थ्याद्ब्रह्मविद्यैव मोक्षकारणमित्युक्तं । अतो यद्यपि कामो मूलमित्युक्तं तथापि मोक्षकारणविपर्य्ययेण बन्धकारणमविद्येत्येतदप्युक्तमेव भवति । अत्रापि मोक्षो मोक्षसाधनं च ब्राह्मणेनोक्तं । तस्यैव दृढ़ीकरणाय मन्त्र उदाह्रियते श्लोकशब्दवाच्यः । तत्तस्मिन्नेवार्थ एष

---

आ० इत्येवमिति । परपक्षनिरासेन प्रकृतं वाक्यार्थमुपसंहरति ॥ तस्मादिति ॥ उपचारे निमित्तमाह । विपरीतेति ॥ आत्मा तत्त्वतः संसारीति विपरीतप्रत्ययवती या देहसन्ततिस्तस्या विच्छेदमात्रं मानसमपेक्ष्योपचारमात्रमित्यर्थः ॥ ६ ॥

ब्राह्मणोक्तेऽर्थे मन्त्रमवतारयितुं ब्राह्मणार्थमनुवदति । पूर्वे-त्यादिना ॥ अयमर्थः संसारतद्धेतुश्च मन्त्रतदेव सक्तः सह कर्म्मणेत्यादिः ॥ आत्मज्ञानस्य तर्हि मोक्षकारणत्वमुपेक्षितमित्याशङ्क्याह । यथेति ॥ अतो ब्रह्मज्ञानं मोक्षकारणमित्युक्तत्वादिति यावत् । मूलं बन्धस्येति शेषः । अत्रेति मोक्षप्रकरणोक्तिः । बन्ध-प्रकरणं दृष्टान्तयितुमपिशब्दः ॥ उक्तेऽर्थे तदेष इत्यक्षराणि

भा॰ श्लोको मन्त्रो भवति । यदा यस्मिन्काले सर्व्वे समस्ताः कामास्तृष्णाप्रभेदाः प्रमुच्यन्ते । आत्मकामस्य ब्रह्मविदः समूलतो विशीर्य्यन्ते । ये प्रसिद्धा लोक इहामुत्रार्थाः पुत्रवित्तलोकैषणा लक्षणा अस्य प्रसिद्धस्य पुरुषस्य हृदि बुद्धौ श्रिता आश्रिताः । अथ तदा स मर्त्त्यो मरणधर्म्मा सन् कामवियोगात्समूलतोऽमृतो भवति । अर्थादनात्मविषयाः कामा अविद्यालक्षणा मृत्यव इत्येतदुक्तं भवति । अतो मृत्युवियोगे विद्वाञ्जीवन्नेवामृतो भवति । अत्रास्मिन्नेव शरीरे वर्त्तमानो ब्रह्म समश्नुते ब्रह्मभावं मोक्षं प्रतिपद्यत इत्यर्थः । अतो मोक्षो न देशान्तरगमनाद्यपेक्षते । तस्माद्विदुषो नोत्क्रामन्ति प्राणा यथावस्थिता एव स्वकारणे पुरुषे समवनीयन्ते । नाममात्रं ह्यवशिष्यत इत्युक्तं ॥

---

आ॰ व्याचष्टे । तस्मिन्नेवेति । यस्मिन्काले विद्यापरिपाकावस्थायामित्यर्थः । सुषुप्तिव्यावृत्त्यर्थं सर्व्वविशेषणमिति मत्वाह । समस्ता इति । कामशब्दस्यार्थान्तरविषयत्वं व्यावर्त्तयति । तृष्णेति । क्रियापदे सोपसर्गं व्याकरोति । आत्मकामस्येति । तानेव विशिनष्टि । ये प्रसिद्धा इति । कामानामात्माश्रयत्वं निराकरोति । हृदीति । समूलतः कामवियोगादिति सम्बन्धः । कामवियोगादमृतो भवतीति निर्द्देशसामर्थ्यसिद्धमर्थमाह । अर्थादिति । तेषां मृत्युत्वे किं स्यात्तदाह । अत इति । अत्रेत्यादिना विवक्षितमर्थमाह । अतो मोक्षेति । आदिपदमुत्क्रान्त्यादिसङ्ग्रहार्थं । मुक्तेरुत्क्रान्त्याद्यपेक्षाभावे फलितमाह । तस्मादिति । तर्हि मरणासिद्धिरित्याह । यथेति । उत्क्रान्तिगत्यागतिराहित्यं यथावस्थितत्वं । एतच्च पञ्चमे प्रतिपादितमित्याह । नाममात्रमिति ॥

उ॰ यद्यथा हि निर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदꣳ शरीरꣳ शेते । अथायमशरीरो

---

भा॰ कथं पुनः समवनीतेषु प्राणेषु देहे च स्वकारणे प्रलीने विद्वान्मुक्तोऽत्रैव सर्व्वात्मा सन् वर्त्तमानः पुनः पूर्व्ववद्देहित्वं संसारित्वलक्षणं न प्रतिपद्यत इत्यत्रोच्यते । तत्रायं दृष्टान्तो यथा लोके ऽहिरहिः सर्पस्तस्य निर्ल्वयनी निर्मोकः सा हि निर्ल्वयनी वल्मीके सर्पाश्रये वल्मीकादावित्यर्थः । प्रत्यस्ता प्रतिक्षिप्ताऽनात्मभावेन सर्पेण परित्यक्ता शयीत वर्त्तेत । एवमेव यथायं दृष्टान्त इदं शरीरं सर्पस्थानीयेन मुक्तेनानात्मभावेन परित्यक्तं मृतमेव शेते । अथेतरः सर्पस्थानीयो मुक्तः सर्व्वात्मभूतः सर्पवत्तत्रैव वर्त्तमानो ऽप्यशरीर एव न पूर्व्ववत्पुनः सशरीरो भवति । कामकर्म्मप्रयुक्तशरीरात्मभावेन हि पूर्व्वं सशरीरो मर्त्यश्च ।

---

आ॰ तद्यथेत्यादि वाक्यनिरस्यां शङ्कामाह । कथं पुनरिति ॥ विदुषो विद्ययात्मभावत्वेन प्राणादिषु बाधितेष्वपि देहे चेदसौ वर्त्तते ततोऽस्य पूर्व्ववद्देहित्वादिविद्यावैयर्थ्यमित्यर्थः ॥ दृष्टान्तेन परिहरति । तत्रेत्यादिना ॥ देहे वर्त्तमानस्यापि विदुषस्तदभिमानराहित्यं तत्रेत्युच्यते । यस्यां त्वचि सर्पो नितरां लीयते सा हि निर्ल्वयनी सर्पत्वगुच्यते ॥ सर्पनिर्म्मोकदृष्टान्तस्य दार्ष्टान्तिकमाह । एवमेवेति ॥ सर्पदृष्टान्तस्य दार्ष्टान्तिकं दर्शयति । अथेति ॥ अज्ञानेन सह देहस्य नष्टत्वमशरीरत्वादौ हेतुरथशब्दार्थः । अथशब्दावद्योतितहेतुवशान्मेनाशरीरत्वं विशदयति । कामेति ॥ पूर्व्वमित्यविद्यावस्थोक्तिरिदानीमिति विद्यावस्थोच्यते ॥ श्रुत्यनुसारेण कण्ठस्थं मुख्यं प्राणं व्यावर्त्तयति । प्राणस्तेति ॥

उ० ऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ।७।

---

भा० तद्वियोगाद् अथेदानीमशरीरोऽत एव चामृतः प्राणः। प्राणितीति प्राणः। प्राणस्य प्राणमिति हि वक्ष्यमाणे श्लोके प्राणबन्धनं हि सोम्य मन इति च श्रुत्यन्तरे प्रकरणवाक्यसामर्थ्याच्च पर एवात्मा। अत्र प्राणशब्दो ब्रह्मैव परमात्मैव। किन्तु पुनस्तत्तेज एव विज्ञानं ज्योतिर्येनात्मज्योतिषा जगदवभास्यमानं प्रज्ञानेत्रं विज्ञानज्योतिषमदविभ्रंश-द्वर्त्तते। यः कामः प्रश्नो विमोक्षार्थो याज्ञवल्क्येन वरो दत्तो जनकाय सहेतुको बन्धमोक्षार्थलक्षणो दृष्टान्तदार्ष्टान्तिकभूतः स एषोऽन्तिकभूतः स एव निर्णीतः सविस्तरो जनकयाज्ञवल्क्याख्यायिकारूपधारिण्या श्रुत्या संसारविमोक्षोपाय उक्तः प्राणिभ्यः। इदानीं श्रुतिः स्वयमेवाह। विद्यानिःक्रयार्थं जनकेनैव मुक्तमिति कथं सोऽह-

---

आ० श्लोके पर एवात्मा यथा प्राणशब्दस्तथाचामीत्यर्थः॥ यथा च श्रुत्यन्तरे प्राणशब्दः पर एवात्मा तथाचामीत्याह। प्राणेति॥ किञ्च परविषयमिदं प्रकरणमथाकामयमान इति मोक्षस्य प्रक्रान्तत्वादथायमित्यादि वाक्यस्य तद्विषयमन्यथा ब्रह्मादिशब्दानुपपत्तेः। तस्मादुभयसामर्थ्यादत्र पर एवात्मा प्राणशब्दित इत्याह। प्रकरणेति॥ विशेष्यं दर्शयित्वा विशेषणं दर्शयति। ब्रह्मैवेति॥ ब्रह्मशब्दस्य कमलासनादिविषयत्वं वारयति। किं पुनरिति॥ तेजःशब्दस्य कार्यज्योतिर्विषयत्वमाशङ्क्याह। विज्ञानेति॥ तत्र प्रमाणमाह। येनेति॥ प्रज्ञा प्रज्ञप्ता ज्ञप्तिः सल्लक्षणैतन्यं नेत्रमिव

भा॰मेवं विमोक्षितस्त्वया भगवते तुभ्यं विद्यानिष्क्रयार्थं सहस्रं ददामीति। स एवं विद्वोवाचोक्तवान् जनको ह वैदेहः ॥ ७ ॥

अत्र कस्मादिमोक्षपदार्थे निर्णीते विदेहराज्यमात्मानमेव च न निवेदयति। एकदेशोक्ताविव सहस्रमेव ददाति। तत्र कोऽभिप्राय इति। अत्र केचिद्वर्णयन्ति। अध्यात्मविद्यारसिको जनकः श्रुतमप्यर्थं पुनर्मन्त्रैः शुश्रूषति। अतो न सर्वमेव निवेदयति श्रुत्वाभिप्रेतं याज्ञवल्क्यात्पुनरन्ते निवेदयिष्यामीति हि मन्यते। यदि चात्रैव सर्वं निवेदयामि निवृत्ताभिलाषोऽयं श्रवणादिति मत्वा श्लोकान्न वक्ष्यतीति च भयात्सहस्रदानं शुश्रूषालिङ्गज्ञापनायेति। सर्वमप्येतद्-

आ॰ मेवं प्रकाशकमस्येति तयोक्तं॥ सोऽहमित्यादेस्तात्पर्यं वक्तुं वृत्तं कीर्त्तयति। यः कामप्रश्न इति॥ निर्णयप्रकारं सङ्क्षिपति। संसारेति॥ सोऽहमित्यादिवाक्यान्तरमुत्थापयति। इदानीमिति॥ आकाङ्क्षापूर्व्वकं वाक्यमादाय विभजते। कथमिति॥ ७॥

सहस्रदानमाक्षिपति। अत्रेति॥ सर्व्वस्वदानप्राप्तावपि सहस्रदानहेतुमेकदेशीयं दर्शयति। अत्र केचिदित्यादिना। कदा तर्हि गुरवे सर्व्वस्वं राजा निवेदयिष्यति तत्राह। श्रुत्वेति॥ ननु पुनः शुश्रूषुरपि राजा किमिति सम्प्रत्येव सर्व्वस्वं गुरवे न प्रयच्छति। प्रभूता हि दक्षिणा गुरुं प्रीणयती स्वीयां शुश्रूषां फलयति तत्राह। यदि चेति॥ अनाप्तोक्तौ हृदयेऽन्यन्निधाय वाच्यन्यन्निष्पादनात्मकं व्याजोत्तरं युक्तं। श्रुतौ त्वपौरुषेय्यामपास्ताशेषदोषशङ्कायां न व्याजोक्तिर्युक्ता॥ तदीयस्वारसिकप्रामाण्यभङ्गप्रसङ्गादिति दूषयति। सर्व्वमपीति॥ एकदेशीयपरिहारासम्भवे हेत्वन्तरमाह। अर्थेति॥ तदुपपत्तिमेवोपपादयति। विमोक्षेति॥ तस्यापि पूर्व्वमसकृदुक्तेस्तदीयशुश्रूषाधीनं सहस्रदानमनुचितमित्याशङ्क्य प्रमादेर्ज्ञानसाधनत्वेन प्रागनुक्तेस्तेन सह

भा॰ स्तुत्युपपत्तेश्च । प्रमाणभूतायाः श्रुतेर्व्याजानुपपत्तेः । अर्थशेषोपपत्तेश्च । विमोक्षपदार्थं उक्तोऽप्यात्मज्ञानसाधनमात्मज्ञानशेषभूतः सर्व्वैषणापरित्यागः सन्न्यासाख्यो वक्तव्योऽर्थशेषो विद्यते । तस्माच्छ्लोकमात्रशुश्रूषाकल्पनागुर्व्वी अगतिका हि गतिः पुनरुक्तार्थकल्पना । सा चायुक्ता । सत्यां गतौ न च तत्स्तुतिमात्रमित्यवोचाम । नन्वेवं सत्यत ऊर्द्ध्वं विमोक्षायैवेति वक्तव्यं । नैष दोषः । आत्मज्ञानवदप्रयोजकः सन्न्यासः पक्षे प्रतिपत्तिकर्म्मवदिति हि मन्यते । सन्न्यासेन तनुं त्यजेदिति हि स्मृतेः । साधनत्वपक्षेऽपि नात ऊर्द्ध्वं विमोक्षायैवेति प्रश्नमर्हति । मोक्षसाधनभूतात्मज्ञानपरिपाकार्थत्वात् ॥

---

आ॰ भूयोऽपि सन्न्यासस्य वक्तव्यत्वेऽमात्तदपेक्षया युक्तं सहस्रदानमित्याह । अगतिका हीति ॥ ननु सन्न्यासादि विद्यास्तुत्यर्थमुच्यते महाभागो जनकोऽयं यत्तदर्थी दुष्करमपि करोत्यतो नार्थशेषसिद्धिरत आह । न चेति ॥ न तावत्सन्न्यासो विद्यास्तुतिर्विविदिषा व्युत्थायेति समानकर्तृत्वनिर्देशादिति पञ्चमे स्थितं । नापि शमादिर्विद्यास्तुतिस्तत्रापि विधेर्व्वक्ष्यमाणत्वादित्यर्थः ॥ अर्थशेषशुश्रूषया सहस्रदानमित्यत्र जनकस्याकौशलं चोदयति । नन्विति ॥ राज्ञः प्रश्नितमकौशलं दूषयति । नैष इति ॥ तत्र हेतुमाह । आत्मज्ञानवदिति ॥ यथात्मज्ञानं मोक्षे प्रयोजकं न तथा सन्न्यासो न चास्मिन्पक्षे तस्यावश्यकत्वं प्रतिपत्तिकर्म्मवदनुष्ठानसम्भवादिति राजा यतो मन्यते ततः सन्न्यासस्य न ज्ञानतुल्यत्वमतो नात ऊर्द्ध्वं विमोक्षायैव ब्रूहीति पृच्छतीत्यर्थः । सन्न्यासस्य प्रतिपत्तिकर्म्मवत्कर्त्तव्यत्वे प्रमाणमाह । सन्न्यासेनेति ॥ ननु विविदिषासन्न्यासमङ्गीकुर्व्वता न तस्य प्रतिपत्तिकर्म्मवदनुष्ठेयत्वमिष्यते तत्राह । साधनत्वेति ॥ तत्रैव हि तज्ज्ञेयं तत्तुः प्रणवपरं पदमित्युक्तत्वादित्यर्थः ॥

उ॰ तदेते श्लोका भवन्त्यणुः पन्था विततः पुराणो

---

भा॰ आत्मकामस्य ब्रह्मविदो मोक्ष इत्येतस्मिन्नर्थे मन्त्रब्राह्मणोक्ते विस्तरप्रतिपादका एते श्लोका भवन्ति। अणुः सूक्ष्मः पन्था दुर्विज्ञेयत्वाद्विततो विस्तीर्णो विस्पष्टतरणहेतुत्वाद्वा वितर इति पाठान्तरान्मोक्षसाधनो ज्ञानमार्गः पुराणश्चिरन्तनो नित्यश्रुतिप्रकाशितत्वान्न तार्किकबुद्धिप्रभवकुदृष्टिमार्गवदर्वाक्कालिको मां स्पृष्टो मां स्पृष्टो मया लब्ध इत्यर्थः। यो हि येन लभ्यते स तं स्पृशतीव सम्बध्यते। तेनायं ब्रह्मविद्यालक्षणो मोक्षमार्गो मया लब्धत्वान्मां स्पृष्ट इत्युच्यते। न केवलं मया लब्धः। किन्त्वनुवित्तो मयैवानुवेदनं नाम विद्यायाः परिपाकापेक्षया फलावसानतानिष्ठा प्राप्तिः। भुजेरिव तृप्त्यवसानता। पूर्वन्तु ज्ञान-

---

आ॰ रागोऽर्थाश्रयणं परिहृत्य मन्त्रानवतारयति। आत्मकामस्येति॥ तदेत्याद्यतीतश्लोकेनागामिश्लोकानामप्यर्थैनरुक्त्यं सूचयति। विस्तरेति॥ ज्ञानमार्गस्य सूक्ष्मत्वे हेतुमाह। दुर्विज्ञेयत्वादिति॥ विस्तीर्णत्वं पूर्णवस्तुविषयत्वादवधेयं॥ माध्यन्दिनश्रुतिमाश्रित्याह। विस्पष्टेति॥ प्रयत्नसाध्यत्वं तस्य पञ्चम्या विवक्ष्यते। कथं पुनरधुनातनो वैदिको ज्ञानमार्गश्चिरन्तनो निरूप्यते तत्राह। नित्येति॥ विशेषणप्रकाशितमर्थमुक्त्वा तस्य व्यवच्छेद्यमाह। न तार्किकेति॥ मन्त्रदृशा लब्धत्वेऽपि कुतो ज्ञानमार्गस्य तत्स्पर्शित्वमित्याशङ्क्याह। यो हीति॥ अनुवेदनलाभयोर्विशेषाभावात्पौनरुक्त्यमाशङ्क्याह। अनुवेदनमिति॥ पूर्वशब्देन पाठक्रमानुसारेण लाभो गृह्यते॥ एवकारमाश्रित्य पृच्छते। किमसाविति॥ तथा च तद्यो यो देवानामित्याद्यविशेषश्रुतिर्विरुध्यत इतिशेषः॥ अवधारणश्रुतेरन्यपरत्वेनान्ययोगव्यवच्छेदकाभावमभिप्रेत्य परि-

उ॰ मांस्पृष्टोऽनुवित्तो मयैव । तेन धीरा अपि यन्ति ब्रह्मविदः स्वर्गं लोकमित उर्द्ध्वं विमुक्ताः ॥ ८ ॥

---

भा॰ प्राप्तिसम्बन्धमात्रमेवेति विशेषः। किमसावेव मन्त्रदृगेको ब्रह्मविद्याफलं प्राप्तो नान्यः प्राप्तवान् येनानुवित्तो मयैवेत्यवधारयति। नैष दोषः। अस्याः फलमात्मसाक्षिकमनुत्तममिति ब्रह्मविद्यायाः स्तुतिपरत्वात्। एवं हि कृतार्थाभिमानकरणमात्मप्रत्ययसाक्षिकमात्मज्ञानं किमतः परमन्यत् स्यादिति ब्रह्मविद्यां स्तौति। न तु पुनरन्यो ब्रह्मवित्तत्फलं न प्राप्नोतीति। तद्यो यो देवानामिति सर्व्वार्थश्रुतेस्तदेवाह। तेन ब्रह्मविद्यामार्गेण धीराः प्रज्ञावन्तोऽन्येऽपि ब्रह्मविद इत्यर्थः। अपियन्त्यपिगच्छन्ति ब्रह्मविद्याफलं मोक्षं स्वर्गं लोकं च। स्वर्गलोकशब्दस्त्रिपिष्टपवाच्यपि सन्निह-

---

आ॰ हरति। नैष दोष इति॥ स्तुतिपरत्वमेव प्रकटयति। एवं हीति॥ कृतार्थोऽस्मीत्यात्मन्यभिमानकारणं स्वानुभवसिद्धमात्मज्ञानं नास्मादन्यदुत्कृष्टं किञ्चिदित्येवं विद्यामवधारणश्रुतिः प्रस्तौतीत्यर्थः॥ यथाश्रुतार्थत्वे को दोषः स्यादिति चेत्तत्राह। न त्विति॥ इत्यवधारणश्रुत्या विवक्षितमिति शेषः॥ तत्र हेतुः। तद्यो य इति॥ सर्व्वार्थश्रुतेर्ब्रह्मविद्या सर्व्वार्था सर्व्वसाधारणीति अवगमादिति यावत्॥ ब्रह्मविद्यायाः सर्वार्थत्वे वाक्यशेषप्रमाणत्वेनावतार्य्य व्याचष्टे तदेवेति॥ ननु मोक्षे स्वर्गशब्दो न युज्यते तस्यार्थान्तरे रूढत्वादत आह। स्वर्गेति॥ यथा ज्योतिष्टोमप्रकरणे श्रुतो ज्योतिःशब्दो ज्योतिष्टोमविषयस्तथा मोक्षप्रकरणे श्रुतः स्वर्गशब्दो मोक्षमधिकरोति। स्वर्गाङ्गीकारे ब्रह्मविद्याया निकर्षप्रस-

उ॰ तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलꣳ हरितं लोहितञ्च एष पन्था ब्रह्मणा हानुवित्तः

---

भा॰ प्रकरणान्मोक्षाभिधायकः । इतोऽस्माच्छरीरपातादूर्द्ध्वा जर्द्ध्वं । जीवन्त एव विमुक्ताः सन्तः ॥ ८ ॥

तस्मिन्मोक्षसाधनमार्गे विप्रतिपत्तिर्मुमुक्षूणां । कथं । तस्मिन् शुक्लं शुद्धं विमलमाहुः । केचिन्मुमुक्षवो नीलमन्ये पिङ्गलमन्येऽपि हरितं लोहितञ्च यथा दर्शनं । नाड्यस्त्वेताः सुषुम्नाद्याः श्लेष्मादिरससम्पूर्णाः शुक्लस्य नीलस्य पिङ्गलस्येत्याद्युक्तत्वादित्थं वा मोक्षमार्गमेवंविधं मन्यन्ते । एष शुक्ल एष नील इत्यादिश्रुत्यन्तरात् । दर्शनमार्गस्य च शुक्लादिवर्णासम्भवात्सर्व्वथापि तु प्रकृताद्ब्रह्मविद्यामार्गादन्य एते शुक्लादयो न तु शुक्लः शुद्धोऽद्वैतमार्गो न नीलपी-

---

आ॰ तादिति भावः । जीवन्त एव मुक्ताः सन्तः शरीरपातादूर्द्ध्वं मोक्षमपि यन्तीति सम्बन्धः ॥ ८ ॥

तस्मिन्नित्यादि पूर्व्वपक्षमुत्थापयति । तस्मिन्निति ॥ विप्रतिपत्तिरेव प्रश्नपूर्व्वकं विशदयति । कथमित्यादिना ॥ पिङ्गलं वह्निज्वालातुल्यं । लोहितं जपाकुसुमसन्निभं । सप्रपञ्चं शब्दस्पर्शरूपरसादिमद्ब्रह्म तदुपासनमनुसृत्य तत्प्राप्तिमार्गे विवादो मुमुक्षूणामित्याह । यथा दर्शनमिति ॥ तथापि कथं ब्रह्मप्राप्तिमार्गे शुक्लादिरूपविशिष्टिः । न हि ज्ञानस्य रूपादिमत्त्वमित्याशङ्क्याह । नाड्यस्त्विति ॥ तासामपि कथं यथोक्तरूपवत्त्वमित्याशङ्क्याह । श्लेष्मादीति ॥ तथापि कथं शुक्लादिरूपवत्त्वमित्याशङ्क्य नाडीखण्डोक्तं स्मारयति । शुक्लस्येति ॥ नाडीपरिग्रहे नियामकाभावमाशङ्क्य पक्षान्तरमाह । आदित्यस्येति ॥ एवंविधं शुक्लादिनानावर्णमित्यर्थः ॥ तस्य तथा प्रमाण-

भा० तादिशब्दैर्वर्णवाचकैः सर्वागुरुवचनात्। याभ्युक्तादीन् योगिनो मोचपथ आहुर्न ते मोक्षमार्गाः संसारविषया एव हि ते। चक्षुष्टो वा मूर्द्ध्नो वान्येभ्यो वा शरीरदेशेभ्यो वेति शरीरदेशाभिःसरणसम्बन्धाद्ब्रह्मादिलोकप्रापका हि ते। तस्मादयमेव मोक्षमार्गो य आत्मकामत्वेनाप्त-कामतया सर्व्वकामक्षये गमनानुपपत्तौ प्रदीपनिर्वाणव-च्चक्षुरादीनां कार्य्यकरणानामत्रैव समवनय इत्येष ज्ञान-मार्गः पन्था ब्रह्मणा परात्मस्वरूपेणैव ब्राह्मणेन त्यक्तसर्व्वै-षणेनानुवित्तः॥

---

आ० माह। एष इति॥ प्रकृते ज्ञानमार्गे किमिति मार्गान्तरं कथ्यते तत्राह॥ दर्शनेति॥ तर्हि नाड़ीपक्षो वाऽऽदित्यपक्षो वा कतरो विवक्षितस्तत्राह। सर्व्वथापीति॥ शुक्लमार्गस्य ज्ञानमार्गादन्य-त्वमाक्षिपति। नन्विति॥ शुक्लशब्दस्य नाडीतविषयत्वं नीलादि-शब्दसमभिव्याहारविरोधादिति परिहरति। न नीलेति॥ सैद्धान्तिकमन्त्रभागं व्याख्यातुं पूर्व्वपक्षं दूषयति। याभ्युक्तादी-नीति॥ न केवलं देहदेशनिःसरणसम्बन्धादेव नाडीभेदानां संसारविषयत्वं। किन्तु ब्रह्मलोकादिसम्बन्धादपीत्याह। ब्रह्मा-दीति॥ आदित्योऽपि देवयानमध्यपाती ब्रह्मलोकप्रापकः संसारहेतुरेवेति मत्वागो मोक्षमार्गमुपसंहरति। तस्मादिति॥ आत्मकामतया ज्ञानमार्ग इति सम्बन्धः॥ एवं भूमिकां कृत्वैव इत्य-स्यार्थमाह। सर्व्वकामेति॥ यथा तैलादिविषये प्रदीपस्य व्यव-नानुपपत्तौ तेजोमात्रे निर्वाणमिष्यते। तथा सूक्ष्मस्य स्थूलस्य च सर्व्वस्यैव कामस्य ज्ञानात्क्षये सति गमनानुपपत्तावत्रैव प्रत्य-गात्मनि कार्य्यकरणानामेकीभावेनावसानमित्ययमेव शब्दार्थ इत्यर्थः॥ पन्था इत्येतद्व्याचष्टे। ज्ञानमार्ग इति॥ इत्थंभावे तृती-यामाश्रित्याह। परमात्मेति॥ अनुवेदनकर्तृब्राह्मणस्य वक्तव्या-सित्वं दर्शयति। त्यक्तेति॥

उ॰ तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ॥ ९ ॥

---

भा॰ तेन ब्रह्मविद्यामार्गेण ब्रह्मविदन्योऽप्येति । कीदृशो ब्रह्मवित्तेनैतीत्युच्यते। पूर्व्वं पुण्यकृत्वा पुनस्त्यक्तपुत्राद्येषणः परमात्मतेजस्यात्मानं संयोज्य तस्मिन्नभिनिर्वृत्तस्तैजसस्त्वा- त्मभूत इहैवेत्यर्थः । ईदृशो ब्रह्मवित्तेन मार्गेणैति। न पुनः पुण्यादिसमुच्चयकारिणो ग्रहणं विरोधादित्यवोचाम । अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः । शान्ताः सन्न्यासिनो यान्ति तस्मै मोक्षात्मने नम इति स्मृतेश्च । त्यज धर्म्मम- धर्म्मञ्चेत्यादि पुण्यापुण्यत्यागोपदेशात् । निराशिषमनारम्भं निर्नमस्कारमस्तुतिं । अक्षीणं क्षीणकर्म्माणं तं देवा ब्राह्मणं विदुः ॥ नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता

---

आ॰ विप्रतिपत्तिं निराकृत्य मोक्षमार्गं निर्द्धार्य्य ते न धीरा अपि- यन्तीत्यत्रोक्तं निगमयति । तेनेति ॥ अन्योऽपि मन्त्रदृशः सका- शादिति शेषः । इहेति जीवदवस्थोक्तिः । समुच्चयकारिणोऽत्र ब्रह्मप्राप्तिर्विवक्षितेति केचित्तान्प्रत्याह । न पुनरिति ॥ विरो- धाज्ज्ञानकर्म्मणोरिति शेषः । किञ्च क्रमसमुच्चयः समसमुच्चयो वेति विकल्पाद्यमङ्गीकृत्य द्वितीयं दूषयति । अपुण्येति ॥ ज्ञानस्य कर्म्मा- समुच्चयेऽपि विवेकज्ञानेन समुच्चयोऽस्तीत्याशङ्क्याह । त्यजेति ॥ ब्रह्मविदोऽपि स्तुत्यादिदृष्टेस्तेन समुच्चयो ज्ञानस्येत्याशङ्क्याह । निराशिषमिति ॥ काम्याननुष्ठानमनारम्भः । अक्षीणत्वं निषिद्धा- नाचरणं । क्षीणकर्म्मत्वं नित्यादिकर्म्मराहित्यं । असमुच्चये वाक्या- न्तरमाह । नेत्यादिना ॥ एकता निरपेक्षता सर्व्वोदासीनतेति यावत् । समता मित्रोदासीनशत्रुबुद्धिव्यतिरेकेण सर्व्वत्र स्वस्मिन्निव दृष्टिः । दण्डनिधानं अहिंसापरत्वं । अर्थस्य मूलं निकृतिः क्षमा च कामस्य वित्तञ्च वपुर्वयश्च । धर्म्मस्य यागादि दयादमश्च मोक्षस्य सर्व्वोपरमः क्रियाभ्य इत्यादिचतुर्विधे पुरुषार्थे साधनभेदोपदेशि-

उ॰ अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । ततो

भा॰ सत्यता च । मौनं क्षितिं दण्डनिधानमार्जवं ततस्ततो-
परमः क्रियाभ्य इत्यादिस्मृतिभ्यश्च । उपदेक्ष्यन्ति तेऽपि
त्वेष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्द्धते नो कनी-
यानिति । कर्मप्रयोजनाभावे हेतुमुक्त्वा तस्माद्ब्राह्मणः
शान्तो दान्त इत्यादिना सर्व्वक्रियोपरमं दर्शयति । तस्मा-
द्यथा व्याख्यातमेव पुष्पकृत्त्वं । अथवा यो ब्रह्मवित्तेजेनेन्नि
स पुष्पकृत्तेजसस्तेति ब्रह्मवित् । स्तुतिरेषा पुष्पकृति तेजसे
च । योगिनि महाभाग्यं प्रसिद्धं लोके ताभ्यां । अतो ब्रह्म-
वित्स्तूयते प्रख्यातमहाभाग्यत्वाल्लोके ॥ ९ ॥

अन्धमदर्शनात्मकं तमः संसारनियामकं प्रविशन्ति
प्रतिपद्यन्ते । के । येऽविद्यां विद्यातोऽन्यां साध्यसाधनलक्ष-
णामुपासते कर्म्मानुवर्त्तन्त इत्यर्थः । ततस्तस्मादपि भूय इव

आ॰ वाक्यमादिशब्दार्थः । इत्यादिस्मृतिभ्यश्च न पुष्पादिसमुच्चय-
कारिणो ग्रहणमिति सम्बन्धः ॥ तथापि प्रकृते मन्त्रे समुच्चयो
भातीत्याशङ्क्याह । उपदेक्ष्यन्तीति ॥ वाक्यशेषादिपर्य्यालोचना-
सिद्धमर्थमुपसंहरति । तस्मादिति ॥ पूर्व्वमन्युपगम्योक्त्वा पुनस्त-
त्प्रत्युपायोऽयमिति ब्रह्मवित्तेजेनेतीति भ्रमो न युज्यतेऽनुतत्वादित्याश-
ङ्क्याह । अथ वेति ॥ स्तुतिमेवोपपादयति । पुष्पकृतीति ॥ तेजांसि
करणान्युपसंहृत्य स्थितस्तेजसो दहरायुपासीनो योगी तस्मिन्न-
णिमाद्यैश्वर्य्यान्महानुभावत्वप्रसिद्धिः ॥ ताभ्यां पुष्पकृत्तेजसाभ्या-
मित्यर्थः ॥ अतःशब्दपरामृष्टं सूचयति । प्रख्यातेति ॥ पुष्पकृत्ते-
जसयोरिति शेषः ॥ ९ ॥

प्रस्तुतज्ञानमार्गस्तुत्यर्थं मार्गान्तरं निन्दति । अन्धमित्यादिना ॥
अविद्यायामिति प्रतीकमादाय व्याकरोति । अविद्येति ॥ कथं

उ॰ भूयइव ते तमो य उ विद्यायाᳫं रताः ॥ १० ॥
अनन्दानाम ते लोका अन्धेन तमसाऽऽवृताः ।
ताᳫंस्ते प्रेत्याभिगच्छन्त्यविद्वाᳫंसोऽबुधो जनाः
॥ ११ ॥

---

भा॰ बहुतरमिव तमः प्रविशन्ति । के । ये तु विद्यायामविद्यावस्तुप्रतिपादिकायां कर्मार्थायां त्रय्यामेव विद्यायां रता अभिरताः । विधिप्रतिषेधपर एव वेदो नान्योऽस्तीत्युपनिषदर्थानपेक्षिण इत्यर्थः ॥ १० ॥

यदि तेऽदर्शनलक्षणं तमः प्रविशन्ति को दोष इत्युच्यते । अनन्दा अनानन्दा असुखानाम ते लोकास्तेनान्धेनादर्शनलक्षणेन तमसा वृताः व्याप्तास्ते तस्याज्ञानतमसो गोचरास्तांस्ते प्रेत्य मृत्वा अभिगच्छन्त्यभिप्रयान्ति । के । येऽविद्वांसः । किं सामान्येनाविद्वत्तामात्रेण नेत्युच्यते । अबुधो बुधेरवगमनार्थस्य धातोः क्विप्प्रत्ययान्तस्य रूपं । आत्मावगमवर्जिता इत्यर्थः । जनाः प्रकृता एव जननधर्मिणो वेत्येतत् ॥ ११ ॥

---

आ॰ पुनस्त्रैय्यामभिरतानामधःपतनमित्याशङ्क्याह । विधीति ॥ १० ॥
मन्त्रान्तरमाकाङ्क्षाद्वारेणोत्थाप्य व्याचष्टे । यदीत्यादिना ॥
अबुध इत्यस्य निष्पत्तिं सूचयन्विवक्षितमर्थमाह । बुधेरिति
॥ ११ ॥

उ॰ आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनु सञ्ज्वरेत्
॥ १२ ॥

---

भा॰ आत्मानं स्वं परं सर्व्वप्राणिमनीषितज्ञं हृत्स्थमशना-याद्दिधर्म्मातीतं चेद्यदि विजानीयात्सहस्रेषु कश्चिचेत्। इत्यात्मविद्याया दुर्लभत्वं दर्शयति। कथमयं पर आत्मा सर्व्वप्राणिप्रत्ययसाक्षी यो नेति नेत्याद्युक्तः। यस्मान्नान्यो ऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता समः सर्व्वभूतस्थो नित्यः शुद्धो बुद्धो मुक्तस्वभावोऽस्मि भवामीति पूरुषः पुरुषः। स किमिच्छन् तत्स्वरूपव्यतिरिक्तमन्यद्वस्तु फलभूतं किमिच्छन्कस्य वान्यस्यात्मनो व्यतिरिक्तस्य कामाय प्रयोजनाय। न हि तस्यात्मन एष्टव्यं फलं। न चाप्यात्मनोऽन्योऽस्ति यस्य कामायेच्छति सर्व्वस्यात्मभूतत्वात्। अतः किमिच्छन्कस्य वा कामाय शरीरमनुसञ्ज्वरेच्छरीरोपाधिकृतदुःखमनु दुःखी स्यात्। शरीरतापमनुतप्येत। तद-

---

आ॰ उक्तात्मज्ञानस्तुत्यर्थमेतन्निष्ठस्य कायक्लेशराहित्यं दर्शयति। आत्मानमित्यादिना॥ विज्ञानात्मनो वैलक्षण्यार्थं विशिनष्टि। सर्व्वेति॥ ताटस्थ्यं व्यावर्त्तयति। हृत्स्थमिति॥ बुद्धिसम्बन्धप्राप्तं संसारित्वं वारयति। अशनायादीति॥ प्रश्नपूर्व्वकं ज्ञानप्रकारं प्रकटयति। कथमित्यादिना॥ सर्व्वभूतसम्बन्धप्रयुक्तं दोषं वारयितुं विशिनष्टि। नित्येति॥ इति विजानीयादिति सम्बन्धः। प्रयोजनाय शरीरमनुसंज्वरेदिति सम्बन्धः। किमिच्छन्नित्याक्षेपं समर्थयते। नहीति॥ कस्य वा कामयेत्याक्षेपमुपपादयति। न

उ॰ यस्यानुवित्तः प्रतिबुद्ध आत्मा ऽस्मिन्त्सन्देह्ये

भा॰ नात्मदर्शिनो हि तद्व्यतिरिक्तवस्त्वन्तरेष्वोर्ममेदं स्यात्। पुत्रस्येदं भार्याया इदमित्येव मीहमानः पुनः पुनर्जननमरणप्रबन्धारूढः शरीररोगमनुरुध्यते ॥ १२ ॥

सर्व्वात्मदर्शिनस्तु तदसम्भव इत्येतदाह। किञ्च यस्य ब्राह्मणस्यानुवित्तोऽनुलब्धः प्रतिबुद्धः साक्षात्कृतः। कथमहमस्मि परं ब्रह्मेत्येवं प्रत्यगात्मत्वेनावगत आत्मा ऽस्मिन्सन्देह्ये सन्देहे अनेकानर्थसङ्कटोपचये गहने विषमे ऽनेकशतसहस्रविवेकविज्ञानप्रतिपक्षे विषमे प्रविष्टः। स यस्य ब्राह्मणस्यानुवित्तप्रतिबोधेनेत्यर्थः। स विश्वकृद्विश्वकर्त्ता। कथं विश्वकृत्त्वं तस्य किं विश्वकृदिति नामेत्याशङ्क्याह। स हि यस्मात्सर्व्वस्य कर्त्ता न नाममात्रं न केवलं विश्वकृत्परप्रयुक्तः। किन्तर्हि तस्य लोकः सर्व्वः किमन्यो लोकोऽन्यो ऽसावित्युच्यते। स तु लोक एव। लोकशब्देनात्मोच्यते तस्य

आ॰ चेति ॥ आक्षेपद्वयं निगमयति। अत इति ॥ तदेव स्पष्टयति शरीरेति। विदुषस्तापाभावं व्यतिरेकमुखेन विशदयति। अनात्मेति ॥ वस्त्वन्तरेष्वोत्तापसम्भव इति शेषः ॥ १२ ॥

स चेत्येतदध्याहृत्य ममेदमित्यादि योज्यमित्येतदाह किमिच्छन्नित्याद्याश्रुतिरिति शेषः। न केवलमात्मविचारस्तिकस्य कायक्लेशराहित्यं किन्तु कृतकृत्यता चास्तीत्याह। किञ्चेति ॥ सन्देहः पृथिव्यादिभिर्भूतैरुपचिते शरीरे सन्देहत्वं साधयति। अनेकेति ॥ विषमत्वं विशदयति। अनेकशतेति ॥ न नाममात्रमित्यत्र गुरुत्वान्नत्वस्मादिति पठितव्यं। यस्मादित्युपक्रमादिश्वकृत्त्व-

उ॰ गहने प्रविष्टः । स विश्वकृत्स हि सर्वस्य कर्ता
तस्य लोकः स तु लोक एव ॥ १३ ॥
इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदिर्महती

---

भा॰ सर्व्व आत्मा । स च सर्व्वस्यात्मेत्यर्थः । य एष ब्राह्मणेन प्रत्यगात्मा प्रतिबुद्धतयानुवित्त आत्मानर्थसङ्कटे गहने प्रविष्टः सन् संसारी । किन्तु पर एव । यस्माद्विश्वस्य कर्त्ता सर्व्वस्यात्मा । तस्य च सर्व्व आत्मा एक एवाद्वितीयः पर एवास्मीति मन्तव्य इति श्लोकार्थः ॥ १३ ॥

किञ्चेहैवानेकानर्थसङ्कुले सन्तो भवन्तोऽज्ञानदीर्घनिद्रामोहिताः सन्तः कथञ्चिदिव ब्रह्मतत्त्वमात्मत्वेनाथ विद्मो विजानीमः । तदेतद्ब्रह्म । प्रकृतमहो वयं कृतार्था इत्यभिप्रायः । यदेतद्ब्रह्म विजानीमः । तन्न चेदविदितवन्तो वयं वेदनं वेदः वेदोऽस्यास्तीति वेदी वेद्येव वेदिर्न वेदिर-

---

आ॰ मिति शेषः । परस्यैवाऽविद्याविषयः । विश्वकृत्त्वतश्चत्वे इत्येतत् । लोकलोकिविभागेन भेदं शङ्कित्वा दूषयति । किमित्यादिना । यस्येत्यादिमन्त्रस्य तात्पर्यार्थं संगृह्णाति । य एष इति । कथमेवं चिन्तावतेत्याशङ्क्याह । एक एवेति । यो हि परः सर्व्वप्रकारभेदराहित्यात्पूर्णतया वर्त्तते स एवास्मीत्यात्मानुसन्धातव्य इति योजना ॥ १३ ॥

ब्रह्मविदो विद्यया कृतकृत्यत्वे श्रुतिसम्प्रतिपत्तिरेव केवलं न भवति किन्तु स्वानुभवसम्प्रतिपत्तिरस्तीत्याह । किञ्चेति । अथेत्यस्य कथञ्चिदिवेति व्याख्यानं तदित्यस्य ब्रह्मतत्त्वमित्युक्तमर्थं स्फुटयति । तदेतदिति । ब्रह्मज्ञाने कृतार्थत्वं श्रुत्यनुभवाभ्यामुक्त्वा तदभावे दोषमाह । यदेतदिति । तर्हि महती विनष्टि-

उ० विनष्टिः । य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति ॥ १४ ॥

यदैतमनुपश्यत्यात्मानं देवमञ्जसा । ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥ १५ ॥

---

वेदिः । ततोऽहमवेदिः स्यां । यद्यवेदिः को दोषः स्यान्महती अनन्तपरिमाणा जन्ममरणादिलक्षणा विनष्टिर्विनशनं । अहो वयमस्मान्महतो विनशनान्निर्मुक्ता यदेतद्ब्रह्म विदितवन्त इत्यर्थः । यथा च वयं ब्रह्म विदित्वास्माद्विनाशनाद्विप्रमुक्ता एवं ये तद्विदुरमृतास्ते भवन्ति । येन पुनर्नैवं ब्रह्मविदुस्त इतरे ब्रह्मविद्भ्योऽन्येऽब्रह्मविद इत्यर्थः । दुःखमेव जन्ममरणादिलक्षणमेवापि यन्ति प्रतिपद्यन्ते न कदाचिदप्यविदुषां ततो विनिवृत्तिरित्यर्थः । दुःखमेव हि त आत्मत्वेनोपगच्छन्ति ॥ १४ ॥

यदा पुनरेतमात्मानं कथञ्चित्परमकारुणिकं कञ्चिदाचार्य्यं प्राप्य ततो लब्धप्रसादः सन्ननु पश्चात्पश्यति

---

आ० रिति सम्बन्धः । महत्त्वं न विवक्षितं ज्ञानान्मोक्षोऽत्र विवक्षित इत्यभिप्रेत्य वेदिरित्यस्यार्थमाह । वेदनमित्यादिना ॥ न चेत्-ब्रह्म विदितवन्तो वयं ततोऽहमवेदिः स्यामिति योजना । विद्याभावे दोषमुक्त्वा विद्वदनुभवसिद्धमर्थं निगमयति । अहो वयमिति ॥ इहैवेत्यादिना पूर्वार्द्धेनोक्तमेवार्थमुत्तरार्द्धेन प्रपञ्चयति । यथा चेत्यादिना ॥ दुःखादविदुषां विनिर्म्मोक्षाभावे हेतुमाह । दुःखमेवेति ॥ १४ ॥

किञ्च विदुषो विचिकित्सादिप्रयुक्तं भयं नास्तीति विद्यां स्तोतुमेव मन्त्रान्तरमादाय व्याचष्टे । यदा पुनरित्यादिना ॥

उ॰ यस्मादर्वाक्सम्वत्सरोऽहोभिः परिवर्त्तते ।

भा॰ साक्षात्करोति स्वमात्मानं देवं द्योतनवन्तं दातारं वा सर्व्वप्राणिकर्म्मफलानां। यथा कर्म्मानुरूपमञ्जसा साक्षादीशानं स्वामिनं भूतभव्यस्य कालत्रयस्येत्येतत्। न ततस्तस्मादीशानाद्देवादात्मानं विशेषेण जुगुप्सते गोपायितुमिच्छति। सर्व्वो हि लोक ईश्वराद्गुप्तिमिच्छति भेददर्शी। अयं त्वेकदर्शी न बिभेति कुतश्चन। अतो न तदा विजुगुप्सते। यदीशानं देवमञ्जसात्मत्वेन पश्यति न तदा निन्दते वा कञ्चित्। सर्व्वमात्मानं हि पश्यति। स एवं पश्यन्कमसौ निन्द्यात्॥ १५॥

किञ्च यस्मादीशानादर्वाग्यस्मादन्यविषय एवेत्यर्थः। सम्वत्सरः कालात्मा सर्व्वस्य जनिमतः परिच्छेत्ता। यमपरिच्छिन्दन्नर्वागेव वर्त्ततेऽहोभिः स्वावयवैरहोरात्रैरित्यर्थः। तज्ज्योतिषां ज्योतिरादित्यादिज्योतिषामप्यव-

आ॰ उक्तमर्थं व्यतिरेकमुखेन विशदयति। सर्वो हीति॥ जुगुप्सायाः निन्दात्वेन प्रसिद्धत्वात्तथमवयवार्थमादाय व्याख्यायते रुचिर्योग्मपहरतीति न्यायादित्यभिप्रेत्याह। यदेति। तदेवोपपादयति। सर्व्वमिति॥ १५॥

अथेश्वरस्यापि कालान्यत्वे सति वस्तुत्वाद्घटवत्कालावच्छिन्नत्वान्न कालत्रयं प्रतियुक्तमीश्वरत्वमत आह। किञ्चेति॥ यस्मादीशानादर्वाक् सम्वत्सरो वर्त्तते तमुपासते देवा इति सम्बन्धः। ननु कथं सम्वत्सरोऽर्वागित्युच्यते कालस्य। कालान्तराभावेन पूर्व्वं कालसम्बन्धाभावादत आह। यस्मादिति॥ सम्वत्सरः पूर्वंवत्

उ॰ तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतं ॥ १६ ॥

यस्मिन्पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतं ॥ १७ ॥

---

भा॰ भासकत्वादायुरित्युपासते देवाः । अमृतं ज्योतिः । अतोऽन्यन्म्रियते हि ज्योतिः सर्व्वस्य ह्येतज्ज्योतिरायुर्गुणेन । यस्माद्देवास्तज्ज्योतिरुपासते तस्मादायुष्मन्तस्ते । तस्मादायुःकामेनायुर्गुणेनोपास्यं ब्रह्मेत्यर्थः ॥ १६ ॥

किञ्च यस्मिन्यत्र ब्रह्मणि पञ्च पञ्च जना गन्धर्वादयः पञ्चैवं सङ्ख्याताः । गन्धर्वाः पितरो देवा असुरा रक्षांसि निषादपञ्चमा वा वर्णा आकाशश्चाव्याकृताख्यो यस्मिन् सूत्रमोतश्च प्रोतश्च यस्मिन्प्रतिष्ठितं एतस्मिन्नु खल्वक्षरे गार्ग्याकाश इत्युक्तं । तमेवात्मानममृतं ब्रह्म मन्येऽहं । न चाहमात्मानं ततोऽन्यत्वेन जाने । किन्तर्ह्यमृतोऽहं ब्रह्म विद्वान्सन्नज्ञानमात्रेण तु मर्त्योऽहमासं । तदपगमाद्विद्वानहममृत एव ॥ १७ ॥

---

आ॰ आत्मज्योतिषो गुणमायुष्ट्वलक्षणं स्वरूपमुपासकस्य फलमाह । सर्व्वस्येति ॥ यथोक्तोपासने देवानामेवाधिकारो विशेषवचनादित्यादित्याशङ्क्याह । तस्मादिति ॥ १६ ॥

ज्योतिषां ज्योतिरमृतमित्युक्तं तस्या अमृतत्वं सर्व्वाधिष्ठानत्वेन साधयति । किञ्चेति ॥ एवकारार्थमाह । न चेति ॥ यद्यात्मानं ब्रह्म जानासि तर्हि किन्ते तद्विद्याफलमिति प्रश्नपूर्व्वकमाह । किन्तर्हीति ॥ कथं तर्हि ते मर्त्यत्वप्रतीतिस्तत्राह । अज्ञानमात्रेणेति ॥ १७ ॥

उ॰ प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः। ते निचिक्युर्ब्रह्मपुराण-मग्र्यं ॥ १८ ॥ मनसैवानुद्रष्टव्यं नेह नानास्ति

---

भा॰ किञ्च तेन हि चैतन्यात्मज्योतिषावभास्यमानः प्राण आत्मभूतेन प्राणिति। तेन प्राणस्यापि प्राणः सन्तं प्राणस्य प्राणं। तथा चक्षुषोऽपि चक्षुः। तथा श्रोत्रस्यापि श्रोत्रं। ब्रह्मशक्त्यधिष्ठितानां हि चक्षुरादीनां दर्शनादिसामर्थ्यं। स्वतः काष्ठलोष्टसमानि हि तानि चैतन्यात्मज्योतिःशून्यानि मनसोऽपि मन इति ये विदुश्चक्षुरादिव्यापारद्वारानुमिता-स्तित्वं प्रत्यगात्मानं न विषयभूतं ये विदुस्ते किं निचि-क्युर्निश्चयेन ज्ञातवन्तो ब्रह्म पुराणं चिरन्तनमग्र्यमग्रे भवं। तद्यदात्मविदो विदुरिति ह्याथर्वणे। तद्ब्रह्मदर्शनसाधन-मुच्यते ॥ १८ ॥ मनसैव परमार्थज्ञानसंस्कृतेनाचार्य्योप-देशपूर्व्वकं चानुद्रष्टव्यं। तत्र च दर्शनविषये ब्रह्मणि न इह

---

आ॰ पञ्चैताः पञ्चजनाः पञ्चज्योतिषा सह प्राणादयो वा सूरिभि-भिप्रेताः। किञ्चेति। कथं चक्षुरादिषु चक्षुरादित्वं ब्रह्मणः सिद्धमिति तत्राह। ब्रह्मशक्तीति। चिमतानि चेतनाधिष्ठितानि प्रवर्त्तन्ते करणत्वाद्वास्याऽऽदिवदिति चक्षुरादिव्यापारेणानुमिता-स्तित्वं प्रत्यगात्मानं ये विदुरिति योजना। विदि क्रियाविषयत्वं व्यावर्त्तयति। नेति। १८। प्रत्यगात्मविदां कथं ब्रह्मवित्त्व-मित्याशङ्क्याह। तदिति। मनसो ब्रह्मदर्शनसाधनत्वे कथं ब्रह्मणो वाङ्मनसातीतत्वश्रुतिरित्याशङ्क्याह। परमार्थेति। केवलं मनो ब्रह्माविषयीकुर्व्वदपि श्रवणादिसंस्कृतं तदाकारं

उ॰ किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १९ ॥

एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवं। विजरः पर आकाशादज आत्मा महान्ध्रुवः ॥ २० ॥

---

भा॰ नानास्ति किंचन। न किंचिदप्यस्ति नानात्वे नानात्वमध्यारोपयत्यविद्यया। स मृत्योर्मरणान्मरणमाप्नोति। कोऽसौ। य इह नानेव पश्यति अविद्याध्यारोपणव्यतिरेकेण। नास्ति परमार्थतो द्वितीयमित्यर्थः॥ १९॥

यस्मादेवं तस्मादेकधैवैकेनैव प्रकारेण विज्ञानघनैकरसप्रकारेणाकाशवन्निरन्तरेणानुद्रष्टव्यं। यस्मादेतद्ब्रह्माप्रमयमप्रमेयं सर्वैकत्वादन्येन ह्यन्यत्प्रमीयते। इदं त्वेकमेवातोऽप्रमेयं। ध्रुवं नित्यं कूटस्थमविचालीत्यर्थः॥ ननु विरुद्धमिदमुच्यते। अप्रमेयं ज्ञायत इति च। ज्ञायत इति प्रमाणैर्मीयत इत्यर्थोऽप्रमेयमिति च तत्प्रतिषेधः॥ नैष

---

आ॰ ज्ञायते। तेन द्रष्टव्यं तदुच्यतेऽत एव वृत्तिव्याप्यं ब्रह्मेत्युपगच्छन्तीति भावः। अनुशब्दार्थमाह। आचार्येति॥ द्रष्टृद्रष्टव्यादिभावनाभेदमाशङ्क्याह। तत्र चेति॥ एवकारार्थमाह। न चेति॥ कथमात्मनि वस्तुतो भेदरहितेऽपि भेदो भातीत्याशङ्क्याह। पश्यतीति॥ नेहेत्यादेः संपिण्डितमर्थं कथयति। अविद्येति॥१९॥

द्वैताभावे कथमनुद्रष्टव्यमित्याशङ्क्याह। यस्मादिति॥ तमेवैकं प्रकारं प्रकटयति। विज्ञानेति॥ परिच्छिन्नत्वं व्यवच्छिनत्ति। आकाशवदिति॥ एकरसत्वं हेतूकृत्याप्रमेयत्वं प्रतिजानीते। यस्मादिति॥ एतद्ब्रह्म यस्मादेकरसं तस्मादप्रमेयमिति योजना॥

भा०दोषः। अन्यवस्तुवदागमप्रमाणप्रमेयत्वप्रतिषेधार्थत्वात्। यथान्यानि वस्तून्यागमनिरपेक्षैः प्रमाणैर्विषयीक्रियन्ते न तथैतदात्मतत्त्वं प्रमाणान्तरेण विषयीकर्त्तुं शक्यते। सर्व्वस्यात्मत्वे केन कं पश्येद्विजानीयादिति प्रमातृप्रमाणादिव्यापारप्रतिषेधेनैवागमोऽपि विज्ञापयति। न त्वभिधानाभिधेयलक्षणवाक्यधर्म्माङ्गीकरणेन। तस्मादागमेनापि स्वर्गमेर्वादिवत्प्रतिपाद्यते प्रतिपादयिता। आत्मभूतं हि तत्प्रतिपादयितुः प्रतिपादनस्य प्रतिपाद्यविषयत्वात्। भेदे हि सति तद्भवति। ज्ञानञ्च तस्मिन् परमात्मभावनिवृत्तिरेव। न तस्मिन्साक्षादात्मभावः कर्त्तव्यो विद्यमानत्वादात्मभावस्य। नित्यो ह्यात्मभावः सर्व्वस्यातद्विषय इव प्रत्यवभासते। तस्मादतद्विषयाभासनिवृत्तिव्यतिरेकेण न तस्मिन्ना-

---

आ० हेत्वर्थं स्फुटयति। सर्व्वैकत्वादिति॥ तथापि कथमप्रमेयत्वं तदाह। अन्येनेति॥ मिथो विरोधमाशङ्कते। नन्विति॥ विरोधमेव स्फोरयति। आयत इतीति॥ चोदितं विरोधं निराकरोति। नैष दोष इति॥ सङ्गृहीतं समाधानं विशदयति। यथेत्यादिना॥ तस्य मानान्तरैर्विषयीकर्त्तुमशक्यत्वे हेतुमाह। सर्व्वस्येति॥ इति सर्व्वद्वैतोपशान्तिश्रुतेरिति शेषः। आगमोऽपि तर्हि कथमात्मानमावेदयेदित्याशङ्क्याह। प्रमात्रिति॥ आत्मनः स्वर्गादिवद्विषयत्वेनागमप्रतिपाद्यत्वाभावे हेतुमाह। प्रतिपादयितेति॥ तथापि किमिति विषयत्वेनाप्रतिपाद्यत्वं तत्राह। प्रतिपादयितुरिति॥ तदिति प्रतिपाद्यत्वमुक्तं कथं तर्हि तस्मिन्नागमिकं ज्ञानं तत्राह। ज्ञानञ्चेति॥ परस्मिन्देहादावात्मभावस्यारोपितस्य निवृत्तिरेव वाक्येन क्रियते। तथाचात्मपरिच्छेदे स्वाभाविकमेव स्फुरणं प्रतिबन्धविभ्रमाभावाद्भवतीति भावः। ननु ब्रह्मण्यात्मभावः श्रुत्वा कर्त्तव्यो विधीयते। न तु देहादावात्मत्वा-

भा॰ त्मभावो विधीयते। अन्यात्मभावनिवृत्तावात्मभावः स्वात्मनि स्वाभाविको यः स केवलो भवतीत्यात्मा ज्ञायत इत्युच्यते। स्वतश्चाप्रमेयः। प्रमाणान्तरेण न विषयीक्रियत इत्युभयमप्यविरुद्धमेव। विरजो विगतरजो रजो नाम धर्म्माधर्म्मादिमलं तद्रहित इति। एतत्परः परो व्यतिरिक्तः सूक्ष्मो व्यापी वा आकाशादप्यव्याकृताख्यात्। अजो न जायते जन्ममरणप्रतिषेधात्। उत्तरेऽपि भावविकाराः प्रतिषिद्धाः। सर्व्वेषां जन्मादित्वादात्मा महान् परिमाणतो महत्तरः सर्व्वस्मात्। ध्रुवोऽविनाशी। तमीदृशमात्मानमेव धीरो धीमान् विज्ञायोपदेशतः शास्त्रतश्च प्रज्ञां शास्त्राचार्य्योपदिष्टविषयां जिज्ञासापरिसमाप्तिकरीं कुर्व्वीत ब्राह्मणः॥ एवं प्रज्ञाकरणसाधनानि सन्न्यासशमदमोपर-

---

आ॰ वृत्तिरत आह। न तस्मिन्निति॥ ब्रह्मत्वेदात्मभावः सदा मन्यते कथमन्यथा प्रयेत्याशङ्क्याह। नित्यो हीति॥ सर्व्वस्य पूर्व्वस्य ब्रह्मत्व इत्येतत्। अतद्विषयो ब्रह्मव्यतिरिक्तविषय इत्यर्थः॥ ब्रह्मण्यात्मभावस्य सदा विद्यमानत्वे फलितमाह। तस्मादिति॥ अतद्विषयाभासो देहादावात्मत्वप्रतिभासस्तस्मिन्निवृत्त इत्यर्थः। अन्यस्मिन्नात्मभावनिवृत्तिरेवागमेन क्रियते चेत्तर्हि कथमात्मा तेन गम्यत इत्युच्यते तत्राह। अन्येति॥ यद्यागमिकवृत्तिव्याप्यत्वेनात्मनो मेयत्वमिष्यते कथं तर्हि तस्यामेयत्ववाचो युक्तिरित्याशङ्क्याह। स्वतश्चेति॥ वृत्तिव्याप्यत्वेन मेयत्वं स्फुरणाव्याप्यत्वेन चामेयत्वमित्युपसंहरति। इत्युभयमिति॥ यदुक्तं ध्रुवत्वं तदुपस्कारपूर्व्वकमुपपादयति। विरज इत्यादिना॥ कथं जन्मनिषेधादितरे विकारा निषिध्यन्ते तत्राह। सर्व्वेषामिति॥ यथोक्ते वस्तुनि दर्शनं निगमयति। तमीदृशमिति॥ नित्यशुद्धत्वादिलक्षणमिति यावत्॥ उक्तरीत्या प्रज्ञाकरणे कानि साधनानीति चेत्तानि

उ॰ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।

---

भा॰ मतितिक्षासमाधानानि कुर्य्यादित्यर्थः। नानुध्यायान्नानु चिन्तयेद्बहून् प्रभूताञ्छब्दांस्तत्र बहुत्वप्रतिषेधात्केवलात्मैकत्वप्रतिपादकाः स्वल्पाः शब्दा अनुज्ञायन्ते। ओमित्येवं ध्यायथ आत्मानं। अन्या वाचो मुञ्चथेति चाथर्वणे। वाचो विग्लापनं विश्रमणं ग्लानिकरं श्रमकरं हि यस्मात्तद्बहुशब्दाभिध्यानमिति ॥ २० ॥

सहेतुकौ बन्धमोक्षावभिहितौ मन्त्रब्राह्मणाभ्यां श्लोकैश्च। पुनर्मोक्षस्वरूपं विस्तरेण प्रतिपादितमेवमेतस्मिन्नात्मविषये सर्व्वो वेदो यथोपयुक्तो भवति तत्तथा वक्तव्यमिति तदर्थेयं कण्डिकाऽऽरभ्यते। तत्र यथाऽस्मिन्प्रपाठके विहितं सप्रयोजनमनूद्यात्रैवोपयोगः कृत्स्नस्य वेदस्य काम्य-

---

आ॰ दर्शयति। एवमिति॥ काम्यनिषिद्धत्यागः सन्न्यास उपरमो नित्यनैमित्तिकत्याग इति भेदः॥ बहूनिति विशेषणवशादायातमर्थं दर्शयति। तत्रेति॥ चिन्तनीयेषु शब्देष्विति यावत्॥ तत्र श्रुत्यन्तरं संवादयति। ओमित्येवमिति॥ नानुध्यायादित्यत्र हेतुमाह। वाच इति॥ तस्माद्बहूञ्छब्दान्नानुचिन्तयेदिति पूर्व्वेण सम्बन्धः। इतिशब्दः श्लोकव्याख्यानसमाप्त्यर्थः॥ २०॥

कण्डिकान्तरमवतारयितुं वृत्तं कीर्त्तयति। सहेतुकाविति॥ उत्तरकण्डिकातात्पर्य्यमाह। एवमिति॥ विरजः पर इत्यादिनोक्तक्रमेणावस्थिते ब्रह्मणीति यावत्॥ तदित्युपयुक्तोक्तिः॥ तदर्था ब्रह्मात्मनि सर्व्वस्य वेदस्य विनियोगप्रदर्शनार्थेति यावत्॥ ननु विविदिषावाक्येन ब्रह्मात्मनि सर्व्वस्य वेदस्य विनियोगो वक्ष्यते॥ तथाच तस्मात्प्राक्तनं वाक्यं किमर्थमित्याशङ्क्याह। तत्रेति॥ यथाऽस्मिन्नध्याये बन्धमात्मज्ञानमुक्तं तथैव तदनूद्येति योजना॥ कथं

उ॰ नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनꣳ हि तदिति ॥ २१ ॥

स वा एष महानज आत्मा योऽयं विज्ञान-

---

भा॰ राशिवर्जितश्चेत्येवमर्थः । उक्तार्थानुवादः स वा एष इत्यादिः । स इत्युक्तपरामर्शार्थः । कोऽसावुक्तः परामृश्यते तं प्रति निर्दिशति । य एष विज्ञानमय इत्यतीतानन्तर-वाक्योक्तसम्प्रत्ययो माभूदिति । य एष कतम एष इत्यु-च्यते ॥ २१ ॥

विज्ञानमयः प्राणेष्वित्युक्तवाक्योल्लिङ्गनं संशयनिवृत्त्यर्थं । उक्तं हि पूर्व्वं जनकप्रश्नारम्भे कतम आत्मेति योऽयं विज्ञानमयः प्राणेष्वित्यादि । एतदुक्तं भवति योऽयं विज्ञानमयः प्राणेष्वित्यादिना वाक्येन प्रतिपादितः स्वयं ज्योतिरात्मा स एष कामकर्म्मा विद्यानामनात्मधर्म्मत्व-

---

आ॰ यथोक्ते ज्ञाने सर्व्वो वेदो विनियोक्तुं शक्यते । स्वर्गकामादिवाक्यस्य स्वर्गादावेव पर्य्यवसानादित्याशङ्क्य संयोगपृथक्त्वन्यायमनादृत्य विशिनष्टि । काम्यराशीति । उक्तस्य सप्रपञ्चस्यात्मज्ञानस्यानुवाद इति यावत् । उक्तानां भूयस्त्वे विशेषं ज्ञातुं पृच्छति । कोऽसा-विति । विशेषणानर्थक्यमाशङ्क्य परिहरति । अतीतेति । तद्भि-विरजः पर इत्यादिनोक्तो महत्त्वादिविशेषणः परमात्मा । तत्र सशब्दात्प्रतीतिर्माभूदिति कृत्वा तेन ज्योतिर्ब्राह्मणस्थं जीवं परा-मृश्य तमेव यच्छब्देन स्मारयित्वा तस्य सन्निहितेन परेणात्मनै-क्यमेषशब्देन निर्दिशतीत्यर्थः ॥ २१ ॥

विशेषणवाक्यमेषशब्दं प्रश्नपूर्व्वकं व्याचष्टे । कतम इति ॥ कथं जीवो विज्ञानमयः कथं वा प्राणेष्विति सप्तमी प्रयुज्यते तत्राह । उक्तेति । तदनुवादस्य सशब्दार्थे सन्देहापोहं फल-

उ॰ मयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मि-
ञ्छेते सर्व्वस्य वशी सर्व्वस्येशानः सर्व्वस्याधिपतिः

---

भा॰ प्रतिपादनद्वारेण मोचितःपरमात्मभावमापादितः पर
एवायं नान्य इत्येषः। स वा एष महानज आत्मेत्युक्तो विज्ञा-
नमयः प्राणेष्विति यथा व्याख्यातार्थः। एवञ्च य एषोऽन्त-
र्हृदये हृदयपुण्डरीकमध्ये य एष आकाशो बुद्धिविज्ञान-
संश्रयः। तस्मिन्नाकाशे बुद्धिविज्ञानसहितः शेते तिष्ठति।
अथवा सम्प्रसादकालेऽन्तर्हृदये य एष आकाशः पर एव
आत्मा निरुपाधिको विज्ञानमयः स्वस्वभावस्तस्मिन् स्वभावे
परमात्मन्याकाशाख्ये शेते। चतुर्थ एव तद्व्याख्यातं क्वैष
तदाऽभूदित्यस्य प्रतिवचनत्वेन। स च सर्व्वस्य ब्रह्मेन्द्रादेर्वशी।
सर्व्वो ह्यस्य वशे वर्त्तते। उक्तञ्चैतस्य वाऽक्षरस्य प्रशासने इति।
न केवलं वशी सर्व्वस्येशान ईशिता च। ब्रह्मेन्द्रप्रभृतीनामी-
शितृत्वं च कदाचिज्जातिहतं। यथा राजकुमारस्य बलव-
त्तरानपि भृत्यान्प्रति तद्वन्मा भूदित्याह। सर्व्वस्याधि-

---

आ॰ माह। संश्रयेति॥ उक्तवाक्योच्छिष्टनमित्युक्तं विवृणोति। उक्तं
हीति॥ योऽयं विज्ञानमयः प्राणेषु प्रागुक्तः स एव महानज
आत्मेति जीवानुवादेन परमात्मभावो विहित इति वाक्यार्थमाह।
एतदिति॥ परमात्मभावापादनप्रकारमनुवदति। साक्षा-
दिति॥ विशेषणवाक्यस्य व्याख्येयत्वप्राप्तावुक्तवाक्योच्छिष्टमित्य-
त्रोक्तं स्मारयति। योऽयमिति॥ वाक्यान्तरमवतार्य व्याचष्टे। य
एष इति॥ कथं पुनराकाशशब्दस्य परमात्मविषयत्वमुपेत्य द्वितीयं
व्याख्यानं तस्यार्थान्तरे रूढत्वादित्याशङ्क्याह। चतुर्थ इति॥

उ० स न साधुना कर्म्मणा भूयान्नो एवासाधुना कनीयान् ।

भा० पतिरधिष्ठाय पालयिता स्वतन्त्र इत्यर्थः। न राजपुत्रवदमात्यादिभृत्यतन्त्रः। एवमप्येतद्वशित्वादि हेतुहेतुमद्रूपं। यस्मात्सर्व्वस्याधिपतिस्ततोऽसौ सर्व्वस्येशानः। यो हि यमधिष्ठाय पालयति स तं प्रतीष्ट एवेति प्रसिद्धं। यस्माच्च सर्व्वस्येशानस्तस्मात्सर्व्वस्य वशीति। किञ्चान्यत्स एवम्भूतो हृद्यन्तर्ज्योतिः पुरुषो विज्ञानमयो न साधुना शास्त्रविहितेन कर्म्मणा भूयान् भवति। न वर्द्धते पूर्व्वावस्थातः केनचिद्धर्म्मेण। नो एव शास्त्रप्रतिषिद्धेनासाधुना कर्म्मणा कनीयानल्पतरो भवति। पूर्व्वावस्थातो न हीयत इत्यर्थः। किञ्च सर्व्वो ह्यधिष्ठानपालनादि कुर्व्वन् परानुग्रहपीडाकृतेन धर्म्माधर्म्माख्येन युज्यते। अस्यैव तु कथं तदभाव इत्युच्यते। यस्मादेष सर्व्वेश्वरः सकर्म्मणोऽपीशितुं भवत्येव शीलमस्य। तस्मान्न कर्म्मणा सम्बध्यते॥

आ० इत्थं ज्ञानमनूद्य तत्फलमनुवदति। स वेत्यादिना॥ कथं पुनर्निरुपाधिकस्येश्वरस्य वशित्वं। कथञ्च तदभावे तदात्मनो विदुषस्तदुपपद्यते तत्राह। उच्यत इति॥ विशेषणत्रयस्य हेतुहेतुमद्रूपत्वमेव विशदयति। यस्मादित्यादिना॥ तत्र प्रसिद्धिं प्रमाणयति। यो हीति॥ न केवलमुक्तमेव विद्याफलं किन्त्वन्यच्चास्तीत्याह। किञ्चेति॥ एवम्भूतत्वं ज्ञातपरमात्माभिन्नत्वं॥ परिशुद्धत्वमर्थमनुवदति। हृदीति॥ नन्वीश्वरीभूतस्य विदुषः स्वातन्त्र्यादिवद्धर्म्मादिसम्बन्धित्वं स्यादिति शङ्कते। सर्व्वो हीति॥

उ॰ एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल

---

भा॰ किञ्च एष भूताधिपतिर्ब्रह्मादिस्तम्बपर्य्यन्तानां भूतानामधिपतिरित्युक्तार्थं पदं। एष कर्ता तेषामेव पालयिता रक्षिता। एष सेतुः किं विशिष्ट इत्याह। विधरणो वर्णाश्रमादिव्यवस्थाया विधारयिता। तदाह एषां भूरादीनां ब्रह्मलोकान्तानां लोकानामसम्भेदायासम्भिन्नमर्य्यादायै परमेश्वरेण सेतुवदविधार्य्यमाणा लोकाः सम्भिन्नमर्य्यादाः स्युः। अतो लोकानामसम्भेदाय सेतुभूतोऽयं परमेश्वरो यः स्वयं ज्योतिरात्मैवैवंवित्सर्व्वस्य वशीत्यादि ब्रह्मविद्यायाः फलमेतन्निर्द्दिष्टं। किं ज्योतिरयं पुरुष इत्येवमादिषष्ठप्रपाठकविहितायामेतस्यां ब्रह्मविद्यायामेवंफलायां काम्यैकदेशवर्जितं कृत्स्नं कर्म्मकाण्डं तादर्थ्येन विनियुज्यते। तत्कथमित्युच्यते। तमेतमेवम्भूतमौपनिषदं पुरुषं वेदानुवच-

---

आ॰ परतन्त्रत्वमुपाधिरिति परिहरति। उच्यत इति। सर्व्वाधिपत्यराहित्यमुपाधिरित्याह। किञ्चेति। सर्व्वपालकत्वराहित्यमुपाधिरित्याह। एष इति। सर्व्वाधारत्वमुपाधिरित्याह। एष इति। कथं विधारयितृत्वमित्याशङ्क्याह। तदाहेति। तदेव साधयति। परमेश्वरेणेति। सर्व्वस्य वशीत्यादिनोक्तमुपसंहरति। एवंविदिति। सफलं ज्ञानमनूद्य विविदिषावाक्यमवतारयति। किं ज्योतिरिति। एवंफलायां सर्व्वस्य वशीत्यादिनोक्तफलोपेतायामिति यावत्। तादर्थ्येन परम्परया ज्ञानोत्पत्तिशेषत्वेनेत्यर्थः। विनियोजकवाक्यमाकाङ्क्षापूर्व्वकमादाय व्याचष्टे। तत्कथमित्यादिना। एवम्भूतं श्लोकोक्तविशेषणमित्यर्थः। ब्राह्मणशब्दस्य क्षत्रियाद्युपलक्षणत्वे हेतुमाह। अविशिष्टो हीति। सम्भा-

उ॰ एष सेतुर्विधरण एषां लोकानामसम्भेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ।

---

भा॰ नेन मन्त्रब्राह्मणाध्ययनेन नित्यस्वाध्यायलक्षणेन विविदिषन्ति वेदितुमिच्छन्ति। के ब्राह्मणाः। ब्राह्मणग्रहणमुपलक्षणार्थं। अविशिष्टो ह्यधिकारस्त्रयाणां वर्णानां। अथवा कर्म्मकाण्डेन मन्त्रब्राह्मणेन वेदानुवचनेन विविदिषन्ति। कथं विविदिषन्तीत्युच्यते यज्ञेनेत्यादि। ये पुनर्मन्त्रब्राह्मणलक्षणेन वेदानुवचनेन प्रकाश्यमानं विविदिषन्तीति व्याचक्षते तेषामारण्यकमात्रमेव वेदानुवचनं स्यात्। न हि कर्म्मकाण्डेन पर आत्मा प्रकाश्यते। तन्त्वौपनिषदमिति विशेषश्रुतेः। वेदानुवचनेनेति चाविशेषितत्वात्समस्तग्राहीदं वचनं। न च तदेकदेशोत्सर्गो युक्तः॥

---

आ॰ वितं पक्षान्तरमाह। अथवेति॥ तेन विविदिषाप्रकारं प्रश्नपूर्व्वकं विवृणोति। कथमित्यादिना॥ भर्तृप्रपञ्चप्रस्थानमुत्थाप्य व्याचष्टे। ये पुनरित्यादिना॥ तत्र हेतुमाह। न हीति॥ भवतूपनिषन्मात्रग्रहणमित्याशङ्क्य वेदो वानूच्यते गुरूच्चारणानन्तरं पठ्यत इति व्युत्पत्तेर्वेदानुवचनशब्देन सर्व्ववेदग्रहे सम्भवति तदेकदेशत्यागो न युक्त इत्याह। वेदेति॥ दोषसाम्यमाशङ्कते। नन्विति॥ सिद्धान्तेऽप्युपनिषदं वर्जयित्वा वेदानुवचनशब्देन कर्म्मकाण्डं गृहीतमिति कृत्वा तस्य वेदैकदेशविशेषविषयत्वं स्यात्ततश्चोभयोरित्यादिन्यायविरोध इत्यर्थः॥ * नित्यस्वाध्यायो वेदानुवचनमिति पक्षमादाय परिहरति। नेत्यादिना॥

---

* यश्चोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे इति टिप्पनी॥

भा॰ ननु त्वत्पक्षेऽप्युपनिषद्वर्जमित्येकदेशत्वं स्यात्। नास्म-
द्व्याख्यानेऽविरोधादस्मत्पक्षे नैष दोषो भवति। यदा वेदा-
नुवचनशब्देन नित्यः स्वाध्यायो विधीयते तदोपनिषदपि
गृहीतैवेति वेदानुवचनशब्दार्थैकदेशो न परित्यक्तो भवति।
यज्ञादिसहपाठाच्च। यज्ञादीनि कर्माण्येवानुक्रमिष्यन्
वेदानुवचनशब्दं प्रयुङ्क्ते। तस्मात् कर्मैव वेदानुवचनशब्दे-
नोच्यत इति गम्यते। कर्म हि नित्यस्वाध्यायः कथं पुनर्नि-
त्यस्वाध्यायादिभिः कर्मभिरात्मानं विविदिषन्ति। नैव
विहितान्यात्मानं प्रकाशयन्ति यथोपनिषदः। नैष दोषः।
कर्मणां विशुद्धिहेतुत्वात्कर्मभिः संस्कृता हि विशुद्धात्मानः
शक्नुवन्त्यात्मानमुपनिषत्प्रकाशितमप्रतिबन्धेन वेदितुं। तथा
ह्याथर्वणे। विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमान
इति। स्मृतिश्च। ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मण

---

आ॰ वेदैकदेशपरिग्रहपरित्यागात्मकविरोधाभावं साधयति।
नास्मदिति। तर्हि व्याख्यानान्तरमुपेक्षितमित्याशङ्क्य तदपि
वाक्यशेषवशादुपेक्षितमेवेत्याह। यज्ञादीति। सङ्ग्रहवाक्यं विवृ-
णोति। यज्ञादीनि कर्माणीति। तर्हि प्रथमव्याख्याने कथं वाक्य-
शेषोपपत्तिरित्याशङ्क्याह। कर्म हीति। वेदानुवचनादीनामात्म-
विविदिषासाधनत्वमाक्षिपति। कथमिति। उपनिषद्भिरिवात्मा
तैरपि ज्ञायतामित्याशङ्क्याह। नैवेति। कर्मणामप्रमाणत्वेऽपि
परम्परया ज्ञानहेतुत्वाद्विविदिषाश्रुतिरविरुद्धेति समाधत्ते।
नैष दोष इति। तदेव स्फुटयति। कर्मभिरिति। तत्र श्रुत्यन्तरं
प्रमाणयति। तथा हीति। ततो नित्याद्यनुष्ठानाद्विशुद्धधीरात्मानं
सदा चिन्मयमुपनिषद्भिर्लक्ष्यं पश्यतीत्यर्थः। आदिशब्देन कषायपक्ति-

उ॰ यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवति ॥

---

भा॰ इत्यादिः। कथं पुनर्नित्यानि कर्म्माणि संस्कारार्थानीत्यवगम्यते ॥

स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयत इत्यादि श्रुतेः। सर्व्वेषु च स्मृतिशास्त्रेषु कर्म्माणि संस्कारार्थान्येवाचक्षते अष्टाचत्वारिंशत्संस्कारा इत्यादिषु। गीतासु च। यज्ञो दानं तपश्चैव पावनानि मनीषिणां। सर्व्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषा इति। यज्ञेनेति द्रव्ययज्ञा ज्ञानयज्ञाश्च संस्कारार्थाः। संस्कृतस्य च विशुद्धसत्त्वस्य ज्ञानोत्पत्तिरप्रतिबन्धेन भविष्यत्यतो यज्ञेन विविदिषन्ति। दानेन दानमपि पापक्षय-

---

आ॰ रित्यादिस्मृतिसङ्ग्रहः। नित्यकर्म्मणां संस्कारार्थत्वे प्रमाणं पृच्छति॥ कथमिति॥

यद्यपि श्रुतिस्मृतिभ्यां कर्म्मभिः संस्कृतस्योपनिषद्भिरात्मज्ञानं सूच्यते तथापि तेषां संस्कारार्थत्वे किं प्रमाणमिति प्रश्ने श्रुतिस्मृती प्रमाणयति। स ह वा इत्यादिना॥ किं पुनः स्मृतिशास्त्रं तदाह। अष्टाचत्वारिंशदिति॥ अष्टावन्वाधानादयो मुख्याश्चत्वारिंशद्गर्भाधानादयः संस्कारा इति विभागः॥ बहुवचनोपात्तं स्मृत्यन्तरमाह। गीतासु चेति॥ पदान्तरमादाय व्याचष्टे। यज्ञेनेतीति॥ तेषां संस्कारार्थत्वेऽपि कथं ज्ञानसाधनत्वमित्याशङ्क्याह। संस्कृतस्येति॥ दानेन विविदिषन्तीति पूर्व्वेण सम्बन्धः॥ कथं पुनः स्वधनं दानं विविदिषाकारणमत आह। दानमपीति॥ विविदिषाहेतुरिति शेषः। तपसेत्यत्रापि पूर्व्ववदन्वयः। कामानशनं रागद्वेषरहितैरिन्द्रियैर्विषयसेवनं यदृच्छालाभसन्तुष्टत्वमिति यावत्॥ यथाश्रुतार्थत्वे का हानिरित्याश-

भा॰ हेतुत्वाद्धर्म्मवृद्धिहेतुत्वाच्च। तपसा तप इत्यविशेषेण कृच्छ्र-चान्द्रायणादिप्राप्तौ विशेषणमनाशकेनेति। कामानशनमनाशकं न तु भोजननिवृत्तिः। भोजननिवृत्तौ म्रियत एव। नात्मवेदनं। वेदानुवचनयज्ञदानतपःशब्देन सर्व्वमेव नित्यं कर्म्मोपलक्ष्यते। एवं काम्यवर्जितं नित्यं कर्म्मजातं सर्व्वमात्मज्ञानोत्पत्तिद्वारेण मोक्षसाधनत्वं प्रतिपद्यते। एवं कर्म्मकाण्डेनास्यैकवाक्यतावगतिः। एवं यथोक्तेन न्यायेनैतमेवात्मानं विदित्वा यथा प्रकाशितं मुनिर्भवति। मननान्मुनिर्योगी भवतीत्यर्थः। एतमेव विदित्वा मुनिर्भवति नान्यं। नन्वन्यवेदनेऽपि मुनित्वं स्यात्कथमवधार्य्यते एतमेवेति। बाढं अन्यवेदनेऽपि मुनिर्भवेत्। किन्त्वन्यवेदने न मुनिरेव स्यात्। किं तर्हि कर्म्म्यपि भवेत्। स एतमौपनिषदं पुरुषं विदित्वा मुनिरेव स्यात् न तु कर्म्मी। अतोऽसाधारणत्वं मुनित्वं विवक्षितमस्येत्यवधारयत्येतमेवेति॥

---

आ॰ तदाह। न त्विति॥ भवतूपात्तानां वेदानुवचनादीनामिष्यमाणे ज्ञाने विनियोगस्तथापि कथं सर्व्वं नित्यं कर्म्म तत्र विनियुक्तमित्याशङ्क्याह। वेदानुवचनेनेति॥ उपलक्षणमाह। एवमिति॥ प्रकान्त्या कर्म्मणो मुक्तिहेतुत्वे काण्डद्वयस्यैकवाक्यत्वमपि सिद्ध्यतीत्याह। एवं कर्म्मेति॥ वाक्यान्तरमवतार्य्य व्याकरोति। एवमिति॥ तस्यैवार्थमाह। यथोक्तेनेति॥ यज्ञाद्यनुष्ठानादिशुद्धिद्वारा विविदिषोत्पत्तौ गुरुपादोपसर्पणश्रवणादि चेतनेन क्रमेणेत्यर्थः। यथा प्रकाशितं मोक्षप्रकरणं मननश्रवणाभ्यामुपलक्ष्यमित्यर्थः॥ योगिशब्दो जीवन्मुक्तविषयः। एवकारं व्याकरोति। एतमेवेति॥ अवधारणमाक्षिप्य समाधत्ते। नन्वित्यादिना॥ एवकारस्तर्हि त्यक्ततामित्याशङ्क्याह। किन्त्विति॥ आत्मवेदनेऽपि कर्म्मित्वं स्यादिति चेन्नेत्याह। एवन्त्विति॥

उ॰ एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ।

---

भा॰ एतस्मिन् हि विदिते केन कं पश्येदित्येवं क्रियासम्भवात्मननमेव स्यात्। किञ्चैतमेतमेवात्मानं स्वं लोकमिच्छन्तः प्रार्थयन्तः प्रव्राजिनः प्रव्रजनशीलाः प्रव्रजन्ति प्रकर्षेण व्रजन्ति सर्व्वाणि कर्म्माणि सन्न्यस्यन्तीत्यर्थः। एतमेव लोकमिच्छन्त इत्यवधारणान्न वाह्यलोकत्रयेप्सूनां पारिव्राज्येऽधिकार इति गम्यते। न हि गङ्गाद्वारं प्रतिपित्सुः काशीदेशनिवासी पूर्व्वाभिमुखः प्रैति। तस्मादाह्यलोकत्रयार्थिनां पुत्रकर्म्मापरब्रह्मविद्या साधनं। पुत्रेणायं लोको जय्यो नान्येन कर्म्मणेत्यादि श्रुतेः। अतस्तदर्थिभिः पुत्रादिसाधनं प्रत्याख्याय न पारिव्राज्यं प्रतिपत्तुं युक्तं। अतत्साधनत्वात्पारि-

---

आ॰ कथमात्मविदोऽपि मुनित्वमसाधारणं तदाह। एतस्मिन्निति॥ इतश्चात्मविदो न कर्म्मित्वमित्याह। किञ्चेति॥ आत्मलोकमिच्छतां मुमुक्षूणामपि कर्म्मत्यागश्रवणादात्मविदां न कर्म्मितेति किं वक्तव्यमित्यर्थः। ताच्छील्यं वैराग्यातिशयशालित्वं॥ अवधारणसामर्थ्यसिद्धमर्थमाह। एतमेवेति॥ पारिव्राज्ये लोकत्रयार्थिनामनधिकारे दृष्टान्तमाह। न हीति॥ लोकत्रयार्थिनश्चेत्पारिव्राज्येनाधिक्रियन्ते कुत्र तर्हि तेषामधिकारस्तत्राह। तस्मादिति॥ स्वर्गकामस्य स्वर्गसाधने यागेऽधिकारवल्लोकत्रयार्थिनामपि तत्साधने पुत्रादावधिकार इत्यर्थः॥ पुत्रादीनां वाह्यलोकसाधने प्रमाणमाह। पुत्रेणेति॥ पुत्रादीनां लोकत्रयसाधनत्वे सिद्धे फलितमाह। अत इति॥ अतत्साधनत्वं लोकत्रयं प्रत्यनुपायत्वं॥ अवधारणार्थमुपसंहरति। तस्मादिति॥ लोकत्रयार्थिनां पारिव्राज्येऽनधिकारादिति यावत्। आत्मलोकस्य स्वरूपत्वेन सदाप्तत्वात्कथं तत्रेच्छेत्याशङ्क्याह। आत्मेति॥ तस्यात्म-

भा० प्राप्यस्य। तस्मादेतमेव लोकमिच्छन्तः प्रव्रजन्तीति युक्तमवधारणं। आत्मलोकप्राप्तिर्ह्यविद्यानिवृत्तौ स्वात्मन्यवस्थानमेव। तस्मादात्मानञ्चेल्लोकमिच्छति यस्तस्य सर्व्वक्रियोपरम एवात्मलोकसाधनं मुख्यमन्तरङ्गं। यथा पुत्रादिरेव बाह्यलोकत्रयस्य पुत्रादिकर्म्मण आत्मलोकं प्रत्यसाधनत्वात्। असम्भवेन च विरुद्धत्वमवोचाम। तस्मादात्मानं लोकमिच्छन्तः प्रव्रजन्त्येव। सर्व्वक्रियाभ्यो निवर्त्तेरन्नेवेत्यर्थः। यथा च बाह्यलोकत्रयार्थिनः प्रतिनियतानि पुत्रादीनि साधनानि विहितानि। एवमात्मलोकार्थिनः सर्व्वैषणानिवृत्तिः पारिव्राज्यं ब्रह्मविदो विधीयत एव॥

---

आ० स्वेन नित्यप्राप्तत्वेऽप्यविद्यया व्यवहितत्वात्प्रेप्सा सम्भवतीति भावः। भवत्वात्मलोकप्रेप्सा तथापि किन्तत्प्राप्तिसाधनं तदाह। तस्मादिति॥ अविद्यावस्थातदीप्सासम्भवादित्यर्थः। तदिच्छाया दौर्लभ्यं द्योतयितुं चेच्छब्दः। मुख्यत्वं श्रुत्यक्षरप्रतिपन्नत्वं। प्रणाडिकासाधनेभ्यो वेदानुवचनादिभ्यो विशेषमाह। अन्तरङ्गमिति॥ पारिव्राज्यमेव लोकस्यान्तरङ्गसाधनमिति दृष्टान्तमाह। यथेति॥ तथा पारिव्राज्यमेवात्मलोकस्य साधनमिति शेषः। पारिव्राज्यमेवेति नियमे हेतुमाह। पुत्रादीति॥ वस्त्वन्तर विनियुक्तत्वादिति शेषः। यद्यपि केवलं पुत्रादिकं नात्मलोकप्रापकं तथापि पारिव्राज्यसमुच्चितं तथा स्यादित्याशङ्क्याह। असम्भवेनेति॥ न हि परिव्राजकस्य पुत्रादिस्तद्वतो वा पारिव्राज्यं सम्भवति। उक्तञ्च समुच्चयं निराकुर्व्वद्भिः सपरिव्राजकस्य ज्ञानस्य कर्म्मादिना विरुद्धत्वं तेन कुतः समुच्चितं पुत्राद्यात्मलोकप्रापकमित्यर्थः॥ साधनान्तरासम्भवे फलितमुपसंहरति। तस्मादात्मानमिति॥ प्रव्रजन्तीति वर्त्तमानापदेशात्प्राप्तं विधिरस्तीत्यग्निहोत्रं जुहोतीतिवद्विधिमभिप्रेत्याह। यथा चेति॥

उ॰ एतद्ध स्म वै तत्पूर्व्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामः ।

भा॰ कुतः पुनस्त आत्मलोकार्थिनः प्रव्रजन्त्येवेत्युच्यते। तत्रार्थवादवाक्यरूपेण हेतुं दर्शयति। एतद्ध स्म वै तत्। तदेतत्पारिव्राज्ये कारणमुच्यते। ह स्म वै किल। पूर्व्वे अतिक्रान्तकालीना विद्वांस आत्मज्ञाः प्रजां कर्म्मापरब्रह्मविद्याच्च प्रजोपलक्षितं हि त्रयमेतत् वाह्यलोकत्रयसाधनं निर्दिश्यते प्रजामिति। प्रजां किं न कामयन्ते पुत्रादिलोकत्रयसाधनं नानुतिष्ठन्तीत्यर्थः। नन्वपरब्रह्मदर्शनमनुतिष्ठन्त्येव तद्बलाद्धि व्युत्थानं। नापवादात्। ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद सर्व्वं तं परादादित्यपरब्रह्मदर्शनमप्यपवदत्येव। अपरब्रह्मणोऽपि सर्व्वमध्यान्तर्भावात्। यत्र नान्यत्पश्यतीति च पूर्व्वापरवाह्यान्तर्दर्शनप्रतिषेधाच्च। अपूर्व्वमनप-

आ॰ पारिव्राज्यविधिमुक्त्वा तदपेक्षितमर्थवादमाकाङ्क्षापूर्व्वकमुत्थापयति। कुतः पुनरिति ॥ उत्थापितस्यार्थवादस्य तात्पर्य्यमाह। तत्रेति ॥ आत्मलोकार्थिनां पारिव्राज्यनियमः स्तुत्यर्थः। अर्थवादस्यान्यक्षराणि व्याचष्टे। तदेतदिति ॥ क्रियापदेन स्मेति सम्बध्यते। निपातद्वयस्यार्थमाह। किलेति ॥ प्रजां न कामयन्त इत्युत्तरत्र सम्बन्धः। प्रजामात्रे श्रुते कथं कर्म्मादि गृह्यते तत्राह। प्रजेति ॥ आकाङ्क्षापूर्व्वकमन्वयमन्वाचष्टे। प्रजां किमिति ॥ अकामयमानत्वस्य पर्य्यवसानं दर्शयति। पुत्रादीति ॥ पूर्व्वे विद्वांसः साधनत्रयं नानुतिष्ठन्तीत्युक्तमाक्षिपति। नन्विति ॥ एषणाभ्यो व्युत्तिष्ठतां किं तदनुष्ठानेनेत्याशङ्क्याह। तद्बलाद्धीति ॥ आत्मविदामपरविद्यानुष्ठानं दूषयति। नापवादादिति ॥ अथात्र सर्व्वस्यानात्मनो दर्शनमेवापोद्यते। न त्वपरस्य ब्रह्मणो

भा॰ रमनन्तरमवाह्यमिति । तत्केन कं पश्येद्विजानीयादिति च । तस्मादात्मदर्शनव्यतिरेकेणान्यद्व्युत्थानकारणमपेक्षते । कः पुनस्तेषामभिप्राय इत्युच्यते । किं प्रयोजनं फलं साध्यं करिष्यामः प्रजया साधनेन । प्रजा हि बाह्यलोकत्रयसाधनं निर्ज्ञाता । स च बाह्यो लोको नास्त्यस्माकमात्मव्यतिरिक्तः । सर्व्वं ह्यस्माकमात्मभूतमेव । सर्व्वस्य च वयमात्मभूताः । आत्मा च न आत्मत्वादेव न केनचित्साधनेनोत्पाद्य आप्यो विकार्य्यः संस्कार्य्यो वा । यदप्यात्मयाजिनः संस्कारार्थं कर्म्मेति तदपि कार्य्यकरणात्मदर्शनविषयमेव । इदं मेऽनेनाङ्गं संस्क्रियत इत्यङ्गाङ्गित्वादिश्रवणात् । न हि विज्ञानघनैकरसनैरन्तर्य्यदर्शिनोऽङ्गाङ्गिसंस्कारोपधान-

---

आ॰ दर्शनमत आह । अपरब्रह्मणोऽपीति ॥ तदपवादे श्रुत्यन्तरमाह । यत्रेति ॥ यस्मिन्भूम्नि स्थितश्चक्षुरादिभिरन्यं न पश्यति छद्योतीत्यादिना च दर्शनादिव्यवहारस्य वारितत्वादात्मविदो न युक्तमपरब्रह्मदर्शनमित्यर्थः । तत्रैव हेत्वन्तरमाह । पूर्व्वेति ॥ प्रतिषेधप्रकारमभिनयति । अपूर्व्वमिति ॥ इतश्चात्मविदां नापरब्रह्मदर्शनमित्याह । तत्केनेति ॥ अपरब्रह्मदर्शनासम्भवे किं तेषामेषणाभ्यो व्युत्थाने कारणमित्याशङ्क्याह । तस्मादिति ॥ साधनत्रयमननुतिष्ठतामभिप्रायं प्रश्नपूर्व्वकमाह । कः पुनरित्यादिना ॥ कैवल्यमेव तत्साध्यं फलमित्याशङ्क्याह । प्रजा हीति ॥ निर्ज्ञाता सोऽयमित्यादिश्रुताविति शेषः । स एव तर्हि प्रजया साध्यतामिति चेन्नेत्याह । स चेति ॥ आत्मव्यतिरिक्तो नास्तीत्युक्तमुपपादयति । सर्व्वं हीति ॥ आत्मव्यतिरिक्तस्यैव लोकस्य प्रजादिसाध्यत्वमिष्यतामिति चेन्नेत्याह । आत्मा चेति ॥ आत्मयाजिनः संस्कारार्थं कर्म्मेत्यङ्गीकारादात्मनोऽस्ति संस्कार्य्यत्वमित्याशङ्क्याह । यदपीति ॥ अथाङ्गाङ्गित्व संस्कार्य्यत्वश्च मुख्यात्मदर्शन-

उ॰ येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्ति या ह्येव पुत्रैषणा सा

---

भा॰ दर्शनं सम्भवति तस्मान्न किञ्चित् प्रजादिसाधनैः करिष्यामः ॥

अविदुषां हि तत्प्रजादिसाधनैः कर्त्तव्यं फलं । न हि मृगतृष्णिकायामुदकदर्शी प्रवृत्त इति । तत्रोपरमाच्चमुदकाभावं पश्यतोऽपि प्रवृत्तिर्युक्ता । एवमस्माकमपि परमार्थात्मलोकदर्शिनां प्रजादिसाधनसाध्ये मृगतृष्णिकादिसमेऽविद्वद्दर्शनविषयेण प्रवृत्तिर्युक्तेत्यभिप्रायः। तदेतदुच्यते। येषामस्माकं परमार्थदर्शिनामयमात्माऽशनायादिविनिर्मुक्तः साध्वसाधुभ्यामविकार्य्योऽयं लोकः फलमभिप्रेतं। न चास्यात्मनः साध्यसाधनतादिसर्व्वसंसारधर्म्मविनिर्मुक्तस्य साधनं किञ्चिदेषितव्यं । साध्यस्य हि साधनान्वेषणा क्रियते । असाध्यस्य साधनान्वेषणायां जलबुद्ध्या

---

आ॰ विषयमेव किं नेष्यते तत्राह । न हीति । आत्मविदां प्रजादिसाध्याभावमुपसंहरति । तस्मान्नेति ॥

केषां तर्हि प्रजादिभिः साध्यं फलं तदाह । अविदुषां हीति । केषाञ्चित्पुत्रादिषु प्रवृत्तिस्तेनैव न्यायेन विदुषामपि तेषु प्रवृत्तिः स्यादित्याशङ्क्याह । न हीति । तत्र प्रवृत्तिरिति सम्बन्धः । अविद्वद्दर्शनविषय इति च्छेदः । उक्तेऽर्थे वाक्यमवतार्य्य व्याचष्टे । तदेतदिति । आत्मा चेत्तदभिप्रेतं फलं तर्हि तत्र साधनेन भवितव्यमित्याशङ्क्याह । न चेति । का तर्हि साधनमेष्टव्यमित्याशङ्क्याह । साध्यस्येति । विपक्षे दोषमाह । असाध्यस्येति ॥

उ॰ वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः ।

---

भा॰ स्थल एव तरणं कृतं स्यात् । खे वा शाकुनपदान्वेषणं। तस्मादेतमात्मानं विदित्वा प्रव्रजेयुरेव ब्राह्मणा न कर्म्मारभेरन्नित्यर्थः । यस्मात्पूर्व्वे एव ब्राह्मणाएवं विद्वांसः प्रजामकामयमानाः । त एवं साध्यसाधनसंव्यवहारं निन्दन्तो विद्विषयमिति कृत्वा किं कुर्व्वन्त *इत्युच्यते । ते ह स्म किल पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्तीत्यादि व्याख्यातं। तस्मादात्मानं लोकमिच्छन्तः प्रव्रजन्ति। प्रव्रजेयुरित्येष विधिरर्थवादेन सङ्गच्छते। न ह्यसावर्थवादस्यास्य लोकस्तुत्याऽऽभिमुख्यमुत्पद्यते।प्रव्रजन्तीत्यस्यार्थवादरूपो ह्येतद्ध स्मेत्यादिरुत्तरो ग्रन्थः । अर्थवादस्येवार्थवादान्तरमपेक्षेत। अपेक्षते त्वेतद्ध स्मेत्याद्यर्थवादं प्रव्रजन्तीत्येतत् । यस्मात्पूर्व्वे विद्वांसः प्रजादिकर्म्मभ्यो

---

आ॰ येषामित्यादिवाक्यार्थमुपसंहरति । तस्मादिति ॥ ब्राह्मणानां ब्रह्मविदां प्रजादिभिः साध्याभावादिति यावत् ॥ वाक्यान्तरं प्रव्रजन्तीत्यवतार्य्य प्राथमिकं व्याख्यानं तस्य स्मारयति। त एव-मित्यादिना ॥ यदर्थोऽयमर्थवादस्तं विधिं निगमयति। तस्मादिति ॥ महानुभावोऽयमात्मलोको यत्तदर्थिनो दुष्करमपि पारिव्राज्यं कुर्व्वन्तीति स्तुतिरत्र विवक्षिता ॥ न विधिरित्याशङ्क्याह । न हीति ॥ तदेव प्रपञ्चयति। प्रव्रजन्तीत्यस्येति ॥ तथापि प्रव्रजन्तिवाक्यस्यार्थवादत्वं किं न स्यादित्याशङ्क्याह । अर्थ-

---

* कृतवन्त इति पाठान्तरः।

भा॰ निवृत्ताः प्रव्रजितवन्त एव तस्मादधुनातना अपि प्रव्रजन्ति । प्रव्रजेयुरित्येवं सम्बध्यमानं न लोकस्तुत्यभिमुखं भवितुमर्हति ॥

विज्ञानसमानकर्तृकत्वोपदेशादित्यादिनाऽवोचाम । वेदानुवचनादिसहपाठाच्च । यथात्मवेदनसाधनत्वेन विहितानां वेदानुवचनादीनां यथार्थत्वमेव नार्थवादत्वं तथा तैरेव सह पठितस्य पारिव्राज्यस्यात्मलोकप्राप्तिसाधनत्वेनार्थवादत्वमयुक्तं । फलविभागोपदेशाच्च । एतमेवात्मानं लोकं विदित्वेत्यन्यस्मादनात्मलोकादात्मानं फलान्तरत्वेन प्रविभजति । यथा पुत्रेणैवायं लोको जय्यो नान्येन कर्म्मणा ।

---

आ॰ वाक्येति ॥ अपेक्षाप्रकारमेव प्रकटयन्नस्य स्तुत्यभिमुखत्वाभावाद्विधित्वमेवेत्याह । यस्मादिति ॥

किञ्च विदित्वा व्युत्थाय भिक्षाचर्य्यं चरन्तीत्यत्र विज्ञानेन समानकर्तृकत्वं व्युत्थानादेरुपदिश्यते । विज्ञानञ्च सर्व्वासूपनिषत्सु विधीयते । अतो व्युत्थानमपि विधिमर्हतीत्युक्तं । तथा चात्रापि व्युत्थानापरपर्य्यायं पारिव्राज्यं विधेयमित्याह । विज्ञानेति ॥ इतश्च पारिव्राज्यवाक्यमर्थवादो न भवतीत्याह । वेदेति ॥ तदेव साधयति । यथेत्यादिना ॥ पारिव्राज्यस्य विधेयत्वे हेत्वन्तरमाह । फलेति ॥ पुत्रादिफलापेक्षया पारिव्राज्यफलं विभागेनोपदिश्यते । तथाच फलवत्त्वात्पुत्रादिवत्पारिव्राज्यस्य विधेयत्वसिद्धिरित्यर्थः ॥ तदेव विवृणोति । तमेवेति ॥ प्रकृतमात्मानं स्वलोकमापाततो विदित्वा तमेव साक्षात्कर्त्तुमिच्छन्तः प्रव्रजन्तीति वचनात्पुत्रादिसाध्यान्मनुष्यलोकादात्माख्यं लोकं पारिव्राज्यस्य फलान्तरत्वेन यतः श्रुतिर्विभज्याभिदधाति । अतस्तस्य विधेयत्वमप्रत्यूहमित्यर्थः ॥ फलविभागोपदेशे दृष्टान्तमाह । यथेति ॥ तथापि पारिव्राज्येऽपि फलविभागोक्तेर्विधेयतेति दार्ष्टान्तिकमिति शब्दार्थः । पारिव्राज्यस्य स्तुतिपरत्वाभावे हेत्वन्तरमाह ।

भा॰ कर्म्मणा पितृलोक इति। न च प्रव्रजन्तीत्येतत्प्राप्तवल्लोक-
स्तुतिपरं। प्रधानवचनार्थवादापेक्षं सकृच्छ्रुतं स्यात्। तस्मा-
द्भ्रान्तिरेवैषा लोकस्तुतिपरमिति। न चानुष्ठेयेन पारिव्रा-
ज्येन स्तुतिरुपपद्यते। यदि पारिव्राज्यमनुष्ठेयमपि सदन्य-
स्तुत्यर्थं स्यात्। दर्शपूर्णमासादीनामप्यनुष्ठेयानां स्तुत्यर्थता
स्यात्। न चान्यत्र कर्त्तव्यतैतस्मादिषयाभिज्ञाता। यत
इह स्तुत्यर्थो भवेत्। यदि पुनः कश्चिद्विधिः परिकल्प्येत
पारिव्राज्यस्य स इहैव मुख्यो नान्यत्र सम्भवति। यद्यप्यन-
धिकृतविषये पारिव्राज्यं परिकल्प्यते तच्च वृथाध्वरो-

---

आ॰ न चेति॥ यथा वायुर्वै क्षेपिष्ठेत्यादिरर्थवादः प्राप्तार्थो देवतादि-
स्तुत्यर्थः स्थितो न तथेदं स्तुतिपरं तद्वद्योतिशब्दाभावादि-
त्यर्थः। किञ्च प्रधानस्य दर्शपूर्णमासादेरर्थवादापेक्षावत्पारिव्राज्य-
मपि तदपेक्षमुपलभ्यते। तेन तस्य दर्शादिवद्विधेयत्वं दुर्वारमि-
त्याह। प्रधानवचेति॥ किञ्च पारिव्राज्यं सकृदेव श्रुतञ्चेदिदं विव-
क्षितमन्यस्तुतिपरं स्यान्न चेदं सकृदेव श्रूयते। प्रव्रजन्तीत्युपक्रम्य
प्रजां न कामयन्ते व्युत्थायाथ भिक्षाचर्य्यं चरन्तीत्यभ्यासादतोऽपि
न स्तुतिमात्रमेतदित्यभिप्रेत्याह। सकृदिति॥ न चेत्तत्रापि सम्ब-
ध्यते कथं तर्हि पारिव्राज्यस्य स्तुतिपरत्वप्रतीतिस्तत्राह।
तस्मादिति॥ अस्तु तर्हि विधेयमपि पारिव्राज्यं स्तावकमपीति
चेन्नेत्याह। न चेति॥ विपक्षे दोषमाह। यदीति॥ अथ
पारिव्राज्यं यज्ञादिवदन्यत्र विधीयतामिह स्तुतिरेवेत्याशङ्क्याह
न चान्यत्रेति॥ आत्मज्ञानाधिकारादन्यत्र पारिव्राज्यविध्यनु-
पलम्भादित्यर्थः॥ अन्यत्र विध्यनुपलम्भं समर्थयते। यदीत्यादिना॥
अन्यत्र प्रक्रियायामिति यावत्। कर्म्माधिकारे तत्त्यागविधेर्वि-
रुद्धत्वादिति भावः॥ भवत्विह पारिव्राज्ये विधिस्तथापि सर्व्व-
कर्म्मानधिकृतविषयः स्यादित्याशङ्क्याह। यद्यपीति॥ तत्र कर्म्मा-
नधिकृते पुंसीत्येतत्॥ तत्र हेतुमाह। कर्त्तव्यत्वेनेति॥ कर्म्मानधि-

उ॰ स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते

---

भा॰ हृदाद्यपि पारिव्राज्यवत्कल्प्येत कर्त्तव्यत्वेनानिर्ज्ञातत्वावि-
शेषात्। तस्मात्स्तुतिलगन्धोऽप्यत्र नाशङ्क्यः कल्पयितुं ॥
यद्ययमात्मा लोक इष्यते किमर्थं तत्प्राप्तिसाधनत्वेन
कर्म्माण्येव नारभेरन् किं पारिव्राज्येनेति । अत्रोच्यते ।
अस्यात्मलोकस्य कर्म्मभिरसम्बन्धाद्यमात्मानमिच्छन्तः प्रव्र-
जेयुः स आत्मा साधनत्वेन फलत्वेन चोत्पाद्यत्वादिप्रका-
राणामन्यतमत्वेनापि कर्म्मभिर्न सम्बध्यते । कस्मात्स एष
नेति नेत्यात्माऽगृह्यो न गृह्यते इत्यादिलक्षणः। यस्मादेवं-
लक्षण आत्मा कर्म्मफलसाधनासम्बन्धी सर्व्वसंसारधर्म्मविल-
क्षणोऽशनायाद्यतीतोऽस्थूलादिधर्म्मवान् अजोऽजरोऽमरोऽ
मृतोऽभयः सैन्धवघनवद्विज्ञानैकरसस्वभावः स्वयं ज्योतिरेक
एवाद्वयोऽपूर्व्वो न परोऽनन्तरो ऽवाह्य इत्येतदागमतस्तर्क-
तश्च स्थापितं । विशेषतश्चेह जनकयाज्ञवल्क्यसंवादेऽस्मिन्।

---

आ॰ एतेन कर्त्तव्यतया ज्ञातत्वं ब्रह्मचर्य्यादाविव पारिव्राज्येऽपि
नास्ति। तथा चानधिकृतविषये पारिव्राज्यं कल्प्यते चेत्तस्मिन्विषये
ब्रह्मचर्य्याद्यपि कल्प्येताविशेषादित्यर्थः॥ पारिव्राज्यस्याधि-
कृतविषयत्वे विधेयत्वे च सिद्धे फलितमाह। तस्मादिति॥
सार्थवादं पारिव्राज्यं व्याख्याय स एष इत्यादि व्याकर्तुं शङ्क-
यति । यदीति॥ परिहरति। अत्रेति॥ तदर्थिनो नारभन्ते
कर्म्माणीति शेषः॥ कर्म्मभिरसम्बन्धमात्मलोकस्य साधयति।
यमात्मानमिति॥ तस्य कर्म्मासम्बन्धे निष्प्रपञ्चत्वं फलतीत्याह।
तस्मादिति॥ निर्विशेषत्वञ्च तत्र दर्शितरूपोऽयमात्मेत्येतदा-
गमोपपत्तिभ्यां यथा पूर्व्वेण स्थापितं तथाऽत्रापि ब्राह्मणद्वये विशे-

उ॰ ऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इति ।

---

भा॰ तस्मादेवंलक्षण आत्मनि विदित आत्मत्वेन नैव कर्म्मारम्भ उपपद्यते । तस्मादात्मा निर्विशेषः । न हि चक्षुष्मान् पथि प्रवृत्तोऽहनि कूपे कण्टके वा पतति । कृत्स्नस्य च कर्म्मफलस्य विद्याफलेऽन्तर्भावात् । न चायत्नप्राप्ये वस्तुनि विद्वान्यत्नमातिष्ठति । अर्के चेन्मधु विन्देत किमर्थं पर्व्वतं व्रजेत् । इष्टस्यार्थस्य सम्प्राप्तौ को विद्वान्यत्नमाचरेत् । सर्व्वं कर्म्माखिलं पार्थ ज्ञाने परिसमाप्यत इति गीतासु । इहापि चैतस्यैव परमानन्दस्य ब्रह्मवित्प्राप्यस्यान्यानि भूतानि मात्रामुपजीवन्तीत्युक्तं । अतो ब्रह्मविदां न कर्म्मारम्भः । यस्मात्सर्व्वैषणाविनिवृत्तः स एष नेति

---

आ॰ यतो यस्मान्निर्द्धारितं तस्मादस्मिन्नात्मन्यापाततो ज्ञाते कर्म्मानुष्ठानप्रयत्नासिद्धिरिति योजना । उक्तात्मविषयविवेकविज्ञानवतो न कर्म्मानुष्ठानमित्यत्र दृष्टान्तमाह । न हीति । ब्रह्मज्ञानफले सर्व्वकर्म्मफलान्तर्भावाच्च तदर्थिनो मुमुक्षोर्न कर्त्तव्यकर्म्मेत्याह । कृत्स्नस्येति । तथापि विचित्रफलानि कर्म्माणीति विवेकी कुतूहलवशादनुष्ठास्यतीत्याशङ्क्याह । न चेति । तत्र लौकिकं न्यायं दर्शयति । अर्के चेति । पुरोदेशे मधु लभेत चेदिति यावत् । ज्ञानफले कर्म्मफलान्तर्भावे मानमाह । सर्व्वमिति । अखिलं समग्राङ्गोपेतमित्यर्थः । तत्रैव श्रुतिं संवादयति । इहापीति । निषेधतात्पर्य्यमुपसंहरति । अत इति । एवमित्यादि वाक्यं योजयति । यस्मादिति । उ हेति निपाताभ्यां सूचितोऽर्थो

उ॰ अतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः ॥ २२ ॥

नेत्यात्मानमात्मत्वेनोपगम्य तद्रूपेणैव वर्त्तते । तस्मादेतभा॰ मेवंविदं नेति नेत्यात्मभूतमु हैवैते वक्ष्यमाणेन तरतो न प्राप्नुत इति युक्तमेवेति वाक्यशेषः ॥

के ते इत्युच्यते । अतोऽस्मान्निमित्ताच्छरीरधारणादिहेतोः पापमपुण्यं कर्माकरवं कृतवानस्मि । कष्टं खलु ममवृत्तमनेन पापेन कर्मणाहं नरकं प्रतिपत्स्य इति । योऽयं पश्चात्तापं कर्म कृतवतः परितापः स एवैनं तं नेति नेत्यात्मभूतं न तरति । तथातः कल्याणं फलविषयकामान्निमित्तान् यज्ञदानादिलक्षणं पुण्यं शोभनं कर्म कृतवानस्मि । अतोऽहमस्य फलं सुखमुपभोक्ष्ये देहान्तर इत्येषोऽपि हर्षः । तन्न तरति उभे उ ह एव एष ब्रह्मविदेते कर्मणी तरति पुण्यपापलक्षणे । एवं ब्रह्मविदः सन्न्यासिन उभे ऽपि कर्मणी क्षीयेते । पूर्व्वजन्मनि कृते ये ते इह जन्मनि कृते ये ते चापूर्व्वे च नारभ्येते । किञ्च नैनं कृताकृते । कृतं नित्यानुष्ठा-

आ॰ यस्मादित्यनुभाषितः ॥ इतिशब्दस्यापेक्षितं पूरयति । इति युक्तमिति ॥

आकाङ्क्षापूर्व्वकमुत्तरवाक्यमवतार्य्य व्याकरोति । के त इत्यादिना ॥ यथोक्तात्मविदस्तापहर्षासंस्पर्शे हेतुमाह । उभे इति ॥ पुण्यपापे तरतीत्युक्ते पृथगवस्थानं तयोः प्राप्नुते । तन्निरस्यति । एवमिति ॥ निषेधवाक्योक्तमेवेति यावत् ॥ इतश्चात्मा

उ॰ तदेतदृचाभ्युक्तमेष नित्यो महिमा ब्राह्मणस्य न वर्द्धते कर्म्मणा नो कनीयान् तस्यैव स्यात्प-

---

भा॰ ममकृतं तथैवाक्रिया। तेऽपि कृताकृते एनं तपतः। नात्मज्ञं हि कृतं फलदानेनाकृतं प्रत्यवायोत्पादनेन तपतः। अयन्तु ब्रह्मविदात्मविद्याग्निना सर्व्वाणि कर्म्माणि भस्मीकरोति। यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन। ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात्कुरुते तथेत्यादिस्मृतेः। शरीरारम्भकयोस्तूपभोगेनैव क्षयः। अतो ब्रह्मविदकर्म्मसम्बन्धी॥ २२॥

तदेतद्वस्तु ब्राह्मणेनोक्तमृचा मन्त्रेणाभ्युक्तं प्रकाशितं। एष नेति नेत्यादिलक्षणो नित्यो महिमा। अन्ये तु महिमानः कर्म्मकृता इत्यनित्याः। अयन्तु नेति नेत्यादिलक्षणो महिमा स्वाभाविकत्वान्नित्यो ब्रह्मविदो ब्राह्मणस्य त्यक्तसर्व्वैषणस्य। कुतोऽस्य नित्यत्वमिति हेतुमाह। न कर्म्मणा वर्द्धते शुभ-

---

आ॰ विदो धर्म्मादिसम्बन्धो नास्तीत्याह। किञ्चेति॥ तदेवानन्तरवाक्यव्याख्यानेन स्फोरयति। नैनमिति॥ तयोस्तर्हि कुत्र तापकत्वं तदाह। अनात्मज्ञं हीति॥ पुरुषत्वाद्ब्रह्मविद्युष्यपि कृताकृतयोस्तापकत्वं स्यादित्याशङ्क्याह। अयन्त्विति॥ अत्र भगवद्वाक्यं प्रमाणयति। यथेति॥ २२॥

यद्यपि पूर्व्वोत्तरयोर्धर्म्माधर्म्मयोरनारब्धयोरात्मविद्यावशाद्विनाशश्लेषौ तथापि प्रारब्धयोरस्ति तयोस्तापकत्वमित्याशङ्क्याह। शरीरेति॥ प्रकृतं विद्याफलमुपसंहरति। अत इति॥ कर्म्मकार्य्यसम्बन्धादिति यावत्॥ उक्ते विद्याफले मन्त्रं संवादयति। तदेतदिति॥ एष नित्यो महिमेत्यत्र नित्यत्वमुपपादयति। अन्ये त्विति॥ तद्विलक्षणत्वमकर्म्मकृतत्वं॥ अकर्म्मकृतो महिमा स्वाभा-

उ॰ द्वित्तं विदित्वा न लिप्यते कर्म्मणा पापकेनेति तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्व्वमात्मानं

---

भा॰ लक्षणेन हृतेन वृद्धिलक्षणां विक्रियां न प्राप्नोति । यथा शुभेन कर्म्मणा नो कनीयानाप्यपचयलक्षणां विक्रियां प्राप्नोति । उपचयापचयहेतुभूता एव हि सर्व्वा विक्रिया इत्येताभ्यां प्रतिषिध्यन्ते । अतोऽविक्रियत्वान्नित्य एव महिमा । तस्मात्तस्यैव महिम्नः स्यात्भवेत्पदवित्पदस्य वेत्ता । पद्यते गम्यते ज्ञायत इति । महिम्नः स्वरूपमेव पदं । तस्य पदस्य वेदिता । किं तत्पदवेदनेन स्यादित्युच्यते । तं विदित्वा महिमानं न लिप्यते न सम्बध्यते कर्म्मणा पापकेन धर्म्माधर्म्मलक्षणेनोभयमपि पापकमेव विदुषः । यस्मादेवमकर्म्मसम्बन्ध्येष ब्राह्मणस्य महिमा नेति नेत्यादिलक्षणस्तस्मादेवंविच्छान्तो बाह्येन्द्रियव्यापारत उपशान्तः । तथा दान्तोऽन्तःकरणतृष्णातो निवृत्तः । उपरतः सर्व्वैषणाविनिर्म्मुक्तः सन्न्यासी ।

---

आ॰ विकलत्वमसिद्धमित्याशङ्क्याह । कुतोऽस्येति । वृद्धिरपक्षयश्चेति विक्रियाद्वयाभावेऽपि विक्रियान्तराणि भविष्यन्तीत्याशङ्क्याह । उपचयेति । एताभ्यां निषेधाभ्यामिति यावत् । आत्मनः सर्व्वविक्रियाराहित्ये फलितमाह । अत इति । तस्य नित्यत्वेऽपि किन्तदाह । तस्मादिति । अधर्म्मलक्षणेनेति वक्तव्ये किमिदं धर्म्माधर्म्मलक्षणेनेत्युक्तमत आह । उभयमपीति । संसारहेतुत्वाविशेषादित्यर्थः । तस्मादित्यादिवाक्यं व्याचष्टे । यस्मादिति । एवंविदात्मा कर्म्मतत्फलसन्दर्भशून्य इत्यापाततो जानन्नित्यर्थः । विशेषणाभ्यामुत्सर्गतो विहितस्योभयविधकरणव्यापारोपरमस्य

उ॰ पश्यति नैनं पाप्मा तरति सर्व्वं पाप्मानं तरति नैनं पाप्मा तपति सर्व्वं पाप्मानं तपति विपापो

---

भा॰ तितिक्षुर्द्वन्द्वसहिष्णुः। समाहित इन्द्रियान्तःकरणचलनरूपाद्व्यावृत्त्यैकाग्र्यरूपेण समाहितो भूत्वा। तदेतदुक्तं पुरस्ताद्बाल्यञ्च पाण्डित्यञ्च निर्व्विद्येति। आत्मन्येव स्वकार्य्यकरणसङ्घात आत्मानं प्रत्यक्चेतयितारं पश्यति। तत्र किं तावन्मात्रपरिच्छिन्नं नेत्युच्यते। सर्व्वं समस्तमात्मानमेव पश्यति नान्यदात्मव्यतिरिक्तं वालाग्रमात्रमप्यस्तीत्येवं पश्यति। मननान्मुनिर्भवति जाग्रत्स्वप्नसुषुप्ताख्यं स्थानत्रयं हित्वा। एवं पश्यन्तं ब्राह्मणं नैनं पाप्मा पुण्यपापलक्षणस्तरति न प्राप्नोति। अयन्तु ब्रह्मवित्सर्व्वं पाप्मानं तरत्यात्मभावेनैव व्याप्नोत्यतिक्रामति। न चैनं पाप्मा कृताकृतलक्षणस्तपति। इष्टफलप्रत्यवायोत्पादनाभ्यां सर्व्वं पाप्मानमयं तपति। ब्रह्मवित्सर्व्वात्मदर्शनवह्निना भस्मीकरोति। स एष एवं-

---

आ॰ यावज्जीवादिश्रुतिविहितं कर्म्मापवादस्तस्मादित्यस्यापि न नित्यादित्यागः॥ उत्सर्गस्यापवादेन बाधः कस्य न सम्भव इत्यादिन्यायादित्याशङ्क्याह। उपरत इति॥ जीवनविच्छेदव्यतिरिक्तशीतादिसहिष्णुत्वं तितिक्षुत्वं। यत्र कर्त्तुं शक्तत्वं तेषां कर्म्मणां निवृत्तिः शमादिपदैः उक्ता। यत्र सम्यग्धीविरोधिनि निद्रालस्यादौ पुंसो न शक्तत्वं तन्निवृत्तिः समाधानं। समाहितो भूत्वा पश्यतीति सम्बन्धः॥ पश्यतीति वर्त्तमानापदेशात्त्रयं विशेषणेषु सङ्क्रमितो विधिरित्याशङ्क्याह। तदेतदिति॥ यथोक्तैः साधनैर्वादितायां विद्यायां किं स्यादित्याशङ्क्याह। एवमिति॥ तस्य पुण्यपापसंस्पर्शे हेतुमाह। अयन्त्विति॥ इतश्च विदुषो न कर्म्मवद-

उ० विरजो विचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भग-

---

भा० विद्धपापो विगतधर्म्माधर्म्मो विरजो विगतरजो रजःकामो विगतःकामः। अविचिकित्सश्छिन्नसंशयोऽहमस्मि सर्व्वात्मा परब्रह्मेति निश्चितमतिः ब्राह्मणो भवति। अयन्त्वेवम्भूत एतस्यामवस्थायां मुख्यो ब्राह्मणः प्रागेतस्माद्ब्रह्मस्वरूपावस्थानाद्गौणमस्य ब्राह्मण्यं। एष ब्रह्मलोको ब्रह्मैव लोको ब्रह्मलोको मुख्यो निरुपचरितः सर्व्वात्मभावलक्षणः॥

हे सम्राट् एनं ब्रह्मलोकं परिप्रापितोऽस्य भयं नेति नेत्यादिलक्षणमिति होवाच याज्ञवल्क्यः। एवं ब्रह्मभूतो जनको याज्ञवल्क्येन ब्रह्मभावमापादितः प्रत्याह। सो ऽहं त्वया ब्रह्मभावमापादितः सन् भगवते तुभ्यं विदेहा-

---

आ० सम्बन्धोऽस्तीत्याह। न चैनमिति॥ किमिति पाप्मा ब्रह्मविदं न तपतीत्याशङ्क्याह। सर्व्वमिति॥ कथं ब्राह्मणो भवतीत्यपूर्व्ववदुच्यते। प्रागपि ब्राह्मण्यस्य सत्त्वादित्याशङ्क्याह। अयन्त्विति॥ मुख्यत्वमबाधितत्वं॥ समस्तां विद्यां मन्त्रब्राह्मणाभ्यामुपदिश्योपसंहरति। एष इति॥ तत्र कर्म्मधारयसमासं सूचयति। ब्रह्मैवेति॥

तथाविधसमासपरिग्रहे प्रकरणमनुग्राहकमभिप्रेत्याह। मुख्य इति॥ तथापि किमसिद्धमिति तदाह। एनमिति॥ आत्मीयं विद्यालाभं द्योतयितुं राज्ञो वचनमित्याह। एवमिति॥ सति वक्तव्यशेषे कथमित्थं राज्ञो वचनमित्याशङ्क्याह। परिसमापितेति॥ तथापि परपुरुषार्थस्य वक्तव्यत्वमाशङ्क्याह। समाप्त इति॥ कर्त्तव्यान्तरं वक्तव्यमस्तीत्याशङ्क्याह। एतावदिति॥ तथापि यत्र निष्ठा कर्त्तव्या तद्वाच्यमित्याशङ्क्याह। एषेति॥

उ॰ वते विदेहान् ददामि माञ्चापि सह दास्यायेति ॥ २३ ॥

स वा एष महानज आत्माऽन्नादो वसुदानो विन्दते वसु य एवंवेद । २४ ।

---

भा॰ विदेहान् मम राज्यं ददामि । मां च सह विदेहैर्दासाय दासकर्म्मणे ददामीति वाक्यशेषः समध्यते। परिसमापिता ब्रह्मविद्या सह सन्न्यासेन साङ्गा सेति कर्त्तव्यताका। परिसमाप्तः परमः पुरुषार्थः । एतावत्पुरुषेण कर्त्तव्यमेषा निष्ठा एषा परागतिरेतन्निःश्रेयसमेतत्प्राप्य कृतकृत्यो ब्राह्मणो भवत्येतत्सर्व्ववेदानुशासनमिति ॥ २३ ॥

योऽयं जनकयाज्ञवल्क्याख्यायिकायां व्याख्यात आत्मा स वै एष महानज आत्मा अन्नादः सर्व्वभूतस्थः सर्व्वान्नानामत्ता वसुदानो वसु धनं सर्व्वप्राणिकर्म्मफलं तस्य दाता प्राणिनां यथा कर्म्मफलेन योजयितेत्यर्थः। तमेतम-

---

आ॰ तथापि परमा निष्ठाऽस्तीति चेन्नेत्याह । एषेति । निश्चितश्रेयोऽन्यदस्तीत्याशङ्क्याह । एतदिति । तथापि कृतकृत्यतया मुख्यब्राह्मण्यसिद्ध्यर्थं वक्तव्यान्तरमस्तीत्याशङ्क्याह । एतत्प्राप्येति । किमस्यां प्रतिष्ठायां परम्परायां नियामकमित्याशङ्क्याह। एतदिति। निरुपाधिकब्रह्मज्ञानात्कैवल्यमिति समर्थितुमितिशब्दः । २३ ।

सम्प्रति सोपाधिकब्रह्मध्यानादभ्युदयं दर्शयति । योऽयमित्यादिना । ईश्वरश्चेत्प्राणिभ्यः कर्म्मफलं ददाति तर्हि तस्य वैषम्यनैर्घृण्ये स्यातामित्याशङ्क्याह । प्राणिनामिति। उपास्यस्वरूपं दर्शयित्वा तदुपासनं सफलं दर्शयति । तमेवमिति । सर्व्वात्मत्वफलमुपासनमुक्त्वा पक्षान्तरमाह । अथवेति । दृष्टं फलमन्ना-

उ॰ स वा एष महानज आत्माऽजरोऽमरोऽमृतो

भा॰ अन्नादं वसुदानमात्मानमन्नादवसुदानगुणाभ्यां युक्तं यो वेद सर्व्वभूतेष्वात्मभूतोऽन्नमत्ति विन्दते च वसु सर्व्वं कर्म्मफलजातं लभते सर्व्वात्मत्वादेव । य एवं यथोक्तं वेद । अथवा दृष्टफलार्थिभिरप्येवंगुण उपास्यः । तेनान्नादो वसोश्च लब्धा दृष्टेनैव फलेनान्नात्तृत्वेन गोअश्वादिना चास्य योगो भवतीत्यर्थः ॥ २४ ॥

इदानीं समस्तस्यैवारण्यकस्य योऽर्थ उक्तः स समुच्चित्यास्यां कण्डिकायां निर्दिश्यते । एतावान्समस्तारण्यकार्थ इति । स वा एष महानज आत्माऽजरो न जीर्य्यत इति न विपरिणमत इत्यर्थः । अमरो यस्माच्चाजरस्तस्मादमरो न म्रियत इत्यमरो यो हि जायते जीर्य्यते च स विनश्यति म्रियते वा । अयन्त्वजत्वादजरत्वाच्चाविनाशी यतोऽत एवामृतः । यस्माज्जनिप्रभृतिभिस्त्रिभिस्त्रिभिर्भावvi-

आ॰ त्तृत्वं धनलाभश्च ॥ उक्तगुणकमीश्वरं ध्यायतः फलमाह । तेनेति ॥ तदेव फलं स्फुटयति । दृष्टेनेति ॥ २४ ॥

अन्नात्तृत्वं दीप्ताग्नित्वं निरुपाधिकब्रह्मध्यानान्मुक्तिरुक्ता । सोपाधिकब्रह्मध्यानाच्चाभ्युदय उक्तस्तथा च किमुत्तरकण्डिकयेत्याशङ्क्याह ॥ इदानीमिति ॥ अजत्वाच्चाविनाशीति वक्तुं चशब्दः ॥ कथं जन्मजराभावयोरमरत्वाविनाशित्वसाधकत्वं तदाह । यो हीति ॥ अयन्त्वजत्वाच्चाविनाशी अजरत्वाच्चामरोऽमरत्वाच्चाविनाशीति योजना ॥ मरणायोग्यत्वमुपजीव्य मरणकार्य्यत्वाभावं दर्शयति । अत एवेति ॥ जन्मापक्षयविनाशानामेव भावविकाराणामिह मुखतो निषेधाद्वृद्ध्यादीनि विकारान्तराण्यात्मनि भविष्यन्तीति विशेषनिषेधस्य शेषाभ्यनुज्ञापरत्वादित्याशङ्क्याह । यस्मादिति ॥

उ० ऽभयो ब्रह्माभयं वै ब्रह्माभयꣳ हि वै ब्रह्म भवति य एवं वेद ॥ २५ ॥ चतुर्थं ब्राह्मणं ॥ ४ ॥

---

भा० कारैर्वर्जितस्तस्मादितरैरपि भावविकारैस्त्रिभिस्तत्कृतैश्च कामकर्ममोहादिभिर्मृत्युरूपैर्वर्जित इत्येतदभयोऽत एव। यस्माच्चैवं पूर्वोक्तविशेषणस्तस्माद्भयवर्जितः। भयं हि नामाविद्याकार्य्यं तत्कार्य्यप्रतिषेधेन भावविकारप्रतिषेधेन चाविद्यायाः प्रतिषेधः सिद्धो वेदितव्यः। अयमभय आत्मैवंगुणविशिष्टः किमसौ ब्रह्म परिवृढं निरतिशयं महदित्यर्थः। अभयं वै ब्रह्म। प्रसिद्धमेतल्लोकेऽभयं ब्रह्मेति। तस्माद्युक्तमेवंगुणविशिष्ट आत्मा ब्रह्मेति। य एवं यथोक्तमात्मानमभयं ब्रह्म वेद सोऽभयं हि वै ब्रह्म भवति। एष सर्व्वस्या उपनिषदः सङ्क्षिप्तोऽर्थ उक्तः। एतस्यैवार्थस्य सम्यक् प्रबोधायोत्पत्तिस्थितिप्रलयादिकल्पना क्रियाकारकफलाध्यारोपणा चात्मनि कृता तदपोहेन च नेति नेत्य-

---

आ० इतरे सत्त्वविवृद्धिपरिणामाः॥ अत एवाभय इत्युक्तं विवृणोति। यस्माच्चेति॥ किन्तद्भयं तदाह। भयं चेति॥ अविद्यानिषेधि-विशेषणाभावादात्मानं सा सदा स्पृशतीत्याशङ्क्याह। तत्कार्य्येति॥ विशेषणान्तरं प्रश्नपूर्व्वकमुत्थाप्य व्याकरोति। अभय इति॥ कथं पुनरभयगुणविशिष्टस्यात्मनो ब्रह्मत्वं तदाह। अभयमिति॥ वैशब्दार्थमाह। प्रसिद्धमिति॥ लोकशब्दः शास्त्रस्याप्युपलक्षणं। वेद्यस्वरूपमुक्त्वा विद्याफलं कथयति। य एवमिति॥ ब्राह्मणार्थमुपसंहरति। एष इति॥ कल्पादेरपि तदर्थत्वात्तन्निमित्तत्वाविरु-द्धोपसंह्रियते तत्राह। एतस्येति॥ कल्पादेरारोपितत्वे गमकमाह। तदपोहेनेति॥ तच्छब्दः कल्पादिप्रपञ्चविषयः। तदपोहेनेति

भा॰ध्यारोपितविशेषापनयनद्वारेण पुनस्तत्त्वमावेदितं । यथा एकप्रभृत्यापरार्द्धं सङ्ख्यास्वरूपपरिज्ञानाय रेखाध्यारोपणं कृत्वा एकेयं रेखा दशेयं शतेयं सहस्रेयमिति ग्राहयत्यवगमयति सङ्ख्यास्वरूपं केवलं न तु सङ्ख्याया रेखात्मत्वमेव । यथा चाकारादीन्यक्षराणि विजिग्राहयिषुः पत्रमषीरेखादिसंयोगोपायमास्थाय वर्णानां सतत्त्वमावेदयति न पत्रमष्याद्यात्मतामक्षराणां ग्राहयति तथा चेहोत्पत्त्याद्यनेकोपायमास्थायैकं ब्रह्मतत्त्वमावेदितं । पुनस्तत्कल्पितोपायजनितविशेषपरिशोधनार्थं नेति नेतीति तत्त्वोपसंहारः कृतस्तदुपसंहृतं पुनः परिशुद्धं केवलमेव सफलं ज्ञानमन्तोऽस्यां कण्डिकायामिति ॥ २५ ॥ इति वृहदारण्यकभाष्ये षष्ठाध्यायस्य चतुर्थं ब्राह्मणं ॥ ४ ॥

---

आ॰ युक्तं ॥ तदेव स्फुटयति । नेतीति ॥ अध्यारोपापवादन्यायेन तत्त्वस्यावेदितत्वादारोपितं भवत्येव कृष्णादिद्वैतमित्यर्थः ॥ अध्यारोपापवादन्यायस्य यत्नप्रयुक्तत्वमन्यायविरुद्धत्वात्तत्त्वं निर्णीतं चेत्तदेवोच्यतां कथं कृष्णादिद्वैतारोपणेनेत्याशङ्क्याह । यथेति ॥ उदाहरणान्तरमाह । यथा चेति ॥ दृष्टान्तद्वयमनूद्य दार्ष्टान्तिकमाचष्टे । तथाचेति ॥ इहेति मोक्षशास्त्रोक्तिः ॥ तथापि कल्पितप्रपञ्चसम्बन्धप्रयुक्तं सविशेषत्वं ब्रह्मणः स्यादित्याशङ्क्याह । पुनरिति ॥ तस्मिन्नात्मनि कल्पितः कृष्णादिरुपायस्तेन जनितो विशेषस्तस्मिन्नारब्धत्वादिस्तस्य निरासार्थमिति यावत् । तर्हि द्वैताभावविशिष्टं तत्त्वमिति चेन्नेत्याह । तदुपसंहृतमिति ॥ परिशुद्धं भाववदभावेनापि न संस्पृष्टमित्यर्थः । केवलमित्यद्वितीयोक्तिः ॥ कृष्णादिवचनस्य गतिमुक्त्वा प्रकृतमुपसंहरति । सफलमिति ॥ इतिशब्दः सङ्ग्रहसमाप्त्यर्थो ब्राह्मणसमाप्त्यर्थो वा ॥ ॥ २५ ॥ इति षष्ठे प्रपाठके शारीरकब्राह्मणं चतुर्थं ॥ ४ ॥

उ॰ अथ ह याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी

---

भा॰ आगमप्रधानेन मधुकाण्डेन ब्रह्मकाण्डेन ब्रह्मतत्त्वं निर्द्धारितं। पुनस्तस्यैवोपपत्तिप्रधानेन याज्ञवल्कीयेन काण्डेन पक्षप्रतिपक्षपरिग्रहं कृत्वा विगृह्य वादेन विचारितं। शिष्याचार्य्यसम्बन्धेन च षष्ठे प्रश्नप्रतिवचनन्यायेन सविस्तरं विचार्य्योपसंहृतं। अथेदानीं निगमनस्थानीयं मैत्रेयीब्राह्मणमारभ्यते। अयञ्च न्यायो वाक्यकोविदैः परिगृहीतो हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनमिति। अथवा ऽऽगमप्रधानेन मधुकाण्डेन यदमृतत्वसाधनं ससन्न्यासमात्मज्ञानमभिहितं तदेव तर्केणाप्यमृतत्वसाधनं ससन्न्यासमात्मज्ञानमधिगम्यते। तर्कप्रधानं हि याज्ञवल्कीयं काण्डं। तस्माच्छास्त्रतर्काभ्यां निश्चितमेतद्यदेतदात्मज्ञानं ससन्न्यासममृतत्वसाधनमिति। तस्मा-

---

आ॰ समाप्ते शारीरके ब्राह्मणे वंशब्राह्मणं व्याख्यातव्यं कृतं सतार्थेन मैत्रेयीब्राह्मणेनेत्याशङ्क्य मधुकाण्डार्थमनुवदति। आगमेति॥ पाण्डित्यमर्थमनुभाषते। पुनरिति॥ तस्यैव ब्रह्मणस्तत्त्वमिति शेषः। विगृह्य वादो जयपराजयप्रधानो जल्पन्यायः॥ षष्ठे प्रतिष्ठापितमनुवदति। शिष्येति॥ प्रश्नप्रतिवचनन्यायस्तत्त्वनिर्णयप्रधानो वादः। उपसंहृतं तदेव तत्त्वमिति शेषः॥ सम्प्रत्युत्तरब्राह्मणस्यावसरतार्थत्वमाह। अथेति॥ आगमोपपत्तिभ्यां निश्चिते तत्त्वे निगमनमकिञ्चित्करमित्याशङ्क्याह। अयञ्चेति॥ प्रकारान्तरेण सङ्गतिमाह। अथवेति॥ कथमिह तर्केणाधिगतिस्तत्राह। तर्केति॥ मुनिकाण्डस्य तर्कप्रधानत्वे किं स्यात्तदाह। तस्मादिति॥ इति

उ॰ बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्यो ऽन्यद्वृत्तमुपाकरिष्यन् ॥ १ ॥

---

भा॰ शास्त्रश्रद्धावद्भिरन्यतन्त्रप्रतिपित्सुभिरेतत्प्रतिपत्तव्यमिति । आगमोपपत्तिभ्यां हि निश्चितोऽर्थः श्रद्धेयो भवत्यव्यभिचारादिति । वाक्याक्षराणान्तु चतुर्थे यथा व्याख्यातो ऽर्थस्तथा प्रतिपत्तव्यो ऽत्रापि यान्यक्षराणि व्याख्यातानि तानि व्याख्यास्यामः । अथेति हेत्वपदेशानन्तर्यप्रदर्शनार्थः । हेतुप्रधानानि हि वाक्यान्यतीतानि । तदनन्तरमागमप्रधानेन प्रतिज्ञातोऽर्थो निगम्यते मैत्रेयीब्राह्मणेन । ह शब्दो वृत्तावद्योतकः । याज्ञवल्क्यस्यर्षेः किल द्वे भार्य्ये पत्न्यौ बभूवतुरास्तां मैत्रेयी च नामत एका ऽपरा कात्यायनी नाम । तयोर्भार्य्ययोर्मैत्रेयी ह किल इति ब्रह्मवादिनी ब्रह्मवदनशीला बभूव आसीत् । स्त्रीप्रज्ञा स्त्रियां योचिता सा

---

आ॰ भवतीति शेषः । शास्त्रादिना यथोक्तस्य ज्ञानस्य निश्चितत्वेऽपि किं सिध्यति तदाह । तस्माच्छ्रद्धावद्भिरिति । एतच्छब्दो यथोक्तज्ञानपरामर्शार्थं इति । सिध्यतीति शेषः । तत्र हेतुमाह । आगमेति । अव्यभिचारान्मानयुक्तिगम्यस्यार्थस्य तथैव सत्त्वादिति यावत् । इतिशब्दो ब्राह्मणसङ्गतिसमाप्त्यर्थः । तात्पर्य्यार्थे व्याख्याते सत्यक्षरव्याख्यानप्रसक्तावाह । अक्षराणान्त्विति । तर्हि ब्राह्मणेऽस्मिन्वक्तव्याभावात् परिसमाप्तिरेवेत्याशङ्क्याह । यानीति । ननु वाक्यानि पूर्वं न व्याख्यातानि न हेतुव्यपदिष्टत्वात्कथं तदुपदेशानन्तर्यं ससन्न्यासस्यामृतत्वहेतोरात्मज्ञानस्याथशब्देन द्योत्यते तत्राह । हेतुप्रधानानीति । तदेव वृत्तं वक्ति । याज्ञ-

उ० मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति ॥ २ ॥ सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यान्न्वहं तेनामृताऽऽहो नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितꣳस्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥ ३ ॥

---

भा० स्त्रीप्रज्ञैव यस्याः प्रज्ञा गृहप्रयोजनान्वेषणालक्षणा सा स्त्रीप्रज्ञा एव तर्हि तस्मिन् काले आसीत्कात्यायनी अथैवं सति ह किल याज्ञवल्क्यः पूर्व्वस्माद्गार्हस्थ्यलक्षणाद्वृत्तात् पारिव्राज्यलक्षणं वृत्तमुपाकरिष्यन्नुपाचिकीर्षुः सन् ॥ १ ॥

हे मैत्रेयीति ज्येष्ठां भार्य्यामामन्त्रयामास । आमन्त्र्य चोवाच ह प्रव्रजिष्यन्पारिव्राज्यं करिष्यन्वा अरे मैत्रेयि अस्मात्स्थानाद्गार्हस्थ्यादहमस्मि भवामि । मैत्रेय्यनुजानीहि मां हन्तेच्छसि यदि तेऽनया कात्यायन्यान्तं करवाणीत्यादि व्याख्यातमन्यत् ॥ २ ॥ सैवमुक्तोवाच मैत्रेयी । सर्व्वेयं पृथिवी वित्तेन पूर्णा स्यान्नु किं स्यां किमहं वित्तसाध्येन कर्म्मणा अमृता आहो न स्यामिति । नेति होवाच याज्ञ-

---

आ० वल्कस्येति । अथेत्यस्यार्थमाह । एवं सतीति । भार्य्याद्वये दर्शितरीत्या स्थिते स्वस्य च वैराग्यातिरेके सतीति यावत् । १ ।

तस्या ब्रह्मवादित्वं तदामन्त्रणद्वारेण ताभ्यामेव संवादे हेतूकर्त्तव्यं । तस्या ब्रह्मवादित्वं द्योतयितुमिच्छसि यदीत्युक्तं । मैत्रे-

उ० सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्य्यां यदेव भगवान्वेत्थ तदेव मे विब्रूहीति ॥ ४ ॥ स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियमवृधद्धन्त तर्हि भवत्येतद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ५ ॥

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियम्भवत्यात्मनस्तु कामाय

---

भा० वल्क्य इत्यादि। समानमन्यत् ॥ २ ॥ ४ ॥ स होवाच प्रियैव पूर्व्वं खलु नोऽस्मभ्यं भवती भवन्ती सती प्रियमेवावृधद्वर्द्धितवती निर्द्धारितवत्यसि । अतस्तुष्टोऽहं हन्तेच्छसि चेदमृतत्वसाधनं ज्ञातुं हे भवति ते तुभ्यं तदमृतत्वसाधनं व्याख्यास्यामि ॥ ५ ॥

आत्मनि खलु अरे मैत्रेयि दृष्टे कथं दृष्ट आत्म-

---

आ० यो त्वमृतत्वमाशंसितामात्मनो दर्शयति । सैवमिति ॥ गुरुप्रसादाधीना विद्याप्राप्तिरिति द्योतनार्थमाह । स होवाचेति ॥ ज्ञानेच्छादुर्लभताद्योतनाय चेदित्युक्तं ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

व्याख्यानप्रकारमेवाह । आत्मनीति ॥ दृष्टे सर्व्वमिदं विदितं

उ॰ वित्तं प्रियं भवति। न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति। न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति। न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति। न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति। न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति। न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति। न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति। न वा अरे सर्व्वस्य कामाय सर्व्वं प्रियं भवत्यात्मनस्तु कामाय सर्व्वं प्रियं भवति।

---

भा॰ तीत्युच्यते। पूर्व्वमाचार्य्यागमाभ्यां श्रुते पुनस्तर्केणोपपत्त्या मते विचारिते। श्रवणन्त्वागममात्रेण। मते उपपत्त्या। पश्चाद्विज्ञाते। एवमेतन्नान्यथेति निर्द्धारिते किं भवतीत्युच्यते।

---

आ॰ भवतीत्युत्तरस्य सम्बन्धः। येनोपायेनात्मनि दृष्टे सर्व्वं दृष्टं भवती-त्युपायं पृच्छति। कथमिति। आत्मदर्शनोपायं श्रवणादिकं दर्शयन्नुत्तरमाह। उच्यत इति। उक्तोपायफलं प्रश्नपूर्व्वकमाह। किमित्यादिना। इदं सर्व्वमित्यनूद्य तस्यार्थमाह। यदात्मनो

उ॰ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदि-
ध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते
विज्ञात इदꣳ सर्वं विदितं ॥ ६ ॥ ब्रह्म तं परा-
दाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्यो
ऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रा-
त्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो
देवान्वेद वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान्वेद
भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद
सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं
क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि
सर्वाणि भूतानीदꣳ सर्वं यदयमात्मा ॥ ७ ॥
स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छ-
क्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य
वा शब्दो गृहीतः ॥ ८ ॥ स यथा शङ्खस्य ध्माय-
मानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य

---

भा॰ इदं सर्वं विदितं भवति इदं सर्वमिति यदात्मनोऽन्य-
दात्मव्यतिरेकेणाभावात् ॥ ६ ॥ ७ ॥ चतुर्थे शब्दनिश्वा-
सेनैव लोकाद्यर्थनिश्वासः सामर्थ्याद्युक्तो भवतीति पृथ-

---

आ॰ ऽन्यदिति । तदात्मनि दृष्टे दृष्टं स्यादिति शेषः । कथमन्यस्मि-
न्दृष्टे सत्यन्यद्दृष्टं भवति तत्राह । आत्मव्यतिरेकेणेति । स
यथाग्नेर्धामेरित्यादाविष्टं कृतमित्याद्यधिकं दृष्टं तस्यार्थमाह ।

उ॰ तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ९ ॥ स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ १० ॥ स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टꣳ हुतमाशितं पायितमयञ्च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निश्वसितानि ॥ ११ ॥ स यथा सर्वासामपाꣳ समुद्र एकायनमेवꣳ सर्वेषाꣳ स्पर्शानां त्वगेकायनमेवꣳ सर्वेषाꣳ रसानां

---

भा॰ श्लोकः । इह तु सर्वशास्त्रार्थोपसंहार इति कृत्वार्थप्राप्तोऽप्यर्थः स्पष्टीकर्त्तव्य इति पृथगुच्यते ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

सर्वकार्य्यप्रलये विद्यानिमित्ते सैन्धवघनवदनन्तरोबाह्यः कृत्स्नः प्रज्ञानघन एक आत्मावतिष्ठते । पूर्वं तु

---

आ॰ चतुर्थ इति । सामर्थ्यादर्थशून्यस्य शब्दस्यानुपपत्तेरित्यर्थः ॥ नन्वत्रापि सामर्थ्याविशेषात्पृथगुक्तिरयुक्तेत्याशङ्क्याह । इह त्विति ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

स यथा सैन्धवघन इत्यादिवाक्यतात्पर्य्यमाह । सर्वकार्य्येति ॥

उ॰ जिह्वैकायनमेवꣳ सर्व्वेषां गन्धानां नासिकैका-यनमेवꣳ सर्व्वेषाꣳ रूपाणां चक्षुरेकायनमेवꣳ सर्व्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्व्वेषाꣳ सङ्कल्पानां मन एकायनमेवꣳ सर्व्वासां विद्यानाꣳ हृदयमेकायनमेवꣳ सर्व्वेषां कर्म्मणाꣳ हस्ता-वेकायनमेवꣳ सर्व्वेषामानन्दानामुपस्थ एकाय-नमेवꣳ सर्व्वेषां विसर्गाणाꣳ पायुरेकायनमे-वꣳ सर्व्वेषामध्वनां पादावेकायनमेवꣳ सर्व्वेषां वेदानाꣳ वागेकायनं ॥ १२ ॥ स यथा सैन्धव-घनोऽनन्तरोऽवाह्यः कृत्स्नो रसघन एवैवं वा

---

भा॰ भूतमात्रासंसर्गविशेषाल्लब्धविशेषविज्ञानस्तस्मिन्प्रविलापिते विद्यया विशेषविज्ञाने तन्निमित्ते च भूतसंसर्गे न प्रेत्य-सञ्ज्ञाऽस्तीत्येवं याज्ञवल्क्येनोक्ता ॥ १२ ॥ १३ ॥ सा होवाचात्रैव मा भगवानेतस्मिन्नेव वस्तुनि प्रज्ञानघन एव न प्रेत्य सञ्ज्ञाऽस्तीति मोहान्तं मोहमध्यं आपीपिपदपतङ्क-मितवानसि सम्मोहितवानसीत्यर्थः । अतो न वै अहमिम-मात्मानमुक्तलक्षणं विजानामि विवेकत इति । स होवाच नाहं मोहं ब्रवीमीत्याह याज्ञवल्क्यः । अविनाशी वा अरे-

---

आ॰ एतेभ्यो भूतेभ्य इत्यादेरर्थमाह । पूर्व्वमिवेति । ज्ञानोदयात्प्राग-वस्थायामित्यर्थः । लब्धविशेषज्ञानः सम्व्यवहरतीति शेषः । प्रविलापिते तस्येत्यध्याहारः । पूर्व्वोत्तरविरोधं मन्वाना परि-

उ॰ अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य सञ्ज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १३ ॥ सा होवाच मैत्रेय्यत्रैव मा भगवान्मोहान्तमापीपिपन्न वा अहमिमं विजानामीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्म्मा ॥ १४ ॥ यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरꣳ

---

भा॰ ऽयमात्मा यतो विनष्टुं शीलमस्येति विनाशी न विनाशविनाशी विनाशशब्देन विक्रियात्मा अविनाशीत्यविक्रिय आत्मेत्यर्थः । अरे मैत्रेय्ययमात्मा प्रकृतोऽनुच्छित्तिधर्म्मा उच्छित्तिरुच्छेदः उच्छेदोऽन्तो विनाश उच्छित्तिधर्म्मोऽस्येत्युच्छित्तिधर्म्मा नोच्छित्तिधर्म्मा अनुच्छित्तिधर्म्मा नापि विक्रियालक्षणो नाप्युच्छेदलक्षणो विनाशोऽस्य विद्यत इत्यर्थः ॥ १४ ॥

चतुर्ष्वपि प्रपाठकेष्वेक आत्मा तुल्यो निर्द्धारितः परं ब्रह्म । उपायविशेषस्तु तस्याधिगमे अन्यश्चान्यश्चोपेयस्तु

---

आ॰ हरति । सा होवाचेत्यादिना । अविनाशित्वं पूर्व्वत्र हेतुरित्याह यत इति ॥ १२ ॥ १३ ॥ १४ ॥

प्रत्यध्यायमन्यथा प्रतिपादनादात्मनः सविशेषत्वमाशङ्क्य स एष इत्यादेस्तात्पर्य्यमाह । चतुर्ष्वपीति । येन प्रकारेण तस्य

उ० रसयते तदितर इतरमभिवदति तदितर इतरꣳ शृणोति तदितर इतरं मनुते तदितर इतरꣳ स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्व्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कꣳ रसयेत्तत्केन कमभिवदेत्तत्केन कꣳ शृणुयात्तत्केन कं मन्वीत तत्केन कꣳ स्पृशे-त्तत्केन कं विजानीयाद्येनेदꣳ सर्व्वं विजानाति तं

---

भा० स एव आत्मा यश्चतुर्थेऽथात आदेशो नेति नेतीति निर्दिष्टः। स एव पञ्चमे प्राणपणोपन्यासेन शाकल्य-याज्ञवल्क्यसंवादे निर्द्धारितः। पुनः पञ्चमसमाप्तौ पुनर्ज-नकयाज्ञवल्क्यसंवादे। पुनरिहोपनिषत्समाप्तौ चतुर्णामपि प्रपाठकानामेतदात्मनिष्ठता नान्योऽन्तराले कश्चिदपि विवक्षितोऽर्थ इत्येतत्प्रदर्शनायान्त उपसंहारः स एष नेति नेतीत्यादिः। यस्मात्प्रकारशतेनापि निरूप्यमाणे तत्त्वे नेति नेत्यात्मैव निष्ठा नान्योपलभ्यते तर्केण वागमेन

---

आ० तुल्यत्वमित्याशङ्क्याह। परं ब्रह्मेति॥ अध्यायभेदस्तर्हि कथ-मित्याशङ्क्याह। उपायेति॥ उपायभेदवदुपेयभेदोऽपि स्यादि-त्याशङ्क्याह। उपेयस्त्विति॥ चातुर्थिकादर्थात्पाञ्चमिकस्यार्थस्य भेदं व्यावर्त्तयति। स एवेति॥ प्राणपणोपन्यासेन मूर्द्धा ते विपतिष्यतीति मूर्द्धपातोपन्यासात्प्राणः पणत्वेन दृष्टीव इति गम्यते। तेन शाकल्यब्राह्मणेन निर्विशेषः प्रत्यगात्मा निर्द्धारित इत्यर्थः॥ विज्ञानमानन्दं ब्रह्मेत्यादावुक्तं स्मारयति। पुनरिति॥ पञ्चमसमाप्तौ पुनर्विज्ञानमित्यादिना स एव निर्द्धारित इति

उ॰ केन विजानीयात्स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ॥ १५ ॥ पञ्चमं ब्राह्मणं ॥ ५ ॥

---

भा॰वा तस्मादेतदेवामृतत्वसाधनं यदेतन्नेति नेत्यात्मपरिज्ञानं सर्व्वसन्न्याससहितमित्येतमर्थमुपसंजिहीर्षन्नाह एतावदेतावन्मात्रं यदेतन्नेति नेत्यद्वैतादयात्मदर्शनमिदञ्चान्यसहकारिकारणनिरपेक्षमेव। अरे मैत्रेय्यमृतत्वसाधनं यत्पृष्टवत्यसि यदेव भगवान्वेत्थ तदेव मे ब्रूह्यमृतत्वसाधनमिति। तदेतावदेवेति विज्ञेयं त्वयेति हैवं किलामृतत्वसाधनमात्मज्ञानं प्रियायै भार्य्यायै उक्त्वा याज्ञवल्क्यः किं कृतवान् यत्पूर्व्वं प्रतिज्ञातं प्रव्रजिष्यन्नस्मीति तच्चकार विजहार

---

आ॰ योजना ॥ पूर्व्वब्राह्मणादावपि स एवोक्त इत्याह। पुनर्जनकेति ॥ अस्मिन्नपि ब्राह्मणे स एवोक्त इत्याह। पुनरिहेति ॥ किमिति पूर्व्वत्र तत्र तत्रोक्तस्य निर्विशेषस्यात्मनोऽवसाने वचनमित्याशङ्क्याह। चतुर्णामपीति ॥ पौर्व्वापर्य्यपर्य्यालोचनायामुपनिषदर्थो निर्विशेषमात्मतत्त्वमित्युपपाद्य वाक्यान्तरमवतार्य्य व्याकरोति। यस्मादित्यादिना ॥ इति होक्तेत्यादिवाक्यमाकाङ्क्षापूर्व्वकमादाय व्याचष्टे। यत्पृष्टवत्यसीत्यादिना ॥ ब्राह्मणार्थमुपसंहरति। परिसमाप्तेति ॥ तथाप्युपदेशान्तरकर्त्तव्यमस्तीत्याशङ्क्याह। एतावानिति ॥ किमत्र प्रमाणमिति तदाह। एतदिति ॥ तथापि परमा निष्ठा सन्न्यासिनो वक्तव्येति चेन्ने-

भा॰ प्रव्रजितवानित्यर्थः। परिसमाप्ता ब्रह्मविद्या सन्न्यासपर्य्यव-सना। एतावानुपदेश एतद्वेदानुशासनमेषा परमनिष्ठा एष पुरुषार्थकर्त्तव्यतान्त इति ॥ १५ ॥

इदमिदानीं विचार्य्यते शास्त्रार्थविवेकप्रतिपत्तये यत आकुलानि हि वाक्यानि दृश्यन्ते। यावज्जीवमग्निहोत्रं जुहुयाद्यावज्जीवं दर्शपूर्णमासाभ्यां यजेत कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समा एतद्वै जरामर्य्यं सत्रं यदग्निहोत्रमित्यादीन्यैकाश्रम्यप्रतिष्ठापकान्यन्यानि चाश्रमान्तरप्रतिपादकानि वाक्यानि विदित्वा व्युत्थाय प्रव्रजन्ति। ब्रह्मचर्य्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेत् गृहाद्वनाद्वेति द्वावेव पन्थानावनुनिःक्रान्ततरौ भवतः। क्रियापथश्चैव पुरस्तात्स-

---

आ॰ त्याह। एषेति॥ आत्मज्ञाने ससन्न्यासे सत्यपि पुरुषार्थान्तरं कर्त्तव्यमस्तीत्याशङ्क्याह। एष इति॥ इतिशब्दो ब्राह्मणसमाप्त्यर्थः॥१५॥

ससन्न्यासमात्मज्ञानममृतत्वसाधनमित्युपपाद्य सन्न्यासमधिकृत्य विचारमवतारयति। इदानीमिति॥ तत्र तत्र प्रागेव विचारितत्वात्किं पुनर्विचारेणेत्याशङ्क्याह। शास्त्रार्थेति॥ विरक्तस्य सन्न्यासो ज्ञानस्यान्तरङ्गं साधनं ज्ञानन्तु केवलममृतत्वस्येति शास्त्रार्थे विवेकरूपाप्रतिपत्तिरपि प्रागेव सिद्धेति किं तदर्थेन विचारारम्भेणेत्याशङ्क्याह। यत इति॥ अतो विचारः कर्त्तव्यो नान्यथा शास्त्रार्थविवेकः स्यादित्युपसंहारार्थो हि-शब्दः। वाक्यानामाकुलत्वमेव दर्शयति। यावदिति॥ यदग्नि-होत्रमित्यादीनीत्यादिशब्दादैकाश्रम्यवाद्याचार्य्याः प्रत्यक्षविधाना-द्गार्हस्थ्यस्येत्यादिस्मृतिवाक्यं गृह्यते कथमेतावता वाक्यानि आकुलानीत्याशङ्क्याह। अन्यानि चेति॥ विदित्वा व्युत्थाय भिक्षाचर्य्यं चरन्तीति वाक्यं पाठक्रमेण विद्वत्सन्न्यासपरमाथक्र-

भा॰ त्यागश्च तयोः सन्न्यास एवातिरेचयतीति। न कर्म्मणा न प्रजया धनेन त्यागेनैके नामृतत्वमानशुरित्यादीनि ॥ तथा स्मृतयश्च ब्रह्मचर्य्यवान् प्रव्रजति। अविशीर्णब्रह्मचर्य्यो यमिच्छेत्तमावसेत्तस्याश्रमविकल्पमेके ब्रुवते। वेदानधीत्य ब्रह्मचर्य्येण पुत्रपौत्रानिच्छेत्पावनार्थं पितॄणां। अग्नीनाधाय विधिवच्चेष्टयज्ञो वनं प्रविश्याथ मुनिर्बुभूषेत्। प्राजापत्यां निरूप्येष्टिं सार्व्ववेदसदक्षिणां। आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहादित्याद्याः ॥ एवं व्युत्थानविकल्पक्रमयथेष्टाश्रमप्रतिपत्तिप्रतिपादकानि हि श्रुतिस्मृतिवाक्यानि शतश उपलभ्यन्ते इतरेतरविरुद्धानि ॥

---

आ॰ मेव तु विविदिषासन्न्यासपरमात्मानमेव लोकमिच्छन्तः प्रव्रजन्तीति तु विविदिषा सन्न्यासपरमेवेति विभागः। क्रमसन्न्यासपरां श्रुतिमुदाहरति। ब्रह्मचर्य्यमिति। अक्रमसन्न्यासविषयं वाक्यं पठति। यदि वेति। कर्म्मसन्न्यासयोः सन्न्यासस्याधिक्यप्रदर्शनपरां श्रुतिं दर्शयति! द्वावेवेति। अनुनिष्क्रान्ततरौ शास्त्रे कर्म्मेणाभ्युदयनिःश्रेयसोपायत्वेन पुनः पुनरुक्तावित्यर्थः। ज्ञानद्वारा सन्न्यासस्य मोक्षोपायत्वे श्रुत्यन्तरमाह। न कर्म्मणेति। तानि वैतान्यवराणि तपांसि न्यास एवात्यरेचयदित्यादिवाक्यमादिशब्दार्थः। यथा श्रुतयस्तथा स्मृतयोऽपि व्याकुला दृश्यन्त इत्याह। तथेति। तत्राक्रमसन्न्यासे स्मृतिमादावुदाहरति। ब्रह्मचर्य्यवानिति। यथेष्टाश्रमप्रतिपत्तौ प्रमाणभूतां स्मृतिं दर्शयति। अविशीर्णेति। आश्रमविकल्पविषयां स्मृतिं पठति। तस्येति। ब्रह्मचारी षष्ठ्यर्थः। क्रमसन्न्यासे प्रमाणमाह। तथेति। तत्रैव वाक्यान्तरं पठति। प्राजापत्यामिति। सर्व्ववेदसं सर्व्वस्वं दक्षिणा यस्यां तां निर्व्वर्त्त्येत्यर्थः। आदिपदेन मुक्ता निष्क्रान्तवर्त्मा ... आदिवाक्यं गृह्यते इत्याद्याः स्मृतयश्चेति पूर्व्वेण सम्बन्धः। व्याकुलानि वाक्यानि दर्शितान्युपसंहरति। एवमिति।

भा॰ आचारश्च तद्विदां विप्रतिपत्तिश्च शास्त्रार्थप्रतिपत्तॄणां बहुविदामपि। अतो न शक्यते शास्त्रार्थो मन्दबुद्धिभिर्विवेकेन प्रतिपत्तुं। परिनिष्ठितशास्त्रन्यायबुद्धिभिरेव ह्येषां वाक्यानां विषयविभागः शक्यतेऽवधारयितुं। तस्मादेषां विषयविभागज्ञापनाय यथाबुद्धिसामर्थ्यं विचारयिष्यामः। यावज्जीवश्रुत्यादिवाक्यानामन्यार्थासम्भवात् क्रियावसान एव वेदार्थस्तं यज्ञपात्रैर्दहन्तीत्यन्तकर्मश्रवणाज्जरामर्य्यश्रवणाच्च लिङ्गाच्च भस्मान्तं शरीरमिति। न हि पारिव्राज्यपक्षे भस्मान्तता शरीरस्य स्यात्॥ स्मृतिश्च। निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः।

---

आ॰ इतश्च कर्त्तव्यो विचारोऽत आह। आचारश्चेति॥ श्रुतिस्मृतिविदामाचारः सविकल्पो लभ्यते। केचिद्ब्रह्मचर्य्यादेव प्रव्रजन्ति अपरे तत्परिसमाप्य गार्हस्थ्यमेवाचरन्ति। अन्ये तु चतुरोऽप्याश्रमान् क्रमेणाश्रयन्ते तथाच विना विचारं निर्णयासिद्धिरित्यर्थः॥ इतश्चास्ति विचारस्य कार्य्यतेत्याह। विप्रतिपत्तिश्चेति॥ यद्यपि बहुविदः शास्त्रार्थप्रतिपत्तारो जैमिनिप्रभृतयस्तथापि तेषां विप्रतिपत्तिरुपलभ्यते। केचिदूर्ध्वरेतस आश्रमाः सन्तीत्याहुर्न सन्तीत्यपरे तत्कुतो विचारादृते निश्चयसिद्धिरित्यर्थः॥ अथ केषाञ्चिदन्तरेणापि विचारं शास्त्रार्थो विवेकेन प्रतिभास्यति तत्राह। अत इति॥ श्रुतिस्मृत्याचारविप्रतिपत्तेरिति यावत्॥ केषान्तर्हि शास्त्रार्थो विवेकेन ज्ञातुं शक्यते तत्राह। परिनिष्ठितेति॥ नानाश्रुतिदर्शनादिवशादुपपादितं विचारारम्भमुपसंहरति। तस्मादिति॥ विचारकर्त्तव्यतामुक्त्वा पूर्व्वपक्षं गृह्णाति। यावदित्यादिना॥ श्रुत्यादीत्यादिशब्देन कुर्व्वन्नित्यादिमन्त्रवादो गृह्यते॥ ऐकाश्रम्ये हेत्वन्तरमाह। तमिति॥ एतद्वै जरामर्य्यं सत्रं यदग्निहोत्रमिति श्रुतेश्च पारिव्राज्यासिद्धिरित्याह।

भा० तस्य शास्त्रेऽधिकारोऽस्मिन्श्रेयो नान्यस्य कस्यचिदिति। स मन्त्रकं हि यत्कर्म वेदेनेह विधीयते। तस्य स्मृत्याम्ना-न्नतां दर्शयति। स्मृत्यधिकाराभावप्रदर्शनाच्चात्यन्तमेव श्रुत्यधिकाराभावो कर्मिणो गम्यते। अग्न्युद्वासनापवादाच्च। वीरहा वा एष देवानां योऽग्निमुद्वासयत इति। ननु व्युत्थानादिविधानाद्वैकल्पिकं क्रियावसानत्वं वेदार्थस्य नान्यार्थत्वाद्व्युत्थानादिश्रुतीनां। यावज्जीवमग्निहोत्रं जुहोति यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्येवमादीनां श्रुतीनां जीवनमात्रनिमित्तत्वाद्यदा न शक्यतेऽन्यार्थता कल्पयितुं तदा व्युत्थानादिवाक्यानाञ्च कर्मानधिकृतविषयत्वस-म्भवात्।

---

आ० अरेति॥ तत्रैव हेत्वन्तरमाह। लिङ्गाच्चेति॥ पारिव्राज्यपक्षे तदु-पपत्तिमाशङ्क्याह। न हीति॥ इतश्च नास्ति पारिव्राज्यमित्याह। स्मृतिश्चेति॥ तस्यास्तात्पर्यमाह। समन्त्रकं हीति॥ नान्यस्य कस्यचिदित्यत्र सूचितमर्थं कथयति। स्मृत्यधिकारेति॥ गृह-स्थस्य पारिव्राज्याभावे हेत्वन्तरमाह। वग्नीति। पूर्वपक्षमाक्षि-पति। नन्विति॥ उभयविधिदर्शने षोडशीग्रहणाग्रहणवद-धिकारिभेदेन विकल्पो युक्तो न तु क्रियावसान एव वेदार्थ इति पक्षपाते निबन्धनमस्तीत्यर्थः॥ तुल्यविधिद्वयदर्शने हि विकल्पो भवत्यत्र तु सावकाशानवकाशत्वेनातुल्यत्वान्नैवमित्याह। नान्या-र्थत्वादिति॥ तदेव स्फुटयति। यावज्जीवमित्यादिना॥ कर्मा-नधिकृतविषयत्वान्न वैकल्पिकमिति सम्बन्धः। क्रियावसानत्वं वेदार्थस्येति शेषः॥

भा० कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समा इति च मन्त्रवर्णात्। जरया वा ह्येष वास्मान्मुच्यते मृत्युना वेति च जरामृत्युभ्यामन्यत्र कर्म्मवियोगश्रवणात्। भवतु प्रागुक्तं न वैकल्पिकं। काणकुण्ठादयोऽपि कर्म्मण्यनधिकृता अनुयाज्या एव श्रुतेति व्युत्थानाद्याश्रमान्तरविधानं नानुपपन्नं। पारिव्राज्यक्रमविधानस्यानवकाशत्वमिति चेत्। न। विश्वजित्सर्व्वमेधयोर्यावज्जीवविध्यपवादत्वाद्यावज्जीवाग्निहोत्रादिविधेर्विश्वजित्सर्व्वमेधयोरेवापवादत्वाच्च च क्रमप्रतिपत्तिसम्भवो ब्रह्मचर्य्यं समाप्य गृही भवेद्गृही वनी भूत्वा प्रव्रजेदिति विरोधानुपपत्तेः। न चैवं विषयत्वे पारिव्राज्यक्रमविधानवाक्यस्य कश्चिद्विरोधः। क्रमप्रतिपत्ते-

---

आ० तत्रैव हेत्वन्तरमाह। कुर्व्वन्नित्यादिना॥ न वैकल्पिकमित्यत्र पूर्व्ववदन्वयः॥ व्युत्थानादिवाक्यानां कथमनधिकृतविषयत्वमत आह। काणेति॥ अनधिकृतविषयत्वं तेषामशक्यं वक्तुं। ब्रह्मचर्य्यं समाप्येत्यादावधिकृतविषये क्रमदर्शनादिति शङ्कते। पारिव्राज्यमिति॥ नत्वन्तरं दर्शयन्नुत्तरमाह। न विश्वजिदिति॥ यावज्जीवमग्निहोत्रं जुहोतीत्युत्सर्गस्तस्यापवादो विश्वजित्सर्व्वमेधौ तदनुष्ठाने सर्व्वस्वदानादेव साधनं सम्भवति तत्पारिव्राज्यस्यावश्यम्भावित्वादतस्तद्विषयं क्रमविधानमित्यर्थः। तदेव स्फुटयति। यावज्जीवेति॥ कथं क्रमविधेरेवं विषयत्वं कल्पकाभावादित्याशङ्क्याह। विरोधानुपपत्तेरिति॥ गृहस्थस्यापि विरक्तस्य पारिव्राज्यमिति किमिति क्रमविषयो नेष्यते तत्राह। अन्यविषयेति॥ क्रमविधेरपि तत्पक्षे सङ्कोचः स्यादित्याशङ्क्याह। क्रमप्रतिपत्तेस्त्विति॥ सति ज्ञाने कर्म्मत्यागो निषिध्यते सत्यां वा विविदिषायामिति विकल्प्याद्यं दूषयति सिद्धान्ती। नात्मज्ञानस्येति॥ विद्वत्सन्न्यासस्यावश्यम्भावित्वान्न कर्म्मावसान एव-

भा॰ रन्यविषयपरिकल्पनायान्तु यावज्जीवविधाना श्रुतिः स्ववि-
षयात्सङ्कोचिता स्यात् । क्रमप्रतिपत्तेस्तु विश्वजित्सर्व्वमेधवि-
षयत्वान्न कश्चिद्बाधः । नात्मज्ञानस्यामृतत्वहेतुत्वाभ्युप-
गमात् । यत्तावदात्मेत्येवोपासीतेत्यारभ्य स एष नेति
नेत्येतदन्तेन ग्रन्थेन यदुपसंहृतमात्मज्ञानं तदमृतत्वसा-
धनमभ्युपगतं भवता । तच्चैतावदेवामृतत्वसाधनमन्यनिर-
पेक्षमित्येतन्न सह्यते तत्र भवन्तं पृच्छामि किमर्थमात्म-
ज्ञानं मर्षयति भवानिति ॥

शृणु तत्र कारणं यथा स्वर्गकामस्य स्वर्गप्राप्त्युपाय-
मजानतोऽग्निहोत्रादि स्वर्गप्राप्तिसाधनं ज्ञापयति तथे-
हाप्यमृतत्वप्रतिपित्सोरमृतत्वप्राप्त्युपायमजानतो यदेव भग-
वान् वेत्थ तदेव मे ब्रूहीत्येवमाकाङ्क्षितममृतत्वसाधनमेता-

---

आ॰ वेदार्थं इति सङ्गृहीतं वस्तु विवृणोति । यत्तावदिति । विद्या-
सूत्रादारभ्य निषेधवाक्यान्तेन ग्रन्थेन यदात्मज्ञानमुपसंहृतं तत्ता-
वन्मुक्तिसाधनमिति भवतापि यस्मादुपगतं पराङ्गत्वात्मविद्या-
नादन्यत्रेत्यवधारणादिति न्यायात्तस्माज्ज्ञाने सति कर्म्मानुष्ठानं
निरवकाशमित्यर्थः । यथात्मज्ञानं कर्म्मसहितममृतत्वसाधन-
मिष्यते न केवलं तथाच ज्ञानोत्तरकालमपि न कर्म्मत्यागसिद्धि-
रिति शङ्कते । तच्चेति । आत्मज्ञानस्यामृतत्वसाधनत्वे सत्यपीति
यावत् । कर्म्मनिरपेक्षत्वन्त्वेतदात्मज्ञानस्य भवान्न सहते किमिति
तर्हि ज्ञानमेवोपगतमिति सिद्धान्ती पृच्छति । तत्रेति । तस्य
कर्म्मानपेक्षत्वानङ्गीकारे सतीत्यर्थः ।

तत्र पूर्व्ववादी शास्त्रीयत्वादात्मज्ञानममृतत्वसाधनमभ्युपगत-
मिति शङ्कते । शृण्विति । ज्ञापयति वेद इति शेषः । शास्त्रानु-
सारेणात्मज्ञानाङ्गीकारे कर्म्मनिरपेक्षमेवात्मज्ञानं मोक्षसाधनं
सेत्स्यतीति परिहरति । एवं तर्हीति । उभयत्र ज्ञाने कर्म्मवि

भा॰ वद्दरे इत्येवमादौ वेदेन ज्ञाप्यत इति। एवं तर्हि यथाज्ञापितमग्निहोत्रादि स्वर्गसाधनमभ्युपगम्यते। तथैवात्मज्ञानं यथा ज्ञाप्यते तथाभूतमेवामृतत्वसाधनमात्मज्ञानमभ्युपगन्तुं युक्तं। तुल्यप्रामाण्यादुभयत्र। यद्येवं किं ज्ञात्मैकत्वहेतूपमर्दकत्वादात्मज्ञानस्य विद्योद्भवे कर्म्मनिवृत्तिः स्याद्दाराग्निसम्बद्धानां तावदग्निहोत्रादिकर्म्मणां भेदबुद्धिविषयसम्प्रदानकारकसाध्यत्वमन्यबुद्धिपरिच्छेद्यां ह्यग्निदेवतां सम्प्रदानकारकभूतामन्तरेण न हि तत्कर्म्म निर्वर्त्त्यते। यथा हि सम्प्रदानकारकबुद्ध्या सम्प्रदानकारकं कर्म्मसाधनत्वेनोपदिश्यते सह विद्यया निर्वर्त्त्यते। अन्योऽसावन्योऽहमस्मीति न स वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान् वेद मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति। एकधैवानुद्रष्टव्यं सर्व्वमात्मानं पश्यतीत्यादिश्रुतिभ्यः। न

---

आ॰ चेत्यर्थः। यदा ज्ञानस्यामृतत्वसाधनत्वे तस्य कर्म्मनिरपेक्षत्वे चेत्यर्थः। तुल्यप्रामाण्यात्प्रामाण्यस्य तुल्यत्वादेरस्येति शेषः। यथा शास्त्रं ज्ञानाभ्युपगमेऽपि कथं तत्स्यैव कैवल्यकारणमिति पृच्छति। यद्येवमिति॥ शास्त्रानुसारेण ज्ञानमभ्युपगच्छन्तं प्रत्याह। सर्व्वकर्म्मेति॥ आत्मज्ञानस्य तदुपमर्दकत्वं दर्शयितुं कर्म्महेतुं तावद्दर्शयति। दाराग्नीति॥ अग्निहोत्रादीनां सम्प्रदानकारकसाध्यत्वं व्यतिरेकद्वारा साधयति। अन्येति॥ तथापि कथमात्मज्ञानस्य कर्म्महेतूपमर्दकत्वमित्याशङ्क्याह। यथा हीति॥ इहेति विद्यादर्शोक्तिः। विद्यायाः श्रुतिजन्यत्वेन बलवत्त्वं दर्शयति। अन्योऽसावित्यादिना॥ ननु शुचौ देशे दिवसादौ काले शास्त्राचार्य्यादिवशादुत्पन्नं ज्ञानं पुमर्थसाधनं शुचौ देशे प्रतिष्ठाप्येत्यादिस्मृतेस्तथाच कथं तस्य भेदबुद्ध्युपमर्दकत्वमत आह। ब- चेति।

भा॰ च देशकालनिमित्ताद्यपेक्षत्वं व्यवस्थितात्मवस्तुविषयत्वा-
दात्मज्ञानस्य । क्रियायास्तु पुरुषतन्त्रत्वात्स्याद्देशकाल-
निमित्तापेक्षत्वं ज्ञानन्तु वस्तुतन्त्रत्वान्न देशं कालं निमित्तं
वापेक्षते । यथाग्निरुष्णस्त्वाकाशोऽमूर्त्त इति तथात्मवि-
ज्ञानमपि । नन्वेवं सति प्रमाणभूतस्य कर्म्मविधेर्निरोधः
स्यान्न च तुल्यप्रमाणयोरितरेतरनिरोधो युक्तः ॥

न स्वाभाविकभेदबुद्धिमात्रनिरोधकत्वान्नहि विध्यन्त-
रं निरोधकमात्मज्ञानं स्वाभाविकभेदबुद्धिमात्रं निरुणद्धि
तथापि हेत्वपहारात्कर्म्मानुपपत्तेर्विधिविरोध एव स्यादिति
चेत् । न । कामप्रतिषेधात्काम्यप्रवृत्तिनिरोधवददोषात् ।
यथा स्वर्गकामो यजेतेति स्वर्गसाधने यागे प्रवृत्तस्य काम-

---

आ॰ यत्रैकाग्रता तत्राविशेषादिति न्यायाज्ज्ञानसाधनस्य समाधेरपि न
देशाद्यपेक्षा दूरतस्तु कूटस्थवस्तुतन्त्रज्ञानस्येति भावः । विमतं
देशाद्यपेक्षं शास्त्रार्थत्वाद्धर्म्मवदित्याशङ्क्य पुरुषतन्त्रत्वमुपाधिरि-
त्याह । क्रियायास्त्विति । साधनव्याप्तिं दूषयति । ज्ञानन्त्विति ।
विमतं न देशाद्यपेक्षं प्रमाणत्वादुष्णाभिज्ञानवदिति प्रत्यनुमान-
मित्याह । यथेति । आत्मज्ञानस्य सर्व्वकर्म्महेतूपमर्द्दकत्वे दोष-
माशङ्कते । नन्विति । इष्टापत्तिमाशङ्क्याह । न चेति । कर्म्म-
काण्डेन काण्डान्तरस्यापि विरोधसम्भवादित्यर्थः ।

साक्षादात्मज्ञानं कर्म्मविधिनिरोधार्थमिति विकल्पाद्यं दूष-
यति । नेत्यादिना । तदेव स्फुटयति । न हि विध्यन्तरेति ।
द्वितीयं शङ्कते । तथापीति । यथा न कामी स्यादिति निषे-
धात्कस्यचित्कामप्रवृत्तिर्न भवतीत्येतावता न सर्व्वान्प्रति काम्य-
विधिर्निरुध्यते तथा कस्यचिदात्मज्ञानात्कर्म्मविधिनिरोधेऽपि न
सर्व्वान्प्रत्यसौ निरुद्धो भविष्यतीति परिहरति । न कामेति ।
दृष्टान्तमेव स्पष्टयति । यथेत्यादिना । प्रतिषेधशास्त्रार्थानभिज्ञं

भा॰ प्रतिषेधविधेः कामे विद्यते काम्ययागानुष्ठानप्रवृत्तिर्निरुध्यते। न चैतावता काम्यविधिर्निरुद्धो भवति। कामप्रतिषेधविधिना प्रतिषेधविधेरनर्थत्वज्ञानात्प्रवृत्त्यनुपपत्तेर्निरुद्ध एव स्यादिति चेन्नवत्वेवैवं कर्म्मविधिनिरोधो यथा कामप्रतिषेधे काम्यविधेस्तथा प्रामाण्यानुपपत्तिरिति चेदननुष्ठेयत्वेऽनुष्ठातुरभावादनुष्ठानविध्यानर्थक्यादप्रामाण्यमेव तत्कर्म्मविधीनामिति चेत्। न। प्रागात्मज्ञानात्प्रवृत्त्युपपत्तेः। स्वाभाविकस्य क्रियाकारकफलभेदविज्ञानस्य प्रागात्मज्ञानात्कर्म्महेतुत्वमुपपद्यत एव। यथा कामविषये दोषविज्ञानोत्पत्तेः प्राक्काम्यकर्म्मप्रवृत्तिहेतुत्वं स्यादेव स्वर्गादीच्छायाः स्वाभाविक्यास्तद्वत्। तथा सत्यनर्थार्थी वेद इति

---

आ॰ प्रति तदनुपपत्तेरिति भावः॥ अभिप्रायमविद्वानाशङ्कते। प्रतिषेधविधेरिति॥ अनर्थकत्वज्ञानं कामस्येति शेषः। प्रवृत्त्यनुपपत्तेः काम्येषु कर्म्मस्विति द्रष्टव्यं। निरुद्धः स्यात्काम्यविधिरित्यध्याहर्त्तव्यं। गूढाभिसन्धिः सिद्धान्ती ब्रूते। भवत्विति॥ पुनरभिप्रायमप्रतिपद्यमानश्चोदयति। एवमिति॥ एवमिति ज्ञानेन कर्म्मविधिनिरोधे सतीति यावत्। तत्प्रामाण्यानुपपत्तिरिति शेषः॥ तदेव चोद्यं विशदयति। अननुष्ठेयत्व इति॥ तेषामनुष्ठेयानामग्निहोत्रादीनां कर्म्मणां ये विधयस्तेषामिति यावत्। सिद्धान्ती स्वाभिसन्धिमुद्घाटयन्नुत्तरमाह। नेत्यादिना॥ उपपत्तिमेवोपदर्शयति। स्वाभाविकस्येति॥ तदेव दृष्टान्तेन स्पष्टयति। यथेति। अज्ञानावस्थायामेव कर्म्मविधिप्रवृत्तिरित्यत्रानिष्टमाशङ्कते। तथा सतीति॥ कर्म्मविधेरपि पुरुषाभिप्रायवशात्पुरुषार्थोपयोगित्वसिद्धेर्नानिष्टापत्तिरित्युत्तरमाह। नार्थेति॥ अर्थस्य पुरुषाभिप्रायतन्त्रत्वे मोक्षस्यापि वास्तवं पुरुषार्थत्वं न स्यादित्याशङ्क्याह। मोक्षमिति॥ अर्था-

भा॰ चेत्। न। अर्थानर्थयोरभिप्रायतन्त्रत्वान्मोक्षमेकं वर्जयित्वान्यस्याविद्याविषयत्वात्। पुरुषाभिप्रायतन्त्रौ ह्यर्थानर्थौ। मरणादिकाम्येष्टिदर्शनात्। तस्माद्यावदात्मज्ञानविधेराभिमुख्यं तावदेव कर्मविधयस्तस्मादात्मज्ञानपरत्वभावित्वं कर्मणामित्यतः सिद्धमात्मज्ञानमात्रमेवामृतत्वसाधनमेतावदरे खल्वमृतत्वमिति। कर्मनिरपेक्षत्वाज्ज्ञानस्य॥

अतो विदुषस्तावत्पारिव्राज्यं सिद्धं। सम्प्रदानादिकर्मकारकजात्यादिशून्याविक्रियब्रह्मात्मदृढप्रतिपत्तिमात्रेण वचनमन्तरेणाप्युक्तन्यायतस्तथा च व्याख्यातमेतत्। येषां नोऽयमात्माऽयं लोक इति हेतुवचनेन पूर्व्वे विद्वांसः

---

आ॰ नर्थयोरभिप्रायतन्त्रत्वं साधयति। पुरुषेति॥ मरणं महाप्रस्थानमित्यादि काम्यं कृत्वा जीवदवस्थायामेव महाभारतादाविष्टिविधानं दृष्टमतोऽर्थानर्थावभिप्रायकावेवेत्यर्थः। कर्म्मविधीनामात्मज्ञानात्प्राचीनत्वं प्रतिपादितमुपसंहरति। तस्मादिति॥ तथापि प्रकृते किमायातं तदाह। तस्मात्मेति॥ तत्र प्रमाणमाह। इत्यत इति॥ अतः शब्दार्थं स्फुटयति। कर्म्मेति॥ ज्ञानस्य कर्म्मविरोधित्वे तन्निरपेक्षत्वे च सिद्धे फलितमाह। अत इति॥ आत्मज्ञानस्यामृतत्वे हेतुत्वाभ्युपगमादित्यादेरुक्तन्यायादात्मसाक्षात्कारस्य केवलस्य कैवल्यकारणत्वसिद्धेः सति तस्मिञ्जीवन्मुक्तस्य कर्म्मानुष्ठानानवकाशात्तदुद्देशेन प्रवृत्तस्याधीतवेदस्य विदितपदपदार्थस्य परोक्षज्ञानवतस्तन्मात्रेण प्रमाणापेक्षामन्तरेण सिद्धं सर्व्वकर्म्मत्यागलक्षणं पारिव्राज्यं एष एव विद्वत्संन्यासो न त्वपरोक्षज्ञानवतः प्रारब्धफलप्राप्तिमन्तरेणानुष्ठेयं किञ्चिदस्तीति भावः। विध्यविषयत्वाज्ज्ञानसाक्षात्कारस्य कथं पारिव्राज्यं तत्राह। वचनमिति॥ विधिं विनापि फलभूतपारिव्राज्यमित्यर्थः। सत्यां जिज्ञासायां कर्म्मत्यागो न

भा॰ प्रजामकामयमाना व्युत्तिष्ठन्तीति पारिव्राज्यं विदुषामा-
त्मलोकावबोधादेव तथा विविदिषोरपि सिद्धं पारि-
व्राज्यमेतमेवात्मानं लोकमिच्छन्तः प्रव्रजन्तीति वचनात्।
कर्म्मणाञ्चाविद्वद्विषयत्वमवोचाम। अविद्याविषये चोत्प-
त्त्याप्तिविकारसंस्कारार्थानि कर्म्माणीत्यत्र आत्मा संस्का-
रद्वारेणात्मज्ञानसाधनत्वमपि कर्म्मणामवोचाम। यज्ञादि-
भिर्विविदिषन्तीति। अथैवं सत्यविद्वद्विषयाणामाश्रमक-
र्म्मणां बलाबलविचारणायामात्मज्ञानोत्पादनं प्रतिनिय-

---

आ॰ श्रूयते निषेद्धुमिति वदन्विविदिषासन्न्यासं साधयति। तथा-
चेत्यादिना॥ विदुषामात्मसाक्षात्कारार्थिनां तत्परोक्षनिश्चय-
वतामिति यावत्। आत्मलोकस्यावबोधोऽपि व्युत्थानहेतुः परो-
क्षनिश्चय एव। सतीतरस्मिन्प्रमावस्थस्य व्युत्थानाद्यनुष्ठाना-
योगात्तदन्तरेण तत्प्राप्त्यभावाच्च। उक्तं हि॥ प्रमादिवद्बुपरते-
रपि तत्त्वसाक्षात्कारे नियतं साधनत्वं तदाह। तथा चेति॥
एतत्पारिव्राज्यमिति सम्बन्धः। विविदिषूणामाधीतवेदो विचार-
प्रयोजकापातिकज्ञानवान्मुमुक्षुर्मोक्षसाधनं तत्त्वसाक्षात्कार-
मपेक्षमाणस्तस्मिन्परोक्षनिश्चयेनापि शून्यो विवक्षितस्तस्य कथं
पारिव्राज्यमत आह। आत्मानमिति॥ इतश्च विवि-
दिषासन्न्यासोऽस्तीत्याह। कर्म्मणाञ्चेति॥ तथा चाविद्याविरुद्धां
विद्यामिच्छन्नशेषाणि कर्म्माणि शरीरधारणमात्रकारणेतराणि
त्यजेदिति शेषः॥ विविदिषासन्न्यासे हेत्वन्तरं साधयति।
अविद्याविषये चेति॥ चतुर्विधफलानि कर्म्माण्यविद्यत्वविषये
परं सम्भवन्ति न त्वसाध्ये वस्तुनीत्यतो वस्तुजिज्ञासायां त्याज्यानि
तानीत्यर्थः। कथं तर्हि कर्म्मणामुत्तमफलान्वयस्तत्राह। आ-
त्मेति॥ बुद्धिशुद्धिद्वारा ज्ञानहेतुत्वात् कर्म्मणामस्ति प्रणाड्या
परमपुरुषार्थान्वय इत्यर्थः। सन्न्यासः कर्म्मयोगश्च निःश्रेयसकरा-
वुभाविति स्मृतेर्विविदिषूणां मुमुक्षूणां कथं पारिव्राज्यस्यैव कर्त्त-

भा॰ मप्रधानानाममानित्वादीनां मानसानाञ्च ध्यानज्ञानवैराग्यादीनां सन्निपत्योपकारकत्वं । हिंसारागद्वेषादिबाहुल्यात् । बहुक्लिष्टकर्मविमिश्रिता इतर इत्यतः पारिव्राज्यं मुमुक्षूणां प्रशंसन्ति । त्याग एव हि सर्वेषामुक्तानामपि कर्मणां । वैराग्यं पुनरेतस्य मोक्षस्य परमो विधिः॥ किन्ते धनेन किमु बन्धुभिस्ते किं ते दारैर्ब्राह्मण यो मरिष्यसि । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गता पिता च ॥ एवं साङ्ख्ययोगशास्त्रेषु

---

व्या॰ थलमित्याद्याह। अथेति। यथा विद्वत्सन्न्यासस्तथा विविदिषासन्न्यासेऽपि यथोक्तमीत्या सम्भाविते सतीति यावत्। आत्मज्ञानोत्पादनं प्रत्याश्रमधर्माणां बलाबलविचारणायामन्तरङ्गत्वबहिरङ्गत्वचिन्ता तस्यां सत्यामित्यर्थः। अहिंसास्तेयब्रह्मचर्यादयो यमाः॥

वैराग्यादीनामित्यादिशब्देन शमादयो गृह्यन्ते। इतरे नियमप्रधाना आश्रमधर्मा बहुना क्लिष्टेन पापेन कर्मणा सङ्कीर्णा हिंसादिप्राचुर्यात्। यमान्सततं कुर्वाणो नियमान् केवलान्भजन्निति स्मृतेस्तस्मात्पूर्वेषामन्तरङ्गत्वमुत्तरेषां बहिरङ्गत्वमित्याशयेनाह। हिंसेति। कर्मयोगापेक्षया तत्त्यागस्याधिकारिविशेषं प्रति प्रशस्तत्वमुपसंहरति। इत्यत इति॥ तत्प्रशंसाप्रकारमेवाभिनयति। त्याग एवेति। उक्तानामाश्रमैरनुष्ठेयत्वेनेति शेषः। तत्त्यागे हेतुमाह। वैराग्यमिति। मोक्षस्य कर्मपरित्यागस्येत्यर्थः। उत्तमपुमर्थार्थिनः सन्न्यासद्वारा श्रवणादि कर्तव्यमित्यत्र वाक्यान्तरमुदाहरति। किन्ते धनेनेति॥ अथ पित्रादिभिर्गतं पन्थानमन्वेषयामि नात्मानमित्याशङ्क्याह। पितामहा इति। विविदिषासन्न्यासे साङ्ख्यादिसम्मतिमाह। एवमिति। यथाहुः साङ्ख्या ध्यानेन चापवर्गो विपर्ययादिष्यते बन्ध इति विवेकख्यातिपर्यन्तमज्ञानान्वितचेष्टितमिति वा। विपर्ययादिशब्दं केवल-

भा॰ च सन्न्यासो ज्ञानं प्रति प्रत्यासन्न उच्यते। कामप्रवृत्त्यभा-
वाच्च। कामप्रवृत्तेर्हि ज्ञानप्रतिकूलता सर्व्वशास्त्रेषु
प्रसिद्धा। तस्मादिरक्तस्यापि मुमुक्षोर्विनापि ज्ञानेन ब्रह्म-
चर्य्यादेव प्रव्रजेदित्याद्युपपन्नं। ननु सावकाशत्वादनधिकृत-
विषयमेतदित्युक्तं। यावज्जीवश्रुत्युपरोधात्। नैष दोषः।
नितरां सावकाशत्वाद्यावज्जीवश्रुतीनामविद्वत्कामिकर्त्त-
व्यतां ब्रुवाणाम सर्व्वकर्माणा। ननु निरपेक्षमेव जीवननि-
मित्तमेव कर्त्तव्यं कर्म्म॥

---

आ॰ मुत्पद्यते ज्ञानमिति च। योगशास्त्रविदश्चाहुः। अभ्यासवैरा-
ग्याभ्यां तन्निरोध इति। तत्र वैराग्येण विषयस्रोतः परिखिलीक्रियते। विवेकदर्शनाभ्यासेन कल्याणस्रोत उत्पद्यत इति च।
दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसञ्ज्ञं वैराग्यमिति च॥
इतश्च सन्न्यासो ज्ञानं प्रतिप्रत्यासन्न इत्याह। कामेति। सन्न्या-
सिनः कामप्रवृत्त्यभावेऽपि कथं सन्न्यासस्य ज्ञानं प्रतिप्रत्या-
सन्नत्वमित्याशङ्क्याह। कामप्रवृत्तेरिति॥ इति नु काममयमानः।
काम एष क्रोध एष रजोगुणसमुद्भवः। महाशनो महापाप्मा
विद्ध्येनमिह वैरिणमित्यादीनि शास्त्राणि विविदिषासन्न्यास-
मुपसंहरति। तस्मादिति॥ यथोक्तस्याधिकारिणो दर्शितया
विधया ज्ञानेन विनापि सन्न्यासस्य प्राप्तत्वाद्ब्रह्मचर्य्यादिवेत्यादि-
विधिवाक्यमुपपन्नमिति योजना। अथ पारिव्राज्यविधानमनधि-
कृतविषयमुचितं। तथा सति सावकाशत्वान्न त्वधिकृतविषयं
यावज्जीवश्रुतिविरोधात्तस्या निरवकाशत्वात्सावकाशनिरवका-
शयोश्च निरवकाशस्यैव बलवत्त्वादित्युक्तं शङ्कते। नन्विति॥
यावज्जीवश्रुतेर्निरवकाशत्वं दूषयति। नैष दोष इति॥ कथ-
मतिशयेन सावकाशत्वं तत्राह। अविद्वदिति॥ जीवनमात्रं
निमित्तीकृत्यचोदितं कर्म्म कथं कामिना कर्त्तव्यं तत्राह। न
त्विति॥ प्रत्यवायपरिहारादेरिष्टत्वादित्यर्थः॥

भा० प्रायेण हि पुरुषाः कामबहुलाः कामश्चानेकविषयो ऽनेककर्म्मसाधनसाध्यश्चानेकफलसाधनानि च वैदिकानि कर्म्माणि दाराग्निसम्बन्धपुरुषकर्त्तव्यानि पुनः पुनश्चानुष्ठी-यमानानि बहुफलानि कृष्यादिवद्वर्षशतसमाप्तीनि च गार्हस्थ्ये वाऽरण्ये वाऽतस्तदपेक्षया यावज्जीवश्रुतयः कुर्व्व-न्नेवेह कर्माणीति च मन्त्रवर्णः ॥

तस्मिंश्च पक्षे विश्वजित्सर्व्वमेधयोः कर्म्मपरित्यागः । यस्मिंस्तु पक्षे यावज्जीवानुष्ठानं तदा समाधानान्तरं भस्मा-

---

आ० अनुष्ठातृस्वरूपनिरूपणायामपि न जीवनमात्रं निमित्तीकृत्य कर्त्तव्यमित्याह । प्रायेणेति ॥ यद्यपि नित्येषु कर्म्मसु न कामनिमित्ता प्रवृत्तिस्तत्र काम्यमानफलाभावादित्याशङ्क्याह । कामश्चेति ॥ प्रत्यवायपरिहारादेरपि कामितत्वं युक्तमिति भावः । यद्यपि नित्ये कर्म्मणि काम्यमानं फलं विध्युद्देशे विधिना श्रुतमित्या-शङ्क्याह । अनेकेति ॥ कर्म्मभिरनेकैः साधनैर्दुरितनिबर्ह-णादिसाध्यं तदेवास्याश्रुतमपि विध्युद्देशे साध्यं भवति । यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितमिति स्मृतेस्तद्व्यतिरेकेण प्रवृत्त्य-नुपपत्तेरतो नित्येऽपि कामितफलमस्तीत्यर्थः । ननु वैदिकानां कर्म्मणां नियतफलत्वात्कामोऽपि नियतफलो युक्तस्तथाच नित्येषु तदभावान्न कामितं फलं सेत्स्यति तत्राह । अनेकफलेति ॥ अथ तानि पुरुषमात्रकर्त्तव्यानीति कुतो विवक्षितसङ्ख्यावसिद्धि-स्तत्राह । दारेति ॥ सम्बन्धिरहितेनापि दृष्टिवशात् सकृदेव तान्यनुष्ठे-यानि तावता विधेश्चरितार्थत्वात्तथाच कथं फलबाहुल्यमित्या-शङ्क्याह । पुनः पुनश्चेति ॥ यावज्जीवोपबन्धादावृत्तिसिद्धिरिति भावः । तर्हि यावज्जीवश्रुतिवशादग्रेषामनुष्ठेयान्यनवरतमग्नि-होत्रादीनि कुतो यथोक्तसङ्ख्यासोपपत्तिरित्याशङ्क्याह । वर्षशते-ति ॥ अविरक्तदृष्टिविषयत्वं श्रुतिमन्त्रयोरुपसंहरति । अत इति ॥

यत्तु यावज्जीवश्रुतेरपवादो विश्वजित्सर्व्वमेधयोरिति तदपि कामिदृष्टिविषयत्वान्न ब्रह्मचर्य्यादेव प्रव्रजेदिति विधयपवादक-

उ॰ अथ वꣳशः पौतिमाष्यात्पौतिमाष्यो गौपवना-
द्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौप-

---

भा॰ न्तता च शरीरस्येतरवर्णापेक्षया वा यावज्जीवश्रुतिर्न हि
क्षत्रियवैश्ययोः पारिव्राज्यप्रतिपत्तिरस्ति तथा मन्त्रैर्यस्यो-
दितो विधिः । ऐकाश्रम्यन्त्वाचार्या इत्येवमादीनां क्षत्रि-
यवैश्यापेक्षत्वं । तस्मात्पुरुषसामर्थ्यज्ञानवैराग्यकामाद्यपे-
क्षया व्युत्थानविकल्पक्रमपारिव्राज्यप्रतिपत्तिप्रकारा न
विरुध्यन्ते । अनधिकृतानाञ्च पृथग्विधानात्पारिव्राज्यस्य
स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वेत्यादिना ।
तस्मात् सिद्धान्याश्रमान्तराण्यधिकृतानामेव ॥ इति श्रीबृ-
हदारण्यकभाष्ये षष्ठाध्यायस्य पञ्चमं ब्राह्मणं ॥ ५ ॥

अथानन्तरं याज्ञवल्कीयस्य काण्डस्य वंश आरभ्यते ।

---

आ॰ मित्याह । तस्मिंश्चेति । परोक्षं चिह्नमपि तद्विषयत्वान्न सर्व्वस्य
वेदस्य कर्म्मावसानत्वं द्योतयतीत्याह । यस्मिंश्चेति ॥ यावज्जी-
वश्रुतेर्गत्यन्तरमाह । इतरेति ॥ कथं सा क्षत्रियवैश्यवि-
षयत्वेन प्रवृत्ता त्रैवर्णिकानामपि पारिव्राज्यपरिग्रहादित्या-
शङ्क्याह । न हीति ॥ यावज्जीवश्रुतिवदैकाश्रम्यप्रतिपादकस्मृती-
नामपि क्षत्रियादिविषयत्वमाह । तथेति ॥ श्रुतिस्मृतीनां कर्म्म-
तत्सन्न्यासार्थानां भिन्नविषयत्वे फलितमुपसंहरति । तस्मादिति ॥
ये तु काणकुण्ठान्धादयोऽपि कर्म्मण्यनधिकृता अनुग्राह्या एव
श्रुत्येति तत्राह । अनधिकृतानाञ्चेति ॥ सत्यामेव भार्य्यायां त्यक्ता-
ग्निरुत्सन्नाग्निस्तस्यामसत्यां परित्यक्ताग्निरनग्निक इति भेदः ।
आश्रमान्तरविषयश्रुतिस्मृतीनामनधिकृतविषयत्वाभावे सिद्ध-
मर्थं निगमयति । तस्मादिति ॥ षष्ठे पञ्चमं ब्राह्मणं ॥ ५ ॥

तदेवं विचारद्वारा श्रुतिस्मृतीनामापाततो विरुद्धानामवि-
रोधं प्रतिपाद्याथ वंश इत्यस्यार्थमाह । अथेति ॥ साङ्गोपाङ्गस्य

उ॰ वनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥ आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात्सैतवः पाराशर्य्यायणात्पाराशर्य्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जावालायनाज्जावालायनो माध्यन्दिनायनान्माध्यन्दिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥ घृतकौशिकाद्घृतकौशिकः पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो

---

भा॰ यथा मधुकाण्डस्य वंशः । व्याख्यानन्तु पूर्व्ववत् । ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ ॐमिति श्रीबृहदारण्यके षष्ठाध्यायस्य वंशब्राह्मणं षष्ठं ॥ इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य

---

व्या॰ सम्पन्नस्यात्मविद्यागमस्य प्रवचनागन्तव्यंमयमब्दार्थमाह । अनन्तरमिति॥ यथा प्रथमान्तः शिष्यो गुरुस्तु पञ्चम्यन्त इति चतुर्थान्ते व्याख्यातं तथात्रापीत्याह । व्याख्यानन्त्विति ॥ इदञ्चमाग्नमोप-

उ॰ वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्य्या-त्काप्यात्कैशोर्य्यः काप्यः कुमारहारितात्कुमार-हारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्वि-दर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बा-भ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गि-रसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूति-स्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्वि-भ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथ-र्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसन एकर्षेरेक र्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः॥ ३ ॥ षष्ठं ब्राह्मणं ॥ ६ ॥ इति बृहदारण्यके षष्ठो ऽध्यायः ॥ उपनिषत्सु चतुर्थोऽध्यायः॥ ४ ॥

---

भा॰ परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करस्य भगवतः कृतौ बृहदारण्यकटीकायां षष्ठोऽध्यायः ॥

---

आ॰ यत्तिभ्यां ससन्न्यासं सेतिकर्त्तव्यताकमात्मज्ञानममृतत्वसाधनं सिद्धमित्युपसंहर्त्तुमितिशब्दः॥ परिसमाप्तौ मङ्गलमाचरति । ब्रह्मेति ॥ ॐ तत्सत् ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीमच्छुद्धानन्दभगवत्पूज्यपादशिष्य श्रीमद्भगवदानन्दज्ञानविर-चितायां श्रीमद्बृहदारण्यकभाष्यटीकायां षष्ठे प्रपाठके षष्ठं ब्राह्मणं । समाप्तश्चायं षष्ठोऽध्यायः ॥

## अथ सप्तमाध्यायप्रारम्भः ।

उ॰ हरिः ॐ ॥ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।

---

भा॰ पूर्णमद इत्यादि खिलं काण्डमारभ्यते । अध्याय-
चतुष्टयेन यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्व्वान्तरो
निरुपाधिकोऽशनायाद्यतीतो नेति नेतीति व्यपदेश्यो
निर्द्धारितो । यद्विज्ञानं केवलममृतत्वसाधनमधुना तस्यै-
वात्मनः सोपाधिकस्य शब्दार्थादिव्यवहारविषयापन्नस्य
पुरस्तादनुक्तान्युपासनानि कर्म्मभिरविरुद्धानि प्रकृष्टाभ्यु-
दयसाधनानि क्रममुक्तिभाञ्जि च यानि तानि वक्त-
व्यानीति परः सन्दर्भः । सर्व्वोपासनशेषत्वेनोङ्कारो दमं
दानं दयामित्येतानि च विधित्सितानि । पूर्णमदः पूर्णं
न कुतश्चिद्व्यावृत्तं व्यापीत्येतन्निष्ठा च कर्त्तरि द्रष्टव्या ।
अद इति अपरोक्षाभिधायि सर्व्वनाम तत्परं ब्रह्मेत्यर्थः ।

---

आ॰ पूर्व्वस्मिन्नध्याये ब्रह्मात्मज्ञानं सफलं साङ्गोपाङ्गं वादन्याये-
नोक्तमिदानीं काण्डान्तरमवतारयति । पूर्णमिति । पूर्व्वाध्याये-
ष्वेव सर्व्वस्य वक्तव्यस्य समाप्तत्वादलं खिलकाण्डारम्भेणेत्याशङ्क्य
पूर्व्वत्रानुक्तं परिशिष्टं वस्तु खिलशब्दवाच्यमस्तीत्याहाध्याय-
चतुष्टयेनेति । सर्व्वान्तर इत्युक्त इति शेषः । अमृतत्वसाधनं

भा॰ तत्सम्पूर्णमाकाशवत् । व्यापि निरन्तरं निरुपाधिकं च । तदेवेदं सोपाधिकं नामरूपस्थं व्यवहारापन्नं पूर्णं स्वेन रूपेण परमात्मना व्याप्येव नोपाधिपरिच्छिन्नेन विशेषात्मना । तदिदं विशेषापन्नं कार्य्यात्मकं ब्रह्म पूर्णात्कारणात्मन उदच्यते उद्रिच्यते उद्गच्छतीत्येतत् । यद्यपि कार्य्यात्मनोद्रिच्यते तथापि यत्स्वरूपं पूर्णत्वं परमात्मभावं न जहाति पूर्णमेवोद्रिच्यते । पूर्णस्य कार्य्यात्मनो ब्रह्मणः पूर्णं पूर्णत्वमादाय गृहीत्वात्मस्वरूपैकरसत्वमापाद्य विद्यया ऽविद्याकृतं भूतमात्रोपाधिसंसर्गजन्यत्वावभासं तिरस्कृत्य पूर्णमेवानन्तरमबाह्यं प्रज्ञानघनैकरसस्वभावं केवलं ब्रह्मावशिष्यते । यदुक्तं ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत् । तस्मात्तत्सर्व्वमभवदित्येषोऽस्य मन्त्रस्यार्थस्तत्र ब्रह्मेत्यस्यार्थः पूर्णमद इति । इदं पूर्णमिति । ब्रह्म वा इदमग्र

---

आ॰ निर्द्धारितमिति पूर्व्वेण सम्बन्धः । शब्दार्थादीत्यादिशब्देन मानमेयादिग्रहः । दयां श्रिचोदित्युक्तानीति शेषः । ॐकारादि यत् साधनत्वेन विधित्सितं तत्पूर्णात्मैक्यज्ञानमनुवदति । पूर्णमिति ॥ अवयवार्थमुक्त्वा समुदायार्थमाह । तत्सम्पूर्णमिति ॥ अदः पूर्णमित्यनेन वाक्यं तत्पदार्थं दर्शयित्वा त्वंपदार्थं दर्शयति । तदेवेति ॥ कथं सोपाधिकस्य पूर्णमित्याशङ्क्याह । स्वेनेति ॥ व्यावर्त्यमाह । नोपाधीति ॥ न वयमुपहितेन विशिष्टेन रूपेण पूर्णतां वर्णयामः किन्तु केवलेन स्वरूपेणेत्यर्थः । वाच्यौ तत्त्वंपदार्थावुक्त्वा तावेव वाच्यौ कथयति । तदिदमिति ॥ कथं कार्यात्मनोद्रिच्यमानस्य पूर्णत्वमित्याशङ्क्याह । यद्यपीति ॥ वाक्यपदार्थज्ञानफलमुपन्यस्यति । पूर्णस्येति ॥ उपक्रमोपसंहारयोरैकरूप्यमैक्ये श्रुतितात्पर्य्यलिङ्गं सङ्गिरते । यदुक्तमिति ॥ कथं

भा॰ आसीदित्यस्यार्थः। तथा च श्रुत्युत्तरं। यदेवेह तदमुत्र यदमुत्र तदन्विहेति ॥

अतोऽदःशब्दवाच्यं पूर्णं ब्रह्म तदेवेदं पूर्णं कार्य्यस्थं नामरूपोपाधिसंयुक्तमविद्ययोद्रिक्तं। तस्मादेवं परमार्थस्वरूपादन्यदिव प्रत्यवभासमानं तद्यदात्मानमेव परं पूर्णं ब्रह्म विदित्वाऽहमदः पूर्णं ब्रह्मास्मीत्येवं पूर्णमादाय तिरस्कृत्यापूर्णस्वरूपतामविद्याकृतां नामरूपोपाधिसम्पर्कजमेतया ब्रह्मविद्यया पूर्णमेव केवलमवशिष्यते। तथा चोक्तं। तस्मात्तत्सर्व्वमभवदिति ॥ यः सर्व्वोपनिषदर्थो ब्रह्म स एषोऽनेन मन्त्रेणानूद्यते उत्तरसम्बन्धार्थं ब्रह्मविद्यासाधनत्वेन हि वक्ष्यमाणानि साधनान्योङ्कारदमदानदयाख्यानि विधित्सितानि खिलप्रकरणसम्बन्धात्सर्व्वोपासनाङ्ग-

---

आ॰ पूर्णकण्डिकाया ब्रह्मकण्डिकया सहैकार्थत्वेनैकवाक्यत्वमित्याशङ्क्य तद्युत्पादयति। तत्रेत्यादिना॥ उपक्रमोपसंहारसिद्धे ब्रह्मात्मैक्ये कठश्रुतिं संवादयति। तथा चेति॥

ब्रह्मात्मनोरैक्येनैकवाक्यत्वमित्याशङ्क्योक्तमुपजीव्य वाक्यार्थमाह। अत इति॥ पूर्णं यद्ब्रह्मेति यच्छब्दो द्रष्टव्यः। उक्तमेव व्यनक्ति। तस्मादेवेति॥ संसारावस्थां दर्शयित्वा मोक्षावस्थां दर्शयति। तद्यदात्मानमिति॥ उक्तविद्याफलवाक्योपक्रममनुकूलयति। तथा चोक्तमिति॥ न केवलं ब्रह्मकण्डिकैवास्य मन्त्रस्यैकवाक्यत्वं किन्तु सर्व्वाभिरुपनिषद्भिरित्याह। यः सर्व्वोपनिषदर्थ इति॥ अनुवादफलमाह। उत्तरेति॥ तदेव स्फुटयति। ब्रह्मविद्येति॥ तस्मायुक्तो ब्रह्मणोऽनुवाद इति शेषः॥ कथं तर्हि सर्व्वोपासनशेषत्वेन विधित्सितत्वमोङ्कारादीनामुक्तमत आह। खिलेति॥ अद्वितीयं ब्रह्मोत्सर्गप्रवृत्तं शास्त्रं प्रलयावस्थब्रह्मविषयं

भा॰भूतानि च। अत्रैके वर्णयन्ति। पूर्णात्कारणात्पूर्णं कार्य्य-मुद्रिच्यते। उद्रिक्तं कार्य्यं वर्त्तमानकालेऽपि पूर्णमेव पर-मार्थवस्तुभूतं द्वैतरूपेण पुनः प्रलयकाले पूर्णस्य कार्य्यस्य पूर्णतामादायात्मनिधिलात्पूर्णमेवावशिष्यते कारणरूपं। एवमुत्पत्तिस्थितिप्रलयेषु त्रिष्वपि कालेषु कार्य्यकारणयोः पूर्णतैव। सा चैकैव पूर्णता कार्य्यकारणयोर्भेदेनैव व्यपदि-श्यते। एवञ्च तथा द्वैताद्वैतात्मकमेकं ब्रह्म। यथा किल समुद्रो जलतरङ्गफेनबुद्बुदाद्यात्मक एक एव। यथा जलं सत्यं तदुद्भवाश्च तरङ्गफेनबुद्बुदादयः समुद्रात्मभूता एवाविर्भावतिरोभावधर्म्मिणः परमार्थसत्याः। एवं सर्व्व-मिदं द्वैतं परमार्थसत्यमेव जलतरङ्गादिस्थानीयं समुद्र-जलस्थानीयं तु परं ब्रह्म। एवञ्च किल द्वैतस्य सत्यत्वे कर्म्म-काण्डस्य प्रामाण्यं यदा पुनर्द्वैतं द्वैतमिवाविद्याकृतं मृग-

---

आ॰ तृष्णिकावत्तन्तु विषयं प्रवृत्तं तस्यापवादः। ततो द्वैताद्वैतरूपं ब्रह्म सर्व्वोपनिषदर्थः॥ तदेव ब्रह्मानेन मन्त्रेण सङ्क्षिप्यत इति भर्तृप्रपञ्चपक्षमुत्थापयति। अत्रेत्यादिना॥ कार्य्यकारणयो-रुत्पत्तिकाले पूर्णत्वमुक्त्वा स्थितिकालेऽपि तदाह। उद्रिक्तमिति॥ प्रलयकालेऽपि तयोः पूर्णत्वं दर्शयति। पुनरिति॥ कालभेदेन कार्य्यकारणयोरुक्तां पूर्णतां निगमयति। एवमिति॥ कार्य्यकार-णत्वे पूर्णे चेत्तर्हि कथमद्वैतसिद्धिरित्याशङ्क्याह। सा चेति॥ कथं तर्हि तयोरुक्तं पूर्णत्वं तदाह। कार्य्यकारणयोरिति॥ एका पूर्णता व्यपदिश्यते न द्वयोरिति स्थिते लब्धमर्थमाह। एवञ्चेति॥ एकं ह्यनेकात्मकमिति विप्रतिषेधमाशङ्क्य दृष्टान्तेन निराचष्टे। यथा किलेति॥ एवमेकं ब्रह्मानेकात्मकमिति शेषः। ब्रह्मणो द्वैताद्वैतात्मकत्वेऽपि सत्यमद्वैतमसत्यमितरदित्याशङ्क्याह। यथा

भा॰ वृश्चिकावदनृतमद्वैतमेव परमार्थतस्तदा किल कर्म्मकाण्डं विषयाभावादप्रमाणं भवति ॥

तथा च विरोध एव स्याद्वेदैकदेशभूतोपनिषत्प्रमाणं परमार्थतोऽद्वैतवस्तुप्रतिपादकत्वात्। अप्रमाणं कर्म्मकाण्डमवद्वैतविषयत्वात्। तद्विरोधपरिजिहीर्षया श्रुत्यैतदुक्तं कार्य्यकारणयोः सत्यत्वं समुद्रवत् पूर्व्वमद इत्यादिनेति। तदसत्। विशिष्टविषयापवादविकल्पयोरसम्भवात्। न हीयं सुविवक्षिता कल्पना। कस्माद्यथा क्रियाविषये उत्सर्गप्राप्तस्यैकदेशोऽपवादः क्रियते। यथा अहिंसन्सर्व्वभूतान्यन्यत्र तीर्थेभ्य इति हिंसा सर्व्वभूतविषयोत्सर्गेण निवारिता। तीर्थे विशिष्टविषये ज्योतिष्टोमादावनुज्ञायते। न च तथा वस्तु-

---

आ॰ चेत्यादिना ॥ द्वैतस्य परमार्थसत्त्वे कर्म्मकाण्डश्रुतिमनुकूलयति। एवञ्चेति॥ विपक्षे दोषमाह। यदा पुनरिति ॥

अस्तु कर्म्मकाण्डाप्रामाण्यं नेत्याह। तथाचेति। विरोधोऽस्यवनर्विधेरिति शेषः। तमेव विरोधं साधयति। वेदेति। कथं तर्हि विरोधसमाधिस्तत्राह। तद्विरोधेति ॥ प्राप्तं भर्तृप्रपञ्चप्रस्थानं प्रत्याचष्टे। तदसदिति॥ विशिष्टमद्वितीयं ब्रह्म तद्विषयोत्सर्गापवादयोर्विकल्पसमुच्चययोश्चासम्भवं वक्तुं प्रतिज्ञाभागं विभजते। न हीति॥ तत्र प्रश्नपूर्व्वकं हेतुं विवृणोति। कस्मादित्यादिना॥ यथेत्यादिग्रन्थस्य न च तथेत्यादिना सम्बन्धः। क्रियायामुत्सर्गापवादसम्भावनामुदाहरति। यथेत्यादिना ॥ तथाऽन्यत्रापि क्रियायामुत्सर्गापवादौ द्रष्टव्याविति शेषः। वैधर्म्मदृष्टान्तस्य दार्ष्टान्तिकमाह। न चेति॥ विषयभेदे सत्युत्सर्गापवादौ दृष्टौ न तावदद्वितीये ब्रह्मणि सम्भवतः। न हि ब्रह्माद्वयमेव जायते नीयते चेति सम्भावनास्पदमिति भावः। उत्सर्गापवादानुपपत्तिवद्ब्रह्मणि विकल्पानुपपत्तेश्च। तदेकरसमेवितव्य-

भा॰ विषय इत्यद्वैतं शास्त्रोत्सर्गेण प्रतिपाद्य पुनस्तदेकदेशोऽपव-
दितुं शक्यते । ब्रह्मणोऽद्वैतत्वादेकदेशत्वानुपपत्तेस्तथा
विकल्पानुपपत्तेश्च । यथातिरात्रे षोडशिनं गृह्णाति
नातिरात्रे षोडशिनं गृह्णातीति ग्रहणाग्रहणयोः पुरुषा-
धीनत्वाद्विकल्पो भवति । न त्विह तथा वस्तुविषये द्वैतं वा
स्यादद्वैतं वेति विकल्पः सम्भवत्यपुरुषतन्त्रत्वादात्मवस्तुनो
विरोधाच्च द्वैताद्वैतत्वयोरेकत्वस्य । तस्मान्न सुविवक्षितेयं
कल्पना श्रुतिन्यायविरोधाच्च सैन्धवघनवत्प्रज्ञानैकरसघनं
निरन्तरं पूर्व्वापरवाह्याभ्यन्तरभेदविवर्जितं सवाह्याभ्या-
न्तरमजं नेति नेत्यस्थूलमनणुमजमजरमभयमन्तमित्येव-
माद्याः श्रुतयो निश्चितार्थाः संशयविपर्य्यासाशङ्कारहिताः
सर्व्वाः समुद्रे प्रक्षिप्ताः स्युरकिञ्चित्करत्वात् । तथा न्याय-
विरोधोऽपि सावयवस्यानेकात्मकस्य क्रियावतो नित्यत्वानु-
पपत्तेः । नित्यत्वञ्चात्मनः स्मृत्यादिदर्शनादनुमीयते तद्वि-

---

आ॰ मित्याह । तथेति ॥ विकल्पानुपपत्तिमुपपादयति । यथेत्यादिना ॥
सम्प्रति समुच्चयासम्भवमभिदधाति । विरोधाच्चेति ॥ उत्सर्गापवा-
दविकल्पसमुच्चयानामसम्भवान्न युक्ता ब्रह्मणो नानारसत्वकल्प-
नेति फलितमाह । तस्मादिति ॥ परकीयकल्पनानुपपत्तौ हेत्व-
न्तरं प्रतिज्ञाय श्रुतिविरोधं प्रकटीकृत्य न्यायविरोधं प्रकटयति ।
तथेति ॥ ब्रह्मणोऽनेकरसत्वे स्यादिति शेषः । नित्यत्वानुपपत्तेरा-
त्मनो नित्यत्वाङ्गीकारविरोधः स्यादित्यध्याहारः । ननु तस्य नित्यत्वं
नाङ्गीक्रियते मानाभावादिति प्रासङ्गिकामाशङ्कां प्रत्याह ।
नित्यत्वञ्चेति ॥ स्मृत्यादिदर्शनादित्यादिशब्देन स एव तु कर्म्मानु-
स्मृतिशब्दविधिभ्य इत्यधिकरणोक्ता हेतवो गृह्यन्ते । अनुमीयते
कल्प्यते स्वीक्रियत इति यावत् । तद्विरोधश्च स्मृत्यादिदर्शनहता-

भा॰ रोधश्च प्राप्नोति। अनित्यत्वे भवत्कल्पनानानर्थक्यञ्च स्फुटं। एवं चास्मिन् पक्षे कर्म्मकाण्डानर्थक्यं। अकृताभ्यागमकृतविप्रणाशप्रसङ्गात्॥

ननु ब्रह्मणो द्वैताद्वैतात्मकत्वे समुद्रादिदृष्टान्ता विद्यन्ते कथमुच्यते भवतैकस्य द्वैताद्वैतत्वं विरुद्धमिति। न। अन्यविषयत्वात्। नित्यनिरवयववस्तुविषयं हि विरुद्धत्वमवोचाम द्वैताद्वैतत्वस्य न कार्य्यविषये सावयवे। तस्माच्छ्रुतिस्मृतिन्यायविरोधादनुपपन्नेयं कल्पना। अस्याः कल्पनाया वरमुपनिषत्परित्याग एव। अध्येयत्वाच्च न शास्त्रार्थेयं कल्पना। न हि जननमरणाद्यनर्थशतसहस्रभेदसमाकुलं

---

आ॰ त्वनित्यत्वानुमानविरोधश्चेत्यर्थः॥ आत्मनोऽनित्यत्वे दोषान्तरमाह। भवदिति॥

कर्म्मकाण्डस्य सत्यार्थत्वं परेण कल्प्यते। तदानर्थक्यमात्मनित्यत्वे स्पष्टमेवापतेदित्युक्तमेव स्फुटयति। स्फुटमेवेति॥ ब्रह्मणो नानारसत्वे विरोधमुक्तमसहमानः शोद्यं स्मारयति। नन्विति॥ समुद्रादीनां कार्य्यत्वसावयवत्वाभ्यामनेकात्मकत्वमविरुद्धं ब्रह्मणस्तु नित्यत्वान्निरवयवत्वाच्च नानेकात्मकत्वं युक्तमिति वैषम्यमादर्शयन्नुत्तरमाह। नेत्यादिना॥ ब्रह्मणो नानारसत्वकल्पनानुपपत्तिमुपसंहरति। तस्मादिति॥ अजो नित्यः शाश्वतोऽयं पुराण इत्याद्याः स्मृतयः। ननु प्रत्यक्षाद्यविरोधेनोपनिषदां विषयसिद्ध्यर्थमेषा कल्पना क्रियते। तथा च कथं साऽनुपपन्नेत्याशङ्क्याह। अस्या इति॥ विरुद्धार्थत्वे कल्पितेऽपि तत्प्रामाण्यानुपपत्तेरविशेषादिति भावः। किञ्च ब्रह्मणो नानारसत्वं लौकिकं वैदिकं वा। नाद्यः। तस्यालौकिकत्वात्तन्नानारसत्वे लोकस्य तटस्थत्वात् न द्वितीयः। तच्च नानारसत्वस्य ध्येयत्वेन ज्ञेयत्वेन वा शास्त्रेणानुपदेशादित्याह। अध्येयत्वाच्चेति॥ तदेव स्फुटयति। न हीति॥ इतश्च नानारसं ब्रह्म न शास्त्रप्रमाणकमित्याह। प्रमाणेति॥ प्रकारादुपरिष्टतीत्याह्वयते

भा॰ यमुद्रवनादिवत्सावयवमनेकरसं ब्रह्म ज्ञेयत्वेन विज्ञेयत्वेन वा श्रुत्योपदिश्यते। प्रज्ञानघनतायोपदिश्यते। एकधैवानुद्रष्टव्यमिति चानेकधा दर्शनापवादाच्च मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति। यच्च श्रुत्या निन्दितं तन्न कर्त्तव्यं। यच्च न क्रियते न स शास्त्रार्थो ब्रह्मणोऽनेकरसत्वमनेकधात्वञ्च द्वैतरूपं निन्दितत्वान्न द्रष्टव्यं। अतो न शास्त्रार्थः। यत्त्वेकरसत्वं ब्रह्मणस्तद्द्रष्टव्यत्वात्प्रशस्तं। प्रशस्तत्वाच्च शास्त्रार्थो भवितुमर्हति। यत्तूक्तं वेदैकदेशस्याप्रामाण्यं कर्म्मविषये द्वैताभावादद्वैते च प्रामाण्यमिति तन्न यथाप्राप्त उपदेशार्थत्वात्। न हि द्वैतमद्वैतं वा वस्तु जातमात्रमेव पुरुषं ज्ञापयित्वा पश्चात्कर्म्म वा ब्रह्मविद्या-

---

आ॰ अनेकधा दर्शनापवादाच्च नानारसं ब्रह्म शास्त्रार्थो न भवतीति शेषः। भेददर्शनस्य निन्दितत्वे फलमर्थमाह। यच्चेति। अकर्त्तव्यत्वे प्राप्तमर्थं कथयति। यच्च नेति। सामान्यन्यायं प्रकृते योजयति। ब्रह्मण इति। कस्तर्हि शास्त्रार्थस्तत्राह। यत्त्विति। ब्रह्मैकरसे प्रागुक्तं दोषमनुभाषते। यत्तूक्तमिति। कर्म्मकाण्डस्य कर्म्मविषयेण प्रामाण्यमसद्द्वैतविषयत्वाद्ब्रह्मकाण्डस्य त्वद्वैते प्रामाण्यं परमार्थाद्वैतवस्तुप्रतिपादकत्वात्तथा च विरोधोऽध्ययनविधेरित्यनुवादार्थः। कर्म्मकाण्डप्रामाण्यं प्रत्याचष्टे। तन्नेति। प्रसिद्धं भेदमादाय तत्रैव विधिनिषेधोपदेशस्य प्रवृत्तिनिवृत्तिद्वारार्थवत्त्वान्न कर्म्मकाण्डानर्थक्यमित्यर्थः। ननु शास्त्रमेवादौ भेदं बोधयित्वा पश्चादभ्युदयसाधनं कर्म्मोपदिशति। तथा च नास्ति भेदस्यान्यतः प्राप्तिरत आह। न हीति। यथा हि शास्त्रं जातमात्रं पुरुषं प्रत्यद्वैतं वस्तु बोधयित्वा पश्चाद्ब्रह्मविद्यामुपदिशतीति नेष्यते तथा प्रथममेव पुरुषं प्रति द्वैतं बोधयित्वा कर्म्म पुनर्बोधयतीत्यपि नाभ्युपेयं प्रथमतो भेदवेदनावस्थाया-

भा॰ स्योपदिशति शास्त्रं न चोपदेशार्हं द्वैतं जातमात्रं प्राणि-बुद्धिगम्यत्वात् ॥

न च द्वैतस्यानृतत्वबुद्धिः प्रथममेव कस्यचित्स्यात् । येन द्वैतस्य सत्यत्वमुपदिश्य पश्चादात्मनः प्रामाण्यं प्रतिपादयेच्छास्त्रं । नापि पाषण्डिभिरपि प्रस्थापिताः शास्त्रस्य प्रामाण्यं न गृह्णीयुः । तस्माद्यथा प्राप्तमेव द्वैतमविद्याकृतं स्वाभाविकमुपादाय स्वाभाविक्यैवाविद्ययाऽयुक्ताय राग-द्वेषादिदोषवते यथाभिमतपुरुषार्थसाधनं कर्मोपदि-

---

व्या॰ मस्य शास्त्रानधिकारित्वादित्यर्थः । द्वैतस्योपदेशार्हत्वमङ्गीकृत्योक्तं तदेव नास्तीत्याह । न चेति ॥

ननु द्वैतस्य सत्यबुद्ध्यभावे श्रुतेष्वकर्मानुष्ठानाय पुंसां प्रवृत्त्य-नुपपत्तेः स्वप्रामाण्यसिद्ध्यर्थमेव द्वैतसत्यत्वं श्रुतिर्बोधयिष्यति नेत्याह । न च द्वैतस्येति ॥ द्वैतानृतत्ववादिषु कर्मजडानां प्रवेश-प्रतीतेर्न प्रथमद्वैतानृतत्वबुद्धिर्न च द्वैतसत्यत्वं श्रुत्यर्थस्तत्परिचय-हीनानामपि द्वैतसत्यत्वाभिनिवेशादित्यर्थः । किञ्च न द्वैतवैतथ्यं शास्त्रप्रामाण्यविघातकं यतो बौद्धादिभिः श्रेयसे प्रस्थापिताः स्वधिया द्वैतमिथ्यात्वावगमेऽपि स्वर्गकामश्चैत्यं वन्देतेत्यादिशा-स्त्रस्य प्रामाण्यं गृह्णन्ति । तथाग्निहोत्रादिशास्त्रस्यापि प्रामाण्यं भविष्यति साधनत्वांशानपहारादित्याह । नापीति ॥ शास्त्र-द्वयस्य प्रामाण्योपपत्तिमुपसंहरति ॥ तस्मादित्यादिना ॥ प्रसिद्धो योऽयं क्रियादिरूपे द्वैते दोषः सातिशयत्वादिस्तद्दर्शनं विवे-कस्तद्वते तस्माद्द्वैताद्विपरीतमौदासीन्योपलक्षितं स्वरूपं तस्मि-न्नवस्थानं कैवल्यं तदर्थिने मुमुक्षवे साधनचतुष्टयसम्पन्नायेत्यर्थः । किञ्च तत्त्वज्ञानादूर्द्ध्वं पूर्व्वं वा शास्त्रयोर्विरोधः शङ्क्यते । नाद्य इत्याह । यथेति ॥ अवस्थाभेदादेकस्मिन्नपि पुरुषे शास्त्रद्वयस्य प्रामाण्यमविरुद्धं । इत्येवं स्थिते सत्युपनिषज्जन्यतत्त्वज्ञानोत्पत्त्यन-न्तरं नान्तरीयकत्वेन प्राप्ते कैवल्ये पुरुषनैराकाङ्क्ष्यं जायते न

भा॰ प्रत्ययो पश्चात्प्रसिद्धक्रियाकारकफलस्वरूपदोषदर्शनवते तद्विपरीतौदासीन्यस्वरूपावस्थाप्रार्थिने तदुपायभूतमात्मैकत्वदर्शनात्मिकां ब्रह्मविद्यामुपदिशति । अथैवं सति तदौदासीन्यस्वरूपावस्थाने फले प्राप्ते शास्त्रस्य प्रामाण्यं प्रत्यर्थित्वं निवर्त्तते । तदभावाच्छास्त्रस्यापि शास्त्रत्वं तं प्रति निवर्त्तत एव । तथा प्रतिपुरुषं परिसमाप्तं शास्त्रमिति न शास्त्रविरोधगन्धोऽप्यस्ति । अद्वैतज्ञानावसानत्वाच्छास्त्रशिष्यशासनादिद्वैतभेदस्य । अन्यतमावस्थाने हि विरोधः स्यात् । अवस्थितस्येतरेतरापेक्षत्वात्तु शास्त्रशिष्यशासनानां नान्यतमो व्यवतिष्ठते । सर्व्वसमाप्तौ तु कस्य विरोध आशङ्क्येताद्वैते केवले शिवे सिद्धे नाप्यविरोधता ऽतएव ॥

---

आ॰ न निराकाङ्क्षं पुरुषं प्रति शास्त्रस्य शास्त्रत्वमस्ति । प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयत इति न्यायात्कृतकृत्यं प्रति प्रवर्त्तकादिविरहिणः शास्त्रत्वायोगादतो ज्ञानादूर्द्धं धर्म्माभावाद्विरोधासिद्धिरित्यर्थः ॥ एतस्मिन्पुरुषे दर्शितन्यायं सर्व्वत्रातिदिशति । तथेति ॥ ज्ञानादूर्द्धं विरोधाभावमुपसंहरति । इति नेति ॥ कल्पान्तरं प्रत्याह । अद्वैतेति ॥ तत्त्वज्ञानात्पूर्व्वं भेदस्यावस्थितत्वात्तमविद्यमादायाधिकारिभेदादवस्थाभेदाद्वा काण्डयोरविरोधसिद्धिरित्यर्थः ॥ भेदमेवोपपादयति । अन्यतमेति ॥ शिष्यादीनामन्यतमस्यैवावस्थानं चेदवस्थितस्येतरस्मिंश्च सापेक्षत्वान्न सोऽप्यवतिष्ठेत । न च ज्ञानात्प्रागन्यतमस्यैवावस्थानं सर्व्वेषामेव तेषां यथा प्रतिभावमवस्थानादतो न पूर्व्वं विरोधशङ्केत्यर्थः । ऊर्द्धं विरोधप्रसङ्गाभावमधिकविवक्षयाऽनुवदति । सर्व्वेति ॥

भा॰ अथाप्यभ्युपगम्य ब्रूमः। द्वैताद्वैतात्मकत्वेऽपि शास्त्रविरोधस्य तुल्यत्वात्। यदापि समुद्रादिवत् द्वैताद्वैतात्मकमेकं ब्रह्माभ्युपगच्छामो नान्यदस्मात्तरं तदापि भवदुक्ताच्छास्त्रविरोधान्न मुच्यामहे। कथं। एकं हि परं ब्रह्म द्वैताद्वैतात्मकं तच्छोकमोहाद्यतीतत्वादुपदेशं न काङ्क्षति। न चोपदेष्टाऽन्यो ब्रह्मणो द्वैताद्वैतरूपस्य। ब्रह्मण एकस्यैवाभ्युपगमात्। अथ द्वैतविषयस्यानेकत्वादन्योऽन्य उपदेशो न ब्रह्मविषय उपदेश इति चेत्तदा द्वैतात्मकमेव ब्रह्म नान्यदस्तीति विरुध्यते। यस्मिन्द्वैतविषयेऽन्योन्य उपदेशः सोऽन्यो द्वैतस्थान्यदेवेति समुद्रदृष्टान्तो विरुद्धः। न च समुद्रोदकैकत्ववदिशानैकत्वे ब्रह्मणोऽन्य उपदेशग्रहणादिकल्पना सम्भवति। न हि हस्तादिद्वैताद्वैतात्मके देवदत्ते वाक्यश्र-

---

आ॰ कथं कैवल्यं विरोधाभावस्य सत्त्वादित्याशङ्क्याह। नापीति॥ अद्वैतत्वादेवाभावस्यापि तत्त्वनिमज्जनादित्याह। अत एवेति॥ अद्वितीयमेव ब्रह्म न द्वैतात्मकमित्युपपादितमिदानीं ब्रह्मणो द्वैताद्वैतात्मकत्वाभ्युपगमेऽपि विरोधो न शक्यते परिहर्तुमित्याह। अथापीति॥ तुल्यत्वात्तदभ्युपगमो व्यर्थेति शेषः। उक्तमेवोपदिशति। यदापीति॥ द्वैताद्वैतात्मकमेकं ब्रह्मेति पक्षे कथं विरोधो न समाधीयते॥ द्वैतमद्वैतञ्चाधिकृत्य वाक्यद्वयप्रामाण्यसम्भवादित्याक्षिपति। कथमिति॥ ब्रह्मविषयः शास्त्रोपदेशः किंवाऽब्रह्मविषयः। प्रथमे द्वैताद्वैतरूपस्यैव ब्रह्मणोऽभ्युपगमात्तस्य च नित्यमुक्तत्वान्नोपदेशः सम्भवतीत्याह। एकं हीति॥ तस्योपदेशाभावे हेत्वन्तरमाह। न चेति॥ उपदेष्टा हि ब्रह्मणोऽन्योऽनन्यो वा। नाद्योऽभ्युपगमविरोधात्। न द्वितीयो भेदमन्तरेणोपदेश्योपदेशकाभावासम्भवादिति भावः॥ कल्पान्तरमुत्थापयति। अथेति॥ प्रतिज्ञाविरोधेन निराकरोति। तदेति॥ किञ्च

भा॰ योर्देवदत्तैकदेशभूतयोर्वागुपदेशी कथं केवल उपदेशस्य ग्रहीता। देवदत्तस्तु नोपदेष्टा नाप्युपदेशस्य ग्रहीतेति कल्पयितुं शक्यते। समुद्रैकोदकात्मत्ववदेकत्वविज्ञानवत्त्वाद्देवदत्तस्य। तस्माच्छ्रुतिन्यायविरोधस्याभिप्रेतार्थासिद्धेश्चैवं कल्पनार्थां स्यात्। तस्माद्यथा व्याख्यात एवास्माभिः पूर्णमद इत्यस्य मन्त्रस्यार्थः॥

---

आ॰ सर्व्वस्य ब्रह्मरूपत्वे यः समुद्रदृष्टान्तः सन् स्यात्परस्परोपदेशस्याशक्यविषयत्वादित्याह। यस्मिन्निति॥ अथ यथा फेनादिविकाराणां भिन्नत्वेऽपि समुद्रोदकात्मकत्वं तथा जीवादीनां भिन्नत्वेऽपि ब्रह्मस्वभावविज्ञानैक्याद्ब्रह्म सर्व्वमिति न विरुध्यते तत्राह। न चेति॥ सर्व्वस्य ब्रह्मत्वमङ्गीकृतं चेद्ब्रह्मविषय एवोपदेशः स्याद्भेदस्याविचारितरमणीयत्वादित्यर्थः। ननु नानारूपवस्तुसमुदायो ब्रह्म तत्रोपदेशभेदादुपदेश्योपदेशभावो ब्रह्म तु नोपदेश्यं उपदेशकञ्चेति तत्राह। न हीति॥ तत्र हेतुमाह। समुद्रेति॥ यथा समुद्रस्योदकात्मना फेनादिष्वेकत्वं तथा देवदत्तदेहस्य वागाद्यवयवेष्वेकत्वेन विज्ञानवत्त्वान्न व्यवस्था सम्भवत्तथा ब्रह्मण्यपि अशक्यमित्यर्थः। मतान्तरनिराकरणमुपसंहरति। तस्मादिति॥ आत्मैकरसस्य प्रतिपादिका श्रुतिर्न्यायश्च सावयवस्यानेकात्मकस्येत्यादावुक्तः। अभिप्रेतार्थासिद्धिर्भवत्कल्पनानर्थक्यस्येत्यादिना दर्शिता। एवं कल्पनायामेकानेकात्मकं ब्रह्मेत्यभ्युपगतेऽपीत्यर्थः। परकीयव्याख्यानासम्भवफलितमाह। तस्मादिति॥

उ॰ ॐ३ खं ब्रह्म।

भा॰ ॐ खं ब्रह्मेति मन्त्रोऽयमन्यत्राविनियुक्त इह ब्राह्मणे ध्यानकर्मणि विनियुज्यते। अत्र च ब्रह्मेति विशेष्याभिधानं खमिति विशेषणं। विशेषणविशेष्ययोश्च सामानाधिकरण्येन निर्देशो नीलोत्पलवत्। खं ब्रह्मेति ब्रह्मशब्दो बृहद्वस्तुमात्रास्पदो विशेषितोऽतो विशेष्यते खं ब्रह्मेति। यत्तत्खं ब्रह्म तदोंशब्दवाच्यमोंशब्दस्वरूपमेतत्। उभयथापि सामानाधिकरण्यमविरुद्धमिह च ब्रह्मोपासनसाधनार्थमोंशब्दः प्रयुक्तः। श्रुत्यन्तरादेतदालम्बनं श्रेष्ठमेतदालम्बनं परमोमित्यात्मानं युञ्जीत। ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत। ओमित्येवं ध्यायथ आत्मा-

---

आ॰ ध्यानशेषत्वेनोपनिषदर्थं ब्रह्मानूद्य तद्विधानार्थं तस्मिन्विनियुक्तं मन्त्रमुत्थापयति। ॐ खमिति॥ इषे त्वेत्यादिवत्तस्य कर्मान्तरे विनियुक्तत्वमाशङ्क्याह। अन्यत्रेति॥ विनियोजकाभावादिति भावः। तर्हि ध्यानेऽपि नायं विनियुक्तो विनियोजकाभावाविशेषादित्याशङ्क्याह। इहेति॥ खं पुराणमित्यादि ब्राह्मणं तस्य च विनियोजकत्वं ध्यानसमवेतार्थप्रकाशनसामर्थ्यात् यद्यपि मन्त्रनिष्ठं सामर्थ्यं विनियोजकं तथापि मन्त्रब्राह्मणयोरेकार्थत्वाद्ब्राह्मणस्य सामर्थ्यद्वारा विनियोजकत्वमविरुद्धमिति भावः। अत्रेति मन्त्रोक्तिः॥ विशेषणविशेष्यत्वे यथोक्तसामानाधिकरण्यं हेतूकरोति। विशेषणेति॥ ब्रह्मेत्युक्ते सत्याकाङ्क्षाभावात् किं विशेषणेनेत्याह। ब्रह्म इति॥ निरुपाधिकस्य सोपाधिकस्य वा ब्रह्मणो विशेषणत्वेऽपि कथं तस्मिन्नोंशब्दप्रवृत्तिरित्याशङ्क्याह। यत्तदिति॥ किमिति यथोक्ते ब्रह्मणि ॐशब्दो मन्त्रे प्रयुज्यते तत्राह। इह चेति॥ ॐशब्दो ब्रह्मोपासने

उ॰ खं पुराणं वायुरं खमिति ह स्माह कौरव्याय-

भा॰ नमित्यादेः । अन्यार्थासम्भवाच्चोपदेशस्य । यथान्यत्रोमिति शंसत्योमित्युद्गायतीत्येवमादौ स्वाध्यायारम्भापवर्गयोश्चों-कारप्रयोगो विनियोगादवगम्यते न च तथार्थान्तरमिहावगम्यते । तस्माद्ध्यानसाधनत्वेनैवेहोंकारशब्दस्योपदेशः । यद्यपि ब्रह्मात्मादिशब्दा ब्रह्मणो वाचकास्तथापि श्रुति-प्रामाण्याद्ब्रह्मणो नेदिष्ठमभिधानमोंकारोऽत एव ब्रह्म-प्रतिपत्ताविदं परं साधनं ॥

तच्च द्विप्रकारेण प्रतीकत्वेनाभिधानत्वेन च। प्रतीकत्वेन यथा विष्ण्वादिप्रतिमाऽभेदेनैवोंकारो ब्रह्मेति प्रतिप-त्तव्यः तथा ह्योंकारालम्बनस्य ब्रह्म प्रसीदति । एतदा-लम्बनं श्रेष्ठमेतदालम्बनं परं । एतदालम्बनं ज्ञात्वा ब्रह्म-

---

आ॰ साधनमित्यत्र मानमाह । तथा चेति ॥ सापेक्षं श्रैष्ठ्यं वारयति। परमिति ॥ आदिशब्देन प्रणवो धनुरित्यादि गृह्यते। ॐकारो ब्रह्मेति सामाधिकरण्योपदेशस्य ब्रह्मोपासने साधनत्वमोंकारस्ये-त्यस्मादर्थान्तरासम्भवाच्च ॥ तस्य तत्साधनत्वमेष्टव्यमित्याह । अन्यार्थेति । एतदेव प्रपञ्चयति । यथेत्यादिना ॥ अन्यत्रेति तैत्ति-रीयश्रुतिग्रहणं । अपवर्गः स्वाध्यायावसानं । अर्थान्तरावगतेर-भावे फलितमाह । तस्मादिति ॥ ननु शब्दान्तरेष्वपि ब्रह्म-वाचकेषु सत्सु किमित्योंशब्द एतद्ध्यानसाधनत्वेनोपदिश्यते तत्राह । यद्यपीति ॥ नेदिष्ठं निकटतमं सम्प्रियतममित्यर्थः॥ प्रियतमप्रयुक्तं फलमाह । अत एवेति ॥

साधनत्वेऽवान्तरविशेषं दर्शयति । तच्चेति ॥ प्रतीकत्वेन कथं साधनत्वमिति पृच्छति । प्रतीकत्वेनेति ॥ कथमित्यध्याहारः ॥ परिहरति । यथेति ॥ ॐकारो ब्रह्मेति प्रतिपत्तौ किं स्यात्त-

उ॰ णीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदि-
तव्यं ॥ १ ॥ प्रथमं ब्राह्मणं ॥

---

भा॰ लोके महीयत इति श्रुतेः । तत्र खमिति भौतिके प्रतीति-
र्माभूदित्याह । खं पुराणं चिरन्तनं खं परमात्माकाशमि-
त्यर्थः । यत्तत्परमात्माकाशं पुराणं खं तच्चक्षुराद्यवि-
षयत्वान्निरालम्बनमशक्यं ग्रहीतुमिति । श्रद्धाभक्तिभ्यां
भावविशेषेण चोङ्कार आवेशयति विष्णुङ्काङ्कितायां
शिलादिप्रतिमायां विष्णुं यथा लोकः । एवं वायुरं खं वायु-
रस्मिन्विद्यत इति वायुरं खं मन्त्रे खमित्युच्यते । न पुराणं
खमित्येवमाह स्म । कोऽसौ कौरव्यायणीपुत्रः । वायुरे हि
खे मुख्यः खशब्दव्यवहारस्तस्मान्मुख्ये सम्प्रत्ययो युक्त इति
मन्यते । तत्र यदि पुराणं ब्रह्म निरुपाधिस्वरूपं यदि वा
वायुरं खं सोपाधिकं ब्रह्म सर्व्वथाऽप्योङ्कारः प्रतीकत्वेनैव
प्रतिमावत्साधनत्वं प्रतिपद्यते । एतद्वै सत्यकाम परञ्चा-

---

आ॰ हाह । तथा चेति । मन्त्रमेवं व्याख्याय ब्राह्मणमवतार्य्य व्याचष्टे ।
तत्रेत्यादिना । मन्त्रः सप्तम्यर्थः । ननु यथोक्तं तत्त्वं स्वेनैव रूपेण
प्रतिपत्तुं शक्यते किं प्रतीकोपदेशेनेत्याशङ्क्याह । यत्तदिति ।
भावविशेषो बुद्धेर्विषयपारवश्यं परिहृत्य प्रत्यग्ब्रह्मणाभि-
मुख्यमोंकारे ब्रह्मावेशनमुदाहरणेन स्फुटयति । यथेति । कल्पा-
न्तरमाह । वायुरमित्यादिना । किमिति सूत्राधिकरणमव्या-
कृतमाकाशमत्र गृह्यते तत्राह । वायुरे हीति । तदेव भूता-
काशात्मना विपरिणतमिति भावः । तर्हि पक्षद्वये सम्भवमाने कः
सिद्धान्तः स्यादित्याशङ्क्याधिकारिभेदमाश्रित्याह । तत्रेति ।
श्रुत्यन्तरस्यान्यथासिद्धिसम्भवादोङ्कारस्य प्रतीकत्वेऽपि विश-

भा॰ परञ्च ब्रह्म यदोङ्कार इति श्रुत्यन्तरात्केवलशब्दार्थे विप्रतिपत्तिर्वेदोऽयमोङ्कारो वेद विजानात्यनेन यद्वेदितव्यं । तस्माद्वेद ॐकारो वाचकोऽभिधानं । तेनाभिधानेन यद्वेदितव्यं ब्रह्म प्रकाश्यमानमभिधीयमानं वेद साधको विजानात्युपलभेत । तस्माद्वेदोऽयमिति ब्राह्मणा विदुः । तस्माद्ब्राह्मणानामभिधानत्वेन साधनत्वमभिप्रेतमोङ्कारस्याथवा वेदोऽयमित्याद्यर्थवादः कथमोङ्कारो ब्रह्मणः प्रतीकत्वेन विहितः ॥

ॐ खं ब्रह्मेति सामानाधिकरण्यात्तस्य स्तुतिरिदानीं वेदत्वेन सर्व्वो ह्ययं वेद ॐकार एव । एतत्प्रभव एतदात्मकः सर्व्व ऋग्यजुःसामादिभेदभिन्न एष ओंकारः । तद्यथा शङ्कुना सर्व्वाणि पर्णानीत्यादिश्रुत्यन्तरादितश्चायं वेद ॐकारो यद्वेदितव्यं यत्तत्सर्व्वं वेदितव्यमोंकारेणैव

---

व्या॰ तिपत्तिमाशङ्क्याह । केवलमिति ॥ इतरत्र विप्रतिपत्तिद्योतका भावादिति भावः । प्रतीकपक्षमुपपाद्याभिधानपक्षमुपपादयति । वेदोऽयमिति । तदेव प्रपञ्चयति । तेनेति ॥ वेदेत्यत्रादौ तच्छब्दो ग्रष्टव्यः ॥ ब्राह्मणा विदुरिति विशेषनिर्देशस्य तात्पर्य्यमाह । तस्मादिति ॥ प्रतीकपक्षेऽपि वेदोऽयमित्यादिग्रन्थो निर्व्वहतीत्याह । अथवेति ॥ विध्यभावे कथमर्थवादः सम्भवतीत्याशङ्क्य परिहरति । कथमित्यादिना ॥

वेदत्वेन स्तुतिरोङ्कारस्य सङ्कृत्यविकरणाभ्यां दर्शयति । सर्व्वो हीति ॥ ॐकारे सर्व्वस्य नामजातस्यान्तर्भावे प्रमाणमाह । तद्यथेति ॥ तत्रैव हेत्वन्तरमवतार्य्य व्याकरोति । इतश्चेति ॥ वेदितव्यं परमपरं वा ब्रह्म । द्वे ब्रह्मणी वेदितव्ये इति श्रुत्यन्तरात् ॥ तद्वेदनसाधनत्वेऽपि कथमोङ्कारस्य वेदत्वमित्याशङ्क्याह ।

उ॰ त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्य्य-मूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्य्यं

---

भा॰ वेदेनेनातोऽयमोंकारो वेदः। इतरस्यापि वेदस्य वेदत्वमत एव तस्माद्विशिष्टोऽयमोंकारः साधनत्वेन प्रतिपत्तव्य इति। अथवा वेदः सः। कोऽसोऽयं। ब्राह्मणा विदुरोंकारं। ब्राह्मणानां ह्यसौ प्रणवोद्गीथादिविकल्पैर्विज्ञेयस्तस्मिन् प्रयुज्यमाने साधनत्वेन सर्व्वो वेदः प्रयुक्तो भवतीति ॥ १॥ सप्तमस्य प्रथमं ब्राह्मणं ॥ १ ॥

अधुना दमादिसाधनत्रयविधानार्थोऽयमारम्भः। त्रय-स्त्रिसंख्याकाः प्राजापत्याः प्रजापतेरपत्यानि प्राजापत्याः। ते किं। प्रजापतौ पितरि ब्रह्मचर्य्यं शिष्यत्वृत्तेर्ब्रह्मचर्य्यस्य प्राधान्याच्छिष्याः सन्तो ब्रह्मचर्य्यमूषुरुषितवन्त इत्यर्थः। के ते। विशेषतो देवा मनुष्या असुराश्च। ते चोषित्वा

---

आ॰ इतरस्यापीति। अत एव वेदितव्यं वेदनहेतुत्वाद्वेदत्वमर्थः। प्रतीकपक्षे वाक्ययोजनां निगमयति। तस्मादिति॥ अभिधानपक्षे प्रतीकपक्षेऽपि वाक्यमेकैकत्र योजयित्वा पक्षद्वयेऽपि साधारण्येन योजयति। अथवेति॥ तस्य पूर्व्वोक्तनीत्या वेदत्वे लाभं दर्शयति। तस्मिन्निति॥ ॐकारस्य प्रणव उपास्तिसाधनत्व-मित्थं सिद्धमित्युपसंहर्त्तुमितिशब्दः ॥ १ ॥ सप्तमस्य प्रथमं ब्राह्मणं ॥ १ ॥

ब्राह्मणान्तरस्य तात्पर्य्यमाह। अधुनेति॥ तद्विधानं सर्व्वो-पास्तिशेषत्वेनेति द्रष्टव्यं। आख्यायिकाप्रवृत्तिरारम्भः। पितरि ब्रह्मचर्य्यमूषुरिति सम्बन्धः। प्रजापतिसमीपे ब्रह्मचर्य्यवासमात्रेण किमित्यसौ देवादिभ्यो हितं ब्रूयादित्याशङ्क्याह। शिष्येति॥

उ॰ देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षर-मुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञा-सिष्टेति ॥ १ ॥ अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञा-सिष्टा३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थे-त्योमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥ अथ हैन·

---

भा॰ब्रह्मचर्य्यं किमकुर्व्वन्नित्युच्यते। तेषां देवा ऊचुः पितरं प्रजापतिं प्रति। किमिति। ब्रवीतु कथयतु नोऽस्मभ्यं यदनुशासनं भवानिति। तेभ्य एवमर्थिभ्यो ह एतदक्षरं वर्णमात्रमुवाच द इति। उक्त्वा च तान् पप्रच्छ पिता किं व्यज्ञासिष्ट इति मयोपदेशार्थमभिहितस्याक्षरस्यार्थं विज्ञातवन्त आहोस्विन्नेति। देवा ऊचुः। विज्ञासिष्मेति विज्ञातवन्तो वयं। यद्येवमुच्यतां किं मयोक्तमिति। देवा ऊचुर्दाम्यत दान्ता यूयं स्वभावतः अतो दान्ता भवतेति नोऽस्मानात्थ कथयसि। इतर आहोमिति

---

आ॰ शिष्यभावेन वृत्तेः सम्बन्धिनो ये धर्म्मास्तेषां मध्ये ब्रह्मचर्य्यस्ये-त्यादि योज्यं। तेषामिति निर्द्धारणे षष्ठी। ऊचुरायोरुक्ताना-मेव शिष्यत्वमिति द्योतनार्थो हशब्दः। विचारार्थाय प्लुतिरित्य-ङ्गीकृत्य प्रश्नमेव व्याचष्टे। मयेति। ओमित्यनुज्ञामेव विभ-जते। सम्यगिति॥ समानत्वेनोत्तरस्य सर्व्वस्यैवार्थवादस्याख्या-ख्येयत्वे प्राप्ते दत्तेत्यत्र तात्पर्य्यमाह॥ स्वभावत इति॥ दान-मेव लोभत्यागरूपमुपदिष्टमिति कुतो निर्दिष्टं किमन्यदेव हितं

उ॰ मसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्दद्द इति दाम्यत दत्त दयध्वमिति तदेतत्त्रयꣳ शिक्षेद्दमन्दानं दयामिति ॥ ३ ॥ द्वितीयं ब्राह्मणं ॥

---

भा॰ सम्यग्व्यज्ञासिष्टेति। सामान्यमन्यत्। स्वभावतो लुब्धा यूयमतो यथा शक्त्या संविभजत दत्तेति नोऽस्मानात्थ किमन्यद्ब्रूयान्नो हितमिति मनुष्याः ॥ १ ॥ २ ॥ तथाऽसुरा दयध्वमिति। क्रूरा यूयं हिंसापरा अतो दयध्वं प्राणिषु दयां कुरुतेति निवदेत्प्रजापतेरनुशासनमद्याप्यनुवर्त्तत एव। यः पूर्व्वं प्रजापतिर्देवादीननुशशास सोऽप्यद्याप्यनुशास्त्येव दैव्या स्तनयित्नुलक्षणया वाचा। कथमेषा श्रूयते दैवी वाक्। कासौ स्तनयित्नुर्दद्द इति दाम्यत दत्त दयध्वमिति। एषां वाक्यानामुपलक्षणाय त्रिर्दकार उच्चार्य्यतेऽनु-

---

आ॰ किञ्चिदादिष्टं किं न स्यादित्याशङ्क्याह। किमन्यदिति। यथा देवा मनुष्याश्च स्वाभिप्रायानुसारेण दकारत्रयमवबुद्धे सत्यर्थं जगृहुस्तथेति यावत्॥ दयध्वमित्यत्र तात्पर्य्यमीरयति। क्रूरा इति। हिंसादीत्यादिशब्देन परस्वापहारादि गृह्यते। प्रजापतेरनुशासनं प्रागासीदित्यत्र लिङ्गमाह। तदेतदिति। अनुशासनस्यानुवृत्तिमेव व्याकरोति। यः पूर्व्वमिति। द इति विसन्धिकरणं सर्व्वत्र वर्णान्तरप्रमापोहार्थं। यथा दकारत्रयमत्र विवक्षितं

भा॰ कृतिर्न तु स्तनयित्नुः शब्दः। त्रिरेव सङ्ख्यानियमस्य लोकेऽ-
प्रसिद्धत्वाद्यस्मादद्यापि प्रजापतिर्दाम्यत दत्त दयध्वमि-
त्यनुशास्त्येव तस्मात्कारणादेतत्त्रयं ॥ ३ ॥

किं तत्त्रयमित्युच्यते दमं दानं दयामिति शिक्षेदुपाद-
द्यात्प्रजापतेरनुशासनमस्माभिः कर्त्तव्यमित्येवं मतिं कुर्य्यात्।
तथा च स्मृतिः। त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेदित्यस्य हि विधेः
शेषः पूर्व्वस्तथापि देवादीनुपदिश्य किमर्थं दकारत्रय-
मुच्चारितवान्प्रजापतिः पृथगनुशासनार्थिभ्यः। ते वा कथं
विवेकेन प्रतिपन्नाः प्रजापतेर्मनोगतं समानेनैव दकारमा-
त्रेणेति पराभिप्रायज्ञा विकल्पयन्ति। अत्रैक आहुर-
दान्तत्वादाढ्यत्वाद्यालुत्वैरपराधितमात्मनो मन्यमानाः
शङ्किता एव प्रजापतावूषुः किं नो वक्ष्यतीति। तेषाञ्च
दकारश्रवणमात्रादेवात्माशङ्कावशेन तदर्थे प्रतिपत्तिर-

---

आ॰ तथा स्तनयित्नुशब्देऽपि त्रित्वं विवक्षितं चेत्प्रसिद्धिविरोधः स्यादि-
त्याशङ्क्याह। अनुकृतिरिति॥ दशब्दानुकारमात्रमत्र विवक्षितं
न तु स्तनयित्नुशब्दे त्रित्वं प्रमाणाभावादित्यर्थः॥ प्रकृतस्यार्थवा-
दस्य विधिपर्य्यवसायित्वं फलितमाह। यस्मादिति॥१॥२॥३॥
उपादानप्रकारमेवाभिनयति। प्रजापतेरिति॥ श्रुतिसिद्ध-
विध्यनुसारिणीं भगवद्वाक्यप्रवृत्तिं दर्शयति। तथा चेति॥ तदे-
तत्त्रयं शिक्षेदित्येष विधिश्चेत्कृतं त्रयाः प्राजापत्या इत्यादिना
ग्रन्थेनेत्याशङ्क्य यस्मादित्यादिना सूचितमाह। शेषेति॥ सर्व्वै-
रेव त्रयमनुष्ठेयं चेत्तर्हि देवादीनुद्दिश्य दकारत्रयोच्चारण-
मनुपपन्नमिति शङ्कते। तथेति॥ दमादित्रयस्य सर्व्वैरनुष्ठेयत्वे
सतीति यावत्॥ किञ्च पृथक् पृथगनुशासनार्थिनो देवादय-

भा॰ भूत्। लोकेऽपि हि प्रसिद्धं पुत्राः शिष्याश्चानुशास्याः सन्तो दोषान्निवर्त्तयितव्या इति। अतो युक्तं प्रजापतेर्दकारमात्रोच्चारणं। दमादित्रये च दकारान्वयात्। आत्मनो दोषानुरूप्येण देवादीनां विवेकेन प्रतिपत्तुश्चेति॥ फलन्त्वेतदात्मदोषज्ञाने सति दोषा निवर्त्तयितुं शक्यन्तेऽल्पेनाप्युपदेशेन। यथा देवादयो दकारमात्रेणेति॥

---

आ॰ तेभ्यो दकारमात्रोच्चारणेनापेक्षितमनुशासनं सिद्ध्यतीत्याह। पृथगिति॥ किमर्थमिदानीं पूर्व्वेण सम्बन्धः। दकारमात्रमुच्चारयतोऽपि प्रजापतेर्विभागेनानुशासनमभिसंहितमित्याशङ्क्याह। ते वेति॥ अयं सर्व्वैरनुष्ठेयमिति परस्य सिद्धान्तिनोऽभिप्रायस्तदभिज्ञाः सन्तो यथोक्तरीत्या विकल्पयन्तीति योजना। पराभिप्रायज्ञा इत्युपहासो वा। परस्य प्रजापतेर्मनुष्यादीनाञ्चाभिप्रायज्ञा इति नञ उल्लेखो वा पाठः। एकीयं परिहारमुत्थापयति। अन्येति॥ अस्तु तेषामेव शङ्का तथापि दकारमात्रात्कीदृशी प्रतिपत्तिरित्याशङ्क्याह। तेषाञ्चेति॥ तदर्थो दकारार्थो दमादिस्तस्य प्रतिपत्तिस्तद्द्वारेणादान्तत्वादिनिवृत्तिरासीदित्यर्थः। किमिति प्रजापतिर्दोषख्यापनद्वारेण ततो देवादीननुशासन् दोषान्निवर्त्तयिष्यति तत्राह। लोकेऽपीति॥ दकारोच्चारणस्य प्रयोजने सिद्धे फलितमाह। अत इति॥ यत्तूक्तं ते वा कथमित्यादि तत्राह। दमादीति॥ प्रतिपत्तुश्च युक्तं दमादीति शेषः। इतिशब्दः स्वयूथ्यमतसमाप्त्यर्थः॥ परोक्तं परिहारमङ्गीकृत्याख्यायिकातात्पर्य्यं सिद्धान्ती ब्रूते। फलन्त्विति॥ निर्ज्ञातदोषा देवादयो यथा दकारमात्रेण ततो निवर्त्तन्त इति शेषः। इतिशब्दो दार्ष्टान्तिकप्रदर्शनार्थः। विशिष्टान् प्रत्यनुशासनस्य प्रवृत्तत्वादस्माकं तदभावादनुपादेयं दमादीति शङ्कते। नन्विति।

भा० नन्वेतत्त्रयाणां देवादीनामनुशासनं देवादिभिरप्येकैक-
मेवोपादेयमद्यत्वेऽपि न तु त्रयं मनुष्यैः शिक्षितव्यमित्यत्रो-
च्यते । पूर्वैर्देवादिभिर्विशिष्टैरनुष्ठितमेतत्त्रयं तस्मान्मनुष्यैरेव
शिक्षितव्यमिति । तत्र दयालुत्वस्याननुष्ठेयत्वं स्यात्कथमसु-
रैरप्रशस्तैरनुष्ठितत्वादिति चेत् । न । तुल्यत्वात्त्रयाणां । अतो
ऽन्योऽभिप्रायः । प्रजापतेः पुत्रा देवादयस्त्रयः । पुत्रेभ्यश्च
हितमेव पित्रोपदेष्टव्यं । प्रजापतिश्च हितज्ञो नान्यथोपदि-
शति । तस्मात्पुत्रानुशासनं प्रजापतेः परममेतद्धितं । अतो
मनुष्यैरेवैतत्त्रयं शिक्षितव्यमिति । अथ न देवा असुरा
वाऽन्ये केचन विद्यन्ते । मनुष्येभ्यो मनुष्याणामेवादान्ता
येऽन्यैरुत्तमैर्गुणैः सम्पन्नास्ते देवा लोभप्रधाना मनुष्यास्तथा

---

आ० किञ्च देवादिभिरपि प्रातिस्विकानुशासनवशादेकैकमेव दमा-
द्यनुष्ठेयं न तत्त्रयमित्याह । देवादिभिरिति । यथा पूर्व्व-
स्मिन्काले देवादिभिरेकैकमेवोपादेयमित्युक्तं तथा वर्त्तमाने
ऽपि काले मनुष्यैरेकैकमेव कर्त्तव्यं पूर्व्वाचारानुसारान्न तु त्रयं
शिक्षितव्यं तथा च कस्यायं विधिरित्याह । अद्यत्वेऽपीति ।
आचारप्रामाण्यमाश्रित्य परिहरति । अत्रेति । इत्येकैकमेव
नोपादेयमिति शेषः । दयालुत्वस्यानुष्ठेयत्वमाक्षिपति । तत्रेति ।
मध्ये दमादीनामिति यावत् । असुरैरनुष्ठितत्वेऽपि दयालुत्व-
मनुष्ठेयं हितसाधनत्वाद्दानादिवदिति परिहरति । नेत्या-
दिना । देवादिषु प्रजापतेरविशेषात्तेभ्यस्तदुपदिष्टमद्यत्वेऽपि
सर्व्वमनुष्ठेयमित्यर्थः । हितस्यैवोपदेष्टव्यत्वेऽपि तदज्ञानात्प्र-
जापतिरन्यथोपदिशतीत्याशङ्क्याह । प्रजापतिश्चेति । हित-
ज्ञस्य पितुरहितोपदेशित्वाभावस्तस्मादित्युक्तः । विशिष्टैरनुष्ठि-
तस्यास्मदादिभिरनुष्ठेयत्वं फलितमाह । अत इति । प्राजापत्या
देवादयो विद्यावन्तः सन्तीत्यर्थवादस्य यथाश्रुतेऽर्थे प्रामाण्य-

उ॰ एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वं तदेतत्त्र्य-

---

भा॰ हिंसापराः क्रूरा असुरास्त एव मनुष्या अदान्तत्वादिदोष-
त्रयमपेक्ष्य देवादिशब्दभाजो भवन्ति । इतरांश्च गुणान्
सत्त्वरजस्तमांस्यपेक्ष्यातो मनुष्यैरेव हि शिक्षितव्यमेतत्त्रय-
मिति तदपेक्षयैव प्रजापतिनोपदिष्टत्वात् । तथा हि मनुष्या
अदान्ता लुब्धाः क्रूराश्च दृश्यन्ते । तथाच स्मृतिः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेदिति ॥
सप्तमस्य द्वितीयं ब्राह्मणं ॥ २ ॥

दमादिसाधनत्रयं सर्वोपासनशेषं विहितं । दान्तोऽ
लुब्धो दयालुः सन्सर्वोपासनेष्वधिक्रियते । तत्र निरुपा-
धिकस्य ब्रह्मणो दर्शनमतिक्रान्तमधुना सोपाधिकस्य तस्यै-
वाभ्युदयफलानि वक्तव्यानीत्येवमर्थोऽयमारम्भः । एष

---

आ॰ मभ्युपगम्य दकारत्रयस्य तात्पर्यं सिद्धमिति वक्तुमितिशब्दः ॥
सम्प्रति कर्म्ममीमांसकमतमनुसरन्नाह । अथवेति ॥ कथं मनुष्येष्वेव
देवासुरत्वं तत्राह । मनुष्याणामिति ॥ अन्ये गुणप्रधानादयः ॥
किं पुनर्मनुष्येषु देवादिशब्दप्रवृत्तौ निमित्तं तदाह । अदान्त-
त्वादिति ॥ देवादिशब्दप्रवृत्तौ निमित्तान्तरमाह । इतरांश्चेति ॥
मनुष्येष्वेव देवादिशब्दप्रवृत्तौ फलितमाह । अत इति ॥ इति-
शब्दो विध्युपपत्तिप्रदर्शनार्थः । मनुष्यैरेव त्रयं शिक्षितव्य-
मित्यत्र हेतुमाह । तदपेक्षयेति ॥ मनुष्याणामेव देवादिभावे
प्रमाणमाह । तथा हीति ॥ त्रयं शिक्षितव्यमित्यत्र स्मृति-
मुदाहरति । तथा चेति ॥ इतिशब्दो ब्राह्मणसमाप्त्यर्थः ॥ सप्तमा-
ध्यायस्य द्वितीयं ब्राह्मणं ॥

सार्थवादेन विधिना सिद्धमर्थमनुवदति । दमादीति ॥ कथं
तस्य सर्वोपासनशेषत्वं तदाह । दान्त इति ॥ अलुब्ध इति छेदः ॥

उ॰ क्षरं हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै
स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै

---

भा॰ प्रजापतिर्यद्धृदयं प्रजापतिरनुशासनीत्यनन्तरमेवाभिहितं
कः पुनरसावनुशासिता प्रजापतिरित्युच्यते। एष प्रजापतिः
कोऽसौ यद्धृदयं हृदयमिति हृदयस्था बुद्धिरुच्यते।
यस्मिन् शाकल्यब्राह्मणान्ते नामरूपकर्म्मणामुपसंहार उक्तो
दिग्विभागद्वारेण तदेतत्सर्व्वभूतप्रतिष्ठं सर्व्वभूतात्मभूतं यद्धृ-
दयं प्रजापतिः प्रजानां स्रष्टा एतद्ब्रह्म बृहत्त्वात्सर्व्वात्मत्वाच्च
ब्रह्म। एतत्सर्व्वमुक्तं पञ्चमाध्याये। हृदयस्य हृदयत्वं सर्व्वत्वञ्च
यस्मात्तस्मादुपास्यं हृदयं ब्रह्म। तत्र हृदयनामाक्षरविषय-
मेव तावदुपासनमुच्यते। तदेतद्धृदयमिति नाम त्र्यक्षरं
त्रीण्यक्षराण्यस्येति त्र्यक्षरं। कानि पुनस्तानि त्रीण्यक्षराण्यु-
च्यन्ते। हृ इत्येकमक्षरमभिहरन्ति। हरतेराहरतिकर्म्मणो
हृ इत्येतद्रूपमिति यो वेद यस्माद्धृदयाय ब्रह्मणे स्वाश्चेन्द्रि-
याण्यन्ये च विषयाः शब्दादयः स्वं स्वं कार्य्यमभिहरन्ति

---

आ॰ सम्प्रत्युत्तरसन्दर्भस्य तात्पर्य्यं वक्तुं भूमिकां करोति। तत्रेति॥
काण्डद्वयं सप्तम्यर्थः। अनन्तरसन्दर्भस्य तात्पर्य्यमाह। अथेति॥
पापक्षयादिरभ्युदयकाम्यकान्युपासनानीति शेषः॥ अनन्तरब्राह्म-
णमादाय तस्य सङ्गतिमाह। एष इत्यादिना॥ उक्तस्य हृदयश-
ब्दार्थस्य पाञ्चमिकत्वं दर्शयन् प्रजापतित्वं साधयति। यस्मिन्निति॥
कथं हृदयस्य सर्व्वत्वं तदाह। उक्तमिति॥ सर्व्वत्वसङ्कीर्त्तन-
फलमाह। तदेतत्सर्व्वमिति॥ तत्र हृदयस्योपास्यत्वे सिद्धे सती-
त्येतत्। फलोक्तिमुत्थाप्य व्याकरोति। अभिहरन्तीति॥ यो
वेदास्मै विदुषेऽभिहरन्तीति सम्बन्धः॥ वेदनमेव विशदयति।

उ॰ स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ॥ १ ॥ तृतीयं ब्राह्मणं ॥ ३ ॥

---

भा॰ हृदयस्य भोक्त्रर्थमभिहरति । अतो हृदयनाम्नो हृदित्येतदक्षरमिति यो वेदास्मै विदुषेऽभिहरन्ति स्वाश्च ज्ञातयोऽन्ये च सम्बद्धाः । बलिमिति वाक्यशेषः । विज्ञानानुरूप्येणैतत्फलं । तथा ददित्येतदप्येकमक्षरमेतदपि दानार्थस्य धातो रूपं हृदयनामाक्षरत्वेन निबद्धमत्रापि हृदयाय ब्रह्मणे स्वाश्च करणान्यन्ये च विषयाः स्वं स्वं वीर्यं ददति । हृदयस्य भोक्त्रे ददाति स्वं वीर्यमतो दकार इत्येवं यो वेदास्मै ददति स्वाश्चान्ये च । तथा यमित्येतदप्येकमक्षरं । इणो गत्यर्थस्य यमित्येतद्रूपमस्मिन्नाम्नि निबद्धमिति यो वेद स स्वर्गं लोकमेति । एवं नामाक्षरादपीदृशं विशिष्टं फलं प्राप्नोति किमु वक्तव्यं हृदयस्वरूपोपासनादिति । हृदयस्तुतये नामाक्षरोपन्यासः ॥ १ ॥ इति सप्तमस्य तृतीयं ब्राह्मणं ॥ ३ ॥

---

आ॰ यस्मादित्यादिना ॥ स्वकार्यं रूपदर्शनादि । हृदयस्तु कार्यं सुखादि ॥ असम्बद्धा ज्ञातिव्यतिरिक्ताः । इत्युक्तं फलं कथयति । विज्ञानेति ॥ अत्रापीति दकाराक्षरोपासनेऽपि फलमुच्यत इति शेषः ॥ तामेव फलोक्तिं व्यनक्ति । हृदयायेति ॥ अस्मै विदुषे स्वाश्चान्ये च ददति । बलिमिति शेषः । नामाक्षरोपासनानि त्रीणि हृदयस्वरूपोपासनमेकमिति चत्वार्युपासनान्यत्र विवक्षितानीत्यभिप्रेत्याह । एवमिति ॥ १ ॥ इति सप्तमस्य तृतीयं ब्राह्मणं ॥ ३ ॥

उ० तद्वैतद्देतदेव तदास सत्यमेव स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकान् जित इन्वसावसद्य एवमेतं महद्यक्षं प्रथमजं

---

भा० तस्यैव हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासनं विधित्सन्नाह तत्तदिति हृदयब्रह्म परामृष्टं। वै इति स्मरणार्थं। तद्यद्धृदयं ब्रह्म स्मर्यत इत्येकस्तच्छब्दस्तदेतदुच्यते प्रकारान्तरेणेति द्वितीयस्तच्छब्दः। किं पुनस्तत्प्रकारान्तरमेतदेव एतदिति वक्ष्यमाणं बुद्धौ सन्निधीकृत्याह। आस बभूव। तत्किं पुनरेतदेव यदुक्तं हृदयं ब्रह्मेति। तदिति तृतीयस्तच्छब्दो विनियुक्तः॥ किन्तदिति विशेषतो निर्द्दिशति सत्यमेव। सच्च त्यच्च मूर्त्तञ्चामूर्त्तञ्च सत्यं ब्रह्म। पञ्चभूतात्मकमित्येतत्स यः कश्चित्सत्यात्मानमेतं महन्महत्त्वाद्यक्षं पूज्यं पूर्व्वं प्रथमजं प्रथमं जातं सर्व्वस्मात्संसारिण एतदेवाग्रे जातं ब्रह्मातः प्रथमजं वेद विजानाति सत्यं ब्रह्मेति। तस्येदं फलमुच्यते। यथा सत्येन ब्रह्मणा इमे लोका आत्मसात्कृता एवं सत्यात्मानं ब्रह्म महद्यक्षं प्रथ-

---

आ० ब्राह्मणान्तरमुत्थाप्याक्षराणि व्याचष्टे। तस्येत्यादिना॥ सत्यशब्दार्थं सत्यज्ञानादिवाक्योपात्तं व्यावर्त्तयति। सच्चेति॥ सर्व्वात्मत्वस्य चतुर्थे प्रस्तुतत्वं सूचयति। मूर्त्तञ्चेति॥ वेदनमनूद्य फलोक्तिमवतारयति। स य इति॥ प्रथमजत्वं प्रकटयति। सर्व्वस्मादिति॥ स यः कश्चिद्वेदेति सम्बन्धः। कैमुतिकसिद्धं फलान्तरमाह। जित इति॥ वशीकृतस्य शत्रोः स्वरूपेण सत्त्वं वारयति। असच्चेति॥ स यो हैतमित्यादिना य एवमेतमित्यादे-

उ॰ वेद सत्यं ब्रह्मेति सत्यँ ह्येव ब्रह्म ॥ १ ॥ चतुर्थं ब्राह्मणं ॥ ४ ॥

आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म ब्रह्म प्रजापतिं प्रजापतिर्देवाँस्ते

---

भा॰ मजं वेद स जयतीमाँल्लोकान् किञ्च जितो वशीकृत इत्थं यथा ब्रह्मणाऽसौ शत्रुरिति वाक्यशेषः । असच्चासद्वेद्यसौ शत्रुर्जितो भवेदित्यर्थः । कस्मादेतत्फलमिति पुनर्निगमयति । य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेत्यतो विद्यानुरूपं फलं युक्तं सत्यं ह्येव यस्माद्ब्रह्म ॥ १ ॥ पञ्चमस्य चतुर्थं ब्राह्मणं ॥ ४ ॥

सत्यस्य ब्रह्मणः स्तुत्यर्थमिदमाह । महद्यक्षं प्रथमजमित्युक्तं तत्कथं प्रथमजत्वमित्युच्यते । आप एवेदमग्र आसुः । आप इति कर्मसमवायिन्योऽग्निहोत्राद्याहुतयः अग्निहोत्राद्याहुतेर्द्रवात्मकत्वादाप्त्वं । ताश्चापोऽग्निहोत्रादिकर्मापवर्गोत्तरकालं केनचिददृष्टेन सूक्ष्मेणात्मना कर्मसमवायित्वमपरित्यजन्त्य इतरभूतसहिता एव न केवलाः कर्म-

---

आ॰ रैकार्थत्वात्पुनरुक्तिरित्याशङ्क्याह । तस्यैवेति । कथमस्य विद्यानस्यैतत्फलमित्याशङ्क्याह । अत इति । पञ्चमोपरामत्वं स्पष्टयति । सत्यं ह्येवेति । १ । पञ्चमस्य चतुर्थं ब्राह्मणं । ४ ।

इदमा ब्राह्मणं प्रस्तूयते तस्यावान्तरसङ्गतिमाह । महदिति । आहुतीनामेव कर्मसमवायित्वं न त्वपामित्याशङ्क्याह । अग्निहोत्रादीति । यद्यप्यापः सोमाद्या हूयमानाः कर्मसमवायिन्यस्तथाप्युत्तरकाले कथं तासां तथात्वं कर्मणोऽस्थायित्वादित्याश-

उ॰ देवाः सत्यमेवोपासते तदेतत्त्र्यक्षरꣳ सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभ-

---

भा॰ समवायित्वात्तु प्राधान्यमपामिति। सर्व्वाण्येव भूतानि प्रागुत्पत्तेरव्याकृतावस्थानि कर्त्तृसहितानि निर्द्दिश्यन्ते। आप इति ता आपो वीजभूता जगतोऽव्याकृतात्मनावस्थिताः। ता एवेदं सर्व्वं नामरूपविकृतं जगदप आसुर्नान्यत्किञ्चिद्विकारजातमासीत्। ताः पुनरापः सत्यमसृजन्त। तस्मात्सत्यं ब्रह्म प्रथमजं। तदेतद्धिरण्यगर्भस्य सूत्रात्मनो जन्म। यदव्याकृतस्य जगतो व्याकरणं तत्सत्यं ब्रह्म। कुतो। महत्त्वात्। कथं महत्त्वमित्याह। यस्मात्सर्व्वस्य स्रष्टृ। कथं यत्सत्यं ब्रह्म तत्प्रजापतिं प्रजानां पतिं विराजं सूर्य्यादिकरणमसृजतेत्यनुषङ्गः। प्रजापतिर्द्देवांश्च विराट् प्रजापतिर्द्देवानसृजत। यस्मात्सर्व्वमेवं क्रमेण सत्याद्ब्रह्मणो जातं तस्मान्महत्सत्यं

---

आ॰ सूत्राह। ताश्चेति॥ कर्म्मसमवायित्वमपरित्यजन्त्यस्तत्सम्बन्धित्वेनायः प्रथमं प्रवृत्तास्तस्माधोऽन्तरकाले सूक्ष्मेणादृष्टेनात्मनाऽतीन्द्रियेणात्मना तिष्ठन्तीति योजना॥ आप इति विशेषणं भूतान्तरव्यासेधार्थमिति मतिं वारयति। इतरेति॥ कथं तर्हि तासामेव श्रुतावुपादानं यदाह। कर्म्मेति। इति तासामेवात्र ग्रहणमिति शेषः॥ विवक्षितपदार्थं निगमयति। सर्व्वाण्येवेति॥ पदार्थमुक्तमनूद्य वाक्यार्थमाह। ता इति॥ याश्चा यथोक्ता आपस्ता एवेति यच्छब्दानुवन्धेन योजना। सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतं सत्यं कथं भूतान्तरसहिताभ्योऽद्भ्यो

उ॰ यतः सत्येन परिगृहीतꣳ सत्यभूयमेव भवति नैनं विद्वाꣳसमनृतꣳ हिनस्ति ॥ १ ॥

---

भा॰ अस्य कथं पुनर्यंत्वमित्युच्यते। त एवं स्रष्टा देवाः पितरमपि विराजमतीत्य तदेव सत्यं ब्रह्मोपासते। अत एव प्रथमजं महद्यक्षं तस्मात्सर्व्वात्मनोपास्यं तत्तस्यापि सत्यस्य ब्रह्मणो नाम सत्यमिति तदेतत्त्र्यक्षरं। कानि तान्यक्षराणीत्याह। स इत्येकमक्षरं। तीत्येकमक्षरं। तीति इकारानुबन्धो निर्द्देशार्थः। यमित्येकमक्षरं। तत्र तेषां प्रथमोत्तमेऽक्षरे सकारयकारौ सत्यं। मृत्युरूपाभावात्। मध्यतो मध्यमनृतं। अनृतं हि मृत्युः। मृत्य्वनृतयोस्तकारसामान्यात्। तदेतदनृतं मृत्युरूपमुभयतः सत्येन सकारयकारलक्षणानपरिगृहीतं व्याप्तमन्तर्भावितं सत्यरूपाभ्यामतोऽकिञ्चित्करं। तत्सत्यभूयमेव सत्यबाहुल्यमेव भवति। एवं सत्यबाहुल्यं सर्व्वस्य मृत्योरनृतस्याकिञ्चित्करत्वं यो विद्यात्तमेवं विद्वांसमनृतं कदाचित्प्रमादोत्थं न हिनस्ति ॥ १ ॥

---

आ॰ जायते तत्राह। तदेतदिति॥ तस्य ब्रह्मत्वं प्रश्नपूर्व्वकं विग्रहयति। तत्सत्यमिति॥ सत्यस्य ब्रह्मणो महत्त्वं प्रश्नद्वारा साधयति। कथमित्यादिना॥ तस्य सर्व्वबहुलत्वं प्रश्नद्वारेण स्फुटयति। कथमित्यादिना॥ महत्त्वमुपसंहरति। तस्मादिति॥ विशेषणत्रये सिद्धे फलितमाह। तस्मादिति॥ तस्यापीत्यपिशब्दो हृदयब्रह्मदृष्टान्तार्थः। बुद्धिपूर्व्वकमनृतं विदुषोऽपि बाधकमित्यभिप्रेत्य विशिनष्टि। प्रमादोत्थमिति॥ १॥

उ॰ तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तावेतावन्योन्यस्मिन्प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन्प्र-

---

भा॰ अस्याधुना सत्यस्य ब्रह्मणः संस्थानविशेष उपासनमुच्यते। तद्यत्। किन्तद्यत्सत्यं ब्रह्म प्रथमजं। किमसौ सः। कोऽसावादित्यः कः पुनरसावादित्यो य एषः। क एष य एतस्मिन्नादित्यमण्डले पुरुषाभिमानी सोऽसौ सत्यं ब्रह्म। यश्चायमध्यात्मो दक्षिणेऽक्षन्नक्षिणि पुरुषस्य शब्दात्स च सत्यं ब्रह्मेति सम्बन्धः। तावेतावादित्याक्षिस्थौ पुरुषावेकस्य सत्यस्य ब्रह्मणः संस्थानविशेषौ यस्मात्तस्मादन्योन्यस्मिन्नितरेतरस्मिन्नादित्यश्चाक्षुषे चाक्षुषश्चादित्ये प्रतिष्ठितौ। अध्यात्माधिदैवतयोरन्योन्योपकार्य्योपकारकत्वात्। कथं प्रतिष्ठिताविन्युच्यते। रश्मिभिः प्रकाशेनानुग्रहं कुर्व्वन्नेष आदित्योऽस्मिंश्चक्षुष्यध्यात्मे प्रतिष्ठितः। अयञ्च चाक्षुषः प्राणैरादित्यमनुगृह्णन्नमुष्मिन्नादित्याधिदैवे प्रतिष्ठितः। सोऽस्मिञ्छरीरे विज्ञानमयो भोक्ता। यदा यस्मिन्काले उत्क्रमिष्यन्भवि-

---

आ॰ ब्राह्मणान्तरमवतार्य्य व्याकरोति। अस्येत्यादिना॥ तत्राधिदैविकं स्थानविशेषमुपन्यस्यति। तदित्यादिना॥ सम्प्रत्यध्यात्मिकं स्थानविशेषं दर्शयति। यश्चेत्यादिना॥ प्रदेशभेदवर्त्तिनोः स्थानभेदेन भेदं शङ्कित्वा परिहरति। तावेताविति॥ अन्योन्यमुपकार्य्योपकारकत्वेनान्योन्यस्मिन्प्रतिष्ठितत्वं प्रश्नपूर्व्वकं प्रकटयति। कथमित्यादिना॥ प्राणैश्चक्षुरादिभिरिन्द्रियैरिति यावत्। अनुगृह्णन्नादित्यमण्डलमात्मानं प्रकाशयन्नित्यर्थः। प्रासङ्गिकमुपासना-

उ० तिष्ठितः प्राणैरयममुष्मिन् स यदोत्क्रमिष्यन्भ-
वति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्म-
यः प्रत्यायन्ति ॥ २ ॥

य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति
शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू

---

भा० ष्यति तदासौ चाक्षुष आदित्यपुरुषो रश्मीनुपसंहृत्य
केवलेनौदासीन्येन रूपेण व्यवतिष्ठते। तदायं विज्ञानमयः
पश्यति शुद्धमेव केवलं विरश्म्येतन्मण्डलं चन्द्रमण्डलमिव।
तदेतदरिष्टदर्शनं प्रासङ्गिकं प्रदर्श्यते। कथं नाम पुरुषः
करणीये यत्नवान् स्यादिति। नैनञ्चाक्षुषं पुरुषमुरीकृत्य
तं प्रत्युपहाय एते रश्मयः स्वाभिकर्तव्यवशात्पूर्वमाग-
च्छन्तोऽपि पुनस्तत्कर्मक्षयमनुरुध्यमाना इव नायन्ति
न प्रत्यागच्छन्त्येनं। अतोऽवगम्यते परस्परोपकार्योप-
कारकभावात्सत्यस्यैवैकस्यात्मनोंऽशावेताविति ॥ २ ॥

तत्र योऽसौ कः। य एष एतस्मिन्मण्डले पुरुषः सत्य-
नामा। तस्य व्याहृतयोऽवयवाः। कथं। भूरिति येयं व्याहृतिः
सा तस्य शिरः। प्राथम्यात्। तत्र सामान्यं स्वयमेवाह श्रुतिः।

---

आ० प्रसङ्गागतमित्यर्थः ॥ तत्प्रदर्शनस्य किं फलमित्याशङ्क्याह। कथ-
मिति। पुरुषद्वयस्यान्योन्योपकार्योपकारकत्वमुक्तं निगमयति।
नैनमित्यादिना। पुनःशब्देन स्वेतरकालो गृह्यते। रश्मीनाम-
चेतनत्वादिवशब्दः। पुनर्नकारोच्चारणमन्वयप्रदर्शनार्थं। तत्र
स्थानद्वयसम्बन्धिनः सत्यस्य प्रश्नो ध्याने प्रस्तुते सतीत्यर्थः ॥ २ ॥
तत्रेति प्रथमव्याहृतौ शिरोदृष्ट्यारोप्ये विवक्षिते यथोपनिष-

उ॰ द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ ३ ॥

योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा प्रतिष्ठे द्वे द्वे एते

---

भा॰ एकमेकसंख्यायुक्तं शिरः। तथैतदक्षरमेकं भूरिति। भुव इति बाहू। द्वित्वसामान्याद्द्वौ बाहू द्वे एते अक्षरे। तथा स्वरिति प्रतिष्ठा। द्वे प्रतिष्ठे द्वे एते अक्षरे। प्रतिष्ठे पादौ। प्रतिष्ठत्याभ्यामिति। तस्यास्य व्याहृत्यवयवस्य सत्यस्य ब्रह्मण उपनिषद्रहस्यमभिधानं। येनाभिधानेनाभिधीयमानं तद्ब्रह्माभिमुखीभवति लोकवत्। कोऽसावित्याह। अहरिति। अहरिति चैतद्रूपं हन्तेर्जहातेश्चेति यो वेद स हन्ति जहाति च पाप्मानं य एवं वेद ॥ ३ ॥

एवं योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर इत्यादि सर्वं समानं। तस्योपनिषदहमिति। प्रत्यगात्मभूतत्वात्। पूर्व-

---

आ॰ दित्यादि व्याचष्टे। तस्येत्यादिना। यथा लोके गवादिः स्वेनाभिधानेनाभिधीयमानः सम्मुखीभवति तद्वदित्याह। लोकवदिति। नामोपास्तिफलमाह। अहरिति चेति ॥ ३ ॥

यथा मण्डलपुरुषस्य व्याहृत्यवयवस्य सोपनिषत्कस्याधिदैवतमुपासनमुक्तं तथाध्यात्मचाक्षुषपुरुषस्योक्तविशेषणस्योपासनमुच्यत इत्याह। एवमिति। चाक्षुषस्य पुरुषस्य कथमहमित्युपनिषदिष्यते तत्राह। प्रत्यगिति। हन्तेर्जहातेश्चाहमित्येतद्रूपमिति यो वेद स हन्ति पाप्मानं जहाति चेति पूर्ववत्फ-

उ॰ अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ ४ ॥ पञ्चमं ब्राह्मणं ॥ ५ ॥

मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्व-

---

भा॰ वद्भूत्मेर्जहातेश्चेति ॥ ४ ॥ सप्तमस्य पञ्चमं ब्राह्मणं ॥ ५ ॥

उपाधीनामनेकत्वात् अनेकविशेषणत्वाच्च तस्यैव प्रकृतस्यैव ब्रह्मणो मनउपाधिविशिष्टस्योपासनं विधित्सन्नाह । मनोमयो मनःप्रायो मनस्युपलभ्यमानत्वान्मनसा वोपलभ्यत इति मनोमयोऽयं पुरुषो भाः सत्यो भा एवं सत्यं सद्भावः स्वरूपं यस्य सोऽयं भाः सत्यो भास्वर इत्येतन्मनसः सर्वार्थावभासकत्वान्मनोमयत्वाच्चास्य भास्वरत्वं तस्मिन्नन्तर्हृदये हृदयस्यान्तस्तस्मिन्नित्येतत् । यथा व्रीहिर्वा यवो वा परिमाणतः । एवं परिमाणस्तस्मिन्नन्तर्हृदये योगिभिर्दृश्यत इत्यर्थः । स एष सर्वस्येशानः सर्वस्य स्वभेदजातस्येशानः स्वामी । स्वामित्वेऽपि सति कश्चिदमात्यादितन्त्रो ऽयन्तु न तथा किन्तर्ह्यधिपतिरधिष्ठाय पालयिता ।

---

आ॰ सवाक्यं योज्यमित्याह । पूर्ववदिति ॥ ४ ॥ सप्तमस्याध्यायस्य पञ्चमं ब्राह्मणं । ५ ।

ब्राह्मणान्तरमुत्थापयति । उपाधीनामिति । अनेकविशेषणत्वाच्च प्रत्येकं तेषामिति शेषः । तत्प्रायत्वे हेतुमाह । मनसीति । प्रकारान्तरेण तत्प्रायत्वमाह । मनसा चेति । तस्य भास्वररूपं साधयति । मनस इति । तस्य ध्यानार्थं स्थानं दर्शयति । तस्मिन्निति । चौपाधिकमिदं परिमाणं स्वाभाविकन्त्वानन्त्य-

उ॰ स्याधिपतिः सर्व्वमिदं प्रशास्ति यदिदं किञ्च ॥ १ ॥ षष्ठं ब्राह्मणं ॥ ६ ॥

विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्युत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥ १ ॥ सप्तमं ब्राह्मणं ॥ ७ ॥

---

भा॰ सर्व्वमिदं प्रशास्ति यदिदं किञ्च यत्किञ्चित्सर्व्वं जगत्तत्सर्व्वं प्रशास्ति । एवं मनोमयस्योपासनात्तथारूपापत्तिरेव फलं । तं यथा यथोपासते तदेव भवतीति ब्राह्मणं ॥ १ ॥ सप्तमस्य षष्ठं ब्राह्मणं ॥ ६ ॥

तथैवोपासनान्तरं सत्यस्य ब्रह्मणो विशिष्टफलमारभ्यते। विद्युद्ब्रह्मेत्याहुः। विद्युतो ब्रह्मणो निर्वचनमुच्यते। विदानादवखण्डनात्तमसो मेघान्धकारं विदार्य्य ह्यवभासते विद्युत्। एवंगुणं विद्युद्ब्रह्मेति यो वेदासौ विद्यत्यवखण्डयति विनाशयति पाप्मन एनमात्मानं प्रति । प्रतिकूलभूताः पाप्मनो ये तान्सर्व्वान्पाप्मनोऽवखण्डयतीत्यर्थः । य एवं वेद । विद्युद्ब्रह्मेति तस्यानुरूपं फलं। विद्युद्धि यस्माद्ब्रह्म ॥ १ ॥ सप्तमस्य सप्तमं ब्राह्मणं ॥ ७ ॥

---

आ॰ मित्यभिप्रेत्याह। स एष इति । यदुक्तं सर्व्वस्येशान इति तन्निगमयति। सर्व्वमिति । यथाश्रुत तथाऽभ्यासफलश्रुतेरप्यनिदमुपासनमकार्य्यमिति चेन्नेत्याह । एवमिति ॥ १ ॥ सप्तमस्य षष्ठं ब्राह्मणं ॥६॥

ब्राह्मणान्तरमुद्धाय्य विभजते । तथैवेत्यादिना ॥ तमसो विदानाद्विद्युदिति सम्बन्धः । तदेव स्फुटयति । मेघेति ॥ उक्तमेव फलं प्रकटयति। एनमिति ॥ १ ॥ सप्तमस्य सप्तमं ब्राह्मणं ॥ ७ ॥

उ॰ वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥ १ ॥ अष्टमं ब्राह्मणं ॥ ८ ॥

---

भा॰ पुनरुपासनान्तरं तस्यैव ब्रह्मणः वाग्वै ब्रह्मेति वागिति शब्दस्त्रयी तां वाचं धेनुं धेनुरिव धेनुः यथा धेनुश्चतुर्भिः स्तनैः स्तन्यं पयः क्षरति वत्सायैवं वाग्धेनुर्वक्ष्यमाणैः स्तनैः पय इवान्नं क्षरति देवादिभ्यः। के पुनस्ते स्तनाः। के वा ते येभ्यः क्षरति। तस्या एतस्या वाचो धेन्वा द्वौ स्तनौ देवा उपजीवन्ति वत्सस्थानीयाः। कौ तौ। स्वाहाकारं वषट्कारञ्च। आभ्यां हि हविर्दीयते देवेभ्यः। हन्तकारं मनुष्याः। हन्त इति मनुष्येभ्योऽन्नं प्रयच्छन्ति। स्वधाकारं पितरः। स्वधाकारेण हि पितृभ्यः स्वधां प्रयच्छन्ति। तस्या धेन्वा वाचः प्राण ऋषभः। प्राणेन हि वाक् प्रसूयते। मनो वत्सः। मनसा हि प्रस्राव्यते।

---

आ॰ ब्राह्मणान्तरमवतारयति । पुनरिति । तां धेनुमुपासीतेति सम्बन्धः । वाचो धेन्वाश्च सादृश्यं विशदयति । यथेत्यादिना । स्तनचतुष्टयं भोक्तृत्रयञ्च प्रश्नपूर्वकं प्रकटयति । के पुनरित्यादिना । कथं देवा यथोक्तौ स्तनावुपजीवन्ति तदाह । आभ्यां हीति । हन्त यद्यपेक्षितमित्यर्थः । स्वधामन्नं प्रदाप्यते प्रस्नुता-[illegible] क्रियते । मनसा हीत्यादिनोक्तं विवृणोति । मनश्चेति ॥ प्रथमाश्ववादेतदुपासनमपि चित्रमित्याशङ्क्याह । एवमिति ॥

उ॰ अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैनं घोषꣳ शृणोति ॥ १ ॥ नवमं ब्राह्मणं ॥ ९ ॥

---

भा॰ मनसा ह्यालोचिते विषये वाक् प्रवर्त्तते। तस्मान्मनो वत्सस्थानीयं। एवं वाग्धेनूपासकस्तद्भाव्यमेव प्रतिपद्यते ॥ १ ॥

अयमग्निर्वैश्वानरः। पूर्ववदुपासनान्तरमयमग्निर्वैश्वानरः। कोऽयमग्निरित्याह। योऽयमन्तःपुरुषे। किं शरीरारम्भको नेत्युच्यते। येनाग्निना वैश्वानराख्येनेदमन्नं पच्यते। किं तदन्नं। यदिदमद्यते भुज्यतेऽन्नं प्रजाभिर्जाठरोऽग्निरित्यर्थः। तस्य साक्षादुपलक्षणार्थमिदमाह। तस्याग्नेरन्नं पचतो जाठरस्यैष घोषो भवति। कोऽसौ। यं घोषमेतदिति क्रियाविशेषणं। कर्णावपिधायाङ्गुलीभ्यामपिधानं कृत्वा शृणोति तं प्रजापतिमुपासीत वैश्वानरमग्निं। अत्रापि तद्भाव्यं फलं। तत्र प्रासङ्गिकमिदमरिष्टलक्षणमुच्यते। सोऽत्र शरीरे भोक्ता। यदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति ॥ १ ॥ सप्तमस्य नवमं ब्राह्मणं ॥ ९ ॥

---

आ॰ तद्भाव्यं यथोक्तं वागुपाधिकप्रजापतिरूपत्वमित्यर्थः ॥ १ ॥ सप्तमस्याष्टमं ब्राह्मणं ॥ ८ ॥

ब्राह्मणान्तरमवतार्य तस्य तात्पर्यमाह। अयमिति। अन्नपानस्य पक्ता। तत्सद्भावे मानमाह। तस्येति। क्रियायाः श्रवणस्यैतदिति विशेषणं। तद्यथा भवति तथेत्यर्थः। कौक्षेयाग्न्युपाधिकस्य पुरुषोपासने प्रकृते सतीत्याह। तत्रेति ॥ १ ॥ सप्तमस्य नवमं ब्राह्मणं ॥ ९ ॥

उ॰ यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्द्ध्व आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लम्बरस्य खन्तेन स ऊर्द्ध्व आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खन्तेन स ऊर्द्ध्व

---

भा॰ सर्व्वेषामस्मिन्प्रकरणे उपासनानां गतिरियं फलञ्चोच्यते । यदा वै पुरुषो विद्वानस्माल्लोकात्प्रैति शरीरं परित्यजति स तदा वायुमागच्छत्यन्तरिक्षे तिर्य्यग्भूतो वायुस्तिमितोऽभेद्यस्तिष्ठति । स वायुस्तत्र स्वात्मनि तस्मै सम्प्राप्ताय विजिहीते स्वात्मावयवान्विगमयति छिद्रीकरोत्यात्मानमित्यर्थः । किं परिमाणं छिद्रमित्युच्यते । यथा रथचक्रस्य खं छिद्रं प्रसिद्धं परिमाणं । तेन छिद्रेण स विद्वानूर्द्ध्व आक्रमते ऊर्द्ध्वं स गच्छति स आदित्यमागच्छति । आदित्यो ब्रह्मलोकं जिगमिषोर्मार्गनिरोधं कृत्वा स्थितः सोऽप्येवंविदे उपासकाय द्वारं प्रयच्छति । तस्मै स तत्र विजिहीते । यथा लम्बरस्य खं वादित्रविशेषस्य छिद्रपरिमाणं तेन स ऊर्द्ध्वं आक्रमते स चन्द्रमसमागच्छति । सोऽपि तस्मै तत्र विजिहीते यथा दुन्दुभेः

---

आ॰ ब्राह्मणान्तरस्य तात्पर्य्यमाह । सर्व्वेषामिति । पञ्चमपुव-[illegible]नामिति शेषः । किमिति विद्वान्वायुमागच्छति तमपेक्ष्यैव ब्रह्मलोकं कुतो न गच्छतीत्याशङ्क्याह । अन्तरिक्ष इति । आदित्यं

उ० आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शाश्वतीः समाः ॥ १ ॥ दशमं ब्राह्मणं ॥ १० ॥

एतद्वै परमं तपो यद्व्याहितस्तप्यते परमꣳ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो

---

भा० खं प्रसिद्धं । स तेन ऊर्द्ध्व आक्रमते स लोकं प्रजापतिमागच्छति । किं विशिष्टमशोकं मानसेन दुःखेन विवर्जितमित्येतत् । अहिमं हिमवर्जितं शारीरदुःखवर्जितमित्यर्थः । तं प्राप्य तस्मिन् तस्मिन्वसति शाश्वतीर्नित्याः समाः संवत्सरानित्यर्थः । ब्रह्मणो बहून्कल्पान्वसतीत्येतत् ॥ १ ॥ सप्तमस्य दशमं ब्राह्मणं ॥ १० ॥

एतद्वै परमं तपः । किं तद्यद्व्याहितो व्याधितो जरादिपरिगृहीतः सन्सन्तप्यते । तदेतत्परमं तप इत्येवं चिन्तयेत् । दुःखसामान्यात् । तस्यैवं चिन्तयतो विदुषः कर्मक्षयहेतुः । तदेव तपो भवत्यनिन्दतो विषीदतः स एव च । तेन विज्ञानतपसा दग्धकिल्बिषः परमं ह वै लोकं जयति य एवं वेद । तथा मुमूर्षुरादावेव कल्पयति किमेतद्वै परमं तपो यं प्रेतं ग्रामादरण्यं हरन्ति ऋत्विजो

---

आ० प्रत्यागमने हेतुमाह । आदित्य इति ॥ उक्तेऽर्थे वाक्यं पातयति । तस्मा इति ॥ बहून्कल्पानित्यवान्तरकल्पोक्तिः ॥ १ ॥ सप्तमस्य दशमं ब्राह्मणं ॥ १० ॥

ब्रह्मोपासनप्रसङ्गेन फलवद्ब्रह्मोपासनमुपन्यस्यते । एतदिति ॥ यद्व्याहित इति प्रतीकमादाय व्याचष्टे । जरादीति ॥ कर्म्मक्षयहेतुरित्यत्र कर्म्मशब्देन पापमुच्यते । परमं ह वै लोकमित्यत्र तप-

उ० यं प्रेतमरण्यँ हरन्ति परमँ हैव लोकं जयति य एवं वेदैतद्वै परमन्तपो यं प्रेतमग्नावभ्याद-धति परमँ हैव लोकं जयति य एवं वेद ॥ ॥ १ ॥ एकादशं ब्राह्मणं ॥ ११ ॥

अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्न-मृते प्राणात्प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति

---

भा० ऽन्त्यकर्मैतद्ग्रामादरण्यगमनसामान्यात्परमं मम तत्तपो भविष्यति। ग्रामादरण्यगमनं परमं तप इति हि प्रसिद्धं। परमं ह वै लोकं जयति य एवं वेद । तथैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति। अग्निप्रवेशसामान्यात्। परमं ह वै लोकं जयति य एवं वेद ॥ १ ॥ पञ्चमस्यैकादशं ब्राह्मणं ॥ ११ ॥

अन्नं ब्रह्मेति । तथैतदुपासनान्तरं विविक्षुराहान्नं ब्रह्माजमयते यत्तद्ब्रह्मेति एक आचार्या आहुस्तच्च तथा गृहीतव्यमन्नं ब्रह्मेत्यन्ये चाहुः प्राणो ब्रह्मेति तच्च तथा न ग्रहीतव्यं। किमर्थं पुनरन्नं ब्रह्मेति न ग्राह्यं। यस्मात्पूयति क्लिद्यते पूतिभावमापद्यते। ऋते

---

आ० सोऽनुकूलं फलं लोकशब्दार्थः । यत्तु ग्रामादरण्यगमनं तदपि कथं तपस्त्वमित्याशङ्क्याह । ग्रामादिति ॥ १ ॥ एकादशं ब्राह्मणं ॥ ११ ॥

ब्राह्मणान्तरं प्रतीक्ष्य तात्पर्यमाह । अन्नमिति । यथा पूर्वस्मिन्ब्राह्मणे यज्ञवद्ब्रह्मोपासनमुक्तं तद्वदित्याह । तथेति । एतदिति ब्रह्मविषयोक्तिः । उपास्यं ब्रह्म निर्धारयितुं विचा-

उ॰ वै प्राण ऋतेऽन्नादेते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतस्तद्ध स्माह प्रातृदः पितरं किंस्विदेवैवं विदुषे साधु कुर्य्यां किमेवास्मा असाधु कुर्य्यामिति स ह स्माह पाणिना मा

---

भा॰ प्राणात्तत्कथं ब्रह्म भवितुमर्हति। ब्रह्म हि नाम तद्यदविनाशि। अस्तु तर्हि प्राणो ब्रह्म नैवं यस्माच्छुष्यति वै प्राणः शोषमुपैति ऋते अन्नात्। अत्ता हि प्राणः। अतोऽन्नेनाद्येन विना न शक्नोत्यात्मानं धारयितुं। तस्माच्छुष्यति वै प्राणः ऋतेऽन्नात्। अत एकैकस्य ब्रह्मता नोपपद्यते। यस्मात्तस्मादेते ह तु एव अन्नप्राणदेवते एकधाभूयमेकधाभावं भूत्वा गत्वा परमतां परमत्वं गच्छतो ब्रह्मत्वं प्राप्नुतः। तदेतदेवमध्यवस्य ह स्म आह स्म प्रातृदो नाम पितरमात्मनः। किंस्विदिति वितर्के। यथा मया ब्रह्म परिकल्पितमेवं विदुषे किंस्वित्साधु कुर्य्यां साधु शोभनं पूजां। कां तस्मै पूजां कुर्य्यामित्यभिप्रायः। किमेव वास्मै एवं विदुषे असाधु कुर्य्यां कृतकृत्योऽसावित्यभिप्रायोऽन्नप्राणौ सम्भूतौ ब्रह्मेति विद्वांसमसावसाधुकरणेन खण्डितो भवति। नापि साधुकरणेन महीकृतस्तमेवं वादिनं स

---

आ॰ रयति। अन्नमित्यादिना। अन्नस्य विनाशित्वेऽपि ब्रह्मत्वं किं न स्यादत आह। अत्र हीति। कथमन्नं विना प्राणस्य शोषप्राप्तिरत आह। अत्ता हीति। प्रत्येकं नाशित्वमतः शब्दार्थः। किंस्विदित्यादिवाक्यस्यार्थं विवृणोति। अन्नप्राणाविति। कस्त्विति प्रतीकमादाय व्याकरोति। एतयोरिति। यद्येवमुक्तरीत्या

उ॰ प्रातृद कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छ-
तीति तस्मा उ हैतदुवाच वीत्यन्नं वै वि अन्ने
हीमानि सर्व्वाणि भूतानि विष्टानि रमिति प्राणो
वै रं प्राणे हीमानि सर्व्वाणि भूतानि रमन्ते सर्व्वाणि
ह वा अस्मिन्भूतानि विशन्ति सर्व्वाणि भूतानि
रमन्ते य एवं वेद ॥ १ ॥ द्वादशं ब्राह्मणं ॥१२॥

---

भा॰ पिता ह स्म आह। पाणिना हस्तेन निवारयन् मा प्रातृद
मैवं वोचः। कः त्वेतयोरेनयोरन्नप्राणयोरेकधाभूयं भूत्वा
परमतां कस्तु गच्छति न कश्चिदपि विद्वाननेन ब्रह्मदर्श-
नेन परमतां गच्छति। तस्मान्नैवं वक्तुमर्हसि कृतकृत्योऽसा-
विति। यद्येवं ब्रवीतु भवान्कथं परमतां गच्छतीति
तस्मै उ ह एतद्वक्ष्यमाणं वच उवाच। किन्तद्वि इति॥
तद्वि इत्युच्यते। अन्नं वै वि। अन्ने हि यस्मादिमानि सर्व्वाणि
भूतानि विष्टान्याश्रितान्यतोऽन्नं वीत्युच्यते। किञ्च रमिति।
रमिति चोक्तवान्पिता। किं पुनस्तद्रं। प्राणो वै रं।
कुत इत्याह। प्राणे हि यस्माद्बलाश्रये सति सर्व्वाणि
भूतानि रमन्तेऽतो रं प्राणः। सर्व्वभूताश्रयगुणमन्नं। सर्व्व-

---

आ॰ परमत्वं यदि नास्तीत्यर्थः। उक्तमसङ्कीर्णं गुणद्वयं सङ्क्षिप्याह।
सर्व्वभूतेति। अन्नगुणं विना प्राणगुणादेतज्ज्ञानं सिद्ध्यतीत्या-
शङ्क्याह। न हीति। प्राणगुणस्याप्यन्नगुणत्वसम्भवादेवं प्राणेने-
त्याशङ्क्याह। नापीति॥ गुणद्वयस्य परस्परापेक्षामनुभवानु-
सारेण स्फोरयति। यदा त्विति॥ आयतनवतो बलवतश्च
कृतार्थतेत्यत्र तैत्तिरीयश्रुतिं संवादयति। युवा स्यादित्यादिना॥

उ० उक्थं प्राणो वा उक्थं प्राणो हीदꣳ सर्वमुत्थापयत्युद्धास्मादुक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्यꣳ सलोकतां जयति य एवं वेद ॥१॥ यजुः प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय

---

भा० भूतरतिगुणश्च प्राणः। न हि कश्चिदनायतनो निराश्रयो रमते नापि सत्यप्यायतने प्राणो दुर्ब्बलो रमते। यदा त्वायतनवान्प्राणी बलवांश्च तदा कृतार्थमात्मानं मन्यमानो रमते लोकः। युवा स्यात्साधु युवा ध्यायक इत्यादि श्रुतेः। इदानीमेवंविदः फलमाह। सर्व्वाणि ह वा अस्मिन्भूतानि विशन्त्यन्नगुणज्ञानात्सर्व्वाणि भूतानि रमन्ते प्राणगुणज्ञानाच्च एवं वेद ॥ १ ॥ सप्तमस्य द्वादशं ब्राह्मणं ॥ १२ ॥

उक्थं। तथोपासनान्तरमुक्थं शस्त्रं। तद्धि प्रधानं महा-व्रते क्रतौ। किं पुनस्तदुक्थं। प्राणो वा उक्थं। प्राणश्च प्रधानं उक्थञ्च शस्त्राणामत उक्थमित्युपासीत। कथं प्राण उक्थमि-

---

आ० आशिष्ठो द्रढिष्ठो बलिष्ठस्तस्येयं पृथिवी सर्व्वा वित्तस्य पूर्णा स्यादित्येतदादिशब्देन गृह्यते। अन्नप्राणयोर्गुणद्वयविशिष्टयोर्मिलितयोरुपासनमुक्तं ॥ १ ॥ द्वादशं ब्राह्मणं ॥ ११ ॥

इदानीं ब्राह्मणान्तरमादाय तात्पर्य्यमाह। उक्थमिति॥ सत्सु शास्त्रान्तरेषु किमित्युक्थमुपास्यत्वेनोपन्यस्यते तत्राह। तद्धीति॥ कस्मिन्किमारोप्य कस्योपास्यत्वमिति प्रश्नद्वारा विवृणोति। किं पुनरिति॥ तस्मिन्नुक्थदृष्टौ हेतुमाह। प्राणश्चेति॥ तस्मिन्नुक्थ-

उ० यजुषः सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ २ ॥ साम प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मै सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ ३ ॥ क्षत्रं प्राणो वै क्षत्रं प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः

---

भा० त्याह। प्राणो हि यस्मादिदं सर्व्वमुत्थापयति। उत्थापनादुक्थं प्राणो न ह्यप्राणः कश्चिदुत्तिष्ठति। तदुपासनफलमाह। उत् ह अस्मादेवंविद उक्थवित्प्राणविद्वीरः पुत्र उत्तिष्ठति ह दृष्टमेतत्फलमदृष्टन्तूक्थस्य सायुज्यं सलोकतां जयति य एवं वेद ॥ १ ॥ यजुरिति चोपासीत प्राणं। प्राणो वै यजुः। कथं यजुः प्राणः। प्राणे हि यस्मात्सर्व्वाणि भूतानि युज्यन्ते। न ह्यसति प्राणे केनचित्कस्य चिद्योगसामर्थ्यं। अतो युनक्तीति प्राणो यजुः। एवंविदः फलमाह। युज्यन्ते उद्यमन्त इत्यर्थः। ह अस्मै एवंविदे सर्व्वाणि भूतानि श्रैष्ठ्यं श्रेष्ठभावस्तस्मै श्रैष्ठ्याय स श्रेष्ठो भवेदिति। यजुषः प्राणस्य सायुज्यमित्यादि सर्व्वं समानं ॥ २ ॥ सामेति चोपासीत-

---

आ० शब्दस्य समवेतार्थत्वं प्रश्नपूर्व्वकमाह। कथमित्यादिना। उत्थानस्य सतोऽपि सम्भवान्न प्राणकृतत्वमित्याशङ्क्याह। न हीति। उक्थस्य प्राणस्यैतद्विज्ञानतारतम्यमपेक्ष्य सायुज्यं सालोक्यं च व्याख्येयं ॥ १ ॥

यजुःशब्दस्यान्यत्र रूढत्वाद्युक्तं प्राणविषयत्वमिति शङ्कित्वा परिहरति। कथमित्यादिना। असत्यपि प्राणे योगः सम्भ-

उ॰ प्र क्षत्रमत्रमाप्नोति क्षत्रस्य सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ ४ ॥ त्रयोदशं ब्राह्मणं ॥ १३ ॥

---

भा॰ साम । प्राणो वै साम । कथं प्राणः साम । प्राणे हि यस्मात्सर्व्वाणि भूतानि सम्यञ्चि सङ्गच्छन्ते । सङ्गमसाम्यकत्वापत्तिहेतुत्वात् साम प्राणः । सम्यञ्चि सङ्गच्छन्ते ह अस्मै सर्व्वाणि भूतानि । न केवलं सङ्गच्छन्त एव श्रेष्ठभावाय चास्मै कल्पन्ते समर्थ्यन्ते । साम्नः सायुज्यमित्यादि पूर्व्ववत् ॥ ३ ॥ तं प्राणं क्षत्रमित्युपासीत । प्राणो वै क्षत्रं । प्रसिद्धमेतत्प्राणो हि वै क्षत्रं । कथं प्रसिद्धतेत्याह । त्रायते पालयत्येनं पिण्डं देहं प्राणः । क्षणितोः शस्त्रादिहिंसितात्पुनर्मांसेनापूरयति यस्मात्तस्मात्क्षतत्राणात्प्रसिद्धं क्षत्रत्वं प्राणस्य । विद्वत्फलमाह । प्र क्षत्रमत्रं । न त्रायतेऽन्येन केनचिदित्यत्रं क्षत्रं प्राणस्तमत्रं क्षत्रं प्राणं प्राप्नोतीत्यर्थः । शाखान्तरे वा पाठात् क्षत्रमात्रं प्राप्नोति प्राणो भवतीत्यर्थः । क्षत्रस्य सायुज्यं सलोकतां जयति य एवं वेद ॥ ४ ॥ सप्तमस्य त्रयोदशं ब्राह्मणं ॥ १३ ॥

---

आ॰ यतीत्याशङ्क्याह । न होति । प्रकरणानुगृहीतप्राणशब्दं श्रुत्वा यजुःशब्दस्य रूढिं त्यक्त्वा योगोऽङ्गीक्रियत इत्याह । यत इति ॥ २ ॥ ३ ॥ सङ्गमनादिश्वेतदेव व्याचष्टे । सम्यञ्चीति ॥ शाखान्तरशब्देन माध्यन्दिनशाखोच्यते ॥ ४ ॥ सप्तमस्य त्रयोदशं ब्राह्मणं ॥ १३ ॥

उ॰ भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरᳬं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स याव-

---

भा॰ ब्रह्मणो हृदयाद्यनेकोपाधिविशिष्टस्योपासनमुक्तमथे-दानीं गायत्र्युपाधिविशिष्टस्योपासनं वक्तव्यमित्यारभ्यते। सर्व्वच्छन्दसां हि गायत्रीच्छन्दः प्रधानभूतं। तत्प्रयोक्तृग-यत्राणाद्गायत्रीति वक्ष्यति। न चान्येषां चन्दसां प्रयोक्तृ त्राणसामर्थ्यं। प्राणात्मभूता च सा सर्व्वच्छन्दसामात्मा प्राणः। प्राणश्च क्षतत्राणात्क्षत्रमित्युक्तं। प्राणश्च गायत्री। तस्मात्तदुपासनमेव विधित्स्यते। द्विजोत्तमजन्महेतुत्वाच्च गा-यत्र्या ब्राह्मणमसृजत। त्रिष्टुभा राजन्यं। जगत्या वैश्य-मिति। द्विजोत्तमस्य द्वितीयं जन्म गायत्रीनिमित्तं। तस्मा-त्प्रधाना गायत्री। ब्राह्मणा व्युत्थाय ब्राह्मणा अभिवदन्ति स ब्राह्मणो विपापो विजरो विचिकित्सो ब्राह्मणो भव-तीत्युक्तमपरार्थसम्बन्धं ब्राह्मणस्य दर्शयति। तच्च

---

आ॰ एतमनूद्य गायत्रीब्राह्मणस्य तात्पर्य्यमाह। ब्रह्मण इत्या-दिना। छन्दोऽन्तरेष्वपि विद्यमानेषु किमिति गायत्र्युपाधिक-मेव ब्रह्मोपास्यमिष्यते तत्राह। सर्व्वच्छन्दसामिति। तत्प्राधान्ये हेतुमाह। तदिति। तत्प्रयोगे तुल्यं प्रयोक्तृप्राणत्राणसामर्थ्यं छन्दोऽन्तराणामपीति चेन्नेत्याह। न चेति। प्रमाणाभावादिति भावः। किञ्च प्राणात्मभावो गायत्र्या विवक्ष्यते प्राणश्च सर्व्वेषां छन्दसां निवर्त्तकत्वादात्मा। तथा च सर्व्वच्छन्दोव्यापकगायत्र्युपा-धिकब्रह्मोपासनमेवात्र विवक्षितमित्याह। प्राणात्मेति। तदा-त्मभूता गायत्रीत्युक्तं व्यक्तीकरोति। प्राणश्चेति। तत्प्रयोक्तृत्र-णाद्धि गायत्री। प्राणश्च वागादीनां त्राता। ततश्चैकत्वा-त्तयोस्तादात्म्यमित्यर्थः। प्राणगायत्र्योस्तादात्म्ये फलितमाह।

उ॰ देषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एत-
देवं पदं वेद ॥ १ ॥

---

भा॰ ब्राह्मणत्वं गायत्रीजन्ममूलमतो वक्तव्यं गायत्र्याः सतत्त्वं। गायत्र्या हि यः सृष्टो द्विजोत्तमो निरङ्कुश एवोत्तमपुरुषार्थसाधनेऽधिक्रियतेऽतस्तन्मूलः परमपुरुषार्थसम्बन्धः। तस्मात्तदुपासनविधानायाह। भूमिरन्तरिक्षं द्यौःइत्येतान्यष्टावक्षराणि। अष्टाक्षरमष्टावक्षराणि यस्य तदिदमष्टाक्षरं ह वै प्रसिद्धावद्योतकौ एवैकं प्रथमं गायत्र्यै गायत्र्याः पदं यकारेणैवाष्टत्वपूरणमेतदु ह एव एतदेवास्या गायत्र्याः पदं पादः। प्रथमो भूम्यादिलक्षणस्त्रैलोक्यात्मा ॥ अष्टाक्षरत्वसामान्यात्। एवमेवैतत्त्रैलोक्यात्मकं गायत्र्याः प्रथमं पदं यो वेद तस्यैतत्फलं। स विद्वान्यावत्किञ्चिदेषु त्रिलोकेषु जेतव्यं तावत्सर्वं ह जयति योऽस्या एतदेवं पदं वेद ॥ १ ॥

---

आ॰ तस्मादिति ॥ गायत्रीप्राधान्ये हेत्वन्तरमाह। द्विजोत्तमेति ॥ तदेव स्फुटयति। गायत्र्येति ॥ तत्प्राधान्ये हेत्वन्तरमाह। ब्राह्मण इति ॥ कथमेतावता गायत्रीप्राधान्यं तत्राह। तथेति ॥ अतो वक्तव्यमित्यत्रातःशब्दार्थमाह। गायत्र्या हीति ॥ अधिकारित्वकृते कार्य्यमाह। तत इति ॥ तच्छब्दो गायत्रीविषयः ॥ गायत्रीवैशिष्ट्यमपरान्तस्य फलितमुपसंहरति। तस्मादिति ॥ गायत्रीप्रथमपादस्य सप्ताक्षरत्वं प्रतीयते न त्वष्टाक्षरत्वमित्याशङ्क्याह। यकारेणेति ॥ गायत्रीप्रथमपादस्य त्रैलोक्यनाम्नश्च सङ्ख्यासामान्यप्रयुक्तं कार्य्यमाह। एतदिति ॥ गायत्रीप्रथमपादे त्रैलोक्यदृष्ट्यारोपस्य प्रयोजनं दर्शयति। एवमिति ॥ प्रथमपादे ज्ञाते विराडात्मकं फलतीत्यर्थः ॥ १ ॥

उ० ऋचो यजूꣳषि सामानीत्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ २ ॥ प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमे-

---

भा० तथा ऋचो यजूंषि सामानीति त्रयी विद्या नामाक्षराणि एतान्यप्यष्टावेव तथैवाष्टाक्षरं ह वा एकं गायत्र्यै पदं द्वितीयमेतदु हैवास्या एतत् यदृग्यजुःसामलक्षणमष्टाक्षरत्वसामान्यादेव स यावतीयं त्रयी विद्या त्रय्या विद्यया यावत्फलजातमाप्यते तावद्ध जयति योऽस्या एतद्गायत्र्यास्त्रैविद्यालक्षणं पदं वेद ॥ २ ॥ तथा प्राणः अपानः व्यान एतान्यपि प्राणाद्यभिधानाक्षराण्यष्टौ। तच्च गायत्र्यास्तृतीयं पदं यावदिदं प्राणिजातं तावद्ध जयति योऽस्या एतदेवं गायत्र्यास्तृतीयं पदं वेद। अथानन्तरं गायत्र्यास्त्रिपदायाः शब्दात्मिकायास्तुरीयं पदमुच्यतेऽभिधेयभूतमस्याः प्रकृताया गायत्र्या एतदेव वक्ष्य-

---

आ० प्रथमे पादे भौमो दृष्टिर्द्वितीये पादे वर्ण्यते त्रैविद्यादृष्टिरित्याह। तथेति। दृष्टिसिद्ध्युपयोगित्वेन संख्यासामान्यं कथयति। ऋच इति। संख्यासामान्यफलमाह। एतदिति। विद्याफलं दर्शयति। स यावतीति ॥ २ ॥

प्रथमद्वितीयपादयोर्भौमत्रैविद्यादृष्टिवत्तृतीये पादे प्राणापानादिदृष्टिः कर्तव्येत्याह। तथेति। ननु त्रिपदा गायत्री व्याख्याता चेत्किमुत्तरग्रन्थेनेत्याशङ्क्याह। अथेति। शब्दात्मका-

उ॰ तदु हैवास्या एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेदाथास्या एतदेव तुरीयं दर्शतं पदं परो रजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परो रजा इति सर्वमु ह्येवैष रज उपर्य्युपरि

---

भा॰ मायं तुरीयं दर्शतं पदं परो रजा य एष तपति। तुरीयमित्यादिवाक्यपदार्थं स्वयमेव व्याचष्टे श्रुतिः। यद्वै चतुर्थं प्रसिद्धं लोके तदिह तुरीयशब्देनाभिधीयते। दर्शतं पदमित्यस्य कोऽर्थ इत्युच्यते। ददृश इव दृश्यत इव हि एष मण्डलान्तर्गतः पुरुषोऽतो दर्शतं पदमुच्यते। परो रजा इत्यस्य पदस्य कोऽर्थ इत्युच्यते। सर्वं समस्तं उ हि एष मण्डलान्तर्गतः पुरुषो रजो रजोजातं समस्तं लोकमित्यर्थः। उपर्य्युपर्य्याधिपत्यभावेन सर्व्वं लोकं रजोजातं तपति। उपर्य्युपरीति वीप्सा सर्व्वलोकाधिपत्यख्यापनार्था। ननु सर्व्वशब्देनैव सिद्धत्वाद्वीप्सानर्थिका नैव-

---

आ॰ उक्ताः प्रकरणविच्छेदार्थोऽथशब्दः। यद्वै चतुर्थमित्यादिग्रन्थस्य पूर्व्ववद्योगवत्त्वमाशङ्क्याह। तुरीयमिति। ददृशेति प्रकृतमात्रोक्तिः। योगिभिर्दृश्यत इवेति यावत् न तु मुख्यमीश्वरस्य दृश्यत्वमतीन्द्रियत्वादित्याह। दृश्यत इवेति। लोका रजांस्युच्यन्त इति श्रुत्यन्तरमाश्रित्याह। समस्तमिति। आधिपत्यभावेनेति कथं व्याख्यातमित्याशङ्क्याह। उपर्य्युपरीति। वीप्सामाक्षिपति। नन्विति। सर्व्वं रजस्तपतीत्येतावतैव सर्व्वाधिपत्यसिद्धत्वाद्वीप्सा व्यर्थेति चोद्यं दूषयति। नैष दोष इति। येषां लोकानामिति यावत्। सकलमुखस्य निरङ्कुशमाधिपत्यमित्यत्र छान्दोग्यश्रुति-

उ॰ तपत्येवꣳ हैव श्रिया यशसा तपति योऽस्या एत-
देवं पदं वेद ॥ ३ ॥

सैषा गायत्र्येतस्मिꣳस्तुरीये दर्शते पदे परो
रजसि प्रतिष्ठिता तद्वैतत्सत्ये प्रतिष्ठितं चक्षुर्वै

---

भा॰ द्योयो येषामुपरिष्टात्सविता दृश्यते तद्विषय एव सर्व्व-
शब्दः आदित्यात्प्रागित्यर्थो वीप्सा। ये चामुष्मा-
त्पराञ्चो लोकास्तेषाञ्चेष्टे देवकामानाञ्चेति श्रुत्यन्त-
रात्सर्वावरोधार्थो वीप्सा। यथाऽसौ सविता सर्व्वा-
धिपत्यलक्षणया श्रिया यशसा च ख्यात्या तपति। एवं
हैव श्रिया यशसा च तपति योऽस्या एतद्देवं तुरीयं
दर्शतं पदं वेद ॥ ३ ॥

सैषा त्रिपदोक्ता या त्रैलोक्यत्रैविद्यप्राणलक्षणा गा-
यत्री। एतस्मिंस्तुर्य्ये तुरीये दर्शते पदे परोरजसि
प्रतिष्ठिता। मूर्त्तामूर्त्तरसत्वादादित्यस्य। रसापाये हि
वस्तुनि रसमप्रतिष्ठितं भवति। यथा काष्ठादिदग्धसारं
तद्वत्। तथा मूर्त्तामूर्त्तात्मकं जगत्त्रिपदा गायत्री चा-

---

आ॰ मनुकूलयति। ये चेति। वीप्सार्थवत्त्वमुपसंहरति। तस्मादिति।
चतुर्थपादज्ञानस्य फलवत्त्वं कथयति। यथेति। ३।

अभिधानाभिधेयात्मिकां गायत्रीं व्याख्यायाभिधानस्याभि-
धेयतन्त्रत्वमाह। सैषेति। आदित्यप्रतिष्ठिता मूर्त्तामूर्त्तात्मिका
गायत्रीत्यत्र हेतुमाह। मूर्त्तेति। भवतु मूर्त्तामूर्त्तरसत्वमादित्या-
देर्वादित्यस्य तत्सारत्वं तथापि कथं गायत्र्याप्रतिष्ठितत्वं एव-
मेव सा मूर्त्ताद्यात्मिका व्याख्यातेत्याशङ्क्याह। रसेति। तद-

उ॰ सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एव ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम तद्वै तत्सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलꣳ सत्यादोगीय इत्ये-

---

भा॰ दित्ये प्रतिष्ठिता तद्गायत्र्यात्मक त्रिभिः पादैस्तद्वै तुरीयं पदं सत्ये प्रतिष्ठितं किं पुनस्तत्सत्यमुच्यते। चक्षुर्वै सत्यं कथं चक्षुः सत्यमित्याह। प्रसिद्धमेतच्चक्षुर्हि वै सत्यं। कथं प्रसिद्धमित्याह। तस्माद्यदि इदानीमेव द्वौ विवदमानौ विरुद्धं वदमानावेयातामागच्छेयातामहमदर्शं दृष्टवानस्म्यन्य आह अहमश्रौषं त्वया दृष्टं न तथा तदस्तीति। तयोर्य एवं ब्रूयादहमद्राक्षमिति तस्मा एव श्रद्दध्याम न पुनर्यो ब्रूयादहमश्रौषमिति। श्रोतुर्मृषा श्रवणमपि सम्भवति न तु चक्षुषो मृषा दर्शनं। तस्मान्नाश्रौषमित्युक्तवते श्रद्दध्याम। तस्मात्सत्यप्रतिपत्तिहेतुत्वात्सत्यं चक्षुस्तस्मिन्सत्ये चक्षुषि सह त्रिभिरितरैः पादैस्तुरीयं

---

आ॰ दादित्यसम्बन्धाभावे मूर्त्ताद्यात्मिका गायत्री स्यादप्रतिष्ठितेति शेषः॥ साराहते स्वातन्त्र्येण मूर्त्तादेर्न स्थितिरिति स्थिते फलितमाह। यथेति॥ आदित्यस्य स्वातन्त्र्यं वारयति। तथेति॥ सत्यशब्दस्याश्रुतविपरीतवाग्विषयत्वं प्रश्नद्वारा वारयति। किं पुनरित्यादिना॥ चक्षुषः सत्यत्वे प्रमाणाभावं शङ्कित्वा दूषयति। कथमित्यादिना॥ श्रोतरि श्रद्धाभावे हेतुमाह। श्रोतुरिति॥ चक्षुरपि मृषादर्शनं सम्भवतीत्याह। न त्विति॥ क्वचित्कथञ्चित्स-

उ॰ वमेषा गायत्र्यध्यात्मं प्रतिष्ठिता सा हैषा गयाꣳस्तत्रे प्राणा वै गयास्तत्प्राणाꣳस्तत्रे तद्यद्गयाꣳस्तत्रे तस्माद्गायत्री नाम स यामेवा-

---

भा॰ यदं प्रतिष्ठितमित्यर्थः । उक्तञ्च । स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीति ॥

तद्वै तुरीयपदाश्रयं सत्यं बले प्रतिष्ठितं किं पुनस्तद्बलमित्याह । प्राणो वै बलं तस्मिन्प्राणे बले प्रतिष्ठितं सत्यं । तथा चोक्तं सूत्रे । तदोतञ्च प्रोतञ्चेति । यस्माद्बले सत्यं प्रतिष्ठितं तस्मादाहुर्बलं सत्यादोगीय ओजीय ओजस्तरमित्यर्थः । लोकेऽपि यस्मिन् हि यदाश्रितं भवति तस्मादाश्रितादाश्रयस्य बलवत्तरत्वं प्रसिद्धं । न हि दुर्बलं बलवतः क्वचिदाश्रयभूतं दृष्टं । एवमुक्तन्यायेन तु एषा गायत्री अध्यात्ममध्यात्मे प्राणे प्रतिष्ठिता । सैषा गायत्री प्राणोऽतो गायत्र्यां जगत्प्रतिष्ठितं । यस्मिन्प्राणे सर्वे देवा सर्वे वेदाः कर्माणि फलञ्च एकं भवति । सैवं गायत्री

---

आ॰ स्मवेऽपि मोक्षापेक्षया प्रकृते विश्वासो दृष्टो लोकस्येत्याह । तथा-ग्रेति । विश्वासातिशयप्रश्नमाह । तस्मादिति । आदित्यस्य चक्षुषि प्रतिष्ठितत्वं यथमेऽपि प्रतिपादितमित्याह । उक्तञ्चेति ।

सत्यस्य बलत्वं प्रत्याह । तद्वा इति । सत्यस्य प्राणप्रतिष्ठितत्वं प्रामाणिकमित्याह । तथा चेति । सूत्रं प्राणो वायुरूपत्वेन सर्वत्रानुस्यूतत्वं भूतसत्यं । सत्यं बले प्रतिष्ठितमित्यत्र लोकप्रसिद्धिं प्रमाणयति । तस्मादिति । तदेवोपपादयति । लोकेऽपीति । तदेव व्यतिरेकमुखेनाह । न हीति । उक्तेन गायत्र्याः स्वात्मत्वं सिद्धमित्याह । एवमिति । यस्मिन्सर्वे प्राणे लोक-

उ॰ मूꣳ सावित्रीमन्वाहैषैव स यस्मा अन्वाह तस्य प्राणाꣳस्त्रायते ॥ ४ ॥

ताꣳ हैतामेके सावित्रीमनुष्टुभमन्वाहुर्वाग-

---

भा॰ प्राणरूपा सती जगत आत्मा । सा हैषा गयांस्तत्रे त्रातवती । के पुनर्गयाः । प्राणा वागादयो वै गयाः । शब्दकरणात् । तांस्तत्रे सैषा गायत्री । तत्तत्र यस्माद्गयांस्तत्रे तस्माद्गायत्री नाम । गयत्राणाद्गायत्रीति प्रथिता । स आचार्य्य उपनीयमाणवकमष्टवर्षं यामेवामूं सावित्रीं सवितृदेवताकामन्वाह पच्छोऽर्द्धर्चशः समस्तां च । एषैव स साक्षात्प्राणो जगत आत्मा माणवकाय समर्पिता इहेदानीं वा व्याख्यातानां याय आचार्य्यो यस्मै माणवकायान्वाहानुवक्ति तस्य माणवकस्य गयान्प्राणान् त्रायते नरकादिपतनात् ॥ ४ ॥

तामेतां सावित्रीं हैके शाखिनोऽनुष्टुभमनुष्टुप्प्रभवामनुष्टुप्छन्दस्कामन्वाहुरुपनीताय । तदभिप्रायमाह । वाग-

---

व्या॰ र्थव । सैषेति । गायत्र्याः प्राणत्वे किं सिध्यति तदाह । यत इति । तदेव स्पष्टयति । गयानित्यादिना । गायत्रीनामनिर्वचनेन तस्या जगज्जीवनहेतुत्वमाह । सा हैषेति । प्रयोक्तृशरीरं प्रसज्य यं । गायन्तीति गया वागुपलक्षिताश्चक्षुरादयः । प्राणसमूहत्वेन सूत्रार्थं गायत्र्या एव सावित्रीत्वमाह । स आचार्य्य इति । पच्छः पादशः सकृत्या गायत्रीत्वं साधयति । स इति । यतः सावित्री गायत्रीति शेषः ॥ ४ ॥

मतान्तरमनूद्य दूषयति । तामेतामिति । तत्सवितुर्वृणीमहे । वयं देवस्य भोजनं । श्रेष्ठꣳ सर्वधातमं । तुरं भगस्य धीमहीत्यनु-

उ॰ नुष्टुबेतद्वाचमनुब्रूम इति न तथा कुर्य्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदिह वा अप्येवं विद्वद्बिव प्रतिगृह्णाति न हैव तद्गायत्र्या एकञ्च न पदं प्रति ॥ ५ ॥

---

भा॰ नुष्टुप् । वाक् शरीरे सरस्वती । तामेव हि वाचं सरस्वतीं माणवकायानुब्रूम इत्येतद्वन्तो न तथा कुर्य्यान्न तथा विद्यायत्ते प्राङ्मर्षैव तत्किं तर्हि गायत्रीमेव सावित्रीमनुब्रूयात्कस्मायस्मात्प्राणो गायत्रीत्युक्तं । प्राण उक्ते वाक् सरस्वती चान्ये च प्राणाः सर्व्वं माणवकाय समर्पितं भवति । किञ्चेदं प्रासङ्गिकमुक्त्वा गायत्रीविदं स्तौति । यदि ह वै अपि एवंविद्बह्विव न हि तस्य सर्व्वात्मनो बहुनामास्ति किञ्चित्सर्व्वात्मकत्वाद्विदुषः प्रतिगृह्णाति सहैव तत्प्रतिग्रहजातं गायत्र्या एकं च नैकमपि पदं प्रति पर्य्याप्तं ॥ ५ ॥

---

वा॰ शुभं सावित्रीमाहुः । सवितृदेवताकत्वादित्यर्थः । उपनीतस्य माणवकस्य प्रथमतः सरस्वत्यां अनुष्टुप्त्वेनाभिमतायां सापेक्षत्वं द्योतयितुं हिशब्दः ॥ दूषयति । नेत्यादिना ॥ नन्वपेक्षितवागात्मकसरस्वतीसमर्पणं विना गायत्रीसमर्पणमयुक्तमिति प्राप्तिं परिहरति । कस्मादित्यादिना ॥ यदि हेत्यादेरक्षरग्रन्थस्य-व्यवहितपूर्व्वग्रन्थासङ्गतिमाशङ्क्याह । इदमिति ॥ सावित्र्या गायत्रीत्वमिति यावत् । इवशब्दार्थं दर्शयति । न हीति ॥ यद्यपि बहु प्रतिगृह्णाति विद्वानिति पूर्व्वेण सम्बन्धः । तथापि न तेन प्रतिग्रहजातेनैकस्यापि गायत्रीपदस्य विज्ञानफलं भुक्तं स्यात् । दूरतस्तु दोषाधायकत्वं तस्येत्यर्थः ॥ ५ ॥

उ॰ स य इमाꣳस्त्रीँल्लोकान्पूर्णान्प्रतिगृह्णीयात्सोऽस्या एतत्प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतत्तृतीयं पदमाप्नुयादथास्या

---

भा॰ स इमांस्त्रीन् स यो गायत्रीविदिमान् भूरादींस्त्रीन्गोऽश्वादिधनपूर्णान् लोकान्प्रतिगृह्णीयात्स प्रतिग्रहः अस्या गायत्र्या एतत्प्रथमं पदं यद्व्याख्यातमाप्नुयात्। प्रथमपदविज्ञानफलं तेन भुक्तं स्यान्न त्वधिकदोषोत्पादकः स प्रतिग्रहः। अथ पुनर्यावती इयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात् सोऽस्या एतद्द्वितीयं पदमाप्नुयात्। द्वितीयपदविज्ञानफलं तेन भुक्तं स्यात्तथा यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतत्तृतीयं पदमाप्नुयात्। तेन तृतीयपदविज्ञानफलं भुक्तं स्यात्कल्पयित्वेदमुच्यते पादत्रयसममपि यदि कश्चित्प्रतिगृह्णीयात्तत्पादत्रयविज्ञानफल-

---

आ॰ गायत्रीविदः प्रतिग्रहकृतो दोषाभावं सामान्येनोक्तं विशेषतस्तदभावमाह। स इति। यथा त्रैलोक्यावच्छिन्नस्य त्रैविद्यावच्छिन्नस्य चार्थस्य प्रतिग्रहेण पादद्वयविज्ञानफलमेव भुक्तं नाधिकं दूषणं तथेति यावत्। प्रतिग्रहीता दाता वा नैवंविधः सम्भाव्यते किन्तु स्तुत्यर्थं सर्वमेतत्कल्पितमित्याह। कल्पयित्वेति। उक्तमेव स्फुटयति। पादत्रयेति। कल्पयित्वेदमुच्यते इति किमिति कल्प्यते मुख्यमेवैतत्किं न स्यादित्याशङ्क्याह। न चेति। कल्पनापि तर्हि किमर्थेत्याशङ्क्याह। गायत्रीति। अङ्गीकृत्योत्तरवा-

उ० एतदेव तुरीयं दर्शतं पदं परो रजा यऽएष तपति नैव केन च नाप्यं कुत उ एतावत्प्रति-गृह्णीयात् ॥ ६ ॥

---

भा० सैव चैककारणं न ह्यन्यस्य दोषस्य कर्त्तृत्वे क्षमं । न चैवं दाता प्रतिग्रहीता वा गायत्रीविज्ञानस्तुतये कल्प्यते। दाता प्रतिग्रहीता च यद्यप्येवं सम्भाव्यते नासौ प्रति-ग्रहोऽपराधक्षमः। कस्माद्यतोऽभ्यधिकमपि पुरुषार्थविज्ञान-मवशिष्टमेव चतुर्थपादविषयं गायत्र्यास्तद्दर्शयति। अथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति । तच्चैतन्नैव केनचित्केनचन केनचिदपि प्रतिग्रहणार्थे-नैव प्राप्यमित्यर्थः। यथा पूर्व्वोक्तानि त्रीणि पदानि एता-न्यपि नैवाप्यानि केनचित्कल्पयित्वैवमुक्तं परमार्थतः। कुत एतावत् प्रतिगृह्णीयात्त्रैलोक्यादिसमं तस्माद्गायत्र्येवंप्रका-रोपास्येत्यर्थः ॥ ६ ॥

---

आ० अमुमुपपादयति । दातेति । तदेवाकाङ्क्षापूर्व्वकमाह । कस्मा-दिति । वागात्मकपदत्रयविज्ञानफलभोगेनात्यानन्त्यमपवृद्धार्थः । नैव प्राप्यं प्रतिग्रहेण केनचिदपि नैव भुक्तं स्यादित्यर्थः । तत्रैव वैधर्म्यदृष्टान्तमाह । यथेति । तानि प्रतिग्रहेण यथाऽऽप्यानि तत्तथैव तदाप्यमित्यर्थः । कुत इत्यादि वाक्यस्य तात्पर्य्यमाह । एतान्यपीति । गायत्रीविदः स्तुतिफलं तत्फलमाह । तस्मादिति । एवंप्रकारा पादचतुष्टयरूपा सर्व्वात्मिकेत्यर्थः ॥ ६ ॥

उ॰ तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति

---

भा॰ तस्या उपस्थानं तस्या गायत्र्या उपस्थानं उपेत्य स्थानं नमस्करणमनेन मन्त्रेण। कोऽसौ मन्त्र इत्याह। हे गायत्रि असि भवसि त्रैलोक्यपादेनैकपदी। त्रयीविद्यारूपेण द्वितीयेन द्विपदी। प्राणादिना तृतीयेन त्रिपद्यसि। चतुर्थेन तुरीयेण चतुष्पद्यसि। एवं चतुर्भिः पादैरुपासकैः पद्यसे ज्ञायसेऽतः परं परेण निरुपाधिकेन स्वेनात्मनाऽपदसि। अविद्यमानं पदं येन पद्यसे सा त्वमपदसि यस्मान्न हि पद्यसे नेति नेत्यात्मत्वात्। अतो व्यवहारविषयाय नमस्ते तुरीयाय दर्शताय पदाय परोरजसे। असौ शत्रुः पाप्मा त्वत्प्राप्तिविघ्नकरः। अदस्तदात्मनः कार्यं यत्त्वत्प्राप्तिविघ्नकर्तृत्वं मा प्रापत् मैव प्राप्नोतु। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः। यं द्विष्यात् यं प्रति द्वेषं कुर्यात्स्वयं विद्वांस्तं प्रत्यनेनोपस्थानमसौ शत्रुरमुकनामेति नाम गृह्णीयादस्मै यज्ञदत्तायाभिप्रेतः कामो मा समर्द्धि समृद्धिं माप्नोत्विति वोपतिष्ठते।

---

आ॰ प्रकृतमुपासनमेव मन्त्रेण सङ्गृह्णाति। तस्या इत्यादिना॥ ध्येयरूपमुक्त्वा ज्ञेयं गायत्र्या रूपमुपन्यस्यति। अतः परमिति॥ चतुर्थस्य पादस्य पादत्रयापेक्षया प्राधान्यमभिप्रेत्याह। अत इति॥ यथोक्तनमस्कारस्य प्रयोजनमाह। असाविति॥ द्विविधमुपस्थानमभिचारिकमाभ्युदयिकं च तत्राद्यं द्वेधा व्युत्पादयति।

उ० वा न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा ॥ ७ ॥

एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नु हो तद्गायत्रीविदब्रूथा अथ कथं हस्तीभूतो वहसीति मुखं ह्यस्याः सम्राण्न विदाञ्चकारेति होवाच तस्या अग्निरेव मुखं यदि ह वा

---

भा० न हैवास्मै देवदत्ताय स कामः समृध्यते । कस्मै । यस्मा एवमुपतिष्ठतेऽहमदो देवदत्ताभिप्रेतं प्रापमिति वोपतिष्ठते । असावदो मा प्रापदित्यादित्रयाणां मन्त्रपदानां यथाकामं विकल्पः ॥ ७ ॥

गायत्र्या मुखविधानायार्थवाद उच्यते । एतद्ध किल स्मर्यते । तत्तत्र गायत्रीविज्ञानविषये जनको ह वैदेहो बुडिलो नामतोऽश्वतराश्वस्यापत्यमाश्वतराश्विस्तं किलोक्तवान् । यन्नु इति वितर्के हो अहो इत्येतद्यत्त्वं गायत्रीविदब्रूथाः गायत्रीविदस्मीति यदब्रूथाः किमिदं तस्य वचसोऽननुरूपमथ कथं यदि गायत्रीवित्प्रतिग्रहदोषेण

---

आ० यं द्विष्यादिति । नाम गृह्णीयात्तदीयं नाम गृहीत्वा च तदभिप्रेतं मा प्रापदित्यनेनोपस्थानमिति सम्बन्धः । आभ्युदयिकमुपस्थानं दर्शयति । अहमिति । कीदृगुपस्थानमत्र मन्त्रपदेषु कर्त्तव्यमित्याशङ्क्य यथाकामं विकल्पं दर्शयति । असाविति ॥ ७ ॥

किन्तु तद्गायत्रीविज्ञानप्रतिकूलमुपलभ्यते तदाह । यन्विति । पूर्व्वापरविरोधाद्योतकोऽयमशब्दः । तथापि गायत्रीविज्ञानफलवत्त्वे सति प्रतिकूलमिदं हस्तीभूतस्य तव मां प्रति वहनमित्याशङ्क्याह । एतद्धेति । राजा ब्रूते स्पष्टयति । मुखविधानस्य

उ० अपि बह्वीवाग्नावभ्यादधति सर्वमेव तत् सन्दहत्येवꣳ हैवैवंविद्यद्यपि बह्विव पापं कुरुते सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति ॥ ८ ॥ सप्तमस्य चतुर्दशं ब्राह्मणं ॥ १४ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं तत्त्वं

---

भा० हस्तीभूतो वहसीति। स प्रत्याह राजा स्मारितो मुखं गायत्र्या हि यस्मादस्याः हे सम्राट् न विदाञ्चकार न विज्ञातवानस्मीति होवाच। एकाङ्गविकलत्वात् गायत्रीविज्ञानं ममाफलं जातं। शृणु तर्हि तस्या गायत्र्या अग्निरेव मुखं। यदि ह वै अपि बह्विवेन्धनं अग्नावभ्यादधाति लौकिकाः सर्वमेव तत्सन्दहत्येवेन्धनमग्निरेवं ह एव एवंविद्गायत्र्या अग्निर्मुखमित्येवं वेत्तीत्येवंवित् स्यात् स्वयं गायत्र्यात्माग्निमुखः सन्। स यद्यपि बह्विव पापं कुरुते प्रतिग्रहादिदोषं तत्सर्वं पापजातं संप्साय संभक्षयित्वा शुद्धोऽग्निवत्पूतश्च। तस्मात्प्रतिग्रहदोषाद्गायत्र्यात्मा अजरोऽमृतश्च सम्भवति ॥ ८ ॥ सप्तमस्य चतुर्दशं ब्राह्मणं ॥ १४ ॥

यो ज्ञानकर्मसमुच्चयकारी सोऽन्तकाल आदित्यं प्रार्थ-

---

आ० दृष्टान्तावष्टम्भेन फलमाचष्टे। यदीत्यादिना। इवशब्दोऽवधारणार्थः। पापसंसर्गराहित्यं शुद्धिस्तत्प्रागसंसर्गस्तु पूततेति भेदः। गायत्रीज्ञानस्य क्रममुक्तिफलत्वं दर्शयति। गायत्र्यात्मेति। ॥ ८ ॥ सप्तमस्य चतुर्दशं ब्राह्मणं ॥ १४ ॥

ब्राह्मणान्तरस्य तात्पर्यमाह। यो ज्ञानकर्मेति। आदित्यस्याप्रकृतत्वात्कथं तत्प्रार्थनेत्याशङ्क्याह। अस्ति चेति। तथापि

उ॰ पूषन्नपावृणु सत्यधर्म्माय दृष्टये पूषन्नेकर्षे यम सूर्य्य प्राजापत्य व्यूह रश्मीन्

---

भा॰ यत्पस्ति च प्रसङ्गो गायत्र्यास्तुरीयः पादो हि स तदुपस्थानं प्रकृतमतः स एव प्रार्थ्यते हिरण्मयेन ज्योतिर्म्मयेन पात्रेण। यथा पात्रेणेष्टं वस्त्वपिधीयते एवमिदं सत्याख्यं ब्रह्म ज्योतिर्म्मयेन मण्डलेनापिहितमिवासमाहितचेतसामदृश्यत्वात्तदुच्यते। सत्यस्यापिहितं मुखं मुख्यं स्वरूपं तदभिधानं पात्रमपिधानमिव दर्शनप्रतिबन्धकारणं। तत्त्वं हे पूषन् जगतः पोषणात्पूषा सविता अपावृणु अपावृतं कुरु दर्शनप्रतिबन्धकारणमपनयेत्यर्थः। सत्यधर्म्माय सत्यधर्म्मोऽस्येति मम सोऽहं सत्यधर्म्माऽतस्तस्मै तदात्मभूतायेत्यर्थः। दृष्टये दर्शनाय। पूषन्नित्यादीनि नामानि आमन्त्रणार्थानि सवितुः। एकर्षे एकश्चासावृषिश्च एकर्षिर्दर्शनादृषिः स हि सर्व्वस्य जगत आत्मा चक्षुश्च सन्सर्व्वं पश्यत्येको वा गच्छतीत्येकर्षिः। सूर्य्य एकाकी चरतीति मन्त्रवर्णात्। यमं सर्व्वं हि जगतः संयमनं त्वत्कृतं। सूर्य्यः,

---

आ॰ कथमादित्यस्य प्रसङ्गस्तत्राह। तदुपस्थानमिति। नमस्ते तुरीयायेति तर्हि दर्शितमित्यर्थः। आदित्यस्य प्रसङ्गे पश्चिममाह। अत इति। समाहितचेतसां प्रयत्नवतामपि दृश्यत्वान्नापिहितं किन्तु पिहितमेवेति तत्राह। असमाहितेति। जगतः पोषणाद्धर्म्महिमवर्ष्यादिदानेनेति शेषः। अपावरणकरणमेव विवृणोति। दर्शनेति। सत्यं परमार्थस्वरूपं ब्रह्म धर्म्मस्वभाव इति यावत्। ननु दर्शनार्थं तत्प्रतिबन्धकनिवृत्तौ पूषणि नियुक्ते किमित्यनेन सम्बोध्य नियुज्यन्ते तत्राह। पूषन्नित्यादीति। दर्शनादृषिरि-

उ॰ समूहतेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि वायुरनिलममृत-मथेदं भस्मान्तꣳ शरीरं ॐ३ क्रतो स्मर कृतꣳ

---

भा॰सु ईरयते रसानां रश्मीनां प्राणानां यो वा जगत इति । प्राजापत्यः प्रजापतेरीश्वरस्यापत्यं हिरण्यगर्भस्य वा । हे प्राजापत्य व्यूह विगमय रश्मीन् ॥

समूह सङ्क्षिपात्मनस्तेजो येनाहं शक्नुयां द्रष्टुं । तेजसा ह्यपहतदृष्टिर्न शक्नुयां त्वत्स्वरूपमञ्जसा द्रष्टुं । विद्योतन इव रूपाणामत उपसंहर तेजः । यत्ते तव रूपं सर्व्व-कल्याणानामतिशयेन कल्याणं कल्याणतमं तत्ते पश्यामि । पश्यामो वयं वचनव्यत्ययेन । योऽसौ भूर्भुवःस्वो व्याहृत्यवयवः । पुरुषः पुरुषाकृतित्वात्पुरुषः सोऽहमस्मि भवामि अहरहमिति चोपनिषद उक्तत्वादादित्यचाक्षुषयोस्तदेवेदं परामृश्यते । सोऽहमस्म्यमृतमिति सम्बन्धः ॥

---

आ॰ सुवत्यं विशदयति । स हीति । सूर्य्य आत्मा जगतस्तस्थुषश्चेति मन्त्रवर्णमाश्रित्योक्तं । जगत आत्मेति । चक्षुर्मित्रस्य वरुणस्या-ग्नेरित्येतदाश्रित्याह । चक्षुश्चेति ।

स्वाभाविका रश्मयो न विगमयितुं शक्या इत्याशङ्क्याह । समूहेति । मदीयं तेजःसङ्क्षेपं विनापि ते मत्स्वरूपदर्शनं स्यादि-त्याशङ्क्याह । तेजसा हीति । विद्योतनं विद्युत्प्रकाशस्तस्मिन् सति रूपाणां स्वरूपमञ्जसा चक्षुषा न शक्यं द्रष्टुं तस्य चक्षुर्मोषि-त्वात्तथेत्याह । विद्योतन इवेति । तेजःसङ्क्षेपस्य प्रयोजनमाह । यदिति । किञ्च नाहं त्वां भृत्यवद्याचेऽभेदेन ध्यातत्वादित्याह । योऽसाविति । व्याहृतिशरीरे कथमहमिति प्रयोगोपपत्तिरित्या-शङ्क्याह । अहरिति । तदेवेदमित्यहं रूपमुच्यते ।

उ॰ स्मर क्रतो स्मर कृतꣳ स्मर अग्ने नय सुपथा
राये अस्मान्विश्वानि देव वयुनानि विद्वान्

---

भा॰ ममामृतस्य सतः शरीरपाते शरीरस्थो यः प्राणो वायुः सोऽनिलं बाह्यं वायुमेव प्रतिगच्छतु। तथाऽन्या-देवताः स्वां स्वां प्रकृतिं गच्छन्तु। अथेदमपि भस्मान्तं सत् पृथिवीं यातु शरीरं। अथेदानीमात्मनः संकल्पभूतां मनसि व्यवस्थितामग्निदेवतां प्रार्थयति। ॐ क्रतो। ॐमिति क्रतो इति च सम्बोधनार्थावेव। ॐकारप्रतीकत्वादोमनो-मयत्वाच क्रतुः। हे क्रतो स्मर स्मर्त्तव्यमन्तकाले हि त्वत्स्मरणवशाद्दिष्टा गतिः प्राप्यतेऽतः प्रार्थ्यते यन्मया कृतं तत् स्मर। पुनरुक्तिरादरार्था॥

किञ्च हे अग्ने नय प्रापय सुपथा शोभनेन मार्गेण राये धनाय कर्मफलप्राप्तय इत्यर्थः। न दक्षिणेन कृष्णेन

---

आ॰ ननु तव शरीरपातेऽपि नामृतत्वमाध्यात्मिकवाय्वादिप्रवि-भक्तत्वादत आह। ममेति। वायुग्रहणमुपलक्षणं विवक्षि-त्वाह। तथेति। देहस्य देवतानामप्रतिबद्धत्वेऽपि देहस्यैव सूक्ष्मतां मतस्य प्रतिबन्धकत्वात् तदानीमसत्त्वमित्याशङ्क्याह। अथेति। मन्त्रान्तरमवतार्य व्याकरोति। अथेदानीमित्यादिना। अवतीत्योमीश्वरः सर्वस्य रक्षकत्वात् जाठराग्निप्रतीकत्वेन ध्यातत्वादग्निशब्देन निर्देशः। एवमग्निदेवतां सम्बोध्य नियुङ्क्ते। स्मरेति। इष्टां गतिं निगमयितुं निमित्तं स्मरणे देवता नियुज्यते तदाह। स्मरणेति।

प्रार्थनान्तरं समुच्चिनोति। किञ्चेति। उक्तमेव व्यनक्ति। नेत्यादिना। अस्मान्नयेति पूर्वेण सम्बन्धः। प्रज्ञानमग्नेरवस्था-

उ० युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम३ ॥ १ ॥ पञ्चदशं ब्राह्मणं ॥ १५ ॥ इति बृहदारण्यके सप्तमोऽध्यायः ॥ ७ ॥ उपनिषत्सु पञ्चमोऽध्यायः ॥ ५ ॥

---

भा० पुनरावृत्तियुक्तेन । किं तर्हि शुक्लेनैव सुपथाऽस्मान्विश्वानि सर्व्वाणि हे देव वयुनानि प्रज्ञानानि सर्व्वप्राणिनां विद्वान् किञ्च युयोधि अपनय वियोजय । अस्मदस्मत्तो जुहुराणं कुटिलं एनः पापं पापजातं सर्व्वं । तेन पापेन वियुक्ता वयमेष्याम उत्तरेण पथा त्वत्प्रसादात् । किन्तु वयं तुभ्यं कर्त्तुं शक्नुमो भूयिष्ठां बहुतमां ते तुभ्यं नमउक्तिं नमस्कारवचनं विधेम नमस्कारोक्त्या परिचरेम इत्यर्थोऽन्यत्कर्त्तुमशक्ताः सन्तः ॥ इति सप्तमस्य पञ्चदशं ब्राह्मणं ॥ १५ ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतायां बृहदारण्यकटीकायां सप्तमोऽध्यायः समाप्तः ॥

---

आ० दीनामुपलभ्य । प्रार्थनान्तरं दर्शयति । किञ्चेति ॥ पापवियोजनफलमाह । तेनेति ॥ भवद्भिराराधितो भवतां यथोक्तं फलं साधयिष्यामीत्याशङ्क्याह । किन्त्विति ॥ बहुतमत्वं भक्तिश्रद्धातिरेकयुक्तत्वं यागादिना परिचर्या क्रियतामित्याशङ्क्याह । अन्यदिति । सन्ततनमस्कारोक्त्या परिचरामेति पूर्व्वेण सम्बन्धः । अशक्तिश्च मुमूर्षावस्थादिति द्रष्टव्यं । इतिशब्दोऽध्यायसमाप्त्यर्थः ॥ पञ्चदशं ब्राह्मणं ॥ १५ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां बृहदारण्यटीकायां सप्तमोऽध्यायः समाप्तः ॥ ॐ तत् सत् ॥

उ० ॥हरिः ॐ॥ यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च

---

भा० ॥ ॐ ॥ प्राणो गायत्रीत्युक्तं । कस्मात्पुनः कारणात्प्राणभावो गायत्र्या न पुनर्वागादिभाव इति । यस्माज्ज्येष्ठश्च श्रेष्ठश्च प्राणो न वागादयो ज्येष्ठश्रेष्ठभाजः । कथं ज्येष्ठत्वञ्च श्रेष्ठत्वञ्च प्राणस्येति तन्निर्दिधारयिषयेदमारभ्यते । अथवोक्थयजुःसामक्षत्रादिभावैः प्राणस्यैवोपासनमभिहितं नत्वन्येषु चक्षुरादिषु तच्च हेतुमात्रमिहानन्तर्य्येण सम्बध्यते न पुनः पूर्व्वशेषता । विवक्षितन्तु खिलत्वादस्य काण्डस्य पूर्व्वत्र यदनुक्तं विशिष्टं फलं प्राणविषयमुपासनं तद्वक्तव्यमिति । यः कश्चिद्ध वै इत्यवधारणार्थं । यो ज्येष्ठश्रेष्ठगुणं वक्ष्यमाणं वेदासौ भवत्येव ज्येष्ठश्च श्रेष्ठश्च । एवं फलेन प्रलोभितः सन् प्रश्नाभिमुखीभूतस्तस्मै चाह । प्राणो वै ज्येष्ठश्च श्रेष्ठश्च । कथं पुनरवगम्यते प्राणो ज्येष्ठश्च

---

आ० श्रीगणेशाय नमः । ॐकारो दमादित्रयं ब्रह्मब्रह्मोपासनानि तत्फलं तदर्था गतिरादित्याद्युपस्थानमित्येषोऽर्थः सप्तमे निवृत्तः । सम्प्रति प्राधान्येनाब्रह्मोपासनं सफलं श्रीमन्थादिकर्म्म च वक्तव्यमित्यष्टममध्यायमारभमाणो ग्रन्थसङ्गतिमाह । प्राण इति ॥ तस्मात्प्राणो गायत्रीति युक्तमुक्तमिति शेषः ॥ प्राणस्य ज्येष्ठत्वादिनाद्यापि निर्द्धारितमिति शङ्कित्वा परिहरति । कथमित्यादिना ॥ प्रकारान्तरेण पूर्व्वोत्तरग्रन्थसङ्गतिमाह । अथवेति ॥ आदिशब्दादन्नवैशिष्ट्यादिनिर्द्देशस्तनेति प्राणस्यैव विशिष्टगुणकस्योपास्यत्वोक्तिर्हेतुः । ज्येष्ठत्वादिस्तन्मात्रमिहानन्तरग्रन्थेन कथ्यत इति शेषः ॥ तदेव पूर्व्वग्रन्थस्य हेतुमत्त्वादुत्तरस्य च हेत्वानन्तर्य्येण पौर्व्वापर्य्येण पूर्व्वग्रन्थेन सहोत्तरं ग्रन्थजातं सम्बध्यत इति फलितमाह । आनन्तर्य्येणेति । वक्ष्यमाणप्राणोपास-

उ० श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च

---

भा० श्रेष्ठश्चेति । यस्मान्निषेककाल एव शुक्रशोणितसम्बन्धः प्राणादिकलापस्याविशिष्टस्तथापि नाप्राणं शुक्रं विरोहतीति प्रथमो वृत्तिलाभः प्राणस्य चक्षुरादिभ्यः । अतो ज्येष्ठो वयसा प्राणो निषेककालादारभ्य गर्भं पुष्यति प्राणः । प्राणे हि लब्धवृत्तौ पश्चाच्चक्षुरादीनां वृत्तिलाभः । अतो युक्तं प्राणस्य ज्येष्ठत्वं चक्षुरादिषु । भवति तु कश्चित्कुले ज्येष्ठो गुणहीनत्वात्तु न श्रेष्ठो मध्यमः कनिष्ठो वा गुणाढ्यत्वाद्भवेच्छ्रेष्ठो न ज्येष्ठः । न तथेहेत्याह प्राण एव तु ज्येष्ठश्च श्रेष्ठश्च । कथं पुनः श्रैष्ठ्यमवगम्यते प्राणस्य । तदिह संवादेन दर्शयिष्यामः ॥

---

आ० नन्वस्य पूर्वोक्तमुख्यप्राणोपास्तिविशेषत्वमाशङ्क्य गुणभेदात्फलभेदाच्च नैवमित्यभिप्रेत्याह । न पुनरिति ॥ किमिति प्राणोपासनमिह स्वातन्त्र्येणोपदिश्यते तत्राह । खिलत्वादिति ॥ इतिशब्दो ब्राह्मणारम्भोपसंहारार्थः ॥ एवं ब्राह्मणारम्भं प्रतिपाद्योत्तरवाक्यं व्याचष्टे । यः कश्चिदित्यादिना ॥ यच्छब्दस्य पुनरुपादानमन्वयार्थं ॥ निपातयोरर्थमवधारणमेव प्रागुक्तं प्रकटयति । भवत्ये-वेति ॥ प्रश्नार्थं कोऽसौ ज्येष्ठश्च श्रेष्ठश्चेति । प्रश्नतदर्थमिति यावत् ॥ प्राणस्य ज्येष्ठत्वादिकमाक्षिपति । कथमिति ॥ तत्र हेतुमाह । यस्मादिति ॥ तस्माज्ज्येष्ठत्वादिकं तुल्यमेवेति शेषः ॥ सम्बन्धा-विशेषमङ्गीकृत्य ज्येष्ठत्वं प्राणस्य साधयति । तथापीति ॥ उक्त-मेव समर्थयते । निषेककालादिति ॥ तत्रापि विप्रतिपन्नं प्रत्याह । प्राणे हीति ॥ ज्येष्ठत्वेनैव श्रेष्ठत्वे सिद्धे किमिति पुनरुक्तिरि-त्याह । भवतीति ॥ ज्येष्ठत्वे सत्यपि श्रेष्ठत्वाभावमुक्त्वा तस्मि-न्नसत्यपि ज्येष्ठत्वाभावमाह । मध्यम इति । इहेति प्राणोक्तिः ॥ प्राणश्रेष्ठत्वे प्रमाणाभावमाशङ्क्य प्रत्याह । कथमित्यादिना ॥

उ० ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ १ ॥

यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति

---

भा० सर्व्वथापि तु प्राणं ज्येष्ठश्रेष्ठगुणं यो वेदोपास्ते स स्वानां ज्ञातीनां ज्येष्ठश्च श्रेष्ठश्च भवति। ज्येष्ठश्रेष्ठगुणोपासनसा-मर्थ्यात्स्वव्यतिरेकेणापि च येषां मध्ये ज्येष्ठश्च श्रेष्ठश्च भवि-ष्यामीति बुभूषति भवितुमिच्छति तेषामपि ज्येष्ठश्रेष्ठ-प्राणदर्शी ज्येष्ठश्च श्रेष्ठश्च भवति। ननु वयोनिमित्तं ज्येष्ठत्वं तदिच्छातः कथं भवतीत्युच्यते। नैष दोषः। प्राण-वद्वृत्तिलाभत्वस्यैव ज्येष्ठत्वस्य विवक्षितत्वात्॥

यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति। दर्शनानुरूप्येण फलं। येषां च ज्ञातिव्यतिरेकेण वसिष्ठो भवितुमिच्छति तेषाञ्च वसिष्ठो भवत्युच्यतां तर्हि काऽसौ वसिष्ठेति। वाग्वै वसिष्ठा। वासयत्यतिशयेन वस-

---

आ० पूर्व्वोक्तमुपास्तिफलमुपसंहरति। सर्व्वथापीति॥ आरोपेणा-नारोपेण वेत्यर्थः॥ ज्येष्ठस्याविद्याफलत्वमाक्षिपति। नन्विति॥ तस्य विद्याफलत्वं साधयति। उच्यत इति॥ इच्छातो ज्येष्ठं दुःसा-ध्यमिति दोषस्यासत्त्वमाह। नेति॥ तत्र हेतुमाह। प्राणवदिति॥ यथा प्राणस्तताग्रनादिप्रयुक्तचक्षुरादीनां वृत्तिलाभस्तथा प्राणो-पासकाधीनं जीवनमन्येषां स्वानां भवतीति प्राणदर्शिनो ज्येष्ठत्वं न वयोनिबन्धनमित्यर्थः॥ १॥

वसिष्ठत्वमपि प्राणस्यैवेति वक्तुमुत्तरवाक्यमुत्थाप्य व्याचष्टे। यो हेत्यादिना॥ यत्नेन प्रणोभितं शिष्यं प्रत्यभिमुखं प्रत्याह।

उ० वाग्वै वसिष्ठा वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ २ ॥

योह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥ ३ ॥

---

भा० वेति वसिष्ठा । वाग्मिनो हि धनवन्तो वसन्त्यतिशयेन । आच्छादनार्थस्य वा वसेर्वसिष्ठा अभि भवन्ति हि वाचा वाग्मिनोऽन्यान् । तेन वसिष्ठगुणवत्परिज्ञानाद्वसिष्ठगुणो भवतीति दर्शनानुरूपं फलं ॥

यो ह वै प्रतिष्ठां वेद प्रतितिष्ठत्यनयेति प्रतिष्ठा । तां प्रतिष्ठां प्रतिष्ठागुणवतीं यो वेद तस्यैतत्फलं प्रतितिष्ठति समे देशे काले च । तथा दुर्गे विषमे च दुर्गमने च । देशे दुर्भिक्षादौ वा काले विषमे । यद्येवमुच्यतां काऽसौ

---

आ० उच्यतामित्यादिना । वाचो वसिष्ठत्वं द्विधा प्रतिजानीते वासयतीति ॥ वासयत्यतिशयेनेत्युक्तं विशदयति । वाग्मिनो हीति ॥ वासयन्ति चेति द्रष्टव्यं ॥ वसते वेत्युक्तं स्फुटयति । आच्छादनार्थस्य वेति ॥ आच्छादनार्थत्वमनुभवेन साधयति । अभिभवन्तीति ॥ उक्तमुपास्तिफलं निगमयति । तेनेति ॥ २ ॥

गुणान्तरं वक्तुं वाक्यान्तरमादाय व्याचष्टे । यो ह वा इति ॥ समे प्रतिष्ठां विद्यां विनापि स्यादित्याशङ्क्याह । तथेति ॥ विषमे च प्रतितिष्ठतीति सम्बन्धः ॥ विषमशब्दस्यार्थमाह । दुर्गमने चेति ॥ इदानीं प्रश्नपूर्वकं प्रतिष्ठां दर्शयति । यद्येवमिति ॥

उ० यो ह वै सम्पदं वेद सꣳहास्मै पद्यते यं काम कामयते श्रोत्रं वै सम्पत् श्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः सꣳहास्मै पद्यते यं कामं कामयते य एवं वेद ॥ ४ ॥

---

भा० प्रतिष्ठा । चक्षुर्वै प्रतिष्ठा । कथं चक्षुषः प्रतिष्ठात्वमित्याह । चक्षुषा हि समे च दुर्गे च दृष्ट्वा प्रतितिष्ठति । अतोऽनुरूपं फलं प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे च एवं वेदेति ॥ ३ ॥

यो ह वै सम्पदं वेद सम्पद्गुणयुक्तं यो वेद तस्यैतत्फलमस्मै विदुषे सम्पद्यते ह । किं । यं कामं कामयते स कामः । किं पुनः सम्पद्गुणकं । श्रोत्रं वै सम्पत् । कथं पुनः श्रोत्रस्य सम्पद्गुणत्वमिति । उच्यते । श्रोत्रे सति हि यस्मात्सर्वे वेदा अभिसम्पन्नाः श्रोत्रेन्द्रियवतोऽध्येयत्वात् वेदविहितकर्मायत्ताश्च कामाः तस्माच्छ्रोत्रं सम्पत् । अतो ज्ञानानुरूपं फलं । सं हास्मै पद्यते स यं यं कामयते य एवं वेद ॥ ४ ॥

---

आ० प्रतिष्ठात्वं चक्षुषो व्युत्पादयति । कथमित्यादिना ॥ विद्याफलं निगमयति । अत इति ॥ ३ ॥

वाक्यान्तरमादाय विभजते । यो ह वै सम्पदमिति ॥ प्रश्नपूर्वकं सम्पदुत्पत्तिवाक्यमुपादत्ते । किं पुनरिति ॥ श्रोत्रस्य सम्पद्गुणत्वं व्युत्पादयति । कथमिति ॥ अध्येयत्वमध्ययनार्हत्वं । तथापि कथं श्रोत्रं सम्पद्गुणकमित्याशङ्क्याह । वेदेति ॥ पूर्वोक्तं फलमुपसंहरति । अत इति ॥ ४ ॥

उ॰ यो ह वा आयतनं वेदायतनꣳ स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनꣳ स्वानां भवत्यायतनं जनानां य एवं वेद ॥ ५ ॥

यो ह वै प्रजापतिं वेद प्रजायते ह प्रजया पशुभीरेतो वै प्रजातिः प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥ ६ ॥

---

भा॰ यो ह वा आयतनं वेद। आयतनमाश्रयस्तद्यो वेदायतनं स्वानां भवत्यायतनं जनानामन्येषामपि किं पुनस्तदायतनमित्युच्यते। मनो वा आयतनमाश्रय इन्द्रियाणां विषयाणाञ्च। मन आश्रिता हि विषया आत्मनो भोग्यत्वं प्रतिपद्यन्ते। मनःसङ्कल्पवशानि चेन्द्रियाणि प्रवर्त्तन्ते। अतो मन आयतनमिन्द्रियाणां अतो दर्शनानुरूपेण फलं आयतनं स्वानां भवत्यायतनं जनानां य एवं वेद ॥ ५ ॥

यो ह वै प्रजापतिं वेद। प्रजायते ह प्रजया पशुभिश्च सम्पन्नो भवति। रेतो वै प्रजातिः। रेतसा प्रज-

---

आ॰ वाक्यान्तरमादाय विभजते। यो ह वा आयतनमिति ॥ सामान्येनोक्तमायतनं प्रश्नपूर्व्वकं विशदयति। किं पुनरिति ॥ मनसो विषयाश्रयत्वं विशदयति। मन इति ॥ इन्द्रियाश्रयत्वं तस्य स्पष्टयति। मनः सङ्कल्पेति ॥ पूर्व्ववत्फलं निगमयति। अत इति ॥ ५ ॥

गुणान्तरं वस्तुं वाक्यान्तरं गृहीत्वा तदक्षराणि व्याकरोति। यो हेत्यादिना ॥ वागादीन्द्रियाणि तत्तद्गुणविशिष्टानि शिष्ट्वा

उ० ते हेमे प्राणा अहꣳश्रेयसे विवदमाना ब्रह्म जग्मुस्तद्धोचुः को नो वसिष्ठ इति तꣳ होवाच यस्मिन्व उत्क्रान्त इदꣳ शरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥ ७ ॥

---

भा० मनेन्द्रियमुपलक्ष्यते । तद्विज्ञानानुरूपं फलं प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥ ६ ॥

ते ह इमे प्राणा वागादयोऽहंश्रेयसेऽहं श्रेयानित्येतस्मै प्रयोजनाय विवदमाना विरुद्धं वदमाना ब्रह्म जग्मुर्ब्रह्म गतवन्तः ब्रह्मशब्दवाच्यं प्रजापतिं गत्वा च तद्ब्रह्म ऊचुरुक्तवन्तः । को नोऽस्माकं मध्ये वसिष्ठः । कोऽस्माकं मध्ये वसति च वासयति । तद्ब्रह्म तैः पृष्टं सत् होवाचोक्तवद्यस्मिन्वो युष्माकं मध्ये उत्क्रान्ते निर्गते शरीरादिदं शरीरं पूर्वस्मादतिशयेन पापीयः पापतरं मन्यते लोकः शरीरं हि नामानेकाशुचिसङ्घातत्वाज्जीवतोऽपि पापमेव ततोऽपि कष्टतरं यस्मिन्नुत्क्रान्ते भवति । वैराग्यार्थमिदमुच्यते । पापीय इति । स वो युष्माकं मध्ये वसिष्ठो भविष्यति । आग-

---

व्या० रेतोविशिष्टगुणमायतनस्य प्रकरणविरोधः स्यादित्याशङ्क्याह । रेतसेति ॥ विद्याफलमुपसंहरति । तद्विज्ञानेति ॥ ६ ॥

उक्ता वसिष्ठत्वादिगुणा न वागादिगामिनः किन्तु मुख्यप्राणगता एवेति दर्शयितुमाख्यायिकां करोति । ते हेत्यादिना ॥ इयसुग्प्रयोगस्य तात्पर्यमाह । शरीरं हीति ॥ किमिति शरीरस्य पापीयस्त्वमुच्यते तत्राह । वैराग्यार्थमिति ॥ शरीरे वैराग्योत्पादनद्वारा तस्मिन्नहंममाभिमानपरिहारार्थमित्यर्थः ।

उ० वाग्घोच्चक्राम सा संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा कला अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक् ॥ ८ ॥

चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा अन्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः ॥ ९ ॥

श्रोत्रꣳ होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच

---

भा० अपि वसिष्ठं प्रजापतिर्नोवाचाऽयं वसिष्ठ इति । इतरेषामप्रियपरिहाराय । त एवमुक्ता ब्रह्मणा प्राणा आत्मनो वीर्य्यपरीक्षणाय क्रमेणोच्चक्रमुः ॥ ७ ॥

तत्र वागेव प्रथमं ह अस्माच्छरीरादुच्चक्राम उत्क्रान्तवती । सा चोत्क्रम्य संवत्सरं प्रोष्य प्रोषिता भूत्वा पुनरागत्योवाच कथमशकत शक्तवन्तो यूयं मदृते मां विना

---

आ० वसिष्ठो भवतीत्युक्तवानिति सम्बन्धः । किमिति साक्षादेव मुख्यं प्राणं वसिष्ठत्वादिगुणं नोक्तवान्प्रजापतिः । स हि सर्व्वज्ञ इत्याशङ्क्याह । जानन्नपीति ॥ वाक् होच्चक्रामेत्यादेस्तात्पर्य्यमाह । एवमिति ॥ ७ ॥

उक्तेऽर्थे श्रुत्यक्षराणि व्याचष्टे । तत्रेत्यादिना ॥ कार्य्याकार्य्य-

उ॰ कथमशकत मदृते जीवितुमिति ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रं॥ १०॥ मनो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा मुग्धा अविद्वाꣳसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह मनः ॥ ११ ॥ रेतो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसैवमजीविष्मेति प्रविवेश ह रेतः ॥ १२ ॥

---

भा॰ जीवितुमिति । एवमुक्ता ऊचुर्यथा लोके कला मूका अवदन्तो वाचा प्राणन्तः प्राणेन व्यापारं कुर्वन्तः प्राणेन पश्यन्तो दर्शनव्यापारं चक्षुषा कुर्वन्तस्तथा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा कार्य्यादिविषयं प्रजायमाना रेतसा पुत्रानुत्पादयन्त एवमजीविष्म वयं । इत्येवं प्राणैर्दत्तोत्तरा वागात्मनोऽस्मिन्नवसिष्ठत्वं बुद्ध्वा प्रविवेश ह वाक् ।

---

आ॰ विषयमित्यादिशब्देनोपेक्षणीयः सङ्ग्रहः । चक्षुरादिभिर्दत्तोत्तरा

उ० अथ ह प्राण उत्क्रमिष्यन्यथा महासुहयः सैन्धवः पड्वीशशङ्कून्संवृहेदेवꣳ हैवेमान्प्राणा-

---

भा० तथा चक्षुर्होच्चक्रामेत्यादि पूर्ववत् ॥ श्रोत्रं मनः प्रजातिरिति ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

अथ ह प्राण उत्क्रमिष्यन्नुत्क्रमणं करिष्यन्यदा तदानीमेव स्वस्थानात्प्रचलिता वागादयः । किमिवेत्याह । यथा लोके महांश्चासौ सुहयश्च महासुहयः शोभनहयो लक्षणोपेतो महान्परिमाणतः सिन्धुदेशे भवः सैन्धवोऽभिजनतः पड्वीशशङ्कून्पादबन्धनशङ्कून् पड्वीशाश्च ते शङ्कवश्चेति तान्संवृहेदुद्यच्छेद्युगपदुत्खनेदश्वारोहे आरूढे परीक्षणाय । एवं ह एव इमान् वागादीन् प्राणान् संववर्हीद्यतवान् स्वस्थानाद्भ्रंशितवान् । ते वागादयो ह ऊचुर्हे भगवः भगवन् मोत्क्रमीः । यस्मान्न वै शक्ष्यामस्त्वदृते त्वां विना जीवितुं । यद्येवं मम श्रेष्ठता विज्ञाता भवद्भिरहमत्र श्रेष्ठस्तस्य उ मे मम बलिं करं कुरुत करं प्रयच्छतेति । अयञ्च प्राणसंवादः कल्पितो विदुषः श्रेष्ठ-

---

आ० पुनर्वाक्किमकरोदिति तत्राह । आत्मन इति ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

वागादिप्रकरणविच्छेदार्थोऽथशब्दः । उत्क्रमं करिष्यन्यदा भवतीति शेषः । उत्क्रमर्थं दृष्टान्तेन स्पष्टयन्नुत्तरवाक्यमवतारयति ॥ किमिवेत्यादिना ॥ प्राणस्य श्रेष्ठत्वं वागादिभिर्निर्द्धारितमित्याह । ते वागादय इति ॥ तर्हि तत्फलेन भवितव्यमित्याह ।

उ॰ न्त्संवत्सरं ते होतुर्मा भगव उत्क्रमीर्न वै शक्ष्या-
मस्त्वदृते जीवितुमिति तस्यो मे बलिं कुरुतेति
तथेति ॥ १३ ॥

सा ह वागुवाच यद्वा अहं वसिष्ठास्मि त्वं
तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठास्मि त्वं तत्प्र-

---

भा॰ परीक्षणप्रकारोपदेशः। अनेन हि विद्वान् को नु खल्वत्र श्रेष्ठ
इति परीक्षणं करोति। स एष परीक्षणप्रकारः संवाद-
भूतः कथ्यते। न ह्यन्यथा संहत्यकारिणां सतामेषामत्रैव
संवत्सरमात्रमेवैकैकस्य निर्गमनाद्युपपद्यते। तस्माद्वि-
द्वानेवानेन प्रकारेण विचारयति। वागादीनां प्रधान-
त्वभुक्तुरुपासनाय बलिं प्रार्थिताः सन्तः प्राणास्तथेति प्रति-
ज्ञातवन्तः ॥ १३ ॥

सा हि वाक् प्रथमं बलिदानाय प्रवृत्ता ह किल उवाच
उक्तवती। यद्वै अहं वसिष्ठास्मि यन्मम वसिष्ठत्वं तत्त्वैव

---

आ॰ यथेवमिति ॥ यथोक्तस्य प्राणसंवादस्य काल्पनिकत्वं दर्श-
यति ॥ अयथेति ॥ कल्पनाफलं सूचयति। विद्वुष इति ॥ तदेव
स्पष्टयति। अनेन हीति ॥ उपास्यपरीक्षणप्रकारो विवक्षित-
श्चेत्किं संवादेनेत्याशङ्क्याह। स एष इति ॥ संवादस्य मुख्या-
र्थत्वादकल्पितत्वमाशङ्क्याह। न ह्येति ॥ संवादस्य कल्पितत्वे
फलितमाह। तस्मादिति ॥ एवं प्राणसंवादस्य तात्पर्यमुक्त्वा
प्रकृतामक्षरव्याख्यामेवानुवर्तयति। बलिमिति ॥ १३ ॥

सा ह वागिति प्रतीकमादाय व्याचष्टे। प्रथममिति ॥ तेन
वसिष्ठत्वगुणेन त्वमेव वसिष्ठोऽसि। तथा च तद्वसिष्ठत्वं तवैवेति

उ॰तिष्ठोऽसीति चक्षुर्यद्वा अहꣳ सम्पदस्मि त्वं तत्सम्पदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनो यद्वा अहं प्रजातिरस्मि

---

भा॰तेन वसिष्ठगुणेन त्वं तद्वसिष्ठोऽसीति। यदहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसि। या मम प्रतिष्ठा सा त्वमसीति चक्षुः। समानमन्यत्। सम्पदायतनप्रजापतित्वगुणास्तं क्रमेण समर्पितवन्तः। यद्येवं साधु वसिं इत्तवन्तो ब्रूत तस्य मे एवं गुणविशिष्टस्य किमन्नं किं वास इति आहुरितरे। यदिदं लोके किञ्च किञ्चिदन्नं नामाप्याश्वभ्य आशमिभ्य आकीटपतङ्गेभ्यो यच्चान्नं श्वान्नं कीटपतङ्गान्नं च तेन सह सर्व्वमेव यत्किञ्चित्प्राणिभिरद्यमानमन्नं तत्सर्व्वं

---

आ॰ योजना। वसिदानमङ्गीकृत्यान्नवाससी पृच्छति। यद्येवमित्यादिना॥ एवंगुणविशिष्टस्य ज्येष्ठत्वश्रेष्ठत्ववसिष्ठत्वादिसम्बद्धस्येत्यर्थः॥ यदिदमित्यादि वाक्यं व्याचष्टे। यथेति॥ प्रकृतेन शुनामन्नेन कीटादीनां वाऽन्नेन सह यत्किञ्चिदन्नं दृश्यते तत्सर्व्वमेव तवान्नमिति योजना। तदेव स्फुटयति। यत्किञ्चिदिति॥ पदार्थमुक्त्वा वाक्यार्थं कथयति। सर्व्वमिति॥ अस्मिन्नेव वाक्ये पक्षान्तरमुत्थापयति। केचित्त्विति॥ न ह वा अस्येत्याद्यर्थवाददर्शनादित्यर्थः। तद्दूषयति। तदसदिति॥ शास्त्रान्तरेण क्रिमयो भवन्त्यभक्ष्यभक्षिण इत्यादिनेत्यर्थः॥ प्राणविदतिरिक्तविषयं शास्त्रान्तरं सर्व्वभक्ष्यत्वन्तु प्राणदर्शिनो विवक्षितं। अतो व्यवस्थितविषयत्वात् प्रतिषेधेन सर्व्वभक्ष्यत्वस्योदितानुदितहोमवद्विकल्पः स्यादिति शङ्कते। तेनेति॥ किन्तर्हि सर्व्वान्नभक्षणं विहितं न वा। न चेन्न तस्य निषिद्धस्यानुष्ठानं प्राणवेदि। तत्रापवादाभावाद्विहितं चेत्तत्किं यदिदमित्यादिना न हैवेत्यादिना

उ॰ त्वं तत्प्रजातिरसीति रेतस्तस्यो मे किमन्नं किं मे वास इति यदिदं किञ्चाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्य-

---

भा॰ तवान्नं सर्व्वं प्राणस्यान्नमिति दृष्टिरत्र विधीयते। केचित्तु सर्व्वभक्षणे दोषाभावं वदन्ति प्राणान्नविदः। तदसत्। शास्त्रान्तरेण प्रतिषिद्धत्वात्। तेनास्य विकल्प इति चेत्। न। अविधायकत्वात्। न ह वा अस्यानन्नं जग्धं न भवतीति सर्व्वं प्राणस्यान्नमित्येतस्य विज्ञानस्य विहितस्य स्तुत्यर्थमेतत्। तेनैकवाक्यतापत्तेः। न तु शास्त्रान्तरे विहितस्य बाधने सामर्थ्यमन्यपरत्वादस्य प्राणमात्रस्य सर्व्वमन्नमित्येतद्दर्शनमिह विधित्सितं। न तु सर्व्वं भक्षयेदिति॥

---

आ॰ या विहितं बाध इत्याह। नाविधायकत्वादिति॥ यदिदमित्यादिना हि सर्व्वं प्राणस्यान्नमिति ध्यानमेव विधीयते न तु प्राणविदः सर्व्वान्नभक्षणं तदवद्योतिपदाभावान्न विकल्पोपपत्तिरित्यर्थः॥ द्वितीयं दूषयति। न ह वा इति॥ अस्येति विद्वत्परामर्शान्निपाताः पारार्थवादत्वादवद्योतिनो दर्शनादेकवाक्यत्वसम्भवे वाक्यभेदस्यान्याय्यत्वाच्चेति हेतुमाह। तेनेति॥ अर्थवादस्यापि स्वार्थे प्रामाण्यं देवताधिकरणन्यायेन भविष्यतीत्याशङ्क्य न कलञ्जं भक्षयेदित्यादिविहितस्य भक्षणाभावस्य बाधने न ह वेत्यादेर्न सामर्थ्यं दृष्टिपरत्वादस्य मानान्तरविरोधे स्वार्थे मानत्वायोगादित्याह। नन्विति॥ न ह वेत्यादेरन्यपरत्वं प्रपञ्चयति। प्राणमात्रस्येति॥

भा॰ यत्तु सर्व्वभक्षणे दोषाभावज्ञानं तन्मिथ्यैव प्रमाणा-
भावाद्विदुषः प्राणत्वात्सर्व्वान्नोपपत्तेः सामर्थ्याददोष एवे-
ति चेत्। न। अशेषान्नत्वानुपपत्तेः। सत्यं। यद्यपि विद्वान्
प्राणो येन कार्य्यकरणसङ्घातेन विशिष्टस्य विदुषा तेन
कार्य्यकरणसङ्घातेन कृमिकीटदेवाद्यशेषान्नभक्षणं नोप-
पद्यते। तेन तत्राशेषान्नभक्षणदोषाभावज्ञापनमनर्थकं।
अप्राप्तत्वादशेषान्नभक्षणदोषस्य। ननु प्राणः सन्भक्षय-
त्येव कृमिकीटाद्यन्नमपि। बाढं। किन्तु न तद्विषयः
प्रतिषेधोऽस्ति तस्माद्दैवरक्तं किंशुकं। तत्र दोषाभावः।
अतस्तद्रूपेण दोषाभावज्ञानमनर्थकं। अप्राप्तत्वादशेषान्न-

---

आ॰ तत्र दोषाभावज्ञापनात्तदेव विधित्सितमित्याशङ्क्याह।
यत्त्विति॥ अर्थवादस्य मानान्तरविरोधे स्वार्थे मानत्वायोगस्यो-
क्तत्वादिति भावः। प्रमाणाभावस्यासिद्धिमाशङ्कते। विदुष
इति॥ सामर्थ्यात्प्राणस्वरूपबलादिति यावत्। अदोषः सर्वान्न-
भक्षणे तस्येति शेषः॥ अर्थापत्तिं दूषयति। नेत्यादिना॥ अनुप-
पत्तिमेव विशदयति। सत्यमिति॥ येनेत्यस्मात्प्राक्तथापीति वक्तव्यं॥
यद्यपीत्युपक्रमात्। प्राणस्वरूपसामर्थ्यादनुपपत्तिरपि शाम्य-
तीति शङ्कते॥ नन्विति॥ किं फलात्मना विदुषः सर्व्वान्नभक्षणं
साध्यते किंवा साधकत्वरूपेणेति विकल्प्याद्यमङ्गीकरोति।
बाढमिति॥ प्राणरूपेण सर्व्वभक्षणं तच्छब्दार्थः। तत्र प्रतिषेधा-
भावे सदृष्टान्तं फलितमाह। तस्मादिति॥ तथा स्वारसिकं
प्राणस्य सर्व्वभक्षणं तत्र वा प्रतिषेधाद्दोषराहित्यमिति शेषः।
तद्राहित्ये किं स्यादिति चेत्तदाह। अत इति॥ पक्षान्तरमेव
स्फोरयति। अप्राप्तत्वादिति॥ प्राणविदः साधकत्वाकारेण
साध्यते सर्व्वान्नभक्षणमिति पक्षं प्रत्याह। येन त्विति॥ इष्टेति
प्राणविदुच्यते। निमित्तान्तरादत्यन्ताप्राप्तिविषयो विधिः प्रति-

भा॰ भक्षणे दोषस्य । येन तु कार्य्यकरणसङ्घातसम्बन्धेन प्रतिषेधः क्रियते तत्सम्बन्धेन स्थित नैव प्रतिप्रसवोऽस्ति । तस्मात्प्रतिषेधातिक्रमाद्दोष एव स्यादन्यविषयत्वाच्च ह वेत्यादेः । न च ब्राह्मणादिशरीरस्य सर्व्वान्नत्वदर्शनमिह विधीयते किन्तु प्राणमात्रस्यैव । यथा च सामान्येन सर्व्वान्नस्य प्राणस्य किञ्चिदन्नजातस्य किञ्चिज्जीवनहेतुः । यथा विषं विषजस्य क्रिमेस्तदेवान्यस्य प्राणान्तमपि सद्दृष्टमेव दोषमुत्पादयति मरणादिलक्षणं । तथा सर्व्वान्नस्यापि प्राणस्य प्रतिषिद्धान्नभक्षणे ब्राह्मणत्वादिदेहसम्बन्धाद्दोष एव स्यात् । तस्मान्मिथ्याज्ञानमेवाभक्ष्यभक्षणे दोषाभावज्ञानं ॥

---

आ॰ प्रसवो यथा ज्वरितस्याशनप्रतिषेधेऽप्यौषधं पिबेदिति तथा प्राणाधिकारिणः सर्व्वाभक्ष्यभक्षणनिषेधेऽपि प्राणविदो विशेषविधिर्नोपलभ्यते । तथा च तस्य भक्षणं दुःसाध्यमित्यर्थः ॥ प्रतिप्रसवाभावे फलं दर्शयति । तस्मादिति ॥ अर्थवादस्य तर्हि का गतिरित्याशङ्क्याह । अन्यविषयत्वादिति ॥ तस्य स्तुतिमात्रार्थत्वान्न तद्वत् शास्त्रप्रतिषेधातिक्रम इत्यर्थः । ननु विशिष्टस्य प्राणस्य सर्व्वान्नत्वदर्शनमत्र विधीयते तथा च विदुषोऽपि तदात्मनः सर्व्वान्नभक्षणे न दोषो यथादर्शनं फलाभ्युपगमादत आह । न चेति ॥ इतोऽपि सर्व्वं प्राणस्यान्नमित्येतदवष्टम्भेन प्राणविदः सर्व्वभक्षणं न विधेयमित्याह । यथा चेति ॥ प्राणस्य यथोक्तस्य स्वीकारेऽपि कस्य चित् किञ्चिदन्नं जीवनहेतुरित्यत्र दृष्टान्तमाह । यथेति ॥ तथा सर्व्वप्राणिषु व्यवस्थयान्नसम्बन्धे दार्ष्टान्तिकमाह । तथेति ॥ प्राणविदोऽपि कार्य्यकरणवतो निषेधातिक्रमाद्दोषे फलितमाह । तस्मादिति ॥

उ० स्तनेऽन्नमापो वास इति न ह वा अस्यानन्नं जग्धं भवति नानन्नं परिगृहीतं य एवमेत-

---

भा० आपो वास इत्यापो भक्ष्यमाणा वासःस्थानीयास्तवाच्च प्राणस्यापो वास इत्येतद्दर्शनं विधीयते। न तु वासःकार्य्ये आपो विनियोक्तुं शक्याः। तस्माद्यथा प्राप्तेऽभक्षणे दर्शनमात्रं कर्त्तव्यं। न ह वै अस्य सर्व्वं प्राणस्यान्नमित्येवंविदोऽनन्नमनदनीयं जग्धं भुक्तं भवति ह। यद्यप्यनेनानदनीयं भुक्तमदनीयं भुक्तमदनीयमेव भुक्तं स्यान्न तु तत्कृतदोषेण लिप्यत इत्येतद्विद्यास्तुतिरित्यवोचाम। तथा नानन्नं प्रतिगृहीतं यद्यप्यप्रतिग्राह्यं हस्त्यादिप्रतिगृहीतं स्यात्तदप्यन्नमेव प्रतिग्राह्यं प्रतिगृहीतं स्यात्तदप्यन्नमेव स्यात्तथाप्यप्रतिग्राह्यप्रतिग्रहदोषेण न लिप्यत इति स्तुत्यर्थमेव। य एवमेतदन्नस्य प्राणस्यान्नं वेद।

---

आ० वाक्यान्तरमादाय व्याकरोति। आप इति॥ स्मार्त्तादाचमनादन्यदेव श्रौतमाचमनमन्यतोऽप्राप्तं विधेयं तदर्थमिदं वाक्यमिति केचित्॥ तान् प्रत्याह। अत्र चेति वासः कार्य्यं परिधानं॥ तत्र साक्षादपां विनियोगायोगे प्राप्तमर्थमाह। तस्मादिति॥ यदिदं किञ्चेत्यादावुक्तं दृष्टिविधेरर्थवादमादाय व्याचष्टे। नेत्यादिना॥ पुनर्न अनुकर्षणमन्वयार्थमुक्त्वा वाक्यार्थमाह। यद्यपीति॥ अभक्ष्यभक्षणं तर्हि स्वीकृतमिति चेन्नेत्याह। इत्येतदिति॥ यथा प्राणविदो नान्नं भुक्तं भवति तथेत्येतदन्नमतस्तर्हि प्राणविदो दुष्प्रतिग्रहोऽपीत्याशङ्क्याह। तथापीति॥ असत्प्रतिग्रहे प्राप्तेऽपीत्यर्थः। किमित्ययं स्तुत्यार्थवादस्योपसंहारार्थः। उक्तमेवार्थं चोद्यसमाधिभ्यां समर्थयते। नन्वित्यादिना॥ यथा प्राप्तं

उ॰ दन्नस्यान्नं वेद तद्विद्वांसः श्रोत्रिया अशि-
ष्यन्त आचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं

---

भा॰ फलन्तु प्राणात्मभाव एव न त्वेतत्फलाभिप्रायेण किं तर्हि स्तुत्यभिप्रायेणेति। नन्वेतदेव फलं कस्मान्न भवति। न प्राणात्मदर्शिनः प्राणात्मभाव एव फलं। तत्र च प्राणात्मभूतस्य सर्व्वात्मनोऽनदनीयमप्यदनमेव। तथाऽप्रतिग्राह्यमपि प्रतिग्राह्यमेवेति। यथा प्राप्तमेवोपादाय विद्या स्तूयते। तेनैव फलविधिस्वरूपतावाक्यस्य। यस्मादापो वासः प्राणस्य तस्माद्विद्वांसो ब्राह्मणाः श्रोत्रिया अधीतवेदा अशिष्यन्तो भोक्ष्यमाणा आचामन्त्यपः अशित्वा चाचामन्ति भुक्त्वोत्तरकालमपो भक्षयन्ति। तत्र तेषामाचामतां कोऽभिप्राय इत्याह। एतमेवानं प्राणमनग्नं कुर्व्वन्तो मन्यन्ते। अस्ति चैतयो यस्मै वासो ददाति स तमनग्नं करोमीति

---

आ॰ प्रकृतिवाक्यस्याप्रतिपन्नरूपमनतिक्रम्येति यावत्। वाक्यस्य विधानस्तुतित्वे चलितमाह। अत इति। यदुक्तमापो वास इति तस्य शेषभूतमुत्तरग्रन्थमुत्थाप्य व्याचष्टे। यस्मादिति। तत्रेत्यमृमात् प्रागूर्द्ध्वकालोक्तिः। उक्तेऽभिप्राये लोकप्रसिद्धिमनुकूलयति। अस्ति चेति। तत्रैव वाक्योपक्रमस्यानुकूल्यं दर्शयति। प्राणस्येति। किमर्थमिदं सोपक्रमं वाक्यमित्यपेक्षायामत्र चेत्यादायुक्तं स्मारयति। यदन्न इति। दृष्टिविधानमसङ्गमानः शङ्कते नन्विति। अत्र प्रायार्थमाचमनं प्राणपरिधानार्थत्वेनाप्रज्ञाह। तर्त्वेति। कुत्याप्रयमनन्यायेन द्विकरत्वाविरोधमाशङ्क्याह। न चेति। तत्र प्रकरणात्कार्यभेदस्याविरोधेऽपि प्रकृते प्रमाणाभावाद्विकरत्वानुपपत्तिरित्यभिप्रेत्योक्तमुपपादयति। यदिति।

कुर्वन्तो मन्यन्ते ॥ १४ ॥ अष्टमस्य प्रथमं ब्राह्मणं ॥ १ ॥

भा० द्वि मन्यते । प्राणस्य चापोवास इति युक्तं । यदपः पिबामि तत्प्राणस्य वासो दधामीति विज्ञानं कर्त्तव्य-मित्येवमर्थमेतत् । ननु भक्ष्यमाणो भुक्तवांश्च प्रयतो भवि-ष्यामीत्याचामति तत्र प्राणस्यानग्नताकरणार्थत्वे च द्विः कार्य्यताऽऽचमनस्य स्यात् । न च कार्य्यद्वयमाचमनस्यैकस्य युक्तं । यदि प्रायत्यार्थं नानग्नतार्थमथानग्नतार्थं न प्रायत्यार्थं यस्मादेवं तस्माद्द्वितीयाचमनान्तरं प्राणस्यानग्नताकर-णाय भवतु । न क्रियाद्विलोपपत्तेर्द्वे ह्येते क्रिये भोक्ष्य-माणस्य भुक्तवस्य यदाचमनं स्मृतिविहितं तत्प्रायत्यार्थं भवति क्रियामात्रमेव न तु तत्र प्रायत्ये दर्शनाद्यपेक्षते । तत्र चाचमनाङ्गभूतास्वप्सु वासोविज्ञानं प्राणस्येति कर्त्तव्य-तया चोद्यते । न तु तस्मिन् क्रियमाण आचमनस्य प्राय-

आ० ननु स्मार्त्ताचमनस्य प्रायत्यार्थं तथैवानग्नतार्थत्वं प्रकृतवाक्या-दधिगतं तथाच कथं द्विकार्य्यत्वमप्रामाणिकमित्याशङ्क्य वाक्यस्य विषयान्तरं दर्शयति । यस्मादिति ॥ द्विकार्य्यत्वदोषमुक्तं दूषयति । नेत्यादिना ॥ तदाचमनं दर्शनादिनिरपेक्षमित्याह । क्रियामात्रमेवेति ॥ तन्वाचमने फलभूतं प्रायत्यं दर्शनाद्यपेक्ष्य-मिति चेन्नेत्याह । नन्विति ॥ क्रियाया एव तदाधानसामर्थ्या-दित्यर्थः । तर्हेतदाचमने शुद्ध्यर्थे क्रियान्तरे सतीत्यर्थः ॥ प्राण-विज्ञानप्रकरणे वासोविज्ञानं चोद्यते चेत्ततोऽभेदः स्यादित्या-शङ्क्याह । प्राणस्येति ॥ सर्व्वान्नविज्ञानवदिति चकारार्थः । आच-मनीयास्वप्सु वासोविज्ञानं क्रियते चेत्तदाचमनस्य प्रायत्या-

भा० त्यार्थता बाध्यते क्रियान्तरत्वादाचमनस्य । तस्माद्भोक्ष्यमाणस्य भुक्तवतस्य यदाचमनं तचापो वासः प्राणस्येति दर्शनमात्रं विधीयते । अप्राप्तत्वादन्यतः ॥ १४ ॥ अष्टमस्य प्रथमं ब्राह्मणं ॥ १ ॥

श्वेतकेतुर्ह वा आरुणेय इत्यस्य सम्बन्धः । खिलाधिकारोऽयं तत्र यदनुक्तं तदुच्यते । सप्तमाध्यायान्ते ज्ञानकर्मसमुच्चयकारिणाग्नेर्मार्गयाचनं कृतं । अग्ने नय सुपथेति । तत्रानेकेषां पथां सद्भावो मन्त्रेण सामर्थ्यात्प्रदर्शितः सुपथेति विशेषणात्पन्थानश्च कृतविपाकप्रतिपत्तिमार्गाः । वक्ष्यति च यत्कृत्येत्यादि । ते च कति कर्म्मविपाकप्रतिपत्तिमार्गा इति सर्व्वसंसारगत्युपसंहारार्थोऽयमारम्भः । एतावती हि संसारगतिरेतावान्कर्म्मविपाकः

---

आ० र्थत्वमित्याशङ्क्याह । न त्विति ॥ विकल्पत्वदोषाभावे फलितं दर्शनविधिमुपसंहरति । तस्मादिति ॥ अप्राप्तत्वादासोदृष्टेर्विधिव्यतिरेकेण प्राप्त्यभावादुक्तेन प्रकृतत्वात्कार्य्याख्यानादपूर्व्वमिति च न्यायादित्यर्थः ॥ १४ ॥ अष्टमाध्यायस्य प्रथमं ब्राह्मणं ॥ १ ॥

ब्राह्मणान्तरमादाय तस्य पूर्व्वेण सम्बन्धं प्रतिजानीते । श्वेतकेतुरिति ॥ कोऽसौ सम्बन्धस्तमाह । खिलेति ॥ तत्र कर्म्मकाण्डे ज्ञानकाण्डे वा यद्वस्तु प्राधान्येन नोक्तं तदस्मिन्काण्डे वक्तव्यमस्य खिलाधिकारत्वात्तथाच पूर्व्वमनुक्तं वस्तुमिदं ब्राह्मणमित्यर्थः । वक्तव्यशेषं दर्शयितुं वृत्तं कीर्त्तयति । सप्तमेति ॥ समुच्चयकारिणो मुमूर्षोरग्निप्रार्थनेऽपि किं स्यादित्याशङ्क्याह । तत्रेति ॥ अध्यायावसानं सप्तम्यर्थः ॥ सामर्थ्यमेव दर्शयति । सुपथेतीति ॥ विशेषणवशाद्बहवो मार्गा भान्तु किं पुनस्तेषां स्वरूपं तदाह । पन्थानश्चेति ॥ तत्र वाक्यशेषमनुकूलयति । वक्ष्यति चेति ॥ सम्भवत्याकाङ्क्षाद्वारा समनन्तरब्राह्मणतात्पर्य्यमाह । तत्रेति ॥

भा॰ स्वाभाविकस्य शास्त्रीयस्य च विज्ञानस्येति । यद्यपि द्वया ह प्राजापत्या इत्यत्र स्वाभाविकः पाप्मा सूचितः । न च तस्येदं कार्य्यमिति विपाकः प्रदर्शितः । शास्त्रीयस्यैव तु विपाकः प्रदर्शितस्त्र्यन्नात्मप्रतिपत्त्यन्तेन ब्रह्मविद्याप्रारम्भे तद्वैराग्यस्य विवक्षितत्वात् । तत्रापि केवलेन कर्म्मणा पितृलोको विद्यया विद्यासंयुक्तेन च कर्म्मणा देवलोक इत्युक्तं । तत्र केन मार्गेण पितृलोकं प्रतिपद्यते केन वा देवलोक इति नोक्तं । तच्चेह खिल प्रकरणेऽशेषतो वक्तव्यमित्यत आरभ्यते । अन्ते च सर्व्वोपसंहारः शास्त्रस्य

---

आ॰ उपसंक्रियमाणां संसारगतिमेव परिच्छिनत्ति । एतावती होति ॥ दक्षिणोदगधोगत्यात्मकेति यावत् । कर्म्मविपाकस्तर्हि कुत्रोपसंक्रियते तत्राह । तावानिति ॥ इतिशब्दो यथोक्तसंसारगत्यतिरिक्तकर्म्मविपाकाभावात्तदुपसंहारार्थं एवायमारम्भ इत्युपसंहारार्थः । यथोद्गीथाधिकारे सर्व्वोऽपि कर्म्मविपाकोऽनर्थं एवेत्युक्तत्वात्परिशिष्टसंसारगत्यभावात्कथं खिलकाण्डे तन्निर्देशसिद्धिरत आह । यद्यपीति ॥ कस्तर्हि विपाकस्तत्रोक्तस्तत्राह । शास्त्रीयस्येति ॥ तत्र सुकृतविपाकस्यैवोपन्यासे हेतुमाह । ब्रह्मविद्येति ॥ अनिष्टविपाकात्तु वैराग्यं सुकृताभिमुख्यादेव सिद्धमिति न तत्र तद्विवक्षा । इह पुनः शास्त्रसमाप्तौ खिलाधिकारे तद्विपाकोऽप्युपसंक्रियत इति भावः ॥ प्रकान्तरेण सङ्गतिं वक्तुमुक्तं स्मारयति । तत्रापीति ॥ शास्त्रीयविपाकविषयेऽपीत्यर्थः । उत्तरग्रन्थस्य विषयपरिशेषार्थं पातनिकामाह । तत्रेति ॥ लोकद्वयं सप्तम्यर्थः ॥ प्रागनुक्तमपि देवयानं पन्थानं कथमिति कुतो नियमसिद्धिस्तत्राह । तच्चेति ॥ वक्तव्यशेषस्य सत्त्वे फलितमाह । इत्यत इति ॥ तर्हि प्रागनुक्तं तद्देवयानादि वक्तव्यं प्रागेवोक्तं तु ब्रह्मलोकादि कस्मादुच्यते तत्राह । ते चेति ॥ शास्त्रस्यान्ते चेति सम्बन्धः । इतश्चेदं ब्राह्मणमगतार्थत्वादारभ्य-

उ० श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषद-

---

भा० दृष्टः । अपि चैतावदमृतत्वमित्युक्तं न कर्मणोऽमृतत्वाऽऽशास्तीति च तत्र हेतुर्नोक्तस्तदर्थश्चायमारम्भः । यस्मादियं कर्मणो गतिर्न नित्येऽमृतत्वे व्यापारोऽस्ति तस्मादेतावदेवामृतत्वसाधनमिति सामर्थ्याद्धेतुत्वं सम्पद्यते । अपि चोक्तमग्निहोत्रे न त्वेवैतयोस्त्वमुत्क्रान्तिं न गतिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकं प्रत्युत्थायिनं वेत्थेति । तत्र प्रतिप्रवचने ते वा एते आहुती हुते उत्क्रामत इत्यादिना आहुतेः कार्य्यमुक्तं ॥

तच्चैतत्कर्त्तुराहुतिलक्षणस्य कर्मणः फलं । न हि कर्त्तारमनाश्रित्याहुतिलक्षणस्य कर्मणः स्वातन्त्र्येणोत्क्रान्त्यादिकार्य्यारम्भ उपपद्यते । कर्त्रर्थत्वात्कर्मणः कार्य्यारम्भस्य साधनाश्रयत्वाच्च कर्मणस्तच्चाग्निहोत्रस्तुत्यर्थत्वादग्निहोत्र-

---

आ० मित्याह । अपि चेति । एतावदित्यात्मज्ञानोक्तिरमृतत्वं तत्साधनमिति यावत् । तत्राहेतुकमित्यनुषङ्गः । ज्ञानमेवामृतत्वे हेतुरित्युक्तोऽर्थस्तमेवेति सम्बन्धः । तदर्थो हेत्वपदेशार्थः । कथं पुनर्वक्ष्यमाणा कर्मगतिर्ज्ञानमेवामृतत्वसाधनमित्यत्र हेतुत्वं प्रतिपद्यते तत्राह । यस्मादिति । व्यापारोऽस्ति कर्मण इति शेषः । सामर्थ्याज्ज्ञानातिरिक्तस्योपायस्य संसारहेतुत्वनियमादित्यर्थः ॥ प्रकारान्तरेण ब्राह्मणवाक्यं तत्तुल्यमग्निहोत्रविषये जनकयाज्ञवल्क्यसंवादसिद्धमर्थमनुवदन्ति । अपि चेत्यादिना ॥

तयोरग्निहोत्राहुत्योः सायं प्रातश्चानुष्ठितयोरिति यावत् । लोकं प्रत्युत्थायिनं यजमानं परितेक्षेमं लोकं प्रत्यागच्छतोस्तयोरनुष्ठानोपचितयोः परलोकं प्रति स्वात्मनोत्थानहेतुं परिवा-

उ॰ माजगाम स आजगाम जैवलिं प्रवाहणं परि-चारयमाणं तमुदीक्ष्याऽभ्युवाद कुमार३ इति स

---

भा॰ स्यैव कार्य्यमित्युक्तं। षट्प्रकारमपीह तु तदेव कर्त्तुः फल-मित्युपदिश्यते। षट्प्रकारमपि कर्म्मफलविज्ञानस्य विव-क्षितत्वात्तद्द्वारेण च पञ्चाग्निदर्शनमिहोत्तरमार्गप्रतिपत्ति-साधनं विधित्सितं। एवमशेषसंसारगत्युपसंहारः। कर्म्मका-ण्डस्यैषा निष्ठेत्येतच्च हि दर्शयिषुराख्यायिकां प्रणयति श्वेतकेतुर्ह वा नामतोऽरुणस्यापत्यमारुणिस्तस्यापत्यमा-रुणेयः। ह शब्द ऐतिह्यार्थः। पित्रानुशिष्टः सन् आत्मनो यशःप्रथनाय पञ्चालानां परिषदमाजगाम। पञ्चालाः

---

आ॰ मित्येतदिति प्रश्नषट्कमग्निहोत्रविषये जनकेन याज्ञवल्क्यं प्रत्युक्तमिति सम्बन्धः। तत्रेत्याक्षेपगतप्रश्नषट्कोक्तिः। ननु फलव-तोऽश्वयात्मस्येदमाऽऽहुतिफलं। न हि तत्स्वतन्त्रं सम्भवति तत्राह। तत्रेति॥ कर्त्तृवाचिपदाभावादाहुत्यपूर्व्वस्यैवोत्क्रान्त्यादिकार्य्या-रम्भकत्वाच्च तत्र कर्त्तृगामिफलमुक्तमित्याशङ्क्याह। न हीति॥ किञ्च कारकाश्रयत्वात्कर्म्मणो युक्तं तत्फलस्य कर्त्तृगामित्वमि-त्याह। साधनेति॥ स्वातन्त्र्यासम्भवादाहुत्योः सकर्त्तृकयोरेव गत्यादि विवक्षितं चेत्तर्हि कथं तत्र केवलाहुत्योर्गत्यादि गम्यते तत्राह। तत्रेति॥ अग्निहोत्रप्रकरणं सप्तम्यर्थः। अग्निहोत्र-स्तुत्यर्थत्वात् प्रश्नप्रतिवचनरूपस्य सन्दर्भस्येति शेषः॥ भवत्येव मग्निहोत्रप्रकरणाख्यातिः प्रकृते तु किमायातं तत्राह। इह त्विति॥ किमिति विद्याप्रकरणे कर्म्मफलविज्ञानं विवक्ष्यते तत्राह। तद्द्वारेणेति॥ शास्त्रारम्भमुपपादितमुपसंहरति। एवमिति॥ संसारगत्युपसंहारेण कर्म्मविपाकस्य सर्व्वस्यैवोपसंहारः सिद्धो भवति। तदतिरिक्तस्य तद्विपाकाभावादित्याह। कर्म्मकाण्डस्येति॥ यथोक्तं वस्तु दर्शयितुं शास्त्रमारभते चेत्तत्र किमित्याख्यायिका

उ॰ भो३ इति प्रतिशुश्रावानुशिष्टोऽन्वसि पित्रेत्योमिति होवाच ॥ १ ॥

---

भा॰ प्रसिद्धास्तेषां परिषदमागत्य जित्वा राज्ञोऽपि परिषदं जेष्यामीति गर्व्वेणाजगाम। जीवलस्यापत्यं जैवलिं पञ्चालराजं प्रवाहणनामानं स्वभृत्यैः परिचारयमाणमात्मनः परिचरणं कारयन्तमित्येतत् राजा पूर्व्वमेव तस्य विद्याभिमानगर्वं श्रुत्वा विनेतव्योऽयमिति मत्वा तमुद्दिश्योवाचागतमात्रमेव अभ्युवाद अभ्युक्तवान्। कुमारा३ इति सम्बोध्य भर्त्सनार्था च प्लुतिः। स प्रतिशुश्राव भो३ इति भो३ इत्येवमुक्तः। प्रतिरूपमपि क्षत्रियं प्रत्युक्तवान् क्रुद्धः सन्ननुशिष्टोऽनुशासितोऽसि भवसि पित्रा इत्युवाच राजा। प्रत्याहेतर ॐमिति बाढमनुशिष्टोऽस्मि पृच्छ यदि संशयस्ते ॥१ ॥

---

आ॰ प्रक्रीयते तत्राह । इत्येतद्दूर्यमिति ॥ सर्व्वमेव पूर्व्वोक्तं वस्तु दर्शयितुमिच्छन्वेदः सुखावबोधार्थमाख्यायिकां करोतीत्यर्थः । यदा कदाचिदतिक्रान्ते काले वृत्तार्थद्योतित्वं निपातस्य दर्शयति । प्रसिद्ध इति ॥ यशःप्रथनं विद्वत्सु स्वकीयविद्यासामर्थ्यख्यापनं प्रसिद्धविद्वज्जनविजिगीषुत्वेनेति शेषः । कथञ्चिज्जयस्य प्रायत्वात् गर्व्वे हेतुः किमिति राजा श्वेतकेतुमागतमात्रं तदीयाभिप्रायमप्रतिपद्य तिरस्कुर्व्वन्निव सम्बोधितवानित्याशङ्क्याह । स राजेति ॥ सम्बोध्य भर्त्सनं कृतवानिति शेषः । तदवद्योति पदमिह नास्तीत्याशङ्क्याह । भर्त्सनार्थेति ॥ भो इति प्रतिवचनमाचार्य्यं प्रत्युचितं न क्षत्रियं प्रति तस्य हीनत्वादित्याह । भो इतीति ॥ अप्रतिरूपवचने क्रोधं हेतूकरोति । क्रुद्धः सन्निति ॥ पितुः सकाशादेव सम्यगनुशासनत्वे लिङ्गं नास्तीत्याशङ्क्याह । पृच्छेति ॥ १ ॥

उ॰ वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता३ इति नेति होवाच वेत्थो यथेमं लोकं पुनरापद्यन्ता३ इति नेति हैवोवाच वेत्थो यथेमं लोकं पुनः सम्पद्यन्ता३ इति नेति हैवोवाच वेत्थो यथासौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न

---

भा॰ यद्येवं वेत्थ विजानासि किं यथा येन प्रकारेण इमाः प्रजाः प्रसिद्धाः प्रयत्यो म्रियमाणा विप्रतिपद्यन्ता ३ इति विप्रतिपद्यन्ते विचारणार्था प्लुतिः । समानेन मार्गेण गच्छन्तीनां मार्गद्वैविध्यं यत्र भवति तत्र काश्चित्प्रजास्तान्येन मार्गेण गच्छन्ति काश्चिदन्यनेति विप्रतिपत्तिः। यथा ताः प्रजाः विप्रतिपद्यन्ते तत्किं वेत्थेत्यर्थः । नेति होवाचेतरः । तर्हि वेत्थ उ यथा इमं लोकं पुनः पुनरापद्यन्ता ३ इति पुनरापद्यन्ते यथा पुनरागच्छन्तीमं लोकं। नेति होवाच श्वेतकेतुः । वेत्थो यथासौ लोक एवं प्रसिद्धेन न्यायेन पुनः पुनरसकृत् प्रयद्भिर्म्रियमाणैर्यथा येन प्रकारेण न सम्पूर्यता ३ इति न सम्पूर्यतोऽसौ लोकस्तत्किं वेत्थ । नेति होवाच। वेत्थो

---

आ॰ पदार्थमुक्ता वाक्यार्थमाह । समानेनेति ॥ नाडीरूपेण साधारणेन मार्गेणाभ्युदयं गच्छतां यत्र मार्गविप्रतिपत्तिस्तत्किं जानासीति प्रश्नार्थः ॥ विप्रतिपत्तिमेव विशदयति । तत्रेति॥ अधिकृतप्रजानिर्द्धारणार्था सप्तमी ॥ प्रथमं प्रश्नं निगमयति । यथेति ॥ प्रश्नान्तरमादत्ते । तर्हीति ॥ तदेव स्फुटयति । यथेति ॥ परलोकगताः प्रजाः पुनरिमं लोकं यथागच्छन्ति तथा किं वेत्थेति

उ॰ सम्पूर्य्यन्ता३ इति नेति हैवोवाच वेत्थो यतिथ्यामाहुत्याᳬ हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ इति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृ-

---

भा॰ यतिथ्यां यत्सङ्ख्याकायामाहुत्यामाहुतौ हुतायामापः पुरुषवाचः पुरुषस्य या वाक् सैव यासां वाक् ताः पुरुषवाचो भूत्वा पुरुषशब्दवाच्या वा भूत्वा पुरुषाकारपरिणतास्तदा पुरुषवाचो भवन्ति। समुत्थाय सम्यगुत्थायोद्भूताः सत्यो वदन्ती इति नेति होवाच। यद्येवं वेत्थ उ देवयानस्य पथो मार्गस्य प्रतिपदं प्रतिपद्यते येन सा प्रतिपत् तां प्रतिपदं पितृयाणस्य वा प्रतिपदं प्रतिपच्छब्दवाच्यमर्थमाह। यत्कर्म कृत्वा यथा विशिष्टं कर्म कृत्वेत्यर्थः। देवयानं वा पन्थानं मार्गं प्रतिपद्यन्ते पितृयाणं न वा यत्कर्म कृत्वा प्रतिपद्यन्ते तत्कर्म प्रतिपदुच्यते तां प्रतिपदं किं वेत्थ देवलोकपितृलोकप्रतिपत्तिसाधनं किं वेत्थेत्यर्थः। अत्राप्यस्यार्थस्य प्रकाशकमृषेर्मन्त्रस्य वचो

---

आ॰ योजना॥ प्रश्नान्तरप्रतीकमुपादत्ते। वेत्थेति॥ तद्व्याकरोति। एवमिति॥ प्रसिद्धो न्यायो जरादिमरणहेतुः॥ प्रश्नान्तरमुत्थाप्य व्याचष्टे। वेत्थेत्यादिना॥ पुरुषशब्दवाच्या भूत्वा समुत्थाय वदन्तीति सम्बन्धः॥ कथमपां पुरुषशब्दवाच्यत्वं तदाह। यदेति॥ प्रश्नान्तरमवतारयति। यद्येवं वेत्थेति॥ पितृयाणस्य वा प्रतिपदं वेत्थेति सम्बन्धः। यत्कृत्वा प्रतिपद्यन्ते पन्थानं तत्कर्म प्रति-

उ॰ याणं वा पि हि न ऋषेर्वचः श्रुतं द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरञ्चेति नाहमत एकं च न वेदेति होवाच ॥ २ ॥

---

भा॰ वाक्यं नः श्रुतमस्ति । मन्त्रोऽप्यस्यार्थस्य प्रकाशको विद्यत इत्यर्थः । कोऽसौ मन्त्र इत्युच्यते । द्वे सृती द्वौ मार्गावशृणवं श्रुतवानस्मि । तयोरेका पितॄणां प्रापिका पितृलोकसम्बद्धा तया सृत्या पितृलोकं प्राप्नोतीत्यर्थः । अहमशृणवमिति व्यवहितेन सम्बन्धः । देवानामुतापि देवानां सम्बन्धिन्यन्या देवान्प्रापयति सा । के पुनरभाभ्यां सृतिभ्यां पितॄन् देवान् गच्छन्तीत्युच्यते । उतापि मर्त्यानां मनुष्याणां सम्बन्धिनी । मनुष्या एव सृतिभ्यां गच्छन्तीत्यर्थः । ताभ्यां सृतिभ्यामिदं विश्वं समस्तमेजद्गच्छन् समेति सम्यग्गच्छति । ते च द्वे सृती यदन्तरा ययोरन्तरा यदन्तरा पितरं मातरञ्च मातापित्रोरन्तरा मध्य इत्यर्थः । कौ तौ मातापितरौ द्यावापृथिव्यावण्डकपाले । इयं वै माता असौ पितेति हि व्याख्यातं ब्राह्मणेन अण्डकपालयोर्मध्ये संसारविषये एवैते सृती नात्यन्तिका-

---

आ॰ यदिति योजना । वाक्यार्थमाह । देवयानमिति ॥ उक्तमर्थं सङ्क्षिप्याह । देवलोकेति ॥ मार्गद्वयमेव नास्ति । तया तुल्येत्यामानेन एष्यते । तत्राह । अपीति ॥ अन्येति कर्म्मविपाकप्रक्रियोक्तिः ॥ अस्यार्थस्य मार्गद्वयस्यैतत् ॥ तेषामेव मार्गद्वयेऽधिकृतत्वमिति

उ॰ अथैनं वसत्योपमन्त्रयाञ्चक्रेऽनादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तꣳ होवाचेति वाव किल नो भवान् पुरानुशिष्टानवोचदिति कथꣳ सुमेध इति पञ्च मा प्रश्नान् राज-

---

भा॰ मृतत्वगमनाय। इतरश्च आह नाहमतोऽस्मात्प्रश्नसमुदायादेकञ्चन एकमपि प्रश्नं न वेद नाहं वेदेति होवाच श्वेतकेतुः ॥ २ ॥

अथानन्तरमपनीय विद्याभिमानगर्वमेनं प्रकृतं श्वेतकेतुं वसत्या वसतिप्रयोजनेनोपमन्त्रयाञ्चक्रे। इह वसन्तु भवन्तः पाद्यमर्घ्यमानीयतामित्युपमन्त्रणं कृतवान् राजा अनादृत्य तां वसतिं कुमारः श्वेतकेतुः प्रदुद्राव प्रतिगतवान् पितरं प्रति। स चाजगाम पितरमागत्य चोवाच तं कथमिति वाव किल एवं किल नोऽस्मान् भवान् पुरा समावर्त्तनकालेऽनुशिष्टान् सर्वाभिर्विद्याभिरेवावोचदिति। सोपालम्भं पुत्रस्य वचः श्रुत्वाऽऽह पिता। कथं केन प्रकारेण तव दुःखमुपजातं। हे सुमेधः शोभना मेधा यस्येति सुमेधाः शृणु मम यथा वृत्तं पञ्च पञ्चसङ्ख्याकान्

---

आ॰ वक्तुं चेत्युक्तं तदेव स्फुटयति। ताभ्यामिति ॥ विश्वं साध्यसाधनात्मकं सङ्गच्छते। मन्तव्यत्वेन गन्तृत्वेन चेति शेषः। प्रकृतमन्त्रव्याख्यानग्रन्थो भाष्यग्रन्थार्थः ॥ पदान्तरेत्यादौ विवक्षितमर्थमाह। नाहकपाजयोरिति ॥ २ ॥

श्वेतकेतोरभिमाननिवृत्तिद्योतनार्थं भङ्गवचनं ॥ राजन्यदत्तवसतिं अनादरे हेतुमाह। कुमार इति ॥ एवं किलेति राज-

उ॰ न्यबन्धुरप्राक्षीत्ततो नैकञ्चन वेदेति कतमे त
इतीम इति ह प्रतीकान्युदाजहार ॥ ३ ॥
स होवाच तथा नस्त्वं तात जानीथाः यथा
यदहं किञ्चन वेद सर्व्वमहं तत्तुभ्यमवोचं प्रेहितु
तत्र प्रतीत्य ब्रह्मचर्य्यं वत्स्याव इति भवानेव
गच्छत्विति स आजगाम गौतमो यत्र प्रवाहणस्य

---

भा॰ प्रश्नान् मां राजन्यबन्धुः । राजन्या बन्धवोऽस्येति परि-
भववचनमेतत् । राजन्यबन्धुरिति अप्राक्षीत् पृष्टवांस्तत-
स्तस्मान्न एकञ्चन एकमपि न वेद विज्ञातवानस्मि ।
कतमे ते राज्ञा पृष्टाः प्रश्ना इति । इमे त इति हि
प्रतीकानि मुखानि प्रश्नानामुदाजहारोदाहृतवान् ॥ ३ ॥
स होवाच पिता पुत्रं क्रुद्धमुपशमयंस्तथा तेन प्रकारेण
नोऽस्मान्स्त्वाह तात वत्स जानीथा गृह्णीया यथा यदहं
किञ्च विज्ञानजातं वेद सर्व्वं तुभ्यमवोचमित्येव जा-
नीथाः । कोऽन्यो मम प्रियतरोऽस्ति त्वत्तो यदर्थं रक्षिष्ये ।
अहमप्येतन्न जानामि यद्राज्ञा पृष्टं तस्मात्प्रेह्यागच्छ ।
तत्र गत्वा राज्ञि ब्रह्मचर्य्यं वत्स्यावो विद्यार्थमिति स आह ।
भवानेव गच्छत्विति । नाहं तस्य मुखं निरीक्षितुमुत्सहे ।

---

आ॰ पराभवलिङ्गकं पितृवचसो मुखात्वं द्योतते स्वाज्ञानाधीनं दुःखं
तवासम्भावितमिति सूचयति । सुमेध इति ॥ ३ ॥
सत्यं किञ्चित्तदुक्तं किञ्चिद्विज्ञानमन्यस्मै प्रियतमाय दातुं रक्षि-
तमित्याशङ्क्याह । कोऽन्य इति ॥ राज्ञा यत्पृष्टं तन्मया न

उ० जैवलेरास तस्मा आसनमाहृत्योदकमाहारयाञ्चकाराथ हास्मा अर्घ्यं चकार तꣳ होवाच वरं भवते गौतमाय दद्म इति ॥ ४ ॥ स होवाच प्रतिज्ञातो म एष वरो यान्तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥ ५ ॥ स होवाच दैवेषु वै गौतमो तद्वरेषु मानुषाणां ब्रूहीति ॥ ६ ॥

---

भा० स आजगाम गौतमो गच्छतो गौतम आरुणिर्यत्र प्रवाहणस्य जैवलेरास आसनमास्थायिकां । तस्मै गौतमायागतायासनमनुरूपमाहृत्योदकं भृत्यैराहारयाञ्चकार । अथ ह अस्मा अस्मै अर्घ्यं पुरोधसा कृतवान् मन्त्रवन्मधुपर्कञ्च कृत्वा चैवं पूजां तं होवाच वरं भगवते गौतमाय तुभ्यं दद्म इति गोऽश्वादिलक्षणं ॥ ४ ॥ स होवाच गौतमः प्रतिज्ञातो मे ममैष वरस्त्वयाऽस्यां प्रतिज्ञायां दृढीकुर्व्वात्मानं । यान्तु वाचं कुमारस्य मम पुत्रस्यान्ते समीपे वाचमभाषथाः प्रश्नरूपां तामेव ब्रूहि स एव नो वर इति ॥ ५ ॥ स होवाच राजा दैवेषु वरेषु तद्वै गौतम यत्त्वं प्रार्थयसे । मानुषाणामन्यतमं प्रार्थय वरं ॥ ६ ॥

---

आ० विज्ञातं तथा च तस्मिन्विषये त्वया वञ्चितोऽस्मीत्याशङ्क्याह । अहमपीति ॥ तर्हि तत्त्वज्ञानं कथं साध्यतामित्याशङ्क्याह । तस्मादिति ॥ विवक्षितविद्याया गौतमं विवक्षित्वाह । अस्यामिति ॥ तदिति सामान्योक्त्या वरो निर्दिश्यते ॥ ४ ॥ ५ ॥ ६ ॥

उ॰ स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गो अश्वानां दासीनां प्रवाराणां परिधानस्य मा नो भवान् बहोरनन्तस्यापर्य्यन्तस्याभ्यवदान्यो ऽभूदिति स वै गोतम तीर्थेनेच्छासा इत्युपैम्यहं

---

भा॰ स होवाच गौतमो भवतापि विज्ञायते ममाऽप्यस्ति सः। न तेन प्रार्थितेन कृत्यं मम यत् त्वं दित्ससि मानुषं वरं। यस्मान्ममाप्यस्ति हिरण्यस्य प्रभूतस्यापात्तं प्राप्तं गोऽश्वानामपात्तमस्तीति सर्व्वत्रानुषङ्गो दासीनां प्रवाराणां परिवाराणां परिधानस्य। न च यन्मम विद्यमानं त्वत्तः प्रार्थनीयं त्वया वा देयं। प्रतिज्ञातस्तु वरस्त्वया त्वमेव जानीषे यदत्र युक्तं प्रतिज्ञा रक्षणीया न वेति। मम पुनरयमभिप्रायो माभूद्भवानस्मानभि अस्मानेव केवलान् प्रति भवान् सर्व्वत्र वदान्यो भूत्वा अवदान्यो माभूत्कदर्य्यो माभूदित्यर्थः। बहोः प्रभूतस्यानन्तफलस्येत्येतत्। अपर्य्यन्तस्यापरिसमाप्तिकस्य पुत्रपौत्रादिगामिकस्येत्येतत्। ईदृशस्य वित्तस्य मां प्रत्येव केवलमदाता माभूद्भवान्। न चान्यत्रादेयमस्ति भवत एव-

---

आ॰ ममास्ति स इति यदुक्तं तदुपपादयति। यस्मादित्यादिना॥ न च यन्ममेत्यत्र तस्मादिति पठितव्यं। किन्तर्हि मया कर्त्तव्यमित्याशङ्क्याह। प्रतिज्ञातस्त्विति॥ यत्तवाभिप्रेतं तदहं करोमीत्याशङ्क्याह। ममेति। माभूदित्यन्वयं दर्शयन्प्रतीकमादाय व्याचष्टे। भोऽस्मानिति॥ वदान्यो दानशीलो विभवे सत्यदाता कदर्य्य इति भेदः॥ परिशिष्टं भागं व्याकुर्व्वन्वाक्यार्थमाह। बहोरित्यादिना॥ मां प्रत्येवेति नियमस्य कृत्यं दर्शयति। त्वं वै इति॥ कोऽसौ

उ॰ भवन्तमिति वाचा ह स्म वै पूर्व उपयन्ति स
होपायनकीर्त्या उवास ॥ ७ ॥

स होवाच तथा नस्त्वं गौतम मापराधास्तव
च पितामहा यथेयं विद्येतः पूर्वन्न कस्मिंश्चन

---

भा॰ मुक्त आह । स त्वं वै हे गौतम तीर्थेन न्यायेन शास्त्रविहितेन
विद्यां मत्त इच्छासि इच्छस्याप्तुमित्युक्तो गौतम आह । तीर्थे
उपैम्युपगच्छामि शिष्यत्वेनाहं भवन्तमिति । वाचा ह स्म एव
किल पूर्वे ब्राह्मणाः क्षत्रियान् विद्यार्थिनः सन्तो
वैश्यान्वा क्षत्रिया वा वैश्यानापद्युपयन्ति शिष्यवृत्त्या ह्युप-
गच्छन्ति नोपायनशुश्रूषाभिः । अतः स गौतमः ह उपा-
यनकीर्त्त्या उपगमनकीर्त्तनमात्रेणैवोवासोषितवान्नोपाय-
यनं चकार ॥ ७ ॥

एवं गौतमेनापद्यन्तर उक्ते स होवाच राजा पीडितं मत्वा
क्षामयंस्तथा नोऽस्मान् प्रति मापराधा अपराधं माका-
र्षीरस्मदीयोऽपराधो न ग्रहीतव्य इत्यर्थः । तत्र च पिता-
महा अस्मत्पितामहेषु यथाऽपराधं न जगृहुस्तथा पिता

---

आ॰ न्यायस्तमाह । शास्त्रेति ॥ उपसदनवाक्यं शास्त्रमित्युच्यते । गौतमो
राजानं प्रति शिष्यत्ववृत्तिं कुर्वाणः शास्त्रार्थविरोधमाचरती-
त्याशङ्क्याह । वाचा हेति ॥ आपदि समादधिकाद्वा विद्याप्राप्ति-
सम्भवावस्थायामित्यर्थः । उपायनमुपगमनं पादोपसर्पणमिति
यावत् ॥ ७ ॥

विद्याराहित्यापेक्षया न हीनशिष्यभावोपगतिरापद्यन्तरा ।
तथाशब्दार्थमेव विशदयति । तव चेति ॥ तस्तु पितामहा

उ॰ ब्राह्मण उवाच तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥ ८ ॥

असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव

---

भा॰ महात्मां हन्तं अस्मास्वपि भवता रक्षणीयमित्यर्थः। यथा इयं विद्या त्वया प्रार्थिता इतस्त्वत्प्रदानात्पूर्वं प्राक् कस्मिं-श्चिदपि ब्राह्मणे उवासोषितवती तथा त्वमपि जानीषे सर्व्वदा क्षत्रियपरम्परयेयं विद्या गता सा स्थितिर्मयापि रक्षणीया यदि शक्यत इत्युक्तं देवेषु गौतम तद्वरेषु मानुषाणां ब्रूहीति न पुनस्त्वयादेयो वर इतीतः परं न शक्यते रक्षितुं। तामपि विद्यामहं तुभ्यं वक्ष्यामि। को ह्यन्यो हि यस्मादेवं ब्रुवन्तं त्वामर्हति प्रत्याख्यातुं न वक्ष्यामीति। अहं पुनः कथं न वक्ष्ये तुभ्यमिति ॥ ८ ॥

असौ वै लोकोऽग्निर्गौतमेत्यादि चतुर्थः प्रश्नः प्राथम्येन निर्णीयते। क्रमभङ्गस्त्वेतन्निर्णयाय कृतादितर-

---

आ॰ यथा तथा किमस्मात्विमित्याशङ्क्याह। पितामहानामिति॥ किमिति तर्हीयं विद्या झटिति मह्यं नोपदिश्यते तत्राह। न कस्मिन्निति॥ तर्हि भवता सा स्थितीरक्ष्यतामहन्तु यथागतं गमिष्यामीत्याशङ्क्याह। इतः परमिति॥ तवाहं शिष्योऽस्मीत्येवं ब्रुवन्तं अन्योऽपि न वक्ष्यामीति यस्मान्न प्रत्याख्यातुमर्हति तस्मादहं पुनस्तुभ्यं कथं न वक्ष्ये किन्तु वक्ष्याम्येव विद्यामित्युपपादयति। को हीत्यादिना॥ ८॥

असावित्यादिना यतिथ्यामित्यादिचतुर्थप्रश्नस्य प्राथम्येन निर्णये क्रमभङ्गः स्यात्तत्र च कारणं वाच्यमित्याशङ्क्याह। क्रमभङ्गस्त्विति॥ मनुष्यजन्मस्थितिनिबन्धनां चतुर्थप्रश्ननिर्णयाधीनतया तस्य प्राधा-

उ° समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तर-
दिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः

---

भा° प्रश्ननिर्णयस्थानौ द्यौर्लोकोऽग्निर्हे गौतम द्युलोके
ऽग्निदृष्टिरनग्नौ विधीयते । यथा योषित्पुरुषयोस्तस्य
द्युलोकाग्नेरादित्य एव समित्समिन्धनात् । आदित्येन
हि समिध्यतेऽसौ लोकः । रश्मयो धूमः समिध
उत्थानसामान्यात् । आदित्याद्धि रश्मयो निर्गताः ।
समिधश्च धूमो लोक उत्तिष्ठति । अहरर्चिः प्रकाशस्य
सामान्यात् । दिशोऽङ्गारा उपशमसामान्यात् । अवान्तर-
दिशो विस्फुलिङ्गा विस्फुलिङ्गवद्विक्षेपात् । तस्मिन्नेवंगुणवि-
शिष्टे द्युलोकाग्नौ देवा इन्द्रादयः श्रद्धां जुह्वत्याहुतिद्रव्य-
स्थानीयां प्रक्षिपन्ति । तस्या आहुतेराहुतेः सोमो
राजा पितॄणां ब्राह्मणानां च संभवति । तत्र के देवाः
कथं जुह्वति किं वा श्रद्धाख्यं हविरित्यत उक्तम-

---

आ° न्यात् । प्राधान्ये सत्यर्थक्रमस्याभिन्नाविवक्षितस्य पाठक्रमस्य
भङ्ग इत्यर्थः ॥ इन्द्रादीनां कर्मानधिकारित्वात् द्युलोकस्य चाहव-
नीयत्वाप्रसिद्धा होमाधारत्वायोगाद्द्रवत्वस्य च श्रद्धाया होम्य-
त्वानुपपत्तेरसावित्यादि वाक्यमयुक्तमिति शङ्कते । तस्येति ॥ होम-
कर्म्म सप्तम्यर्थः । अस्य प्रश्नस्य सम्बन्धग्रन्थे समाधानमस्य वाक्य-
स्याकाङ्क्षाभिव्यक्तमित्याह । अत इति ॥ तदेव दर्शयितुमग्निहोत्र-
प्रकरणे वृत्तं स्मारयति । नन्विति ॥ किन्तदुक्तमिति पृष्टस्तदाह ।
ते वा इति ॥ आहुत्योः स्वतन्त्रयोरुत्क्रान्त्यादि कथमित्याशङ्क्याह ।
तयोरिति ॥ यजमानस्य प्रतिकार्यः सप्तम्यर्थः । समाधानवाक्ये
तयोरुत्क्रान्तिगमनं स्वतन्त्रयोरेवेत्येतदुपपादयति । तयोरित्यादिना ॥

उ॰ श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा सम्भ-
वति ॥ ९ ॥

---

भा॰ याभिः सम्बन्धेन त्वेवैतयोस्त्वमुत्क्रान्तिमित्यादिपदार्थषट्-
कनिर्णयार्थमग्निहोत्रे उक्तं। ते एव एते अग्निहोत्राहुती
हुते सती उत्क्रामतः। तेऽन्तरिक्षमाविशतः। तेऽन्तरिक्षमाह-
वनीयं कुर्व्वाते वायुं समिधं मरीचीरेव शुक्लामाहुतिं।
तेऽन्तरिक्षं तर्पयतः। ते तत उत्क्रामतः। ते दिवमाविशतः।
ते दिवमाहवनीयं कुर्व्वाते। आदित्यं समिधमित्येवमाद्युक्तं।
तत्राग्निहोत्राहुती ससाधने एवोत्क्रामतः। यथेह यैः
साधनैर्विशिष्टे एते आहवनीयाग्निसमिद्धूमाङ्गारविस्फु-
लिङ्गाहुतिद्रव्यैस्ते तथैवोत्क्रामतोऽस्माल्लोकादमुं लोकं।
तत्राग्निरग्नित्वेन समित्समित्त्वेन धूमो धूमत्वेनाङ्गारा
ऽङ्गारत्वेन विस्फुलिङ्गा विस्फुलिङ्गत्वेन आहुतिद्रव्यमपि
पयआद्याहुतिद्रव्यत्वेनैव सर्गादावव्याकृतावस्थायामपि

---

आ॰ इहेति जीवदवस्थोच्यते॥ नष्टानामग्न्यादीनामव्याकृतभावापन्न-
त्वेनाविशेषप्रसङ्गान्न तैः सहाहुत्योरुत्क्रान्त्यादिसिद्धिरित्या-
शङ्क्याह। तत्राग्निरिति॥ नाशादूर्द्ध्वमपि प्रातिस्विकशक्तिरूपे-
णाग्न्यादिरवतिष्ठते तथा चाविशेषप्रसङ्गाभावादाहुत्योः स
साधनयोरेवोत्क्रान्त्यादिसिद्धिरित्यर्थः॥ यथोक्तयोराहुत्योरुत्क्रा-
न्त्यादि समर्थ्यते नाग्निहोत्राद्यपूर्व्वस्य जगदारम्भकत्वमुक्तं भवती-
त्याह। तद्विद्यमानमिति॥ विद्यमानत्वमेव विशदयति। अपू-
र्व्वेणेति॥ यथा यथोदितया विद्यया कथमपि पूर्व्वकल्पीयं कर्म्म
प्रलयदशायामव्याकृतात्मना स्थितं पुनर्जगदारम्भकं तथा तथापी-
दानीन्तनमग्निहोत्रादिकं कर्म्म कथं जगदारम्भकं भविष्यती-

भा॰ परेण सूक्ष्मेणात्मना व्यवतिष्ठते तद्दिद्यमानमेव सत्साधन-मग्निहोत्रलक्षणं कर्मापूर्व्वेणात्मना व्यवस्थितं सत्त-त्पुनर्व्याकरणकाले तथैवान्तरिक्षादीनामाहवनीयाद्यग्न्या-दिभावं कुर्व्वद्विपरिणमते तथैवेदानीमप्यग्निहोत्राख्यं कर्म॥

एवमग्निहोत्राहुत्यपूर्व्वविपरिणामात्मकं जगत्सर्व्व-मित्याहुत्योरेव सुत्यर्थेनोत्क्रान्त्यादयो लोकप्रत्युत्था-यिता: षट् पदार्थाः कर्म्मप्रकरणेऽधस्तान्निर्णीताः। इह तु कर्म्मुः कर्म्मविपाकविवक्षायां द्युलोकाग्न्याद्यारभ्य पञ्चाग्नि-दर्शनमुत्तरमार्गप्रतिपत्तिसाधनं विशिष्टकर्म्मफलोपभोगाय विधित्सितमिति। द्युलोकाग्न्यादिदर्शनं प्रस्तूयते। तत्र च आध्यात्मिकाः प्राणाः इहाग्निहोत्रस्य होतारस्त एवा-धिदैविकत्वेन परिणताः सन्तः इन्द्रादयो भवन्ति त एव तत्र होतारो द्युलोकाग्नौ। ते एवेहाग्निहोत्रस्य फल-

---

आ॰ त्वाग्रन्थाह। तथैवेति॥ विमतमारम्भकं तच्छक्तिमत्त्वात्सम्प्रति-पन्नवदिति विधित्सितमिति भावः। अग्निहोत्रप्रकरणस्यार्थं सङ्गृहीतमुपसंहरति। एवमिति॥

उक्तमुपजीव्य प्रकृतब्राह्मणप्रवृत्तिप्रकारं दर्शयति। इह त्विति॥ उत्तरमार्गप्रतिपत्तिसाधनं विधित्सितमिति सम्बन्धः। किमित्युत्तरमार्गे प्रतिपत्तिस्तत्राह। विशिष्टेति॥ ब्राह्मणप्रवृ-त्तिमभिधायासौ वै लोकोऽग्निरित्यादिवाक्यप्रवृत्तिप्रकारमाह। इति द्युलोकेति। इत्थं ब्राह्मणे स्थिते सतीत्येतत्। भवत्वेवं तथापि के देवा इति प्रश्नस्य किमुत्तरं तत्राह। तत्रेति॥ उक्त-नीत्या पञ्चाग्निदर्शने प्रस्तुते सतीत्येतत्। इहेति व्यवहारभूमि-ग्रहः॥ कथं तेषां तत्र होतृत्वं तदाह। ते चेति॥ तथापि कथं द्युलोकेऽग्नौ तेषां होतृत्वं तदाह। ते एवेति॥ तत्फलभोक्तृत्वादि-

भा॰ भोगायाग्निहोत्रं हुतवन्तस्त एव फलपरिणामकालेऽपि तत्फलभोक्तृत्वात्तत्र तत्र होतृत्वं प्रतिपद्यन्ते तथा तथा विपरिणममाना देवशब्दवाच्याः सन्तोऽत्र च यत्पयो-द्रव्यमग्निहोत्रकर्माश्रयभूतमिहाहवनीये प्रक्षिप्तमग्निना भक्षितमदृष्टेन सूक्ष्मेण रूपेण विपरिणतं सह कर्त्रा यजमानेनेमं लोकं धूमादिक्रमेणान्तरिक्षमन्तरिक्षाद्द्यु-लोकमाविशन्ति ताः सूक्ष्मा आप आहुतिकार्यभूता अग्निहोत्रसमवायिन्यः कर्तृसहिताः श्रद्धाशब्दवाच्याः सोमलोके कर्तुः शरीरान्तरारम्भाय द्युलोकं प्रविशन्तो हूयन्त इत्युच्यन्तेऽतस्तत्र द्युलोकं प्रविश्य सोममण्डले कर्तुः शरीरमारभन्ते। तदेतदुच्यते। देवाः श्रद्धां जुह्वति। तस्या आहुत्यै सोमो राजा सम्भवतीति श्रद्धा वा आप इति श्रुतेः। वेत्थ यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो

---

आ॰ तत्र तच्छब्दोऽग्निहोत्रादिकर्मविषयस्तद्धोतृत्वे च प्राणानां जीवोपाधित्वादवधेयं। तथा तथा द्युपर्जन्यादिसम्बन्धयोग्याकारे-णेति यावत्। के देवा इति प्रश्नो निर्णीतः॥ सम्प्रत्यवशिष्टं प्रश्नद्वयं निर्णेतुमाह। अत्र चेति॥ जीवदवस्थायामिति यावत्। सह कर्त्रेत्यत्र तच्छब्द इष्टव्यः॥ अमुं लोकमाविशतीति सम्बन्धः॥ आवेशप्रकारमाह। धूमादीति॥ कथमेतावता किं पुनः श्रद्धाख्यं हविरिति प्रश्नो निर्णीतस्तत्राह। ताः सूक्ष्मा इति॥ तथापि कथं जुह्वतीति प्रश्नस्य कथं निर्णयस्तत्राह। सोमलोक इति॥ तथापि तस्या आहुतेः सोमो राजा सम्भवतीति कथ-मुच्यते तत्राह। तास्तत्रेति॥ निर्णीतेऽर्थे श्रुतिमवतारयति। तदेतदिति॥ कथं पुनरापः श्रद्धाशब्दवाच्या न हि लोके श्रद्धा-शब्दं तासु प्रयुञ्जते तत्राह। श्रद्धेति॥ उपक्रमवशादध्यापोऽत्र

भा॰ भूत्वा समुत्थाय वदन्तीति प्रश्नः । तस्य निर्णयविषयेऽसौ वै लोकोऽग्निरिति प्रस्तुतं । तस्मादापः कर्म्मसमवायिन्यः कर्त्तुः शरीरारम्भिकाः श्रद्धाशब्दवाच्या इति निश्चीयते । भूयस्त्वादापः पुरुषवाच इति व्यपदेशो न त्वितराणि भूतानि न सन्तीति । कर्म्मप्रयुक्तश्च शरीरारम्भः । कर्म्म चाप्-समवायि । ततश्चापां प्राधान्यं शरीरकर्तृत्वे । तेन चापः पुरुषवाच इति व्यपदेशः । कर्म्मकृतो हि जन्मारम्भः सर्व्वत्र । तत्र यद्यप्यग्निहोत्राहुतिस्तुतिद्वारेणोत्क्रान्त्यादयः प्रस्तुताः षट् पदार्था अग्निहोत्रे तथापि वैदिकानि सर्व्वाण्येव कर्म्माण्यग्निहोत्रप्रभृतीनि लक्ष्यन्ते । दाराग्निसम्बन्धं हि पाङ्क्तं कर्म्म प्रस्तुत्योक्तं । कर्म्मणा पितृलोक इति वक्ष्यति च । अथ ये यज्ञेन दानेन तपसा लोकान् जयन्तीति ॥ ९ ॥

---

आ॰ श्रद्धाशब्दवाच्या इत्याह । वेत्थेति ॥ अपामेव पुरुषशब्दवाच्यानां शरीरारम्भकत्वान्न भूतान्तराणामिति कृत्वा तस्य पञ्चभूतारब्धत्वाभ्युपगमभङ्गः स्यादिति चेत्तत्राह । भूयस्त्वादिति ॥ अपां पुरुषशब्दवाच्यत्वे हेत्वन्तरमाह । कर्म्मेति ॥ अथ कर्म्मप्रयुक्तमपि प्रकृतं जन्मास्ति तत्कथमपां सर्व्वत्र पुरुषशब्दवाच्यत्वं तत्राह । कर्म्मकृतो हीति ॥ अन्यथा तत्र तत्र सुखदुःखप्रभेदोपभोगासम्भवादिति भावः । यदि कर्म्मापूर्व्वशब्दवाच्यं भूतसूक्ष्मं सर्व्वत्र शरीरारम्भकं कथं तर्हि पूर्व्वमग्निहोत्राहुत्योरेव वक्तव्ये जगदारम्भकत्वमुक्तं तत्राह । तत्रेति ॥ यद्यप्यग्निहोत्राहुत्योरिति शेषः । अस्यां व्याख्यायां पूर्व्वोत्तरवाक्ययोः सङ्गतत्वमाह । दाराग्नीति ॥ ९ ॥

उ॰ पर्जन्यो वाऽग्निर्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुत्यै वृष्टिः सम्भवति ॥ १० ॥

---

भा॰ पर्जन्यो वाऽग्निर्गौतम। द्वितीय आहुत्याधारः। आहुत्योरावृत्तिक्रमेण पर्जन्यो नाम वृष्ट्युपकरणाभिमानिनी देवतात्मा। तस्य संवत्सर एव समित्। संवत्सरेण हि शरदादिभिर्ग्रीष्मान्तैः स्वावयवैर्विपरिवर्त्तमानेन पर्जन्योऽग्निर्दीप्यते। अभ्राणि धूमः। धूमप्रभवत्वाद्धूमवदुपलक्ष्यत्वाद्वा। विद्युदर्चिः। प्रकाशसामान्यात्। अशनिरङ्गाराः। उपशान्तत्वकाठिन्यसामान्याभ्यां। ह्रादुनयो ह्रादुनयः स्तनयित्नुशब्दा विस्फुलिङ्गाः। विक्षेपत्वानेकत्वसामान्यात्। तस्मिन्नेतस्मिन्नित्याहुत्यधिकरणनिर्देशः। देवा इति त एव होतारः सोमं राजानं जुह्वति। योऽसौ द्युलोकाग्नौ श्रद्धायां हुतायामभिनिर्वृत्तः सोमः स द्वितीये पर्जन्याग्नौ हूयते। तस्याश्च सोमाहुतेर्वृष्टिः सम्भवति ॥ १० ॥

---

आ॰ आद्यमाहुत्याधारमेवं निरूप्याहुत्याधारान्तराणि क्रमेण निरूपयति। पर्जन्यो वा अग्निरित्यादिना। कुतोऽस्य द्वितीयत्वमिति प्रवृत्तिक्रममाहुत्योरित्येषैव सप्तम्यां धूमप्रभवत्वे मानम्। धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघ इति ॥ १० ॥

उ॰ अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समि-
दग्निर्धूमो रात्रिरर्चिश्चन्द्रमाऽङ्गारा नक्षत्राणि
विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जु-
ह्वति तस्या आहुत्या अन्नꣳ सम्भवति ॥ ११ ॥

---

भा॰ अयं वै लोकोऽग्निर्गौतम । अयं लोक इति प्राणिज-
न्मोपभोगाश्रयः क्रियाकारकफलविशिष्टः स तृतीयोऽग्निः ।
तस्याग्नेः पृथिव्येव समित् । पृथिव्या ह्ययं लोकोऽनेकप्राण्यु-
पभोगसम्पन्नया समिध्यते । अग्निर्धूमः । पृथिव्याश्रयोत्थान-
सामान्यात् । पार्थिवं धनद्रव्यमाश्रित्याग्निरुत्तिष्ठति । यथा
समिदाश्रयेण धूमः । रात्रिरर्चिः । समित्सम्बन्धप्रभवसामा-
न्यात् । अग्नेः समित्सम्बन्धेन ह्यर्चिः सम्भवति । तथा पृथिवी
समित्सम्बन्धेन शर्व्वरी । पृथिवीच्छायां हि शार्व्वरं तम आ-
चक्षते । चन्द्रमा अङ्गाराः । तत्प्रभवत्वसामान्यात् । अर्चिषो
ह्यङ्गाराः प्रभवन्ति । तथा रात्रौ चन्द्रमा अङ्गारा उपशान्त-
त्वसामान्याद्वा । नक्षत्राणि विस्फुलिङ्गाः । विस्फुलिङ्गवद्विक्षे-
पसामान्यात् । तस्मिन्नेतस्मिन्नित्यादि पूर्व्ववत् वृष्टिं जुह्वति ।

---

आ॰ एतल्लोकपृथिव्योर्देहदेहिभावेन भेद इत्याह । पृथिवीच्छायां
हीति । एतानि हि पञ्च रात्रेस्तमसो मृत्योर्बिम्बतमन्तरायमिति
श्रुतेः । रात्रेस्तमस्त्वावगमात् । तस्य च मृत्युर्वै तमश्छाया मृत्युमेव
तत्तमश्छायान्तरतीति भूच्छायात्वं । तमो राहुस्थानं । तच्च भूच्छा-
येति हि प्रसिद्धं । उद्धृत्य पृथिवीच्छायां निर्म्मितं मण्डलाकृति-

उ॰ पुरुषो वाऽग्निर्गौतम तस्य व्यात्तमेव समित्प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः सम्भवति ॥ १२ ॥

---

भा॰ तस्या आहुतेरन्नं सम्भवति । वृष्टिप्रभवत्वस्य प्रसिद्धत्वाद्व्रीहियवादेरन्नस्य ॥ ११ ॥

पुरुषो वाऽग्निर्गौतम प्रसिद्धः । शिरःपाण्यादिमान् पुरुषस्तुर्थोऽग्निस्तस्य व्यात्तं विवृतं मुखं समित् । विवृतेन हि मुखेन दीप्यते पुरुषो वचनस्वाध्यायादौ । यथा समिधाग्निः प्राणो धूमस्तदुत्थानसामान्यात् । मुखाद्धि प्राण उत्तिष्ठति । वाक्शब्दोऽर्चिर्व्यञ्जकत्वसामान्यात् । अर्चिश्च व्यञ्जकं । वाक्शब्दोऽभिधेयव्यञ्जकः । चक्षुरङ्गारा उपशमसामान्यात्प्रकाशाश्रयत्वाद्वा । श्रोत्रं विस्फुलिङ्गा विक्षेपसामान्यात्तस्मिन्नन्नं जुह्वति । ननु नैव देवा अन्नमिह जुह्वतो दृश्यन्ते । नैष दोषः । प्राणानां देवत्वोपपत्तेरधिदैवमिन्द्रादयो देवास्त एवाध्यात्मं प्राणास्ते च अन्नस्य पुरुषे प्रक्षेप्तारः । तस्या आहुते रेतः सम्भवति अन्नपरिणामो हि रेतः ॥ १२ ॥

---

आ॰ शर्भानेषु कवल्यानं तृतीयं यत्सोमययमिति श्रुतेरित्यर्थः । सोमचन्द्रमसोराश्रयाश्रयिभावेन भेदः ॥ ११ ॥

योग्यानुपलब्धिविरोधमाशङ्कते । नन्विति ॥ इहेति पुरुषाभिनिर्देशः ॥ शङ्कितं विरोधं निराकरोति । नैष दोष इति ॥ उपपत्तिमेव दर्शयति । अधिदैवमिति ॥ १२ ॥

उ० योषा वा अग्निर्गौतम तस्या उपस्थ एव समिल्लोमानि धूमो योनिरर्चिर्यदन्तःकरोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पुरुषः सम्भवति स जीवति यावज्जीवत्यथ यदा म्रियते ॥ १३ ॥

---

भा० योषा वा अग्निर्गौतम । योषेति स्त्रीपञ्चमो होमाधिकरणोऽग्निस्तस्या उपस्थ एव समित् । तेन हि सा समिध्यते । लोमानि धूमस्तदुत्थानसामान्यात् । योनिरर्चिर्वर्णसामान्यात् । यदन्तः करोति तेऽङ्गारा अन्तःकरणं मैथुनव्यापारास्तेऽङ्गारा वीर्योपशमहेतुत्वसामान्यात् । वीर्याद्युपशमकारणं मैथुनं । तथाऽङ्गारभावोऽग्नेरुपशमकारणं । अभिनन्दाः सुखलवाः क्षुद्रत्वसामान्याद्विस्फुलिङ्गास्तस्मिन्रेतो जुह्वति । तस्या आहुतेः पुरुषः सम्भवति । एवं द्युपर्जन्यायंलोकपुरुषयोषाग्निषु क्रमेण हूयमानाः सोमवृष्ट्यन्नरेतोभावेन स्थूलतारतम्यक्रममापद्यमानाः श्रद्धाशब्दवाच्या आपः पुरुषशब्दमारभन्ते । यः प्रश्नश्चतुर्थो वेत्थ यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्तीति स एष निर्णीतः । पञ्चम्यामाहुतौ योषाग्नौ हुतायां रेतो भूत्वा आपः पुरुषवाचो भवन्तीति ॥ स

---

आ० तस्या आहुत्यै पुरुषः सम्भवतीति वाक्यं व्याकरोति । एवमिति ॥ पञ्चाग्निदर्शनस्य चतुर्थप्रश्ननिर्णायकत्वेन प्रकृतोपयोगं दर्शयति । यः प्रश्न इति ॥ निर्णयप्रकारमनुवदति । पञ्चम्यामिति ॥

उ॰ अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णः सम्भवति ॥ १४ ॥

---

भा॰ पुरुष एवं क्रमेण जातो जीवति। कियन्तं कालमित्युच्यते। यावज्जीवति यावदस्मिञ्छरीरे स्थितिनिमित्तं कर्म विद्यते तावदित्यर्थः। अथ तत्क्षये यदा यस्मिन्काले म्रियते॥ १३॥

अथ तदा एनं मृतमग्नयेऽग्न्यर्थमेवान्त्याहुत्यै हरन्ति ऋत्विजस्तस्याहुतिभूतस्य प्रसिद्धोऽग्निरेव होमाधिकरणं न परिकल्प्योऽग्निः। प्रसिद्धैव समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गा यथाप्रसिद्धमेव सर्वमित्यर्थः। तस्मिन्पुरुषमन्त्याहुतिं जुह्वति तस्या आहुत्यै आहुतेः पुरुषो भास्वरवर्णोऽतिशयदीप्तिमान्निषेकादिभिरन्त्याहुत्यन्तैः कर्मभिः संस्कृतत्वात्सम्भवति निष्पद्यते॥ १४॥

---

आ॰ यथोक्तरीत्या जाते देहे कथं पुरुषस्य जीवनकालो नियम्यते तत्राह। स पुरुष इति॥ १३॥

पञ्चाग्निक्रमेण जातोऽग्निचयस्याहं तेनाग्न्यात्मेति ध्यानसिद्धये षष्ठमग्निमन्त्याहुत्यधिकरणं प्रस्तौति। अथेति। जीवननिमित्तकर्मविषयस्तच्छब्दो वक्ष्यमाणकीटादिदेहव्यावृत्तये भास्वरवर्णविशेषणं दीप्त्यतिशयवत्त्वे हेतुमाह। निषेकादिभिरिति॥ १४॥

उ॰ ते य एवमेतद्विदुः

---

भा॰ इदानीं प्रथमप्रश्ननिराकरणार्थमाह ते । के । ये एवं यथोक्तं पञ्चाग्निदर्शनमेतद्विदुः । एवंशब्दादग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गश्रद्धादिविशिष्टाः पञ्चाग्नयो निर्दिष्टास्तानेवमेतान् पञ्चाग्नीन् विदुरित्यर्थः । नन्वग्निहोत्राहुतिदर्शनविषयमेवैतद्दर्शनं । तत्र ह्युक्तमुत्क्रान्त्यादिपदार्थषट्कनिर्णये दिवमेवाहवनीयं कुर्वाते इत्यादि । इहाप्यमुष्य लोकस्याग्नित्वमादित्यस्य च समित्त्वमित्यादि बहु साम्यं । तस्मात्तच्छेषमेवैतद्दर्शनमिति । न यतिथ्यामिति प्रश्नप्रतिवचनपरिग्रहाद्यतिथ्यामित्यस्य प्रश्नस्य प्रति-

---

आ॰ पञ्चाग्निविदो गतिं वक्तुमुत्तरग्रन्थमवतारयति । इदानीमिति । ये विदुस्तेऽर्चिषमभिसम्भवन्तीति सम्बन्धः । एवंशब्दस्य प्रकृते पञ्चाग्निपरामर्शित्वं स्फुटीकर्तुं चोदयति । नन्विति । एतद्विदुरिति श्रुतमेवदर्शनमित्युक्तं तदेवेदमिति प्रत्यभिज्ञायकं दर्शयति । तत्र हीति । आदित्यस्मादित्वं समित्त्वमित्यादि सङ्गृहीतुं रश्मीनां धूमत्वमह्नोऽर्चिष्ट्वमित्यादि ग्रहीतुं द्वितीयमादिपदं । प्रत्यभिज्ञाफलमाह । तस्मादिति । प्रश्नप्रतिवचनविषयस्यैव प्रकृतस्यैवंशब्देन परामर्शात् न षट्प्रश्नीयं दर्शनमिह परामृष्टमिति परिहरति । नेत्यादिना । सङ्गृहीतं परिहारं विवृणोति । यतिथ्यामित्यस्येति । अधिकरणे षष्ठी वाचकस्तु-परिग्रहो विषय इत्यर्थः । षट्प्रश्नीयमेव व्यवहितं दर्शनमत्र परामृष्टं चेत्तदा यतिथ्यामिति प्रश्नो व्यर्थः स्यात् । षट्प्रश्नीयवि-शेषितदर्शनशेषभूतदर्शनस्य प्रश्नादृते प्रतिवचनसम्भवादित्याह । अन्यथेति । किञ्च पूर्वस्मिन् ग्रन्थे सर्वत्राग्नितया पञ्चत्वस-ङ्ख्यया निश्चितत्वादवच्छिन्नाः द्युलोकादिकाग्नय इहाप्येवंशब्देन

भा० वचनस्य यावदेव परिग्रहस्तावदेवैवंशब्देन परामृष्टुं युक्त-
मन्यथा प्रश्नानर्थक्यान्निर्ज्ञातत्वाच्च षष्ठ्याया आहुत एव
वक्तव्याः। अथ निर्ज्ञातमप्यनूद्येत। यथा प्राप्तस्यैवानुवा-
दनं युक्तं। नन्वसौ लोकोऽग्निरित्यर्थोपलक्षणार्थस्तथा-
प्याद्येनान्येन चोपलक्षणं युक्तं श्रुत्यन्तराच्च। समाने हि
प्रकरणे छान्दोग्यश्रुतौ पञ्चाग्नीन् वेदेति पञ्चसङ्ख्याया
एवोपादानादनग्निहोत्रशेषमेतत्पञ्चाग्निदर्शनं। यत्त्वग्निस-
मिदादिसामान्यं तदग्निहोत्रस्तुत्यर्थमित्यवोचाम। तस्मा-
ल्लोकोत्क्रान्त्यादिपदार्थषट्कपरिज्ञानादर्चिरादिप्रतिपत्ति-

---

आ० परामृष्टुमुचिता इत्याह। निर्ज्ञातत्वाच्चेति॥ अग्निहोत्रप्रकरणे
निर्ज्ञातमेवाग्न्यादि पूर्व्वग्रन्थेऽप्यनूद्यते। तथा चाग्निहोत्रदर्शनम-
व्यवहितमेवंशब्देन किं परामृष्टमिति शङ्कते। अथेति॥ अग्नि-
होत्रदर्शनं पूर्व्वग्रन्थेऽनूद्यते चेत्तत्प्रकरणे प्राप्तं रूपमनतिक्रम्यै-
वान्तरिक्षादेरप्यनानुवदनं स्यान्न तु तद्वैपरीत्येनानुवदनं युक्तं।
अनुवादस्य पुरोवादसापेक्षत्वात्। न चान्तरिक्षाद्यनूद्यते
तस्मादेवंशब्दो नाग्निहोत्रपरामर्शीति परिहरति। यथा प्राप्त-
स्येति॥ द्युलोकादिवादस्यान्तरिक्षाद्युपलक्षणार्थत्वात् पूर्व्वस्यानु-
वादत्वसम्भवादेवंशब्दस्याग्निहोत्रविषयत्वसिद्धिरिति चोदयति।
नन्विति॥ ज्ञापकाभावादुपलक्षणपक्षायोगेऽप्यङ्गीकृत्य पञ्चाग्नि-
निर्देशवैयर्थ्येन दूषयति। तथापीति॥ इदञ्च स्वतन्त्रमेव पञ्चा-
ग्निदर्शनमेवंशब्दपरामृष्टमित्याह। श्रुत्यन्तराच्चेति॥ समिदादि-
साम्यदर्शनादग्निहोत्रदर्शनशेषभूतदर्शनमेवैतद्दर्शनमित्युक्तमनूद्य
दूषयति। यत्त्वित्यादिना॥ अवोचामामिहोत्रस्तुत्यर्थत्वादग्निहोत्र-
स्यैव कार्य्यमित्युक्तमित्यर्थेति शेषः॥ एवंशब्देनाग्निहोत्रपराम-
र्शासम्भवे फलितमाह। तस्मादिति॥ तच्छब्दार्थमेव स्फुटयति।
एवमितीति॥ प्रकृतं पञ्चाग्निदर्शनं तच्च ज्ञातव्यमित्युक्तं तद्वतो-
ऽर्चिरादिप्रतिपत्तिर्न केवलं कर्म्मिणामित्यर्थः। प्रश्नपूर्व्वकं वेदि-

भा° वदिति प्रकृतोपादानेनार्चिरादिप्रतिपत्तिविधानात्। के पुनस्ते य एवं विदुः। गृहस्था एव। ननु तेषां यज्ञादिसाधनेन धूमादिप्रतिपत्तिर्विधित्सिता नानेवंविदामपि गृहस्थानां यज्ञादिसाधनोपपत्तेः। भिक्षुवानप्रस्थयोश्चारण्यसम्बन्धेन ग्रहणात्। गृहस्थकर्मसम्बन्धाच्च पञ्चाग्निदर्शनस्य। अतो नापि ब्रह्मचारिण एवं विदुरिति गृह्यन्ते। तेषामुत्तरे पथि प्रवेशः। स्मृतिप्रामाण्यात्। अष्टाशीतिसहस्राणामृषीणामूर्द्ध्वरेतसां। उत्तरेणार्य्यम्णः पन्थास्तेऽमृतत्वं हि भेजिरे॥

---

आ° तद्विशेषं निर्दिशति। के पुनरित्यादिना। गृहस्थानां यज्ञादीनां पितृयाणप्रतिपत्तेर्वक्ष्यमाणत्वान्न देवयाने पथि प्रवेशोऽस्तीति शङ्कते। नन्विति। पञ्चाग्निविदां गृहस्थानां देवयाने पथ्यधिकारस्तद्रहितानान्तु तेषामेव यज्ञादिना पितृयाणप्राप्तिरिति विभागोपपत्तेर्न वाक्यशेषविरोधोऽस्तीति समाधत्ते। नेत्यादिना। एवंविदुरिति सामान्यवचनात्परिव्राजकादेरप्यत्र ग्रहणं स्यादिति चेन्नेत्याह। भिक्षुवानप्रस्थयोश्चेति। विद्यान्तरेण तयोरुत्तरमार्गे प्रवेशान्न पञ्चाग्निविषयत्वेन ग्रहणं पुनरुक्तेरित्यर्थः। गृहस्थानामेव पञ्चाग्निविदां तत्र ग्रहणमित्यत्र हेत्वन्तरमाह। गृहस्थेति। ब्रह्मचारिणां तर्हि ग्रहणं भविष्यति नेत्याह। अत इति। पञ्चाग्निदर्शनस्य गृहस्थकर्म्मसम्बन्धादेवेत्येतत्। कथं तर्हि नैष्ठिकब्रह्मचारिणां देवयाने पथि प्रवेशस्तत्राह। तेषामिति। अर्य्यम्णः सम्बन्धी यः पन्थास्तमासाद्यते नोत्तरेण पथा। ते यथोक्तसङ्ख्या ऋषयः सापेक्षममृतत्वं प्राप्ता इति स्मृत्यर्थः॥

उ॰ ये चामी अरण्ये श्रद्धाꣳ सत्यमुपासते तेऽर्चि-
रभिसम्भवन्ति

---

भा॰ तस्मात् ये गृहस्था एवमग्निजोऽहमग्न्यपत्यमित्येवं
क्रमेणाग्निभ्यो जातोऽग्निरूप इत्येवं ये विदुस्ते च ये
चामी अरण्ये वानप्रस्थाः परिव्राजकाश्चारण्यनिष्ठाः श्रद्धां
श्रद्धायुक्ताः सन्तः सत्यं ब्रह्म हिरण्यगर्भात्मानमुपासते
न पुनः श्रद्धां चोपासते तेऽर्चिरभिसम्भवन्ति। यावद्गृ-
हस्थाः पञ्चाग्निविद्यां सत्यं वा ब्रह्म न विदुस्तावच्छ्रद्धा-
द्याहुतिक्रमेण पञ्चम्यामाहुतौ हुतायां ततो योषाग्ने-
र्जाताः पुनर्लोकं प्रत्युत्थायिनोऽग्निहोत्रादिकर्मानुष्ठा-
तारो भवन्ति। तेन कर्मणा धूमादिक्रमेण पुनः पितृ-
लोकं पुनः पर्जन्यादिक्रमेणेममावर्त्तन्ते। ततः पुनर्योषाग्ने-
र्जाताः पुनः कर्म कृत्वेत्येवमेव घटीयन्त्रवत् गत्यागतिभ्यां
पुनरावर्त्तन्ते। यदा त्वेवं विदुस्ततो घटीयन्त्रभ्रमणाद्वि-
निर्मुक्ताः सन्तोऽर्चिरभिसम्भवन्ति। अर्चिरिति नाग्निज्वा

---

आ॰ आश्रमान्तराणां पञ्चाग्निविषयत्वेनान्वयप्रश्ने फलितमाह।
तस्मादिति॥ अग्निजत्वे फलितमाह। अग्न्यपत्यमिति॥ अग्नि-
जत्वं साधयति। एवमिति॥ अग्न्यपत्यत्वे किं स्यात्तदाह।
क्रमेति॥ एवं ये गृहस्था विदुस्ते ये ते चेति योजना। अरण्यं
स्त्रीजनासङ्कीर्णो देशः। परिव्राजकाश्चेति त्रिदण्डिनो गृह्यन्ते
ऽन्येषामेषणाभ्यो व्युत्थितानां सम्यग्ज्ञाननिष्ठानां देवयाने पथ्य-
प्रवेशादाश्रममात्रनिष्ठा वा तेऽपि गृह्येरन्निति द्रष्टव्यं। अत्रापि
सत्यमुपास्यं कर्मत्वश्रवणादित्याशङ्क्य प्रत्ययमात्रस्य सापेक्ष-
त्वादुपास्यत्वानुपपत्तेर्नैवमित्याह। न पुनरिति॥ सर्व्वे पञ्चा-
ग्निविदः सत्यब्रह्मविदश्चेत्यर्थः॥ विनापि विद्याबलमर्चिरभि-

भा॰ सामान्यं किन्त्वर्चिरभिमानिन्यर्चिःशब्दवाच्या देवतो-
त्तरमार्गलक्षणा व्यवस्थितैव तामभिसम्भवन्ति। न हि परि-
व्राजकानामग्न्यर्चिषैव साक्षात्सम्बन्धोऽस्ति। तेषां तेन देव-
तैव परिस्पष्टमतेऽर्चिःशब्दवाच्या। ततोऽहर्देवतां मरण-
कालनियमानुपपत्तेरहःशब्दोऽपि देवतैव। आयुषः क्षये
हि मरणं नैवंविदाऽहन्येव मर्त्तव्यमित्यहर्मरणकालो
नियन्तुं शक्यते। न च रात्रौ प्रेताः सन्तोऽहः प्रतीक्षन्ते।
स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छतीति श्रुत्यन्तरात्।
अह्न आपूर्य्यमाणपक्षमहर्देवतयातिवाहिता आपूर्य्यमाण-
पक्षदेवतां प्रतिपद्यन्ते। शुक्लपक्षदेवतामित्येतदापूर्य्यमाण-
पक्षाद्यान् षण्मासान् उदङ् उत्तरां दिशमादित्यः सवि-
तेति तान्मासान् प्रतिपद्यन्ते शुक्लपक्षदेवतयातिवाहिताः
सन्तः। मासानिति बहुवचनात्सञ्चारिणः षडुत्तरायण-
देवतास्तेभ्यो मासेभ्यः षण्मासदेवताभिरतिवाहिताः॥

---

आ॰ सम्पत्तिः स्यादिति चेन्नेत्याह। यावदिति॥ कर्म्म कृत्वा लोकं
प्रत्युत्थायिन इति पूर्व्वेण सम्बन्धः॥ केवलकर्म्मिणां देवयानमार्ग-
प्राप्तिर्नास्तीत्युक्तं निगमयति। एवमेवेति॥ विदुषामेव देवयान-
प्राप्तिमुपसंहरति। यदा त्विति॥ नन्वर्चिषो व्याख्यातत्वेऽग्न्य-
र्च्चिस्तदभिसम्पत्तिर्न फलाय कल्पते तत्राह। अर्चिरितीति॥
अर्चिःशब्देन यथोक्तदेवताग्रहे लिङ्गमाह। न हीति॥
अतोऽर्चिर्देवतायाः सकाशादिति यावत्॥ अहःशब्दस्य काल-
विषयत्वमुक्तदोषाभावादिति चेन्नेत्याह। मरणेति॥ नियमा-
भावमेव व्यनक्ति। आयुष इति॥ विरुद्धविषये नियममाशङ्क्याह।
न हीति॥ न तु रात्रौ मृतोऽपि विद्वानहरपेक्ष्य फलीभूतः
सम्पद्येत नेत्याह। न चेति॥

उ॰ अर्च्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य इति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान् वैद्यु-

---

भा॰ देवलोकाभिमानिनीं देवतां प्रतिपद्यन्ते । देवलोकादादित्यमादित्याद्वैद्युतं विद्युदभिमानिनीं प्रतिपद्यन्ते । विद्युद्देवतां प्राप्तान् ब्रह्मलोकवासी पुरुषो ब्रह्मणा मनसा सृष्टो मानसः कश्चिदेत्यागत्य ब्रह्मलोकान् गमयति । ब्रह्मलोकानित्यधरोत्तरभूमिभेदेन भिन्ना इति गम्यन्ते । बहु-वचनप्रयोगादुपासनतारतम्योपपत्तेश्च । तेन पुरुषेण गमिताः सन्तस्तेषु ब्रह्मलोकेषु पराः प्रकृष्टाः सन्तः स्वयं परावतः प्रकृष्टाः समाः संवत्सराननेकान् वसन्ति । ब्रह्मणोऽनेकान् कल्पान् वसन्तीत्यर्थः । तेषां ब्रह्मलोकं गतानां नास्ति पुनरावृत्तिरस्मिन् संसारे । नपुनरागमनमिहेति शाखान्तरपाठादिहाकृतिमात्रग्रहणमिति चेच्छ्वोभूते पूर्णमासीमिति यद्वत् । नेहेति विशेषणा-

---

आ॰ एकस्मिन्नेव ब्रह्मलोके कथं बहुवचनमित्याशङ्क्याह । ब्रह्मेति ॥ ब्रह्मलोकानिति बहुवचनं प्रयोगादिति सम्बन्धः । अन्यब्रह्मलोका विशेष्यत्वेन गृह्यन्ते॥ बहुवचनोपपत्तौ हेत्वन्तरमाह । उपासनेति ॥ कल्पशब्दोऽवान्तरकल्पविषयस्तेषामिह न पुनरावृत्तिरिति क्वचित्पाठादस्मिन्नित्यादिव्याख्यानमयुक्तमिति शङ्कते । इहेति ॥

यथा श्वोभूते पौर्णमासीं यजेतेत्यत्राकृतिः पौर्णमासीशब्दार्थः । श्वोभूतत्वस्य न व्यावर्त्तकं पौर्णमासीपदलक्ष्यैः प्रतिपद्येव कर्त्तव्यतानियमात् तथेहाकृतेरिहशब्दार्थत्वान्निरङ्कुशत्वानावृत्ति-

उ० तान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः ॥ १५ ॥

---

भा० नर्थक्यात्। यदि हि नावर्त्तन्त एवेहग्रहणमनर्थकमेव स्यात्। श्वोभूते पौर्णमासीमित्यत्र पौर्णमास्याः श्वोभूतत्वमनुक्तं न ज्ञायत इति युक्तं विशेषयितुं। न हि तत्र श्व आकृतिः शब्दार्थो विद्यत इति श्वःशब्दो निरर्थक एव प्रयुज्यते। यत्र तु विशेषणे शब्दे प्रयुक्ते ऽन्विष्यमाणे विशेषणफलं चेन्न गम्यते तत्र युक्तो निरर्थकत्वेनोत्स्रष्टुं विशेषणशब्दो न तु सत्यां विशेषणफलावगतौ। तस्मा-दस्मात्कल्पादूर्द्ध्वमावृत्तिर्गम्यते॥ १५॥

---

आ० रश्नेसिद्ध्यतीत्यर्थः। परिहरति। नेत्यादिना। परोक्तं दृष्टान्तं विघटयति। श्वोभूत इति। कृतसम्भारदिवसापेक्षं हि श्वोभूतत्वं। पौर्णमासीदिने चातुर्मास्येष्टौ कृतायां कदा पौर्णमा-सीष्टिः कर्त्तव्येति विना वचनं न ज्ञायते। तत्र श्वोभूतत्वं विशे-षणं भवत्यन्यव्यावर्त्तकं। तद्वदिहेति विशेषणमपि व्यावर्त्तकमेवेति नात्यन्तिकानावृत्तिसिद्धिरित्यर्थः। यत्तु पौर्णमासीशब्दस्याकृति-वाचित्वादव्यावर्त्तकत्वमिति तत्राह। न हीति। यद्यपि प्रकृते वाक्ये पौर्णमासीशब्दो भवत्याकृतिवचनस्तथापि श्वःशब्दार्थो ऽपि काचिदाकृतिरस्तीत्यङ्गीकृत्य व्यावर्त्तकश्वोभुतशब्दो नैव प्रयुज्यते। तथाचापि विशेषणशब्दस्य व्यावर्त्तकत्वमावश्यकमि-त्यर्थः। सुषिरमाकाशमित्यादौ व्यावर्त्त्याभावेऽपि विशेषणप्रयोगमव-दत्रापि विशेषणं स्वरूपानुवादमात्रमित्याशङ्क्याह। यत्र त्विति। विशेषणफलमुपसंहरति। तस्मादिति॥ १५॥

उ॰ अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिꣳ रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोका-

---

भा॰ अथ पुनर्ये नैवं विदुरुत्क्रान्त्याद्यग्निहोत्रसम्बन्धपदार्थषट्कस्यैव वेदितारः केवलकर्मिणो यज्ञेनाग्निहोत्रादिना दानेन बहिर्वेदि भिक्षमाणेषु द्रव्यसंविभागलक्षणेन तपसा बहिर्वेद्यैव दीक्षादिव्यतिरिक्तेन कृच्छ्रचान्द्रायणादिना लोकाञ्जयन्ति । लोकानिति बहुवचनात्तत्रापि फलतारतम्यमभिप्रेतं। ते धूममभिसम्भवन्त्युत्तरमार्ग इवेहापि देवता एव धूमादिशब्दवाच्या धूमदेवतां प्रतिपद्यन्त इत्यर्थः। आतिवाहिकत्वं च देवतानां तद्वदेव। धूमाद्रात्रिं रात्रिदेवतां ततोऽपक्षीयमाणपक्षदेवतां ततो यान् षण्मासान् दक्षिणां दिशमादित्य एति तान्मासान् देवताविशेषान् प्रतिपद्यन्ते । मासेभ्यः पितृलोकं पितृ-

---

आ॰ देवयानं पन्थानमुक्त्वा पथ्यन्तरं वक्तुं वाक्यान्तरमादाय पदद्वयं व्याकरोति । अथेत्यादिना ॥ कथं ते फलभागिनो भवन्तीत्याकाङ्क्षायामाह । यज्ञेनेति ॥ ननु दानतपसी यज्ञग्रहणेनैव गृहीते न पृथग्गृहीतव्ये तत्राह । बहिर्वेदीति ॥ दीक्षादीत्यादिपदेन पयोव्रतादियज्ञाङ्गसङ्ग्रहः। तत्रेति पितृलोकोक्तिः । अपिशब्दो ब्रह्मदृष्टान्तार्थः ॥ धूमसम्पत्तेरपुरुषार्थत्वमाशङ्क्योक्तं। उत्तरमार्ग इवेति ॥ इहापीति पितृयाणमार्गेऽपीत्यर्थः । तद्वदेवेत्युत्तरमार्गगामिनीनां देवतानामिवेत्यर्थः । तत्रेति प्रकृत-

उ॰ चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति ताꣳस्तत्र देवा यथा सोमꣳ राजानमाप्यायस्वापक्षीयस्वेत्येवमेनाꣳस्तत्र भक्षयन्ति तेषां यदा तत्पर्य्यवैत्य-

---

भा॰ लोकाच्चन्द्रं । ते चन्द्रं प्राप्यान्नं भवन्ति । तांस्तत्रान्नभूतान् यथा सोमं राजानमिह यज्ञ ऋत्विज आप्यायस्वापक्षीयस्वेति भक्षयन्त्येवमेतांश्चन्द्रं प्राप्तान् कर्म्मिणो भृत्यानिव स्वामिनो भक्षयन्त्युपभुञ्जते देवाः । आप्यायस्वापक्षीयस्वेति न मन्त्रः किन्त्वाप्याय्याप्याय्य चमसस्थं भक्षणेनापक्षयञ्च कृत्वा पुनः पुनर्भक्षयन्तीत्यर्थः । एवं देवा अपि सोमलोके लब्धशरीरान् कर्म्मिण उपकरणभूतान् पुनः पुनर्विश्रामयन्तः कर्म्मानुरूपं फलं प्रयच्छन्तः । तद्धि तेषामाप्यायनं सोमस्याप्यायनमिवोपभुञ्जते उपकरणभूतान् देवाः । तेषां कर्म्मिणां यदा यस्मिन् काले तद्यज्ञदानादिलक्षणं सोमलोकप्रापकं कर्म्म पर्य्यवैति परिगच्छति परिक्षीयत इत्यर्थः ॥

---

आ॰ लोकोक्तिः । कर्म्मिणां तर्हि देवैर्भक्ष्यमाणानां चन्द्रलोकप्राप्तिरनर्थायैवेत्याशङ्क्याह । उपभुञ्जत इति ॥ अन्यथा प्रतिभासं व्यावर्त्तयति । आप्यायस्वेति ॥ एवं देवा अपीति सङ्क्षिप्तं दार्ष्टान्तिकं विवृणोति । सोमलोक इति ॥ कथं पौनःपुन्येन विश्रान्तिः सम्पाद्यते तत्राह । कर्म्मानुरूपमिति ॥ दृष्टान्तवद्दार्ष्टान्तिकेऽपि किमित्याप्यायनं नोक्तं तत्राह । तद्धीति ॥ पुनः पुनर्विश्रान्त्यनुष्ठानमिति यावत् । लोकद्वयप्रापको पन्थानावित्थं व्याख्याय पुनरेतल्लोकप्राप्तिप्रकारमाह । तेषामित्यादिना ॥

उ० थेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायो-र्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति

---

भा० अथ तदा इममेव सिद्धमाकाशमभिनिष्पद्यन्ते। यास्ताः श्रद्धाशब्दवाच्या द्युलोकाग्नौ हुता आपः सोमाकारपरिणता याभिः सोमलोके कर्म्मिणामुपभोगाय शरीरमारब्धमम्मयं ताः कर्म्मक्षयाद्धिमपिण्ड इवातपसम्पर्कात् प्रविलीयन्ते। तत्प्रविलीनाः सूक्ष्मा आकाशभूता इव भवन्ति तदिदमुच्यते इममेवाकाशमभिनिष्पद्यन्त इति। तेऽपि कर्म्मिणस्तच्छरीराः सन्तः पुरोवातादिना इतश्चामुतश्च नीयन्तेऽन्तरिक्षगास्तदाह। आकाशाद्वायुमिति। वायोर्वृष्टिं प्रतिपद्यन्ते। तदुक्तं। पर्जन्याग्नौ सोमं राजानं जुह्वतीति। ततो वृष्टिभूता इमां पृथिवीं पतन्ति। ते पृथिवीं प्राप्य व्रीहियवाद्यन्नं भवन्ति। तदुक्तमस्मिँल्लोकेऽग्नौ वृष्टिं जुह्वति। तस्या आहुत्या अन्नं सम्भवतीति।

---

आ० कथं चन्द्रस्थलसम्भवितानां* कर्म्मिणामाकाशतादात्म्यमित्याशङ्क्याह। यास्ता इति॥ सोमाकारपरिणतत्वमेव स्फोरयति। याभिरिति॥ तस्य झटिति द्रवीभवनयोग्यतां दर्शयति। अम्मयमिति॥ साभाव्यापत्तिरुपपत्तेरिति न्यायेनाह। आकाशभूता इवेति॥ आकाशाद्वायुप्राप्तिप्रकारमाह। ते पुनरिति॥ अन्याधिष्ठिते पूर्ववदभिलापादिति न्यायेनाह। ते पृथिवीमिति॥ रेतस्सिग्योगोऽप्येति न्यायमाश्रित्याह। ते पुनरिति॥ योगः

---

* स्वस्थितानामितिपुस्तकान्तरपाठः।

उ॰ ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते लोकान् प्रत्युत्थायिनस्त एवमेवानुपरिवर्तन्तेऽथ

---

भा॰ ते पुनः पुरुषाग्नौ हूयन्तेऽन्नभूता रेतस्सिक्ति। ततो रेतो-भूता योषाग्नौ हूयन्ते ततो जायन्ते। ते लोकप्रत्युत्था-यिनस्ते लोकं प्रत्युत्तिष्ठन्तोऽग्निहोत्रादिकर्मानुतिष्ठन्ति ततो धूमादिना पुनः पुनःसोमलोकं पुनरिमं लोकमिति। त एव कर्मिणोऽनुपरिवर्तन्ते घटीयन्त्रवच्चक्रीभूता बंभ्रम-न्तीत्यर्थः। उत्तरमार्गाय सद्यो मुक्तये वा यावद्ब्रह्म न विदु-रिति। नु कामयमानः संसरतीत्युक्तं। अथ पुनर्ये उत्तरं दक्षिणञ्चैतौ पन्थानौ न विदुरुत्तरस्य दक्षिणस्य वा पथः प्रतिपत्तये ज्ञानं कर्म वा नानुतिष्ठन्तीत्यर्थः। ते किं भवन्तीत्युच्यते। कीटाः पतङ्गाः। यदिदं यच्च दन्दशूकं दंशमशकमित्येतद्भवन्ति। एवं हीयं संसारगतिः कष्टा।

---

आ॰ शरीरमिति न्यायमनुसृत्याह। तत इति॥ उत्पन्नानां केषा-ञ्चिदिष्टादिकारित्वमाह। लोकमिति॥ कर्मानुष्ठानानन्तरं तत्फलभागित्वमाह। ततो धूमादिनेति॥ सोमलोके फलभोगान-न्तरं पुनरेतल्लोकप्राप्तिमाह। पुनरिति॥

पौनःपुन्येन विपरिवर्तनस्यावधिं सूचयति। उत्तरमा-र्गायेति॥ प्रागज्ञानात् संसरणं षष्ठेऽपि व्याख्यातमित्याह। नन्विति॥ स्थानद्वयमावृत्तिसहितमुक्त्वा स्थानान्तरं दर्शयति। अथेत्यादिना॥ स्थानद्वयात्तृतीये स्थाने विशेषं कथयति। एवमिति॥ तृतीये स्थाने छान्दोग्यश्रुतिं संवादयति। तथा चेति॥ अमुष्या गतेरतिकष्टत्वे परिशिष्टं वाक्यार्थमाचष्टे। तस्मादिति॥ सर्वोत्साहो वाक्यायचेतसां प्रत्ययः। यदुक्तमस्यां

उ० य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकं ॥ १६ ॥ अष्टमस्य द्वितीयं ब्राह्मणं ॥ २ ॥

---

भा० निमग्नस्य पुनरुद्धार एव दुर्लभः। तथाच श्रुत्यन्तरं। तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेति। तस्मात्सर्वोत्साहेन यथाशक्ति स्वाभाविककर्मज्ञानहानेन दक्षिणोत्तरमार्गप्रतिपत्तिसाधनं शास्त्रीयं कर्म ज्ञानं वाऽनुतिष्ठेतेति वाक्यार्थः। तथा चोक्तं। अतो वै खलु दुर्निष्प्रपतरं तस्माद्रक्षाञ्जुगुप्सेतेति श्रुत्यन्तरान्मोक्षाय प्रयतेतेत्यर्थः। एवं प्रश्नाः सर्वे निर्णीताः। असौ वै लोक इत्यारभ्य पुरुषः सम्भवतीति चतुर्थः प्रश्नो यतिथ्यामाहुत्यामित्यादिप्राधान्येन। पञ्चमस्तु द्वितीयत्नेन देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वेति दक्षिणोत्तरमार्गप्रतिपत्तिसाधनकथनेन। तेनैव च प्रथमोऽग्नेरारभ्य केचिदर्चिः प्रतिपद्यन्ते केचिद्धूममिति विप्रति-

---

आ० निमग्नस्य पुनरुद्धारो दुर्लभो भवतीति तत्र श्रुत्यन्तरमनुकूलयति। तथा चेति॥ अतो व्रीह्यादिभावादित्यर्थः। तस्मादित्यतिकष्टात्संसारादित्यर्थः॥ दक्षिणोत्तरमार्गप्राप्तिसाधने फलवाक्यमाद्यश्लाह। अभ्यामीति॥ पञ्चप्रश्नान् प्रस्तुत्य किमिति प्रत्येकं तेषां निर्णयो न कृत इत्याशङ्क्याह। एवमिति॥ निर्णीतं प्रकारमेव सङ्गृह्णाति। असावित्यादिना॥ प्राधान्येन निर्णीत इति सम्बन्धः। देवयानस्येत्यादिः पञ्चमः प्रश्नः। स तु द्वितीयत्नेन दक्षिणादिमार्गप्रतिपत्तिसाधनोक्त्या निर्णीत इत्यर्थः। तेनैव मार्ग-

उ० स यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्य्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वा

भा०पत्तिः। पुनरावृत्तिश्च द्वितीयः प्रश्नः। आकाशादिक्रमेणेमं लोकमागच्छन्तीति। तेनैवासौ लोको न सम्पूर्य्यते। कीटपतङ्गादिप्रतिपत्तेश्च केषाञ्चिदिति तृतीयोऽपि प्रश्नो निर्णीतः॥ १६ ॥ इति अष्टमस्य द्वितीयं ब्राह्मणं॥ २ ॥

स यः कामयेत ज्ञानकर्म्मणोर्गतिरुक्ता। तत्र ज्ञानं स्वतन्त्रं। कर्म्म तु दैवमानुषवित्तद्वयायत्तं। तेन कर्म्मार्थं वित्तमुपार्जनीयं। तच्चाप्रत्यवायकारिणोपायेनेति। तदर्थं मन्थाख्यं कर्म्मारभ्यते महत्त्वप्राप्तये। महत्त्वे च सत्यर्थसिद्धं हि वित्तं। तदुच्यते स यः कामयेत। स यो वित्तार्थी

आ० इत्यप्राप्तिसाधनोपदेशेनैवेति यावत्। एतासां प्रजानां विप्रतिपत्तिः प्रथमप्रश्नस्तस्य निर्णयप्रकारमाह। अग्नेरिति॥ द्वितीयप्रश्नस्वरूपमनूद्य तस्य निर्णीतत्वप्रकारं प्रकटयति। पुनरावृत्तिश्चेति॥ आगच्छन्तीति निर्णीत इत्युत्तरसम्बन्धः। तेनैव पुनरावृत्तेः सत्त्वेनेत्यर्थः। अमुष्य लोकस्यासम्पूर्त्तिर्हि तृतीयः प्रश्नः। स च द्वाभ्यां हेतुभ्यां प्रागुक्ताभ्यां निर्द्धारितो भवतीति भावः॥ ॥ १६ ॥ इत्यष्टमस्य द्वितीयं ब्राह्मणं॥ २ ॥

ब्राह्मणान्तरमवतार्य्य सङ्गतिमाह। स य इति॥ तत्रेति निर्द्धारणे सप्तमी॥ कथं तर्हि वित्तोपार्जनं सम्भवति तत्राह। तच्चेति॥ तदर्थं वित्तसिद्ध्यर्थमिति यावत्। ननु महत्त्वसिद्ध्यर्थमिदं कर्म्मारभ्यते। महत्प्राप्नुयामिति श्रुतेस्तत्कथमन्यथा प्रतिज्ञातमिति शङ्कते। महत्त्वेति॥ परिहरति। महत्त्वे चेति॥ उक्तेऽर्थे श्रुत्यक्षराणि योजयति। तदुच्यत इत्यादिना। स यो वित्तार्थी कामयेत तस्येदं कर्म्मेति शेषः। यस्य कस्यचिद्विद्यार्थिनस्तर्हीदं

भा० कर्म्मण्यधिकृतो यः कामयेत । किमयमहत्त्वं प्राप्नुयां महान् स्यामितीत्यर्थः ॥ तत्र मन्थनकर्म्मणो विधिस्तितस्य कालोऽभिधीयते । उदगयन आदित्यस्य तत्र सर्व्वत्र प्राप्तावापूर्य्यमाणपक्षस्य शुक्लपक्षस्य । तत्रापि सर्व्वत्र प्राप्तौ पुण्याहेऽनुकूल आत्मनः कर्म्मसिद्धिकर इत्यर्थो द्वादशाहं यस्मिन् पुण्येऽनुकूले कर्म्म चिकीर्षति ततः प्राक् पुण्याहमेवारभ्य द्वादशाहमुपसद्व्रती । उपसत्सु व्रतमुपसद्व्रतमुपसदः प्रसिद्धा ज्योतिष्टोमे । तत्र च स्तनोपचयापचयद्वारेण पयोभक्षणं तद्व्रतं । अत्र च तत्कर्म्मानुपसंहारात् केवलमितिकर्त्तव्यताशून्यं पयोभक्षणमात्रमुपादीयते । नन्वुपसदां व्रतमिति यदा विग्रहस्तदा

---

आ० कर्म्म स्यादित्याशङ्क्याह । कर्म्मण्यधिकृत इति ॥ तत्र वित्तार्थिनि पुंसीति यावत् । उपसदो नामेष्टिविशेषः । ज्योतिष्टोमे प्रवर्ग्याहःस्विति शेषः ॥ किं पुनस्तासु व्रतमिति तदाह । तत्र चेति ॥ यदुपसत्सु स्तनोपचयापचयाभ्यां पयोभक्षणं यजमानस्य प्रसिद्धं तदत्रोपसद्व्रतमित्यर्थः । प्रकृतेऽपि तर्हि स्तनोपचयापचयाभ्यां पयोभक्षणं स्यादिति चेन्नेत्याह । अत्र चेति ॥ मन्थाख्यकर्म्मणीत्यर्थः । तत्कर्म्मेत्युपसद्रूपकर्म्मोक्तिः । केवलमित्यस्यैवार्थमाह । इतिकर्त्तव्यताशून्यमिति ॥ समासान्तरमाश्रित्य शङ्कते । नन्विति ॥ कर्म्मधारयरूपं समासवाक्यं तदित्युक्तं मन्थाख्यस्य कर्म्मणः स्मार्त्तत्वादत्र श्रुतानामुपसदामुपसद्व्रताभावान्न कर्म्मधारयः सिद्ध्यतीत्युत्तरमाह । उच्यत इति ॥ मन्थकर्म्मणः स्मार्त्तत्वमाक्षिपति । नन्विति ॥ परिसमूहनपरिलेपनाग्न्युपसमाधानादेः स्मार्त्तार्थस्याचोद्यमानत्वादियं श्रुतिः स्मृत्यनुवादिनी युक्ता ॥ तथा चैतत्कर्म्म भवत्येव स्मार्त्तमिति परिहरति । स्मृतीति ॥ ननु श्रुतेर्न स्मृत्यनुवादिनीत्वं वैपरीत्यादतो भवत्विदं श्रौतमित्याशङ्क्याह । श्रौतत्वे

उ॰ औदुम्बरे कᳬंसे चमसे वा सर्व्वौषधं फलानीति सम्भृत्य परिसमूह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्य्याावृताज्यᳬं सᳬंस्कृत्य पुᳬंसा नक्षत्रेण

---

भा॰ सर्व्वमिति कर्त्तव्यतारूपं ग्राह्यं भवति। तत्कस्मान्न परिगृह्यत इत्युच्यते। स्मार्त्तत्वात्कर्म्मणः। स्मार्त्तं हीदं मन्थकर्म्म। ननु श्रुतिविहितं तत्कथं स्मार्त्तं भवितुमर्हति। स्मृत्यनुवादिनी हि श्रुतिरियं श्रौतत्वे हि प्रकृतिविकारभावस्ततश्च प्राकृतधर्म्मग्राहित्वं विकारकर्म्मणो न त्विह श्रौतत्वं॥

अत एव चावसथ्याग्नावेव तत्कर्म्म विधीयते। सर्व्वा वाव्रत् स्मार्त्तैवेति उपसद्व्रती भूत्वा पयोव्रती सन्नित्यर्थः। औदुम्बर उडुम्बरवृक्षमये कंसे चमसे वा विशेषणं कंसाकारे चमसाकारे वा औडुम्बर एवाकारे तु विकल्पो

---

व्या॰ हीति॥ यदीदं कर्म्म श्रौतं तदा ज्योतिष्टोमेनास्य प्रकृतिविकृतिभावः स्यात्। समग्राङ्गसंयुक्ता प्रकृतिर्विकलाङ्गसंयुक्ता च विकृतिः। प्रकृतिविकृतिभावे च विकृतकर्म्मणः प्राकृतकर्म्मग्राहित्वादुपसद एव व्रतमिति विग्रहः सर्व्वमिति कर्त्तव्यतारूपग्रहणं ग्रहीतुं न चात्राश्रौतत्वमस्ति परिलेपनादिसम्बन्धात्। न च पूर्व्वभाविन्याः श्रुतेरुत्तरभाविस्मृत्यनुवादित्वासिद्धिरुत्स्याद्वैनास्य विषयत्वाभ्युपगमादिति भावः॥

मन्थकर्म्मणः स्मार्त्तत्वे लिङ्गमाह। अत एवेति॥ तत्रैव हेत्वन्तरमाह। सर्व्वा चेति॥ मन्थगतेति कर्त्तव्यताचाहरित्युच्यते। उपसद एव व्रतमिति विग्रहासम्भवादुपसत्सु व्रतमित्यसदुक्तं चिह्नमुपसंहर्त्तुमितिग्रन्थः। पयोव्रती सन् वक्ष्यमाणेन क्रमेण जुहो-

उ० मन्थꣳ संनीय जुहोति यावन्तो देवास्त्वयि जातवेदस्तिर्य्यञ्चो घ्नन्ति पुरुषस्य कामान् तेभ्यो ऽहं भागधेयं जुहोमि ते मा तृप्ताः सर्व्वैः कामैस्तर्पयन्तु स्वाहा या तिरश्ची निपद्यतेऽहं विधरणी

---

भा० औदुम्बरत्वे सर्व्वौषधं सर्व्वासामोषधीनां समूहं यथासम्भवं यथाशक्ति च सर्व्वा ओषधीः समाहृत्य तत्र ग्राम्याणान्तु नियमेन ग्राह्या व्रीहियवाद्या वक्ष्यमाणाः। अधिकग्रहणे तु न दोषः। ग्राम्याणां फलानीति फलानि च यथासम्भवं यथाशक्ति च। इतिशब्दः समस्तसम्भारोपचयदर्शनार्थः। अन्यदपि यत्सम्भरणीयं तत्सर्व्वं सम्भृत्येत्यर्थः। क्रमस्तत्र स्थालीपाको द्रष्टव्यः। परिसमूहनपरिलेपने भूमिसंस्कारोऽग्निमुपसमाधायेति वचनादाव-

---

व्या० तीति सम्बन्धः। ताम्रमौडुम्बरमिति शङ्कां वारयति। कंसमय इति॥ तस्यैवेति प्रकृतं पात्रं परामर्शः। औडुम्बरत्वेऽपि विकल्पमाशङ्क्याह। आकार इति॥ अत्रेति पात्रनिर्देशः। असम्भवादशक्यत्वाच्च सर्व्वौषधं समाहृत्येत्ययुक्तमित्याशङ्क्याह। यथा सम्भवमिति॥ ओषधिषु नियमं दर्शयति। तत्रेति॥ परिसङ्ख्यां वारयति। अधिकेति॥ इति सम्भृत्यात्रेतिशब्दस्य प्रदर्शनार्थत्वे फलितं वाक्यार्थं कथयति। अन्यदपीति॥ ओषध्यादीनां सम्भरणानन्तरं परिसमूहनादिक्रमे किं प्रमाणमित्याशङ्क्याह। क्रम इति॥ तत्रेति परिसमूहनाद्युक्तिः॥ होमाधारत्वेन त्रेताग्निपरिग्रहं वारयति। अग्निमिति॥ आवसथ्येऽग्नौ होम इति शेषः। कथमेतावता त्रेताग्निपरित्यागस्तत्राह। एकवचनादिति॥ कथमुपसमाधानमवश्यं त्रेताग्निनिवारकं तत्राह। विद्यमानस्येति॥ आहवनीयादेराधेयत्वान्न प्रागेव सत्त्वमिति भावः। मध्ये खस्याग्ने-

उ॰ इति तां त्वा घृतस्य धारया यजे सꣳराधनी-
महꣳस्वाहा ॥ १ ॥

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति

---

भा॰ मध्येऽग्नाविति गम्यते । एकवचनादुपसमाधानश्रवणाच्च विद्यमानस्यैवोपसमाधानं ॥ परिस्तीर्य्य दर्भानावृता स्मार्त्तत्वात्कर्म्मणः स्थालीपाकावृत्परिगृह्यते तयाज्यं संस्कृत्य पुंसा नक्षत्रेण पुष्याद्यसंयुक्तेन मन्थं सर्व्वौषधफलमिश्रं तस्मिन्नौडुम्बरे चमसे दधनि मधुनि घृते चोपसिच्यैकत्वोपमन्थिन्योपसंमथ्य सन्नीय मध्ये संस्थाप्यौडुम्बरेण स्रुवेणोपस्थान आज्यस्य जुहोत्येतैर्मन्त्रैर्यावन्तो देवा इत्याद्यैः ॥ १ ॥

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यारभ्य द्वे द्वे आहुती हुत्वा मन्थे संस्रवमवनयति। स्रुवावलेपनमाज्यं मन्थे संस्रा-

---

आ॰ वेति शेषः। आवपस्थानमाहुतिविशेषप्रक्षेपदेशः। भो जातवेदः त्वदधीना यावन्तो देवा वक्रमतयः सन्तो ममार्थान् प्रतिघ्नन्ति। तेभ्योऽहमाज्यभागं तर्पयामि। ते च तेन तृप्ता भूत्वा सर्व्वैरपि पुरुषार्थैर्मां तर्पयन्तु। अहञ्च त्वदधीनोऽर्पित इत्याद्यमन्त्रस्यार्थः। जातं जातं वेत्ति वा जाते जाते विद्यत इति वा जातवेदा या देवता कुटिलमतिर्भूत्वा सर्व्वस्यैवाहमेव धारयन्तीति मत्वा त्वामाश्रित्य वर्त्तते तां सर्व्वसाधनीं देवतामहं घृतस्य धारया यजे। स्वाहेति पूर्व्ववदेव द्वितीयमन्त्रार्थः। २ ॥

ज्येष्ठायेत्यादिमन्त्रेषु ध्वनितमर्थमाह। एतस्मादेवेति। द्वे द्वे आहुती हुत्वेत्युक्तं तत्र द्वित्वप्रसङ्गं प्रत्याचष्टे। एतच्च हुत्वा-

उ॰ वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे
संस्रवमवनयति चक्षुषे स्वाहा सम्पदे स्वाहे-
त्यग्नौ हुत्वा मन्थे संस्रवमवनयति श्रोत्राय
स्वाहायतनाय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रव-
मवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ
हुत्वा मन्थे संस्रवमवनयति रेतसे स्वाहेत्यग्नौ
हुत्वा मन्थे संस्रवमवनयति ॥ २ ॥ अग्नये
स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति सोमाय
स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति भूः स्वा-
हेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति भुवः
स्वाहेत्वग्नौ हुत्वा मन्थे संस्रवमवनयति स्वः
स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति
भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे संस्रव-
मवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे
संस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा

---

भा॰ वयति । एतस्मादेव ज्येष्ठाय श्रेष्ठायेत्यादिप्राणलिङ्गाद्
ज्येष्ठश्रेष्ठादिप्राणविद एवास्मिन् कर्म्मण्यधिकारः । रेतस

---

आ॰ रभ्येति । संस्रवः स्रुवावशिष्टमाज्यं मन्थद्रव्यस्य प्राणदेवता-
त्वात्प्राणेनैकोऽस्य सर्व्वात्मकत्वं । तथाच सर्व्वदेहेषु प्राणरूपेण
त्वं भ्रमदसि प्राणस्य चलनात्मकत्वात्तद्रूपत्वाच । तथाग्निरूपेण
च त्वं ज्वलदसि प्रकाशात्मकत्वादग्नेस्तद्रूपत्वाच । तदनु ब्रह्म-
रूपेण त्वं पूर्णमसि । नभोरूपेण प्रस्तब्धं निष्कम्पमसि सर्व्वै-

उ॰ मन्थे सꣳस्रवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ३ ॥ अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिङ्कृतमसि हिङ्क्रियमाणमस्युद्गीथमसि उद्गीथमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे सन्दीप्तमसि विभूरसि प्रभूरस्यन्नमसि ज्योतिरसि निधनमसि संवर्गोऽसीति ॥ ४ ॥ अथैनमुद्यच्छत्यामꣳस्यामꣳहि ते महि स हि राजेशानोऽधिपतिः स माꣳ राजेशानोऽधिपतिं करोत्विति ॥ ५ ॥

---

भा॰ इत्यारभ्य एकैकामाहुतिं हुत्वा मन्थे संस्रवमवनयति ॥२॥ अपरयोपमन्थन्या पुनर्मथ्नाति ॥ ३ ॥ अथैनमभिमृशति

---

भा॰ रविरोधित्वात्सर्वमपि जगदेकसभवदात्मन्यन्तर्भाव्यापरिच्छिन्नतया स्थितं वस्तु त्वमसि । प्रस्तोता यज्ञारम्भे त्वमेव हिंकृतमसि । तेनैव यज्ञमध्ये हिंक्रियमाणं चासि उद्गाता च यज्ञारम्भे तन्मध्ये चोद्गीथमुद्गीयमानञ्चासि । अध्वर्युणा त्वं आश्रावितमसि । आग्नीध्रेण च प्रत्याश्रावितमसि । आर्द्रे मेघोदरे सन्दीप्तमसि । विविधं भवतीति विभुः । प्रभुः समर्थो भोज्यरूपेण सोमात्मना स्थितत्वादन्नं भोक्तृरूपेणाग्न्यात्मना ज्योतिःकारकत्वान्निधनं

उ॰ अथैनमाचामति तत्सवितुर्वरेण्यं मधुवाता ऋतायते मधुक्षरन्ति सिन्धव माध्वीर्न्नः सन्त्वोषधीर्भूः स्वाहा १ भर्गोदेवस्य धीमहि मधु नक्त मुतोषसो मधुमत्पार्थिवꣳ रजः मधु द्यौरस्तु नः पिता भुवः स्वाहा १ धियो यो नः प्रचोदयान्मधुमान्नो वनस्पतिर्म्मधुमाँ अस्तु सूर्य्यः माध्वीर्गावो भवन्तु नः स्वः स्वाहेति १ सर्वाञ्च सावित्रीमन्वाह सर्वाश्च मधुमतीरहमेवेदꣳ सर्वं

---

भा॰ भूमदसीत्यनेन मन्त्रेण ॥ ४ ॥ अथैनमुद्यच्छति सह प्राणेन हस्ते धारयति आमंस्यामंहि ते महीत्यनेन ॥ ५ ॥

अथैनमाचामति भक्षयति गायत्र्याः प्रथमपादेन मधुमत्यैकया व्याहृत्या च प्रथमया प्रथमग्रासमाचामति। तथा गायत्रीद्वितीयपादेन मधुमत्या द्वितीयया द्वितीयया च व्याहृत्या द्वितीयं ग्रासं। तथा तृतीयेन गायत्रीपादेन तृतीयया मधुमत्या तृतीयया व्याहृत्या तृतीयं ग्रासं।

---

आ॰ चयोऽध्यात्माधिदैवयोर्वागादीनाञ्च संहरणात् त्वं संवर्गोऽसीत्यभिमर्शनमन्त्रस्यार्थः ॥ २ ॥ ३ ॥ ४ ॥

आमंसि त्वं सर्वं विजानासि। वयञ्च ते तव महि महत्तरं रूपमामंहि मन्यामहे। स हि प्राणो राजादिमुख्यः। स च मां तथाभूतं करोत्वित्युद्यच्छनमन्त्रस्यार्थः ॥ ५ ॥ सवितुर्व्वरेण्यं वरणीयं श्रेष्ठं पदं धीमहीति सम्बन्धः। वाता वायुभेदा मधुसुखं ऋतायते वहन्ति। सिन्धवो नद्यो मधु क्षरन्ति मधुररसान् स्रवन्ति। ओषधीर्याश्चास्मान्प्रति माध्वीर्मधुररसाः सन्तु।

उ० भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्छिराः संविशति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वंशं जपति ॥६॥

---

भा० सर्व्वां सावित्रीं सर्व्वाश्च मधुमतीरुक्त्वाऽहमेवेदं सर्व्वं भूयासमिति चान्ते भूर्भुवःस्वः स्वाहेति समस्तं भक्षयति यथा चतुर्भिर्ग्रासैस्तद्द्रव्यं सर्व्वं परिसमाप्यते तथा पूर्व्वमेव निरूपयेत्। यत्पात्रावशिष्टं तत्पात्रं सर्व्वं निर्णिज्य तूष्णीं पिबेत्। पाणी प्रक्षाल्याप आचम्य जघनेनाग्निं पश्चादग्नेः प्राक्शिराः संविशति। प्रातःसन्ध्यामुपास्यादित्यमुपतिष्ठते दिशामेकपुण्डरीकमित्यनेन मन्त्रेण। यथेतं यथागतमेत्यागत्य जघनेनाग्निमासीनो वंशं जपति ॥ ६ ॥

---

व्या० देवस्य सवितुर्भर्गस्तेजोऽनन्ताप्रस्तुतं पदं चिन्तयामः। नक्तं रात्रिमुतोषसो दिवसाश्च मधु प्रीतिकराः सन्तु। पार्थिवं रजो मधु मदनुद्वेगकरमस्तु। द्यौश्च पिता नोऽस्माकं मधु सुखकरोऽस्तु। यः सविता नोऽस्माकं धियो बुद्धीः प्रचोदयात् प्रेरयेत् तस्य तद्वरेण्यमिति सम्बन्धः। वनस्पतिस्सोमोऽस्माकं मधुमानस्तु। गावो रश्मयो दिशो वा माध्वीः सुखकराः सन्तु। चकारशब्दादितिशब्दाचोपरिष्टादुक्तेत्यनुषङ्गः। एवं ग्रासचतुष्टये विहते सत्यवशिष्टे द्रव्ये किं कर्त्तव्यं तत्राह। यथेति। पात्रावशिष्टस्य परित्यागं वारयति। यदिति। निर्णिज्य प्रक्षाल्येति यावत्। पाणिप्रक्षालनवचनसामर्थ्यात्प्राप्तं शुद्ध्यर्थं स्मार्त्तमाचमनमनुजानाति। अयमाचम्येति। एकपुण्डरीकशब्दः सर्व्वश्रेष्ठवाची ॥६॥

उ॰ तꣳ हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ७ ॥ एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ८ ॥ एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ९ ॥ एतमु हैव चूलो भागवित्तिर्जानकाय आयस्थू-

---

भा॰ तं हैतमुद्दालक इत्यादि सत्यकामो जाबालो ऽन्तेवासिभ्य उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरन्नेवास्मिन् शाखाः प्ररोहेयुः पलाशानीति । एवमेतमेनं मन्थमुद्दालकात्प्रभृत्येकैकाचार्य्यक्रमागतं सत्यकाम आचार्य्यो बहुभ्योऽन्तेवासिभ्य उक्त्वा उवाच । किमन्यदुवाचेत्युच्यते । अपि य एनं शुष्के स्थाणौ गतप्राणेऽपि एनं मन्थं भक्षणाय संस्कृतं निषिञ्चेत् प्रक्षिपेज्जायेरन्नुत्पाद्येरन्नेवास्मिन् स्थाणौ शाखा अवयवा वृक्षस्य प्ररोहेयुः पलाशानि पर्णानि यथा जीवतः

---

आ॰ तमेतं नापुत्रायेत्यादेरर्थमाह। विद्येति। शिष्यः श्रोत्रियो

उ० णायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १० ॥ एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ११ ॥ एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतन्नापुत्राय वानन्तेवासिने वा ब्रूयात् ॥ १२ ॥ चतुरौदुम्बरो भवत्यौदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर

---

भा० स्थाणोः किमुतानेन कर्मणा कामः सिध्येदिति । ध्रुवफलमिदं कर्मेति । कर्मस्तुत्यर्थमेतद्विद्याधिगमे षट् तीर्थानि । तेषामिह च प्रकरणे मन्थविज्ञानस्याधिगमे द्वे एव तीर्थे अनुज्ञायेते पुत्रश्चान्तेवासी च । ७ । ८ । ९ । १० । ११ । १२ ॥

चतुरौदुम्बरो भवतीति व्याख्यातं । दश ग्राम्याणि धान्यानि भवन्ति ग्राम्याणान्तु धान्यानां दश नियमेन ग्राह्याणीत्येवार्थं तान्येतानीति निर्दिश्यन्ते । व्रीहियवास्तिलमाषा अणुप्रियङ्गवोऽणवश्चाणुप्रियङ्ग्वाख्याः । कचि-

---

आ० मेधावी धनदायी प्रियः पुत्रो विद्यया विद्यादातेति षट् तीर्थानि

ऊ॰ इध्म औदुम्बर्य्यौ उपमन्थन्यौ दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान् पिष्टान् दधनि मधुनि घृत उपषिञ्चत्याज्यस्य जुहोति ॥ १३ ॥ इति अष्टमस्य तृतीयं ब्राह्मणं ॥ ३ ॥

एषां वै भूतानां पृथिवी रसः पृथिव्या आपो

---

भा॰ इमे प्रियङ्गवः प्रसिद्धाः कङ्गुशब्देन खल्वा निष्पावा वल्लशब्दवाच्याः । लोके खलकुलाः कुलत्थाः । एतव्यतिरेकेण यथाशक्ति सर्व्वौषधयो ग्राम्याः । फलानि चेत्यवोचाम यथाग्निकानिव वर्जयित्वा ॥ १३ ॥ इत्यष्टमस्य तृतीयं ब्राह्मणं । ३ ॥

यादृग्जन्मा यथोत्पादितो यैर्वा गुणैर्विशिष्टः पुत्र आत्मनः पितुश्च लोक्यो भवतीति तत्सम्पादनाय ब्राह्मणमारभ्यते । प्राणदर्शिनः श्रीमन्थं कर्म्म कृतवतः पुत्रमन्थेऽधिकारो । यदा पुत्रमन्थं चिकीर्षति तदा श्रीमन्थं कृत्वा ऋतुकालं पत्न्याः प्रतीक्षत इत्येतत् । रेतश्च ओष-

---

व्या॰ सम्प्रदानानि ॥ ७ । ८ । ९ । १० । ११ । १२ । १३ ॥ इत्यष्टमस्य तृतीयं ब्राह्मणं ॥ ३ ॥

प्राणोपासकस्य वित्तार्थिनो मन्थाख्यं कर्म्मोक्त्वा ब्राह्मणान्तरमुत्थापयति । यादृगिति ॥ उक्तगुणः स कथं स्यादित्यपेक्षायामिति शेषः । तच्छब्दो यथोक्तपुत्रविषयः ॥ यदस्मिन्ब्राह्मणे पुत्रमन्थाख्यं कर्म्म वक्ष्यते तद्भवति सर्व्वाधिकारविषयमित्याशङ्क्याह ।

उ॰ ऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥ १ ॥

स ह प्रजापतिरीक्षाञ्चक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियꣳ ससृजे ताꣳ सृष्ट्वाऽध उपास्त

---

भा॰ ष्यादिरसतमत्वं श्रुत्यावगम्यते । एषां वै चराचराणां भूतानां पृथिवी रसः सारभूता सर्व्वभूतानां मध्विति श्रुतं । पृथिव्या आपो रसोऽप्सु हि पृथिव्योता च प्रोता च । अपामोषधयो रसः कार्य्यत्वाद्रसत्वमोषध्यादीनां । ओषधीनां पुष्पाणि । पुष्पाणां फलानि । फलानां पुरुषः । पुरुषस्य रेतः । सर्व्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमिति श्रुत्यन्तरात् । यत एवं सर्व्वभूतानां सारतममेतद्रेतोऽतः का नु खल्वस्य योग्या प्रतिष्ठेति ॥ १ ॥

स ह स्रष्टा प्रजापतिरीक्षाञ्चक्रे ईक्षां कृत्वा स्त्रियं ससृजे । तां च सृष्ट्वाऽध उपास्त मैथुनाख्यं कर्म्माध उपासनं नाम कृतवान् । तस्मात्स्त्रियमध उपासीत । श्रेष्ठानु-

---

आ॰ प्राप्नोति । पुत्रमन्थस्य कालनियमाभावमाशङ्क्याह । यदेति । किमत्र गमकमित्याशङ्क्य रेतःस्तुतिरित्याह । इत्येतदिति । पृथिव्याः सर्व्वभूतसारत्वे मधुब्राह्मणं प्रमाणयति । सर्व्वभूतानामिति । तत्र गार्गिब्राह्मणं प्रमाणमित्याह । अप्सु हीति । अपां पृथिव्याश्च रसत्वं करणत्वायुक्तमोषध्यादीनां कथमित्याशङ्क्याह । कार्य्यत्वादिति । रेतोऽसृजतेति प्रस्तुत्य रेतसश्च तेजःशब्दप्रयोगात्तस्य पुरुषे सारत्वमैतरेयके विवक्षितमित्याह । सर्व्वेभ्य इति ॥ १ ॥

श्रेष्ठमनुश्रयन्त्यनुसरन्तीति श्रेष्ठानुश्रयणाः पशुकर्म्मणि सारत्वेन प्राणिमात्रस्य प्रवृत्तेर्यथा विधिरित्याशङ्क्याह । यथेति ।

उ॰ तस्मात्स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाण-
मात्मन एव समुदपारयत्तेनैनामभ्यसृजत् ॥ २ ॥
तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्म्माधिष-
वणे समिधो मध्यतस्तौ मुष्कौ स यावान् ह वै
वाजपेयेन यजमानस्य लोको भवति तावानस्य
लोको भवति य एवं विद्वानधोपहासञ्चरत्या-

---

भा॰ अयणा हि प्रजा अत्र वाजपेयसामान्यात्स्तुतिमाह ।
स एतं प्राञ्चं प्रकृष्टगतियुक्तमात्मानं ग्रावाणं सोमाभि-
षवोपलस्थानीयं काठिन्यसामान्यात् प्रजननेन्द्रियमुदपार-
यत् उत्पूरितवान् स्त्रीव्यंजनं प्रति तेन एनां स्त्रियमभ्य-
सृजत् अभिसंसर्गं कृतवान् ॥ २ ॥ तस्या वेदिरित्यादि
सर्व्वं सामान्यं प्रसिद्धं । समिद्धोऽग्निर्मध्यतः स्त्रीव्यञ्जनस्य
तौ मुष्कावधिषवणफलके इति व्यवहितेन सम्बध्यते ।
वाजपेययाजिनो यावाँल्लोकः प्रसिद्धस्तावान् विदुषो
मैथुनकर्म्मणो लोकफलमिति श्रूयते तस्माद्बीभत्सा नो
कार्य्येति । य एवं विद्वानधोपहासं चरत्यासां स्त्रीणां
सुकृतं वृङ्क्ते आवर्जयत्यथ पुनर्यो वाजपेयसम्पत्तिं न

---

आ॰ अवाच्यं कर्म्म सामान्यार्थः ॥ २ ॥ मुष्कौ वृषणौ योनिपार्श्वयोः कठिनौ
मांसखण्डौ । तत्राधिषवणाख्यच्छिद्रितसोमफलकदृष्टिर्यथाशुष्कं चर्म्म
सोमकण्डनार्थं तद्वत्स्त्रीरहस्यदेशस्य च कर्म्मणि कर्त्तव्येत्याह ।
ताविति ॥ उपास्तिप्रकारमुक्त्वा फलोक्तेस्तात्पर्य्यमाह । वाजपेयेति ॥
श्रूयते मैथुनाख्यं कर्म्मेति शेषः। स्तुतिफलमाह। तस्मादिति ॥ इति-
शब्दः स्तुतिफलदर्शनार्थः ॥ उपास्तेरधिकं फलमाह। य एवमिति ॥

उ॰ साꣳ स स्त्रीणाꣳ सुकृतं वृङ्क्तेऽथ य इदमविद्वान-
धोपहासञ्चरत्यस्य स्त्रियः सुकृतं वृञ्जते ॥ ३ ॥
एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराहै-
तद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै
तद्विद्वान् कुमारहारित आह बहवो मर्या ब्राह्म-
णायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात्प्रयन्ति
य इदमविद्वाꣳसोऽधोपहासञ्चरन्तीति बहु वा

---

भा॰ यस्त्वविद्वान् रेतसो रक्षणमकृत्वाऽधोपहासं चरति । अस्य स्त्रियः सुकृतमावृञ्जते अविदुषः ॥ ३ ॥
एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराह अधोप-
हासाख्यं मैथुनकर्म वाजपेयसम्मितं विद्वानित्यर्थः । तथा
नाको मौद्गल्यः कुमारहारितश्च किं ता आहुरित्युच्यते । बहवो मर्या मरणधर्मिणो मनुष्या
ब्राह्मणा अयनं येषां ते ब्राह्मणायना ब्रह्मबन्धवो
जातिमात्रोपजीविन इत्येतन्निरिन्द्रिया विश्लिष्टेन्द्रिया
विसुकृतो विगतसुकृतकर्माणोऽविद्वांसो मैथुनकर्मासक्ता

---

आ॰ अविदुषो दुर्व्यापारनिरतस्य प्रत्यवायं दर्शयति । यस्त्विति ॥ ३ ॥
अविदुषामतिगर्हितमिदं कर्मेत्यत्राचार्यपरम्परासम्मति-
माह । एतद्धेति ॥ यस्य कर्मणो वाजपेयसम्मितत्वमिदंशब्दार्थः ।
अविदुषामवाच्ये कर्मणि प्रवृत्तानां दोषित्वमुपसंहर्तुमिति-
शब्दः ॥ विदुषो लाभमविदुषश्च दोषं दर्शयित्वा क्रियाकाला-
त्प्रागेव रेतःस्खलने प्रायश्चित्तं दर्शयति । श्रीमन्थमिति ॥ यः
प्रतीच्छते तस्य रेतो यदि स्कन्दति इति योजना ॥ ४ ॥ मे ममाधा

उ० इदꣳ सुप्तस्य वा जायतो वा रेतः स्कन्दति ॥ ॥ ४ ॥ तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः । इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः । पुनरग्निर्धिष्ण्या यथा स्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥ ५ ॥

---

आ० इत्यर्थः । ते किमस्माल्लोकात्प्रयन्ति परलोकात्परिभ्रष्टा इति मैथुनकर्मणोऽत्यन्तपापहेतुत्वं दर्शयति । य इदमविद्वांसोऽधोपहासं चरन्तीति । सोमन्त्वं कृत्वा पत्न्या ऋतुकालं ब्रह्मचर्येण प्रतीक्षतो यदीदं रेतः स्कन्दति । बहु वाल्पं वा सुप्तस्य जाग्रतो वा रागप्राबल्यात् ॥ ४ ॥ तदभिमृशेदनुमन्त्रयेत वाऽनुजपेदित्यर्थः । यदाऽभिमृशति तदाऽनामिकाङ्गुष्ठाभ्यां तद्रेत आददे आददे इत्येवमन्तेन मन्त्रेण पुनर्मामित्यनेन निमृज्यादन्तरेण भ्रुवौ मध्ये भ्रुवोर्वा स्तनौ स्तनयोर्वा ॥ ५ ॥

---

आ० प्रातःकाले यद्रेतः पृथिवीं प्रत्यस्कान्त्सीत् रागातिरेकेण स्खलनमासीत् ओषधीः प्रति अप्यसरद्गमनमभवत् अपः स्रोतांसि प्रति गतमभूत् तदिदं रेतः समन्तादाददेऽहमित्यादानमन्त्रस्यार्थः । केनाभिप्रायेण तदादानं तदाह । पुनरिति ॥ यत्पुनः रेतोरूपेण बहिर्निर्गतमिन्द्रियं मां प्रत्येतु समागच्छतु तेजस्त्वगता कान्तिर्भगः सौभाग्यं ज्ञानं वा तदपि सर्वं रेतोनिर्गमात्तदात्मना बहिर्निर्गतं सन्मां प्रत्यागच्छतु । अग्निर्धिष्ण्यायं स्थानं येषां ते धिष्ण्या देवास्तद्रेतो यथास्थानं कल्पयन्त्विति मन्त्रान्तरस्यार्थः । ५ ॥

उ॰ अथ यद्युदक आत्मानं परिपश्येत्तदभिमन्त्रयेत मयि तेज इन्द्रियं यशो द्रविणꣳ सुकृतमिति श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ॥ ६ ॥

सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात् सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद

---

भा॰ यदि कदाचिदुदक आत्मानमात्मच्छायां पश्येत्तदा अभिमन्त्रयेत अनेन मन्त्रेण मयि तेज इति । श्रीर्ह वै एषा पत्नी स्त्रीणां मध्ये यत् यस्मान्मलोद्वासा उद्धृतमलवद्वासास्तस्मात्तां मलोद्वाससं यशस्विनीं श्रीमतीं अभिक्रम्याभिगत्योपमन्त्रयेत । इदमावाभ्यां कार्य्यं यत् पुत्रोत्पादनमिति त्रिरात्रान्त आप्लुतां ॥ ६ ॥

सा चेदस्मै न दद्यान्मैथुनं कर्त्तुकाममेनामवक्रीणीयादाभरणादिना ज्ञापयेत् । तथापि सा नैव दद्यात् काम-

---

आ॰ अयोनौ रेतस्खलने प्रायश्चित्तमुक्तं रेतो योनावुदके रेतः सिक्तेच्छायादर्शने प्रायश्चित्तं दर्शयति । अथेत्यादिना । निमित्तान्तरे प्रायश्चित्तान्तप्रदर्शनप्रक्रमार्थोऽथशब्दः । मयि तेजःप्रभृति देवाः कल्पयन्त्विति मन्त्रयोजना ॥ प्रकृते रेतः सिञ्चेद् यस्यां पुत्रो जनयितव्यस्तां स्त्रियं स्तौति । श्रीरित्यादिना ॥ कथं सा यशस्विनी न हि तस्याः ख्यातिरस्ति तत्राह । यदिति । रजस्वलाभिगमनादिप्रतिषिद्धमित्याशङ्क्य विशिनष्टि । त्रिरात्रेति ॥ ६ ॥

ज्ञापयेदात्मीयं प्रेमातिरेकमिति शेषः । बलादेव वशीकृतां भार्य्यां पशुकर्मार्थं कथमुपगच्छेदित्याशङ्क्याह । तस्या-

उ॰ इत्ययशा एव भवति ॥ ७ ॥ सा चेदस्मै दद्या-
दिन्द्रियेण ते यशसा यश आदधामीति यश-
स्विनावेव भवतः ॥ ८ ॥ स यामिच्छेत्कामयेत
मेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ सन्धायो-
पस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्सम्भवसि
हृदयादधिजायसे स त्वमङ्ग कषायोऽसि दिग्ध-
विद्धामिव मादयेमाममूं मयीति ॥ ९ ॥

---

भा॰ सैनां यदा न पाणिना नोपहत्याभिक्रामेन्मैथुनाय
अयशसि त्वां दुर्भगां करिष्यामीति प्रख्याप्य तामनेन मन्त्रे-
णोपगच्छेदिन्द्रियेण यशसा यश आदद इति। तस्मात्तदति-
शापाद्वन्ध्या दुर्भगेति ख्याता अयशा एव भवति॥ ७॥
सा चेदस्मै दद्यादनुगुणा एव स्यात्तुष्टदानेन मन्त्रे-
णोपगच्छेदिन्द्रियेण ते यशसा यश आदधामीति तदा
यशस्विनावेवोभावपि भवतः ॥ ८ ॥ स यां स्वभार्यामि-
च्छेदियं मां कामयेतेति तस्यामर्थं प्रजननेन्द्रियं निष्ठाय
निक्षिप्य मुखेन मुखं सन्धायोपस्थमस्या अभिमृश्य जपे-
दिमं मन्त्रमङ्गादङ्गादिति ॥ ९ ॥

---

आ॰ मीति ॥ ७ ॥ ८ ॥ भर्तुर्भार्यायामप्रीतावस्य प्रकारमुक्त्वा पुनस्तदेविच्छा-
सत्यास्तद्विषये प्रीतिसम्पादनप्रक्रियां दर्शयति । स यामित्या-
दिना ॥ अङ्गे रेतस्त्वं मदीयात्सर्वस्मादङ्गात्समुत्पद्यसे विशेषतश्च
हृदयादन्नरससारेण जायसे स त्वमङ्गानां कषायो रसः स च
विषाक्तशरविद्धां मृगीमिवामूं मदीयां स्त्रियं मे मादय मद्वशां
कुर्वित्यर्थः ॥ ९ ॥

उ० अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ सन्धायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ॥ १० ॥ अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ सन्धायापाण्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥ ११ ॥

---

भा० अथ यामिच्छेन्न गर्भं दधीत न धारयेद्गर्भिणी मा भूदिति तस्यामर्थमिति पूर्व्ववदभिप्राण्याभिप्राणनं प्रथमं कृत्वा पश्चादपान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यनेन मन्त्रेणारेता एव भवति न गर्भिणी भवतीत्यर्थः ॥ १० ॥ अथ यामिच्छेद्दधीत गर्भमिति तस्यामर्थमित्यादि पूर्व्ववत्। पूर्व्वविपर्य्ययेणापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥ ११ ॥

---

आ० तस्याः स्वविषये प्रीतिमापाद्याऽवश्यकर्म्मानुष्ठानदशायामभिप्रायविशेषानुसारेणानुष्ठानविशेषं दर्शयति । अथेत्यादिना ॥ तत्र तत्राथशब्दस्तदुपक्रमार्थो नेतव्यः । पशुकर्म्मकाले प्रथमं स्वकीयपुंस्त्वद्वारा तदीयस्त्रीत्वे वायुं विसृज्य तेनैव द्वारेण ततस्तदादानाभिमानं कुर्य्यादित्याह । अभिप्राण्येति च भर्त्तुरेवाभिप्रायान्तरानुसारिणं विधिमाह । अथ यामित्यादिना । स्वकीयपद्ममेन्द्रियेण तदीयपद्ममेन्द्रियाद्रेतः बीजत्व तत्पुत्रोत्पत्तिसमर्थं कृतमिति मत्वा स्वकीयरेतसा सह तन्निर्गच्छेत्तदिदमपाननं प्राणनञ्च तत्पूर्व्वकं रेतःसेचनं ॥ १० ॥ ११ ॥

उ० अथ यस्य जायायै जारः स्यात्तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति मम समिद्धेऽहौषीः पुत्रपशूꣳस्त आददेऽसाविति मम समिद्धेऽहौषीरिष्टासुकृते त आददेऽसाविति मम समिद्धेऽहौषीराशापराकाशौ

---

भा० अथ पुनर्यस्य जायायै जार उपपतिः स्यात्तं चेद्द्विष्यादभिचरिष्याम्येनमिति मन्येत तस्येदं कर्म। आमपात्रेऽग्निमुपसमाधाय सर्वं प्रतिलोमं कुर्यात् तस्मिन्नग्नावेताः शरभृष्टीः शरेषीकाः प्रतिलोमाः सर्पिषाक्ताः घृताभ्युक्ता जुहुयान्मम समिद्धेऽहौषीरित्याद्या आहुतीरन्ते सर्वासामसाविति नामग्रहणं प्रत्येकं। स एष एवंविद् ब्राह्मणः शपति स विसुकृतो विगतपुण्यकर्मा प्रैति। तस्मादेवंवित् श्रोत्रियस्य दारेण नोपहासमिच्छेत् नर्मापि न कुर्यात्।

---

आ० सम्प्रति प्रासङ्गिकमभिचारिकं कर्म कथयति। अथ पुनरिति। द्वेषवतानुष्ठितमिदं कर्म फलवदिति वक्तुं द्विष्यादित्यधिकारिविशेषणं आमविशेषणं पात्रस्य प्रकृतकर्मयोग्यत्वख्यापनार्थं। अग्निमित्येकवचनादुपसमाधानवचनाच्चावसथ्याग्निरत्र विवक्षितः। सर्वं परिस्तरणादि तस्य प्रतिलोमत्वे कर्मणः प्रतिलोमत्वं हेतू कर्तव्यं। मम सम्भूते योषाग्नौ यौवनादिना समिद्धे रेतो हुतवानसि ततोऽपराधिनस्तव प्राणापानावाददे इत्युक्त्वा होमो निर्वर्तयितव्यः। तदन्ते चासावित्यात्मनः शत्रोर्वा नाम गृह्णीयात्। इत्युक्तं भीतं

उ॰ ता आददेऽसाविति । स वा एष निरिन्द्रियो विसुकृदस्माल्लोकात्प्रैति यमेवं विद्वान् ब्राह्मणः शपति तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ॥ १२ ॥ अथ यस्य जायामार्तवं विन्देत्त्र्यहं कंसेन पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात्त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥ १३ ॥

भा॰ किमुताधोपहासं । हि यस्मादेवंविदपि तावत्परो भवति शत्रुर्भवतीत्यर्थः ॥ १२ ॥ अथ यस्य जायामार्त्तवं विन्देत् ऋतुभावं प्राप्नुयादित्येवमादिग्रन्थः श्रीर्ह वा एषा स्त्रीणामित्यतः पूर्वं द्रष्टव्यः । सामर्थ्यात् त्र्यहं कंसेन पिबेदहतवासाश्च स्यात् । नैनां स्नातामस्नातां च वृषलो वृषली वा नोपहन्यान्नोपस्पृशेत् । त्रिरात्रान्ते त्रिरात्रव्रतसमाप्तावाप्लुत्य स्नात्वा अहतवासाः स्यादिति व्यवहितेन सम्बन्धः । तामाप्लुतां व्रीहीनवघातयेत् व्रीह्यवघाताय तामेव विनियुञ्ज्यात् ॥ १३ ॥

आ॰ कर्म्म सुकृतं आशं आशा प्रार्थना वाचा वाग्रतिज्ञातं कर्म्मवा नोपगादनं तस्य प्रतीक्षा परामाशा ॥ यथोक्तहोमद्वारा आपदागस्य गर्भं दर्शयति । स एष इति ॥ एवंविधं मन्त्रकर्म्मद्वारा प्राणवियोगस्वं । तस्मादेवंविदितिमेवंविधं परदारागमने यथोक्तदोषस्याद्दर्शं । तच्छ्रोत्रियस्य हेत्वन्तरमाह । एवंविदपीति ॥ १२ ॥ आभिचारिकं कर्म्म प्रसङ्गादभिधायेदानीं पूर्वोक्तमृतुकार्यं व्यापयति । अथेति ॥ श्रीर्हवा एषा स्त्रीणामित्येतदग्रे न्यायाः पूर्व्वोक्तं पाठक्रमादर्थक्रमस्य बलवत्त्वं हेतुमाह । सामर्थ्यादिति ॥ अर्थवशादिति यावत् ॥ १३ ॥

उ॰ स य इच्छेत्पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १४ ॥ अथ य इच्छेत्पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १५ ॥ अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन् वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तम-

---

भा॰ स य इच्छेत्पुत्रो मे शुक्लो वर्णतो जायेत वेदमेकमनुब्रुवीत सर्वमायुरियाद्वर्षशतं क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ समर्थौ जनयितवै जनयितुं । दध्योदनं दध्ना चरुं पाचयित्वा द्विवेदश्चेदिच्छति पुत्रं तद्वैवमन्ननियमः । केवलमेव स्वाभाविकमोदनं उदकग्रहणमन्यप्रसङ्गनिवृत्त्यर्थं दुहितुः पाण्डित्यं गृहतन्त्रविषयमेव वेदेऽनधिकारात् । तिलौदनं कृशरं विविधं गीतो विगीतः प्रख्यात इत्यर्थः । स समितिंगमः सभां

---

आ॰ किंपुनरत्र यथावगिम्यमैश्चर्युपैरनुष्ठेयं तदाह । स य इति ॥ वर्णदेवसादृश्यं वा शुक्लत्वं वा शुक्लत्वं वा स्वाभाविकमोदनं पाचयति चेत्किमर्थमुदकग्रहणं तद्व्यतिरेकेणौदनपाकासम्भवादित्याशङ्क्याह । उदकग्रहणमिति ॥ क्षीरादेरिति शेषः ॥ वेदविषयमेव तस्याः पाण्डित्यं किं न स्यादत आह । वेद इति ॥ समितिर्विद्वत्सभा तां गच्छ-

उ॰ श्नीयातामीश्वरौ जनयितवै ॥ १६ ॥ अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १७ ॥ अथ य इच्छेत्पुत्रो मे पण्डितो विजिगीतः समितिं गमः शुश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रवीत सर्वमायुरियादिति माꣳसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्ष्णेन वा ऋषभेण वा ॥ १८ ॥

---

भा॰ गच्छतीति । प्रगल्भ इत्यर्थः ॥ पाण्डित्यस्य पृथग्ग्रहणात् शुश्रूषितां श्रोतुमिष्टां रमणीयां वाचं भाषिता । संस्कृताया अर्थवत्या वाचो भाषितेत्यर्थः । मांसमिश्रौदनं मांसौदनं । तन्मांसनियमार्थमाह औक्ष्णेन वा मांसेन । उक्षा सेचनसमर्थः पुङ्गवस्तदीयं मांसं । ऋषभस्ततोऽप्यधिकवयास्तदीयमार्षभं मांसं ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

---

आ॰ तीति । विद्वानेवोच्यतामिति चेन्नेत्याह । पाण्डित्यस्येति ॥ सर्वशब्दो वेदचतुष्टयविषयः । औक्ष्णेत्यादि तृतीया सहार्थे । देशविशेषापेक्षया कालविशेषापेक्षया वा मांसनियमः । अथशब्दस्तु पूर्ववाक्येषु यथावदपि विकल्पार्थः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

उ॰ अथाभि प्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां सञ्जायां पत्या सहेति ॥ १९ ॥ अथैनामभिपद्यतेऽमो

---

भा॰ अथाभि प्रातरेव काले ऽवघातनिर्वृत्तांस्तण्डुलाना-दाय स्थालीपाकावृता स्थालीपाकविधिना आज्यं चेष्टित्वा आज्यसंस्कारं कृत्वा चरुं श्रपयित्वा स्थालीपाकस्याहुतीर्जुहोति । उपघातं उपहत्योपहत्य अग्नये स्वाहा इत्याद्यो गार्ह्यः सर्व्वो विधिर्द्रष्टव्यः । अत्र हुत्वोद्धृत्य चरुशेषं प्राश्नाति स्वयं प्राश्येतरस्याः पत्न्यै प्रयच्छत्युच्छिष्टं । प्रक्षाल्य पाणी

---

व्या॰ कदा पुनरिदमोदनपाकादि कर्त्तव्यं तदाह । अथेति ॥ कोऽसौ स्थालीपाकविधिः कथं वा तत्र होमस्तमाह । गार्ह्य इति ॥ गृह्ये प्रसिद्धो गार्ह्यः । अत्रेति पुनरन्यकर्म्मोक्तिः । अतो मन्त्रार्थः सकाशादस्या विश्वावसो गन्धर्व्व त्वमुत्तिष्ठान्याञ्च जायां प्रपूर्व्यां तरुणीं पत्या सङ्क्रीडमानामिच्छ अहं पुनः त्वामिमां जायां समुपैमीति मन्त्रार्थः । अभिपत्तिरालिङ्गनं ॥ कदा क्षीरोदनादिभोजनं तदाह । क्षीरेति ॥ भुक्त्वाऽभिपद्यत इति सम्बन्धः । अहं पतिरमः प्राणोऽस्मि त्वं वागसि कथं तव प्राणत्वं मम वाक्त्वमित्याशङ्क्य वाचः प्राणाधीनत्ववत्तव मदधीनत्वादित्यभिप्रेत्य सा त्वमित्यादि पुनर्व्वचनं । ऋगाधारं हि साम गीयते । अस्ति च मदाधारत्वं तव । तथा च मम सामत्वमृक्त्वञ्च तव । द्यौरहं पितृ-

उ० हमस्मि सा त्वꣳ सा त्वमस्यमोऽहं सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि सꣳरभावहै सह रेतो दधावहै पुꣳसे पुत्राय वित्तय इति॥ २० ॥

अथास्या ऊरू विहापयति विजिहीथां द्यावा-पृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुखꣳ सन्धाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु आसिञ्चतु

---

का० प्राश्नीयोदपात्रं पूरयित्वा तेनोदकेनैनां त्रिरभ्युक्षणेन मन्त्रेणोत्तिष्ठात इति सकृन्मन्त्रोच्चारणं। अथैनामभिमन्त्र्य शेषोदकानि यथाऽपत्यकामं भुङ्क्ते इति क्रमो द्रष्टव्यः। संवेशनकाले सोऽहमस्मीत्यादि मन्त्रेणाभिपद्यते॥ १९॥ २०॥

अथास्या ऊरू विहापयति विजिहीथां द्यावापृथिवी-त्यनेन। तस्यामर्थमित्यादि पूर्ववत्। त्रिरेनां त्रिःप्रभृ-

---

जा० त्वं पृथिवी त्वं मातृत्वात्तयोर्मातापितृत्वमित्यर्थः। तावावां संरभामहै संरम्भमुद्यमं करवामहै। एहि त्वमागच्छ। योऽसौ संरम्भस्तमाह। सहेति। पुंस्त्वयुक्तपुत्रलाभाय रेतोधारणं कर्त्तव्यमित्यर्थः॥ १९॥ २०॥

ऊर्वोः सम्बोधनं द्यावापृथिवी इति। विजिहीथां भवन्तौ युवामित्यर्थः। विष्णुर्व्यापनशीलो भगवान् भवत्या योनिं कल्पयतु पुत्रोत्पत्तिसमर्थां करोतु। त्वष्टा सविता रूपाणि पिंशतु विभागेन दर्शनयोग्यानि करोतु। प्रजापतिर्विराडात्मा सदात्मना स्थित्वा त्वयि रेतः समासिञ्चतु प्रक्षिपतु। धाता पुनः सूत्रात्मा त्वदीयं गर्भं त्वदात्मना स्थित्वा धारयतु पुष्णातु च। सिनीवाली दर्शनार्हदे-वता त्वदात्मना वर्त्तते। सा च पृथुष्टुका प्रियात्मभिः सिनी-

उ॰ प्रजापतिर्धाता गर्भं दधातु ते । गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २१ ॥ हिरण्मयी अरणी याभ्यां निर्म्मन्थतामश्विनौ । तं ते गर्भं हवामहे दशमे मासि सूतवे । यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी । वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति ॥ २२ ॥ सोष्यन्तीमद्भिरभ्युक्षति । यथा वायुः पुष्करिणीꣳ समिङ्गयति सर्वतः । एवा ते गर्भ एजतु सहावैतो जरायुणा । इन्द्रस्यायं व्रजः कृतः

---

भा॰ त्यनुलोमामनुमार्ष्टि विष्णुर्योनिमित्यादि प्रति मन्त्रं । अन्ते नाम गृह्णात्यसाविति तस्याः ॥ २१ ॥ २२ ॥ सोष्यन्तीमद्भिरभ्युक्षति प्रसवकाले सुखप्रसवनार्थमनेन मन्त्रेण । यथा वातः पुष्करिणीं समिङ्गयति सर्व्वतः । एवाते गर्भ

---

व्या॰ वालि पृथुष्टुके गर्भमिमं धेहि धारय। अश्विनौ देवौ सूर्य्याचन्द्रमसौ स्वकीयरश्मिमालिनौ तव गर्भं त्वदात्मना स्थितौ समाधत्तां । ज्योतिषि प्रसवार्थमाधीयमानं गर्भं दृष्टान्तेन दर्शयति। यथेति ॥ इन्द्रेण सूर्य्येणेति यावत् । असाविति पत्युर्व्वा निर्द्देशः । तस्या नाम गृह्णातीति पूर्व्वेण सम्बन्धः। समिङ्गयति स्वल्पोपघातमकृत्वैव चालयतीत्येतत् । एवा ते एवमेव ते स्वल्पोपघातमकुर्व्वन्नेजतु गर्भश्चलतु । जरायुणा गर्भवेष्टनमांसखण्डेन सहावैतु निर्गच्छतु । इन्द्रस्य प्राणस्यायं व्रजो मार्गः सर्गकाले गर्भाधानकाले वा कृतः सार्गल इत्यस्य व्याख्या सपरिश्रय इति परिवेष्टनेन जरायुणा सहित इत्यर्थः । तं मार्गं प्राप्य तमिन्द्र

उ॰ सार्गलः सपरिश्रयः । तमिन्द्र निर्ज्जहि गर्भेण सावराᳬं सहेति ॥ २३ ॥ जातेऽग्निमुपसमाधायाङ्क आधाय कᳬंसे पृषदाज्यᳬं सन्नीय पृषदाज्यस्योपघातं जुहोत्यस्मिन् सहस्रं पुष्यासमेधमानः स्वे गृहे । अस्योपसद्यां मा छैत्सीत् प्रजया च पशुभिश्च स्वाहा । मयि प्राणाᳬंस्त्वयि मनसा जुहोमि स्वाहा । यत्कर्म्मणात्यरीरिचं यद्वा न्यूनमिहाकर । अग्निष्टत्स्विष्टकृद्विद्वांत्स्विष्टᳬं सुहुतं करोतु नः स्वाहेति ॥ २४ ॥

---

भा॰ एजत्विति ॥ २३ ॥ अथ जातकर्म । जातेऽग्निमुपसमाधायाङ्कमुपाधाय पुत्रं कंसे पृषदाज्यं सन्नीय संयोज्य दधिघृते पृषदाज्यस्योपघातं जुहोत्यस्मिन् सहस्रमित्याद्याऽवापस्थाने ॥ २४ ॥

---

व्या॰ गर्भेण सह निर्जहि निर्गच्छ । गर्भनिःसरणानन्तरं या मांसपेशी निर्गच्छति या जरा तां च निर्गमयेत्यर्थः । घृतमिश्रं दधि पृषदाज्यमित्युच्यते । उपघातमित्यभीक्ष्ण्यं पौनःपुन्यं विवक्षितं । पृषदाज्यस्यांशमादाय पुनःपुनर्जुहोतीत्यर्थः । अस्मिन् स्वगृहे पुत्ररूपेण वर्द्धमानो मनुष्याणां सहस्रं पुष्यासमनेकमनुष्यपोषको भूयासमस्य मत्पुत्रस्योपसद्यां सन्ततौ प्रजया पशुभिश्च सह श्रीमां विच्छिन्ना भूयादित्याह । अस्मिन्निति । मयि पितरि ये प्राणाः सन्ति तान् पुत्रे त्वयि मनसा समर्पयामीत्याह । मयीति । यदत्यरीरिचमतिरिक्तं कृतवानस्मि इह कर्मण्यूनकरणं तत्सर्वं विद्वानग्निः स्विष्टकृत्त्वा स्विष्टमनघिकं सुहुतमन्यूनं चास्माकं करोत्वित्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

उ॰ अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधिमधुघृतꣳ सन्नीयानन्तर्हितेन जातरूपेण प्राशयति। भूस्ते दधामि। भुवस्ते दधामि। स्वस्ते दधामि। भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥ २५ ॥ अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥ २६ ॥ अथैनं मात्रे प्रदाय स्तनं प्रयच्छति। यस्ते स्तनः शशयो

---

भा॰ अथास्य दक्षिणकर्णमभिनिधाय स्वं मुखं वाग्वागिति त्रिर्जपेत्। अथ दधि मधु घृतं सन्नीयानन्तर्हितेनाव्यवहितेन जातरूपेण हिरण्येन प्राशयत्येतैर्मन्त्रैः प्रत्येकं भूरिति ॥ २५ ॥ अथास्य नामधेयं करोति वेदोऽसीति। तदस्य तद्गुह्यं नाम भवति वेद इति ॥ २६ ॥ अथैनं मात्रे प्रदाय स्वात्स्वं स्तनं प्रयच्छति। यस्ते स्तन इत्यादि-

---

आ॰ अस्य जातस्य शिशोरित्यर्थः। मयीशक्त्या वाक् त्वयि प्रविशत्विति मपतोऽभिप्रायः। एतैर्मन्त्रैर्भूस्ते दधामीत्यादिभिरिति शेषः। वेदनाम्ना व्यवहारो लोके नास्तीत्याशयेनाह। तदस्येति॥ यत्तद्वेद इति नाम तदस्य गुह्यं भवति। वेदनं वेदोऽनुभवः सर्व्वस्य निजं स्वरूपमित्यर्थः। हे सरस्वति यस्ते स्तनः शशयः फलं तेन सह वर्त्तमानो यश्च सर्व्वप्राणिनां स्थितिहेतुत्वप्रभावेन जातो-यश्च रत्नधा अन्नपयसोर्वा धाता यश्च वसु कर्म्मफलं तद्विन्दतीति वसुवित् यश्च सुष्ठु ददातीति सुदत्रो येन च स्तनेन विश्वानि वार्य्याणि वरणीयानि देवादीनि भूतानि त्वं पुष्यसि तं स्तनं मदीयपुत्रस्य धातवे पानाय मदीयभार्य्यायाः स्तने प्रविष्टं कुर्व्वित्यर्थः। इडा स्तुत्या भोग्यासि। मित्रावरुणाभ्यां सम्भूतो मैत्रावरुणो वसिष्ठ-

उ॰ यो मयोऽभूर्य्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति ॥ २७ ॥ अथास्य मातरमभिमन्त्रयते । इलासि मैत्रावरुणी वीरे वीरमजीजनत्सा त्वं वीरवतीभव । याऽस्मान् वीरवतो करदिति तं वा एतमाहुरति पिता वताभूरति पितामहो वताभूः परमां वत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्च्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति॥२८॥इति अष्टमस्य चतुर्थं ब्राह्मणं ॥ ४ ॥

---

भा॰ मन्त्रेण ॥ २७ ॥ अथास्य मातरमभिमन्त्रयते इलासी-त्यनेन । तं वा एतमाहुरित्यनेन विधिना जातः पुत्रः पितरं पितामहं वा अतिप्रेत इति । श्रिया यशसा ब्रह्म-वर्चसेन परमां निष्ठां प्रापदित्येव स्तुत्यो भवतीत्यर्थः । यस्य चैवंविदो ब्राह्मणस्य पुत्रो जायते स चैवं स्तुत्यो भवती-त्यध्याहार्य्यं ॥ २८ ॥ इत्यष्टमस्य चतुर्थं ब्राह्मणं ॥ ४ ॥

---

मा॰ तस्य भार्य्यां मैत्रावरुणी सां चाबध्नती तदत्वं तिष्ठसीति भार्य्यां सम्बोधयति । मैत्रावरुणीति । वीरे पुरुषे मयि निमित्तभूते भवती वीरं पुत्रमजीजनत् सा त्वं वीरवती जीव बहुपुत्रा भव । या भवती वीरवतः पुत्रसम्पन्नानस्मान् कृतवतीति मन्त्रार्थः । पि-तरमतीत्य वर्त्तते इत्यतिपिता । अहो महानेष विस्मयो यत्पितरं पितामहं च सर्व्वमेवं त्वं समतीत्य सर्व्वस्मादधिकत्वं यातोऽसी-त्यर्थः । न केवलं पुत्रस्यैवेयं स्तुतिरपि तु यथोक्तपुत्रसम्पन्नस्य पितु-रपीत्याह ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ इत्यष्टमस्य चतुर्थं ब्राह्मणं ॥ ४ ॥

उ॰ अथ वꣳशः। पौतिमाषीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रः कौशिकीपुत्रात् कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥ १ ॥ आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारु-

---

भा॰ अथेदानीं समस्तप्रवचनवंशः। स्त्रीप्राधान्यात्। गुणवान् पुत्रो भवतीति प्रस्तुतं। अतः स्त्रीविशेषणेनैव पुत्रविशेषणादाचार्य्यपरम्परा कीर्त्त्यते। तानीमानि शुक्लानीत्यव्यामिश्राणि ब्राह्मणेन। अथवाऽयातयामानीमानि

---

आ॰ सान्निध्यात् खिलकाण्डस्य वंशोऽयमिति शङ्कां निवर्त्तयन् वंशब्राह्मणतात्पर्यमाह। अथेति॥ विद्याभेदादतीतस्य काण्डद्वयस्य प्रत्येकं वंशभाक्त्वेऽपि नास्य पृथक्त्वभागित्वं खिलत्वेन तच्छेषत्वात्। तथा च समाप्तौ पठितो वंशः समस्तस्यैव प्रवचनस्य भविष्यतीत्यर्थः। पूर्व्वौ वंशौ पुरुषं विशेषितौ तृतीयस्तु स्त्रीविशेषितः। तत्र किं कारणमित्याशङ्क्याह। स्त्रीप्राधान्यादिति॥ तदेव स्फुटयति। गुणवानिति॥ कीर्त्त्यते ब्राह्मणेनेति सम्बन्धः। शुक्लानि यजूंषीत्यस्य

उ॰ णीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभा-
गीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः
साङ्कृतीपुत्रात् साङ्कृतीपुत्र आलम्बायनीपुत्रादा-
लम्बायनीपुत्र आलम्बीपुत्रादालम्बीपुत्रो जायन्-
तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्मा-
ण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः
शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्रा-
द्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चि-
कीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृ-
तीपुत्रः कार्शकेयीपुत्रात् कार्शकेयीपुत्रः प्राची-
नयोगीपुत्रात् प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात्
साञ्जीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र

---

भा॰ यजूंषि तानि शुक्लानि शुक्लानीत्येतत्प्रजापतिमारभ्य याव-
त्पौतिमाषीपुत्रस्तावदधोमुखो नियताचार्य्यपूर्व्वक्रमो वंशो
ब्रह्मणः प्रवचनाख्यस्य। तच्चैतद्ब्रह्म प्रजापतिप्रबन्धपरम्प-

---

आ॰ आख्यानमव्यामिश्राणीति दोषैरसङ्कीर्णानि पौरुषेयत्वदोषसञ्चा-
राभावादित्यर्थः। अयातयामान्यदुष्टान्यमतार्थानीत्यर्थः। पाठ-
क्रमेण मनुष्यादिः प्रजापतिपर्यन्तो वंशो व्याख्यातः। सम्प्रत्यर्थ-
क्रममाश्रित्याह। प्रजापतिमिति। अधोमुखत्वं पाठक्रमापेक्षयो-
च्यते। तत्रापि प्रजापतिमारभ्य साञ्जीवीपुत्रपर्यन्तं वाजसनेयि-
शाखासु सर्व्वास्वेको वंश इत्याह। समानमिति। प्रवचनाख्यस्य
वंशात्मनो ब्रह्मणः सम्बन्धात्प्रजापतिर्विद्यां लब्धवानित्याह। ब्रह्म

उ॰ आसुरायणादासुरायण आसुरेरासुरिः ॥ २ ॥ याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान् बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात् कश्यपाद्धरितः कश्यपः शिल्पात् कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ३ ॥ समानमा साञ्जीवीपुत्रात्साञ्जीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात् कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वा-

---

भा॰ रया प्रागत्याऽस्मास्वनेकधा विप्रसृतमनाद्यनन्तं । स्वयम्भू ब्रह्म नित्यं तस्मै ब्रह्मणे नमः। नमस्तदनुवर्त्तिभ्यो गुरुभ्यः ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ इत्यष्टमस्य पञ्चमं ब्राह्मणं ॥ ५ ॥

---

आ॰ इति । तस्याधिकारिभेदात् अवान्तरभेदं दर्शयति। तयेति। प्रजापतिमुखप्रबन्धः प्रपञ्चः सैव परम्परा तयेति यावत्। तस्य परमात्मस्वरूपं स्वयम्भूत्वमभिदधाति । अनादीति। तस्याऽपौरुषेयत्वेनासम्भावितदोषतयाऽप्रामाण्यमभिप्रेत्य विशिनष्टि। नित्यमिति। आदिमध्यान्तेषु कृतमङ्गला ग्रन्थाः प्रसारिणो भवन्तीति मन्वानः समाह। तस्मै ब्रह्मणे नम इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ अष्टमस्य पञ्चमं ब्राह्मणम् ॥ ५ ॥ नमो जन्मादि-

उ॰ मकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ ४ ॥ इत्यष्टमस्य पञ्चमं ब्राह्मणं ॥ ५ ॥ ॥ इति वाजसनेयके बृहदारण्यकेऽष्टमोऽध्यायः ॥ उपनिषत्सु षष्ठोऽध्यायः समाप्तः ॥ ॐ तत्सत् ॥

---

भा॰ ॐ तत्सत् ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतायां बृहदारण्यकटीकायां अष्टमोऽध्यायः समाप्तः ॥ उपनिषद्भाष्ये षष्ठोध्यायः॥ ॐ तत्सत् ॥

---

आ॰ सम्बन्धिविघ्नविध्वंसहेतवे । हरये परमानन्दपरिज्ञानवपुष्मते ॥ १ ॥ नमस्कुर्व्यन्तवन्दोहवरवीवरभानवे । गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ २ ॥ इति श्रीपरमहंसपरिव्राजकशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां बृहदारण्यकभाष्यटीकायामष्टमोऽध्यायः । उपनिषद्भाष्यटीकायां षष्ठोऽध्यायः ॥ ॐ तत्सत् । समाप्तश्चायं ग्रन्थः । श्रीपरमेश्वरः प्रीयताम् ॥

